मुपैति, न विज्ञानमुपगच्छति, न विज्ञानस्योत्पादं समनुपश्यति, न विज्ञानस्य निरोधं समनुपश्यति। तत्कस्य हेतोः? तथा हि यो रूपस्यानुत्पादो न तद्रूपम्। यो रूपस्याव्ययो न तद्रूपम्। इत्यनुत्पादश्च रूपं च अद्वयमेतदद्वैधीकारम्। इत्यव्ययश्च रूपं च अद्वयमेतदद्वैधीकारम्। यत्पुनरेतदुच्यते रूपमिति, अद्वयस्यैषा गणना कृता। एवं तथा हि यो वेदनायाः 5 संज्ञायाः संस्काराणाम्। तथा हि यो विज्ञानस्यानुत्पादो न तद्विज्ञानम्, यो विज्ञानस्याव्ययो न तद्विज्ञानम्। इत्यनुत्पादश्च विज्ञानं च अद्वयमेतदद्वैधीकारम्। इत्यव्ययश्च विज्ञानं च अद्वयमेतदद्वैधीकारम्। यत्पुनरेतदुच्यते विज्ञानमिति, अद्वयस्यैषा गणना कृता॥

R 28 अथ खल्वायुष्मान् शारिपुत्र आयुष्मन्तं सुभूतिमेतदवोचत्–तेन हि यथाहमायुष्मतः W 116 सुभूतेर्भाषितस्यार्थमाजानामि, तथा बोधिसत्त्वोऽप्यनुत्पादः। यदि च आयुष्मन् सुभूते 10 बोधिसत्त्वोऽप्यनुत्पादः, किं बोधिसत्त्वो दुष्करचारिकां चरति? यानि वा तानि सत्त्वानां कृतशो दुःखान्युत्सहते प्रत्यनुभवितुम्? एवमुक्ते आयुष्मान् सुभूतिरायुष्मन्तं शारिपुत्रमेतदवोचत्–नाहमायुष्मन् शारिपुत्र इच्छामि बोधिसत्त्वं महासत्त्वं दुष्करचारिकां चरन्तम्। नापि स बोधिसत्त्वो महासत्त्वो यो दुष्करसंज्ञया चरति। तत्कस्य हेतोः? न हि आयुष्मन् शारिपुत्र दुष्करसंज्ञां जनयित्वा शक्योऽप्रमेयाणामसंख्येयानां सत्त्वानामर्थः कर्तुम्। अपि तु W 117 15 सुखसंज्ञामेव कृत्वा। सर्वसत्त्वानामन्तिके मातृसंज्ञां पितृसंज्ञां पुत्रसंज्ञां दुहितृसंज्ञां कृत्वा स्त्रीपुरुषेषु। एवमेताः संज्ञाः कृत्वा बोधिसत्त्वो महासत्त्वो बोधिसत्त्वचारिकां चरति। तस्मान्मातृसंज्ञा पितृसंज्ञा पुत्रसंज्ञा दुहितृसंज्ञा बोधिसत्त्वेन महासत्त्वेन सर्वसत्त्वानामन्तिके यावदात्मसंज्ञा उत्पादयितव्या। यथा आत्मा सर्वेण सर्वं सर्वथा सर्वं सर्वदुःखेभ्यो मोचयितव्यः, एवं सर्वसत्त्वाः सर्वेण सर्वं सर्वथा सर्वं सर्वदुःखेभ्यो मोचयितव्या इति। एवं च 20 सर्वसत्त्वेषु संज्ञा उत्पादयितव्या–मयैते सर्वसत्त्वा न परित्यक्तव्याः। मयैते सर्वसत्त्वाः W 118 परिमोचयितव्या अपरिमाणतो दुःखस्कन्धात्। न च मयैतेषु चित्तप्रदोष उत्पादयितव्यः, अन्तशः शतशोऽपि छिद्यमानेनेति। एवं हि बोधिसत्त्वेन महासत्त्वेन चित्तमुत्पादयितव्यम्। सचेदेवंचित्तो विहरिष्यति, न दुष्करसंज्ञी चरिष्यति, न दुष्करसंज्ञी विहरिष्यति। पुनR 29 रपरमायुष्मन् शारिपुत्र बोधिसत्त्वेन महासत्त्वेन एवं चित्तमुत्पादयितव्यम्–यथा सर्वेण सर्वं 25 सर्वथा सर्वमात्मा न विद्यते नोपलभ्यते, एवं सर्वेण सर्वं सर्वथा सर्वं सर्वधर्मा न संविद्यन्ते नोपलभ्यन्ते। एवमाध्यात्मिकबाह्येषु सर्वधर्मेषु संज्ञा उत्पादयितव्या। सचेदेवंचित्तश्चरिष्यति, W 119 न दुष्करसंज्ञी चरिष्यति, न दुष्करसंज्ञी विहरिष्यति। यदप्यायुष्मन् शारिपुत्र एवमाह–अनुत्पादो बोधिसत्त्व इति। एवमेतदायुष्मन् शारिपुत्र, एवमेतत्। अनुत्पादो बोधिसत्त्व इति॥

शारिपुत्र आह–किं पुनरायुष्मन् सुभूते बोधिसत्त्व एवानुत्पादः, उताहो बोधि-30 सत्त्वधर्मा अप्यनुत्पादः? सुभूतिराह–बोधिसत्त्वधर्मा अपि आयुष्मन् शारिपुत्र अनुत्पादः। शारिपुत्र आह–किं पुनरायुष्मन् सुभूते बोधिसत्त्वधर्मा एवानुत्पादः, उताहो सर्वज्ञताप्यनुत्पादः? सुभूतिराह–सर्वज्ञताप्यायुष्मन् शारिपुत्र अनुत्पादः। आह–किं पुनरायुष्मन् सुभूते

सर्वज्ञतैवानुत्पादः, उताहो सर्वज्ञताधर्मा अप्यनुत्पादः ? आह–सर्वज्ञताधर्मा अप्यायुष्मन् शारिपुत्र अनुत्पादः। आह–किं पुनरायुष्मन् सुभूते सर्वज्ञताधर्मा एवानुत्पादः, उताहो पृथग्जनोऽप्यनुत्पादः? आह–पृथग्जनोऽप्यायुष्मन् शारिपुत्र अनुत्पादः। आह–किं पुनरायुष्मन् सुभूते पृथग्जन एवानुत्पादः, उताहो पृथग्जनधर्मा अप्यनुत्पादः ? आह–पृथग्जनधर्मा अप्यायुष्मन् शारिपुत्र अनुत्पादः। एवमुक्ते आयुष्मान् शारिपुत्र आयुष्मन्तं सुभूतिमेतदवोचत्–यद्यायुष्मन् सुभूते बोधिसत्त्वोऽप्यनुत्पादः, बोधिसत्त्वधर्मा अप्यनुत्पादः, सर्वज्ञताप्यनुत्पादः, सर्वज्ञताधर्मा अप्यनुत्पादः, पृथग्जनोऽप्यनुत्पादः, पृथग्जनधर्मा अप्यनुत्पादः, नन्वायुष्मन् सुभूते अनुप्राप्तैव अयत्नेन बोधिसत्त्वेन महासत्त्वेन सर्वज्ञता भवति। एवमुक्ते आयुष्मान् सुभूतिरायुष्मन्तं शारिपुत्रमेतदवोचत्–नाहमायुष्मन् शारिपुत्र अनुत्पन्नस्य धर्मस्य प्राप्तिमिच्छामि, नाप्यभिसमयम्। नाप्यनुत्पन्नेन धर्मेण अनुत्पन्ना प्राप्तिः प्राप्यते। आह–किं पुनरायुष्मन् सुभूते अनुत्पन्नेन धर्मेण अनुत्पन्ना प्राप्तिः प्राप्यते, उताहो उत्पन्नेन धर्मेण अनुत्पन्ना प्राप्तिः प्राप्यते ? आह–किं पुनरायुष्मन् शारिपुत्र अनुत्पन्नो धर्म उत्पन्नः, उताहो अनुत्पन्न एव धर्मोऽनुत्पन्नः ? आह–किं पुनरायुष्मन् सुभूते उत्पाद एव धर्मोऽनुत्पादः, उताहो अनुत्पादो धर्म उत्पादः ? आह–उत्पादो धर्मोऽनुत्पादो धर्म इत्यायुष्मन् शारिपुत्र न[1] प्रतिभाति जल्पितुम्। आह–अनुत्पादोऽपि ते आयुष्मन् सुभूते प्रतिभाति जल्पितुम्। आह–अनुत्पाद एवायुष्मन् शारिपुत्र जल्पः। अनुत्पाद एव आयुष्मन् शारिपुत्र प्रतिभाति। अनुत्पाद एव आयुष्मन् शारिपुत्र प्रतिभानम्। एवमेवायुष्मन् शारिपुत्र अत्यन्तं प्रतिभाति ॥

एवमुक्ते आयुष्मान् शारिपुत्र आयुष्मन्तं सुभूतिमेतदवोचत्–धर्मकथिकानामायुष्मान् सुभूतिरग्रतायां स्थापितव्यः। तत्कस्य हेतोः ? तथा ह्यायुष्मान् सुभूतिः स्थविरो यतो यत एव परिप्रश्नीक्रियते, ततस्तत एव निःसरति, धर्मतायाश्च न चलति, तां च धर्मतां न विरोधयति। एवमुक्ते आयुष्मान् सुभूतिरायुष्मन्तं शारिपुत्रमेतदवोचत्–धर्मतैषा आयुष्मन् शारिपुत्र भगवतः श्रावकाणामनिश्रितधर्माणाम्। ते यतो यत एव परिप्रश्नीक्रियन्ते, ततस्तत एव निःसरन्ति, धर्मतां च न विरोधयन्ति, धर्मतायाश्च न व्यतिवर्तन्ते। तत्कस्य हेतोः? यथापि नाम अनिश्रितत्वात्सर्वधर्माणाम्। एवमुक्ते आयुष्मान् शारिपुत्र आयुष्मन्तं सुभूतिमेतदवोचत्–साधु साधु आयुष्मन् सुभूते। कतमैषा सर्वधर्मानिश्रितपारमिता बोधिसत्त्वानां महासत्त्वानाम्? सुभूतिराह–प्रज्ञापारमितैव आयुष्मन् शारिपुत्र सार्वयानिकी, सर्वधर्मानिश्रिततया सर्वधर्मानिश्रितपारमिता च। इति हि यस्य बोधिसत्त्वस्य महासत्त्वस्य एवं गम्भीरायां प्रज्ञापारमितायां भाष्यमाणायामेवं देश्यमानायामेवमुपदिश्यमानायां न भवति चित्तस्य अवलीनत्वम्, न भवति काङ्क्षायितत्वम्, न भवति धंधायितत्वम्[2], न भवति चित्तस्यान्यथात्वम्, वेदितव्यमयं[3] बोधिसत्त्वो महासत्त्वो विहरत्यनेन प्रज्ञापारमिताविहारेण अविरहितश्चानेन मनसिकारेणेति ॥

---

१ R om. न. २ R धन्वायितत्वम् everywhere. ३ R om. अयं.

अथ खल्वायुष्मान् शारिपुत्र आयुष्मन्तं सुभूतिमेतदवोचत्—कथमायुष्मन् सुभूते अविरहितो बोधिसत्त्वो महासत्त्वोऽविरहितो मनसिकारेण भवति, यः प्रज्ञापारमिताविहारेण R 32 विहरति? यदि ह्यायुष्मन् सुभूते बोधिसत्त्वो महासत्त्वोऽविरहितो मनसिकारेण भवति, एवं स विरहितः प्रज्ञापारमिताविहारेण भवति। यदि च आयुष्मन् सुभूते अविरहितो बोधिसत्त्वो 5 महासत्त्वः प्रज्ञापारमिताविहारेण भवति, एवं स विरहितो मनसिकारेण भवति। यदि W 126 च आयुष्मन् सुभूते मनसिकारेणाविरहितो बोधिसत्त्वो महासत्त्वः, अविरहित एव प्रज्ञापारमिताविहारेण भवति। एवं सति सर्वसत्त्वा अप्यविरहिता भविष्यन्ति प्रज्ञापारमिताविहारेण। तत्कस्य हेतोः? सर्वसत्त्वा अपि ह्यविरहिता मनसिकारेण विहरन्ति॥

एवमुक्ते आयुष्मान् सुभूतिरायुष्मन्तं शारिपुत्रमेतदवोचत्—साधु साधु आयुष्मन् 10 शारिपुत्र। अपि तु उपालप्स्ये त्वा। अर्थ एव त्वायुष्मता शारिपुत्रेण भूतपदाभिधानेन W 127 परिगृहीतः। तत्कस्य हेतोः? सत्त्वास्वभावतया आयुष्मन् शारिपुत्र मनसिकारास्वभावता वेदितव्या। सत्त्वासद्भावतया आयुष्मन् शारिपुत्र मनसिकारासद्भावता वेदितव्या। सत्त्वविविक्ततया आयुष्मन् शारिपुत्र मनसिकारविविक्तता वेदितव्या। सत्त्वाचिन्त्यतया आयुष्मन् शारिपुत्र मनसिकाराचिन्त्यता वेदितव्या। सत्त्वानभिसंबोधनतया आयुष्मन् शारिपुत्र मनसि-15 कारानभिसंबोधनता वेदितव्या। सत्त्वायथाभूतार्थाभिसंबोधनतया आयुष्मन् शारिपुत्र मनसिकारायथाभूतार्थाभिसंबोधनता वेदितव्या। अनेन आयुष्मन् शारिपुत्र एवंरूपेण मनसिकारेण इच्छामि बोधिसत्त्वं महासत्त्वं विहरन्तमनेन विहारेणेति॥

W 128 आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां सर्वाकारज्ञताचर्यापरिवर्तो नाम प्रथमः॥



## २ शक्रपरिवर्तो द्वितीयः।

तेन खलु पुनः समयेन शक्रो देवानामिन्द्रस्तस्यामेव पर्षदि संनिपतितः संनिषण्णो- R 33 W 129
ऽभूत् चत्वारिंशता त्रायस्त्रिंशत्कायिकैर्देवपुत्रसहस्रैः सार्धम्। चत्वारश्च लोकपाला विंशत्या
चातुर्महाराजकायिकैर्देवपुत्रसहस्रैः सार्धम्। ब्रह्मापि सहापतिर्दशभिर्ब्रह्मकायिकैर्देवपुत्रसहस्रैः
सार्धम्। पञ्च च शुद्धावासानां देव[1]पुत्राणां सहस्राणि तस्यामेव पर्षदि संनिपतितानि 5
संनिषण्णान्यभूवन्। योऽपि च देवानां स्वकर्मविपाकजोऽवभासः, सोऽपि सर्वो बुद्धानु- W 130
भावेन बुद्धतेजसा बुद्धाधिष्ठानेनाभिभूतोऽभूत्॥

अथ खलु शक्रो देवानामिन्द्र आयुष्मन्तं सुभूतिं स्थविरमेतदवोचत्–इमान्यार्य सुभूते
संबहुलानि देवपुत्रसहस्राणि अस्यां पर्षदि संनिपतितानि संनिषण्णानि आर्यस्य सुभूते-
रन्तिकात्प्रज्ञापारमितां श्रोतुकामानि बोधिसत्त्वानां महासत्त्वानामुपदेशमववादानुशासनीं च। 10
तत्कथं बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां स्थातव्यम्, कथं शिक्षितव्यम्, कथं
योगमापत्तव्यम्? स्थविरः सुभूतिराह–तेन हि कौशिक उपदेक्ष्यामि ते बुद्धानुभावेन W 131
बुद्धतेजसा बुद्धाधिष्ठानेन। यैर्देवपुत्रैरनुत्तरायां सम्यक्संबोधौ चित्तं नोत्पादितम्, तैरुत्पा-
दयितव्यम्। ये त्ववक्रान्ताः सम्यक्त्वनियामम्, न ते भव्या अनुत्तरायां सम्यक्संबोधौ
चित्तमुत्पादयितुम्। तत्कस्य हेतोः? बद्धसीमानो हि ते संसारस्रोतसः। अभव्या हि ते 15 R 34 W 132
पुनः पुनः संसरणाय अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयितुम्। अपि नु खलु पुनस्तेपा-
मप्यनुमोदे। सचेत्तेऽप्यनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पादयेरन्, नाहं कुशलमूलस्या-
न्तरायं करोमि। विशिष्टेभ्यो हि धर्मेभ्यो विशिष्टतमा धर्मा अध्यालम्बितव्याः॥ W 133

अथ खलु भगवानायुष्मन्तं सुभूतिमामन्त्रयते स्म–साधु साधु सुभूते, साधु खलु W 134
पुनस्त्वं सुभूते, य[2]स्त्वं बोधिसत्त्वानां महासत्त्वानामुत्साहं ददासि। एवमुक्ते आयुष्मान् 20
सुभूतिर्भगवन्तमेतदवोचत्–कृतज्ञैरस्माभिर्भगवन् भगवतो भवितव्यं नाकृतज्ञैः। तत्कस्य W 135
हेतोः? पौर्वकाणां हि भगवंस्तथागतानामर्हतां सम्यक्संबुद्धानामन्तिकेऽस्मदर्थे भगवान् यथा
ब्रह्मचर्यं बोधाय चरन् पूर्वं बोधिसत्त्वभूत एव सन्, यैः श्रावकैरव[3]वदितोऽनुशिष्टश्च पारमितासु,
तत्र भगवता चरता अनुत्तरं ज्ञानमुत्पादितम्। एवं भगवन् अस्माभिरपि बोधिसत्त्वा महासत्त्वा W 136
अनुपरिग्रहीतव्या अनुपरिवारयितव्याश्च, संपरिग्रहीतव्याः संपरिवारयितव्याश्च। तत्कस्य 25
हेतोः? अस्माभिरपि हि भगवन् बोधिसत्त्वा महासत्त्वा अनुपरिगृहीता अनुपरिवारिताश्च, W 137
संपरिगृहीताः संपरिवारिताश्च क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबु[4]ध्यन्ते॥

अथ खल्वायुष्मान् सुभूतिः शक्रं देवानामिन्द्रमामन्त्रयते स्म–तेन हि कौशिक शृणु, साधु
च सुष्ठु च मनसि कुरु, भाषिष्येऽहं ते यथा बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां स्थातव्यम्।
शून्यतायां कौशिक तिष्ठता बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां स्थातव्यम्। तेन हि कौशिक 30 W 138

---

१ W om. देवपुत्राणां. २ Ap यत्त्वं for यस्त्वं. ३ Ap अववादितः for अववदितः.
४ Ap W अभिसंभोत्स्यन्ते for अभिसंबुध्यन्ते.

W 139 R 35 W 140 बोधिसत्त्वेन महासत्त्वेन महासंनाहसंनद्धेन भवितव्यम्। न रूपे स्थातव्यम्। न वेदनायां न संज्ञायां न संस्कारेषु। न विज्ञाने स्थातव्यम्। न चक्षुषि स्थातव्यम्। न रूपे स्थातव्यम्। न चक्षुर्विज्ञाने स्थातव्यम्। न चक्षुःसंस्पर्शे स्थातव्यम्। न चक्षुःसंस्पर्शजायां वेदनायां स्थातव्यम्। एवं न श्रोत्रघ्राणजिह्वाकायमनःसु स्थातव्यम्। न शब्दगन्धरसस्प्रष्टव्यधर्मेषु, न श्रोत्रविज्ञाने, यावन्न[1] 5 मनोविज्ञाने। न मनःसंस्पर्शे, न मनःसंस्पर्शजायां वेदनायां स्थातव्यम्। न पृथिवीधातौ स्थातव्यम्। नाब्धातौ, न तेजोधातौ, न वायुधातौ, नाकाशधातौ, न विज्ञानधातौ स्थातव्यम्। न स्मृत्युपस्थानेषु स्थातव्यम्। न सम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गेषु, न मार्गाङ्गेषु स्थातव्यम्। न स्रोतआपत्तिफले स्थातव्यम्। न सकृदागामिफले, न[2] अनागामिफले, नार्हत्त्वे स्थातव्यम्। न प्रत्येकबुद्धत्वे स्थातव्यम्। न बुद्धत्वे स्थातव्यम्। इति हि रूपमिति न स्थातव्यम्। इति 10 हि वेदनेति, संज्ञेति, संस्कारा इति। इति हि विज्ञानमिति न स्थातव्यम्। इति हि चक्षुरिति, यावन्मनःसंस्पर्शजा वेदनेति न स्थातव्यम्। इति हि पृथिवीधातुरिति, यावद्विज्ञानधातुरिति न स्थातव्यम्। इति हि स्मृत्युपस्थानानीति न स्थातव्यम्। इति हि सम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गानीति, इति हि मार्गाङ्गानीति न स्थातव्यम्। इति हि स्रोतआपत्तिफलमिति न स्थातव्यम्, इति हि सकृदागामिफलमिति, अनागामिफलमिति, अर्हत्त्वमिति न स्थातव्यम्। इति हि प्रत्येक- W 141 15 बुद्धत्वमिति न स्थातव्यम्। इति हि बुद्धत्वमिति न स्थातव्यम्। रूपं नित्यमनित्यमिति न स्थातव्यम्। एवं वेदनासंज्ञासंस्काराः। विज्ञानं नित्यमनित्यमिति न स्थातव्यम्। रूपं सुखं R 36 दुःखमिति न स्थातव्यम्। एवं वेदनासंज्ञासंस्काराः। विज्ञानं सुखं दुःखमिति न स्थातव्यम्। रूपं शून्यमशून्यमिति न स्थातव्यम्। एवं वेदनासंज्ञासंस्काराः। विज्ञानं शून्यमशून्यमिति न स्थातव्यम्। रूपमात्मानात्मेति न स्थातव्यम्। एवं वेदनासंज्ञासंस्काराः। विज्ञान- W 142 20 मात्मानात्मेति न स्थातव्यम्। रूपं शुभमशुभमिति न स्थातव्यम्। एवं वेदनासंज्ञासंस्काराः। विज्ञानं शुभमशुभमिति न स्थातव्यम्। रूपं शून्यमुपलभ्यते वेति न स्थातव्यम्। एवं वेदनासंज्ञासंस्काराः। विज्ञानं शून्यमुपलभ्यते वेति न स्थातव्यम्। स्रोतआपत्तिफलमसंस्कृतप्रभावितमिति न स्थातव्यम्। एवं सकृदागामिफलमनागामिफलमर्हत्त्वमसंस्कृतप्रभावितमिति[3] न स्थातव्यम्। प्रत्येकबुद्धत्वमसंस्कृतप्रभावितमिति न स्थातव्यम्। स्रोतआपन्नो 25 दक्षिणीय इति न स्थातव्यम्। स्रोतआपन्नः सप्तकृत्वो भवपरमा इति न स्थातव्यम्। सकृदागामी दक्षिणीय इति न स्थातव्यम्। सकृदागाम्यपरिनिष्ठितत्वात्सकृदिमं लोकमागम्य W 143 दुःखस्यान्तं करिष्यतीति न स्थातव्यम्। अनागामी दक्षिणीय इति न स्थातव्यम्। अनागामी अनागम्य इमं लोकं तत्रैव परिनिर्वास्यतीति न स्थातव्यम्। अर्हन् दक्षिणीय इति न स्थातव्यम्। अर्हन्निहैव अनुपधिशेषे निर्वाणधातौ परिनिर्वास्यतीति न स्थातव्यम्। 30 प्रत्येकबुद्धो दक्षिणीय इति न स्थातव्यम्। प्रत्येकबुद्धोऽतिक्रम्य श्रावकभूमिमप्राप्य बुद्धभूमिं W 144 परिनिर्वास्यतीति न स्थातव्यम्। बुद्धो दक्षिणीय इति न स्थातव्यम्। बुद्धोऽतिक्रम्य

१ R om. यावन्न मनोविज्ञाने. २ W om. न अनागामिफले. ३ W om. अनागामिफलं.

पृथग्जनभूमिमतिक्रम्य श्रावकभूमिमतिक्रम्य प्रत्येकबुद्धभूमिमप्रमेयाणामसंख्येयानां सत्त्वानामर्थं कृत्वा अप्रमेयाण्यसंख्येयानि सत्त्वकोटीनियुतशतसहस्राणि परिनिर्वाप्य अप्रमेयानसंख्येयान् सत्त्वान् श्रावकप्रत्येकबुद्धसम्यक्संबुद्धत्वनियतान् कृत्वा बुद्धभूमौ स्थित्वा बुद्धकृत्यं कृत्वा अनुपधिशेषे निर्वाणधातौ बुद्धपरिनिर्वाणेन परिनिर्वास्यति इत्येवमप्यनेन न स्थातव्यम् ॥ R 37

अथ खल्वायुष्मतः शारिपुत्रस्यैतदभवत्—यदि बुद्धोऽतिक्रम्य पृथग्जनभूमिमतिक्रम्य 5 W 150 श्रावकभूमिमतिक्रम्य प्रत्येकबुद्धभूमिमप्रमेयाणामसंख्येयानां सत्त्वानामर्थं कृत्वा अप्रमेयाण्यसंख्येयानि सत्त्वकोटीनियुतशतसहस्राणि परिनिर्वाप्य अप्रमेयानसंख्येयान् सत्त्वान् श्रावकप्रत्येकबुद्धसम्यक्संबुद्धत्वनियतान् कृत्वा बुद्धभूमौ स्थित्वा बुद्धकृत्यं कृत्वा अनुपधिशेषे निर्वाणधातौ बुद्धपरिनिर्वाणेन परिनिर्वास्यति इत्येवमप्यनेन न स्थातव्यम्, तत्कथं पुनरनेन स्थातव्यं, कथं शिक्षितव्यमिति? अथ खल्वायुष्मान् सुभूतिर्बुद्धानुभावेन आयुष्मतः शारिपुत्रस्य 10 W 151 चेतसैव चेतःपरिवितर्कमाज्ञाय आयुष्मन्तं शारिपुत्रमेतदवोचत्—तत्किं मन्यसे आयुष्मन् शारिपुत्र क्व तथागतोऽर्हन् सम्यक्संबुद्धः स्थितः? आयुष्मान् शारिपुत्र आह—न क्वचिदायुष्मन् सुभूते तथागतोऽर्हन् सम्यक्संबुद्धः स्थितः। तत्कस्य हेतोः? अप्रतिष्ठितमानसो हि तथागतोऽर्हन् सम्यक्संबुद्धः। स नैव संस्कृते धातौ स्थितो नाप्यसंस्कृते धातौ स्थितो न च ततो व्युत्थितः ॥ 15

अथ खल्वायुष्मान् सुभूतिरायुष्मन्तं शारिपुत्रमेतदवोचत्—एवमेव आयुष्मन् शारिपुत्र W 152 बोधिसत्त्वेन महासत्त्वेन स्थातव्यम्, एवं शिक्षितव्यम्—यथा तथागतोऽर्हन् सम्यक्संबुद्धो न क्वचित्स्थितो नास्थितो न विष्ठितो नाविष्ठितः, तथा स्थास्यामीत्येवमनेन शिक्षितव्यम्। यथा R 38 तथागतस्थानं तथा स्थास्यामीति, तथा शिक्षिष्ये इति, यथा तथागतस्थानं तथा स्थास्यामीति, तथा शिक्षिष्ये इति, यथा तथागतस्थानं तथा स्थास्यामीति सुस्थितोऽस्थानयोगेनेति एवमत्र 20 बोधिसत्त्वेन महासत्त्वेन स्थातव्यमेवं शिक्षितव्यम्। एवं हि शिक्षमाणो बोधिसत्त्वो महासत्त्वो W 153 विहरत्यनेन प्रज्ञापारमिताविहारेण अविरहितश्चानेन मनसिकारेणेति ॥

अथ खलु तत्र पर्षदि केषांचिद्देवपुत्राणामेतदभूत्—यानि तानि यक्षाणां यक्षभाषितानि यक्षरुतानि यक्षपदानि यक्षमन्त्रितानि यक्षप्रव्याहृतानि, तानि विज्ञायन्ते जल्प्यमानानि। न पुनरिदं विज्ञायते यत्सुभूतिः स्थविरो भाषते प्रव्याहरति देशयत्युपदिशति। 25 W 154 अथ खल्वायुष्मान् सुभूतिर्बुद्धानुभावेन तेषां देवपुत्राणामिममेवंरूपं चेतसैव चेतःपरिवितर्कमाज्ञाय तान् देवपुत्रानामन्त्रयते स्म—न विज्ञायते न विज्ञायते इदं देवपुत्राः। तथा हि नात्र किंचित्सूच्यते, नात्र किंचित् श्रूयते ॥

अथ खलु तेषां देवपुत्राणां पुनरेवैतदभूत्—उत्तानीकरिष्यति बत अयमार्यसुभूतिः। W 155 उत्तानीकरिष्यति बतायमार्यसुभूतिरिति। दूराद्दूरतरमार्यसुभूतिः प्रविशति, सूक्ष्मात्सूक्ष्मतरम्। 30 गम्भीराद्गम्भीरतरमार्यसुभूतिः प्रविशति देशयति भाषत इति। अथ खल्वायुष्मान् सुभूतिर्बुद्धानुभावेन पुनरपि तेषामेव देवपुत्राणां चेतसैव चेतःपरिवितर्कमाज्ञाय तान् देवपुत्रानामन्त्रयते W 156

स्म—तेन हि देवपुत्राः यः स्रोतआपत्तिफलं प्राप्तुकामः, स्रोतआपत्तिफले स्थातुकामः, स
R 39 नेमां क्षान्तिमनागम्य...पेयालम्। यः सकृदागामिफलं प्राप्तुकामः, सकृदागामिफले स्थातु-
कामः, योऽनागामिफलं प्राप्तुकामोऽनागामिफले स्थातुकामः, योऽर्हत्त्वं प्राप्तुकामोऽर्हत्त्वे स्थातु-
कामः, यः प्रत्येकबोधिं प्राप्तुकामः प्रत्येकबोधौ स्थातुकामः, स नेमां क्षान्तिमनागम्य...।
5 योऽनुत्तरां सम्यक्संबोधिं प्राप्तुकामोऽनुत्तरायां सम्यक्संबोधौ स्थातुकामः, स नेमां क्षान्ति-
मनागम्य... ॥

W 157 अथ खलु पुनरपि तेषां देवपुत्राणामेतदभवत्—किंरूपा अस्य आर्यसुभूतेर्धर्म-
श्रवणिका एष्टव्याः? अथ खल्वायुष्मान् सुभूतिर्बुद्धानुभावेन तेषां देवपुत्राणां चेतसैव
W 158 चेतःपरिवितर्कमाज्ञाय तान् देवपुत्रानामन्त्रयते स्म—मायानिर्मितसदृशा हि देवपुत्रा मम
10 धर्मश्रवणिका एष्टव्याः। तत्कस्य हेतोः? तथा हि ते नैव श्रोष्यन्ति न च साक्षात्करिष्यन्ति ॥

अथ खलु ते देवपुत्रा आयुष्मन्तं सुभूतिमेतदवोचन्—किं पुनरार्य सुभूते मायो-
पमास्ते सत्त्वा न ते माया? एवमुक्ते आयुष्मान् सुभूतिस्तान् देवपुत्रानेतदवोचत्—मायो-
W 159 पमास्ते देवपुत्राः सत्त्वाः। स्वप्नोपमास्ते देवपुत्राः सत्त्वाः। इति हि माया च सत्त्वाश्च
अद्वयमेतदद्वैधीकारम्, इति हि स्वप्नश्च सत्त्वाश्च अद्वयमेतदद्वैधीकारम्। सर्वधर्मा अपि
15 देवपुत्रा मायोपमाः स्वप्नोपमाः। स्रोतआपन्नोऽपि मायोपमः स्वप्नोपमः। स्रोतआपत्तिफलमपि
मायोपमं स्वप्नोपमम्। एवं सकृदागाम्यपि सकृदागामिफलमपि, अनागाम्यपि अना[1]गामि-
W 160 फलमपि, अर्हन्नपि अर्हत्त्वमपि मायोपमं स्वप्नोपमम्। प्रत्येकबुद्धोऽपि मायोपमः स्वप्नोपमः।
प्रत्येकबुद्धत्वमपि मायोपमं स्वप्नोपमम्। सम्यक्संबुद्धोऽपि मायोपमः स्वप्नोपमः। सम्यक्सं-
R 40 बुद्धत्वमपि मायोपमं स्वप्नोपमम्। अथ खलु देवपुत्रा आयुष्मन्तं सुभूतिमेतदवोचन्—
20 सम्यक्संबुद्धोऽप्यार्य सुभूते मायोपमः स्वप्नोपम इति वदसि? सम्यक्संबुद्धत्वपि मायोपमं
स्वप्नोपममिति वदसि? सुभूतिराह—निर्वाणमपि देवपुत्रा मायोपमं स्वप्नोपममिति वदामि,
किं पुनरन्यं धर्मम्। ते देवपुत्रा आहुः—निर्वाणमप्यार्य सुभूते मायोपमं स्वप्नोपममिति वदसि?
आयुष्मान् सुभूतिराह—तद्यदि देवपुत्रा निर्वाणादप्यन्यः कश्चिद्धर्मो विशिष्टतरः स्यात्,
W 161 तमप्यहं मायोपमं स्वप्नोपममिति वदेयम्। इति हि देवपुत्रा माया च निर्वाणं च अद्वयमेत-
25 दद्वैधीकारम्। इति हि स्वप्नश्च निर्वाणं च अद्वयमेतदद्वैधीकारम् ॥

अथ खल्वायुष्मान् शारिपुत्रः, आयुष्मांश्च पूर्णो मैत्रायणीपुत्रः, आयुष्मांश्च
महाकोष्ठिलः, आयुष्मांश्च महाकात्यायनः, आयुष्मांश्च महाकाशपः, अन्ये च महाश्रावका
अनेकैर्बोधिसत्त्वसहस्रैः सार्धमायुष्मन्तं सुभूतिं स्थविरमामन्त्रयन्ते स्म—केऽस्या आयुष्मन्
सुभूते प्रज्ञापारमिताया एवं निर्दिश्यमानायाः प्रत्येषका भविष्यन्ति? अथ खल्वायुष्मा-
W 162 30 नानन्दस्तान् स्थविरानेतदवोचत्—ते खल्वायुष्मन्तो वेदितव्या अविनिवर्तनीया बोधिसत्त्वा

१ W om. अनागामिफलमपि......प्रत्येकबुद्धोऽपि.

महासत्त्वाः, दृष्टिसंपन्ना वा पुद्गलाः, अर्हन्तो वा क्षीणास्रवाः, येऽस्याः प्रज्ञापारमिताया एवं निर्दिश्यमानायाः प्रत्येषका भविष्यन्ति ॥

अथ खल्वायुष्मान् सुभूतिः स्थविरस्तान् स्थविरानेतदवोचत्—नास्या आयुष्मन्तः प्रज्ञापारमिताया एवं निर्दिश्यमानायाः केचित्प्रत्येषका भविष्यन्ति। तत्कस्य हेतोः? तथा हि—अत्र न कश्चिद्धर्मः सूच्यते, न कश्चिद्धर्मः परिदीप्यते, न कश्चिद्धर्मः प्रज्ञप्यते। तद्यथै- 5 R 41
वात्र न कश्चिद्धर्मः सूच्यते, न कश्चिद्धर्मः परिदीप्यते, न कश्चिद्धर्मः प्रज्ञप्यते, तथैवास्याः W 163
प्रज्ञापारमिताया एवं निर्दिश्यमानाया न कश्चित्प्रत्येषको भविष्यति ॥

अथ खलु शक्रस्य देवानामिन्द्रस्यैतदभूत्—अस्य धर्मपर्यायस्य आर्येण सुभूतिना भाष्यमाणस्य पूजार्थं यन्न्वहं पुष्पाण्यभिनिर्माय आर्यं सुभूतिमभ्यवकिरेयमिति। अथ खलु शक्रो देवानामिन्द्रस्तस्यां वेलायां पुष्पाण्यभिनिर्माय आयुष्मन्तं सुभूतिमभ्यवाकिरत्। अथ 10
खल्वायुष्मतः सुभूतेः स्थविरस्य शक्रं देवानामिन्द्रमनुव्याहरणायैतदभूत्—न खलु पुनरिमानि W 164
पुष्पाणि मया त्रायस्त्रिंशेषु देवेषु प्रचरन्ति दृष्टपूर्वाणि, यानीमानि शक्रेण देवानामिन्द्रेण अभ्यवकीर्णानि। निर्मितान्येतानि पुष्पाणि। नैतानि पुष्पाणि वृक्षगुल्मलतानिर्जातानि, यानि शक्रेण देवानामिन्द्रेणाभ्यवकीर्णानि, मनोमयान्येतानि पुष्पाणीति। अथ खलु शक्रो देवानामिन्द्र आयुष्मतः सुभूतेश्चेतसैव चेतःपरिवितर्कमाज्ञाय आयुष्मन्तं सुभूतिमेतदवोचत्— 15
अनिर्जातान्येतान्यार्य सुभूते पुष्पाणि। तत्कस्य हेतोः? न हि मनोनिर्जातानि कानि-चित्पुष्पाणि, नापि वृक्षगुल्मलतानिर्जातानि। अथ खल्वायुष्मान् सुभूतिः शक्रं देवानामिन्द्र- W 165
मेतदवोचत्—यत्त्वं कौशिक एवं वदसि—अनिर्जातान्येतानि पुष्पाणि, नैतानि मनोनिर्जातानि, नापि वृक्षगुल्मलतानिर्जातानीति। यत्कौशिक अनिर्जातं न तत्पुष्पम्। अथ खलु R 42
शक्रस्य देवानामिन्द्रस्यैतदभूत्—गम्भीरप्रज्ञो बतायमार्यः सुभूतिः। तां च नाम पदप्रज्ञप्तिं 20
निर्दिशति, तां च न विरोधयति, तां चोत्तानीकरोति, तामेव चोपदिशति। अथ खलु शक्रो देवानामिन्द्र आयुष्मन्तं सुभूतिमेतदवोचत्—एवमेतदार्य सुभूते, एवमेतत्। एवं W 166
चात्र बोधिसत्त्वेन महासत्त्वेन शिक्षितव्यं यथा आर्यसुभूतिरुपदिशति। एवमुक्ते आयुष्मान् सुभूतिः शक्रं देवानामिन्द्रमेतदवोचत्—एवमेतत्कौशिक, एवमेतत्। एवमत्र बोधिसत्त्वेन महासत्त्वेन शिक्षितव्यम्। एवं शिक्षमाणः कौशिक बोधिसत्त्वो महासत्त्वो न स्रोतआपत्ति- 25
फले शिक्षते, न सकृदागामिफले, न अनागामिफले, नार्हत्त्वे शिक्षते, न प्रत्येकबुद्धत्वे शिक्षते, न बुद्धत्वे शिक्षते। यो नासु भूमिषु शिक्षते, स बुद्धत्वे सर्वज्ञत्वे वा शिक्षते। यो बुद्धत्वे सर्वज्ञत्वे वा शिक्षते, सोऽप्रमेयेष्वसंख्येयेषु बुद्धधर्मेषु शिक्षते। योऽप्रमेयेष्वसंख्येयेषु बुद्धधर्मेषु शिक्षते, स न रूपस्य विवृद्धये शिक्षते, न परिहाणाय। एवं स न वेदनाया न संज्ञाया न संस्काराणाम्। स न विज्ञानस्य विवृद्धये शिक्षते, न परिहाणाय। यो न रूपस्य 30
विवृद्धये शिक्षते न परिहाणाय। एवं न वेदनाया न संज्ञाया न संस्काराणाम्। यो न R 43
विज्ञानस्य विवृद्धये शिक्षते न परिहाणाय, स न रूपस्य परिग्रहाय शिक्षते नोत्सर्गाय।

एवं स न वेदनाया न संज्ञाया न संस्काराणाम्। स न विज्ञानस्य परिग्रहाय शिक्षते, नोत्सर्गाय, नापि कस्यचिद्धर्मस्य परिग्रहाय शिक्षते, नोत्पादाय नान्तर्धानाय शिक्षते। यो न कस्यचिद्धर्मस्य परिग्रहाय शिक्षते, नोत्पादाय नान्तर्धानाय शिक्षते, स न सर्वज्ञताया अपि परिग्रहाय शिक्षते, नोत्पादाय नान्तर्धानाय शिक्षते। एवं शिक्षमाणो बोधिसत्त्वो महासत्त्वः सर्वज्ञतायां शिक्षते, सर्वज्ञतायां निर्यास्यति॥

W 168 ... 5

W 169 अथ खल्वायुष्मान् शारिपुत्र आयुष्मन्तं सुभूतिमेतदवोचत्—य आयुष्मन् सुभूते बोधिसत्त्वो महासत्त्वो न कस्यचिद्धर्मस्य परिग्रहाय शिक्षते, नोत्पादाय नान्तर्धानाय शिक्षते, स न सर्वज्ञताया अपि परिग्रहाय शिक्षते, नोत्पादाय नान्तर्धानाय शिक्षते। एवं शिक्षमाण आयुष्मन् सुभूते बोधिसत्त्वो महासत्त्वः सर्वज्ञतायां शिक्षते, सर्वज्ञतायां निर्यास्यति॥

10 आयुष्मान् सुभूतिराह—एवमेतदायुष्मन् शारिपुत्र, एवमेतत्। य आयुष्मन् शारिपुत्र बोधिसत्त्वो महासत्त्वो न कस्यचिद्धर्मस्य परिग्रहाय शिक्षते, नोत्पादाय नान्तर्धानाय शिक्षते, स न सर्वज्ञताया अपि परिग्रहाय शिक्षते, नोत्पादाय नान्तर्धानाय शिक्षते। सर्वबुद्धधर्माणामपि न परिग्रहाय शिक्षते, नोत्पादाय नान्तर्धानाय शिक्षते। एवं चायुष्मन् शारिपुत्र शिक्षमाणो बोधिसत्त्वो महासत्त्वः सर्वज्ञतायां शिक्षते, सर्वज्ञतायां निर्यास्यति॥

R 44 W 172 15 अथ खलु शक्रो देवानामिन्द्र आयुष्मन्तं शारिपुत्रमेतदवोचत्—प्रज्ञापारमिता आर्य शारिपुत्र बोधिसत्त्वेन महासत्त्वेन कुतो गवेषितव्या? शारिपुत्र आह—प्रज्ञापारमिता कौशिक बोधिसत्त्वेन महासत्त्वेन आयुष्मतः सुभूतेः परिवर्ताद्गवेषितव्या। एवमुक्ते शक्रो देवानामिन्द्र आयुष्मन्तं शारिपुत्रमेतदवोचत्—कस्यैष आर्य शारिपुत्र अनुभावो वेदितव्यः? कस्यैतदधिष्ठानं वेदितव्यं यदार्यसुभूतिः प्रज्ञापारमितां भाषते? आयुष्मान् शारिपुत्र आह—तथागतस्यैष कौशिक अनुभावो वेदितव्यः। तथागतस्यैतदधिष्ठानं वेदितव्यं यदायुष्मान् सुभूतिः प्रज्ञापारमितां भाषते। अथ खल्वायुष्मान् सुभूतिः शक्रं देवानामिन्द्रमेतदवोचत्—यत्कौशिक एवं वदसि—कस्यैषोऽनुभावो वेदितव्यः, कस्यैतदनुष्ठानं वेदितव्यं यदार्यसुभूतिः प्रज्ञापारमितां भाषते इति? तथागतस्यैष कौशिक अनुभावो वेदितव्यः। तथागतस्यैतदधिष्ठानं वेदितव्यं यदहं प्रज्ञापारमितां भाषे। यदपि कौशिक एवं वदसि—प्रज्ञापारमिता बोधिसत्त्वेन महासत्त्वेन कुतो गवेषितव्येति? प्रज्ञापारमिता कौशिक बोधिसत्त्वेन महासत्त्वेन न रूपाद्गवेषितव्या नाप्यन्यत्र रूपाद्गवेषितव्या। एवं न वेदनाया न संज्ञाया न संस्कारेभ्यः। न विज्ञानाद्गवेषितव्या, नाप्यन्यत्र विज्ञानाद्गवेषितव्या। तत्कस्य हेतोः? तथा हि न रूपं प्रज्ञापारमिता, नाप्यन्यत्र रूपात्प्रज्ञापारमिता। एवं न वेदना न संज्ञा न संस्काराः। न विज्ञानं प्रज्ञापारमिता, नाप्यन्यत्र विज्ञानात्प्रज्ञापारमिता॥

20 ... W 173 ... 25

R 45 W 174 30 एवमुक्ते शक्रो देवानामिन्द्र आयुष्मन्तं सुभूतिमेतदवोचत्—महापारमितेयमार्य सुभूते यदुत प्रज्ञापारमिता। अप्रमाणपारमितेयमार्य सुभूते यदुत प्रज्ञापारमिता। अपरि-

---

१ W om. शिक्षते.

माणपारमितेयमार्य सुभूते यदुत प्रज्ञापारमिता। अनन्तपारमितेयमार्य सुभूते यदुत प्रज्ञापारमिता। स्थविरः सुभूतिराह–एवमेतत्कौशिक, एवमेतत्। महापारमितेयं कौशिक यदुत प्रज्ञापारमिता। अप्रमाणपारमितेयं कौशिक यदुत प्रज्ञापारमिता। अपरिमाणपारमितेयं कौशिक यदुत प्रज्ञापारमिता। अनन्तपारमितेयं कौशिक यदुत प्रज्ञापारमिता। तत्कस्य हेतोः? रूपमहत्तया हि कौशिक महापारमितेयं यदुत प्रज्ञापारमिता। एवं वेदना- 5
संज्ञासंस्काराः। विज्ञानमहत्तया हि कौशिकमहापारमितेयं यदुत प्रज्ञापारमिता। रूपाप्रमाणतया कौशिक अप्रमाणपारमितेयं यदुत प्रज्ञापारमिता। एवं वेदनासंज्ञासंस्काराः। विज्ञानाप्रमाणतया कौशिक अप्रमाणपारमितेयं यदुत प्रज्ञापारमिता। रूपापरिमाणतया कौशिक अपरिमाणपारमितेयं यदुत प्रज्ञापारमिता। एवं वेदनासंज्ञासंस्काराः। विज्ञानापरिमाणतया कौशिक अपरिमाणपारमितेयं यदुत प्रज्ञापारमिता। रूपानन्ततया 10 कौशिक अनन्तपारमितेयं यदुत प्रज्ञापारमिता। एवं वेदनासंज्ञासंस्काराः। विज्ञानानन्ततया कौशिक अनन्तपारमितेयं यदुत प्रज्ञापारमिता। एवं महापारमितेति कौशिक नाभिनिविशते। एवमप्रमाणपारमितेति, एवमपरिमाणपारमितेति, एवमनन्तपारमितेति नाभिनिविशते। तस्मात्कौशिक महापारमितेयम्, अप्रमाणपारमितेयम्, अपरिमाणपारमितेयम्, अनन्तपारमितेयं यदुत प्रज्ञापारमिता॥ 15

W 175

आरम्बणानन्ततया कौशिक अनन्तपारमितेयं यदुत प्रज्ञापारमिता। सत्त्वानन्ततया कौशिक अनन्तपारमितेयं यदुत प्रज्ञापारमिता। कथं पुनः कौशिक आरम्बणानन्ततया अनन्तपारमितेयं यदुत प्रज्ञापारमिता? सर्वधर्माणां हि कौशिक यतो नान्तो न मध्यं न पर्यवसानमुपलभ्यते, ततः कौशिक अनन्तपारमितेयं यदुत प्रज्ञापारमिता। अनेन कौशिक पर्यायेण आरम्बणानन्ततया अनन्तपारमितेयं यदुत प्रज्ञापारमिता। पुनरपरं कौशिक 20 यस्मात्सर्वधर्मा अनन्ता अपर्यन्ताः, न तेषामन्तो वा मध्यं वा पर्यवसानं वा उपलभ्यते, तस्मात्कौशिक अनन्तपारमितेयं यदुत प्रज्ञापारमिता। तत्कस्य हेतोः? रूपस्य हि कौशिक नान्तो न मध्यं न पर्यवसानमुपलभ्यते। एवं वेदनायाः संज्ञायाः संस्काराणाम्। विज्ञानस्य हि कौशिक नान्तो न मध्यं न पर्यवसानमुपलभ्यते। अनेनापि कौशिक पर्यायेण आरम्बणानन्ततया अनन्तपारमितेयं यदुत प्रज्ञापारमिता॥ 25

R 46
W 176
W 177

पुनरपरं कौशिक सत्त्वोऽनन्तोऽपर्यन्तः। तत्कस्य हेतोः? न हि सत्त्वस्यान्तो वा मध्यं वा पर्यवसानं वोपलभ्यते। तस्मात्कौशिक सत्त्वानन्ततया अनन्तपारमितेयं यदुत प्रज्ञापारमिता। अथ खलु शक्रो देवानामिन्द्र आयुष्मन्तं सुभूतिमेतदवोचत्–कथमायुष्मन् सुभूते सत्त्वानन्ततया अनन्तपारमितेयं यदुत प्रज्ञापारमिता? स्थविरः सुभूतिराह–न हि कौशिक गणनायोगेन वा गणनाबहुत्वेन वा सत्त्वानन्ततया अनन्तपारमितेयं यदुत 30 प्रज्ञापारमिता॥

W 178

शक्र आह–कथं तर्हीदानीमार्य सुभूते सत्त्वानन्ततया अनन्तपारमितेयं यदुत

R 47 प्रज्ञापारमिता? स्थविरः सुभूतिराह–तत्किं मन्यसे कौशिक कतमस्यैतद्धर्मस्याधिवचनं यदुत सत्त्वः सत्त्व इति? शक्र आह–नैतदार्य सुभूते धर्मस्याधिवचनं न अधर्माधिवचनं
W 179 यदुत सत्त्वः सत्त्व इति। आगन्तुकमेतन्नामधेयं प्रक्षिप्तम्। अवस्तुकमेतन्नामधेयं प्रक्षिप्तम्। अनात्मीयमेतन्नामधेयं प्रक्षिप्तम्। अनारम्बणमेतन्नामधेयं प्रक्षिप्तं यदुत सत्त्वः सत्त्व इति।
5 स्थविरः सुभूतिराह–तत्किं मन्यसे कौशिक काचिदत्र सत्त्वपरिदीपना कृता? शक्र आह–नो हीदमार्य सुभूते। सुभूतिराह–यत्र कौशिक न काचित्सत्त्वपरिदीपना कृता, तत्र का सत्त्वानन्तता? सचेत्कौशिक तथागतोऽर्हन् सम्यक्संबुद्धोऽनन्तविज्ञप्तिघोषेण गम्भीर-
W 180 निर्घोषेण स्वरेण गङ्गानदीवालुकोपमान् कल्पानपि वितिष्ठमानः सत्त्वः सत्त्व इति वाचं भाषेत, अपि नु तत्र कश्चित्सत्त्व उत्पन्नो वा उत्पत्स्यते वा उत्पद्यते वा, निरुद्धो वा
10 निरोत्स्यते वा निरुध्यते वा? शक्र आह–नो हीदमार्य सुभूते। तत्कस्य हेतोः? आदि-
W 181 शुद्धत्वादादिपरिशुद्धत्वात्सत्त्वस्य। सुभूतिराह–अनेनापि कौशिक पर्यायेण एवं सत्त्वानन्ततया अनन्तपारमितेयं यदुत प्रज्ञापारमिता। एवं च पुनः कौशिक सत्त्वानन्ततया प्रज्ञापारमितानन्तता वेदितव्या॥

R 48 अथ खलु सेन्द्रका देवाः सब्रह्मकाः सप्रजापतिकाः सर्षिनरनारीगणास्त्रिरुदान-
15 मुदानयन्ति स्म–अहो धर्मः, अहो धर्मः, अहो धर्मस्य धर्मता। यस्तथागतस्य प्रादुर्भावः, स आर्येण सुभूतिना स्थविरेण सुभाषितेनेह सूच्यते देश्यते प्रकाश्यते प्रभाव्यते। तथागतं
W 182 तं वयं भगवन् बोधिसत्त्वं महासत्त्वमग्राग्रेण धारयिष्यामो योऽनया प्रज्ञापारमितया अविरहितो भविष्यति, योऽपि च अनेन बोधिसत्त्वो महासत्त्वः प्रज्ञापारमिताविहारेण विहरिष्यति॥

अथ खलु भगवांस्तान् सेन्द्रकान् सब्रह्मकान् सप्रजापतिकान् सर्षिनरनारीगणाना-
20 मन्त्रयते स्म–एवमेतद्देवपुत्राः, एवमेतत्। यदाहं देवपुत्रा दीपंकरस्य तथागतस्यार्हतः सम्यक्संबुद्धस्यान्तिके दीपवत्यां राजधान्यामन्तरायणमध्यगतोऽनया प्रज्ञापारमितया अविरहितोऽभूवम्, तदाहं दीपंकरेण तथागतेनार्हता सम्यक्संबुद्धेन व्याकृतोऽनुत्तरायां सम्यक्संबोधौ–भविष्यसि त्वं माणव अनागतेऽध्वनि असंख्येयैः कल्पैः शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां
W 185 25 च मनुष्याणां च बुद्धो भगवानिति। अथ खलु ते देवपुत्रा भगवन्तमेतदवोचन्–आश्चर्यं भगवन्, परमाश्चर्यं सुगत। यावदियं प्रज्ञापारमिता बोधिसत्त्वानां महासत्त्वानां सर्वज्ञताया आहारिका अनुपरिग्राहिका चेति॥

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां शक्रपरिवर्तो नाम द्वितीयः॥



## ३ अप्रमेयगुणधारणपारमितास्तूपसत्कारपरिवर्तस्तृतीयः ।

अथ खलु भगवान् ये तत्र देवपुत्राः पर्षदि संनिपतिताः संनिषण्णाश्चाभूवन्, याश्च भिक्षुभिक्षुण्युपासकोपासिकाः संनिपतिताः संनिषण्णाश्चाभूवन्, तान् देवपुत्रान् संनिपतितान् संनिषण्णांश्च विदित्वा, ताश्च सर्वाश्चतस्रः पर्षदः संनिपतिताः संनिषण्णाश्च विदित्वा, कामावचरान् रूपावचरांश्च देवपुत्रान् ब्रह्मकायिकांश्च देवपुत्रान् आभास्वरांश्च परीत्तशुभांश्च अकनिष्ठांश्च देवपुत्रान् साक्षिणः स्थापयित्वा, शक्रदेवेन्द्रप्रमुखान् कामावचरान् देवपुत्रान् महाब्रह्मप्रमुखांश्च ब्रह्मकायिकान् देवपुत्रानाभास्वरांश्च देवपुत्रानामन्त्रयते स्म–यो हि कश्चिद्देवपुत्राः कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितामुद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति, न तस्य मारो वा मारकायिका वा देवता अवतारप्रेक्षिण्योऽवतारगवेषिण्योऽवतारं लप्स्यन्ते । नापि तस्य कुलपुत्रस्य वा कुलदुहितुर्वा मनुष्या वा अमनुष्या वा अवतारप्रेक्षिणोऽवतारगवेषिणोऽवतारं लप्स्यन्ते । नापि स कुलपुत्रो वा कुलदुहिता वा विषमापरिहारेण कालं करिष्यति ॥

पुनरपरं देवपुत्राः ये देवपुत्रा अनुत्तरायां सम्यक्संबोधौ संप्रस्थिताः, यैश्च देवपुत्रैरियं प्रज्ञापारमिता नोद्गृहीता न धारिता न वाचिता न पर्यवाप्ता न प्रवर्तिता, ते देवपुत्रास्तं कुलपुत्रं वा कुलदुहितरं वा उपसंक्रमितव्यं मंस्यन्ते, तस्य च कुलपुत्रस्य वा कुलदुहितुर्वा इमां प्रज्ञापारमितामुद्गृह्णतो धारयतो वाचयतः पर्यवाप्नुवतः प्रवर्तयमानस्यान्तिकाच्छ्रोष्यन्ति, श्रुत्वा चोद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति । न च खलु पुनर्देवपुत्रास्तस्य कुलपुत्रस्य वा कुलदुहितुर्वा इमां प्रज्ञापारमितामुद्गृह्णतो धारयतो वाचयतः पर्यवाप्नुवतः प्रवर्तयमानस्य अरण्यगतस्य वा वृक्षमूलगतस्य वा शून्यागारगतस्य वा अभ्यवकाशगतस्य वा पथि गतस्य वा उत्पथगतस्य वा अटवीगतस्य वा महासमुद्रगतस्य वा तत्र तत्रोपसंक्रामतो वा चंक्रम्यमाणस्य वा स्थितस्य वा निषण्णस्य वा विपन्नस्य वा भयं वा भविष्यति, स्तम्भितत्वं वा भविष्यति, उत्पत्स्यते वा ॥

अथ खलु चत्वारो महाराजानो भगवन्तमेतदवोचन्–आश्चर्यं भगवन् यदिमां प्रज्ञापारमितामुद्गृह्णन् धारयन् वाचयन् पर्यवाप्नुवन् प्रवर्तयन् स कुलपुत्रो वा कुलदुहिता वा यानत्रये सत्त्वान् विनयति, न च सत्त्वसंज्ञामुत्पादयति । वयं भगवंस्तस्य कुलपुत्रस्य वा कुलदुहितुर्वा रक्षावरणगुप्तिं संविधास्यामः, य इमां प्रज्ञापारमितामुद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति ॥

अथ खलु शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्–अहमपि भगवंस्तस्य कुलपुत्रस्य वा कुलदुहितुर्वा रक्षावरणगुप्तिं संविधास्यामि, य इमां प्रज्ञापारमितामुद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति ॥

ब्रह्मापि सहापतिः सार्धं ब्रह्मकायिकैर्देवपुत्रैर्भगवन्तमेतदवोचत्–अहमपि भगवंस्तस्य कुलपुत्रस्य वा कुलदुहितुर्वा रक्षावरणगुप्तिं संविधास्यामि, य इमां प्रज्ञापारमितामुद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति ॥

अथ खलु शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्–आश्चर्यं भगवन् यदिमां प्रज्ञापारमितामुद्गृह्णन् धारयन् वाचयन् पर्यवाप्नुवन् प्रवर्तयन् स कुलपुत्रो वा कुलदुहिता वा
W 192 इमान् यतो दृष्टधार्मिकान् गुणान् प्रतिलभते परिगृह्णाति, किं पुनर्भगवन् प्रज्ञापारमितायामुद्गृहीतायां सर्वाः षट् पारमिता उद्गृहीता भवन्ति? एवमुक्ते भगवान् शक्रं देवानामिन्द्र-
5 मेतदवोचत्–एवमेतत्कौशिक, एवमेतत्। प्रज्ञापारमितायां कौशिक उद्गृहीतायां सर्वाः षट् पारमिता उद्गृहीता भवन्ति। पुनरपरं कौशिक प्रज्ञापारमितायामुद्गृहीतायां धारितायां वाचितायां पर्यवाप्तायां प्रवर्तितायां स कुलपुत्रो वा कुलदुहिता वा दृष्टधार्मिकान् गुणान् परिगृह्णाति। तान् कौशिक सर्वान् शृणु, साधु च सुष्ठु च मनसि कुरु, भाषिष्येऽहं ते। साधु भगवन्निति
W 193 शक्रो देवानामिन्द्रो भगवतः प्रत्यश्रौषीत्। भगवानेतदवोचत्–तत्र कौशिक ये मम धर्मे
10 विग्रहीतव्यं मंस्यन्ते, विवदितव्यं मंस्यन्ते, विरोधयितव्यं मंस्यन्ते, तेषां विग्रहीतुकामानां विवदितुकामानां विरोधयितुकामानामुत्पन्नोत्पन्ना विग्रहा विवादा विरोधाः पुनरेवान्तर्धास्यन्ति,
R 52 न स्थास्यन्ति। तेषां विग्रहीतुकामानां विवदितुकामानां विरोधयितुकामानां न तेऽभिप्रायाः परिपूरिं गमिष्यन्ति। तत्कस्य हेतोः? एवं ह्येतत्कौशिक भवति–य इमां प्रज्ञापारमितां कुलपुत्रो वा कुलदुहिता वा उद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति
15 देशयिष्यति उपदेक्ष्यति उद्देक्ष्यति स्वाध्यास्यति, तस्यैवं तान्युत्पन्नोत्पन्नान्यधिकरणानि
W 194 पुनरेवान्तर्धास्यन्ति, न स्थास्यन्ति। तेषां विग्रहीतुकामानां विवदितुकामानां विरोधयितुकामानां न तेऽभिप्रायाः परिपूरिं गमिष्यन्ति। इममपि स कौशिक कुलपुत्रो वा कुलदुहिता वा दृष्टधार्मिकं गुणं परिगृह्णाति, य इमां प्रज्ञापारमितामुद्गृह्णाति धारयति वाचयति पर्यवाप्नोति प्रवर्तयति देशयति उपदिशति उद्दिशति स्वाध्यायति। तद्यथापि नाम कौशिक मघी नामौषधी सर्व-
20 विषप्रशमनी। तत्र आशीविषेण जन्तुना बुभुक्षितेन आहारार्थिना आहारगवेषिणा कश्चिदेव प्राणकजातो जन्तुर्दृष्टो भवेत्। स आशीविषस्तं प्राणकजातं गन्धेनानुबध्नीयादनुगच्छेदाहारहेतोर्भक्षयितुकामः। अथ स प्राणकजातो येन सा मघी नामौषधी तेनोपसंक्रामेत्, तेनोपसंक्रम्य तिष्ठेत्[1]। अथ स आशीविषस्तस्या ओषध्या गन्धेनैव प्रत्युदावर्तेत। तत्कस्य हेतोः?
W 195 तथा हि तस्या ओषध्या भैषज्यगुणः स तादृशो यस्तस्याशीविषस्य तद्विषमभिभवति। एवं
25 बलवती हि सा ओषधी। एवमेव कौशिक यः कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितामुद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति देशयिष्यति उपदेक्ष्यति उद्देक्ष्यति स्वाध्यास्यति, तस्य कौशिक यानि तान्युत्पन्नोत्पन्नान्यधिकरणानि विग्रहा विवादा
R 53 W 196 विरोधा भविष्यन्ति, ते प्रज्ञापारमितायास्तेजसा बलेन स्थामतः प्रज्ञापारमिताबलाधानेन क्षिप्रं तत एवोपरंस्यन्ति उपशमिष्यन्ति अन्तर्धास्यन्ति न विवर्धिष्यन्ते। यतो यत एवोत्पत्स्यन्ते,
30 तत्र तत्रैव निरोत्स्यन्ते अन्तर्धास्यन्ति, न विवर्धिष्यन्ते न स्थास्यन्ति। तत्कस्य हेतोः? प्रज्ञापारमिता हि रागादीनां यावन्निर्वाणग्राहस्योपशमयित्री, न विवर्धिकेति। चत्वारश्च तस्य

1 After तिष्ठेत् Ap adds: परिकल्पमुपादाय.

महाराजानः शक्रश्च देवानामिन्द्रो ब्रह्मा च सहापतिः सर्वे च बुद्धा भगवन्तो बोधिसत्त्वाश्च रक्षावरणगुप्तिं संविधास्यन्ति, य इमां प्रज्ञापारमितामुद्ग्रहीष्यति धारयिष्यति वाचयिष्यति W 197 पर्यवाप्स्यति प्रवर्तयिष्यति देशयिष्यति उपदेक्ष्यति उद्देक्ष्यति स्वाध्यास्यति। अयं तेन कुलपुत्रेण वा कुलदुहित्रा वा दृष्टधार्मिको गुणः परिगृहीतो भविष्यति॥

पुनरपरं कौशिक यः कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितामुद्ग्रहीष्यति 5 धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति देशयिष्यति उपदेक्ष्यति उद्देक्ष्यति स्वाध्यास्यति, स आदेयवचनश्च भविष्यति, मृदुवचनश्च भविष्यति, मितवचनश्च भविष्यति, अप्रकीर्णवचनश्च भविष्यति, न च क्रोधाभिभूतो भविष्यति, न च मानाभिभूतो भविष्यति। W 198 तत्कस्य हेतोः? तथा हि तं प्रज्ञापारमिता परिदमयति, प्रज्ञापारमिता परिणमयति, न क्रोधं वर्धयति, न मानं वर्धयति। स नोपनाहं परिगृह्णाति, न व्यापादं परिगृह्णाति, नानुशयं 10 R 54 धारयति। एवं चरतोऽस्य कुलपुत्रस्य वा कुलदुहितुर्वा स्मृतिर्मैत्री चोत्पद्यते। तस्यैवं भवति—सचेदहं व्यापादमुत्पादयिष्यामि, तेनेन्द्रियाणि मे परिभेत्स्यन्ते, मुखवर्णश्च मे धक्ष्यते। W 199 अयुक्तं चैतन्मम यदहमनुत्तरायां सम्यक्संबोधौ संप्रस्थितः, तत्र शिक्षितुकामः, क्रोधस्य वशं गच्छेयम्। इत्येवं स क्षिप्रमेव स्मृतिं प्रतिलभते। इममपि स कौशिक कुलपुत्रो वा कुलदुहिता वा दृष्टधार्मिकं गुणं परिगृह्णाति, य इमां प्रज्ञापारमितामुद्ग्रहीष्यति धारयिष्यति वाच- 15 यिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति देशयति उपदेक्ष्यति उद्देक्ष्यति स्वाध्यास्यति। एवमुक्ते शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—आश्चर्यं भगवन् यथेयं प्रज्ञापारमिता परिदमनाय W 200 प्रत्युपस्थिता अनुनामाय बोधिसत्त्वानां महासत्त्वानाम्॥

W 201 भगवानाह—पुनरपरं कौशिक य इमां प्रज्ञापारमितां कुलपुत्रो वा कुलदुहिता वा उद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति देशयिष्यति उपदेक्ष्यति उद्देक्ष्यति 20 स्वाध्यास्यति, सचेत्कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितामेवमुद्गृह्णन् धारयन् वाचयन् पर्यवाप्नुवन् प्रवर्तयन् देशयन् उपदिशन् उद्दिशन् स्वाध्यायन् संग्रामे वर्तमाने संग्रामशिरसि समारूढः स्यात्। तस्य संग्राममवतरतो वा अवतीर्णस्य वा अतिक्रामतो वा संग्राममध्यगतस्य वा तिष्ठतो वा निषण्णस्य वा अस्थानमेतत्कौशिक अनवकाशो यत्तस्य कुलपुत्रस्य वा कुलदुहितुर्वा इमां प्रज्ञापारमितां मनसि कुर्वतो वा उद्गृह्णतो वा धारयतो वा वाचयतो वा पर्यवाप्नुवतो 25 R 55 वा प्रवर्तयतो वा देशयतो वा उपदिशतो वा उद्दिशतो वा स्वाध्यायतो वा जीवितान्तरायो वा भवेत्। परोपक्रमेण जीवितान्तरायं सोऽनुप्राप्नुयात्, नैतत्स्थानं विद्यते। सचेत्पुनस्तस्य W 202 कश्चित्कौशिक तत्र शस्त्रं वा दण्डं वा लोष्टं वा अन्यद्वा क्षिपेत्, नैतत्तस्य शरीरे निपतेत्। तत्कस्य हेतोः? महाविद्येयं कौशिक यदुत प्रज्ञापारमिता। अप्रमाणेयं कौशिक विद्या W 203 यदुत प्रज्ञापारमिता। अपरिमाणेयं कौशिक विद्या यदुत प्रज्ञापारमिता। अनुत्तरेयं 30 कौशिक विद्या यदुत प्रज्ञापारमिता। असमेयं कौशिक विद्या यदुत प्रज्ञापारमिता। असमसमेयं कौशिक [विद्या] यदुत प्रज्ञापारमिता। तत्कस्य हेतोः? अत्र हि कौशिक

विद्यायां शिक्षमाणः कुलपुत्रो वा कुलदुहिता वा नात्मव्याबाधाय चेतयते, न परव्याबाधाय
W 204 चेतयते, नोभयव्याबाधाय चेतयते। अत्र हि कौशिक विद्यायां शिक्षमाणो बोधिसत्त्वो
महासत्त्वोऽनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते, सर्वज्ञज्ञानं च प्रतिलप्स्यते। तेन सोऽनुत्तरां
सम्यक्संबोधिमभिसंबुध्य सर्वसत्त्वानां चित्तानि व्यवलोकयिष्यति। तत्कस्य हेतोः? अत्र हि
5 कौशिक विद्यायां शिक्षमाणस्य बोधिसत्त्वस्य महासत्त्वस्य न तत्किंचिदस्ति, यन्न प्राप्तं
वा न ज्ञातं वा न साक्षात्कृतं वा स्यात्। तस्मात्सर्वज्ञज्ञानमित्युच्यते। अयमपि कौशिक
तेन कुलपुत्रेण वा कुलदुहित्रा वा दृष्टधार्मिको गुणः परिगृहीतो भविष्यति, य इमां
प्रज्ञापारमितामुद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति देशयिष्यति
उपदेक्ष्यति उद्देक्ष्यति स्वाध्यास्यति॥

W 205
R 56 10 पुनरपरं कौशिक यत्रेयं प्रज्ञापारमिता अन्तशो लिखित्वा पुस्तकगतां कृत्वा पूजा-
पूर्वंगमं स्थापयित्वा न सत्करिष्यते, नोद्ग्रहीष्यते, न धारयिष्यते, न वाचयिष्यते, न
पर्यवाप्स्यते, न प्रवर्तयिष्यते, न देशयिष्यते, नोपदेक्ष्यते, नोद्देक्ष्यते, न स्वाध्यास्यते, न तत्र
कौशिक सत्त्वानां मनुष्यो वा अमनुष्यो वा अवतारार्थिकोऽवतारगवेषी अवतारं लप्स्यते
स्थापयित्वा पूर्वकर्मविपाकम्। इममपि स कौशिक कुलपुत्रो वा कुलदुहिता वा दृष्टधार्मिकं
15 गुणं परिगृह्णाति॥

W 206 पुनरपरं कौशिक तद्यथापि नाम ये बोधिमण्डगता वा बोधिमण्डपरिसामन्तगता वा
बोधिमण्डाभ्यन्तरगता वा बोधिवृक्षमूलगता वा मनुष्या वा अमनुष्या वा, तिर्यग्योनि-
गतानप्युपादाय, यावन्न ते शक्या मनुष्यैर्वा अमनुष्यैर्वा विहेठयितुं वा व्यापादयितुं वा
आवेशयितुं वा स्थापयित्वा पूर्वकर्मविपाकम्। तत्कस्य हेतोः? तत्र हि अतीतानागत-
20 प्रत्युत्पन्नास्तथागता अर्हन्तः सम्यक्संबुद्धा अभिसंबुद्धा अभिसंभोत्स्यन्ते अभिसंबुध्यन्ते च,
W 207 ये सर्वसत्त्वानामभयमवैरमनुत्रासं प्रभावयन्ति प्रकाशयन्ति। एवमेव कौशिक यत्र कुलपुत्रो
वा कुलदुहिता वा इमां प्रज्ञापारमितामुद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति
प्रवर्तयिष्यति देशयिष्यति उपदेक्ष्यति उद्देक्ष्यति स्वाध्यास्यति, तत्र हि कौशिक सत्त्वा न शक्या
मनुष्यैर्वा अमनुष्यैर्वा विहेठयितुं वा व्यापादयितुं वा आवेशयितुं वा, स्थापयित्वा पूर्वकर्म-
R 57 25 विपाकम्। तत्कस्य हेतोः? अनयैव हि कौशिक प्रज्ञापारमितया पृथिवीप्रदेशः सत्त्वानां
चैत्यभूतः कृतो वन्दनीयो माननीयः पूजनीयोऽर्चनीयोऽपचायनीयः सत्करणीयो गुरुकरणीयः,
त्राणं शरणं लयनं परायणं कृतो भविष्यति तत्रोपगतानां सत्त्वानाम्। इममपि स कौशिक
कुलपुत्रो वा कुलदुहिता वा दृष्टधार्मिकं गुणं परिगृह्णाति॥

W 208 एवमुक्ते शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—यो भगवन् कुलपुत्रो वा कुल-
30 दुहिता वा इमां प्रज्ञापारमितां लिखित्वा पुस्तकगतां कृत्वा स्थापयेत्, एनां च दिव्याभिः
पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजघण्टापताकाभिः समन्ताच्च दीपमालाभिः, बहु-
विधाभिश्च पूजाभिः सत्कुर्यात् गुरुकुर्यात् मानयेत् पूजयेत् अर्चयेत् अपचायेत्, यश्च

तथागतस्यार्हतः सम्यक्संबुद्धस्य परिनिर्वृतस्य शरीराणि स्तूपेषु प्रतिष्ठापयेत् परिगृह्णीयात् धारयेद्वा, तांश्च तथैव दिव्याभिः पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजघण्टापताकाभिः, समन्ताच्च दीपमालाभिः, बहुविधाभिश्च पूजाभिः सत्कुर्यात् गुरुकुर्यात् मानयेत् पूजयेत् अर्चयेत् अपचायेत्, कतरस्तयोः कुलपुत्रयोः कुलदुहित्रोर्वा बहुतरं पुण्यं प्रसवेत्? एवमुक्ते भगवान् शक्रं देवानामिन्द्रमेतदवोचत्—तेन हि कौशिक त्वामेवात्र प्रतिप्रक्ष्यामि। यथा ते 5 क्षमते, तथा व्याकुर्याः। तत्किं मन्यसे कौशिक योऽयं तथागतस्यार्हतः सम्यक्संबुद्धस्य सर्वज्ञतात्मभावोऽभिनिर्वर्तितः, स कतमस्यां प्रतिपदि शिक्षमाणेन तथागतेनार्हता सम्यक्संबुद्धेन अनुत्तरा सम्यक्संबोधिः सर्वज्ञता प्रतिलब्धा अभिसंबुद्धा? एवमुक्ते शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—इहैव भगवन् भगवता प्रज्ञापारमितायां शिक्षमाणेन तथागतेनार्हता सम्यक्संबुद्धेन अनुत्तरा सम्यक्संबोधिः सर्वज्ञता प्रतिलब्धा अभिसंबुद्धा। भगवानाह—तस्मात्तर्हि 10 कौशिक नानेनात्मभावशरीरप्रतिलम्भेन तथागतस्तथागत इति संख्यां गच्छति। सर्वज्ञतायां तु प्रतिलब्धायां तथागतस्तथागत इति संख्यां गच्छति। येयं कौशिक सर्वज्ञता तथागतस्यार्हतः सम्यक्संबुद्धस्य, प्रज्ञापारमितानिर्जातैषा। एष च कौशिक तथागतस्यात्मभावशरीरप्रतिलम्भः प्रज्ञापारमितोपायकौशल्यनिर्जातः सन् सर्वज्ञज्ञानाश्रयभूतो भवति। एनं ह्याश्रयं निश्रित्य सर्वज्ञज्ञानस्य प्रभावना भवति, बुद्धशरीरप्रभावना भवति, धर्मशरीरप्रभावना भवति, संघ- 15 शरीरप्रभावना भवति। इत्येवं सर्वज्ञज्ञानहेतुकोऽयमात्मभावशरीरप्रतिलम्भः सर्वज्ञज्ञानाश्रयभूतत्वात्सर्वसत्त्वानां चैत्यभूतो वन्दनीयः सत्करणीयो गुरुकरणीयो माननीयः पूजनीयोऽर्चनीयोऽपचायनीयः संवृत्तो भवति। एवं च मम परिनिर्वृतस्यापि सतः एषां शरीराणां पूजा भविष्यति। तस्मात्तर्हि कौशिक यः कश्चित्कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितां लिखित्वा पुस्तकगतां वा कृत्वा स्थापयेत्, एनां च दिव्याभिः पुष्पधूपगन्धमाल्यविलेपन- 20 चूर्णचीवरच्छत्रध्वजघण्टापताकाभिः सत्कुर्यात् गुरुकुर्यात् मानयेत् पूजयेत् अर्चयेत् अपचायेत्, अयमेव कौशिक तयोः कुलपुत्रयोः कुलदुहित्रोर्वा बहुतरं पुण्यं प्रसवेत्। तत्कस्य हेतोः? सर्वज्ञज्ञानस्य हि कौशिक तेन कुलपुत्रेण वा कुलदुहित्रा वा पूजा कृता भविष्यति, यः कुलपुत्रो वा कुलदुहिता वा इह प्रज्ञापारमितायां लिख्यमानायां पुस्तकगतायां वा सत्कारं गुरुकारं माननां पूजनामर्चनामपचायनां पूजां च विविधां कुर्यात्, अयमेव ततो 25 बहुतरं पुण्यं प्रसवेत्। तत्कस्य हेतोः? सर्वज्ञज्ञानस्य हि कौशिक तेन पूजा कृता भविष्यति, यः प्रज्ञापारमितायै पूजां करिष्यति॥

W 209 R 58 W 210 W 211 R 59 W 212

एवमुक्ते शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—य इमे भगवन् जाम्बूद्वीपका मनुष्या इमां प्रज्ञापारमितां न लिखिष्यन्ति, नोद्ग्रहीष्यन्ति न धारयिष्यन्ति न वाचयिष्यन्ति न पर्यवाप्स्यन्ति न प्रवर्तयिष्यन्ति न देशयिष्यन्ति नोपदेक्ष्यन्ति नोद्देक्ष्यन्ति न स्वाध्यास्यन्ति, 30 तां चैनां प्रज्ञापारमितां पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजघण्टापताकाभिः, समन्ताच्च दीपमालाभिः, बहुविधाभिश्च पूजाभिर्न सत्करिष्यन्ति, न गुरुकरिष्यन्ति, न

मानयिष्यन्ति, न पूजयिष्यन्ति, नार्चयिष्यन्ति, नापचायिष्यन्ति, किं नु ते भगवन् न ज्ञास्यन्ति एवं महार्थिका भगवतोक्ता प्रज्ञापारमितायाः पूजा कृता भविष्यतीति? किं नु ते भगवन् न वेत्स्यन्ति—एवं महानुशंसा एवं महाफला एवं महाविपाका भगवतोक्ता प्रज्ञा-
W 213 पारमितायाः पूजा कृता भविष्यतीति? न च ते वेदयिष्यन्ति, उत ज्ञास्यन्ति वेत्स्यन्ति,
5 वेदयिष्यन्ति, न च पुनः श्रद्धास्यन्ति? एवमुक्ते भगवान् शक्रं देवानामिन्द्रमेतदवोचत्—तत्किं मन्यसे कौशिक कियन्तस्ते जाम्बूद्वीपका मनुष्या ये बुद्धेऽवेत्य प्रसादेन समन्वागताः, ये धर्मेऽवेत्य प्रसादेन समन्वागताः, ये संघेऽवेत्य प्रसादेन समन्वागताः? एवमुक्ते शक्रो
R 60 देवानामिन्द्रो भगवन्तमेतदवोचत्—अल्पकास्ते भगवन् जाम्बूद्वीपका मनुष्या ये बुद्धेऽवेत्य प्रसादेन समन्वागताः, ये धर्मेऽवेत्य प्रसादेन समन्वागताः, ये संघेऽवेत्य प्रसादेन समन्वा-
10 गताः। एवमुक्ते भगवान् शक्रं देवानामिन्द्रमेतदवोचत्—एवमेतत्कौशिक, एवमेतत्।
W 214 अल्पकास्ते जाम्बूद्वीपका मनुष्या ये बुद्धेऽवेत्य प्रसादेन समन्वागताः, ये धर्मेऽवेत्य प्रसादेन समन्वागताः, ये संघेऽवेत्य प्रसादेन समन्वागताः। तेभ्यः कौशिक अल्पेभ्योऽल्पतरकास्ते, ये स्रोतआपत्तिफलं प्राप्नुवन्ति, ततः सकृदागामिफलमनागामिफलम्। तेभ्योऽप्यल्पेभ्योऽल्पतर-कास्तेयेऽर्हत्त्वं प्राप्नुवन्ति। तेभ्योऽप्यल्पेभ्योऽल्पतरकास्ते ये प्रत्येकबोधिं साक्षात्कुर्वन्ति। तेभ्योऽ-
15 प्यल्पेभ्योऽल्पतरकास्ते येऽनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पादयन्ति। तेभ्योऽप्यल्पेभ्योऽल्पतर-कास्ते येऽनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पाद्य तं चित्तोत्पादं बृंहयन्ति। तेभ्योऽप्यल्पेभ्योऽल्प-तरकास्ते येऽनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पाद्य उपबृंहयित्वा च आरब्धवीर्या विहरन्ति। तेभ्योऽप्यल्पेभ्योऽल्पतरकास्ते ये प्रज्ञापारमितायां योगमापद्यन्ते। तेभ्योऽप्यल्पेभ्योऽल्पतरकास्ते ये प्रज्ञापारमितायां चरन्ति। तेभ्योऽप्यल्पेभ्योऽल्पतरकास्ते ये प्रज्ञापारमितायां चरन्तो
20 घटमाना अविनिवर्तनीयायां बोधिसत्त्वभूमाववतिष्ठन्ते। तेभ्योऽप्यल्पेभ्योऽल्पतरकास्ते ये प्रज्ञापारमितायां चरन्तो घटमाना अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते। तेभ्योऽप्यल्पे-भ्योऽल्पतरकास्ते ये प्रज्ञापारमितायां चरन्तो घटमाना अनुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते। ते ते कौशिक बोधिसत्त्वा महासत्त्वा ये अविनिवर्तनीयायां बोधिसत्त्वभूमौ स्थित्वा अनुत्तरां
R 61 सम्यक्संबोधिमभिसंबुध्य अन्येषामध्याशयसंपन्नानां कुलपुत्राणां कुलदुहितॄणां च प्रज्ञापार-
W 215
25 मितायां शिक्षमाणानां घटमानानां प्रज्ञापारमितामुपदिशन्ति च उद्दिशन्ति। ते चोद्गृह्णन्ति धारयन्ति वाचयन्ति पर्यवाप्नुवन्ति प्रवर्तयन्ति उपदेशयन्ति उपदिशन्ति उद्दिशन्ति स्वाध्यायन्ति। तां चैनां प्रज्ञापारमितां पुष्पैर्धूपैर्गन्धैर्माल्यैर्विलेपनैश्चूर्णैर्वस्त्रैश्छत्रैर्ध्वजैर्घण्टाभिः पताकाभिः समन्ताच्च दीपमालाभिः, बहुविधाभिश्च पूजाभिः सत्कुर्वन्ति गुरुकुर्वन्ति मानयन्ति पूजयन्ति अर्चयन्ति अपचायन्ति। सन्ति खलु पुनः कौशिक अप्रमेया
30 असंख्येयाः सत्त्वाः, ये बोधिचित्तमुत्पादयन्ति, बोधिचित्तमुत्पाद्य बोधिचित्तमुपबृंहयन्ति, बोधिचित्तमुपबृंहयित्वा बोधाय चरन्ति। तेषां खलु पुनः कौशिक अप्रमेयाणा-मसंख्येयानां सत्त्वानां बोधाय चरतामपि यद्येको वा द्वौ वा अविनिवर्तनीयायां

बोधिसत्त्वभूमाववतिष्ठेयाताम्। तत्कस्य हेतोः? दुरभिसंभवा हि कौशिक अनुत्तरा सम्यक्संबोधिर्हीनवीर्यैः कुसीदैर्हीनसत्त्वैर्हीनचित्तैर्हीनसंज्ञैर्हीनाधिमुक्तिकैर्हीनप्रज्ञैः। तस्मात्तर्हि कौशिक कुलपुत्रेण वा कुलदुहित्रा वा क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन इयमेव प्रज्ञापारमिता सुखं[१] अभीक्ष्णं श्रोतव्या उद्ग्रहीतव्या धारयितव्या वाचयितव्या पर्यवाप्तव्या प्रवर्तयितव्या देशयितव्या उपदेष्टव्या उद्देष्टव्या स्वाध्यातव्या परिप्रष्टव्या। 5 तत्कस्य हेतोः? तथा हि स एवं ज्ञास्यति—अत्र प्रज्ञापारमितायां तथागतोऽर्हन् सम्यक्संबुद्धः पूर्वं बोधिसत्त्वचर्यां चरन् शिक्षितः। अस्माभिरप्यत्र शिक्षितव्यम्। एषोऽस्माकं शास्तेति। तिष्ठतो वा कौशिक परिनिर्वृतस्य वा तथागतस्यार्हतः सम्यक्संबुद्धस्य बोधिसत्त्वैर्महासत्त्वैः प्रज्ञापारमितैव प्रतिसर्तव्या। तस्मात्तर्हि कौशिक यः कश्चित्कुलपुत्रो वा कुलदुहिता R 62 W 217 वा तथागतस्यार्हतः सम्यक्संबुद्धस्य परिनिर्वृतस्य पूजायै कोटिशः सप्तरत्नमयांस्तथागतधातु- 10 गर्भान् स्तूपान् कारयेत्। कारयित्वा च तान् यावज्जीवं दिव्यैः पुष्पैर्दिव्यैर्धूपैर्दिव्यैर्गन्धैर्दिव्यैर्माल्यैर्दिव्यैर्विलेपनैर्दिव्यैश्चूर्णैर्दिव्यैर्वस्त्रैर्दिव्यैश्छत्रैर्दिव्यैर्ध्वजैर्दिव्याभिर्घण्टाभिः दिव्याभिः पताकाभिः, समन्ताच्च दिव्याभिर्दीपमालाभिः बहुविधाभिश्च दिव्याभिः पूजाभिः सत्कुर्यात् गुरुकुर्यात् मानयेत् पूजयेत् अर्चयेत् अपचायेत्, तत्किं मन्यसे कौशिक, अपि नु स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं[२] बहुपुण्यं प्रसवेत्? शक्र आह—बहु 15 भगवन्, बहु सुगत। भगवानाह—अतः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवति, य इमां प्रज्ञापारमितामभिश्रद्दधदवकल्पयन्नधिमुच्य प्रसन्नचित्तो बोधाय चित्तमुत्पाद्य अध्याशयतः शृणुयादुद्गृह्णीयाद्धारयेद्वाचयेत्पर्यवाप्नुयात् प्रवर्तयेत् देशयेत् उपदिशेत् उद्दिशेत् स्वाध्यायेत्, परेभ्यश्च विस्तरेण संप्रकाशयेत्। अर्थमस्या विवृणुयात्, मनसान्ववेक्षेत, यथाधिकया च प्रज्ञया अत्र परिमीमांसामापद्येत, अन्तशः पुस्तक- 20 गतामपि कृत्वा धारयेत् स्थापयेत् सद्धर्मचिरस्थितिहेतोः—मा बुद्धनेत्रीसमुच्छेदो भूत्, मा सद्धर्मान्तर्धानम्। बोधिसत्त्वानां महासत्त्वानां च अनुग्रहोपसंहारः कृतो भविष्यति W 219 नेत्र्यवैकल्येनेति। तां चैनां प्रज्ञापारमितां सत्कुर्यात् गुरुकुर्यात्[३] मानयेत् पूजयेत् अर्चयेत् अपचायेत् पुष्पैर्धूपैर्गन्धैर्माल्यैर्विलेपनैश्चूर्णैर्वस्त्रैश्छत्रैर्ध्वजैर्घण्टाभिः पताकाभिः, समन्ताच्च दीपमालाभिः, बहुविधाभिश्च पूजाभिः पूजयेत्। अयमेव ततः स कौशिक कुलपुत्रो वा 25 R 63 कुलदुहिता वा बहुतरं पुण्यं प्रसवति। तिष्ठन्तु खलु पुनः कौशिक कोटिशः सप्तरत्नमयास्तथागतधातुगर्भाः स्तूपाः, यः कश्चित्कौशिक कुलपुत्रो वा कुलदुहिता वा इमं जम्बूद्वीपं समन्तात् सप्तरत्नमयानां तथागतधातुगर्भाणां स्तूपानां परिपूर्णं कारयेत्, कारयित्वा च तान् यावज्जीवं दिव्यैः पुष्पैर्दिव्यैर्धूपैर्दिव्यैर्गन्धैर्दिव्यैर्माल्यैर्दिव्यैर्विलेपनैर्दिव्यैश्चूर्णैर्दिव्यैर्वस्त्रैर्दिव्यैश्छत्रैर्दिव्यैर्ध्वजैर्दिव्याभिर्घण्टाभिः, दिव्याभिः पताकाभिः, समन्ताच्च 30

१ R om. सुखं. २ Ap W तन्निदानं for ततोनिदानं. ३ W om. गुरुकुर्यात्.

दीपमालाभिः, बहुविधाभिश्च दिव्याभिः पूजाभिः सत्कुर्यात् गुरुकुर्यात् मानयेत् पूजयेत् अर्चयेत् अपचायेत्, तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहु पुण्यं प्रसवेत्? शक्र आह—बहु भगवन्, बहु सुगत। भगवानाह—अतः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवति, य इमां प्रज्ञापारमितामभिश्रद्दधदवकल्पयन्नधिमुच्य प्रसन्नचित्तो बोधाय चित्तमुत्पाद्य अध्याशयतः शृणुयादुद्गृह्णीयाद्धारयेद्वाचयेत्पर्यवाप्नुयात्प्रवर्तयेद्देशयेदुपदिशेदुद्दिशेत् स्वाध्यायेत्, परेभ्यश्च विस्तरेण संप्रकाशयेत्, अर्थमस्या विवृणुयात्, मनसान्ववेक्षेत, यथाधिकया च प्रज्ञया अत्र परिमीमांसामापद्येत, अन्तशः पुस्तकगतामपि कृत्वा धारयेत् स्थापयेत् सद्धर्मचिरस्थितिहेतोः—मा बुद्धनेत्रीसमुच्छेदो भूत्, मा सद्धर्मान्तर्धानम्। बोधिसत्त्वानां महासत्त्वानां चानुग्रहोपसंहारः कृतो भविष्यति नेत्र्यवैकल्येनेति। तां चैनां प्रज्ञापारमितां सत्कुर्यात् गुरुकुर्यात् मानयेत् पूजयेत् अर्चयेत् अपचायेत् पुष्पैर्धूपैर्गन्धैर्माल्यैर्विलेपनैश्चूर्णैर्वस्त्रैश्छत्रैर्ध्वजैर्घण्टाभिः पताकाभिः, समन्ताच्च दीपमालाभिः, बहुविधाभिश्च पूजाभिः पूजयेत्, अयमेव ततः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवति। तिष्ठतु खलु पुनः कौशिक अयं जम्बूद्वीपः सप्तरत्नमयानां तथागतधातुगर्भाणां स्तूपानां परिपूर्णः। सचेत्कौशिक यावन्तश्चातुर्महाद्वीपके लोकधातौ सर्वसत्त्वाः, तेषामेकैकः सत्त्व एकैकं सप्तरत्नमयं तथागतधातुगर्भं स्तूपं कारयेत्, तं च यावज्जीवं दिव्यैः पुष्पैर्दिव्यैर्धूपैर्दिव्यैर्गन्धैर्दिव्यैर्माल्यैर्दिव्यैश्चूर्णैर्दिव्यैर्वस्त्रैर्दिव्यैश्छत्रैर्दिव्यैर्ध्वजैर्दिव्याभिर्घण्टाभिर्दिव्याभिः पताकाभिः, समन्ताच्च दिव्यदीपमालाभिः, बहुविधाभिश्च दिव्याभिः पूजाभिः सत्कुर्यात् गुरुकुर्यात् मानयेत् पूजयेत् अर्चयेत् अपचायेत्, तत्किं मन्यसे कौशिक अपि नु ते सर्वसत्त्वास्ततोनिदानं बहु पुण्यं प्रसवेयुः? शक्र आह—बहु भगवन्, बहु सुगत। भगवानाह—अतः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवति, य इमां प्रज्ञापारमितामभिश्रद्दधदवकल्पयन्नधिमुच्य प्रसन्नचित्तो बोधाय चित्तमुत्पाद्य अध्याशयतः शृणुयादुद्गृह्णीयाद्धारयेत् वाचयेत् पर्यवाप्नुयात् प्रवर्तयेत् देशयेत् उपदिशेत् उद्दिशेत् स्वाध्यायेत्, परेभ्यश्च विस्तरेण संप्रकाशयेत्, अर्थमस्या विवृणुयात्, मनसान्ववेक्षेत, यथाधिकया च प्रज्ञया अत्र परिमीमांसामापद्येत, अन्तशः पुस्तकगतामपि कृत्वा धारयेत् स्थापयेत् सद्धर्मचिरस्थितिहेतोः—मा बुद्धनेत्रीसमुच्छेदो भूत्, मा सद्धर्मान्तर्धानम्। बोधिसत्त्वानां चानुग्रहोपसंहारः कृतो भविष्यति नेत्र्यवैकल्येनेति। तां चैनां प्रज्ञापारमितां सत्कुर्याद्गुरुकुर्यान्मानयेत्पूजयेदर्चयेदपचायेत्पुष्पैर्धूपैर्गन्धैर्माल्यैर्विलेपनैश्चूर्णैर्वस्त्रैश्छत्रैर्ध्वजैर्घण्टाभिः पताकाभिः समन्ताच्च दीपमालाभिः, बहुविधाभिश्च पूजाभिः[1] पूजयेत्, अयमेव ततः स कौशिक कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहुतरं पुण्यं प्रसवति। तिष्ठन्तु खलु पुनः कौशिक चातुर्महाद्वीपके लोकधातौ सर्वसत्त्वाः। यावन्तः कौशिक साहस्रे चूलिकायां लोकधातौ सर्वसत्त्वाः, तेषामेकैकः सत्त्व एकैकं सप्तरत्नमयं

१ W om. पूजाभिः.

तथागतधातुगर्भं स्तूपं कारयेत्, तं च यावज्जीवं दिव्यैः पुष्पैर्दिव्यैर्धूपैर्दिव्यैर्गन्धैर्दिव्यैर्माल्यै- W 223
र्दिव्यैर्विलेपनैर्दिव्यैश्चूर्णैर्दिव्यैर्वस्त्रैर्दिव्यैश्छत्रैर्दिव्यैर्ध्वजैर्दिव्याभिर्घण्टाभिर्दिव्याभिः पताकाभिः,
समन्ताच्च दीपमालाभिः, बहुविधाभिश्च पूजाभिः सत्कुर्याद्गुरुकुर्यान्मानयेत्पूजयेदर्चयेदपचायेत्,
तत्किं मन्यसे कौशिक अपि नु सर्वसत्त्वास्ततोनिदानं बहुपुण्यं प्रसवेयुः? शक्र आह–बहु
भगवन्, बहु सुगत। भगवानाह–अतः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं 5
प्रसवति य इमां प्रज्ञापारमितामभिश्रद्दधदवकल्पयन्नधिमुच्य प्रसन्नचित्तो बोधाय चित्तमुत्पाद्य
अध्याशयतः शृणुयादुद्गृह्णीयाद्धारयेद्वाचयेत् पर्यवाप्नुयात् प्रवर्तयेद्देशयेदुपदिशेदुद्दिशेत् स्वाध्या-
येत्, परेभ्यश्च विस्तरेण संप्रकाशयेत्, अर्थमस्या विवृणुयात्, मनसान्ववेक्षेत, यथाविकया
च प्रज्ञया अत्र परिमीमांसामापद्येत, अन्तशः पुस्तकगतामपि कृत्वा धारयेत्स्थापयेत्सद्धर्म-
चिरस्थितिहेतोः–मा बुद्धनेत्रीसमुच्छेदोऽभूत्, मा सद्धर्मान्तर्धानम्। बोधिसत्त्वानां महा- 10
सत्त्वानां च अनुग्रहोपसंहारः कृतो भविष्यति नेत्र्यवैकल्येनेति। तां चैनां प्रज्ञापारमितां
सत्कुर्याद्गुरुकुर्यान्मानयेत् पूजयेदर्चयेदपचायेत् पुष्पैर्धूपैर्गन्धैर्माल्यैर्विलेपनैश्चूर्णैर्वस्त्रैश्छत्रैर्ध्वजै-
र्घण्टाभिः पताकाभिः, समन्ताच्च दीपमालाभिः, बहुविधाभिश्च पूजाभिः पूजयेत्, अयमेव ततः R 66 W 224
स कौशिक कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहुतरं पुण्यं प्रसवति। तिष्ठन्तु खलु
पुनः कौशिक साहस्रे चूलिकायां लोकधातौ सर्वसत्त्वाः, यावन्तः कौशिक द्विसाहस्रे मध्यमे 15
लोकधातौ सर्वसत्त्वाः, तेषामेकैकः सत्त्व एकैकं सप्तरत्नमयं तथागतधातुगर्भं स्तूपं कारयेत्,
तं च यावज्जीवं दिव्यैः पुष्पैर्दिव्यैर्धूपैर्दिव्यैर्गन्धैर्दिव्यैर्माल्यैर्दिव्यैर्विलेपनैर्दिव्यैश्चूर्णैर्दिव्यै-
श्छत्रैर्दिव्यैर्ध्वजैर्दिव्याभिर्घण्टाभिर्दिव्याभिः पताकाभिः, समन्ताच्च दिव्यदीपमालाभिः, बहुविधा-
भिश्च दिव्याभिः पूजाभिः सत्कुर्याद्गुरुकुर्यान्मानयेत्पूजयेदर्चयेदपचायेत्, तत्किं मन्यसे कौशिक
अपि नु ते सर्वसत्त्वास्ततोनिदानं बहुपुण्यं प्रसवेयुः? शक्र आह–बहु भगवन्, बहु सुगत। 20
भगवानाह–अतः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवति, य इमां
प्रज्ञापारमितामभिश्रद्दधदवकल्पयन्नधिमुच्य प्रसन्नचित्तो बोधाय चित्तमुत्पाद्य अध्याशयतः
शृणुयादुद्गृह्णीयाद्धारयेद्वाचयेत्पर्यवाप्नुयात्प्रवर्तयेद्देशयेदुपदिशेदुद्दिशेत्स्वाध्यायेत्, परेभ्यश्च विस्त-
रेण संप्रकाशयेत्, अर्थमस्या विवृणुयात्, मनसान्ववेक्षेत, यथाविकया च प्रज्ञया अत्र
परिमीमांसामापद्येत, अन्तशः पुस्तकगतामपि कृत्वा धारयेत्स्थापयेत् सद्धर्मचिरस्थितिहेतोः– 25
मा बुद्धनेत्रीसमुच्छेदो भूत्, मा सद्धर्मान्तर्धानम्। बोधिसत्त्वानां महासत्त्वानां च अनुग्रहोप-
संहारः कृतो भविष्यति नेत्र्यवैकल्येनेति। तां चैनां प्रज्ञापारमितां सत्कुर्याद्गुरुकुर्यान्मान-
येत्पूजयेदर्चयेदपचायेत् पुष्पैर्धूपैर्गन्धैर्माल्यैर्विलेपनैश्चूर्णैर्वस्त्रैश्छत्रैर्ध्वजैर्घण्टाभिः पताकाभिः,
समन्ताच्च दीपमालाभिः, बहुविधाभिश्च पूजाभिः पूजयेत्, अयमेव ततः स कौशिक कुलपुत्रो R 67 W 225
वा कुलदुहिता वा ततोनिदानं बहुतरं पुण्यं प्रसवति। तिष्ठन्तु खलु पुनः कौशिक 30
द्विसाहस्रे मध्यमे लोकधातौ सर्वसत्त्वाः, यावन्तः कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ
सर्वसत्त्वाः, तेषामेकैकः सत्त्व एकैकं सप्तरत्नमयं तथागतधातुगर्भं स्तूपं कारयेत्, तं च

यावज्जीवं दिव्यैः पुष्पैर्दिव्यैर्धूपैर्दिव्यैर्गन्धैर्दिव्यैर्माल्यैर्दिव्यैश्चूर्णैर्दिव्यैर्वस्त्रैर्दिव्यैश्छत्रैर्दिव्यैर्ध्वजैर्दिव्याभिर्घण्टाभिर्दिव्याभिः पताकाभिः, समन्ताच्च दिव्यदीपमालाभिः, बहुविधाभिश्च दिव्याभिः पूजाभिः सत्कुर्याद्गुरुकुर्यान्मानयेत्पूजयेदर्चयेदपचायेत्, तत्किं मन्यसे कौशिक अपि नु ते सर्वसत्त्वास्ततोनिदानं बहुपुण्यं प्रसवेयुः? शक्र आह—बहु भगवन्,
5 बहु सुगत। भगवानाह—अतः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवति, य इमां प्रज्ञापारमितामभिश्रद्दधदवकल्पयन्नधिमुच्य प्रसन्नचित्तो बोधाय चित्तमुत्पाद्य अध्याशयतः शृणुयादुद्गृह्णीयाद्धारयेद्वाचयेत्पर्यवाप्नुयात् प्रवर्तयेद्देशयेदुपदिशेदुद्दिशेत् स्वाध्यायेत् परेभ्यश्च विस्तरेण संप्रकाशयेत्, अर्थमस्या विवृणुयात्, मनसान्ववेक्षेत, यथाधिकया च प्रज्ञया अत्र परिमीमांसामापद्येत, अन्तशः पुस्तकगतामपि कृत्वा धारयेत्स्थापयेत्
W 226 10 सद्धर्मचिरस्थितिहेतोः—मा बुद्धनेत्रीसमुच्छेदो भूत्, मा सद्धर्मान्तर्धानम्। बोधिसत्त्वानां महासत्त्वानां च अनुग्रहोपसंहारः कृतो भविष्यति नेत्र्यवैकल्येनेति। तां चैनां प्रज्ञापारमितां सत्कुर्याद्गुरुकुर्यान्मानयेत्पूजयेदर्चयेदपचायेत्पुष्पैर्धूपैर्गन्धैर्माल्यैर्विलेपनैश्चूर्णैर्वस्त्रैश्छत्रैर्ध्वजैर्घण्टाभिः पता-
R 68 काभिः समन्ताच्च दीपमालाभिः, बहुविधाभिश्च पूजाभिः पूजयेत्, अयमेव ततः स कौशिक कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहुतरं पुण्यं प्रसवति। तिष्ठन्तु खलु पुनः कौशिक
15 त्रिसाहस्रमहासाहस्रे लोकधातौ सर्वसत्त्वाः, येषामेकैकः सत्त्व एकैकं सप्तरत्नमयं तथागतधातुगर्भं स्तूपं कारयेत्, तं च यावज्जीवं दिव्याभिः पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजघण्टापताकाभिः समन्ताच्च दीपमालाभिः, बहुविधाभिश्च पूजाभिः सत्कुर्याद्गुरुकुर्यान्मानयेत् पूजयेदर्चयेदपचायेत्, येऽपि केचित्कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ सत्त्वाः, सचेत्पुनस्ते सर्वे अपूर्वाचरमं मानुष्यकमात्मभावं प्रतिलभेरन् परिकल्पमुपादाय, तत एकैकः
20 सत्त्व एकैकं सप्तरत्नमयं तथागतधातुगर्भं स्तूपं कारयेत्, एकैकश्च सत्त्वस्तान् सर्वान् स्तूपान् कारयेत्, कारयित्वा च तान् प्रतिष्ठाप्य कल्पं वा कल्पावशेषं वा सर्ववाद्यैः सर्वगीतैः सर्व-
W 227 नृत्यैः सर्वतूर्यतालावचरैर्दिव्यैः सर्वपुष्पैः सर्वधूपैः सर्वगन्धैः सर्वमाल्यैः सर्वविलेपनैः सर्वचूर्णैः सर्ववस्त्रैर्दिव्याभिः सर्वच्छत्रध्वजघण्टापताकाभिः समन्ताच्च सर्वदीपमालाभिः, बहुविधाभिश्च दिव्यमानुष्यिकीभिः सर्वपूजाभिः सत्कुर्याद्गुरुकुर्यान्मानयेत्पूजयेदर्चयेदपचायेत्, एते
25 एवंरूपया पुण्यक्रियया ते सर्वे सत्त्वास्तानप्रमेयानसंख्येयान् स्तूपान् प्रतिष्ठाप्य एवंरूपां पूजां कारयेयुः, तत्किं मन्यसे कौशिक अपि नु ते सर्वे सत्त्वास्ततोनिदानं बहुपुण्यं
R 69 प्रसवेयुः? शक्र आह—बहु भगवन्, बहु सुगत। भगवानाह—अतः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवति, य इमां प्रज्ञापारमितामभिश्रद्दधदवकल्पयन्नधिमुच्य प्रसन्नचित्तो बोधाय चित्तमुत्पाद्य अध्याशयतः शृणुयादुद्गृह्णीयाद्धारयेद्वाचयेत् पर्यवाप्नुयात्
30 प्रवर्तयेद्देशयेदुपदिशेदुद्दिशेत् स्वाध्यायेत्, परेभ्यश्च विस्तरेण संप्रकाशयेत्, अर्थमस्या विवृणुयात्, मनसान्ववेक्षेत, यथाधिकया च प्रज्ञया अत्र परिमीमांसामापद्येत, अन्तशः पुस्तकगतामपि कृत्वा धारयेत् स्थापयेत् सद्धर्मचिरस्थितिहेतोः—मा बुद्धनेत्रीसमुच्छेदो

भूत्, मा सद्धर्मान्तर्धानम्। बोधिसत्त्वानां महासत्त्वानां च अनुग्रहोपसंहारः कृतो भविष्यति नेत्र्यवैकल्येनेति । तां चैनां प्रज्ञापारमितां सत्कुर्याद्गुरुकुर्यान्मानयेत्पूजयेदर्चयेदपचायेत्पुष्पै-र्धूपैर्गन्धैर्माल्यैर्विलेपनैश्चूर्णैर्वस्त्रैश्छत्रैर्ध्वजैर्घण्टाभिः पताकाभिः, समन्ताच्च दीपमालाभिः, बहु-विधाभिश्च पूजाभिः पूजयेत्, अयमेव ततः स कौशिक कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहुतरं पुण्यं प्रसवति ॥ 5

एवमुक्ते शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—एवमेतद्भगवन्, एवमेतत्सुगत । W 228 प्रज्ञापारमितां हि भगवन् सत्कुर्वता गुरुकुर्वता मानयता पूजयता अर्चयता अपचायता कुलपुत्रेण वा कुलदुहित्रा वा अतीतानागतप्रत्युत्पन्ना बुद्धा भगवन्तो बुद्धज्ञानपरिज्ञातेषु सर्वलोकधातुषु अत्यन्ततया सत्कृता गुरुकृता मानिताः पूजिता अर्चिता अपचायिताश्च भवन्ति । तिष्ठन्तु खलु पुनर्भगवन् अनेन पर्यायेण त्रिसाहस्रमहासाहस्रे लोकधातौ सर्वसत्त्वाः, येऽपि 10 ते[1] भगवन् गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सर्वसत्त्वाः, तत्र एकैकः सत्त्वः एकैकं सप्तरत्नमयं तथागतधातुगर्भं स्तूपं कारयेत्, एकैकश्च सत्त्वस्तान् सर्वान् स्तूपान् R 70 कारयेत्, कारयित्वा च तान् प्रतिष्ठाप्य कल्पं वा कल्पावशेषं वा सर्ववाद्यैः सर्वगीतैः सर्वनृत्यैः सर्वतूर्यतालावचरैर्दिव्यैः सर्वपुष्पैः सर्वधूपैः सर्वगन्धैः सर्वमाल्यैः सर्वविलेपनैः सर्वचूर्णैः सर्ववस्त्रैर्दिव्याभिः सर्वच्छत्रध्वजघण्टापताकाभिः समन्ताच्च सर्वदीपमालाभिः, बहुविधाभिश्च 15 W 229 दिव्यमानुषिकीभिः सर्वपूजाभिः सत्कुर्याद्गुरुकुर्यान्मानयेत् पूजयेदर्चयेदपचायेत्, अयमेव तेभ्यः स भगवन् सर्वसत्त्वेभ्यः कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवति, य इमां प्रज्ञापारमितामभिश्रद्दधदवकल्पयन्नधिमुच्य प्रसन्नचित्तो बोधाय चित्तमुत्पाद्य अध्याशयतः शृणुयादुद्गृह्णीयाद्धारयेद्वाचयेत् पर्यवाप्नुयात् प्रवर्तयेद्देशयेदुपदिशेदुद्दिशेत् स्वाध्यायेत्, परेभ्यश्च विस्तरेण संप्रकाशयेत्, अर्थमस्या विवृणुयात्, मनसान्ववेक्षेत, यथाधिकया च प्रज्ञया अत्र 20 परिमीमांसामापद्येत, अन्तशः पुस्तकगतामपि कृत्वा धारयेत्स्थापयेत्सद्धर्मचिरस्थितिहेतोः— मा बुद्धनेत्रीसमुच्छेदो भूत्, मा सद्धर्मान्तर्धानम्। बोधिसत्त्वानां महासत्त्वानां च अनुग्रहोप-संहारः कृतो भविष्यति नेत्र्यवैकल्येनेति । तां चैनां प्रज्ञापारमितां सत्कुर्याद्गुरुकुर्या-न्मानयेत्पूजयेदर्चयेदपचायेत्पुष्पैर्धूपैर्गन्धैर्माल्यैर्विलेपनैश्चूर्णैर्वस्त्रैश्छत्रैर्ध्वजैर्घण्टाभिः पताकाभिः, समन्ताच्च दीपमालाभिः, बहुविधाभिश्च पूजाभिः पूजयेत् ॥ 25

अथ खलु भगवान् शक्रं देवानामिन्द्रमेतदवोचत्—एवमेतत्कौशिक, एवमेतत्। बहुतरं स कौशिक कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहुतरं पुण्यं प्रसवति । अप्रमेयं स कौशिक कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहुतरं पुण्यं प्रसवति । असंख्येयं स कौशिक W 230 कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहुतरं पुण्यं प्रसवति । अचिन्त्यं स कौशिक R 71 कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहुतरं पुण्यं प्रसवति । अतुल्यं स कौशिक 30 कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहुतरं पुण्यं प्रसवति । अपरिमाणं स कौशिक

---

१ W om. ते.

कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहुतरं पुण्यं प्रसवति। तत्कस्य हेतोः? प्रज्ञापारमिता-निर्जाता हि कौशिक तथागतानामर्हतां सम्यक्संबुद्धानां सर्वज्ञता। सर्वज्ञतानिर्जाता च तथागत-शरीराणां पूजा। तस्मात्तर्हि कौशिक यः कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितामभि-श्रद्दधदवकल्पयन्नधिमुच्य प्रसन्नचित्तो बोधाय चित्तमुत्पाद्य अध्याशयतः शृणुयादुद्गृह्णीयाद्धारये-
5 द्वाचयेत्पर्यवाप्नुयात्प्रवर्तयेद्देशयेदुपदिशेदुद्दिशेत्, स्वाध्यायेत्, परेभ्यश्च विस्तरेण संप्रकाशयेत्, अर्थमस्या विवृणुयात्, मनसान्ववेक्षेत, यथाधिकया च प्रज्ञया अत्र परिमीमांसामापद्येत, अन्ततः पुस्तकगतामपि कृत्वा धारयेत्स्थापयेत्सद्धर्मचिरस्थितिहेतोः—मा बुद्धनेत्रीसमुच्छेदो भूत्, मा सद्धर्मान्तर्धानम्। बोधिसत्त्वानां महासत्त्वानां[1] च अनुग्रहोपसंहारः कृतो भविष्यति नेत्र्यवैकल्येनेति। तां चैनां प्रज्ञापारमितां सत्कुर्याद्गुरुकुर्यान्मानयेत्पूजयेदर्चयेदपचायेत् पुष्पै-
10 र्धूपैर्गन्धैर्माल्यैर्विलेपनैश्चूर्णैर्वस्त्रैश्छत्रैर्ध्वजैर्घण्टाभिः पताकाभिः समन्ताच्च दीपमालाभिः, बहु-विधाभिश्च पूजाभिः पूजयेत्, अस्य कौशिक पुण्याभिसंस्कारस्य असौ पूर्वकस्तथागतधातु-गर्भः सप्तरत्नमयः स्तूपसंस्कारजपुण्याभिसंस्कारः शततमीमपि कलां नोपैति, सहस्रतमीमपि, शतसहस्रतमीमपि, कोटीतमीमपि, कोटीशततमीमपि, कोटीसहस्रतमीमपि, कोटीशतसहस्र-तमीमपि, कोटीनियुतशतसहस्रतमीमपि कलां नोपैति। संख्यामपि कलामपि गणनामपि
15 उपमामपि औपम्यमपि उपनिसामपि उपनिषदमपि न क्षमते॥

W 231 R 72

W 232 अथ खलु यानि तानि चत्वारिंशद्देवपुत्रसहस्राणि शक्रेण देवानामिन्द्रेण सार्धं संनि-पतितानि तस्यामेव पर्षदि संनिपतितान्यभूवन्, तानि शक्रं देवानामिन्द्रमेतदवोचन्—उद्गृह्णीष्व मार्ष प्रज्ञापारमिताम्। उद्गृहीतव्या मार्ष प्रज्ञापारमिता। धारयितव्या मार्ष प्रज्ञापार-मिता। वाचयितव्या मार्ष प्रज्ञापारमिता। पर्यवाप्तव्या मार्ष प्रज्ञापारमिता। प्रवर्तयितव्या मार्ष
20 प्रज्ञापारमिता। देशयितव्या मार्ष प्रज्ञापारमिता। उपदेष्टव्या मार्ष प्रज्ञापारमिता। उद्देष्टव्या मार्ष प्रज्ञापारमिता। स्वाध्यातव्या मार्ष प्रज्ञापारमिता। अथ खलु भगवान् शक्रं देवानामिन्द्र-मामन्त्रयते स्म—उद्गृहाण त्वं कौशिक प्रज्ञापारमिताम्। धारय त्वं कौशिक प्रज्ञापारमिताम्। वाचय त्वं कौशिक प्रज्ञापारमिताम्। पर्यवाप्नुहि त्वं कौशिक प्रज्ञापारमिताम्। प्रवर्तय त्वं कौशिक प्रज्ञापारमिताम्। देशय त्वं कौशिक प्रज्ञापारमिताम्। उपदिश त्वं कौशिक
25 प्रज्ञापारमिताम्। उद्दिश त्वं कौशिक प्रज्ञापारमिताम्। स्वाध्याय त्वं कौशिक प्रज्ञापार-मिताम्। तत्कस्य हेतोः? यदा हि कौशिक असुराणामेवंरूपाः समुदाचारा उत्पत्स्यन्ते—देवांस्त्रायस्त्रिंशान् योधयिष्याम इति, देवैस्त्रायस्त्रिंशैः सार्धं संग्रामयिष्याम इति, तदा त्वं कौशिक इमां प्रज्ञापारमितां समन्वाहरेः, स्वाध्यायेः, एवं तेषामसुराणां ते समुदाचाराः पुनरेवान्तर्धास्यन्ति॥

R 73 W 233
30 एवमुक्ते शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—महाविद्येयं भगवन् यदुत प्रज्ञा-पारमिता। अप्रमाणेयं भगवन् विद्या यदुत प्रज्ञापारमिता। अपरिमाणेयं भगवन् विद्या

[1] W om. महासत्त्वानां.

यदुत प्रज्ञापारमिता। निरुत्तरेयं भगवन् विद्या यदुत प्रज्ञापारमिता। अनुत्तरेयं भगवन् विद्या यदुत प्रज्ञापारमिता। असमेयं भगवन् विद्या यदुत प्रज्ञापारमिता। असमसमेयं भगवन् विद्या यदुत प्रज्ञापारमिता। एवमुक्ते भगवान् शक्रं देवानामिन्द्रमेतदवोचत्—एवमेतत्कौशिक, एवमेतत्। महाविद्येयं कौशिक यदुत प्रज्ञापारमिता। अप्रमाणेयं कौशिक विद्या यदुत प्रज्ञापारमिता। अपरिमाणेयं कौशिक विद्या यदुत प्रज्ञापारमिता[1]। निरुत्तरेयं कौशिक विद्या यदुत प्रज्ञापारमिता। अनुत्तरेयं कौशिक विद्या यदुत प्रज्ञापारमिता। असमेयं कौशिक विद्या यदुत प्रज्ञापारमिता। असमसमेयं कौशिक विद्या यदुत प्रज्ञापारमिता। तत्कस्य हेतोः? इमां हि कौशिक विद्यामागम्य पौर्विकास्तथागता अर्हन्तः सम्यक्संबुद्धा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः, यदुत प्रज्ञापारमिताम्। येऽपि ते कौशिक भविष्यन्त्यनागतेऽध्वनि तथागता अर्हन्तः सम्यक्संबुद्धाः, अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते, तेऽपि कौशिक इमामेव विद्यामागम्य अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते यदुत प्रज्ञापारमिताम्। येऽपि केचित्कौशिक एतर्हि अप्रमेयेष्वसंख्येयेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु बुद्धा भगवन्तोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते, तेऽपि कौशिक इमामेव विद्यामागम्य अनुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते यदुत प्रज्ञापारमिताम्। अहमपि कौशिक इमामेव विद्यामागम्य अनुत्तरां सम्यक्संबोधिमभिसंबुद्धो यदुत प्रज्ञापारमिताम्। इमामेव कौशिक विद्यामागम्य दश कुशलाः कर्मपथा लोके प्रभाव्यन्ते, चत्वारि ध्यानानि बोध्यङ्गसंप्रयुक्तानि लोके प्रभाव्यन्ते, चत्वार्यप्रमाणानि बोध्यङ्गसंप्रयुक्तानि लोके प्रभाव्यन्ते, चतस्र आरूप्यसमापत्तयो बोध्यङ्गपरिगृहीता लोके प्रभाव्यन्ते, षडभिज्ञा बोध्यङ्गसंप्रयुक्ता लोके प्रभाव्यन्ते, सप्तत्रिंशद्बोधिपक्षा धर्मा लोके प्रभाव्यन्ते, संक्षेपेण चतुरशीतिधर्मस्कन्धसहस्राणि लोके प्रभाव्यन्ते, बुद्धज्ञानं स्वयंभूज्ञानमचिन्त्यज्ञानं लोके प्रभाव्यन्ते, इमामेव कौशिक विद्यामागम्य यदुत प्रज्ञापारमिताम्। यदापि कौशिक तथागता अर्हन्तः सम्यक्संबुद्धा लोके नोत्पद्यन्ते, तदापि कौशिक बोधिसत्त्वा महासत्त्वाः पूर्वश्रुतेन प्रज्ञापारमितानिष्यन्देन ये उपायकौशल्यसमन्वागता भवन्ति, तेऽपि कौशिक सत्त्वानामनुकम्पकाः अनुकम्पामुपादाय इमं लोकमागम्य दश कुशलान् कर्मपथान् लोके प्रभावयन्ति, चत्वारि ध्यानानि बोध्यङ्गविप्रयुक्तानि लोके प्रभावयन्ति, चत्वार्यप्रमाणानि बोध्यङ्गविप्रयुक्तानि लोके प्रभावयन्ति। चतस्र आरूप्यसमापत्तीर्बोध्यङ्गविप्रयुक्ता लोके प्रभावयन्ति। पञ्चाभिज्ञा बोध्यङ्गविप्रयुक्ता लोके प्रभावयन्ति। तद्यथापि नाम कौशिक चन्द्रमण्डलमागम्य सर्वा ओषधीः तारा यथाबलं यथास्थाममवभासयन्ति, नक्षत्राणि च यथाबलं यथास्थाममवभासयन्ति, एवमेव कौशिक तथागतस्यार्हतः सम्यक्संबुद्धस्य अत्ययेन सद्धर्मस्यान्तर्धाने तथागतानामर्हतां सम्यक्संबुद्धानामनुत्पादात् या काचिद्धर्मचर्या समचर्या असमचर्या कुशलचर्या लोके प्रज्ञायते प्रभाव्यते, सर्वा सा बोधिसत्त्वनिर्जाता बोधिसत्त्वप्रभाविता

5 10 W 234 R 74 15 20 25 W 236 W 237 R 75 30

[1] W om. अपरि...मिता.

बोधिसत्त्वोपायकौशल्यप्रवर्तिता। तच्च बोधिसत्त्वानामुपायकौशल्यं प्रज्ञापारमितानिर्जातं वेदितव्यम्॥

W 238 पुनरपरं कौशिक इमां प्रज्ञापारमितामुद्गृह्णतां धारयतां वाचयतां पर्यवाप्नुवतां प्रवर्तयतां देशयतामुपदिशतामुद्दिशतां स्वाध्यायतां लिखतां मनसि कुर्वतां समन्वाहरतां च 5 कुलपुत्राणां कुलदुहितॄणां वा तन्निदानं बहवो दृष्टधार्मिका गुणाः प्रतिकाङ्क्षितव्याः। एवमुक्ते शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्–कतमैः पुनर्भगवन् दृष्टधार्मिकैर्गुणैः समन्वागतास्ते कुलपुत्राः कुलदुहितरश्च भविष्यन्ति? भगवानाह–न ते कौशिक कुलपुत्रा वा कुलदुहितरो वा विषमापरिहारेण कालं करिष्यन्ति, न विषेण कालं करिष्यन्ति, न शस्त्रेण कालं करिष्यन्ति, नाग्निना कालं करिष्यति, नोदकेन कालं करिष्यन्ति, न दण्डेन 10 कालं करिष्यन्ति, न परोपक्रमेण कालं करिष्यन्ति। उत्पन्नोत्पन्नाश्चैषामुपद्रवा राजतो वा R 76 राजपुत्रतो वा राजमन्त्रितो वा राजमहामात्रतो वा इमां प्रज्ञापारमितां समन्वाहरतां वा स्वाध्यायतां वा पुनरेवान्तर्धास्यन्ति। तेषां च एनां प्रज्ञापारमितां पुनः पुनः समन्वाहरतां वा स्वाध्यायतां वा ये तत्रोपसंक्रामेयुरवतारप्रेक्षिणोऽवतारगवेषिणो राजानो वा राजपुत्रा वा राजमन्त्रिणो वा राजमहामात्रा वा, न तेऽवतारं लप्स्यन्ते यथापि नाम प्रज्ञापारमितापरि- 15 गृहीतत्वात्। उपसंक्रान्तानां च तेषां राज्ञां वा राजपुत्राणां वा राजमन्त्रिणां वा राजमहामात्राणां वा आलपितुकामता भविष्यति, अभिभाषितुकामता भविष्यति, प्रति- W 239 संमोदितव्यं च ते मंस्यन्ते। तत्कस्य हेतोः? इयं हि कौशिक प्रज्ञापारमिता सर्वसत्त्वानामन्तिके मैत्रोपसंहारेण मैत्रचित्ततया करुणोपसंहारेण करुणचित्ततया प्रत्युपस्थिता। W 240 तस्मात्तर्हि कौशिक येऽपि ते व्यालसरीसृपकान्तारमध्यगताः, तेषां कुलपुत्राणां कुलदुहितॄणां 20 वा मनुष्या वा अमनुष्या वा अवतारप्रेक्षिणोऽवतारगवेषिणः, तेऽपि तेषां कौशिक अवतारं न लप्स्यन्ते स्थापयित्वा पूर्वकर्मविपाकम्[1]॥

अथ खल्वन्यतीर्थ्यानां परिव्राजकानामुपालम्भाभिप्रायाणां शतं तस्यां वेलायां येन भगवांस्तेनोपसंक्रामति स्म। अथ खलु शक्रो देवानामिन्द्रो दूरत एव आगच्छतस्तानन्यतीर्थ्यान् परिव्राजकान् दृष्ट्वा तेषां चित्तानि व्यवलोक्य एवं चिन्तयामास–इमे खलु अन्यतीर्थ्याः 25 परिव्राजका उपालम्भाभिप्राया येन भगवांस्तेनोपसंक्रामन्ति स्म। यन्न्वहं यावन्मात्रो मया R 77 W 241 भगवतोऽन्तिकादस्याः प्रज्ञापारमितायाः प्रदेश उद्गृहीतः, तावन्मात्रं स्मृत्वा समन्वाहरेयं स्वाध्यायेयं प्रवर्तयेयम्, यथैतेऽन्यतीर्थ्याः परिव्राजका भगवन्तं नोपसंक्रामेयुः। एवमस्याः प्रज्ञापारमिताया भाष्यमाणाया नान्तरायः स्यादिति। अथ खलु शक्रो देवानामिन्द्रो यावन्मात्रो भगवतोऽन्तिकादस्याः प्रज्ञापारमितायाः प्रदेशः उद्गृहीतः, तावन्मात्रं स्मृत्वा समन्वाहरति 30 स्म, स्वाध्यायति स्म, प्रवर्तयति स्म। अथ तेऽन्यतीर्थ्याः परिव्राजका दूराद्दूरतरं भगवन्तं प्रदक्षिणीकृत्य तेनैव द्वारेण तेनैव मार्गेण पुनरेव निष्क्रान्ताः। अथ खल्वायुष्मतः शारिपुत्र-

१ W °विपाकेन.

स्यैतदभूत्—किमत्र कारणं येन इमेऽन्यतीर्थ्याः परिव्राजका दूराद्दूरतरं भगवन्तं प्रदक्षिणीकृत्य तेनैव द्वारेण तेनैव मार्गेण पुनरेव निष्क्रान्ताः? अथ खलु भगवानायुष्मतः शारिपुत्रस्य इममेवंरूपं चेतसैव चेतःपरिवितर्कमाज्ञाय आयुष्मन्तं शारिपुत्रमेतदवोचत्—शक्रेण शारिपुत्र देवानामिन्द्रेण तेषामन्यतीर्थ्यानां परिव्राजकानामुपालम्भाभिप्रायाणां चित्तानि व्यवलोक्य इयं प्रज्ञापारमिता स्मृत्वा समन्वाहृता स्वाध्यायिता प्रवर्तिता, तेषामन्यतीर्थ्यानां परिव्राजकानां विग्रहीतुकामानां विवदितुकामानां विरोधयितुकामानां निवर्तनार्थम्, यथा अस्याः प्रज्ञापारमिताया भाष्यमाणाया एतेऽन्यतीर्थ्याः परिव्राजका नोपसंक्रामेयुरिति, मान्तरायं कार्षुः प्रज्ञापारमिताया भाष्यमाणाया इति। मया च शक्रस्य देवानामिन्द्रस्याभ्यनुज्ञातम्। तत्कस्य हेतोः? नाहं शारिपुत्र तेषामन्यतीर्थ्यानां परिव्राजकानामेकस्यापि शुक्लं धर्मं समनुपश्यामि। सर्वे ते शारिपुत्र उपालम्भाभिप्रायाः प्रतिहतचित्ता उपसंक्रमितुकामा अभूवन्॥

अथ खलु मारस्य पापीयस एतदभूत्—इमास्तथागतस्यार्हतः सम्यक्संबुद्धस्य चतस्रः पर्षदः संनिपतिताः संनिषण्णास्तथागतस्य संमुखीभूताः। इमे च कामावचरा रूपावचराश्च देवपुत्राः संमुखीभूताः। नियतमत्र बोधिसत्त्वा महासत्त्वा व्याकरिष्यन्तेऽनुत्तरायां सम्यक्संबोधौ। यन्न्वहमुपसंक्रामेयं विचक्षुःकरणायेति। अथ खलु मारः पापीयांश्चतुरङ्गबलकायमभिनिर्माय येन भगवांस्तेनोपसंक्रामति स्म। अथ खलु शक्रस्य देवानामिन्द्रस्यैतदभूत्—मारो बतायं पापीयांश्चतुरङ्गबलकायमभिनिर्माय येन भगवांस्तेनोपसंक्रामति स्म। यश्चायं चतुरङ्गस्य बलकायस्य व्यूहः, नायं राज्ञो बिम्बिसारस्य चतुरङ्गस्य बलकायस्य व्यूहः, नापि राज्ञः प्रसेनजितश्चतुरङ्गस्य बलकायस्य व्यूहः, नापि शाक्यानां चतुरङ्गस्य बलकायस्य व्यूहः, नापि लिच्छवीनां चतुरङ्गस्य बलकायस्य व्यूहः, योऽयं मारेण पापीयसा अभिनिर्मितः। समनुबद्धो दीर्घरात्रं मारः पापीयान् भगवतोऽवतारप्रेक्षी अवतारगवेषी, सत्त्वानां च विहेठनाभिप्रायः। यन्न्वहमिमामेव प्रज्ञापारमितां स्मृत्वा समन्वाहरेयं स्वाध्यायेयं प्रवर्तयेयमिति। अथ खलु शक्रो देवानामिन्द्र इमामेव प्रज्ञापारमितां स्मृत्वा समन्वाहरति स्म स्वाध्यायति स्म प्रवर्तयति स्म। यथा यथा च शक्रो देवानामिन्द्र इमां प्रज्ञापारमितां स्मृत्वा समन्वाहरति स्म स्वाध्यायति स्म प्रवर्तयति स्म, तथा तथा मारः पापीयांस्तेनैव मार्गेण पुनरेव प्रत्युदावृत्तः॥

अथ खलु त्रायस्त्रिंशत्कायिका देवपुत्रा दिव्यानि मान्दारवपुष्पाण्यभिनिर्माय विहायसा अन्तरीक्षगता येन भगवांस्तेनाभ्यवकिरन्ति स्म, येन भगवांस्तेन तानि दिव्यानि मान्दारवपुष्पाण्यभिप्रकिरन्ति स्म, एवं चोदानमुदानयन्ति स्म—चिरस्य बतेयं प्रज्ञापारमिता जाम्बूद्वीपकानां मनुष्याणामुपावृत्तेति। पुनरेव च दिव्यानि मान्दारवाणि पुष्पाणि गृहीत्वा येन भगवांस्तेनाभ्यवकिरन्ति स्म, अभिप्रकिरन्ति स्म। एवं चावोचन्—ये केचिद्भगवन् सत्त्वाः प्रज्ञापारमितां भाषिष्यन्ते भावयिष्यन्ति, प्रज्ञापारमितायां चरिष्यन्ति, न तेषां मारो वा मारकायिका वा देवता अवतारं लप्स्यन्ते। न ते भगवन् सत्त्वा अवरकेण कुशलमूलेन

समन्वागता भविष्यन्ति, ये इमां प्रज्ञापारमितां श्रोष्यन्ति, श्रुत्वा चोद्ग्रहीष्यन्ति, धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्ति, उपदेक्ष्यन्ति उद्देक्ष्यन्ति स्वाध्यास्यन्ति । पूर्वजिनकृताधिकारास्ते भगवन् सत्त्वा भविष्यन्ति, येषामियं प्रज्ञापारमिता श्रोत्रावभासमागमिष्यति । कः पुनर्वादो ये एनामुद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति
5 प्रवर्तयिष्यन्ति देशयिष्यन्ति उपदेक्ष्यन्ति उद्देक्ष्यन्ति स्वाध्यास्यन्ति, तथत्वाय शिक्षिष्यन्ते, तथत्वाय प्रतिपत्स्यन्ते, तथत्वाय योगमापत्स्यन्ते, तथागतपर्युपासितास्ते भगवन् सत्त्वा भविष्यन्ति । तत्कस्य हेतोः ? अतो हि सर्वज्ञता गवेषितव्या यदुत प्रज्ञापारमितातः । तद्यथापि नाम भगवन् यानि कानिचिद्रत्नानि महारत्नानि, सर्वाणि तानि महासमुद्रप्रभावितानि, सर्वाणि तानि महासमुद्राद्गवेषितव्यानि, एवमेव भगवन् सर्वज्ञतामहारत्नं तथागतानामर्हतां
10 सम्यक्संबुद्धानां प्रज्ञापारमितामहासमुद्राद्गवेषितव्यम् । एवमुक्ते भगवान् शक्रं देवानामिन्द्रमेतदवोचत्- एवमेतत्कौशिक, एवमेतत् । अतोनिर्जातं तथागतानामर्हतां सम्यक्संबुद्धानां सर्वज्ञतामहारत्नं यदुत प्रज्ञापारमितामहासमुद्रात् ॥

अथ खल्वायुष्मानानन्दो भगवन्तमेतदवोचत्–न भगवन् दानपारमिताया वर्णं भाषते, न नामधेयं परिकीर्तयति । न शीलपारमितायाः, न क्षान्तिपारमितायाः, न वीर्यपार-
15 मितायाः । न भगवन् ध्यानपारमिताया वर्णं भाषते, न नामधेयं परिकीर्तयति । अपि तु प्रज्ञापारमिताया एवैकस्या भगवान् वर्णं भाषते, नामधेयं च परिकीर्तयति । भगवानाह– एवमेतदानन्द, एवमेतत् । प्रज्ञापारमिताया एवाहमानन्द वर्णं भाषे नामधेयं च परिकीर्तयामि, नान्यासां पारमितानाम् । तत्कस्य हेतोः ? प्रज्ञापारमिता हि आनन्द पूर्वंगमा पञ्चानां पारमितानाम् । तत्किं मन्यसे आनन्द अपरिणामितं दानं सर्वज्ञतायां दानपारमितानामधेयं
20 लभते ? आयुष्मानानन्द आह–नो हीदं भगवन् । भगवानाह–तत्किं मन्यसे आनन्द अपरिणामितं शीलमपरिणामिता क्षान्तिरपरिणामितं वीर्यमपरिणामितं ध्यानम् ? तत्किं मन्यसे आनन्द अपरिणामिता प्रज्ञा सर्वज्ञतायां प्रज्ञापारमितानामधेयं लभते ? आनन्द आह–नो हीदं भगवन् । भगवानाह–तत्किं मन्यसे त्वमानन्द अचिन्त्या सा प्रज्ञा या कुशलमूलानि सर्वज्ञतापरिणामेन परिणामयति ? आनन्द आह–एवमेतद्भगवन्, एवमेतत्सुगत । अचिन्त्या
25 सा भगवन् प्रज्ञा, परमाचिन्त्या सा भगवन् प्रज्ञा, या कुशलमूलानि सर्वज्ञतापरिणामेन परिणामयति । भगवानाह–तस्मात्तर्हि आनन्द परमत्वात्सा प्रज्ञा पारमितानामधेयं लभते, यया सर्वज्ञतायां परिणामितानि कुशलमूलानि पारमितानामधेयं लभन्ते । तस्मात्तर्हि आनन्द सर्वज्ञतापरिणामितकुशलमूलत्वात्प्रज्ञापारमिता पञ्चानां पारमितानां पूर्वंगमा नायिका परिणायिका । अनेन योगेन अन्तर्गताः पञ्च पारमिताः प्रज्ञापारमितायामेव आनन्द
30 षट्पारमितापरिपूर्णाधिवचनमेतद्यदुत प्रज्ञापारमितेति । तस्मात्तर्हि आनन्द प्रज्ञापारमितायां परिकीर्तितायां सर्वाः षट् पारमिताः परिकीर्तिता भवन्ति । तद्यथापि नाम आनन्द महापृथिव्यां बीजानि प्रकीर्णानि सामग्रीं लभमानानि विरोहन्ति । महापृथिवी च तेषां बीजानां प्रतिष्ठा ।

R 80 W 245 W 246 W 247 R 81 W 248 W 249

महापृथिवीप्रतिष्ठितानि च तानि बीजानि विरोहन्ति। एवमेव आनन्द प्रज्ञापारमितासंगृहीताः पञ्च पारमिताः सर्वज्ञतायां प्रतिष्ठन्ते। प्रज्ञापारमिताप्रतिष्ठिताः पञ्च पारमिता विरोहन्ति। प्रज्ञापारमितापरिगृहीतत्वाच्च पारमितानामधेयं लभन्ते। तस्मात्तर्हि आनन्द प्रज्ञापारमितैव पञ्चानां पारमितानां पूर्वंगमा नायिका परिणायिका॥ R 82

अथ खलु शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—न तावदिमे भगवंस्तथागते-5 नार्हता सम्यक्संबुद्धेन प्रज्ञापारमितायाः सर्वे गुणाः परिकीर्तिताः, यान् गुणान् स कुलपुत्रो वा कुलदुहिता वा परिगृह्णीते प्रज्ञापारमितामुद्गृह्य धारयित्वा वाचयित्वा पर्यवाप्य प्रवर्त्य देशयित्वा उपदिश्य उद्दिश्य स्वाध्याय्य। अथ हि मया यो भगवतोऽन्तिकादस्याः प्रज्ञापारमितायाः प्रदेश उद्गृहीतः, स प्रवर्तितः। भगवानाह—साधु साधु कौशिक। न खलु पुनः कौशिक केवलं यः प्रज्ञापारमितामुद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्त-10 यिष्यति देशयिष्यत्युपदेक्ष्यत्युद्देक्ष्यति स्वाध्यास्यति, तस्यैव केवलममी गुणा भविष्यन्ति। योऽपि कौशिक कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितां लिखित्वा पुस्तकगतां कृत्वा धारयिष्यति स्थापयिष्यति सद्धर्मचिरस्थितिहेतोः—मा बुद्धनेत्रीसमुच्छेदो भूत्, मा सद्धर्मान्तर्धानम्। बोधिसत्त्वानां महासत्त्वानां चानुग्रहोपसंहारः कृतो भविष्यति नेत्र्यवैकल्येनेति। तां चैनां प्रज्ञापारमितां सत्करिष्यति गुरुकरिष्यति मानयिष्यति पूजयिष्यति अर्चयिष्यति अपचायिष्यति 15 पुष्पैर्धूपैर्गन्धैर्माल्यैर्विलेपनैश्चूर्णैर्वस्त्रैश्छत्रैर्ध्वजैर्घण्टाभिः पताकाभिः, समन्ताच्च दीपमालाभिः, बहुविधाभिश्च पूजाभिः पूजयिष्यति, तस्याप्यहं कौशिक कुलपुत्रस्य वा कुलदुहितुर्वा एनान् दृष्टधार्मिकान् गुणान् वदामि॥ W 250

एवमुक्ते शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—अहमपि भगवंस्तस्यापि कुलपुत्रस्य वा कुलदुहितुर्वा रक्षावरणगुप्तिं संविधास्यामि, य इमां प्रज्ञापारमितां लिखित्वा पुस्तकगतां 20 कृत्वा धारयिष्यति स्थापयिष्यति सद्धर्मचिरस्थितिहेतोः—मा बुद्धनेत्रीसमुच्छेदो भूत्, मा सद्धर्मान्तर्धानम्। बोधिसत्त्वानां महासत्त्वानां चानुग्रहोपसंहारः कृतो भविष्यति नेत्र्यवैकल्येनेति। तां चैनां प्रज्ञापारमितां सत्करिष्यति गुरुकरिष्यति मानयिष्यति पूजयिष्यति अर्चयिष्यति अपचायिष्यति पुष्पैर्धूपैर्गन्धैर्माल्यैर्विलेपनैश्चूर्णैर्वस्त्रैश्छत्रैर्ध्वजैर्घण्टाभिः पताकाभिः, समन्ताच्च दीपमालाभिः, बहुविधाभिश्च पूजाभिः पूजयिष्यति। कः पुनर्वादो यः एनां प्रज्ञापारमितां 25 लिखिष्यति उद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति देशयिष्यत्युपदेक्ष्यत्युद्देक्ष्यति स्वाध्यास्यति सत्करिष्यति गुरुकरिष्यति मानयिष्यति पूजयिष्यति अर्चयिष्यति अपचायिष्यति पुष्पैर्धूपैर्गन्धैर्माल्यैर्विलेपनैश्चूर्णैर्वस्त्रैश्छत्रैर्ध्वजैर्घण्टाभिः पताकाभिः, समन्ताच्च दीपमालाभिः, बहुविधाभिश्च पूजाभिः पूजयिष्यति॥ W 251 R 83

भगवानाह—साधु साधु कौशिक। तस्य खलु पुनः कौशिक कुलपुत्रस्य कुलदुहितुर्वा 30 इमां प्रज्ञापारमितां स्वाध्यायतो बहूनि देवपुत्रशतान्युपसंक्रमिष्यन्ति। बहूनि देवपुत्र- W 252

सहस्राणि बहूनि देवपुत्रशतसहस्राणि धर्मश्रवणायोपसंक्रमिष्यन्ति। ते च देवपुत्रा धर्मं शृण्वन्तस्तस्य धर्मभाणकस्य प्रतिभानमुपसंहर्तव्यं मंस्यन्ते। यदापि स धर्मभाणको न जल्पितुकामो भविष्यति, तदापि तस्य ते देवपुत्रास्तेनैव धर्मगौरवेण प्रतिभानमुपसंहर्तव्यं R 84 मंस्यन्ते, यथा तस्य कुलपुत्रस्य वा कुलदुहितुर्वा भाषितुमेव छन्दो भविष्यति। इममपि स 5 कौशिक कुलपुत्रो वा कुलदुहिता वा दृष्टधार्मिकं गुणं परिगृह्णाति, य इमां प्रज्ञापारमितामुद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति देशयिष्यत्युपदेक्ष्यत्युद्देक्ष्यति स्वाध्यास्यति॥

पुनरपरं कौशिक तस्य कुलपुत्रस्य कुलदुहितुर्वा इमां प्रज्ञापारमितां भाषमाणस्य चतसृणां पर्षदामग्रतो नावलीनचित्तता भविष्यति—मा खलु मां कश्चित्पर्यनुयुञ्जीत उपा- 10 लम्भाभिप्राय इति। तत्कस्य हेतोः? तथा हि तस्य प्रज्ञापारमिता रक्षावरणगुप्तिं करोति। स उपालम्भानपि प्रज्ञापारमिताविहारी न समनुपश्यति, उपालम्भकरानपि प्रज्ञापारमिताविहारी न समनुपश्यति, योऽप्युपालम्भ्येत तमपि न समनुपश्यति, तामपि प्रज्ञापारमितां न समनुपश्यति। एवं प्रज्ञापारमितापरिगृहीतस्य कुलपुत्रस्य वा कुलदुहितुर्वा अनेन पर्यायेण न कश्चित्पर्यनुयोगो भविष्यति। स च नोत्रसिष्यति, न संत्रसिष्यति, न संत्रासमापत्स्यते। 15 इमानपि स कौशिक कुलपुत्रो वा कुलदुहिता वा दृष्टधार्मिकान् गुणान् परिगृह्णाति, य इमां प्रज्ञापारमितामुद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति देशयिष्यत्युपदेक्ष्यत्युद्देक्ष्यति स्वाध्यास्यति॥

पुनरपरं कौशिक स कुलपुत्रो वा कुलदुहिता वा प्रियो भविष्यति मातापितॄणां मित्रामात्यज्ञातिसालोहितश्रमणब्राह्मणानां हितानां च, प्रतिबलश्च भविष्यति, शक्तश्च भविष्यति 20 उत्पन्नोत्पन्नानां परप्रवादिनां सहधर्मेण निग्रहाय, परैश्च प्रत्यनुयुज्यमानः प्रत्यनुयोगव्याकरणसमर्थो भविष्यति। इमानपि स कौशिक कुलपुत्रो वा कुलदुहिता वा दृष्टधार्मिकान् गुणान् R 85 परिगृह्णाति, यः कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितामुद्ग्रहीष्यति धारयिष्यति W 254 वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति देशयिष्यत्युपदेक्ष्यत्युद्देक्ष्यति स्वाध्यास्यति॥

यत्र खलु पुनः कौशिक कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितां लिखित्वा 25 पुस्तकगतां कृत्वा पूजापूर्वंगमं स्थापयिष्यति पूजयिष्यति, तत्र कौशिक ये केचिच्चातुर्महाराजकायिकेषु देवेषु देवपुत्रा अनुत्तरायां सम्यक्संबोधौ संप्रस्थिताः, तेऽपि तत्र आगन्तव्यं मंस्यन्ते। तेऽपि तत्रागत्य एनां प्रज्ञापारमितां पुस्तकगतां प्रेक्षिष्यन्ते वन्दिष्यन्ते नमस्करिष्यन्त्युद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति। प्रेक्ष्य वन्दित्वा नमस्कृत्य धारयित्वा वाचयित्वा पर्यवाप्य प्रवर्त्य देशयित्वोप-

---

१ R क्वचित्. २ R °साल° for °सालोहित°. ३ R W शक्रश्च.

दिश्योद्दिश्य स्वाध्याय्य पुनरेव प्रक्रमितव्यं मंस्यन्ते। एवं ये केचित्कौशिक त्रायस्त्रिंशेषु देवेषु देवपुत्रा अनुत्तरायां सम्यक्संबोधौ संप्रस्थिताः, तेऽपि तत्रागन्तव्यं मंस्यन्ते। तेऽपि तत्रागत्य एनां प्रज्ञापारमितां पुस्तकगतां प्रेक्षिष्यन्ते वन्दिष्यन्ते नमस्करिष्यन्त्युद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति। प्रेक्ष्य वन्दित्वा नमस्कृत्योद्गृह्य धारयित्वा वाचयित्वा पर्यवाप्य प्रवर्त्य देशयित्वोपदिश्य 5 उद्दिश्य स्वाध्याय्य पुनरेव प्रक्रमितव्यं मंस्यन्ते। येऽपि केचित्कौशिक यामेषु देवेषु देवपुत्रा अनुत्तरायां सम्यक्संबोधौ संप्रस्थिताः, तेऽपि तत्रागन्तव्यं मंस्यन्ते। तेऽपि तत्रागत्य एनां प्रज्ञापारमितां पुस्तकगतां प्रेक्षिष्यन्ते वन्दिष्यन्ते नमस्करिष्यन्त्युद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति। प्रेक्ष्य वन्दित्वा नमस्कृत्योद्गृह्य धारयित्वा वाचयित्वा पर्यवाप्य प्रवर्त्य देशयित्वोपदिश्योद्दिश्य स्वाध्याय्य पुनरेव 10 प्रक्रमितव्यं मंस्यन्ते। येऽपि केचित्कौशिक तुषितेषु देवेषु देवपुत्रा अनुत्तरायां सम्यक्संबोधौ संप्रस्थिताः, तेऽपि तत्रागन्तव्यं मंस्यन्ते। तेऽपि तत्रागत्य एनां प्रज्ञापारमितां पुस्तकगतां प्रेक्षिष्यन्ते वन्दिष्यन्ते नमस्करिष्यन्त्युद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति। प्रेक्ष्य वन्दित्वा नमस्कृत्योद्गृह्य धारयित्वा वाचयित्वा पर्यवाप्य प्रवर्त्य देशयित्वोपदिश्योद्दिश्य स्वाध्याय्य पुनरेव प्रक्रमितव्यं 15 मंस्यन्ते। येऽपि केचित्कौशिक निर्माणरतिषु देवेषु देवपुत्रा अनुत्तरायां सम्यक्संबोधौ संप्रस्थिताः, तेऽपि तत्रागन्तव्यं मंस्यन्ते। तेऽपि तत्रागत्य एनां प्रज्ञापारमितां पुस्तकगतां प्रेक्षिष्यन्ते वन्दिष्यन्ते नमस्करिष्यन्त्युद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति। प्रेक्ष्य वन्दित्वा नमस्कृत्योद्गृह्य धारयित्वा वाचयित्वा पर्यवाप्य प्रवर्त्य देशयित्वोपदिश्योद्दिश्य स्वाध्याय्य पुनरेव प्रक्रमितव्यं मंस्यन्ते। येऽपि 20 केचित्कौशिक परनिर्मितवशवर्तिषु देवेषु देवपुत्रा अनुत्तरायां सम्यक्संबोधौ संप्रस्थिताः, तेऽपि तत्रागन्तव्यं मंस्यन्ते। तेऽपि तत्रागत्य एनां प्रज्ञापारमितां पुस्तकगतां प्रेक्षिष्यन्ते वन्दिष्यन्ते नमस्करिष्यन्ति उद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्ति उपदेक्ष्यन्ति उद्देक्ष्यन्ति स्वाध्यास्यन्ति। प्रेक्ष्य वन्दित्वा नमस्कृत्योद्गृह्य धारयित्वा वाचयित्वा पर्यवाप्य प्रवर्त्य देशयित्वोपदिश्योद्दिश्य स्वाध्याय्य पुनरेव प्रक्रमितव्यं 25 मंस्यन्ते। एवं येऽपि केचित्कौशिक रूपावचरेषु देवेषु देवपुत्रा यावन्तो ब्रह्मलोके ब्रह्मकायिका देवपुत्रा अनुत्तरायां सम्यक्संबोधौ संप्रस्थिताः, तेऽपि तत्रागन्तव्यं मंस्यन्ते। तेऽपि तत्रागत्य एनां प्रज्ञापारमितां पुस्तकगतां प्रेक्षिष्यन्ते वन्दिष्यन्ते नमस्करिष्यन्ति उद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्ति उपदेक्ष्यन्ति उद्देक्ष्यन्ति स्वाध्यास्यन्ति। प्रेक्ष्य वन्दित्वा नमस्कृत्योद्गृह्य धारयित्वा वाचयित्वा पर्यवाप्य प्रवर्त्य देश- 30 यित्वोपदिश्योद्दिश्य स्वाध्याय्य पुनरेव प्रक्रमितव्यं मंस्यन्ते। मा तेऽत्र कौशिक एवं भूयथा ब्रह्मकायिका एवेति। यथा ब्रह्मकायिकाः, एवं येऽपि केचित्कौशिक ब्रह्मपुरोहितेषु देवेषु

W 255 R 86 W 256 R 87

देवपुत्राः...पेयालम्। एवं येऽपि केचित्कौशिक महाब्रह्मासु परीत्ताभेष्वप्रमाणाभेष्वाभास्वरेषु परीत्तशुभेष्वप्रमाणशुभेषु शुभकृत्स्नेष्वनभ्रकेषु पुण्यप्रसवेषु बृहत्फलेष्वसंज्ञिसत्त्वेष्वबृहेष्वतपेषु सुदृशेषु सुदर्शनेषु। येऽपि केचित्कौशिक अकनिष्ठेषु देवेषु देवपुत्रा अनुत्तरायां सम्यक्संबोधौ संप्रस्थिताः, तेऽपि तत्रागन्तव्यं मंस्यन्ते। तेऽपि तत्रागत्य एनां प्रज्ञापारमितां
5 पुस्तकगतां प्रेक्षिष्यन्ते वन्दिष्यन्ते नमस्करिष्यन्त्युद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति। प्रेक्ष्य वन्दित्वा नमस्कृत्योद्गृह्य धारयित्वा वाचयित्वा पर्यवाप्य प्रवर्त्य देशयित्वोपदिश्योद्दिश्य स्वाध्याय्य पुनरेव प्रक्रमितव्यं मंस्यन्ते। एवं च कौशिक तेन कुलपुत्रेण वा कुलदुहित्रा वा चित्तमुत्पाद- (W 257, R 88)
यितव्यम्—ये केचिद्दशसु दिक्षु अप्रमेयेष्वसंख्येयेषु लोकधातुषु देवा नागा यक्षा गन्धर्वा असुरा
10 गरुडाः किन्नरा महोरगा मनुष्या अमनुष्याः, ते इतः पुस्तकात्प्रज्ञापारमितां पश्यन्तु वन्दन्तां नमस्कुर्वन्तु उद्गृह्णन्तु धारयन्तु पर्यवाप्नुवन्तु प्रवर्तयन्तु देशयन्तु उपदिशन्तु उद्दिशन्तु स्वाध्यायन्तु। प्रेक्ष्य वन्दित्वा नमस्कृत्योद्गृह्य धारयित्वा वाचयित्वा पर्यवाप्य प्रवर्त्य देशयित्वा उपदिश्योद्दिश्य स्वाध्याय्य पुनरेव स्वभवनानि गच्छन्तु—तेषामिदं धर्मदानमेव दत्तं भवत्विति। मा तेऽत्र कौशिक एवं भूत्—ये अस्मिन्नेव चातुर्महाद्वीपके लोकधातौ कामावचरा रूपाव-
15 (W 258) चराश्च देवपुत्रा अनुत्तरां सम्यक्संबोधिमभिसंप्रस्थिताः, ते एव केवलं तत्रागन्तव्यं मंस्यन्त इति। न ते कौशिक एवं द्रष्टव्यम्। अपि तु खलु पुनः कौशिक यावन्तस्त्रिसाहस्रमहासाहस्रे लोकधातौ कामावचरा रूपावचराश्च देवपुत्रा अनुत्तरां सम्यक्संबोधिमभिसंप्रस्थिताः, तेऽपि तत्रागन्तव्यं मंस्यन्ते। तेऽपि तत्रागत्य एनां प्रज्ञापारमितां पुस्तकगतां प्रेक्षिष्यन्ते वन्दिष्यन्ते नमस्करिष्यन्त्युद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देश-
20 यिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति। प्रेक्ष्य वन्दित्वा नमस्कृत्योद्गृह्य धारयित्वा वाचयित्वा पर्यवाप्य प्रवर्त्य देशयित्वोपदिश्योद्दिश्य स्वाध्याय्य पुनरेव प्रक्रमितव्यं मंस्यन्ते। तस्य खलु पुनः कौशिक कुलपुत्रस्य वा कुलदुहितुर्वा गृहं वा लयनं वा प्रासादो वा सुरक्षितो भविष्यति। न च तस्य कश्चिद्विहेठको भविष्यति स्थापयित्वा पूर्वकर्मविपाकेन। इममपि स कौशिक कुलपुत्रो वा कुलदुहिता वा दृष्टधार्मिकं गुणं परिग्रहीष्यति—यत्र हि नाम एवं महौजस्का देवा (R 89)
25 (W 259) नागा यक्षा गन्धर्वा असुरा गरुडाः किन्नरा महोरगा मनुष्या अमनुष्या वा आगन्तव्यं मंस्यन्ते॥

एवमुक्ते शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—कथं पुनर्भगवन् स कुलपुत्रो वा कुलदुहिता वा एवं जानीयात्-इह देवा वा नागा वा यक्षा वा गन्धर्वा वा असुरा वा गरुडा वा किन्नरा वा महोरगा वा मनुष्या वा अमनुष्या वा आगच्छन्ति इमां प्रज्ञापारमितां श्रोतुं द्रष्टुं वन्दितुं नमस्कर्तुमुद्ग्रहीतुं धारयितुं वाचयितुं पर्यवाप्तुं प्रवर्तयितुं देशयितुमुपदेष्टु-
30 मुद्देष्टुं स्वाध्यातुमिति? एवमुक्ते भगवान् शक्रं देवानामिन्द्रमेतदवोचत्—सचेत्कौशिक कुलपुत्रो वा कुलदुहिता वा तत्र उदारमवभासं संजानीते, निष्ठा[1] तेन कुलपुत्रेण वा

---

१ W निष्ठागतेन for निष्ठा तेन.

कुलदुहित्रा वा तत्र गन्तव्या—इह देवो वा नागो वा यक्षो वा गन्धर्वो वा असुरो वा गरुडो वा किन्नरो वा महोरगो वा मनुष्यो वा अमनुष्यो वा आगत इति, उपसंक्रान्त इति। पुनरपरं सचेत्कौशिक कुलपुत्रो वा कुलदुहिता वा तत्र अमानुषं गन्धं घ्रास्यत्यनाघ्रातपूर्वम्, घ्रात्वा च तद्गन्धं निष्ठा तेन कुलपुत्रेण वा कुलदुहित्रा वा तत्र गन्तव्या—इह देवो वा नागो वा यक्षो वा गन्धर्वो वा असुरो वा गरुडो वा किन्नरो वा महोरगो वा मनुष्यो वा 5 अमनुष्यो वा आगत इति, उपसंक्रान्त इति ॥

पुनरपरं सचेत्कौशिक कुलपुत्रो वा कुलदुहिता वा तत्र[1] अमानुषं गन्धं घ्रास्यति अनाघ्रातपूर्वम्, घ्रात्वा च तद्गन्धं निष्ठा तेन कुलपुत्रेण वा कुलदुहित्रा तत्र गन्तव्या,—इह देवो वा नागो वा यक्षो वा गन्धर्वो वा असुरो वा गरुडो वा किन्नरो वा महोरगो वा मनुष्यो वा [ अमनुष्यो वा ] आगत इति, उपसंक्रान्त इति। पुनरपरं सचेत्कौशिक कुल- 10 पुत्रो वा कुलदुहिता वा चौक्षसमुदाचारो भविष्यति, शुचिसमुदाचारो भविष्यति, तस्य तया चौक्षसमुदाचारतया शुचिसमुदाचारतया ते देवा नागा यक्षा गन्धर्वा असुरा गरुडाः किन्नरा महोरगा मनुष्या अमनुष्या वा आगन्तव्यं मंस्यन्ते। ये च तत्र देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगा मनुष्या अमनुष्या वा आगता भविष्यन्ति, ते तस्य तया चौक्षसमुदाचारतया शुचिसमुदाचारतया आत्तमनस्काः प्रमुदिताः प्रीतिसौमनस्यजाता भवि- 15 ष्यन्ति। याश्च तत्र अल्पौजस्का अल्पौजस्का देवता अध्युषिता भविष्यन्ति, तास्ततोऽपक्रमितव्यं मंस्यन्ते। तत्कस्य हेतोः? तेषामेव हि महौजस्कानां महौजस्कानां देवानां नागानां यक्षाणां गन्धर्वाणामसुराणां गरुडानां किन्नराणां महोरगाणां मनुष्याणा ममनुष्याणां वा श्रियं च तेजश्च गौरवं च असहमाना एव ता अल्पौजस्का अल्पौजस्का[2] देवता ततोऽपक्रमितव्यं मंस्यन्ते। यथा यथा खलु पुनः कौशिक ते महौजस्का महौजस्का देवा नागा 20 यक्षा गन्धर्वा असुरा गरुडाः किन्नरा महोरगा मनुष्या अमनुष्या वा अभीक्ष्णमुपसंक्रमितव्यं मंस्यन्ते, तथा तथा स कुलपुत्रो वा कुलदुहिता वा प्रसादबहुलो भविष्यति। इममपि स कौशिक कुलपुत्रो वा कुलदुहिता वा दृष्टधार्मिकं गुणं परिग्रहीष्यति। तेन खलु पुनः कौशिक कुलपुत्रेण वा कुलदुहित्रा वा तस्य धर्मनेत्रीस्थानस्य परिसामन्तकेऽशुचिरचौक्षसमुदाचारो न प्रचारयितव्यः तस्यां गुरुगौरवतापरिपूरिमुपादाय ॥ 25

R 90
W 260
W 261

पुनरपरं कौशिक तस्य कुलपुत्रस्य वा कुलदुहितुर्वा न कायक्लमथो न चित्तक्लमथ उत्पत्स्यते। स सुखमेव शय्यां कल्पयिष्यति, सुखं च प्रक्रमिष्यति, सुप्तश्च सन् न पापकान् स्वप्नान् द्रक्ष्यति, पश्यंश्च पुनस्तथागतानेवार्हतः सम्यक्संबुद्धान् द्रक्ष्यति, स्तूपानेव द्रक्ष्यति, बोधिसत्त्वानेव द्रक्ष्यति, तथागतश्रावकानेव द्रक्ष्यति। शब्दांश्च शृण्वन् पारमिताशब्दानेव श्रोष्यति, बोधिपक्षानेव धर्मान् द्रक्ष्यति, बोधिवृक्षानेव द्रक्ष्यति, तेषु च तथागतानेवार्हतः 30

R 91

१ R om. from तत्र down to कुलदुहिता वा below in line 11. २ W om. one अल्पौजस्का.

सम्यक्संबुद्धानभिसंबुध्यमानान् द्रक्ष्यति। तथा अभिसंबुद्धानां च धर्मचक्रप्रवर्तनं द्रक्ष्यति, बहूंश्च बोधिसत्त्वानेव द्रक्ष्यति इमामेव प्रज्ञापारमितां संगायमानान् प्रज्ञापारमितासंगीतिरतान्--एवं सर्वज्ञता परिग्रहीतव्या, एवं बुद्धक्षेत्रं विशोधयितव्यम्, इत्युपायकौशलं च उपदिशतः। उदारं
W 262 च बुद्धानां भगवतामभिसंबोधिशब्दं श्रोष्यति--अमुष्यां दिशि अमुष्मिन् दिग्भागे अमुष्मिन्
5 लोकधातौ अमुकोऽसौ नाम्ना तथागतोऽर्हन् सम्यक्संबुद्धो बहुभिर्बोधिसत्त्वश्रावकाणां शतैर्बहुभिर्बोधिसत्त्वश्रावकसहस्रैर्बहुभिर्बोधिसत्त्वश्रावकशतसहस्रैर्बहुभिर्बोधिसत्त्वश्रावककोटीभिर्बहुभिर्बोधिसत्त्वश्रावककोटीशतैर्बहुभिर्बोधिसत्त्वश्रावककोटीसहस्रैः बहुभिर्बोधिसत्त्वश्रावककोटीशतसहस्रैर्बहुभिर्बोधिसत्त्वश्रावककोटीनियुतशतसहस्रैः परिवृतः पुरस्कृतो धर्मं देशयतीति। यश्च खलु पुनः कौशिक कुलपुत्रो वा कुलदुहिता वा इमानेवंरूपान् स्वप्नान् द्रक्ष्यति, स
10 सुखमेव स्वप्स्यति, सुखं च प्रतिभोत्स्यते, ओजःप्रक्षिप्तं च कायं सुखं च प्रतिसंवेदयिष्यति, लघु लध्वेव च प्रतिसंवेदयिष्यति। न चास्य अधिमात्रया आहारगृद्ध्या चित्तसंततिरुत्पत्स्यते।
R 92 मृदुका च अस्य आहारसंज्ञा भवति। तद्यथापि नाम कौशिक भिक्षोर्योगाचारस्य समाधेर्व्युत्थितस्य मनसिकारपरिष्यन्दितेन चित्तेन न बलवत्याहारे गृद्धिर्भवति, मृदुका चास्य आहारसंज्ञा भवति, एवमेव कौशिक तस्य कुलपुत्रस्य वा कुलदुहितुर्वा न बलवत्याहारे
15 गृद्धिर्भविष्यति। मृदुका चास्य आहारसंज्ञा भविष्यति। तत्कस्य हेतोः? एवं ह्येतत्कौशिक
W 263 भवति--यथापि नाम प्रज्ञापारमिताभावनायोगानुयुक्तत्वात्तस्य कुलपुत्रस्य वा कुलदुहितुर्वा तथा ह्यस्य अमनुष्याः काये ओज उपसंहर्तव्यं मंस्यन्ते। इमानपि स कौशिक कुलपुत्रो वा कुलदुहिता वा दृष्टधार्मिकान् गुणान् परिगृह्णाति॥

पुनरपरं कौशिक यः कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितां लिखित्वा
20 पुस्तकगतां कृत्वा पूजापूर्वंगमं स्थापयेत् पूजयेन्नोद्गृह्णीयान्न धारयेन्न वाचयेन्न पर्यवाप्नुयात्
W 264 न प्रवर्तयेन्न देशयेन्नोपदिशेन्नोद्दिशेन्न स्वाध्यायेत्, अयमेव ततः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवति। यः कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितामभिश्रद्दधदवकल्पयन्नधिमुच्य प्रसन्नचित्तो बोधाय चित्तमुत्पाद्य अध्याशयतः शृणुयादुद्गृह्णीयाद्धारयेद्वाचयेत्पर्यवाप्नुयात्प्रवर्तयेद्देशयेदुपदिशेदुद्दिशेत्स्वाध्यायेत्, परेभ्यश्च विस्तरेण संप्रकाश-
25 येत, अर्थमस्या विवृणुयात्, मनसान्ववेक्षेत, यथाधिकया च प्रज्ञया अत्र परिमीमांसामापद्येत, अन्तशः पुस्तकगतामपि कृत्वा धारयेत्स्थापयेत्सद्धर्मचिरस्थितिहेतोः--मा बुद्धनेत्रीसमुच्छेदो भूत्, मा सद्धर्मान्तर्धानम्। बोधिसत्त्वानां महासत्त्वानां चानुग्रहोपसंहारः कृतो भविष्यति नेत्र्यवैकल्येनेति। तां चैनां प्रज्ञापारमितां सत्कुर्याद्गुरुकुर्यान्मानयेत्पूजयेदर्चयेदपचायेत्पुष्पैर्धूपै-
R 93 र्गन्धैर्माल्यैर्विलेपनैश्चूर्णैर्वस्त्रैश्छत्रैर्ध्वजैर्घण्टाभिः पताकाभिः, समन्ताच्च दीपमालाभिः, बहुविधा-
30 भिश्च पूजाभिः पूजयेत्, अयमेव ततः स कौशिक कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहुतरं पुण्यं प्रसवति। तस्मात्तर्हि कौशिक इमान् दृष्टधार्मिकान् विशिष्टान् गुणान् परिगृहीतुकामेन कुलपुत्रेण वा कुलदुहित्रा वा इयमेव प्रज्ञापारमिता अभिश्रद्धातव्या

अवकल्पयितव्या अधिभोक्तव्या। प्रसन्नचित्तेन बोधाय चित्तमुत्पाद्य सत्कृत्य अध्याशयेन श्रोतव्या उद्ग्रहीतव्या धारयितव्या वाचयितव्या पर्यवाप्तव्या प्रवर्तयितव्या देशयितव्या उपदेष्टव्या उद्देष्टव्या स्वाध्यातव्या, परेभ्यश्च विस्तरेण संप्रकाशयितव्या, अर्थतो विवरितव्या, मनसान्ववेक्षितव्या, यथाधिकया च प्रज्ञया अत्र परिमीमांसामापद्येत। अन्तशः पुस्तकगतामपि कृत्वा स्थापयितव्या पूजयितव्या सद्धर्मचिरस्थितिहेतोः—मा बुद्धनेत्रीसमुच्छेदो 5 भूत्, मा सद्धर्मान्तर्धानम्। बोधिसत्त्वानां महासत्त्वानां चानुग्रहोपसंहारः कृतो भविष्यति नेत्र्यवैकल्येनेति। अर्थिकानां च कुलपुत्राणां कुलदुहितॄणां च संविभागं करिष्यामि, मम च परेषां च कल्याणसत्त्वानां बुद्धनेत्रीमहाचक्षुरवैकल्यता भविष्यतीति। सदा च सत्कर्तव्या गुरुकर्तव्या मानयितव्या पूजयितव्या अर्चयितव्या अपचायितव्या पुष्पैर्धूपैर्गन्धैर्माल्यैर्विलेपनैश्चूर्णैर्वस्त्रैश्छत्रैर्ध्वजैर्घण्टाभिः पताकाभिः, समन्ताच्च दीपमालाभिः, बहुविधाभिश्च 10 पूजाभिः पूजयितव्येति ॥

W 265

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायामप्रमेयगुणधारणपारमितास्तूपसत्कारपरिवर्तो नाम तृतीयः ॥



# ४ गुणपरिकीर्तनपरिवर्तश्चतुर्थः।

R 94
W 267

पुनरपरं भगवान् शक्रं देवानामिन्द्रमामन्त्रयते स्म—सचेत्कौशिक अयं ते जम्बूद्वीपः परिपूर्णश्चूलिकाबद्धस्तथागतशरीराणां दीयेत, इयं च प्रज्ञापारमिता लिखित्वोपनाम्येत, तत एकतरेण भागेन प्रवार्यमाणोऽनयोर्द्वयोर्भागयोः स्थापितयोः कतमं त्वं कौशिक भागं 5 गृह्णीयाः? शक्र आह—सचेन्मे भगवन् अयं जम्बूद्वीपः परिपूर्णश्चूलिकाबद्धस्तथागतशरीराणां दीयेत, इयं च प्रज्ञापारमिता लिखित्वोपनाम्येत, तत एकतरेण भागेन प्रवार्यमाणोऽनयोर्द्वयोर्भागयोः स्थापितयोरिमामेवाहं भगवन् प्रज्ञापारमितां परिगृह्णीयाम्। तत्कस्य हेतोः? यथापि नाम तथागतनेत्रीचित्रीकारेण। एतद्धि तथागतानां भूतार्थिकं शरीरम्। तत्कस्य

W 268

हेतोः? उक्तं ह्येतद्भगवता-धर्मकाया बुद्धा भगवन्तः। मा खलु पुनरिमं भिक्षवः सत्कायं 10 कायं मन्यध्वम्। धर्मकायपरिनिष्पत्तितो मां भिक्षवो द्रक्ष्यथ। एष च तथागतकायो

W 270

भूतकोटिप्रभावितो द्रष्टव्यो यदुत प्रज्ञापारमिता। न खलु पुनर्मे भगवंस्तेषु तथागतशरीरेष्वगौरवम्। गौरवमेव मे भगवंस्तेषु तथागतशरीरेषु। अपि तु खलु पुनर्भगवन् इतः प्रज्ञापारमितातो निर्जातानि तथागतशरीराणि पूजां लभन्ते। तस्मात्तर्हि भगवन् अनयैव प्रज्ञापारमितया पूजितया तेषामपि तथागतशरीराणां परिपूर्णा पूजा कृता भवति। तत्कस्य हेतोः? प्रज्ञापारमिता-

W 271

15 निर्जातत्वात्तथागतशरीराणाम्। तद्यथापि नाम भगवन् सुधर्मायां देवसभायामहं यस्मिन् समये

R 95

दिव्ये स्वके आसने निषण्णो भवामि, तदा मम देवपुत्रा उपस्थानायागच्छन्ति। यस्मिन् समये न निषण्णो भवामि, अथ तस्मिन् समये यन्ममासनं तत्र देवपुत्रा मम गौरवेण तदासनं नमस्कृत्य प्रदक्षिणीकृत्य पुनरेव प्रक्रामन्ति। तत्कस्य हेतोः? इह हि किल आसने निषद्य शक्रो देवानामिन्द्रो देवानां त्रायस्त्रिंशानां धर्मं देशयतीति। एवमेव भगवन् महेशाख्यहेतुप्रत्ययभूता

W 272

20 प्रज्ञापारमिता। तथागतस्यार्हतः सम्यक्संबुद्धस्य सर्वज्ञताया आहारिका। सर्वज्ञतायाश्च तथागतशरीराण्याश्रयभूतानि। न तु तानि प्रत्ययभूतानि, न कारणभूतानि ज्ञानस्योत्पादाय। एवमेव भगवन् सर्वज्ञज्ञानहेतुका तथागतशरीरेषु पूजा कृता भवति। तस्मात्तर्हि भगवन् अनयोर्द्वयोर्भागयोः स्थापितयोरिमामेवाहं भगवन् प्रज्ञापारमितां परिगृह्णीयाम्। न खलु पुनर्मे भगवंस्तेषु तथागतशरीरेष्वगौरवम्। गौरवमेव मे भगवंस्तेषु तथागतशरीरेषु। अपि तु खलु 25 पुनर्भगवंस्तानि तथागतशरीराणि प्रज्ञापारमितापरिभावितत्वात्पूजां लभन्ते। तिष्ठतु खलु पुनर्भगवन् अयं जम्बूद्वीपस्तथागतशरीराणां परिपूर्णश्चूलिकाबद्धः। तिष्ठतु चातुर्महाद्वीपको लोकधातुस्तथागतशरीराणां परिपूर्णश्चूलिकाबद्धः। तिष्ठतु साहस्रो लोकधातुस्तथागतशरीराणां परिपूर्णश्चूलिकाबद्धः। तिष्ठतु भगवन् द्विसाहस्रो मध्यमो लोकधातुस्तथागतशरीराणां परिपूर्णश्चूलिकाबद्धः। अयमेव भगवंस्त्रिसाहस्रमहासाहस्रो लोकधातुस्तथागतशरीराणां परिपूर्णश्चूलिकाबद्धः

W 273
R 96

30 एको भागः कृत्वा स्थाप्येत, इयं च प्रज्ञापारमिता लिखित्वा द्वितीयो भागः स्थाप्येत। अनयोर्द्वयोर्भागयोः स्थापितयोरेकतरेण भागेन प्रवार्यमाणोऽनयोर्द्वयोर्भागयोः स्थापितयोर्यस्ते भागोऽभिप्रेतस्तमेकं भागं गृहाणेति, तत्र इमामेवाहं भगवन् प्रज्ञापारमितां परिगृह्णीयाम्। न खलु

पुनर्भगवंस्तेषु तथागतशरीरेष्वगौरवम् । गौरवमेव मे भगवंस्तेषु तथागतशरीरेषु । अपि तु खलु पुनर्भगवंस्तानि तथागतशरीराणि प्रज्ञापारमितापरिभावितानि पूजां लभन्ते । तथागतशरीराणि हि सर्वज्ञज्ञानाश्रयभूतानि । तदपि सर्वज्ञज्ञानं प्रज्ञापारमितानिर्जातम् । तस्मात्तर्हि भगवन् अनयोर्द्वयोर्भागयोः स्थापितयोरिमामेवाहं भगवन् प्रज्ञापारमितां परिगृह्णी-याम् । न खलु पुनर्मे भगवंस्तेषु तथागतशरीरेष्वगौरवम् । गौरवमेव मे भगवंस्तेषु तथागत- 5 शरीरेषु । अपि तु खलु पुनर्भगवन् इतः प्रज्ञापारमितातो निर्जातानि तानि तथागत-शरीराणि पूजां लभन्ते यदुत प्रज्ञापारमितापरिभावितत्वात् । तद्यथापि नाम भगवन् अनर्घे W 274 मणिरत्नमेभिरेवंरूपैर्गुणैः समन्वागतं स्यात् । तद्यथा—तद्यत्र यत्र स्थाप्येत, तत्र तत्र मनुष्या वा अमनुष्या वा अवतारं न लभेरन् । यत्र यत्र वा अमनुष्यगृहीतः कश्चिद्भवेत् पुरुषो वा स्त्री वा, 10 तत्र तत्र तस्मिन् मणिरत्ने प्रवेशितमात्रे सोऽमनुष्यस्ततोऽपक्रामेत् । वातेनापि बाध्यमानस्य धम्यमाने शरीरे तन्मणिरत्नं स्थाप्येत । तस्य तं वातं निगृह्णीयात्, न विवर्धयेत्, उपशमयेत् । पित्तेनापि दह्यमाने शरीरे स्थाप्येत । तस्य तदपि पित्तं निगृह्णीयात्, न विवर्धयेत्, उपशमयेत् । श्लेष्मणापि परिगृद्धे[1] सर्वतो बाध्यमाने शरीरे स्थाप्येत, तस्य तमपि श्लेष्माणं निगृह्णीयात्, न विवर्धयेत्, उपशमयेत् । सांनिपातिकेनापि व्याधिना दुःखितस्य शरीरे स्थाप्येत, तस्य तमपि सांनिपातिकं व्याधिं निगृह्णीयात्, न विवर्धयेत्, उपशमयेत् । 15 अन्धकारतमिस्रायां[2] च रात्रावप्यवभासं कुर्यात् । उष्णे चापि वर्तमाने यस्मिन् पृथिवीप्रदेशे R 97 स्थाप्येत, स पृथिवीप्रदेशः शीतलो भवेत् । शीते चापि वर्तमाने यस्मिन् पृथिवीप्रदेशे स्थाप्येत, स पृथिवीप्रदेश उष्णो भवेत् । यस्मिंश्च पृथिवीप्रदेशे आशीविषा अनुविचरेयुः, तथा अन्येऽपि क्षुद्रजन्तवः, तत्रापि पृथिवीप्रदेशे धार्येत, स्थापितं वा भवेत्, तेऽप्याशी-विषास्ते च क्षुद्रजन्तवस्ततोऽपक्रामेयुः । सचेद्भगवन् स्त्री वा पुरुषो वा आशीविषेण दष्टो 20 भवेत्, तस्य तन्मणिरत्नं दश्येत, तस्य सहदर्शनेनैव मणिरत्नस्य तद्विषं प्रतिहन्येत विगच्छेत् । एभिश्चान्यैश्च भगवन् एवंरूपैर्गुणैः समन्वागतं तन्मणिरत्नं भवेत् । येषामपि W 275 केषांचिद्भगवन् अक्षिष्वर्बुदं वा तिमिरं वा अक्षिरोगो वा पटलं[3] वा भवेत्, तेषां च तन्मणि-रत्नमक्षिषु स्थाप्येत, तेषां स्थापितमात्रेणैव तेऽक्षिदोषा निर्घातं प्रशमं गच्छेयुः । एतैश्च अन्यैश्च भगवन् एवंरूपैर्गुणैः समन्वागतं तन्मणिरत्नं[4] भवेत् । यत्र चोदके स्थाप्येत, तदप्युदक- 25 मेकवर्णं कुर्यात्स्वकेन वर्णेन । सचेत्पाण्डरेण वस्त्रेण परिवेष्ट्य उदके प्रक्षिप्येत, तदुदकं पाण्डरीकुर्यात् । एवं सचेन्नीलेन पीतेन लोहितेन माञ्जिष्ठेन एतेषामन्येषां वा नानाप्रका-राणां वस्त्राणामन्यतमेन वस्त्रेण तन्मणिरत्नं वेष्टयित्वा वा बद्ध्वा वा उदके प्रक्षिप्येत, तेन तेन वस्त्ररागेण तत्तत्स्वभाववर्णं तदुदकं कुर्यात् । योऽपि तस्योदकस्य कलुषभावस्तमपि प्रसादयेत् । एभिरपि भगवन् एवंरूपैर्गुणैः समन्वागतं तन्मणिरत्नं भवेत् ॥ 30

अथ खल्वायुष्मानानन्दः शक्रं देवानामिन्द्रमेतदवोचत्—किं पुनः कौशिक देवलोक R 98 W 276

---

१ W परिवृद्धे. २ R अन्धकारमिश्रायां. ३ R पाटलं. ४ W om. तत्.

एव तानि मणिरत्नानि सन्ति, उत जाम्बूद्वीपकानामपि मनुष्याणां तानि मणिरत्नानि सन्ति? शक्र आह—देवेष्वार्यानन्द तानि मणिरत्नानि सन्ति। अपि तु खलु पुनर्जाम्बुद्वीपकानामपि मनुष्याणां मणिरत्नानि सन्ति। तानि तु गुरुकाणि अल्पानि परीत्तानि गुणविकलानि, न तैस्तथारूपैर्गुणैः समन्वागतानि। तत्तेषां दिव्यानां मणिरत्नानां शततमीमपि कलां नोप-
5 यान्ति, सहस्रतमीमपि, शतसहस्रतमीमपि, कोटीतमीमपि, कोटीशततमीमपि, कोटीसहस्रतमीमपि, कोटीशतसहस्रतमीमपि, कोटीनियुतशतसहस्रतमीमपि कलां नोपयान्ति, संख्यामपि कलामपि गणनामपि उपमामपि औपम्यमपि उपनिसामपि उपनिषदमपि न क्षमन्ते नोपयान्ति। यानि खलु पुनर्देवेषु, तानि लघूनि सर्वाकारगुणपरिपूर्णानि। यत्र च करण्डके तन्मणिरत्नं प्रक्षिप्तं भवति उत्क्षिप्तं वा, तत उद्धृतेऽपि तस्मिन् मणिरत्ने करण्डकात्
10 स्पृहणीय एव स करण्डको भवति। तैर्मणिरत्नगुणैः परा तत्र करण्डके स्पृहोत्पद्यते। एवमेव भगवन् प्रज्ञापारमिताया एते गुणाः सर्वज्ञज्ञानस्य च। येन परिनिर्वृतस्यापि तथागतस्यार्हतः सम्यक्संबुद्धस्य तानि तथागतशरीराणि पूजां लभन्ते—सर्वज्ञज्ञानस्येमानि तथागतशरीराणि भाजनभूतान्यभूवन्निति। यथा च भगवन् सर्वलोकधातुषु बुद्धानां भगवतां धर्मदेशना प्रज्ञापारमितानिर्जातत्वात्पूज्या, एवं धर्मभाणकस्य धर्मदेशना प्रज्ञापारमितानिर्जातत्वात्पूज्या।
15 यथा च भगवन् राजपुरुषो राजानुभावान्महतो जनकायस्य अकुतोभयः पूज्यः, एवं स धर्मभाणको धर्मकायानुभावान्महतो जनकायस्य अकुतोभयः पूज्यः। यथा च धर्मदेशना धर्मभाणकाश्च पूजां लभन्ते, एवं तानि तथागतशरीराणि पूजां लभन्ते। तस्मात्तर्हि भगवन् तिष्ठतु त्रिसाहस्रमहासाहस्रो लोकधातुस्तथागतशरीराणां परिपूर्णश्चूलिकाबद्धः, येऽपि भगवन् गङ्गानदीवालुकोपमा लोकधातवः, तेऽपि सर्वे तथागतशरीराणां परिपूर्णाश्चूलिकाबद्धा एको
20 भागः स्थाप्येत, इयं च प्रज्ञापारमिता लिखित्वा द्वितीयो भागः स्थाप्येत। तत्र चेन्मां भगवन् कश्चिदेव प्रवारयेदन्यतरेण भागेन, प्रवार्यमाणोऽनयोर्भागयोः स्थापितयोः—यस्ते भागोऽभिप्रेतः तमेकं भागं परिगृहाणेति, तत्र इमामेवाहं भगवंस्तयोर्द्वयोर्भागयोः स्थापितयोर्भागं गृह्णीयां यदुत प्रज्ञापारमिताम्। न खलु पुनर्भगवन् मम तेषु तथागतशरीरेष्वगौरवम्। गौरवमेव भगवंस्तेषु तथागतशरीरेषु। अपि तु खलु पुनर्भगवन् प्रज्ञापारमितापरिभाविता
25 सर्वज्ञता, सर्वज्ञतानिर्जाता च तथागतशरीराणां पूजा भवति। तस्मात्तर्हि भगवन् प्रज्ञापारमितायां पूजितायामतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां पूजा कृता भवति॥

पुनरपरं भगवन् येऽप्रमेयेष्वसंख्येयेषु लोकधातुषु बुद्धा भगवन्त एतर्हि तिष्ठन्ति ध्रियन्ते यापयन्ति, तान् धर्मतया द्रष्टुकामेन कुलपुत्रेण वा कुलदुहित्रा वा प्रज्ञापारमितायां चरितव्यम्, प्रज्ञापारमितायां योगमापत्तव्यम्। प्रज्ञापारमिता भावयितव्या॥

30 एवमुक्ते भगवान् शक्रं देवानामिन्द्रमेतदवोचत्—एवमेतत्कौशिक, एवमेतत्। येऽपि ते कौशिक अभूवन्नतीतेऽध्वनि तथागता अर्हन्तः सम्यक्संबुद्धा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः, तेऽपि कौशिक इमामेव प्रज्ञापारमितामागम्य अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः।

W 277 R 99 W 278 W 279 R 100

येऽपि ते कौशिक भविष्यन्त्यनागतेऽध्वनि तथागता अर्हन्तः सम्यक्संबुद्धाः, तेऽपि कौशिक इमामेव प्रज्ञापारमितामागम्य अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते । येऽपि ते कौशिक एतर्हि अप्रमेयेष्वसंख्येयेषु लोकधातुषु बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति, तेऽपि कौशिक बुद्धा भगवन्तः इमामेव प्रज्ञापारमितामागम्य अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः । अहमपि कौशिक एतर्हि तथागतोऽर्हन् सम्यक्संबुद्धः इमामेव प्रज्ञापारमितामागम्य अनुत्तरां 5 सम्यक्संबोधिमभिसंबुद्धः ॥

एवमुक्ते शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्–महापारमितेयं भगवन् यदुत W 280 प्रज्ञापारमिता । सर्वसत्त्वानां हि भगवंस्तथागतोऽर्हन् सम्यक्संबुद्धश्चित्तचरितानि सम्यक् प्रजानाति संपश्यति । भगवानाह–एवमेतत्कौशिक, एवमेतत् । तथा हि कौशिक बोधिसत्त्वो महासत्त्वो दीर्घरात्रं प्रज्ञापारमितायां चरति, तेन सर्वसत्त्वानां चित्तचरितानि प्रज्ञापारमितायां 10 सम्यक् प्रजानाति संपश्यति ॥

अथ खलु शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्–किं भगवन् प्रज्ञापारमितायामेव बोधिसत्त्वो महासत्त्वश्चरति नान्यासु पारमितासु ? भगवानाह–सर्वासु कौशिक षट्सु पारमितासु W 281 बोधिसत्त्वो महासत्त्वश्चरति । अपि तु खलु पुनः कौशिक प्रज्ञापारमितैव अत्र पूर्वंगमा R 101 बोधिसत्त्वस्य महासत्त्वस्य दानं वा ददतः, शीलं वा रक्षतः, क्षान्त्या वा संपादयमानस्य, 15 वीर्यं वा आरभमाणस्य, ध्यानं वा समापद्यमानस्य, धर्मान् वा विपश्यतः बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितैवात्र पूर्वंगमा । न च कौशिक आसां षण्णां पारमितानामुपाय-कौशल्यपरिगृहीतानां प्रज्ञापारमितापरिणामितानां सर्वज्ञतापरिणामितानां विशेषः, न च नानाकरणमुपलभ्यते । तद्यथापि नाम कौशिक जम्बूद्वीपे नानावृक्षा नानावर्णा नाना-संस्थाना नानापत्रा नानापुष्पा नानाफला नानारोहपरिणाहसंपन्नाः, न च तेषां वृक्षाणां 20 छायाया विशेषो वा नानाकरणं वा प्रज्ञायते, अपि तु छाया छायेत्येवं संख्यां गच्छति, एवमेव कौशिक आसां षण्णां पारमितानामुपायकौशल्यपरिगृहीतानां प्रज्ञापारमितापरिणामि-तानां सर्वज्ञतापरिणामितानां न विशेषः, न च नानाकरणमुपलभ्यते । एवमुक्ते शक्रो W 282 देवानामिन्द्रो भगवन्तमेतदवोचत्–महागुणसमन्वागतेयं भगवन् यदुत प्रज्ञापारमिता । अप्रमेयगुणसमन्वागतेयं भगवन् यदुत प्रज्ञापारमिता । अपर्यन्तगुणसमन्वागतेयं भगवन् 25 यदुत प्रज्ञापारमितेति ॥

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां गुणपरिकीर्तनपरिवर्तो नाम चतुर्थः ॥ W 283

# ५ पुण्य[1]पर्यायपरिवर्तः पञ्चमः ।

R 102 W 285 अथ खलु शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—यो भगवन् कुलपुत्रो वा कुल-
दुहिता वा इमां प्रज्ञापारमितामभिश्रद्दधदवकल्पयन्नधिमुच्य प्रसन्नचित्तो बोधाय चित्तमुत्पाद्य
अध्याशयतः शृणुयादुद्गृह्णीयाद्धारयेद्वाचयेत् पर्यवाप्नुयात् प्रवर्तयेद्देशयेदुपदिशेदुद्दिशेत्स्वाध्यायेत्,
5 परेभ्यश्च विस्तरेण संप्रकाशयेत्, अर्थमस्या विवृणुयात्, मनसान्ववेक्षेत, यथाधिकया च
प्रज्ञया अत्र परिमीमांसामापद्येत, अन्तशः पुस्तकगतामपि कृत्वा धारयेत्स्थापयेत्सद्धर्मचिरस्थिति-
हेतोः—मा बुद्धनेत्रीसमुच्छेदो भूत्, मा सद्धर्मान्तर्धानम् । बोधिसत्त्वानां महासत्त्वानां
च अनुग्रहोपसंहारः कृतो भविष्यति नेत्र्यवैकल्येनेति । एवमिमं निर्देशं श्रुत्वा एवंमहार्थिका
बतेयं प्रज्ञापारमिता, एवंमहानुशंसा, एवंमहाफला, एवंमहाविपाका बतेयं प्रज्ञापारमिता,
10 एवं बहुगुणसमन्वागतेयं प्रज्ञापारमिता, अपरित्यजनीया मया प्रज्ञापारमिता, रक्षितव्या मम
प्रज्ञापारमिता, गोपायितव्या मम प्रज्ञापारमिता, परमदुर्लभा हीयं प्रज्ञापारमितेत्यधिमुच्येत् ।
स्वयमेव चैनां प्रज्ञापारमितां सत्कुर्याद्गुरुकुर्यान्मानयेत्पूजयेदर्चयेदपचायेत्पुष्पैर्धूपैर्गन्धैर्माल्यैर्विले-
पनैश्चूर्णैर्वस्त्रैश्छत्रैर्ध्वजैर्घण्टाभिः पताकाभिः, समन्ताच्च दीपमालाभिः, बहुविधाभिश्च पूजाभिः
यो वा अन्यः संपूज्य परस्मै चार्थिकाय छन्दिकाय कुलपुत्राय कुलदुहित्रे वा याचमानाय
R 103 W 286 15 दद्यादुपनामयेन्निर्यातयेत्परित्यजेत्, अन्तशः पुस्तकगतामपि कृत्वा । कतरस्तयोर्भगवन् कुल-
पुत्रयोः कुलदुहित्रोर्वा बहुतरं पुण्यं प्रसवेत्—यो वा परित्यागबुद्धिर्यो वा न परित्यागबुद्धिः?
एवमुक्ते भगवान् शक्रं देवानामिन्द्रमेतदवोचत्—तेन हि कौशिक त्वामेवात्र प्रतिप्रक्ष्यामि।
यथा ते क्षमते व्याकुर्याः। तत्किं मन्यसे कौशिक यः कुलपुत्रो वा कुलदुहिता वा तथागतस्य
परिनिर्वृतस्य शरीरं सत्कृत्य परिचरेद्धारयेत् सत्कुर्याद्गुरुकुर्यान्मानयेत् पूजयेदर्चयेदपचायेत्
20 स्वयमेव । यो वा अन्यः कुलपुत्रो वा कुलदुहिता वा तथागतशरीरं स्वयं च सत्कुर्याद्गुरु-
कुर्यान्मानयेत्पूजयेदर्चयेदपचायेत्, परेभ्यश्च विस्तरेण संप्रकाशयेत्, दद्यात् संविभजेत् वैस्ता-
रिकी पूजा भविष्यतीति सत्त्वानां चानुकम्पामुपादाय । कतरस्तयोर्द्वयोः कुलपुत्रयोः कुल-
दुहित्रोर्वा बहुतरं पुण्यं प्रसवेत्? किं यः स्वयं च पूजयेत् परेभ्यश्च विस्तरेण संप्रकाशयेद्दद्यात्
W 287 संविभजेत्, किं वा यः स्वयमेव प्रत्यात्मं पूजयेत्? शक्र आह—यो भगवन् कुलपुत्रो वा
25 कुलदुहिता वा स्वयं च तथागतशरीरं सत्कुर्याद्गुरुकुर्यान्मानयेत्पूजयेदर्चयेदपचायेत्, परेभ्यश्च
विस्तरेण संप्रकाशयेद्दद्यात्संविभजेत् वैस्तारिकी पूजा भविष्यतीति सत्त्वानां चानुकम्पामुपा-
दाय, अयमेवानयोर्द्वयोः कुलपुत्रयोः कुलदुहित्रोर्वा बहुतरं पुण्यं प्रसवति । भगवानाह—
R 104 एवमेतत्कौशिक, एवमेतत् । एवमेतत्कौशिक यः कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापार-
मितां लिखित्वा पुस्तकगतां कृत्वा उद्गृह्णीयाद्धारयेद्वाचयेत् पर्यवाप्नुयात् प्रवर्तयेद्देशयेदुपदिशेदुद्दि-
30 शेत्स्वाध्यायेत्, परस्मै चार्थिकाय छन्दिकाय कुलपुत्राय कुलदुहित्रे वा याचमानाय दद्या-
दुपनामयेन्निर्यातयेत्परित्यजेदन्तशः पुस्तकगतामपि कृत्वा । अयमेव कौशिक तयोर्द्वयोः कुल-

१ R गुण° for पुण्य°.

पुत्रयोः कुलदुहित्रोर्वा परानुग्रहकरः कुलपुत्रो वा कुलदुहिता वा परित्यागबुद्धिस्तन्निदानं बहुतरं पुण्यं प्रसवति ॥

पुनरपरं कौशिक यः कुलपुत्रो वा कुलदुहिता वा यत्र यत्र भाजनीभूताः कुलपुत्रा वा कुलदुहितरो वा स्युः अस्याः प्रज्ञापारमितायाः, तत्र तत्र गत्वा तेभ्यः इमां प्रज्ञापारमितां दद्यात् संविभागं कुर्यात्, अयमेव कौशिक ततः कुलपुत्रात्कुलदुहितुर्वा सकाशाद्बहुतरं पुण्यं 5 W 288 प्रसवेत् ॥

पुनरपरं कौशिक यः कुलपुत्रो वा कुलदुहिता वा ये जम्बूद्वीपे सत्त्वास्तान् सर्वान् दशसु कुशलेषु कर्मपथेषु समादापयेत् प्रतिष्ठापयेत्, तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहु पुण्यं प्रसवेत्? शक्र आह–बहु भगवन्, बहु सुगत। भगवानाह–अतः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवेत्, यः 10 इमां प्रज्ञापारमितामन्तशः पुस्तकगतामपि कृत्वा अभिश्रद्दधदभिश्रद्दधते, अवकल्पयन्नवकल्पयते, अधिमुच्यमानोऽधिमुच्यते, प्रसन्नचित्तः प्रसन्नचित्ताय अध्याशयसंपन्नोऽध्याशयसंपन्नाय बोधाय चित्तमुत्पाद्य समुत्पादितबोधिचित्ताय बोधिसत्त्वाय अध्याशयेन दद्यात्, अन्तशो लिखनायापि वाचनायाप्यकिलासितया संपादयेत्–उद्युक्तोऽमुं ग्राहयेत् संदर्शयेत् समादापयेत् समुत्तेजयेत् संप्रहर्षयेत्, वाचा नेष्यति विनेष्यति, अर्थमस्या अस्मै संप्रकाशयिष्यति, एवं चास्य 15 R 105 चित्तं विशोधयिष्यति, निर्विचिकित्सं करिष्यति, एवं चैनं वक्ष्यति–एहि त्वं कुलपुत्र अस्मिन्नेव बोधिसत्त्वमार्गे शिक्षस्व। अत्र हि त्वं शिक्षमाणश्चरन् व्यायच्छमानः क्षिप्रमेवानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे। अभिसंबुध्य च अपरिमितं सत्त्वधातुमनुत्तरे उपधिसंक्षयेऽभि- W 289 विनेष्यसि यदुत भूतकोटिप्रभावनतायामिति। अयं कौशिक कुलपुत्रो वा कुलदुहिता वा परित्यागबुद्ध्या ततः पौर्वकात्कुलपुत्रात्कुलदुहितुर्वा सकाशाद्बहुतरं पुण्यं प्रसवेत्। तिष्ठन्तु 20 खलु पुनः कौशिक जम्बूद्वीपे सर्वसत्त्वाः, एतेन कौशिक पर्यायेण येऽपि ते कौशिक चातुर्महाद्वीपके लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा W 290 दशसु कुशलेषु कर्मपथेषु समादापयेत् प्रतिष्ठापयेत्। तिष्ठन्तु खलु पुनः कौशिक चातुर्महाद्वीपके लोकधातौ सर्वसत्त्वाः, एतेन पर्यायेण येऽपि ते कौशिक साहस्रे चूलिके लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा दशसु कुशलेषु 25 कर्मपथेषु समादापयेत्प्रतिष्ठापयेत्। तिष्ठन्तु खलु पुनः कौशिक साहस्रे चूलिके लोकधातौ सर्वसत्त्वाः, एतेन पर्यायेण येऽपि ते कौशिक द्विसाहस्रे मध्यमे लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा दशसु कुशलेषु कर्मपथेषु समादापयेत् प्रतिष्ठापयेत्। तिष्ठन्तु खलु पुनः कौशिक द्विसाहस्रे मध्यमे लोकधातौ सर्वसत्त्वाः, एतेन पर्यायेण येऽपि ते कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो 30 R 106 वा कुलदुहिता वा दशसु कुशलेषु कर्मपथेषु समादापयेत्प्रतिष्ठापयेत्। तिष्ठन्तु खलु पुनः कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ सर्वसत्त्वाः, एतेन कौशिक पर्यायेण यावन्तो गङ्गा-

नदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा दशसु कुशलेषु कर्मपथेषु समादापयेत्प्रतिष्ठापयेत् । तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहु पुण्यं प्रसवेत्? शक्र आह–बहु भगवन्, बहु सुगत ॥

W 291

5 भगवानाह–अतः खलु पुनः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवेत्, य इमां प्रज्ञापारमितामन्तशः पुस्तकगतामपि कृत्वा अभिश्रद्दधदभिश्रद्दधते, अवकल्पयन्नवकल्पयते, अधिमुञ्चन्नधिमुच्यते, प्रसन्नचित्तः प्रसन्नचित्ताय अध्याशयसंपन्नोऽध्याशयसंपन्नाय बोधाय चित्तमुत्पाद्य समुत्पादितबोधिचित्ताय बोधिसत्त्वाय अध्याशयेन दद्यात्, अन्तशः लिखनायापि वाचनायापि अकिलासितया संपादयेत्, उद्युक्तोऽमुं ग्राहयेत् संदर्शयेत् समादापयेत् 10 समुत्तेजयेत् संप्रहर्षयेत्, वाचा नेष्यति, विनेष्यति, अर्थमस्या अस्मै संप्रकाशयिष्यति, एवं चास्य चित्तं विशोधयिष्यति, निर्विचिकित्सं करिष्यति, एवं चैनं वक्ष्यति–एहि त्वं कुलपुत्र अस्मिन्नेव बोधिसत्त्वमार्गे शिक्षस्व। अत्र हि त्वं शिक्षमाणश्चरन् व्यायच्छमानः क्षिप्रमेवानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे । अभिसंबुध्य च अपरिमितं सत्त्वधातुमनुत्तरे उपधिसंक्षयेऽभिविनेष्यसि, यदुत भूतकोटिप्रभावनतायामिति । अयं कौशिक कुलपुत्रो वा कुलदुहिता वा 15 परित्यागबुद्ध्या ततः पौर्विकात्कुलपुत्रात्कुलदुहितुर्वा सकाशाद्बहुतरं पुण्यं प्रसवेत् ॥

R 107

W 292

पुनरपरं कौशिक यावन्तो जम्बूद्वीपे सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा चतुर्षु ध्यानेषु प्रतिष्ठापयेत् । तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहु पुण्यं प्रसवेत्? शक्र आह–बहु भगवन् बहु, सुगत ॥

भगवानाह–अतः खलु पुनः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं 20 प्रसवेत्, य इमां प्रज्ञापारमितामन्तशः पुस्तकगतामपि कृत्वा अभिश्रद्दधदभिश्रद्दधते अवकल्पयन्नवकल्पयते, अधिमुञ्चन्नधिमुच्यते, प्रसन्नचित्तः प्रसन्नचित्ताय अध्याशयसंपन्नोऽध्याशयसंपन्नाय बोधाय चित्तमुत्पाद्य समुत्पादितबोधिचित्ताय बोधिसत्त्वाय अध्याशयेन दद्यात् अन्तशो लिखनायापि वाचनायापि अकिलासितया संपादयेत्, उद्युक्तोऽमुं ग्राहयेत् संदर्शयेत् समादापयेत् समुत्तेजयेत् संप्रहर्षयेत्, वाचा नेष्यति, विनेष्यति, अर्थमस्या अस्मै संप्रकाशयि-25 ष्यति, एवं चास्य चित्तं विशोधयिष्यति, निर्विचिकित्सं करिष्यति, एवं चैनं वक्ष्यति–एहि त्वं कुलपुत्र अस्मिन्नेव बोधिसत्त्वमार्गे शिक्षस्व । अत्र हि त्वं शिक्षमाणश्चरन् व्यायच्छमानः क्षिप्रमेवानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे । अभिसंबुध्य च अपरिमितं सत्त्वधातुमनुत्तरे उपधिसंक्षयेऽभिविनेष्यसि, यदुत भूतकोटिप्रभावनतायामिति । तिष्ठन्तु खलु पुनः कौशिक जम्बुद्वीपे सर्वसत्त्वाः, एतेन पर्यायेण येऽपि ते कौशिक चातुर्महाद्वीपके लोकधातौ सत्त्वाः, 30 तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा चतुर्षु ध्यानेषु प्रतिष्ठापयेत् । तिष्ठन्तु खलु पुनः कौशिक चातुर्महाद्वीपके लोकधातौ सर्वसत्त्वाः, एतेन पर्यायेण येऽपि ते कौशिक साहस्रे चूलिके लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा

R 108

चतुर्षु ध्यानेषु प्रतिष्ठापयेत्। तिष्ठन्तु खलु पुनः कौशिक साहस्रे[१] चूलिके लोकधातौ सर्वसत्त्वाः, W 293
एतेन पर्यायेण येऽपि ते कौशिक द्विसाहस्रे मध्यमे लोकधातौ सत्त्वाः तानपि सर्वान्
कश्चिदेव कुलपुत्रो वा कुलदुहिता वा चतुर्षु ध्यानेषु प्रतिष्ठापयेत्। तिष्ठन्तु खलु पुनः कौशिक
द्विसाहस्रे मध्यमे लोकधातौ सर्वसत्त्वाः, एतेन पर्यायेण येऽपि ते कौशिक त्रिसाहस्रमहा-
साहस्रे लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा चतुर्षु 5
ध्यानेषु प्रतिष्ठापयेत्। तिष्ठन्तु खलु पुनः कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ सर्वसत्त्वाः,
एतेन कौशिक पर्यायेण यावन्तो गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु
सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा चतुर्षु ध्यानेषु प्रतिष्ठापयेत्।
तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहु पुण्यं
प्रसवेत्? शक्र आह—बहु भगवन् बहु सुगत ॥ 10

भगवानाह—अतः खलु पुनः स कौशिक कुलपुत्रो वा कुलदुहिता वा
बहुतरं पुण्यं प्रसवेत्, य इमां प्रज्ञापारमितामन्तशः पुस्तकगतामपि कृत्वा अभिश्रद्दधदभि-
श्रद्दधते, अवकल्पयन्नवकल्पयते, अधिमुञ्चन्नधिमुच्यते, प्रसन्नचित्तः प्रसन्नचित्ताय
अध्याशयसंपन्नोऽध्याशयसंपन्नाय बोधाय चित्तमुत्पाद्य समुत्पादितबोधिचित्ताय बोधिसत्त्वाय R 109
अध्याशयेन दद्यात्, अन्तशो लिखनायापि वाचनायापि अकिलासितया संपादयेत्, 15
उद्युक्तोऽमुं ग्राहयेत् संदर्शयेत् समादापयेत् समुत्तेजयेत् संप्रहर्षयेत्, वाचा नेष्यति,
विनेष्यति अनुनेष्यति, अर्थमस्या अस्मै संप्रकाशयिष्यति, एवं चास्य चित्तं विशोध-
यिष्यति, निर्विचिकित्सं करिष्यति, एवं चैनं वक्ष्यति—एहि त्वं कुलपुत्र अस्मिन्नेव बोधिसत्त्व-
मार्गे शिक्षस्व। अत्र हि त्वं शिक्षमाणश्चरन् व्यायच्छमानः क्षिप्रमेवानुत्तरां सम्यक्संबोधिमभि- W 294
संभोत्स्यसे। अभिसंबुध्य च अपरिमितं सत्त्वधातुमनुत्तरे उपधिसंक्षयेऽभिविनेष्यसि यदुत 20
भूतकोटिप्रभावनतायामिति। पुनरपरं कौशिक यावन्तो जम्बुद्वीपे सत्त्वाः, तान् सर्वान्
कश्चिदेव कुलपुत्रो वा कुलदुहिता वा चतुर्षु अप्रमाणेषु प्रतिष्ठापयेत्, एवं पेयालेन कर्तव्यम्।
यथा चतुर्ष्वप्रमाणेषु, एवं चतसृष्वारूप्यसमापत्तिषु, पञ्चस्वभिज्ञासु, यावत्समस्तासु ध्याना-
प्रमाणारूप्यसमापत्त्यभिज्ञासु प्रतिष्ठापयेत्। तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो वा
कुलदुहिता वा ततोनिदानं बहु पुण्यं प्रसवेत्? शक्र आह—बहु भगवन् बहु सुगत ॥ 25

भगवानाह—अतः खलु पुनः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं
प्रसवेत्, य इमां प्रज्ञापारमितामन्तशः पुस्तकगतामपि कृत्वा अभिश्रद्दधदभिश्रद्दधते अवकल्पय-
न्नवकल्पयते, अधिमुञ्चन्नधिमुच्यते, प्रसन्नचित्तः प्रसन्नचित्ताय अध्याशयसंपन्नोऽध्याशयसंपन्नाय
बोधाय चित्तमुत्पाद्य समुत्पादितबोधिचित्ताय बोधिसत्त्वाय अध्याशयेन दद्यात्, अन्तशो
लिखनायापि वाचनायापि अकिलासितया संपादयिष्यति, उद्युक्तोऽमुं ग्राहयिष्यति, संदर्शयिष्यति 30
समादापयिष्यति समुत्तेजयिष्यति संप्रहर्षयिष्यति, वाचा नेष्यति विनेष्यति अनुनेष्यति, अर्थमस्या R 110

१ W om. साहस्रे.

अस्मै संप्रकाशयिष्यति, एवं चास्य चित्तं विशोधयिष्यति, निर्विचिकित्सं करिष्यति, एवं चैनं वक्ष्यति - एहि त्वं कुलपुत्र अस्मिन्नेव बोधिसत्त्वमार्गे शिक्षस्व । अत्र हि त्वं शिक्षमाणश्चरन् W 295 व्यायच्छमानः क्षिप्रमेवानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे । अभिसंबुध्य च अपरिमितं सत्त्वधातुमनुत्तरे उपधिसंक्षयेऽभिविनेष्यसि यदुत भूतकोटिप्रभावनतायामिति । तिष्ठतु खलु 5 पुनः कौशिक जाम्बूद्वीपकान् सर्वसत्त्वान् ध्यानाप्रमाणारूप्यसमापत्त्यभिज्ञासु प्रतिष्ठाप्य पुण्याभिसंस्कारः, अनेन पर्यायेण येऽपि ते कौशिक चातुर्महाद्वीपके लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा ध्यानाप्रमाणारूप्यसमापत्त्यभिज्ञासु प्रतिष्ठापयेत् । तिष्ठतु खलु पुनः कौशिक चातुर्महाद्वीपके लोकधातौ सर्वसत्त्वान् ध्याना-प्रमाणारूप्यसमापत्त्यभिज्ञासु प्रतिष्ठाप्य पुण्याभिसंस्कारः, येऽपि ते कौशिक साहस्रे चूलिके 10 लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा ध्यानाप्रमाणारूप्य-समापत्त्यभिज्ञासु प्रतिष्ठापयेत् । तिष्ठतु खलु पुनः कौशिक साहस्रे चूलिके लोकधातौ सर्वसत्त्वान् ध्यानाप्रमाणारूप्यसमात्त्यभिज्ञासु प्रतिष्ठाप्य पुण्याभिसंस्कारः, येऽपि ते कौशिक द्विसाहस्रे मध्यमे लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा R 111 ध्यानाप्रमाणारूप्यसमापत्त्यभिज्ञासु प्रतिष्ठापयेत् । तिष्ठतु खलु पुनः कौशिक द्विसाहस्रे मध्यमे 15 लोकधातौ सर्वसत्त्वान् ध्यानाप्रमाणारूप्यसमापत्त्यभिज्ञासु प्रतिष्ठाप्य पुण्याभिसंस्कारः, येऽपि ते कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा W 296 कुलदुहिता वा ध्यानाप्रमाणारूप्यसमापत्त्यभिज्ञासु प्रतिष्ठापयेत् । तिष्ठतु खलु पुनः कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ सर्वसत्त्वान् ध्यानाप्रमाणारूप्यसमापत्त्यभिज्ञासु प्रतिष्ठाप्य पुण्याभिसंस्कारः, अनेन पर्यायेण येऽपि केचित्कौशिक गङ्गानदीवालुकोपमेषु त्रिसाहस्र-20 महासाहस्रेषु लोकधातुषु सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा ध्याना-प्रमाणारूप्यसमापत्त्यभिज्ञासु प्रतिष्ठापयेत् । तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहु पुण्यं प्रसवेत् ? शक्र आह–बहु भगवन् बहु सुगत ॥

भगवानाह–अतः खलु पुनः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवेत्, य इमां प्रज्ञापारमितामन्तशः पुस्तकगतामपि कृत्वा अभिश्रद्दधदभिश्रद्दधते, 25 अवकल्पयन्नवकल्पयते, अधिमुच्यन्नधिमुच्यते, प्रसन्नचित्तः प्रसन्नचित्ताय अध्याशयसंपन्नोऽध्या-शयसंपन्नाय बोधाय चित्तमुत्पाद्य समुत्पादितबोधिचित्ताय बोधिसत्त्वाय अध्याशयेन दद्यात्, अन्तशो लिखनायापि वाचनायापि अकिलासितया संपादयिष्यति, उद्युक्तोऽमुं ग्राहयिष्यति, संदर्शयिष्यति समादापयिष्यति समुत्तेजयिष्यति संप्रहर्षयिष्यति, वाचा नेष्यति विनेष्यति अनुनेष्यति, अर्थमस्या अस्मै संप्रकाशयिष्यति, एवं चास्य चित्तं विशोधयिष्यति, 30 निर्विचिकित्सं करिष्यति, एवं चैनं वक्ष्यति–एहि त्वं कुलपुत्र अस्मिन्नेव बोधिसत्त्वमार्गे W 297 R 112 शिक्षस्व । अत्र हि त्वं शिक्षमाणश्चरन् व्यायच्छमानः क्षिप्रमेवानुत्तरां सम्यक्संबोधिमभि-संभोत्स्यसे । अभिसंबुध्य च अपरिमितं सत्त्वधातुमनुत्तरे उपधिसंक्षयेऽभिविनेष्यसि, यदुत भूतकोटिप्रभावनतायामिति ॥

पुनरपरं कौशिक यः कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितां लिखित्वा स्वयं च वाचयेत्, परेभ्यश्च लिखित्वा पूर्ववद्दद्यात्, अयमतः कौशिक पूर्वकात्कुलपुत्रात्कुलदुहितुर्वा सकाशाद्बहुतरं पुण्यं प्रसवेत्। पुनरपरं कौशिक यः कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितामर्थकुशलो वाचयेत्, परेभ्यश्च लिखित्वा पूर्ववद्दद्यात्, सार्थां सव्यञ्जनामुपदिशेत् परिदीपयेत्, अयमतः कौशिक स कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं 5 प्रसवेत्॥

अथ खलु शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—इयमपि भगवन् प्रज्ञापारमिता उपदेष्टव्या? एवमुक्ते भगवान् शक्रं देवानामिन्द्रमेतदवोचत्—इयमपि कौशिक प्रज्ञापारमिता उपदेष्टव्या अबुध्यमानस्य कुलपुत्रस्य वा कुलदुहितुर्वा। तत्कस्य हेतोः? उत्पत्स्यते हि कौशिक अनागतेऽध्वनि प्रज्ञापारमिताप्रतिवर्णिका। तत्र अबुध्यमानः कुलपुत्रो वा कुलदुहिता वा 10 अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामो मा प्रणंक्षीत्तां प्रज्ञापारमिता प्रतिवर्णिकां श्रुत्वा॥ W 298

अथ खलु शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—कथं भगवन् अनागतेऽध्वनि प्रज्ञापारमिताप्रतिवर्णिका वेदितव्या—इयं सा प्रज्ञापारमिताप्रतिवर्णिकोपदिश्यत इति? एवमुक्ते भगवान् शक्रं देवानामिन्द्रमेतदवोचत्—भविष्यन्ति कौशिक अनागतेऽध्वनि एके भिक्षवः अभावितकाया अभावितशीला अभावितचित्ता अभावितप्रज्ञा एडमूकजातीया प्रज्ञापरिहीणाः। 15 ते प्रज्ञापारमितामुपदेक्ष्याम इति तस्याः प्रतिवर्णिकामुपदेक्ष्यन्ति। कथं च कौशिक प्रज्ञापारमिताप्रतिवर्णिकामुपदेक्ष्यन्ति? रूपविनाशो रूपानित्यतेत्युपदेक्ष्यन्ति। एवं वेदनासंज्ञासंस्काराः। विज्ञानविनाशो विज्ञानानित्यतेत्युपदेक्ष्यन्ति। एवं चोपदेक्ष्यन्ति—य एवं गवेषयिष्यति, स प्रज्ञापारमितायां चरिष्यतीति। इयं सा कौशिक प्रज्ञापारमिताप्रतिवर्णिका वेदितव्या। न खलु पुनः कौशिक रूपविनाशो रूपानित्यता द्रष्टव्या। एवं वेदनासंज्ञा- 20 संस्काराः। न खलु पुनः कौशिक विज्ञानविनाशो विज्ञानानित्यता द्रष्टव्या। सचेदेवं पश्यति, प्रज्ञापारमिताप्रतिवर्णिकायां चरति। तस्मात्तर्हि कौशिक कुलपुत्रेण वा कुलदुहित्रा वा प्रज्ञापारमिताया अर्थ उपदेष्टव्यः। प्रज्ञापारमिताया अर्थमुपदिशन् कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवेत्॥ R 113 W 299 W 300

पुनरपरं कौशिक यावन्तो जम्बूद्वीपे सत्त्वाः, तान् सर्वान् कश्चिदेव कुलपुत्रो वा 25 कुलदुहिता वा स्रोतआपत्तिफले प्रतिष्ठापयेत्। तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहु पुण्यं प्रसवेत्? शक्र आह—बहु भगवन्, बहु सुगत। भगवानाह—अतः खलु पुनः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवेत्, य इमां प्रज्ञापारमितामन्तशः पुस्तकगतामपि कृत्वा अभिश्रद्दधदभिश्रद्दधते, अवकल्पयन्नवकल्पयते, अधिमुच्यन्नधिमुच्यते, प्रसन्नचित्तः प्रसन्नचित्ताय, अध्याशयसंपन्नोऽध्याशयसंपन्नाय बोधाय 30 चित्तमुत्पाद्य समुत्पादितबोधिचित्ताय बोधिसत्त्वाय अध्याशयेन दद्यात्, अन्तशो लिखनायापि वाचनायापि अकिलासितया संपादयिष्यति, उद्युक्तोऽमुं ग्राहयिष्यति, संदर्शयिष्यति समादाप- R 114

यिष्यति समुत्तेजयिष्यति संप्रहर्षयिष्यति, वाचा नेष्यति विनेष्यति अनुनेष्यति, अर्थमस्या अस्मै संप्रकाशयिष्यति, एवं चास्य चित्तं विशोधयिष्यति, निर्विचिकित्सं करिष्यति, एवं चैनं वक्ष्यति-एहि त्वं कुलपुत्र अस्मिन्नेव बोधिसत्त्वमार्गे शिक्षस्व। अत्र हि त्वं शिक्षमाणश्चरन् व्यायच्छमानः क्षिप्रमेवानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे, अभिसंबुध्य च अपरिमितं सत्त्वधातुमनुत्तरे

W 301 5 उपधिसंक्षयेऽभिविनेष्यसि यदुत भूतकोटिप्रभावनतायामिति। एवं च वाचं भाषेत एतेषामेव त्वं कुलपुत्र धर्माणां लाभी भव यदुत प्रज्ञापारमिताप्रतिसंयुक्तानामिति। अयमेव कौशिक ततः पौर्विकात्कुलपुत्रतः कुलदुहितृतो वा सकाशाद्बहुतरं पुण्यं प्रसवेत्। तत्कस्य हेतोः? अतो हि कौशिक स्रोतआपत्तिफलं प्रभाव्यते॥

तिष्ठतु खलु पुनः कौशिक जाम्बूद्वीपकान् सर्वसत्त्वान् स्रोतआपत्तिफले प्रतिष्ठाप्य 10 पुण्याभिसंस्कारः, यावन्तः कौशिक चातुर्महाद्वीपके लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा स्रोतआपत्तिफले प्रतिष्ठापयेत्॥

तिष्ठतु खलु पुनः कौशिक चातुर्महाद्वीपके लोकधातौ सर्वसत्त्वान् स्रोतआपत्तिफले R 115 प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक साहस्रे चूलिके लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा स्रोतआपत्तिफले प्रतिष्ठापयेत्॥

15 तिष्ठतु खलु पुनः कौशिक साहस्रे चूलिके लोकधातौ सर्वसत्त्वान् स्रोतआपत्तिफले प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक द्विसाहस्रे मध्यमे लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा स्रोतआपत्तिफले प्रतिष्ठापयेत्॥

तिष्ठतु खलु पुनः कौशिक द्विसाहस्रे मध्यमे लोकधातौ सर्वसत्त्वान् स्रोतआपत्तिफले प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ सत्त्वाः, 20 तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा स्रोतआपत्तिफले प्रतिष्ठापयेत्॥

तिष्ठतु खलु पुनः कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ सर्वसत्त्वान् स्रोतआपत्तिफले प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा W 302 स्रोतआपत्तिफले प्रतिष्ठापयेत्। तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो वा कुलदुहिता 25 वा ततोनिदानं बहु पुण्यं प्रसवेत्? शक्र आह—बहु भगवन्, बहु सुगत॥

भगवानाह—अतः खलु पुनः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवेत्, य इमां प्रज्ञापारमितामन्तशः पुस्तकगतामपि कृत्वा अभिश्रद्दधदभिश्रद्दधते, अवकल्पयन्नवकल्पयते, अधिमुञ्चन्नधिमुञ्चते, प्रसन्नचित्तः प्रसन्नचित्ताय, अध्याशयसंपन्नोऽध्याशयसंपन्नाय बोधाय चित्तमुत्पाद्य समुत्पादितबोधिचित्ताय बोधिसत्त्वाय अध्याशयेन दद्यात्, अन्तशो R 116 30 लिखनायापि वाचनायापि अकिलासितया संपादयिष्यति, उद्युक्तोऽमुं ग्राहयिष्यति, संदर्शयिष्यति समादापयिष्यति समुत्तेजयिष्यति संप्रहर्षयिष्यति, वाचा नेष्यति विनेष्यति अनुनेष्यति, अर्थमस्या अस्मै संप्रकाशयिष्यति, एवं चास्य चित्तं विशोधयिष्यति, निर्विचिकित्सं करिष्यति, एवं

चैनं वक्ष्यति—एहि त्वं कुलपुत्र अस्मिन्नेव बोधिसत्त्वमार्गे शिक्षस्व । अत्र हि त्वं शिक्षमाणश्चरन् व्यायच्छमानः क्षिप्रमेवानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे । अभिसंबुध्य च अपरिमितं सत्त्वधातुमनुत्तरे उपधिसंक्षयेऽभिविनेष्यसि यदुत भूतकोटिप्रभावनतायामिति । एवं च वाचं भाषेत—एतेषामपि त्वं कुलपुत्र धर्माणां लाभी भव यदुत प्रज्ञापारमिताप्रति- संयुक्तानामिति । अयमेव कौशिक ततः पौर्वकात्कुलपुत्रतः कुलदुहितृतो वा सकाशाद्बहुतरं 5 पुण्यं प्रसवेत् । तत्कस्य हेतोः ? अतो हि कौशिक स्रोतआपत्तिफलं प्रभाव्यते ॥ W 303

पुनरपरं कौशिक यो हि कश्चिदेव कुलपुत्रो वा कुलदुहिता वा यावन्तो जम्बूद्वीपे सत्त्वाः, तान् सर्वान् सकृदागामिफले प्रतिष्ठापयेत् । तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहु पुण्यं प्रसवेत् ? शक्र आह—बहु भगवन्, बहु सुगत । भगवानाह—अतः खलु पुनः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं 10 पुण्यं प्रसवेत्, य इमां प्रज्ञापारमितामन्तशः पुस्तकगतामपि कृत्वा अभिश्रद्दधदभिश्रद्दधते, अवकल्पयन्नवकल्पयते, अधिमुञ्चन्नधिमुञ्चते, प्रसन्नचित्तः प्रसन्नचित्ताय, अध्याशयसंपन्नो- ऽध्याशयसंपन्नाय बोधाय चित्तमुत्पाद्य समुत्पादितबोधिचित्ताय बोधिसत्त्वायाध्याशयेन दद्यात्, R 117 अन्तशो लिखनायापि वाचनायापि अक्लिमथितया संपादयिष्यति, उद्युक्तोऽमुं ग्राहयिष्यति, संदर्शयिष्यति समादापयिष्यति समुत्तेजयिष्यति संप्रहर्षयिष्यति, वाचा नेष्यति विनेष्यति अनु- 15 नेष्यति, अर्थमस्या अस्मै संप्रकाशयिष्यति, एवं चास्य चित्तं विशोधयिष्यति, निर्विचिकित्सं W 304 करिष्यति, एवं चैनं वक्ष्यति—एहि त्वं कुलपुत्र अस्मिन्नेव बोधिसत्त्वमार्गे शिक्षस्व । अत्र हि त्वं शिक्षमाणश्चरन् व्यायच्छमानः क्षिप्रमेवानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे । अभिसंबुध्य च अपरिमितं सत्त्वधातुमनुत्तरे उपधिसंक्षयेऽभिविनेष्यसि यदुत भूतकोटिप्रभावनतायामिति । एवं च वाचं भाषेत—एतेषामेव त्वं कुलपुत्र धर्माणां लाभी भव यदुत प्रज्ञापारमिताप्रति- 20 संयुक्तानामिति । अयमेव कौशिक ततः पौर्वकात्कुलपुत्रतः कुलदुहितृतो वा सकाशाद्बहुतरं पुण्यं प्रसवेत् । तत्कस्य हेतोः ? अतो हि कौशिक सकृदागामिफलं प्रभाव्यते । तिष्ठतु खलु पुनः कौशिक जाम्बूद्वीपकान् सर्वसत्त्वान् सकृदागामिफले प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक चातुर्महाद्वीपके लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा सकृदागामिफले प्रतिष्ठापयेत् । तिष्ठतु खलु पुनः कौशिक चातुर्महाद्वीपके 25 लोकधातौ सर्वसत्त्वान् सकृदागामिफले प्रतिष्ठाप्य पुण्यभिसंस्कारः, यावन्तः कौशिक साहस्रे चूलिके लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा सकृदागामिफले प्रतिष्ठापयेत् । तिष्ठतु खलु पुनः कौशिक साहस्रे चूलिके लोकधातौ सर्व- सत्त्वान् सकृदागामिफले प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक द्विसाहस्रे मध्यमे लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा सकृदागामिफले 30 प्रतिष्ठापयेत् । तिष्ठतु खलु पुनः कौशिक द्विसाहस्रे मध्यमे लोकधातौ सर्वसत्त्वान् सकृ- दागामिफले प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ

R 118 सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा सकृदागामिफले प्रतिष्ठापयेत्। तिष्ठतु खलु पुनः कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ सर्वसत्त्वान् सकृदागामिफले
W 305 प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा सकृदागामिफले
5 प्रतिष्ठापयेत्। तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहु पुण्यं प्रसवेत्? शक्र आह—बहु भगवन्, बहु सुगत ॥

भगवानाह—अतः खलु पुनः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवेत्, य इमां प्रज्ञापारमितामन्तशः पुस्तकगतामपि कृत्वा अभिश्रद्दधदभिश्रद्दधते, अवकल्पयन्नवकल्पयते, अधिमुच्यन्नधिमुच्यते, प्रसन्नचित्तः प्रसन्नचित्ताय, अध्याशयसंपन्नोऽ-
10 ध्याशयसंपन्नाय बोधाय चित्तमुत्पाद्य समुत्पादितबोधिचित्ताय बोधिसत्त्वाय अध्याशयेन दद्यात्, अन्तशो लिखनायापि वाचनायापि अकिलासितया संपादयिष्यति, उद्युक्तोऽमुं ग्राहयिष्यति, संदर्शयिष्यति समादापयिष्यति समुत्तेजयिष्यति संप्रहर्षयिष्यति, वाचा नेष्यति
R 119 विनेष्यति अनुनेष्यति, अर्थमस्या अस्मै संप्रकाशयिष्यति, एवं चास्य चित्तं विशोधयिष्यति, निर्विचिकित्सं करिष्यति, एवं चैनं वक्ष्यति—एहि त्वं कुलपुत्र अस्मिन्नेव बोधिसत्त्वमार्गे
15 शिक्षस्व। अत्र हि त्वं शिक्षमाणश्चरन् व्यायच्छमानः क्षिप्रमेवानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे। अभिसंबुध्य च अपरिमितं सत्त्वधातुमनुत्तरे उपधिसंक्षयेऽभिविनेष्यसि यदुत भूतकोटिप्रभावनतायामिति। एवं च वाचं भाषेत—एतेषामेव त्वं कुलपुत्र धर्माणां लाभी भव यदुत प्रज्ञापारमिताप्रतिसंयुक्तानामिति। अयमेव कौशिक ततः पौर्विकात्कुलपुत्रतः कुल-
W 306 दुहितृतो वा सकाशाद्बहुतरं पुण्यं प्रसवेत्। तत्कस्य हेतोः? अतो हि कौशिक सकृदागामि-
20 फलं प्रभाव्यते ॥

पुनरपरं कौशिक यो हि कश्चिदेव कुलपुत्रो वा कुलदुहिता वा यावन्तो जम्बूद्वीपे सत्त्वाः, तान् सर्वाननागामिफले प्रतिष्ठापयेत्। तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहु पुण्यं प्रसवेत्? शक्र आह—बहु भगवन् बहु सुगत ॥

भगवानाह—अतः खलु पुनः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं
25 पुण्यं प्रसवेत्, य इमां प्रज्ञापारमितामन्तशः पुस्तकगतामपि कृत्वा अभिश्रद्दधदभिश्रद्दधते, अवकल्पयन्नवकल्पयते, अधिमुच्यन्नधिमुच्यते, प्रसन्नचित्तः प्रसन्नचित्ताय, अध्याशयसंपन्नोऽध्याशयसंपन्नाय बोधाय चित्तमुत्पाद्य समुत्पादितबोधिचित्ताय बोधिसत्त्वाय अध्याशयेन दद्यात्, अन्तशो लिखनायापि वाचनायापि अकिलासितया संपादयिष्यति, उद्युक्तोऽमुं ग्राहयिष्यति, संदर्शयिष्यति समादापयिष्यति समुत्तेजयिष्यति संप्रहर्षयिष्यति, वाचा
R 120 30 नेष्यति विनेष्यति अनुनेष्यति, अर्थमस्या अस्मै संप्रकाशयिष्यति, एवं चास्य चित्तं विशोधयिष्यति, निर्विचिकित्सं करिष्यति, एवं चैनं वक्ष्यति—एहि त्वं कुलपुत्र अस्मिन्नेव बोधिसत्त्वमार्गे शिक्षस्व। अत्र हि त्वं शिक्षमाणश्चरन् व्यायच्छमानः क्षिप्रमेवानुत्तरां

सम्यक्संबोधिमभिसंभोत्स्यसे। अभिसंबुध्य च अपरिमितं सत्त्वधातुमनुत्तरे उपधिसंक्षयेऽभिविनेष्यसि यदुत भूतकोटिप्रभावनतायामिति। एवं च वाचं भाषेत—एतेषामेव त्वं कुलपुत्र W 307 धर्माणां लाभी भव, यदुत प्रज्ञापारमिताप्रतिसंयुक्तानामिति। अयमेव ततो बहुतरं पुण्यं प्रसवेत्। तत्कस्य हेतोः? अतो हि कौशिक अनागामिफलं प्रभाव्यते। तिष्ठतु खलु पुनः कौशिक जम्बूद्वीपकान् सर्वसत्त्वाननागामिफले प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः 5 कौशिक चातुर्महाद्वीपके लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा अनागामिफले प्रतिष्ठापयेत्। तिष्ठतु खलु पुनः कौशिक चातुर्महाद्वीपके लोकधातौ सर्वसत्त्वाननागामिफले प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक साहस्रे चूलिके लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा अनागामिफले प्रतिष्ठापयेत्। तिष्ठतु खलु पुनः कौशिक साहस्रे चूलिके लोकधातौ सर्वसत्त्वाननागामिफले 10 प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक द्विसाहस्रे मध्यमे लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा अनागामिफले प्रतिष्ठापयेत्। तिष्ठतु खलु पुनः कौशिक द्विसाहस्रे मध्यमे लोकधातौ सर्वसत्त्वाननागामिफले प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा अनागामिफले प्रतिष्ठापयेत्। तिष्ठतु खलु पुनः कौशिक 15 R 121 त्रिसाहस्रमहासाहस्रे लोकधातौ सर्वसत्त्वाननागामिफले प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा अनागामिफले प्रतिष्ठापयेत्। तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहु पुण्यं प्रसवेत्? शक्र आह—बहु भगवन्, बहु सुगत॥ 20

भगवानाह—अतः खलु पुनः स कौशिक कुलपुत्रो वा कुलदुहिता वा ततोनिदानं W 308 बहुतरं पुण्यं प्रसवेत्, य इमां प्रज्ञापारमितामन्तशः पुस्तकगतामपि कृत्वा अभिश्रद्दधदभिश्रद्दधते, अवकल्पयन्नवकल्पयते, अधिमुञ्चन्नधिमुञ्चते, प्रसन्नचित्तः प्रसन्नचित्ताय, अध्याशयसंपन्नोऽध्याशयसंपन्नाय बोधाय चित्तमुत्पाद्य समुत्पादितबोधिचित्ताय बोधिसत्त्वाय अध्याशयेन दद्यात्, अन्तशो लिखनायापि वाचनायापि अकिलासितया संपादयिष्यति, उद्युक्तोऽमुं 25 ग्राहयिष्यति, संदर्शयिष्यति समादापयिष्यति समुत्तेजयिष्यति संप्रहर्षयिष्यति, वाचा नेष्यति विनेष्यति अनुनेष्यति, अर्थमस्या अस्मै संप्रकाशयिष्यति, एवं चास्य चित्तं विशोधयिष्यति, निर्विचिकित्सं करिष्यति, एवं चैनं वक्ष्यति—एहि त्वं कुलपुत्र अस्मिन्नेव बोधिसत्त्वमार्गे शिक्षस्व। अत्र हि त्वं शिक्षमाणश्चरन् व्यायच्छमानः क्षिप्रमेवानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे। अभिसंबुध्य च अपरिमितं सत्त्वधातुमनुत्तरे उपधिसंक्षयेऽभिविनेष्यसि यदुत 30 भूतकोटिप्रभावनतायामिति। एवं च वाचं भाषेत—एतेषामेव त्वं कुलपुत्र धर्माणां लाभी R 122 भव, यदुत प्रज्ञापारमिताप्रतिसंयुक्तानामिति। अयमेव ततो बहुतरं पुण्यं प्रसवेत्। तत्कस्य हेतोः? अतो हि कौशिक अनागामिफलं प्रभाव्यते॥

W 309 पुनरपरं कौशिक यो हि कश्चिदेव कुलपुत्रो वा कुलदुहिता वा यावन्तो जम्बूद्वीपे सत्त्वाः, तानपि सर्वानर्हत्त्वे प्रतिष्ठापयेत्। तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहु पुण्यं प्रसवेत्? शक्र आह–बहु भगवन्, बहु सुगत। भगवानाह–अतः खलु पुनः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं 5 प्रसवेत्, य इमां प्रज्ञापारमितामन्तशः पुस्तकगतामपि कृत्वा अभिश्रद्दधदभिश्रद्दधते, अवकल्पयन्नवकल्पयते, अधिमुञ्चन्नधिमुञ्चते, प्रसन्नचित्तः प्रसन्नचित्ताय, अध्याशयसंपन्नोऽध्याशयसंपन्नाय बोधाय चित्तमुत्पाद्य समुत्पादितबोधिचित्ताय बोधिसत्त्वाय अध्याशयेन दद्यात्, अन्तशो लिखनायापि वाचनायापि अकिलासितया संपादयिष्यति, उद्युक्तोऽमुं ग्राहयिष्यति, संदर्शयिष्यति समादापयिष्यति समुत्तेजयिष्यति संप्रहर्षयिष्यति, वाचा नेष्यति 10 विनेष्यति अनुनेष्यति, अर्थमस्या अस्मै संप्रकाशयिष्यति, एवं चास्य चित्तं विशोधयिष्यति, निर्विचिकित्सं करिष्यति, एवं चैनं वक्ष्यति–एहि त्वं कुलपुत्र अस्मिन्नेव बोधिसत्त्वमार्गे शिक्षस्व। अत्र हि त्वं शिक्षमाणश्चरन् व्यायच्छमानः क्षिप्रमेवानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे। अभिसंबुध्य च अपरिमितं सत्त्वधातुमनुत्तरे उपधिसंक्षयेऽभिविनेष्यसि यदुत भूतकोटिप्रभावनतायामिति। एवं च वाचं भाषेत–एतेषामेव त्वं कुलपुत्र धर्माणां लाभी भव

R 123 15 यदुत प्रज्ञापारमिताप्रतिसंयुक्तानामिति। अयमेव ततो बहुतरं पुण्यं प्रसवेत्। तत्कस्य हेतोः? अतो हि कौशिक अर्हत्त्वं प्रभाव्यते। एवं चास्य उत्साहं वर्धयिष्यति–यथा यथा हि त्वं कुलपुत्र प्रज्ञापारमितायां शिक्षिष्यसे, तथा तथा त्वमनुपूर्वेण बुद्धधर्माणां लाभी भविष्यसि, आसन्नश्च भविष्यस्यनुत्तरायाः सम्यक्संबोधेः। अत्र हि त्वं शिक्षायां शिक्षमाणश्चरन् व्यायच्छ-

W 310 मानः स्रोतआपत्तिफलं प्रभावयिष्यसि, सकृदागामिफलं प्रभावयिष्यसि, अनागामिफलं 20 प्रभावयिष्यसि, अर्हत्त्वं प्रभावयिष्यसि, प्रत्येकबुद्धत्वं प्रभावयिष्यसि, सम्यक्संबुद्धत्वं प्रभावयिष्यसीति। तिष्ठतु खलु पुनः कौशिक जाम्बूद्वीपकान् सर्वसत्त्वानर्हत्वे प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक चातुर्महाद्वीपके लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा अर्हत्त्वे प्रतिष्ठापयेत्। तिष्ठतु खलु पुनः कौशिक चातुर्महाद्वीपके लोकधातौ सर्वसत्त्वानर्हत्त्वे प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक साहस्रे 25 चूलिके लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा अर्हत्त्वे प्रतिष्ठापयेत्। तिष्ठतु खलु पुनः कौशिक साहस्रे चूलिके लोकधातौ सर्वसत्त्वानर्हत्त्वे प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक द्विसाहस्रे मध्यमे लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा अर्हत्वे प्रतिष्ठापयेत्। तिष्ठतु खलु पुनः कौशिक द्विसाहस्रे मध्यमे लोकधातौ सर्वसत्त्वानर्हत्त्वे प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः 30 कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा

R 124 कुलदुहिता वा अर्हत्त्वे प्रतिष्ठापयेत्। तिष्ठतु खलु पुनः कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ सर्वसत्त्वानर्हत्त्वे प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक गङ्गानदीवालु-

कोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा अर्हत्त्वे प्रतिष्ठापयेत् । तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहु पुण्यं प्रसवेत् ? शक्र आह—बहु भगवन्, बहु सुगत[1] । संख्या अपि भगवंस्तस्य पुण्यस्कन्धस्य न सुकरा कर्तुम् । गणनापि उपमापि औपम्यमपि उपनिसापि उपनिषदपि भगवंस्तस्य पुण्यस्कन्धस्य न सुकरा कर्तुम् ॥ W 311 5

भगवानाह—अतः खलु पुनः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवेत्, य इमां प्रज्ञापारमितामन्तशः पुस्तकगतामपि कृत्वा अभिश्रद्दधदभिश्रद्दधते, अवकल्पयन्नवकल्पयते, अधिमुञ्चन्नधिमुञ्चते, प्रसन्नचित्तः प्रसन्नचित्ताय, अध्याशयसंपन्नोऽध्याशयसंपन्नाय बोधाय चित्तमुत्पाद्य समुत्पादितबोधिचित्ताय बोधिसत्त्वाय अध्याशयेन दद्यात्, अन्तशो लिखनायापि वाचनायापि अकिलासितया संपादयिष्यति, 10 उद्युक्तोऽमुं ग्राहयिष्यति, समादापयिष्यति समुत्तेजयिष्यति संप्रहर्षयिष्यति, वाचा नेष्यति विनेष्यति अनुनेष्यति, अर्थमस्या अस्मै संप्रकाशयिष्यति, एवं चास्य चित्तं विशोधयिष्यति, निर्विचिकित्सं करिष्यति, एवं चैनं वक्ष्यति—एहि त्वं कुलपुत्र अस्मिन्नेव बोधिसत्त्वमार्गे शिक्षस्व । अत्र हि त्वं शिक्षमाणश्चरन् व्यायच्छमानः क्षिप्रमेवानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे । अभिसंबुध्य च अपरिमितं सत्त्वधातुमनुत्तरे उपधिसंक्षये- 15 ऽभिविनेष्यसि यदुत भूतकोटिप्रभावनतायामिति । एवं च वाचं भाषेत—एतेषामेव त्वं R 125 कुलपुत्र धर्माणां लाभी भव, यदुत प्रज्ञापारमिताप्रतिसंयुक्तानामिति । अयमेव ततो बहुतरं पुण्यं प्रसवेत् । तत्कस्य हेतोः ? अतो हि कौशिक अर्हत्त्वं प्रभाव्यते । एवं च अस्योत्साहं वर्धयिष्यति—यथा यथा हि त्वं कुलपुत्र प्रज्ञापारमितायां शिक्षिष्यसे, तथा तथा त्वमनुपूर्वेण बुद्धधर्माणां लाभी भविष्यसि, आसन्नश्च भविष्यस्यनुत्तरायाः सम्यक्संबोधेः । अत्र हि त्वं 20 W 312 शिक्षायां शिक्षमाणश्चरन् व्यायच्छमानः स्रोतआपत्तिफलं प्रभावयिष्यसि, सकृदागामिफलं प्रभावयिष्यसि, अनागामिफलं प्रभावयिष्यसि, अर्हत्त्वं प्रभावयिष्यसि, प्रत्येकबुद्धत्वं प्रभावयिष्यसि, सम्यक्संबुद्धत्वं प्रभावयिष्यसि । इति ॥

पुनरपरं कौशिक यावन्तो जम्बूद्वीपे सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा प्रत्येकबुद्धत्वे प्रतिष्ठापयेत् । तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो 25 वा कुलदुहिता वा ततोनिदानं बहु पुण्यं प्रसवेत् ? शक्र आह—बहु भगवन्, बहु सुगत । भगवानाह—अतः खलु पुनः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवेत् य इमां प्रज्ञापारमितामन्तशः पुस्तकगतामपि कृत्वा अभिश्रद्दधदभिश्रद्दधते, अवकल्पयन्नवकल्पयते, अधिमुञ्चन्नधिमुञ्चते, प्रसन्नचित्तः प्रसन्नचित्ताय, अध्याशयसंपन्नोऽध्याशयसंपन्नाय बोधाय चित्तमुत्पाद्य समुत्पादितबोधिचित्ताय बोधिसत्त्वाय अध्याशयेन दद्यात्, अन्तशो 30 लिखनायापि वाचनायापि अकिलासितया संपादयिष्यति, उद्युक्तोऽमुं ग्राहयिष्यति, संदर्शयि-

१ R W read भगवानाह after सुगत.

R 126 ष्यति समादापयिष्यति समुत्तेजयिष्यति संप्रहर्षयिष्यति, वाचा नेष्यति विनेष्यति अनुनेष्यति, अर्थमस्या अस्मै संप्रकाशयिष्यति, एवं चास्य चित्तं विशोधयिष्यति, निर्विचिकित्सं करिष्यति, एवं चैनं वक्ष्यति–एहि त्वं कुलपुत्र अस्मिन्नेव बोधिसत्त्वमार्गे शिक्षस्व । अत्र हि त्वं शिक्षमाणश्चरन् व्यायच्छमानः क्षिप्रमेवानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे । अभिसं-
W 313 5 बुध्य च अपरिमितं सत्त्वधातुमनुत्तरे उपधिसंक्षयेऽभिविनेष्यसि यदुत भूतकोटिप्रभावनतायामिति । एवं च वाचं भाषेत–एतेषामेव त्वं कुलपुत्र धर्माणां लाभी भव यदुत प्रज्ञापारमिताप्रतिसंयुक्तानामिति । अयमेव ततो बहुतरं पुण्यं प्रसवेत् । तत्कस्य हेतोः ? अतो हि कौशिक प्रत्येकबुद्धत्वं प्रभाव्यते । एवं चास्योत्साहं वर्धयिष्यति-यथा यथा हि त्वं कुलपुत्र प्रज्ञापारमितायां शिक्षिष्यसे, तथा तथा त्वमनुपूर्वेण बुद्धधर्माणां लाभी भविष्यसि, आसन्नश्च
10 भविष्यस्यनुत्तरायाः सम्यक्संबोधेः । अत्र हि त्वं शिक्षायां शिक्षमाणश्चरन् व्यायच्छमानः क्षिप्रमेव स्रोतआपत्तिफलं प्रभावयिष्यसि, सकृदागामिफलं प्रभावयिष्यसि, अनागामिफलं प्रभावयिष्यसि, अर्हत्त्वं प्रभावयिष्यसि, प्रत्येकबुद्धत्वं प्रभावयिष्यति, सम्यक्संबुद्धत्वं प्रभावयिष्यसीति । तिष्ठतु खलु पुनः कौशिक जम्बूद्वीपकान् सर्वसत्त्वान् प्रत्येकबुद्धत्वे प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक चातुर्महाद्वीपके लोकधातौ सत्त्वाः, तानपि सर्वान्
15 कश्चिदेव कुलपुत्रो वा कुलदुहिता वा प्रत्येकबुद्धत्वे प्रतिष्ठापयेत् । तिष्ठतु खलु पुनः कौशिक चातुर्महाद्वीपके लोकधातौ सर्वसत्त्वान् प्रत्येकबुद्धत्वे प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक साहस्रे चूलिके लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा प्रत्येकबुद्धत्वे प्रतिष्ठापयेत् । तिष्ठतु खलु पुनः कौशिक साहस्रे चूलिके लोकधातौ सर्वसत्त्वान् प्रत्येकबुद्धत्वे प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक द्विसाहस्रे
R 127 20 मध्यमे लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा प्रत्येकबुद्धत्वे प्रतिष्ठापयेत् । तिष्ठतु खलु पुनः कौशिक द्विसाहस्रे मध्यमे लोकधातौ सर्वसत्त्वान् प्रत्येकबुद्धत्वे प्रतिष्ठाप्य पुण्याभिसंस्कारः, येऽपि केचित्कौशिक त्रिसाहस्रमहासाहस्रे
W 314 लोकधातौ सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा प्रत्येकबुद्धत्वे प्रतिष्ठापयेत् । तिष्ठतु खलु पुनः कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ सर्वसत्त्वान्
25 प्रत्येकबुद्धत्वे प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः कौशिक गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सत्त्वाः, तानपि सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा प्रत्येकबुद्धत्वे प्रतिष्ठापयेत् । तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहु पुण्यं प्रसवेत् ? शक्र आह–बहु भगवन्, बहु सुगत ॥

भगवानाह–अतः खलु पुनः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं
30 पुण्यं प्रसवेत्, य इमां प्रज्ञापारमितामन्तशः पुस्तकगतामपि कृत्वा अभिश्रद्दधदभिश्रद्दधते, अवकल्पयन्नवकल्पयते, अधिमुच्यन्नधिमुच्यते, प्रसन्नचित्तः प्रसन्नचित्ताय, अध्याशयसंपन्नोऽध्याशयसंपन्नाय बोधाय चित्तमुत्पाद्य समुत्पादितबोधिचित्ताय बोधिसत्त्वायाध्याशयेन दद्यात्,

अन्तशो लिखनायापि वाचनायापि अक्लिासितया संपादयिष्यति, उद्युक्तोऽमुं ग्राहयिष्यति, संदर्शयिष्यति समादापयिष्यति समुत्तेजयिष्यति संप्रहर्षयिष्यति, वाचा नेष्यति विनेष्यति अनुनेष्यति, अर्थमस्या अस्मै संप्रकाशयिष्यति, एवं चास्य चित्तं विशोधयिष्यति, निर्विचिकित्सं करिष्यति, एवं चैनं वक्ष्यति—एहि त्वं कुलपुत्र अस्मिन्नेव बोधिसत्त्वमार्गे शिक्षस्व-अत्र हि त्वं शिक्षमाणश्चरन् व्यायच्छमानः क्षिप्रमेवानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे। अभिसंबुध्य च अपरिमितं सत्त्वधातुमनुत्तरे उपधिसंक्षयेऽभिविनेष्यसि यदुत भूतकोटि-प्रभावनतायामिति। एवं च वाचं भाषेत—एतेषामेव त्वं कुलपुत्र धर्माणां लाभी भव यदुत प्रज्ञापारमिताप्रतिसंयुक्तानामिति। अयमेव ततो बहुतरं पुण्यं प्रसवेत्। तत्कस्य हेतोः? अतो हि कौशिक प्रत्येकबुद्धत्वं प्रभाव्यते। एवं चास्य उत्साहं वर्धयिष्यसि—यथा यथा हि त्वं कुलपुत्र प्रज्ञापारमितायां शिक्षिष्यसे, तथा तथा त्वमनुपूर्वेण बुद्धधर्माणां लाभी भविष्यसि, आसन्नश्च भविष्यस्यनुत्तरायाः सम्यक्संबोधेः। अत्र हि त्वं शिक्षायां शिक्षमाणश्चरन् व्यायच्छमानः स्रोतआपत्तिफलं प्रभावयिष्यसि, सकृदागामिफलं प्रभावयिष्यसि, अनागामिफलं प्रभावयिष्यसि, अर्हत्त्वं प्रभावयिष्यसि, सम्यक्संबुद्धत्वं प्रभावयिष्यसीति॥

पुनरपरं कौशिक यावन्तो जम्बूद्वीपे सत्त्वाः, तेषां सर्वेषां कश्चिदेव कुलपुत्रो वा कुलदुहिता वा अनुत्तरायां सम्यक्संबोधौ चित्तं समुत्पादयेत्, यश्चान्यः कश्चित्कौशिक कुलपुत्रो वा कुलदुहिता वा तेषां सर्वेषामनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य तेभ्य इमां प्रज्ञापारमितां लिखित्वा दद्यात्। यो वा कौशिक कुलपुत्रो वा कुलदुहिता वा अविनिवर्तनीयाय बोधिसत्त्वाय महासत्त्वाय एनां प्रज्ञापारमितां लिखित्वा उपनामयेत्, अत्रैव प्रज्ञापारमितायां शिक्षिष्यते, योगमापत्स्यते। अत्रैव प्रज्ञापारमितां भावयन् वृद्धिं विरूढिं विपुलतां गतः परिपूरयिष्यति बुद्धधर्मानिति। अयं तस्मात्पौर्विकात्कुलपुत्रतः कुलदुहितृतो वा सकाशाद्बहुतरं पुण्यं प्रसवेत्। तत्कस्य हेतोः? नियतमेषोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्य सत्त्वानां दुःखस्यान्तं करिष्यतीति। तिष्ठतु खलु पुनः कौशिक जाम्बूद्वीपकानां सर्वसत्त्वानामनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य पुण्याभिसंस्कारः, यावन्तः कौशिक चातुर्महाद्वीपके लोकधातौ सत्त्वाः, तेषामपि सर्वेषां कश्चिदेव कुलपुत्रो वा कुलदुहिता वा अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयेत्। तिष्ठतु खलु पुनः कौशिक चातुर्महाद्वीपके लोकधातौ सर्वसत्त्वानामनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य पुण्याभिसंस्कारः, यावन्तः कौशिक साहस्रे चूलिके लोकधातौ सत्त्वाः, तेषामपि सर्वेषां कश्चिदेव कुलपुत्रो वा कुलदुहिता वा अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयेत्। तिष्ठतु खलु पुनः कौशिक साहस्रे चूलिके लोकधातौ सर्वसत्त्वानामनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य पुण्याभिसंस्कारः, यावन्तः कौशिक द्विसाहस्रे मध्यमे लोकधातौ सत्त्वाः, तेषामपि सर्वेषां कश्चिदेव कुलपुत्रो वा कुलदुहिता वा अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयेत्। तिष्ठतु खलु पुनः कौशिक द्विसाहस्रे मध्यमे लोकधातौ सर्वसत्त्वानामनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य पुण्याभिसंस्कारः, यावन्तः कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ सत्त्वाः, तेषामपि सर्वेषां

कश्चिदेव कुलपुत्रो वा कुलदुहिता वा अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयेत् । तिष्ठतु
R 130 खलु पुनः कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ सर्वसत्त्वानामनुत्तरायां सम्यक्संबोधौ
चित्तमुत्पाद्य पुण्याभिसंस्कारः, यावन्तः कौशिक गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहा-
साहस्रेषु लोकधातुषु सत्त्वाः, तेषामपि सर्वेषां कश्चिदेव कुलपुत्रो वा कुलदुहिता वा
W 318 5 अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयेत् । यश्चान्यः कश्चित्कौशिक कुलपुत्रो वा कुल-
दुहिता वा तेषां सर्वेषामनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य तेभ्य इमां प्रज्ञापारमितां
लिखित्वा दद्यात् । यो वा कौशिक कुलपुत्रो वा कुलदुहिता वा अविनिवर्तनीयाय
बोधिसत्त्वाय महासत्त्वाय एनां प्रज्ञापारमितां लिखित्वा दद्यात्, उपनामयेत्, अत्रैव
प्रज्ञापारमितायां शिक्षिष्यते, योगमापत्स्यते । एवमस्येयं प्रज्ञापारमिता भूयस्या मात्रया
10 भावनां वृद्धिं विरूढिं विपुलतां परिपूरिं गमिष्यतीति । अयं कौशिक ततः पौर्वकात्कुलपुत्रतः
कुलदुहितृतो वा सकाशाद्बहुतरं पुण्यं प्रसवेत् । तत्कस्य हेतोः? नियतमेषोऽनुत्तरां
सम्यक्संबोधिमभिसंबुध्य सत्त्वानां दुःखस्यान्तं करिष्यतीति ॥

पुनरपरं कौशिक यावन्तो जम्बूद्वीपे सत्त्वाः, ते सर्वे अविनिवर्तनीया भवेयुरनुत्तरायाः
सम्यक्संबोधेः । तेभ्यः कश्चिदेव कुलपुत्रो वा कुलदुहिता वा अनुत्तरां सम्यक्संबोधिमभि-
15 संप्रस्थितेभ्य इमां प्रज्ञापारमितां पुस्तकलिखितां कृत्वा दद्यादुपनामयेत् । यश्च तेभ्यः
कश्चिदेव कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितां पुस्तकलिखितां कृत्वा दद्यादुपनाम-
येत्, सार्थां सव्यञ्जनामुपदिशेत् । तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो वा कुलदुहिता
R 131 वा ततोनिदानं बहु पुण्यं प्रसवेत? शक्र आह-बहु भगवन्, बहु सुगत । संख्यापि
W 319 भगवंस्तस्य पुण्यस्कन्धस्य न सुकरा कर्तुम् । गणनापि उपमापि औपम्यमपि उपनिसापि
20 उपनिषदपि भगवंस्तस्य पुण्यस्कन्धस्य न सुकरा कर्तुम् ॥

भगवानाह-अतः खलु पुनः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं
पुण्यं प्रसवेत्, यस्तेषामविनिवर्तनीयानां बोधिसत्त्वानां महासत्त्वानां क्षिप्रतरमनुत्तरां
सम्यक्संबोधिमभिसंबोद्धुकामेभ्य इमां प्रज्ञापारमितां पुस्तकलिखितां कृत्वा दद्यात्, उपनाम-
येत्, सार्थां सव्यञ्जनामुपदिशेत्, इह च तान् प्रज्ञापारमितायामववदेदनुशिष्यात् ।
25 तिष्ठतु खलु पुनः कौशिक जाम्बूद्वीपकेभ्यः सर्वसत्त्वेभ्योऽविनिवर्तनीयेभ्य इमां प्रज्ञापार-
मितामुपनाम्य पुण्याभिसंस्कारः, यावन्तः कौशिक चातुर्महाद्वीपके लोकधातौ सत्त्वाः, तेऽपि
सर्वेऽविनिवर्तनीया भवेयुरनुत्तरायाः सम्यक्संबोधेः । तेभ्योऽपि कश्चिदेव कुलपुत्रो वा
कुलदुहिता वा इमां प्रज्ञापारमितां पुस्तकलिखितां कृत्वा दद्यादुपनामयेत्, सार्थां सव्यञ्जना-
मुपदिशेत् । तिष्ठतु खलु पुनः कौशिक चातुर्महाद्वीपके लोकधातौ सर्वसत्त्वेभ्योऽविनिवर्त-
30 नीयेभ्य इमां प्रज्ञापारमितामुपनाम्य पुण्याभिसंस्कारः, यावन्तः कौशिक साहस्रे चूलिके
लोकधातौ सत्त्वाः, तेऽपि सर्वेऽविनिवर्तनीया भवेयुरनुत्तरायाः सम्यक्संबोधेः । तेभ्योऽपि
कश्चिदेव कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितां पुस्तकलिखितां कृत्वा

दद्यादुपनामयेत्, सार्थां सव्यञ्जनामुपदिशेत् । तिष्ठतु खलु पुनः कौशिक साहस्रे चूलिके लोकधातौ सर्वसत्त्वेभ्योऽविनिवर्तनीयेभ्य इमां प्रज्ञापारमितामुपनाम्य पुण्याभिसंस्कारः, यावन्तः कौशिक द्विसाहस्रे मध्यमे लोकधातौ सत्त्वाः, तेऽपि सर्वेऽविनिवर्तनीया भवेयुरनुत्तरायाः सम्यक्संबोधेः । तेभ्योऽपि कश्चिदेव कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितां पुस्तकलिखितां कृत्वा दद्यादुपनामयेत्, सार्थां सव्यञ्जनामुपदिशेत् । तिष्ठतु खलु पुनः कौशिक द्विसाहस्रे मध्यमे लोकधातौ सर्वसत्त्वेभ्योऽविनिवर्तनीयेभ्य इमां प्रज्ञापारमितामुपनाम्य पुण्याभिसंस्कारः, यावन्तः कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ सत्त्वाः, तेऽपि सर्वेऽविनिवर्तनीया भवेयुरनुत्तरायाः सम्यक्संबोधेः । तेभ्योऽपि कश्चिदेव कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितां पुस्तकलिखितां कृत्वा दद्यादुपनामयेत्, सार्थां सव्यञ्जनामुपदिशेत् । तिष्ठतु खलु पुनः कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ सर्वसत्त्वेभ्योऽविनिवर्तनीयेभ्य इमां प्रज्ञापारमितामुपनाम्य पुण्याभिसंस्कारः, यावन्तः कौशिक गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सत्त्वाः, तेऽपि सर्वेऽविनिवर्तनीया भवेयुरनुत्तरायाः सम्यक्संबोधेः । तेभ्योऽपि कश्चिदेव कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापामितां पुस्तकलिखितां कृत्वा दद्यादुपनामयेत्, सार्थां सव्यञ्जनामुपदिशेत् । तत्किं मन्यसे कौशिक अपि नु स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहु पुण्यं प्रसवेत्? शक्र आह— बहु भगवन्, बहु सुगत । संख्यापि भगवंस्तस्य पुण्यस्कन्धस्य न सुकरा कर्तुम् । गणनापि उपमापि औपम्यमपि उपनिसापि भगवंस्तस्य पुण्यस्कन्धस्य न सुकरा कर्तुम् ॥

भगवानाह- अतः खलु पुनः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवेत्, यस्तेषामविनिवर्तनीयानां बोधिसत्त्वानां महासत्त्वानां क्षिप्रतरमनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेभ्य इमां प्रज्ञापारमितां पुस्तकलिखितां कृत्वा दद्यादुपनामयेत्, सार्थां सव्यञ्जनामुपदिशेत्, इह च तान् प्रज्ञापारमितायामववदेदनुशिष्यात् । अथापरः कौशिक बोधिसत्त्वो महासत्त्व उत्पद्येत, स एवं वदेत्—अहमेतेषां क्षिप्रतरमनुत्तरां[1] सम्यक्संबोधिमभिसंभोत्स्य इति । यस्तं कौशिक कुलपुत्रो वा कुलदुहिता वा क्षिप्राभिज्ञतरं बोधिसत्त्वं महासत्त्वं प्रज्ञापारमितायामववदेदनुशिष्यात्, अयं ततः पौर्वकात्कुलपुत्रात्कुलदुहितुर्वा सकाशाद्बहुतरं पुण्यं प्रसवेत् ॥

अथ खलु शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—यथा यथा भगवन् बोधिसत्त्वो महासत्त्व आसन्नीभवत्यनुत्तरायाः सम्यक्संबोधेः, तथा तथा प्रज्ञापारमितायामववदितव्योऽनुशासितव्यः, तथा तथा प्रज्ञापारमितायामवोद्यमानोऽनुशिष्यमाणस्तथताया आसन्नीभवति । तथताया आसन्नीभवन् येषां परिभुङ्क्ते चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारान्, तेषां तान् कारान् कृतान् महाफलान् करोति महानुशंसान् । अतः स बहुतरं पुण्यं प्रसवति ।

१ W om. क्षिप्रतरमनुत्तरां.

W 322 तत्कस्य हेतोः ? एवं ह्येतद्भगवन् भवति–यद्बोधिसत्त्वो महासत्त्व आसन्नीभवत्यनुत्तरायाः सम्यक्संबोधेः ॥

अथ खल्वायुष्मान् सुभूतिः शक्रं देवानामिन्द्रमेतदवोचत्–साधु साधु कौशिक R 134 यस्त्वं बोधिसत्त्वयानिकानां पुद्गलानामुत्साहं ददासि अनुगृह्णीषे अनुपरिवारयसि। एवं 5 च कौशिक त्वया करणीयम्–य आर्यश्रावकः सर्वसत्त्वानामनुग्रहं कर्तुकामः, स बोधिसत्त्वानां महासत्त्वानामनुत्तरायां सम्यक्संबोधावुत्साहं वर्धयति अनुगृह्णीतेऽनुपरिवारयति, W 323 एवमेतत्करणीयम्। तत्कस्य हेतोः ? अतःप्रसूता हि बोधिसत्त्वानां महासत्त्वानामनुत्तरा सम्यक्संबोधिः। यदि हि बोधिसत्त्वा महासत्त्वा एतद्बोधिचित्तं नोत्पादयेरन्, न चैते बोधिसत्त्वा महासत्त्वा अनुत्तरायां सम्यक्संबोधौ शिक्षेरन्, न षट्पारमितासु शिक्षेरन्, 10 अशिक्षमाणा अनुत्तरां सम्यक्संबोधिं नाभिसंबुध्येरन्। यस्मात्तर्हि बोधिसत्त्वा महासत्त्वा बोधिसत्त्वशिक्षायामासु षट्पारमितासु शिक्षन्ते, तस्मादेतद्बोधिचित्तमुत्पादयन्ते, तस्मादनुत्तरां सम्यक्संबोधिमभिसंबुध्यन्त इति ॥

W 324 आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां पुण्यपर्यायपरिवर्तो नाम पञ्चमः ॥



# ६ अनुमोदनापरिणामनापरिवर्तः षष्ठः ।

अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्व आयुष्मन्तं सुभूतिं स्थविरमामन्त्रयते स्म—यच्च खलु पुनः आर्य सुभूते बोधिसत्त्वस्य महासत्त्वस्य अनुमोदनापरिणामनासहगतं पुण्यक्रियावस्तु, यच्च सर्वसत्त्वानां दानमयं पुण्यक्रियावस्तु, शीलमयं पुण्यक्रियावस्तु, भावनामयं पुण्यक्रियावस्तु, इदमेव ततो बोधिसत्त्वस्य महासत्त्वस्य अनुमोदनापरिणामनासहगतं पुण्यक्रियावस्तु 5 अग्रमाख्यायते, श्रेष्ठमाख्यायते, ज्येष्ठमाख्यायते, वरमाख्यायते, प्रवरमाख्यायते, प्रणीतमाख्यायते, उत्तममाख्यायते, अनुत्तममाख्यायते, निरुत्तममाख्यायते, असममाख्यायते, असमसममाख्यायते ॥

R 135 W 325

एवमुक्ते आयुष्मान् सुभूतिः स्थविरं मैत्रेयं बोधिसत्त्वं महासत्त्वमेतदवोचत्—यत्पुनरयं मैत्रेय बोधिसत्त्वो महासत्त्वो दशदिशि लोके सर्वतः सर्वत्र गतया अप्रमेयाप्रमेयेषु 10 असंख्येयासंख्येषु अपरिमाणापरिमाणेषु अचिन्त्याचिन्त्येषु अनन्तापर्यन्तेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु अतीतेऽध्वनि एकैकस्यां दिशि एकैकस्मिंस्त्रिसाहस्रमहासाहस्रे लोकधातौ अप्रमेयाप्रमेयाणायामसंख्येयासंख्येयानामपरिमाणापरिमाणानामचिन्त्याचिन्त्यानामनन्तापर्यन्तानामनुपधिशेषे निर्वाणधातौ परिनिर्वृतानां तथागतानामर्हतां सम्यक्संबुद्धानां छिन्नवर्त्मनां छिन्नवर्त्मनीनां छिन्नप्रपञ्चभवनेत्रीकाणां पर्यात्तबाष्पाणां मर्दितकण्टकानां स्वपहृत- 15 भाराणामनुप्राप्तस्वकार्थानां परिक्षीणभवसंयोजनानां सम्यगाज्ञासुविमुक्तचित्तानां सर्वचेतोवशिपरमपारमिप्राप्तानां यावत्प्रथमचित्तोत्पादमुपादाय यावच्च अनुत्तरां सम्यक्संबोधिमभिसंबुद्धानां यावच्च अनुपधिशेषे निर्वाणधातौ परिनिर्वृतानां यावच्च सद्धर्मो नान्तर्हितः, एतस्मिन्नन्तरे यस्तेषां बुद्धानां भगवतां शीलस्कन्धः समाधिस्कन्धः प्रज्ञास्कन्धो विमुक्तिस्कन्धो विमुक्तिज्ञानदर्शनस्कन्धश्च, यानि च षट्पारमिताप्रतिसंयुक्तानि कुशलमूलानि, बुद्धगुणसंपत्प्रति- 20 संयुक्तानि कुशलमूलानि, बलवैशारद्यपारमिताप्रतिसंयुक्तानि कुशलमूलानि, एवमभिज्ञापारमिताप्रतिसंयुक्तानि परिज्ञापारमिताप्रतिसंयुक्तानि प्रणिधानपारमिताप्रतिसंयुक्तानि सर्वज्ञज्ञानसंपत्प्रतिसंयुक्तानि कुशलमूलानि, या च हितैषिता, या च महामैत्री, या च महाकरुणा, ये च अप्रमेयासंख्येया बुद्धगुणाः, या च अनुत्तरा सम्यक्संबोधिः, यच्च अनुत्तरं सम्यक्संबोधिसुखम्, या च सर्वधर्मैश्वर्यपारमिता, यश्च अपरिमेयोऽनभिभूतः 25 सर्वाभिभूतः परमऋद्ध्यभिसंस्कारः, यच्च अनावरणमसङ्गमप्रतिहतमसममसमसममनुपममपरिमेयं तथागतयथाभूतज्ञानबलम्, यद्बुद्धज्ञानबलम्, बलानां यद्बुद्धज्ञानदर्शनम्, या च दशबलपारमिता, यश्च चतुर्वैशारद्यपरमसुखपरिपूर्णोऽधिगमः, यश्च सर्वधर्माणां परमार्थाभिनिर्हारेण धर्माधिगमः, यच्च धर्मचक्रप्रवर्तनम्, धर्मोल्काप्रग्रहणम्[1], धर्मभेरीसंप्रताडनम्, धर्मशङ्खप्रपूरणम्, धर्मशङ्खप्रव्याहरणम्[2], धर्मखड्गप्रहरणम्, धर्मवृष्टिप्रवर्षणम्, धर्मयज्ञयजनम्, 30 धर्मदानेन सर्वसत्त्वसतर्पणम्, धर्मदानसंप्रवारणम्, ये च तत्र धर्मदेशनासु बुद्धधर्मेषु प्रत्येक-

W 326 · R 136 W 327 · R 137 W 328

१ R °प्रहरणं. २ R om. धर्मशङ्खप्रव्याहरणम्.

बुद्धधर्मेषु श्रावकधर्मेषु वा विनीताः शिक्षिता अधिमुक्ता नियताः संबोधिपरायणाः, तेषां च सर्वेषां यानि कुशलमूलानि, ये च तैर्बुद्धैर्भगवद्भिर्बोधिसत्त्वा महासत्त्वा व्याकृता अनुत्तरायां सम्यक्संबोधौ, तेषां च सर्वेषां यानि कुशलमूलानि षट्पारमिताप्रतिसंयुक्तानि, ये च प्रत्येकबुद्धयानिकाः पुद्गला व्याकृताः प्रत्येकबोधौ, तेषां च सर्वेषां यानि कुशलमूलानि, यच्च 5 श्रावकयानिकानां पुद्गलानां दानमयं पुण्यक्रियावस्तु, शीलमयं पुण्यक्रियावस्तु, भावनामयं पुण्यक्रियावस्तु, यानि च शैक्षाण्यनास्रवाणि कुशलमूलानि, यानि च अशैक्षाण्यनास्रवाणि कुशलमूलानि, यैश्च पृथग्जनैस्तत्र धर्मकुशलमूलान्यवरोपितानि, तेषां च बुद्धानां भगवतां चतसृणां पर्षदां भिक्षूणां भिक्षुणीनां उपासकानामुपासिकानाम्, यच्च दानमयं पुण्यक्रियावस्तु, R 138 शीलमयं पुण्यक्रियावस्तु, भावनामयं पुण्यक्रियावस्तु, यैश्च तत्र तेषां बुद्धानां भगवतां धर्मं 10 देशयतां देवैर्नागैर्यक्षैर्गन्धर्वैरसुरैर्गरुडैः किन्नरैर्महोरगैर्मनुष्यामनुष्यैर्वा यैश्च तिर्यग्योनिगतैरपि सत्त्वैः कुशलमूलान्यवरोपितानि, यैश्च तेषां बुद्धानां भगवतां परिनिर्वापयतामपि कुशलमूलान्यवरोपितानि, यैश्च तत्र तेषां बुद्धानां भगवतां परिनिर्वृतानामपि कुशलमूलान्यवरोपितानि, बुद्धं च भगवन्तमागम्य धर्मं चागम्य संघं चागम्य मनोभावनीयांश्च पुद्गलानागम्य तेषां W 329 च सर्वेषां यानि कुशलमूलानि, तत्सर्वं कुशलमूलं निरवशेषानिरवशेषमनवशेषमैकध्य- 15 मभिसंक्षिप्य पिण्डयित्वा तुलयित्वा अग्रया अनुमोदनया अनुमोदेत, श्रेष्ठया ज्येष्ठया वरया प्रवरया प्रणीतया उत्तमया अनुत्तमया निरुत्तरया असमया असमसमया अनुमोदनया अनुमोदेत। एवमनुमोद्य अनुमोदनासहगतं पुण्यक्रियावस्तु अनुत्तरायां सम्यक्संबोधौ परिणामयामीति वाचं भाषेत—अनुत्तरायाः सम्यक्संबोधेराहारकं भवत्विति। तत्र W 332 बोधिसत्त्वयानिकः पुद्गलो यैर्वस्तुभिरनुमोदेत, यैरारम्बणैर्यैराकारैस्तच्चित्तमुत्पादयेत्, अपि 20 नु तानि वस्तूनि तानि वा आरम्बणानि ते वा आकारास्तथोपलभ्येरन् यथा निमित्ती- W 333 करोति? एवमुक्ते मैत्रेयो बोधिसत्त्वो महासत्त्व आयुष्मन्तं सुभूतिं स्थविरमेतदवोचत्— न तानि भदन्त सुभूते वस्तूनि तानि वा आरम्बणानि ते वा आकारास्तथोपलभ्यन्ते यथा निमित्तीकरोति। एवमुक्ते आयुष्मान् सुभूतिः स्थविरो मैत्रेयं बोधिसत्त्वं महासत्त्वमेतदवो- R 139 चत्—यदि सोऽसंविद्यमानं वस्तु असंविद्यमानमारम्बणमारम्बणीकुर्यात्, निमित्तीकुर्यात्, W 334 25 तत्कथमस्य संज्ञाविपर्यासश्चित्तविपर्यासो दृष्टिविपर्यासो न भवेत्? तत्कस्य हेतोः? तथा हि रागोऽप्यसंविद्यमानं वस्तु अनित्ये नित्यमिति दुःखे सुखमिति अनात्मन्यात्मेति अशुभे शुभमिति विकल्प्य संकल्प्य उत्पद्यते, संज्ञाविपर्यासश्चित्तविपर्यासो दृष्टिविपर्यासः। अथापि यथा वस्तु यथा आरम्बणं यथा आकारस्तथा बोधिस्तथा चित्तम्, एवं सर्वधर्माः सर्वधातवः। यदि च यथा वस्तु यथा आरम्बणं यथा आकारस्तथा बोधिस्तथा चित्तम्, तत्कतमैर्वस्तुभिः 30 कतमैरारम्बणैः कतमैराकारैः कतमं चित्तमनुत्तरायां सम्यक्संबोधौ परिणामयति? कतमद्वा W 335 अनुमोदनासहगतं पुण्यक्रियावस्तु क्व अनुत्तरायां सम्यक्संबोधौ परिणामयति?

१ W निरवशेषं for निरवशेषानिरवशेषम्. २ R om. अनवशेषम्. ३ Ap परिणामयति for अनुमोदेत.

अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्व आयुष्मन्तं सुभूतिं स्थविरमेतदवोचत्—नेदमार्य सुभूते नवयानसंप्रस्थितस्य बोधिसत्त्वस्य महासत्त्वस्य पुरतो भाषितव्यं नोपदेष्टव्यम्। तत्कस्य हेतोः? यदपि हि स्यात्तस्य श्रद्धामात्रकं प्रेममात्रकं प्रसादमात्रकं गौरवमात्रकम्, तदपि तस्य सर्वमन्तर्धीयेत। अविनिवर्तनीयस्येदमार्य सुभूते बोधिसत्त्वस्य महासत्त्वस्य पुरतो भाषितव्यमुपदेष्टव्यम्। यो वा कल्याणमित्रोपस्तब्धो[1] सत्त्वो महासत्त्वो भवेत्, सोऽत्र नावलेष्यते न संलेष्यते न विपत्स्यति न विषादमापत्स्यते, न विपृष्ठीकरिष्यति मानसम्, न भग्नपृष्ठीकरिष्यति, नोत्रसिष्यति न संत्रसिष्यति न संत्रासमापत्स्यते। एवं च बोधिसत्त्वेन महासत्त्वेन अनुमोदनासहगतं पुण्यक्रियावस्तु सर्वज्ञतायां परिणामयितव्यम्॥

अथ खल्वायुष्मान् सुभूतिः स्थविरो मैत्रेयं बोधिसत्त्वं महासत्त्वमेतदवोचत्—येन मैत्रेय चित्तेनानुमोद्य यत्परिणामयति, तच्चित्तं क्षीणं निरुद्धं विगतं विपरिणतम्। तत्कतमत्तच्चित्तं येन परिणामयति अनुत्तरायै सम्यक्संबोधये? कतमद्वा तच्चित्तमनुमोदनासहगतं पुण्यक्रियावस्तु यत्परिणामयत्यनुत्तरायै सम्यक्संबोधये? कथं वा शक्यं चित्तेन चित्तं परिणामयितुं यदा द्वयोश्चित्तयोः समवधानं नास्ति, न च तच्चित्तस्वभावता शक्या परिणामयितुम्?

अथ खलु शक्रो देवानामिन्द्र आयुष्मन्तं सुभूतिं स्थविरमेतदवोचत्—मा खल्वार्य सुभूते नवयानसंप्रस्थिता बोधिसत्त्वा महासत्त्वा इमं निर्देशं श्रुत्वा उत्रसिषुः संत्रसिषुः संत्रासमापत्स्यन्ते? कथं चार्य सुभूते बोधिसत्त्वेन महासत्त्वेन तदनुमोदनासहगतं पुण्यक्रियावस्तु अनुत्तरायै सम्यक्संबोधये परिणामयितव्यम्? कथं च अनुमोदनासहगतं पुण्यक्रियावस्तु परिगृह्णता अनुमोदनासहगतं चित्तं परिणामयता तदनुमोदनासहगतं चित्तं सुपरिगृहीतं सुपरिणामितं भवति?

अथ खल्वायुष्मान् सुभूतिः स्थविरो मैत्रेयं बोधिसत्त्वं महासत्त्वमारभ्य मैत्रेयं बोधिसत्त्वं महासत्त्वमधिष्ठानं कृत्वा मैत्रेयं बोधिसत्त्वं महासत्त्वमामन्त्रयते स्म—इह मैत्रेय बोधिसत्त्वो महासत्त्वस्तेषामतीतानां बुद्धानां भगवतां छिन्नवर्त्मनां छिन्नवर्त्मनीनां छिन्नप्रपञ्चभवनेत्रीकाणां पर्यात्तबाष्पाणां मर्दितकण्टकानामपहृतभाराणामनुप्राप्तस्वकार्थानां परिक्षीणभवसंयोजनानां सम्यगाज्ञासुविमुक्तचित्तानां सर्वचेतोवशिपरमपारमिप्राप्तानां दशसु दिक्षु अप्रमेयासंख्येयेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु एकैकस्यां दिशि एकैकस्मिंश्च त्रिसाहस्रमहासाहस्रे लोकधातौ अप्रमेयासंख्येयानां बुद्धानां भगवतां परिनिर्वृतानां यावत्प्रथमचित्तोत्पादमुपादाय यावच्च अनुत्तरां सम्यक्संबोधिमभिसंबुद्धानां यावच्च अनुपधिशेषे निर्वाणधातौ परिनिर्वृतानां यावच्च सद्धर्मो नान्तर्हितः, एतस्मिन्नन्तरे यानि तेषां बुद्धानां भगवतां कुशलमूलानि पारमिताप्रतिसंयुक्तानि, यश्च तेषां बुद्धानां भगवतां पुण्याभिसंस्कारः कुशलमूलाभिसंस्कारः, यश्च तेषां बुद्धानां भगवतां शीलस्कन्धः समाधिस्कन्धः प्रज्ञास्कन्धो विमुक्तिस्कन्धो विमुक्ति-

१ R °मित्रो यस्तथा for °मित्रोपस्तब्धो.

ज्ञानदर्शनस्कन्धः, या च हितैषिता, या च महामैत्री, या च महाकरुणा, ये च अप्रमेयासंख्येया बुद्धगुणाः, यश्च तैर्बुद्धैर्भगवद्भिर्धर्मो देशितः, ये च तस्मिन् धर्मे शिक्षिता अधिमुक्ताः प्रतिष्ठिताः, तेषां च यानि कुशलमूलानि, ये च तैर्बुद्धैर्भगवद्भिर्बोधिसत्त्वा महासत्त्वा व्याकृता अनुत्तरायां सम्यक्संबोधौ, तेषां च यानि कुशलमूलानि षट्पारमिताप्रतिसंयुक्तानि, 5 ये च प्रत्येकबुद्धयानिकाः पुद्गला व्याकृताः प्रत्येकबोधौ, तेषां च यानि कुशलमूलानि, यानि च श्रावकयानिकानां पुद्गलानां दानमयानि कुशलमूलानि शीलमयानि कुशलमूलानि R 142 भावनामयानि कुशलमूलानि, यानि च शैक्षाण्यनास्रवाणि कुशलमूलानि, यानि च अशैक्षाण्यनास्रवाणि कुशलमूलानि, यैश्च तस्मिन् धर्मे पृथग्जनैः कुशलमूलान्यवरोपितानि, यैश्च देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्यैर्वा स धर्मः श्रुतः, श्रुत्वा च कुशल-10 मूलान्यवरोपितानि, यैश्च तिर्यग्योनिगतैरपि सत्त्वैः स धर्मः श्रुतः, श्रुत्वा च कुशलमूलान्यवरोपितानि, यैश्च तेषु बुद्धेषु भगवत्सु परिनिर्वापयत्सु परिनिर्वृतेषु च कुशलमूलान्यवरोपितानि, तेषां च सर्वेषां यानि कुशलमूलानि, तानि सर्वाण्येकतोऽभिसंक्षिप्य पिण्डयित्वा तुलयित्वा निरवशेष्य निरवशेषमनुमोदेत। अनुमोद्य अनुमोदनासहगतं पुण्यक्रियावस्तु W 341 अनुत्तरायां सम्यक्संबोधौ परिणामयते, परिणामयतो बोधिसत्त्वस्य महासत्त्वस्य कथं न 15 संज्ञाविपर्यासो न चित्तविपर्यासो न दृष्टिविपर्यासो भवति?

एवमुक्ते मैत्रेयो बोधिसत्त्वो महासत्त्व आयुष्मन्तं सुभूतिं स्थविरमेतदवोचत्—सचेदार्य सुभूते बोधिसत्त्वो महासत्त्वो येन चित्तेन यत्परिणामयति, तस्मिंश्चित्ते न चित्तसंज्ञी[1] भवति। एवं बोधिसत्त्वेन महासत्त्वेन अनुमोदनासहगतं पुण्यक्रियावस्तु अनुत्तरायै सम्यक्संबोधये परिणामितं भवति, यथा तच्चित्तं न संजानीते इदं तच्चित्तमिति। एवं 20 बोधिसत्त्वस्य महासत्त्वस्य न संज्ञाविपर्यासो न चित्तविपर्यासो न दृष्टिविपर्यासो भवति। W 342 अथ येन चित्तेन यत्परिणामयति, तच्चित्तं संजानीते इदं तच्चित्तमिति चित्तसंज्ञी भवति। एवं बोधिसत्त्वस्य महासत्त्वस्य संज्ञाविपर्यासश्चित्तविपर्यासो दृष्टिविपर्यासो भवति। R 143 सचेत्पुनर्बोधिसत्त्वो महासत्त्वो यच्चित्तं परिणामयति, तच्चित्तमेवं संजानीते, एवं समन्वाहरति। तच्चित्तं समन्वाह्रियमाणमेव क्षीणं क्षीणमित्येवं संजानीते, निरुद्धं[2] विगतं 25 विपरिणतमित्येवं संजानीते। यच्च क्षीणं न तच्छक्यं परिणामयितुम्। येनापि चित्तेन परिणाम्यते, तस्यापि चित्तस्य सैव धर्मता। यैरपि धर्मैः परिणाम्यते, तेषामपि धर्माणां सैव धर्मता। येष्वपि धर्मेषु परिणाम्यते, तेषामपि धर्माणां सैव धर्मतेति। सचेदेवं परिणामयति, सम्यक्परिणामयति, न मिथ्या परिणामयति। एवं च बोधिसत्त्वेन महासत्त्वेन परिणामयितव्यम्॥

W 343 30 पुनरपरम् आर्य सुभूते बोधिसत्त्वेन महासत्त्वेन यथा अतीतानामेवमनागतानां बुद्धानां भगवतां छिन्नवर्त्मनां छिन्नवर्त्मनीनां छिन्नप्रपञ्चभवनेत्रीकाणामप्रमेयाणामसंख्येयानां

---

१ R चित्तसंज्ञी. २ W विरुद्धं.

यावत्प्रथमचित्तोत्पादमुपादाय यावच्च अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते, यावच्च अनुपधिशेषे निर्वाणधातौ परिनिर्वास्यन्ति, यावच्च सद्धर्मो नान्तर्धास्यति, एतस्मिन्नन्तरे यानि तेषां बुद्धानां भगवतां पारमिताप्रतिसंयुक्तानि कुशलमूलानि, यश्च तेषां बुद्धानां भगवतां शीलस्कन्धः समाधिस्कन्धः प्रज्ञास्कन्धो विमुक्तिस्कन्धो विमुक्तिज्ञानदर्शनस्कन्धः, या च हितैषिता, या च महामैत्री, या च महाकरुणा, ये च अप्रमेयासंख्येया बुद्धगुणाः, 5 ये च ते बुद्धा भगवन्तो धर्मं देशयिष्यन्ति, ये च तस्मिन् धर्मे शिक्षिष्यन्तेऽधिमोक्ष-यिष्यन्ति प्रतिष्ठास्यन्ति, तेषां च यानि कुशलमूलानि, यांश्च ते बुद्धा भगवन्तो बोधिसत्त्वान् महासत्त्वान् व्याकरिष्यन्ति अनुत्तरायां सम्यक्संबोधौ, तेषां च यानि षट्पारमिताप्रति-संयुक्तानि कुशलमूलानि, यांश्च ते बुद्धा भगवन्तः प्रत्येकबुद्धयानिकान् पुद्गलान् व्याकरिष्यन्ति प्रत्येकबोधौ, तेषां च यानि कुशलमूलानि, यानि च श्रावकयानिकानां 10 R 144 पुद्गलानां दानमयानि कुशलमूलानि शीलमयानि कुशलमूलानि भावनामयानि कुशलमूलानि, यानि च शैक्षाण्यनास्रवाणि कुशलमूलानि, यानि च अशैक्षाण्यनास्रवाणि कुशलमूलानि, ये च तस्मिन् धर्मे पृथग्जनाः कुशलमूलान्यवरोपयिष्यन्ति, ये च देवनागयक्षगन्धर्वासुर-गरुडकिन्नरमहोरगमनुष्यामनुष्याः कुशलमूलान्यवरोपयिष्यन्ति, ये च तिर्यग्योनिगता अपि सत्त्वास्तं धर्मं श्रोष्यन्ति, श्रुत्वा च कुशलमूलान्यवरोपयिष्यन्ति, ये च सत्त्वास्तेषु बुद्धेषु 15 भगवत्सु परिनिर्वायत्सु परिनिर्वृतेषु च कुशलमूलान्यवरोपयिष्यन्ति, तेषां च सर्वेषां यानि W 344 कुशलमूलानि, तानि सर्वाण्येकतोऽभिसंक्षिप्य पिण्डयित्वा तुलयित्वा निरवशेष्य निरवशेषमनुमोदितव्यानि । अनुमोद्य अनुमोदनासहगतं पुण्यक्रियावस्तु अनुत्तरायै सम्यक्संबोधये परिणामयतो बोधिसत्त्वस्य महासत्त्वस्य कथं न संज्ञाविपर्यासो न चित्तविपर्यासो न दृष्टिविपर्यासो भवति ? सचेद्बोधिसत्त्वो महासत्त्वो येन चित्तेन यत्परिणामयति, 20 तस्मिंश्चित्ते न चित्तसंज्ञी भवति । एवं बोधिसत्त्वेन महासत्त्वेन अनुमोदनासहगतं पुण्यक्रियावस्तु अनुत्तरायै सम्यक्संबोधये परिणामितं भवति । स यथा तच्चित्तं न संजानीते इदं चित्तमिति, एवं बोधिसत्त्वस्य महासत्त्वस्य न संज्ञाविपर्यासो न चित्तविपर्यासो न दृष्टिविपर्यासो भवति । अथ येन चित्तेन यत्परिणामयति तच्चित्तं संजानीते—इदं तच्चित्तमिति चित्तसंज्ञी भवति । एवं बोधिसत्त्वस्य महासत्त्वस्य संज्ञाविपर्यासश्चित्तविपर्यासो दृष्टिविपर्यासो 25 भवति । सचेत्पुनर्बोधिसत्त्वो महासत्त्वो यच्चित्तं परिणामयति तच्चित्तमेवं संजानीते एवं R 145 समन्वाहरति, तच्चित्तं समन्वाह्रियमाणमेव क्षीणं क्षीणमित्येवं संजानीते, निरुद्धं विगतं विपरिणतमित्येवं संजानीते । यच्च क्षीणं न तच्छक्यं परिणामयितुम् । येनापि चित्तेन परिणाम्यते, तस्यापि चित्तस्य सैव धर्मता । यैरपि धर्मैः परिणाम्यते, तेषामपि धर्माणां सैव धर्मता । येष्वपि धर्मेषु परिणाम्यते, तेषामपि धर्माणां सैव धर्मतेति । सचेदेवं 30 परिणामयति, सम्यक्परिणामयति, न मिथ्या परिणामयति । एवं च बोधिसत्त्वेन महासत्त्वेन परिणामयितव्यम् ॥

W 345 पुनरपरमार्य सुभूते बोधिसत्त्वेन महासत्त्वेन प्रत्युत्पन्नानां बुद्धानां भगवतां छिन्नवर्त्मनां छिन्नवर्त्मनीनां छिन्नप्रपञ्चभवनेत्रीकाणामप्रमेयाणामसंख्येयानामप्रमेयासंख्येयेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु तिष्ठतां ध्रियमाणानां यापयतां यावत्प्रथमचित्तोत्पादमुपादाय यावच्च अनुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते, यावच्च निरुपधिशेषे निर्वाणधातौ परिनिर्वान्ति, 5 यावच्च सद्धर्मो नान्तर्दधाति, एतस्मिन्नन्तरे यानि तेषां बुद्धानां भगवतां पारमिताप्रतिसंयुक्तानि कुशलमूलानि, यश्च तेषां बुद्धानां भगवतां शीलस्कन्धः समाधिस्कन्धः प्रज्ञास्कन्धो विमुक्तिस्कन्धो विमुक्तिज्ञानदर्शनस्कन्धः, या च हितैषिता, या च महामैत्री, या R 146 च महाकरुणा, ये च अप्रमेयासंख्येया बुद्धगुणाः, यं च ते बुद्धा भगवन्तो धर्मं देशयन्ति, ये च तस्मिन् धर्मे शिक्षन्तेऽधिमोक्षयन्ति प्रतितिष्ठन्ति, तेषां च यानि कुशल-10 मूलानि, यांश्च ते बुद्धा भगवन्तो बोधिसत्त्वान् महासत्त्वान् व्याकुर्वन्ति अनुत्तरायां सम्यक्संबोधौ, तेषां च यानि षट्पारमिताप्रतिसंयुक्तानि कुशलमूलानि, यांश्च ते बुद्धा भगवन्तः प्रत्येकबुद्धयानिकान् पुद्गलान्[1] व्याकुर्वन्ति प्रत्येकबोधौ, तेषां च यानि कुशलमूलानि, यानि च श्रावकयानिकानां पुद्गलानां दानमयानि कुशलमूलानि शीलमयानि कुशलमूलानि भावनामयानि कुशलमूलानि, यानि च शैक्षाण्यनास्रवाणि कुशलमूलानि, 15 यानि च अशैक्षाण्यनास्रवाणि कुशलमूलानि, ये च तस्मिन् धर्मे पृथग्जनाः कुशलमूलान्यवरोपयन्ति, ये च देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगा मनुष्यामनुष्या वा तं धर्मं शृण्वन्ति, श्रुत्वा च कुशलमूलान्यवरोपयन्ति, ये च तिर्यग्योनिगता अपि सत्त्वास्तं धर्मं शृण्वन्ति, श्रुत्वा च कुशलमूलान्यवरोपयन्ति, ये च तेषु बुद्धेषु भगवत्सु परिनिर्वायत्सु W 346 परिनिर्वृतेषु च कुशलमूलान्यवरोपयन्ति, तेषां च सर्वेषां यानि कुशलमूलानि, तानि 20 सर्वाण्येकतोऽभिसंक्षिप्य पिण्डयित्वा तुलयित्वा निरवशेष्य निरवशेषमनुमोदितव्यानि। अनुमोद्य अनुमोदनासहगतं पुण्यक्रियावस्तु अनुत्तरायै सम्यक्संबोधये परिणामयतो बोधिसत्त्वस्य महासत्त्वस्य कथं न संज्ञाविपर्यासो न चित्तविपर्यासो न दृष्टिविपर्यासो भवति? सचेद्बोधिसत्त्वो महासत्त्वो येन चित्तेन यत्परिणामयति, तस्मिंश्चित्ते न चित्तसंज्ञी भवति। एवं बोधिसत्त्वेन महासत्त्वेन R 147 अनुमोदनासहगतं पुण्यक्रियावस्तु अनुत्तरायै सम्यक्संबोधये परिणामितं भवति—यथा तच्चित्तं 25 न संजानीते इदं तच्चित्तमिति। एवं बोधिसत्त्वस्य महासत्त्वस्य न संज्ञाविपर्यासो न चित्तविपर्यासो न दृष्टिविपर्यासो भवति। अथ येन चित्तेन यत्परिणामयति तच्चित्तं संजानीते—इदं तच्चित्तमिति चित्तसंज्ञी भवति। एवं बोधिसत्त्वस्य महासत्त्वस्य संज्ञाविपर्यासश्चित्तविपर्यासो दृष्टिविपर्यासो भवति। सचेत्पुनर्बोधिसत्त्वो महासत्त्वो यच्चित्तं परिणामयति, तच्चित्तमेवं संजानीते एवं समन्वाहरति—तच्चित्तं समन्वाह्रियमाणमेव क्षीणं क्षीणमित्येवं संजानीते, 30 निरुद्धं विगतं विपरिणतमित्येवं संजानीते। यच्च क्षीणं न तच्छक्यं परिणामयितुम्। येनापि चित्तेन परिणाम्यते, तस्यापि चित्तस्य सैव धर्मता। यैरपि धर्मैः परिणाम्यते, तेषामपि

---

१ W om. पुद्गलान्.

धर्माणां सैव धर्मता। येष्वपि धर्मेषु परिणाम्यते, तेषामपि धर्माणां सैव धर्मतेति। सचेदेवं परिणामयति, सम्यक्परिणामयति, न मिथ्या परिणामयति। एवं च बोधिसत्त्वेन महासत्त्वेन परिणामयितव्यम्॥

पुनरपरमार्य सुभूते बोधिसत्त्वो महासत्त्वोऽतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां छिन्नवर्त्मनां छिन्नवर्त्मनीनां छिन्नप्रपञ्चभवनेत्रीकाणामप्रमेयाणामसंख्येयानां यावत्प्रथमचित्तो- 5 W 347
त्पादमुपादाय यावच्च अनुत्तरां सम्यक्संबोधिमभिसंबुद्धा अभिसंभोत्स्यन्ते अभिसंबुध्यन्ते च, यावच्च निरुपधिशेषे निर्वाणधातौ परिनिर्वृताः परिनिर्वास्यन्ति परिनिर्वान्ति च, यावच्च सद्धर्मो नान्तर्हितो नान्तर्धास्यति नान्तर्दधाति च, एतस्मिन्नन्तरे यानि तेषां बुद्धानां भगवतां षट्पारमिताप्रतिसंयुक्तानि कुशलमूलानि, यश्च तेषां बुद्धानां भगवतां शीलस्कन्धः R 148
समाधिस्कन्धः प्रज्ञास्कन्धो विमुक्तिस्कन्धो विमुक्तिज्ञानदर्शनस्कन्धः, या च हितैषिता, 10
या च महामैत्री, या च महाकरुणा, ये च अप्रमेयासंख्येया बुद्धगुणाः, यैश्च तैर्बुद्धैर्भगवद्भिर्धर्मो देशितो देशयिष्यते देश्यते च, ये च तस्मिन् धर्मे शिक्षिताः शिक्षिष्यन्ते शिक्षन्ते च, अधिमुक्ता अधिमोक्षयिष्यन्ति अधिमोक्षयन्ति च, स्थिताः स्थास्यन्ति तिष्ठन्ति च, तेषां च सर्वेषां यानि कुशलमूलानि, ये च तैर्बुद्धैर्भगवद्भिर्बोधिसत्त्वा महासत्त्वा व्याकृता व्याकरिष्यन्ते व्याक्रियन्ते च अनुत्तरायां सम्यक्संबोधौ, तेषां च सर्वेषां यानि 15
कुशलमूलानि, ये च प्रत्येकबुद्धयानिकाः पुद्गला व्याकृता व्याकरिष्यन्ते व्याक्रियन्ते च प्रत्येकबोधौ, तेषां च सर्वेषां यानि कुशलमूलानि, यानि च श्रावकयानिकानां पुद्गलानां दानमयानि कुशलमूलानि शीलमयानि कुशलमूलानि भावनामयानि कुशलमूलानि, यानि च शैक्षाण्यनास्रवाणि कुशलमूलानि, यानि च अशैक्षाण्यनास्रवाणि कुशलमूलानि, यैश्च तस्मिन् धर्मे पृथग्जनैः कुशलमूलान्यवरोपितानि अवरोपयिष्यन्तेऽवरोप्यन्ते च, यैश्च देवनाग- 20
यक्षगन्धर्वासुरगरुडकिन्नरमहोरगैर्मनुष्यामनुष्यैर्वा स धर्मः श्रुतः श्रोष्यते श्रूयते च, श्रुत्वा च कुशलमूलान्यवरोपितानि अवरोपयिष्यन्तेऽवरोप्यन्ते च, यैश्च तिर्यग्योनिगतैरपि सत्त्वैः स धर्मः श्रुतः श्रोष्यते श्रूयते च, श्रुत्वा च कुशलमूलानि अवरोपितान्यवरोपयिष्यन्तेऽवरोप्यन्ते च, यैश्च सत्त्वैस्तेषु बुद्धेषु भगवत्सु परिनिर्वृतेषु परिनिर्वास्यत्सु परिनिर्वायत्सु च कुशल- W 348
मूलान्यवरोपितानि अवरोपयिष्यन्तेऽवरोप्यन्ते च, तेषां च सर्वेषां यानि कुशलमूलानि, तानि 25
सर्वाण्येकतोऽभिसंक्षिप्य पिण्डयित्वा तुलयित्वा निरवशेष्य निरवशेषमग्रया अनुमोदनया R 149
अनुमोदेत, श्रेष्ठया ज्येष्ठया वरया प्रवरया प्रणीतया उत्तमया अनुत्तमया निरुत्तमया असमया असमसमया अनुमोदनया अनुमोदेत। एवमनुमोद्य अनुमोदनासहगतं पुण्यक्रिया- वस्तु अनुत्तरायै सम्यक्संबोधये परिणामयामीति वाचं भाषेत—अनुत्तरायाः सम्यक्संबोधे- राहारकं भवत्विति। तस्य कथं बोधिसत्त्वस्य महासत्त्वस्य न संज्ञाविपर्यासो न चित्त- 30
विपर्यासो न दृष्टिविपर्यासो भवति? सचेत्परिणामयन् एवं समन्वाहरति—ते धर्माः क्षीणा निरुद्धा विगता विपरिणताः, स च धर्मोऽक्षयो यत्र परिणाम्यते इत्येवं परिणामितं भवत्य-

नुत्तरायां सम्यक्संबोधौ। सचेत्पुनरेवमुपपरीक्षते—न धर्मो धर्मं परिणामयति, इत्यपि परिणामितं भवत्यनुत्तरायां सम्यक्संबोधौ। एवं भदन्त सुभूते परिणामयतो बोधिसत्त्वस्य महासत्त्वस्य न संज्ञाविपर्यासो न चित्तविपर्यासो न दृष्टिविपर्यासो भवति। तत्कस्य हेतोः? W 349 तथा हि स तां परिणामनां[1] नाभिनिविशते। सचेत्पुनरेवं संजानीते—न चित्तं चित्तं जानाति, 5 न धर्मो धर्मं जानाति, इत्यपि परिणामितं भवत्यनुत्तरायै सम्यक्संबोधये। अयं बोधिसत्त्वस्य महासत्त्वस्यानुत्तरः परिणामः। सचेत्पुनर्बोधिसत्त्वस्तं पुण्याभिसंस्कारं संजानीते, न परिणामयत्यनुत्तरायां सम्यक्संबोधौ। तत्कस्य हेतोः? तथा हि स तां परिणामनामभि- W 350 निविशते। सचेत्पुनरस्यैवं भवति—सोऽपि पुण्याभिसंस्कारो विविक्तः शान्तः, यदप्यनु- मोदनासहगतं पुण्यक्रियावस्तु तदपि विविक्तं शान्तमिति परिणामयत्यनुत्तरायां सम्यक्संबोधौ। R 150 10 सचेदेवमपि न संजानीते—सर्वसंस्काराः शान्ता विविक्ता इति, एवमियं तस्य बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमिता यदपि तत्तेषां बुद्धानां भगवतां परिनिर्वृतानां कुशलमूलम्। यादृश एव स परिणामस्तादृशमेव तत्कुशलमूलम्, येनापि तत्परिणामितं तदपि तज्जातिकं तल्लक्षणं तन्निकायं तत्स्वभावम्। सचेदेवं संजानीते, न परिणामयत्यनुत्तरायां सम्य- क्संबोधौ। तत्कस्य हेतोः? न हि बुद्धा भगवन्तो निमित्तयोगेन परिणामनामभ्यनुजानन्ति। W 351 15 यच्चातीतं तत्क्षीणं निरुद्धं विगतं विपरिणतम्, यदप्यनागतं तदप्यसंप्राप्तम्, प्रत्युत्पन्नस्य स्थितिर्नोपलभ्यते, यच्च नोपलभ्यते तन्नैव निमित्तं न विषयः। सचेदेवं निमित्तीकरोति, न समन्वाहरति न परिणामयत्यनुत्तरायां सम्यक्संबोधौ। अथ स्मृतिवैकल्येन न निमित्तीकरोति न समन्वाहरति न मनसि करोति स्मृतिवैकल्यादनवबोधाद्वा, एवमपि न परिणामयत्यनुत्तरायां सम्यक्संबोधौ। अथ तन्निमित्तं समन्वाहरति, न च निमित्तीकरोति, एवं परिणामितं भवति W 352 20 तत्कुशलमूलं बोधिसत्त्वेन महासत्त्वेनानुत्तरायां सम्यक्संबोधौ। एवमत्र बोधिसत्त्वेन महसत्त्वेन शिक्षितव्यम्—इदं तद्बोधिसत्त्वस्य महासत्त्वस्योपायकौशलं वेदितव्यम्। येनोपायकौशलेन कुशलमूलं परिणामयति, स आसन्नः सर्वज्ञतायाः। अत्र चोपायकौशलं शिक्षितुकामेन बोधिसत्त्वेन महासत्त्वेन इयमेव प्रज्ञापारमिता अभीक्ष्णं श्रोतव्या उद्ग्रहीतव्या धारयितव्या वाचयितव्या पर्यवाप्तव्या प्रवर्तयितव्या देशयितव्या उपदेष्टव्या उद्देष्टव्या स्वाध्यातव्या परिप्रश्नी- R 151 W 353 25 कर्तव्या। तत्कस्य हेतोः? न हि प्रज्ञापारमितामनागम्य[2] शक्येयमश्रुतवता प्रज्ञापारमितापरि- णामनाक्रिया प्रवेष्टुम्। तत्र य एवं वदेत्—शक्यमनागम्य प्रज्ञापारमितां तत्पुण्यक्रियावस्तु अनुत्तरायां सम्यक्संबोधौ परिणामयितुमिति, स मैवं वोचदिति स्याद्वचनीयः। तत्कस्य हेतोः? निरुद्धा हि ते आत्मभावाः, निरुद्धा हि ते संस्काराः, शान्ता विविक्ता विरहिता उपलब्धिनः। अपि तु खलु पुनः स पुद्गलो निमित्तीकृत्य विकल्प्य च यथाभूतमयथाभूते W 354 30 यथाभूतसंज्ञी[3] उपलम्भमनुपलम्भे परिणामयेत्, तस्य कुशलमूलं बुद्धा भगवन्त एवं परिणामितमनुत्तरायां सम्यक्संबोधौ नाभ्यनुजानन्ति। तत्कस्य हेतोः? एष एव हि तस्य

---

१ R परिणामतां. २ W आगम्य for अनागम्य. ३ R °सञ्ज्ञी for °संज्ञी.

महानुपलम्भो भवति, यस्य परिनिर्वाणमपि बुद्धानां भगवतां निमित्तीकरोति विकल्पयति च। आकारतश्च निर्वाणमुपलभते। न चोपलम्भसंज्ञिनस्तथागता अर्हन्तः सम्यक्संबुद्धाः परिणामनां महार्थकरीं वदन्ति। तत्कस्य हेतोः? सविषः सशल्यो ह्येषः परिणामः। तद्यथापि नाम प्रणीतं भोजनं सविषं भवेत्, किं चापि तद्वर्णतश्च गन्धतश्च रसतश्च स्पर्शतश्च अभिलषणीयं भवति, अपि तु खलु पुनः सविषत्वात्परिवर्जनीयं भवति पण्डितानाम्, न परिभोगाय। तदेव बालजातीयो दुष्प्रज्ञजातीयः पुरुषः परिभोक्तव्यं मन्येत। तस्य तद्भोजनं परिभुञ्जानस्य वर्णतश्च गन्धतश्च रसतश्च स्पर्शतश्च स्वादेषु सुखकरं परिणामे चास्य दुःखविपाकं भवति। स ततोनिदानं मरणं वा निगच्छेत्, मरणमात्रकं वा दुःखम्। एवमेव आर्य सुभूते इहैके दुर्गृहीतेन दुरुपलक्षितेन दुःस्वाख्यातेन सुभाषितस्यार्थमजानाना यथाभूतमर्थमनवबुध्यमाना एवमववदिष्यन्ति, एवमनुशासिष्यन्ति—एहि त्वं कुलपुत्र अतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां शीलस्कन्धं समाधिस्कन्धं प्रज्ञास्कन्धं विमुक्तिस्कन्धं विमुक्तिज्ञानदर्शनस्कन्धम्। तेषां च श्रावकाणां यैस्तत्र तेष्वतीतानागतप्रत्युत्पन्नेषु बुद्धेषु भगवत्सु कुशलमूलान्यवरोपितानि अवरोपयिष्यन्तेऽवरोप्यन्ते च, यावच्च सद्धर्मो नान्तर्हितो नान्तर्धास्यति नान्तर्दधाति च, एतस्मिन्नन्तरे तेषां बुद्धानां भगवतां यावत्प्रथमचित्तोत्पादमुपादाय यावच्च अनुत्तरां सम्यक्संबोधिमभिसंबुद्धानां भगवतां यावच्च अनुपधिशेषे निर्वाणधातौ परिनिर्वृतानाम्, ये च तैर्बुद्धैर्भगवद्भिर्बोधिसत्त्वा महासत्त्वा अनुत्तरायां सम्यक्संबोधौ व्याकृता व्याकरिष्यन्ते व्याक्रियन्ते च, तेषां च यानि कुशलमूलान्यवरोपितानि अवरोपयिष्यन्तेऽवरोप्यन्ते च, ये च प्रत्येकबुद्धयानिकाः पुद्गला व्याकृता व्याकरिष्यन्ते व्याक्रियन्ते च प्रत्येकबोधौ, तेषां च यानि कुशलमूलान्यवरोपितानि अवरोपयिष्यन्तेऽवरोप्यन्ते च, ये च श्रावकयानिकाः पुद्गला व्याकृता व्याकरिष्यन्ते व्याक्रियन्ते च श्रावकबोधौ, तेषां च यानि कुशलमूलान्यवरोपितानि अवरोपयिष्यन्तेऽवरोप्यन्ते च, यानि च पृथग्जनानामप्रमेयासंख्येयेषु लोकधातुषु अतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां सर्वलोकधातुषु तत्सर्वं कुशलमूलमेकतोऽभिसंक्षिप्य पिण्डयित्वा तुलयित्वा निरवशेष्य निरवशेषमनुमोद्य अनुमोदनासहगतं पुण्यक्रियावस्तु अनुत्तरायां सम्यक्संबोधौ परिणामयति। एवं स परिणामो निमित्तयोगेन परिणाम्यमानो विषत्वाय संप्रवर्तते, तद्यथापि नाम तत्सविषं भोजनमेव। नास्त्युपलम्भसंज्ञिनः परिणामना। तत्कस्य हेतोः? सविषत्वादुपलम्भस्य। तस्माद्बोधिसत्त्वयानिकेन पुद्गलेन नैवं शिक्षितव्यम्। कथं पुनरनेन शिक्षितव्यम्? कथमतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां कुशलमूलं परिग्रहीतव्यम्? कथं च परिगृहीतं सुपरिगृहीतं भवति? कथं च परिणामयितव्यम्? कथं च परिणामितं[1] सुपरिणामितं भवत्यनुत्तरायां सम्यक्संबोधौ? इहानेन बोधिसत्त्वयानिकेन कुलपुत्रेण वा कुलदुहित्रा वा तथागतमनभ्याख्यातुकामेन एवं तत्सर्वं कुशलमूलमनुमोदितव्यमेवं परिणामयितव्यं यथा ते

W 355 5 10 R 152 15 W 356 20 25 R 153 W 357 30

[1] W om. परिणामितं.

तथागता अर्हन्तः सम्यक्संबुद्धा बुद्धज्ञानेन बुद्धचक्षुषा जानन्ति पश्यन्ति तत्कुशलमूलं यज्जातिकं यन्निकायं यादृशं यत्स्वभावं यल्लक्षणम्। यया धर्मतया संविद्यते तथा अनुमोदे तत्कुशलमूलम्, यथा च ते तथागता अर्हन्तः सम्यक्संबुद्धा अभ्यनुजानन्ति परिणाम्यमानं तत्कुशलमूलमनुत्तरायां सम्यक्संबोधौ, तथाहं परिणामयामीति। एवमनुमोदमान एवं 5 परिणामयन् बोधिसत्त्वो महासत्त्वोऽनपराद्धो भवति। बुद्धानां भगवतां सम्यक्त्वानुमोदितं परिणामितं च भवति तत्कुशलमूलमनुत्तरायै सम्यक्संबोधये, न च तांस्तथागतानर्हतः सम्यक्संबुद्धानभ्याख्याति। एवं चास्य परिणामो निर्विषः परिणामो महापरिणामो धर्मधातुपरिणामः परिपूर्णः सुपरिपूर्णो भवति अध्याशयेन अधिमुक्त्या परिणामयतः॥

W 358 पुनरपरं बोधिसत्त्वयानिकेन कुलपुत्रेण वा कुलदुहित्रा वा एवं परिणामयितव्यम्— 10 यच्छीलं यः समाधिर्या प्रज्ञा या विमुक्तिर्यद्विमुक्तिज्ञानदर्शनं तद्यथा अपर्यापन्नं कामधातौ अपर्यापन्नं रूपधातौ अपर्यापन्नमारूप्यधातौ नाप्यतीतं न अनागतं न प्रत्युत्पन्नम्। R 154 तत्कस्य हेतोः? त्र्यध्वत्रैधातुकापर्यापन्नत्वात्। तथैव परिणामोऽप्यपर्यापन्नः। यत्रापि धर्मे स परिणामः परिणाम्यते, सोऽपि धर्मोऽपर्यापन्नः। सचेदेवमधिमुच्यति, एवं परिणामयतस्तस्य बोधिसत्त्वस्य महासत्त्वस्य अविनष्टः परिणामो भवत्यपर्यापन्नो निर्विषः परिणामो W 359 15 महापरिणामो धर्मधातुपरिणामः परिपूर्णः सुपरिपूर्णो भवति। अथ तं परिणामयति निविशते निमित्तीकरोति, मिथ्या परिणामयति। तत्र योऽयं परिणामो बोधिसत्त्वस्य महासत्त्वस्य, अनया धर्मधातुपरिणामनया यथा बुद्धा भगवन्तो जानन्ति, यथा चाभ्यनुजानन्ति तत्कुशलमूलमनुत्तरायां सम्यक्संबोधौ परिणामितमेवं सुपरिणामितं भवतीति, तथाहं परिणामयामि इत्ययं सम्यक्परिणामः। एवं च परिणामितं सुपरिणामितं भवत्यनुत्तरायां 20 सम्यक्संबोधौ॥

अथ खलु भगवानायुष्मते सुभूतये साधुकारमदात्—साधु साधु सुभूते। शास्तृकृत्यं W 360 त्वं सुभूते करोषि, यस्त्वं बोधिसत्त्वानां महासत्त्वानां धर्मं देशयसि। तत्कस्य हेतोः? यो ह्ययं सुभूते परिणामः, धर्मधातुपरिणामोऽयं बोधिसत्त्वस्य महासत्त्वस्य। अस्यामेव धर्मतायां यथा बुद्धा भगवन्तो जानन्ति पश्यन्ति, तत्कुशलमूलं यज्जातिकं यन्निकायं यादृशं यत्स्वभावं 25 यल्लक्षणं यया धर्मतया संविद्यते, तथा अनुमोदे। यथा च अभ्यनुजानन्ति, तथाहं परिणामयामीति। अत्र यः पुण्यस्कन्धो यश्च गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु ये सत्त्वाः, तान् सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा दशसु कुशलेषु कर्म- R 155 पथेषु समादापयेत्प्रतिष्ठापयेत्, तस्य यः पुण्याभिसंस्कारः, ततोऽयमेव बोधिसत्त्वस्य महासत्त्वस्य धर्मधातुपरिणामजः पुण्यस्कन्धोऽग्र आख्यायते, श्रेष्ठ आख्यायते, ज्येष्ठ आख्यायते, वर 30 आख्यायते, प्रवर आख्यायते, प्रणीत आख्यायते, उत्तम आख्यायते, अनुत्तम आख्यायते, निरुत्तम आख्यायते, असम आख्यायते, असमसम आख्यायते। तिष्ठतु खलु पुनः सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सर्वसत्त्वान् दशसु कुशलेषु

कर्मपथेषु प्रतिष्ठाप्य पुण्याभिसंस्कारः, यावन्तः सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्र-
महासाहस्रेषु लोकधातुषु सत्त्वाः, ते सर्वे चतुर्णां ध्यानानां लाभिनो भवेयुः,
तेषां च यः पुण्याभिसंस्कारः, ततोऽयमेव बोधिसत्त्वस्य महासत्त्वस्य परिणामनासहगतः
पुण्यस्कन्धोऽग्र आख्यायते, श्रेष्ठ आख्यायते, ज्येष्ठ आख्यायते, वर आख्यायते, प्रवर
आख्यायते, प्रणीत आख्यायते, उत्तम आख्यायते, अनुत्तम आख्यायते, निरुत्तम 5
आख्यायते, असम आख्यायते, असमसम आख्यायते। तिष्ठतु खलु पुनः सुभूते
गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सर्वसत्त्वानां चतुर्ध्याननिष्पादनसंभूतः W 361
पुण्याभिसंस्कारः, ये सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु
सत्त्वाः, ते सर्वे चतुर्णामप्रमाणानां लाभिनो भवेयुः। तिष्ठतु खलु पुनः सुभूते गङ्गानदी-
वालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु चतुरप्रमाणलाभिनां सर्वसत्त्वानां पुण्याभि- 10
संस्कारः, ये सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सत्त्वाः, ते
सर्वे चतसृणामारूप्यसमापत्तीनां लाभिनो भवेयुः। तिष्ठतु खलु पुनः सुभूते गङ्गानदी-
वालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु चतुरारूप्यसमापत्तिलाभिनां सर्वसत्त्वानां R 156
पुण्याभिसंस्कारः, ये सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सत्त्वाः,
ते सर्वे पञ्चानामभिज्ञानां लाभिनो भवेयुः। तिष्ठतु खलु पुनः सुभूते गङ्गानदीवालुकोपमेषु 15
त्रिसाहस्रमहासाहस्रेषु लोकधातुषु पञ्चाभिज्ञानां सर्वसत्त्वानां पुण्याभिसंस्कारः, ये सुभूते
गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु स्रोतआपन्ना भवेयुः। तिष्ठतु खलु
पुनः सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सर्वसत्त्वानां स्रोतआप- W 362
न्नानां पुण्याभिसंस्कारः, ये सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु
सत्त्वाः, ते सर्वे सकृदागामिनो भवेयुः। तिष्ठतु खलु पुनः सुभूते गङ्गानदीवालुकोपमेषु 20
त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सर्वसत्त्वानां सकृदागामिनां पुण्याभिसंस्कारः, यावन्तः सुभूते
गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सत्त्वाः, ते सर्वे अनागामिनो भवेयुः।
तिष्ठतु खलु पुनः सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सर्वसत्त्वाना-
मनागामिनां पुण्याभिसंस्कारः, यावन्तः सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु
लोकधातुषु सत्त्वाः ते सर्वे अर्हन्तो भवेयुः। तिष्ठतु खलु पुनः सुभूते गङ्गानदीवालुकोपमेषु 25
त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सर्वसत्त्वानामर्हतां पुण्यस्कन्धः, ये सुभूते गङ्गानदीवालु-
कोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सत्त्वाः, ते सर्वे प्रत्येकबुद्धा भवेयुः। तिष्ठतु खलु
पुनः सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सर्वसत्त्वानां प्रत्येक- R 157
बुद्धानां पुण्यस्कन्धः, ये सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सत्त्वाः,
ते सर्वे अनुत्तरायां सम्यक्संबोधौ संप्रस्थिता भवेयुः। ये सर्वे अन्येष्वन्येषु गङ्गानदीवालुकोपमेषु 30
त्रिसाहस्रमहासाहस्रेषु लोकधातुषु[1] ये सत्त्वाः, तान् सर्वानेकैको बोधिसत्त्वश्चीवरपिण्डपात-

---

१ R om. लोकधातुषु.

W 363 शयनासनग्लानप्रत्ययभैषज्यपरिष्कारैर्गङ्गानदीवालुकोपमान् कल्पानुपतिष्ठेत् सर्वसुखोपधानैः, सर्वैः सुखस्पर्शविहारैः, तच्च दानमुपलम्भसंज्ञिनो दद्युः । एतेन पर्यायेण तान् सर्वसत्त्वानेकैकं परिकल्प्य तांश्च सर्वबोधिसत्त्वानेकैको बोधिसत्त्वो गङ्गानदीवालुकोपमान् कल्पानुपतिष्ठेच्चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः सर्वसुखोपधानैः, सर्वैः सुखस्पर्श-
5 विहारैः सत्कुर्याद्गुरुकुर्यान्मानयेत्पूजयेदर्चयेदपचायेत् । एवमेकैकस्तेषां सर्वेषां बोधिसत्त्वानामनेन पर्यायेण दानं दद्यात्, एवं सर्वेऽपि ते दानं दद्युः । तत्किं मन्यसे सुभूते अपि नु ते बोधिसत्त्वास्ततोनिदानं बहु पुण्यं प्रसवेयुः? सुभूतिराह—बहु भगवन्, बहु सुगत ।
W 364 अप्रमेयं भगवन्, अप्रमेयं सुगत । संख्यापि भगवंस्तस्य पुण्यस्कन्धस्य न सुकरा कर्तुम्, गणनापि उपमापि औपम्यमपि उपनिसापि उपनिषदपि भगवंस्तस्य पुण्यस्कन्धस्य न सुकरा
10 कर्तुम् । सचेद्भगवन् रूपी भवेत्, स पुण्यस्कन्धो गङ्गानदीवालुकोपमेष्वपि त्रिसाहस्रमहासाहस्रेषु लोकधातुषु न मायेत् ॥

एवमुक्ते भगवानायुष्मन्तं सुभूतिं स्थविरमेतदवोचत्—एवमेतत्सुभूते, एवमेतत् । यत्र खलु पुनः सुभूते बोधिसत्त्वयानिकः पुद्गलः प्रज्ञापारमितोपायकौशल्यपरिगृहीतोऽनेन
R 158 धर्मधातुपरिणामेन तत्कुशलमूलमनुत्तरायां सम्यक्संबोधौ परिणामयेत्, पुण्यं प्रसवति । अस्य
15 सुभूते पुण्यस्कन्धस्य धर्मधातुपरिणामजस्य असौ पूर्वक उपलम्भसंज्ञिनां बोधिसत्त्वानां दानमयः पुण्याभिसंस्कारः शततमीमपि कलां नोपैति, सहस्रतमीमपि शतसहस्रतमीमपि कोटीतमीमपि कोटीशततमीमपि कोटीसहस्रतमीमपि कोटीशतसहस्रतमीमपि कोटीनियुतशतसहस्रतमीमपि कलां नोपैति, संख्यामपि कलामपि गणनामपि उपमामपि औपम्यमपि
W 365 उपनिसामपि उपनिषदमपि न क्षमते । तत्कस्य हेतोः? तथा हि तेषां पौर्वकाणामुपलम्भ-
20 संज्ञिनां बोधिसत्त्वानां सुबह्वपि दानं दत्तं सुबह्वित्यपि परिसंख्यातं भवति ॥

अथ खलु चातुर्महाराजकायिकानां देवपुत्राणां विंशतिसहस्राणि प्राञ्जलीनि नमस्यन्ति भगवन्तमेतदवोचन्—महापरिणामोऽयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमितोपायकौशल्यपरिगृहीतानां कुशलमूलपरिणामः सर्वज्ञतायै, यत्र हि नाम तेषामौपलम्भिकानां बोधिसत्त्वानां तावन्तं दानमयं पुण्याभिसंस्कारमभिभवति । अथ खलु त्रायस्त्रिंशकायि-
W 366 25 कानां देवपुत्राणां शतसहस्राणि दिव्यपुष्पधूपगन्धमाल्यविलेपनचूर्णवर्षैर्दिव्यै रत्नवर्षैर्दिव्यैश्च वस्त्रवर्षैर्भगवन्तमभ्यवाकिरन्नभिप्राकिरन् । दिव्यैश्छत्रैर्दिव्यैर्ध्वजैर्दिव्याभिर्घण्टाभिर्दिव्याभिः पताकाभिः समन्ताच्च दिव्यदीपमालाभिर्बहुविधाभिश्च दिव्याभिः पूजाभिर्भगवन्तं सत्कुर्वन्ति स्म, गुरुकुर्वन्ति स्म मानयन्ति स्म पूजयन्ति स्म अर्चयन्ति स्म अपचायन्ति स्म, दिव्यानि च
R 159 वाद्यान्यभिप्रवादयामासुः । एवं च वाचमभाषन्त—महापरिणामो बतायं भगवन् बोधिसत्त्वस्य
30 महासत्त्वस्य योऽयं धर्मधातुपरिणामः, यत्र हि नाम तत्तेषामौपलम्भिकानां बोधिसत्त्वानां महासत्त्वानां दानमयं पुण्याभिसंस्कारस्कन्धमभिभवति यथापि नाम प्रज्ञापारमितोपायकौशल्यपरिगृहीतत्वादस्य महापरिणामस्य । एवमन्येभ्योऽपि देवनिकायेभ्यो देवपुत्रा आगत्य

भगवन्तं परमेण सत्कारेण परमेण गुरुकारेण परमया माननया परमया पूजनया परमया अर्चनया परमया अपचायनया सत्कृत्य गुरुकृत्य मानयित्वा पूजयित्वा अर्चयित्वा अपचाय्य एवमेव शब्दमुदीरयन्ति स्म, घोषमनुश्रावयन्ति स्म। एवं पेयालेन कर्तव्यम्। यामास्तुषिता निर्माणरतयः परनिर्मितवशवर्तिनो ब्रह्मकायिका ब्रह्मपुरोहिता ब्रह्मपार्षद्या महाब्रह्माणः परीत्ताभा अप्रमाणाभा आभास्वराः परीत्तशुभा अप्रमाणशुभाः शुभकृत्स्ना अनभ्रकाः पुण्यप्रसवा बृहत्फला 5 असंज्ञिसत्त्वा अबृहा अतपाः सुदृशाः सुदर्शना अकनिष्ठाश्च देवाः, तेऽप्येवमेवाञ्जलिं कृत्वा भगवन्तं नमस्यन्त एतदवोचन्—आश्चर्यं भगवन् यावदयं बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमितोपायकौशल्यपरिगृहीतानां कुशलमूलपरिणामः, यस्तेषामुपलम्भसंज्ञिनां बोधिसत्त्वानां W 367 तावच्चिररात्रसंचितममपि तथा महाविस्तरसमुदानीतमपि पुण्यस्कन्धमभिभवति ॥

अथ खलु भगवांस्तान् शुद्धावासकायिकान् देवपुत्रानादीन् कृत्वा सर्वांस्तान् 10 देवपुत्रानामन्त्रयते स्म—तिष्ठतु खलु पुनर्देवपुत्रा गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सर्वसत्त्वानामनुत्तरां सम्यक्संबोधिमभिसंप्रस्थितानामनुत्तरायाः सम्यक्संबोधेः प्रति- R 160 लम्भाय दानं ददतां पुण्याभिसंस्कारः अनेन पर्यायेण, येऽपि ते देवपुत्रा अन्येष्वन्येषु[२] गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सत्त्वाः, तेऽपि सर्वे अनुत्तरायां सम्यक्संबोधौ प्रणिधानं कृत्वा बोधाय चित्तमुत्पाद्य अन्येष्वन्येषु गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु 15 लोकधातुषु सर्वसत्त्वानां चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः सर्वसुखोपधानैः सर्वैः सुखस्पर्शविहारैरेकैको बोधिसत्त्वो गङ्गानदीवालुकोपमान् कल्पांस्तिष्ठन् दानं दद्यात्, W 368 एवं सर्वेऽपि यावन्ते चोपलम्भसंज्ञिनो दानं दद्युः। एतेन पर्यायेण तान् सर्वसत्त्वानेकैकं परिकल्प्य तांश्च सर्वबोधिसत्त्वानेकैको बोधिसत्त्वो यावत्सर्वे ते बोधिसत्त्वा गङ्गानदीवालुकोपमान् कल्पांस्तिष्ठन्तस्तान् सर्वसत्त्वांश्चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः 20 सर्वसुखोपधानैः सर्वैः सुखस्पर्शविहारैरुपतिष्ठेयुः, तच्च दानमुपलम्भसंज्ञिनो दद्युः। यश्च बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितोपायकौशल्यपरिगृहीतोऽतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां शीलस्कन्धं समाधिस्कन्धं प्रज्ञास्कन्धं विमुक्तिस्कन्धं विमुक्तिज्ञानदर्शनस्कन्धं तेषां च बोधिसत्त्वप्रत्येकबुद्धश्रावकयानिकानां पुद्गलानां यैश्च तत्र अन्यैरपि सत्त्वैः कुशलमूलान्यवरोपितान्यवरोपयिष्यन्तेऽवरोप्यन्ते च, तत्सर्वमेकतोऽभिसंक्षिप्य पिण्डयित्वा तुलयित्वा निरवशेष्य 25 निरवशेषमग्रया अनुमोदनया अनुमोदते। श्रेष्ठया ज्येष्ठया वरया प्रवरया प्रणीतया उत्तमया अनुत्तमया निरुत्तमया उत्तरोत्तरया असमया असमसमया अप्रतिसमया अचिन्त्यया अनुमोदनया R 161 अनुमोदते। अनुमोद्य अनुमोदनासहगतं पुण्यक्रियावस्तु अनुत्तरायां सम्यक्संबोधौ परिणामयति—अनुत्तरायाः सम्यक्संबोधेराहारकं भवत्विति। अस्यानुमोदनापरिणामनासहगतस्य पुण्यक्रियावस्तुनः सोऽपि पौर्वक औपलम्भिकानां बोधिसत्त्वानां पुण्याभिसंस्कारः शततमीमपि कलां 30 नोपैति, सहस्रतमीमपि शतसहस्रतमीमपि कोटीतमीमपि कोटीशततमीमपि कोटीसहस्रतमीमपि कोटीशतसहस्रतमीमपि कोटीनियुतशतसहस्रतमीमपि कलां नोपैति, संख्यामपि कलामपि

१ R अभ्रयाः. २ W om. one अन्येषु.

W 369 गणनामपि उपमामपि औपम्यमपि उपनिसामपि उपनिषदमपि न क्षमते। तत्कस्य हेतोः? तथा हि ते बोधिसत्त्वाः सर्वेऽप्युपलम्भसंज्ञिनो दानं ददति॥

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—यद्भगवानेवमाह—अतीतानागतप्रत्युत्पन्नानां सर्वेषां बुद्धानां भगवतां बोधिसत्त्वप्रत्येकबुद्धश्रावकसंघानां सर्वसत्त्वानां च अतीताना-
5 गतप्रत्युत्पन्नं यन्नाम कुशलमूलं तत्सर्वमेकतोऽभिसंक्षिप्य पिण्डयित्वा तुलयित्वा निरवशेष्य
W 370 निरवशेषमनुमोदते अग्रया अनुमोदनया। श्रेष्ठया ज्येष्ठया वरया प्रवरया प्रणीतया उत्तमया अनुत्तमया निरुत्तमया उत्तरोत्तरया असमया असमसमया अप्रतिसमया अचिन्त्यया अनुमोदते इति। तत्र कियता भगवन् अग्रानुमोदना भवति? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—यदि सुभूते बोधिसत्त्वयानिकः पुद्गलोऽतीतानागतप्रत्युत्पन्नान् गृह्णीते न मन्यते नोपलभते
R 162 10 न कल्पयति न विकल्पयति न पश्यति न समनुपश्यति, एवं चैनान् धर्मानुपपरीक्षते—कल्पनाविठपिताः सर्वधर्माः, अजाता अनिर्जाता अनागतिका अगतिकाः। नात्र कश्चिद्धर्म उत्पन्नो नापि कश्चिद्धर्म उत्पत्स्यते नापि कश्चिद्धर्म उत्पद्यते, नापि कश्चिद्धर्मो निरुद्धो नापि कश्चिद्धर्मो निरोत्स्यते नापि कश्चिद्धर्मो निरुध्यते। इत्येवमेतान् धर्मानुपपरीक्ष्य यथैषां धर्माणां धर्मता तथानुमोदते। अनुमोद्य तथैव परिणामयत्यनुत्तरायां सम्यक्संबोधौ। इयता सुभूते बोधिसत्त्वस्य
15 महासत्त्वस्य अग्रा अनुमोदना भवति। अस्य सुभूते कुशलमूलपरिणामस्य तेषां पौर्विकाणां बोधिसत्त्वानामुपलम्भसंज्ञिनामुपलम्भदृष्टिकाणां तद्दानमयं पुण्यक्रियावस्तु शततमीमपि कलां नोपैति, सहस्रतमीमपि शतसहस्रतमीमपि कोटीतमीमपि कोटीशततमीमपि कोटीसहस्रतमीमपि कोटीशतसहस्रतमीमपि कोटीनियुतशतसहस्रतमीमपि कलां नोपैति, संख्यामपि कलामपि गणनामपि उपमामपि औपम्यमपि उपनिसामपि उपनिषदमपि न क्षमते॥

20 पुनरपरं सुभूते बोधिसत्त्वयानिकेन पुद्गलेन अतीतानागतप्रत्युत्पन्नानां सर्वेषां बुद्धानां भगवतां दानमनुमोदितुकामेन शीलमनुमोदितुकामेन क्षान्तिमनुमोदितुकामेन वीर्यमनुमोदितु-
W 371 कामेन ध्यानमनुमोदितुकामेन प्रज्ञामनुमोदितकामेन एवमनुमोदितव्यम्—यथा विमुक्तिस्तथा दानम्, यथा विमुक्तिस्तथा शीलम्, यथा विमुक्तिस्तथा क्षान्तिः, यथा विमुक्तिस्तथा वीर्यम्, यथा विमुक्तिस्तथा ध्यानम्, यथा विमुक्तिस्तथा प्रज्ञा, यथा विमुक्तिस्तथा विमुक्तिज्ञानदर्शनम्, यथा
R 163 25 विमुक्तिस्तथा अनुमोदना, यथा विमुक्तिस्तथा अनुमोदनासहगतं पुण्यक्रियावस्तु, यथा विमुक्तिस्तथा परिणामना, यथा विमुक्तिस्तथा बुद्धा भगवन्तः प्रत्येकबुद्धाश्च, यथा विमुक्तिस्तथा तेषां श्रावका ये परिनिर्वृताः, यथा विमुक्तिस्तथा ते धर्मा येऽतीता निरुद्धाः, यथा विमुक्तिस्तथा ते धर्मा येऽनागता अनुत्पन्नाः, यथा विमुक्तिस्तथा ते धर्मा ये एतर्हि प्रत्युत्पन्ना वर्तमानाः, यथा विमुक्तिस्तथा तेऽतीता बुद्धा भगवन्तस्तेषां च श्रावकाः, यथा विमुक्तिस्तथा तेऽनागता
30 बुद्धा भगवन्तस्तेषां च श्रावकाः, यथा विमुक्तिस्तथा ते प्रत्युत्पन्ना बुद्धा भगवन्तस्तेषां च श्रावकाः, ये एतर्ह्यप्रमेयेष्वसंख्येयेषु लोकधातुषु तिष्ठन्ति ध्रियन्ते यापयन्ति, यथा विमुक्तिस्तथातीतानागतप्रत्युत्पन्ना बुद्धा भगवन्तः। एवमेतेषां धर्माणामबद्धानाममुक्तानामसक्तानां या धर्मता, तामनुत्तरया अनुमोदनया अनुमोदे। अनुमोद्य अनुमोदनासहगतं पुण्यक्रियावस्तु अनुत्तराया

सम्यक्संबोधौ परिणामयामि अपरिणामनायोगेन असंक्रान्तितोऽविनाशत इति। इयता सुभूते बोधिसत्त्वस्य महासत्त्वस्य अग्रा अनुमोदना भवति। तिष्ठन्तु खलु पुनः सुभूते तेऽपि येऽन्येष्वन्येषु गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सर्वसत्त्वा अनुत्तरायां सम्यक्संबोधौ संप्रस्थिताः, अनुत्तरायां सम्यक्संबोधौ संप्रस्थाय अन्येष्वन्येषु गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सर्वसत्त्वानां बोधाय चित्तमुत्पाद्य 5 सर्वेऽप्येकैको बोधिसत्त्वः एकैकस्मै बोधिसत्त्वाय गङ्गानदीवालुकोपमान् कल्पांस्तिष्ठन् दानं W 372 दद्यादुपलम्भसंज्ञी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः सर्वसुखोपधानैः सर्वसुखस्पर्शविहारैरुपतिष्ठन्, अनेन पर्यायेण सर्वेऽपि ते सर्वेभ्य उपतिष्ठन्तः उपलम्भसंज्ञिनो R 164 दानं दद्युः। ये सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सत्त्वाः, ते सर्वेऽनुत्तरां सम्यक्संबोधिमभिसंप्रतिष्ठेरन्। अनुत्तरां सम्यक्संबोधिमभिसंप्रस्थाय गङ्गानदी- 10 वालुकोपमान् कल्पान् कायसुचरितं वाक्सुचरितं मनःसुचरितमुपलम्भसंज्ञिनः शीलं समादाय वर्तेरन्। अनेन पर्यायेण सर्वेऽपि ते बोधिसत्त्वा एकैको बोधिसत्त्वो गङ्गानदीवालुकोपमान् कल्पांस्तिष्ठन् गङ्गानदीवालुकोपमान् कल्पान् कायसुचरितं वाक्सुचरितं मनःसुचरितमुपलम्भसंज्ञी शीलं समादाय वर्तेत। एतेन पर्यायेण सर्वेऽपि ते बोधिसत्त्वा उपलम्भसंज्ञिनः शीलं समादाय वर्तेरन्। यश्च बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितो- 15 पायकौशल्यपरिगृहीतोऽतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां शीलसमाधिप्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनस्कन्धांस्तेषां च प्रत्येकबुद्धानां शीलसमाधिप्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनस्कन्धांस्तेषां च श्रावकाणां शीलसमाधिप्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनस्कन्धान् सर्वसत्त्वानां च अतीतानागतप्रत्युत्पन्नं कुशलमूलं सर्वमेकतोऽभिसंक्षिप्य पिण्डयित्वा तुलयित्वा निरवशेष्य निरवशेषमनुमोदतेऽग्रया अनुमोदनया। श्रेष्ठया ज्येष्ठया वरया प्रवरया प्रणीतया उत्तमया अनुत्तमया 20 निरुत्तमया उत्तरोत्तरया असमया असमसमया अप्रतिसमया अचिन्तया अनुमोदनया अनुमोदते। अनुमोद्य अनुमोदनासहगतं पुण्यक्रियावस्तु अनुत्तरायां सम्यक्संबोधौ परिणामयति। अस्य सुभूते अनुमोदनासहगतस्य पुण्यक्रियावस्तुनोऽसौ पौर्वक औपलम्भिकानां बोधिसत्त्वानां W 373 शीलमयः पुण्याभिसंस्कारः शततमीमपि कलां नोपैति, सहस्रतमीमपि शतसहस्रतमीमपि R 165 कोटीतमीमपि कोटीशततमीमपि कोटीसहस्रतमीमपि कोटीशतसहस्रतमीमपि कोटीनियुतशत- 25 सहस्रतमीमपि कलां नोपैति, संख्यामपि कलामपि गणनामपि उपमामपि औपम्यमपि उपनिसामपि उपनिषदमपि न क्षमते। तत्कस्य हेतोः? तथा हि ते बोधिसत्त्वा उपलम्भसंज्ञिनः शीलं W 374 समादाय वर्तन्त इति। तिष्ठन्तु खलु पुनः सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सर्वसत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंप्रस्थिताः, अनुत्तरां सम्यक्संबोधिमभिसंप्रस्थाय गङ्गानदीवालुकोपमान् कल्पान् कायसुचरितं वाक्सुचरितं मनःसुचरितं 30 शीलं समादाय वर्तमाना उपलम्भसंज्ञिनः, ये सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सत्त्वाः, ते सर्वे अनुत्तरां सम्यक्संबोधिमभिसंप्रातिष्ठेरन्। अनुत्तरां सम्यक्संबोधिमभिसंप्रस्थाय गङ्गानदीवालुकोपमान् कल्पांस्तिष्ठन्तोऽन्येष्वन्येषु गङ्गानदीवालुको-

पमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सर्वैरेकैको बोधिसत्त्व आक्रुष्टोऽभिहतः परिभाषितः समान एव, सर्वेऽपि ते उपलम्भसंज्ञिनः क्षान्तिं समादाय वर्तेरन्, यावत्सर्वे ते बोधिसत्त्वाः क्षान्तिं समादाय वर्तमानाः, एतेन पर्यायेण सर्वे ते बोधिसत्त्वा एकैको बोधिसत्त्वो गङ्गानदीवालुकोपमान् कल्पांस्तिष्ठन् गङ्गानदीवालुकोपमान् कल्पानन्येष्वन्येषु गङ्गानदीवालु-
5 कोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सर्वैराक्रुष्टोऽभिहतः परिभाषितः समानः
R 166 उपलम्भसंज्ञी क्षान्तिं समादाय वर्तेत। एवं सर्वेऽपि ते सर्वैराक्रुष्टा अभिहताः परिभाषिताः समाना उपलम्भसंज्ञिनः क्षान्तिं समादाय वर्तेरन्। यश्च बोधिसत्त्वो महासत्त्वोऽनया प्रज्ञापारमितया उपायकौशल्येन च परिगृहीतोऽतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां शीलस्कन्धं समाधिस्कन्धं प्रज्ञास्कन्धं विमुक्तिस्कन्धं विमुक्तिज्ञानदर्शनस्कन्धं तेषां च
10 प्रत्येकबुद्धानां शीलसमाधिप्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनस्कन्धांस्तेषां च श्रावकाणां शील-समाधिप्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनस्कन्धान् सर्वसत्त्वानां च अतीतानागतप्रत्युत्पन्नं कुशल-
W 375 मूलं सर्वमेकतोऽभिसंक्षिप्य पिण्डयित्वा तुलयित्वा निरवशेष्य निरवशेषमनुमोदते अग्रया अनुमोदनया। श्रेष्ठया ज्येष्ठया वरया प्रवरया प्रणीतया उत्तमया अनुत्तमया निरुत्तमया उत्तरोत्तरया असमया असमसमया अप्रतिसमया अचिन्तया अनुमोदनया अनुमोदते।
15 अनुमोद्य अनुमोदनासहगतं पुण्यक्रियावस्तु अनुत्तरायां सम्यक्संबोधौ परिणामयति। अस्य सुभूते अनुमोदनासहगतस्य पुण्यक्रियावस्तुनोऽसौ पौर्वकाणामौपलम्भिकानां बोधिसत्त्वानां क्षान्तिसहगतः पुण्याभिसंस्कारः शततमीमपि कलां नोपैति, सहस्रतमीमपि शतसहस्रतमीमपि कोटीतमीमपि कोटीशततमीमपि कोटीसहस्रतमीमपि कोटीशतसहस्रतमीमपि कोटीनियुतशत-सहस्रतमीमपि कलां नोपैति, संख्यामपि कलामपि गणनामपि उपमामपि औपम्यमपि उप-[1]
20 निसामपि उपनिषदमपि न क्षमते। तत्कस्य हेतोः? तथा हि ते बोधिसत्त्वा उपलम्भसंज्ञिनः क्षान्तिं समादाय वर्तन्ते। तिष्ठन्तु खलु पुनः सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहा-
R 167 साहस्रेषु लोकधातुषु सर्वसत्त्वाः अनुत्तरां सम्यक्संबोधिमभिसंप्रस्थिताः। अनुत्तरां सम्यक्सं-बोधिमभिसंप्रस्थाय अन्येष्वन्येषु गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सर्वैराक्रुष्टा अभिहताः परिभाषिताः समानाः उपलम्भसंज्ञिनो गङ्गानदीवालुकोपमान् कल्पान्
W 376 25 क्षान्तिं समादाय वर्तमानाः। ये सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सत्त्वाः, ते सर्वेऽनुत्तरायां सम्यक्संबोधौ संप्रस्थिता भवेयुः, अनुत्तरायां सम्यक्सं-बोधौ संप्रस्थाय गङ्गानदीवालुकोपमान् कल्पांस्तिष्ठन्तश्चंक्रमाभिरूढा गङ्गानदीवालुकोपमान् कल्पान् अविषीदन्तो[2]ऽनभिभूताः स्त्यानमिद्धेनोपलम्भसंज्ञिनो वीर्यं समादाय वर्तेरन्। यश्च बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितोपायकौशल्यपरिगृहीतोऽतीतानागतप्रत्युत्पन्नानां बुद्धानां
30 भगवतां शीलसमाधिप्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनस्कन्धांस्तेषां च प्रत्येकबुद्धानां शीलसमाधि-प्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनस्कन्धांस्तेषां च श्रावकाणां शीलसमाधिप्रज्ञाविमुक्तिविमुक्तिज्ञान-

---

१ W om. उपनिसामपि. २ R विषीदन्तो.

दर्शनस्कन्धान् सर्वसत्त्वानां च अतीतानागतप्रत्युत्पन्नानान् कुशलमूलाभिसंस्कारान् सर्वानेकतोऽभिसंक्षिप्य पिण्डयित्वा तुलयित्वा निरवशेष्य निरवशेषमनुमोदते अग्रया अनुमोदनया। श्रेष्ठया ज्येष्ठया वरया प्रवरया प्रणीतया उत्तमया अनुत्तमया निरुत्तरया उत्तरोत्तरया असमया असमसमया अप्रतिसमया अचिन्त्यया अनुमोदनया अनुमोदते। अनुमोद्य अनुमोदनासहगतं पुण्यक्रियावस्तु अनुत्तरायां सम्यक्संबोधौ परिणामयति। अस्य सुभूते अनुमोदनासहगतस्य पुण्यक्रियावस्तुनोऽसौ पौर्वक औपलम्भिकानां बोधिसत्त्वानां वीर्यमयः पुण्याभिसंस्कारः शततमीमपि कलां नोपैति, सहस्रतमीमपि शतसहस्रतमीमपि कोटीतमीमपि कोटीशततमीमपि कोटीसहस्रतमीमपि कोटीशतसहस्रतमीमपि कोटीनियुतशतसहस्रतमीमपि कलां नोपैति, संख्यामपि कलामपि गणनामपि उपमामपि औपम्यमपि उपनिसामपि उपनिषदमपि न क्षमते। तत्कस्य हेतोः? तथा हि ते बोधिसत्त्वाः सर्वेऽप्युपलम्भसंज्ञिनो वीर्यं समादाय वर्तन्ते। तिष्ठन्तु खलु पुनः सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सर्वसत्त्वा अनुत्तरायां सम्यक्संबोधौ संप्रस्थिताः, अनुत्तरायां सम्यक्संबोधौ संप्रस्थाय गङ्गानदीवालुकोपमान् कल्पांस्तिष्ठन्तश्चंक्रमाभिरूढा गङ्गानदीवालुकोपमान् कल्पान् अविषीदन्तोऽनभिभूताः स्त्यानमिद्धेनोपलम्भसंज्ञिनो वीर्यं समादाय वर्तमानाः। येऽपि ते सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सत्त्वाः, ते सर्वेऽनुत्तरायां सम्यक्संबोधौ संप्रस्थिता भवेयुः। ते सर्वेऽनुत्तरायां सम्यक्संबोधौ संप्रस्थाय गङ्गानदीवालुकोपमान् कल्पानुपलम्भसंज्ञिनश्चत्वारि ध्यानानि समापद्येरन्। यश्च बोधिसत्त्वो महासत्त्वोऽनया प्रज्ञापारमितया उपायकौशल्येन च परिगृहीतोऽतीतानागतप्रत्युत्पन्नानां सर्वेषां बुद्धानां भगवतां शीलसमाधिप्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनस्कन्धांस्तेषां च प्रत्येकबुद्धानां शीलसमाधिप्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनस्कन्धांस्तेषां च श्रावकाणां शीलसमाधिप्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनस्कन्धान् सर्वसत्त्वानां च अतीतानागतप्रत्युत्पन्नान् कुशलमूलाभिसंस्कारान् सर्वानेकतोऽभिसंक्षिप्य पिण्डयित्वा तुलयित्वा निरवशेष्य निरवशेषमनुमोदते अग्रया अनुमोदनया। श्रेष्ठया ज्येष्ठया वरया प्रवरया प्रणीतया उत्तमया अनुत्तमया निरुत्तरया उत्तरोत्तरया असमया असमसमया अप्रतिसमया अचिन्त्यया अनुमोदनया अनुमोदते। अनुमोद्य अनुमोदनासहगतं पुण्यक्रियावस्तु अनुत्तरायां सम्यक्संबोधौ परिणामयति। अस्य सुभूते अनुमोदनासहगतस्य पुण्यक्रियावस्तुनोऽसौ पौर्वक औपलम्भिकानां बोधिसत्त्वानां चतुर्ध्यानमयः पुण्याभिसंस्कारः शततमीमपि कलां नोपैति, सहस्रतमीमपि शतसहस्रतमीमपि कोटीतमीमपि कोटीशततमीमपि कोटीसहस्रतमीमपि कोटीशतसहस्रतमीमपि कोटीनियुतशतसहस्रतमीमपि कलां नोपैति, संख्यामपि कलामपि गणनामपि उपमामपि औपम्यमपि उपनिसामपि उपनिषदमपि न क्षमते। तत्कस्य हेतोः? तथा हि ते बोधिसत्त्वा उपलम्भसंज्ञिनो ध्यानानि समापद्यन्ते इति॥

R 168 W 377 R 169 W 378

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायामनुमोदनापरिणामनापरिवर्तो नाम षष्ठः॥



## ७ निरयपरिवर्तः सप्तमः ।

R 170 W 379 अथ खल्वायुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्—सर्वज्ञज्ञानपरिनिष्पत्तिर्भगवन् प्रज्ञापारमिता, सर्वज्ञत्वं भगवन् प्रज्ञापारमिता । भगवानाह—एवमेतच्छारिपुत्र, एवमेतद्यथा वदसि । शारिपुत्र आह—अवभासकरी भगवन् प्रज्ञापारमिता । नमस्करोमि भगवन् प्रज्ञा-5 पारमितायै । नमस्करणीया भगवन् प्रज्ञापारमिता । अनुपलिप्ता भगवन् प्रज्ञापारमिता । सर्वलोकनिरुपलेपा भगवन् प्रज्ञापारमिता । आलोककरी भगवन् प्रज्ञापारमिता । सर्वत्रैधातुकवितिमिरकरी भगवन् प्रज्ञापारमिता । सर्वक्लेशदृष्ट्यन्धकारापनेत्री भगवन् प्रज्ञापारमिता । आश्रयणीया भगवन् प्रज्ञापारमिता । अग्र्यकरी भगवन् प्रज्ञापारमिता बोधिपक्षाणां धर्माणाम् । क्षेमङ्करी भगवन् प्रज्ञापारमिता । अन्धानां सत्त्वानामालोककरी भगवन् प्रज्ञापार-10 मिता । सर्वभयोपद्रवप्रहीणालोककरी भगवन् प्रज्ञापारमिता । पञ्चचक्षुःपरिग्रहं कृत्वा सर्वसत्त्वानां मार्गदर्शयित्री भगवन् प्रज्ञापारमिता । चक्षुर्भगवन् प्रज्ञापारमिता । मोहतमस्तिमिरविकरिणी[1] भगवन् प्रज्ञापारमिता । सर्वधर्माणामकरणी भगवन् प्रज्ञापारमिता । उत्पथ-R 171 W 380 प्रयातानां सत्त्वानां मार्गावतारणी भगवन् प्रज्ञापारमिता । सर्वज्ञतैव भगवन् प्रज्ञापारमिता । सर्वक्लेशज्ञेयावरणवासनानुसंधिप्रहीणतामुपादाय अनुत्पादिका भगवन् सर्वधर्माणां प्रज्ञापार-15 मिता । अनिरोधिका भगवन् सर्वधर्माणां प्रज्ञापारमिता । अनुत्पन्नानिरुद्धा भगवन् प्रज्ञापारमिता । स्वलक्षणशून्यतामुपादाय माता भगवन् बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमिता । सर्वबुद्धधर्मरत्नदात्रीत्वाद्दशबलकरी भगवन् प्रज्ञापारमिता । अनवमर्दनीया भगवन् प्रज्ञापारमिता । चतुर्वैशारद्यकरीत्वादनाथानां सत्त्वानां नाथकरी भगवन् प्रज्ञापारमिता । संसारप्रतिपक्षा भगवन् प्रज्ञापारमिता । अकूटस्थतामुपादाय सर्वधर्मस्वभावविदर्शनी भगवन् 20 प्रज्ञापारमिता । परिपूर्णत्रिपरिवर्तद्वादशाकारधर्मचक्रप्रवर्तनी भगवन् बुद्धानां भगवतां W 382 प्रज्ञापारमिता । कथं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां स्थातव्यम् ? कथं मनसि कर्तव्या भगवन् प्रज्ञापारमिता ? कथं भगवन् नमस्कर्तव्या प्रज्ञापारमिता ? एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्—यथा शारिपुत्र शास्तरि, तथा प्रज्ञापारमितायां स्थातव्यम् । तथैव मनसि कर्तव्या शारिपुत्र प्रज्ञापारमिता यथा शास्ता । तथैव नमस्कर्तव्या 25 शारिपुत्र प्रज्ञापारमिता यथा शास्ता ॥

R 172 W 383 अथ खलु शक्रस्य देवानामिन्द्रस्यैतदभूत्—कुतो नु बतेयमार्यस्य शारिपुत्रस्य पृच्छा जाता ? किंनिदाना बतेयमार्यस्य शारिपुत्रस्य पृच्छा जाता ? अथ खलु शक्रो देवानामिन्द्र आयुष्मन्तं शारिपुत्रमेतदवोचत्—कुत इयमार्यस्य शारिपुत्रस्य पृच्छा जाता ? किंनिदाना बतेयमार्यस्य शारिपुत्रस्य पृच्छा जाता ? एवमुक्ते आयुष्मान् शारिपुत्रः शक्रं देवानामिन्द्रमेतदवोचत्—30 प्रज्ञापारमितोपायकौशल्यपरिगृहीतः कौशिक बोधिसत्त्वो महासत्त्वोऽनुमोदनासहगतं पुण्यक्रियावस्तु सर्वज्ञतायां परिणामयंस्तेषां पौर्वकाणामौपलम्भिकानां बोधिसत्त्वानां यश्च

---

१ R W wrongly repeat तिमिरविकरिणी.

दानमयः पुण्याभिसंस्कारः, यश्च शीलमयो यश्च क्षान्तिमयो यश्च वीर्यमयो यश्च ध्यानमयः पुण्याभिसंस्कारः, तं सर्वमभिभवतीति । ममेयमेतन्निदाना पृच्छा जाता । अपि नु खलु पुनः कौशिक प्रज्ञापारमितैव पूर्वंगमा पञ्चानां पारमितानां सर्वज्ञतामार्गावताराय । तद्यथापि नाम कौशिक जात्यन्धानां शतं वा सहस्रं वा शतसहस्रं वा अपरिणायकमभव्यं मार्गावताराय, अभव्यं ग्रामं वा नगरं वा निगमं वा गन्तुम्, एवमेव कौशिक दानं शीलं क्षान्तिर्वीर्यं 5 ध्यानं च प्रज्ञापारमितानामधेयं लभते । जात्यन्धभूतं भवति विना प्रज्ञापारमितया अपरिणायकत्वात् । अभव्यं सर्वज्ञतामार्गावताराय । कुतः पुनः सर्वज्ञतामनुप्राप्स्यति ? यदा पुनः कौशिक दानं शीलं क्षान्तिर्वीर्यं ध्यानं च प्रज्ञापारमितापरिगृहीतं भवति, तदा W 384 पारमितानामधेयं पारमिताशब्दं लभते । तदा ह्यासां चक्षुःप्रतिलम्भो भवति पञ्चानां R 173 पारमितानां सर्वज्ञतामार्गावताराय सर्वज्ञतानुप्राप्तये ॥ 10

अथ खल्वायुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्—कथं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमिता अभिनिर्हर्तव्या ? एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्—रूपस्य शारिपुत्र अभिनिर्हारो द्रष्टव्यः । एवं वेदनायाः संज्ञायाः संस्काराणाम् । विज्ञानस्य शारिपुत्र W 385 अभिनिर्हारो द्रष्टव्यः । यः शारिपुत्र पञ्चानां स्कन्धानामभिनिर्हारः, अयं शारिपुत्र प्रज्ञापारमिताया अभिनिर्हार इत्युच्यते । एवमभिनिर्हारेण[1] पञ्चानां स्कन्धानामभिनिर्हारः प्रज्ञापार- 15 मिताया अभिनिर्हारोऽभिनिर्हार इत्युच्यते ॥

एवमुक्ते आयुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्—एवमभिनिर्हारेण अभिनिर्हृता भगवन् प्रज्ञापारमिता कतमं धर्ममर्पयति ? भगवानाह—एवमभिनिर्हृता शारिपुत्र प्रज्ञापारमिता न कंचिद्धर्ममर्पयति । यदा सा शारिपुत्र न कंचिद्धर्ममर्पयति, तदा प्रज्ञापारमितेति संख्यां गच्छति ॥ 20

अथ खलु शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—किमियं भगवन् प्रज्ञापारमिता सर्वज्ञतामपि नार्पयति ? भगवानाह—यत्कौशिक एवं वदसि—किमियं प्रज्ञापारमिता सर्वज्ञता- W 386 मपि नार्पयतीति ? न यथोपलम्भस्तथा अर्पयति, न यथा नाम तथार्पयति, न यथाभिसंस्कारस्तथार्पयति । शक्र आह—कथं तर्हि भगवन्नर्पयति ? भगवानाह—यथा कौशिक नार्पयति R 174 तथार्पयति । शक्र आह—आश्चर्यं भगवन् यावदियं प्रज्ञापारमिता न कंचिद्धर्ममुत्पादयति, न 25 कंचिद्धर्मं निरोधयति । सर्वधर्माणामनुत्पादाय अनिरोधाय प्रत्युपस्थिता अनुपस्थिता प्रज्ञापारमिता ॥

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—सचेदेवमपि भगवन् बोधिसत्त्वो महासत्त्वो संज्ञास्यते, दूरीकरिष्यति इमां प्रज्ञापारमिताम्, रिक्तीकरिष्यति इमां प्रज्ञापारमिताम्, तुच्छीकरिष्यति इमां प्रज्ञापारमिताम्, न करिष्यति इमां प्रज्ञापारमिताम् । एवमुक्ते भगवा- 30 W 387 नायुष्मन्तं सुभूतिमेतदवोचत्—एवमेतत्सुभूते, एवमेतत् । अस्त्येष सुभूते पर्यायो येन

[1] Ap W अनभिसंस्कारेण for अभिनिर्हारेण.

पर्यायेण दूरीकरिष्यतीमां प्रज्ञापारमिताम्, रिक्तीकरिष्यतीमां प्रज्ञापारमिताम्, तुच्छीकरिष्यतीमां प्रज्ञापारमिताम्, न करिष्यतीमां प्रज्ञापारमिताम् । तत्कस्य हेतोः? प्रज्ञापारमितायां हि सुभूते परिदीपितायां न रूपं परिदीपितं भवति । न वेदना न संज्ञा न संस्काराः । न विज्ञानं परिदीपितं भवति । न स्रोतआपत्तिफलं परिदीपितं भवति । न सकृदागामिफलं 5 परिदीपितं भवति । न अनागामिफलं परिदीपितं भवति । नार्हत्त्वं परिदीपितं भवति । न प्रत्येकबुद्धत्वं परिदीपितं भवति । न बुद्धत्वं परिदीपितं भवति ॥

R 175 W 388 स्थविरः सुभूतिराह–महापारमितेयं भगवन् यदुत प्रज्ञापारमिता । भगवानाह–तत्किं मन्यसे सुभूते कतमेन पर्यायेण महापारमितेयं यदुत प्रज्ञापारमिता? स्थविरः सुभूतिराह–न भगवन् रूपं महत्करोति नाल्पीकरोति, न रूपं संक्षिपति न विक्षिपति । एवं न वेदनां 10 न संज्ञां न संस्कारान् । न भगवन् विज्ञानं महत्करोति नाल्पीकरोति, न विज्ञानं संक्षिपति न विक्षिपति । यान्यपि तानि तथागतस्य तथागतबलानि, तान्यपि न बलीकरोति न दुर्बलीकरोति, न संक्षिपति न विक्षिपति । यापि सा सर्वज्ञता, तामपि न महत्करोति नाल्पीकरोति, न संक्षिपति न विक्षिपति । तत्कस्य हेतोः? असंक्षिप्ताविक्षिप्ता हि भगवन् सर्वज्ञता । सचेदेवमपि भगवन् बोधिसत्त्वो महासत्त्वः संजानीते, W 389 15 चरति प्रज्ञापारमितायाम् । किं पुनरेवं संजानानः–एवमहं सर्वज्ञज्ञानसमन्वागत सत्त्वेभ्यो धर्मं देशयिष्यामि, एवमिमान् सत्त्वान् परिनिर्वापयिष्यामीति । तत्कस्य हेतोः? न ह्येष प्रज्ञापारमितानिष्यन्दो य इमान् सत्त्वान् परिनिर्वापयिष्यामीति सत्त्वोपलम्भः । एष एवास्य महानुपलम्भः स्यात् । तत्कस्य हेतोः? सत्त्वास्वभावजातिका हि प्रज्ञापारमिता वेदितव्या । सत्त्वास्वभावतया प्रज्ञापारमितास्वभावता वेदितव्या । सत्त्वविविक्ततया प्रज्ञा- R 176 20 पारमिताविविक्तता वेदितव्या । सत्त्वाचिन्त्यतया प्रज्ञापारमिताचिन्त्यता वेदितव्या । सत्त्वाविनाशधर्मतया प्रज्ञापारमिताविनाशधर्मता वेदितव्या । सत्त्वानभिसंबोधनतया प्रज्ञापारमितानभिसंबोधनता वेदितव्या । सत्त्वयथाभूतार्थानभिसंबोधनतया प्रज्ञापारमितायथाभूता- W 390 र्थानभिसंबोधनता वेदितव्या । सत्त्वबलसमुदागमनतया तथागतबलसमुदागमनता वेदितव्या । अनेन भगवन् पर्यायेण महापारमितेयं यदुत प्रज्ञापारमिता ॥

25 अथ खल्वायुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्–यो भगवन् इह गम्भीरायां प्रज्ञापारमितायां बोधिसत्त्वो महासत्त्वोऽधिमोक्षयिष्यति न काङ्क्षिष्यति न विचिकित्सिष्यति न धन्धायिष्यति, कुतः स भगवंश्च्युत इहोपपन्नो वेदितव्यः, कियच्चिरचरितावी च स भगवन् बोधिसत्त्वो महासत्त्वो वेदितव्यः, य इमां प्रज्ञापारमितामर्थतश्च धर्मतश्च अर्थनयतश्च W 391 धर्मनयतश्च अनुगमिष्यति अनुभोत्स्यतेऽनुबोधयिष्यति च? एवमुक्ते भगवानायुष्मन्तं 30 शारिपुत्रमेतदवोचत्–स शारिपुत्र बोधिसत्त्वो महासत्त्वोऽन्येभ्यो लोकधातुभ्यश्च्युतो बुद्धान् भगवतः पर्युपास्य परिपृच्छ्य इहोपपन्नो वेदितव्यः । तत्कस्य हेतोः? यः कश्चिच्छारिपुत्र बोधिसत्त्वो महासत्त्वोऽन्येभ्यो लोकधातुभ्यश्च्युतो बुद्धान् भगवतः पर्युपास्य परिपृच्छ्य

इहोपपन्नो भवति, स इमां गम्भीरां प्रज्ञापारमितां भाष्यमाणां देश्यमानामुपदिश्यमानामुद्दिश्य-
मानां शृणुयात्, इमां प्रज्ञापारमितां श्रुत्वा अत्र शास्तृसंज्ञां प्रज्ञापारमितायामुत्पादयेत्—
शास्ता मे संमुखीभूत इति, शास्ता मे[1] दृष्ट इति चित्तमुत्पादयति। प्रज्ञापारमितायां भाष्य- R 177
माणायां देश्यमानायामुपदिश्यमानायामुद्दिश्यमानायां श्रोत्रमवदधाति, सत्कृत्य शृणोति, कथां
नोपच्छिनत्ति। चिरचरितावी स शारिपुत्र तथारूपो बोधिसत्त्वो महासत्त्वो वेदितव्यः। 5 W 392
बहुबुद्धपर्युपासितः स शारिपुत्र तथारूपो बोधिसत्त्वो महासत्त्वो वेदितव्यः॥

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—शक्या पुनर्भगवन् प्रज्ञापारमिता श्रोतुं
वा उपलक्षयितुं वा समन्वाहर्तुं वा उपपादयितुं वा उपधारयितुं वा? इयं सा प्रज्ञापारमिता,
इह वा सा प्रज्ञापारमिता, अमुत्र वा सा प्रज्ञापारमिता, अनेन वा आकारेण लिङ्गेन निमित्तेनेति
शक्या निर्देष्टुं वा श्रोतुं वा? भगवानाह—नो हीदं सुभूते। नेयं सुभूते प्रज्ञापारमिता 10
स्कन्धशो वा धातुशो वा आयतनशो वा शक्या निर्देष्टुं वा श्रोतुं वा उपलक्षयितुं वा
समन्वाहर्तुं वा उपपादयितुं वा उपधारयितुं वा। तत्कस्य हेतोः? सर्वधर्मविविक्तत्वात्सुभूते,
अत्यन्तविविक्तत्वात्सुभूते सर्वधर्माणां न शक्या प्रज्ञापारमिता निर्देष्टुं वा श्रोतुं वा उपलक्षयितुं
वा समन्वाहर्तुं वा उपपादयितुं वा उपधारयितुं वा। न चान्यत्र स्कन्धधात्वायतनेभ्यः W 393
प्रज्ञापारमिता अवबोद्धव्या। तत्कस्य हेतोः? स्कन्धधात्वायतनमेव हि सुभूते शून्यं 15
विविक्तं शान्तम्। इति हि प्रज्ञापारमिता च स्कन्धधात्वायतनं च अद्वयमेतदद्वैधीकारं
शून्यत्वाद्विविक्तत्वात्। एवं शान्तत्वान्नोपलभ्यते। योऽनुपलम्भः सर्वधर्माणाम्, सा प्रज्ञापार-
मितेत्युच्यते। यदा न भवति संज्ञा समज्ञा प्रज्ञप्तिर्व्यवहारः, तदा प्रज्ञापारमितेत्युच्यते॥

स्थविरः सुभूतिराह—कियच्चिरचरितावी स भगवन् बोधिसत्त्वो महासत्त्वो वेदितव्यो R 178
य इह गम्भीरायां प्रज्ञापारमितायां योगमापत्स्यते? भगवानाह—विभज्य व्याकरणीयमेत- 20
त्सुभूते बोधिसत्त्वानां महासत्त्वानामिन्द्रियाधिमात्रतया[2]। स्यात्खलु पुनः सुभूते पर्यायो येन W 394
पर्यायेण बोधिसत्त्वा बहूनि बुद्धशतानि बहूनि बुद्धसहस्राणि बहूनि बुद्धशतसहस्राणि दृष्ट्वा
तेषामन्तिके ब्रह्मचर्यं चरित्वा इमां प्रज्ञापारमितां न श्रद्दध्युर्नाधिमुच्येयुः। तत्कस्य हेतोः?
पूर्वमपि तेषां बुद्धानां भगवतामन्तिकादस्यां गम्भीरायां प्रज्ञापारमितायां भाष्यमाणायां
देश्यमानायामुपदिश्यमानायामगौरवता अभूत्। अगौरवतया अशुश्रूषणता, अशुश्रूषणतया 25
अपर्युपासनता, अपर्युपासनतया अपरिपृच्छनता, अपरिपृच्छनतया अश्रद्दधानता, अश्रद्दधान-
तया ततः पर्षद्भ्योऽपक्रान्ताः, ते ततोनिदानं धर्मव्यसनसंवर्तनीयेन कर्मणा कृतेन संचितेन
आचितेन उपचितेन एतर्ह्यपि गम्भीरायां प्रज्ञापारमितायां भाष्यमाणायां देश्यमानायामुप-
दिश्यमानायामपक्रामन्ति। अगौरवतया अश्रद्दधाना अनधिमुच्यन्तो न कायेन न चित्तेन
सामग्रीं ददति। ते सामग्रीमददाना इमां प्रज्ञापारमितां न जानन्ति न पश्यन्ति न 30
बुध्यन्ते न वेदयन्ते। एवं ते प्रज्ञापारमितां न श्रद्दधति। अश्रद्दधाना न शृण्वन्ति। W 395

---

१ W om. मे. २ W इन्द्रियविमात्रतया.

अशृण्वन्तो न जानन्ति। अजानन्तो न पश्यन्ति। अपश्यन्तो न बुध्यन्ते। अबुध्यमाना धर्मव्यसनसंवर्तनीयं कर्म कुर्वन्ति, संचिन्वन्ति आचिन्वन्ति उपचिन्वन्ति। ते तेन धर्मव्यसनसंवर्तनीयेन कर्मणा कृतेन संचितेन आचितेन उपचितेन दुष्प्रज्ञसंवर्तनीयं कर्माभिसंस्करिष्यन्ति। तेन ते दुष्प्रज्ञसंवर्तनीयेन कर्मणा अभिसंस्कृतेन संचितेनाचितेनोपचितेन इमां प्रज्ञापारमितां भाष्यमाणां देश्यमानामुपदिश्यमानां प्रत्याख्यास्यन्ति प्रतिक्षेप्स्यन्ति प्रतिक्रोक्ष्यन्ति, प्रतिक्षिप्य च अपक्रमिष्यन्ति। अस्याः खलु पुनः सुभूते प्रज्ञापारमितायाः प्रत्याख्यानेन प्रतिक्षेपेण प्रतिक्रोशेन अतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां सर्वज्ञता प्रत्याख्याता भवति, प्रतिक्षिप्ता भवति, प्रतिक्रुष्टा भवति। ते स्वसंतानानुपहत्य दग्धाः परेषामप्यल्पबुद्धिकानामल्पप्रज्ञानामल्पपुण्यानामल्पकुशलमूलानां पुद्गलानां श्रद्धामात्रकसमन्वागतानां प्रेममात्रकसमन्वागतानां प्रसादमात्रकसमन्वागतानां छन्दमात्रकसमन्वागतानामादिकर्मिकाणामभव्यरूपाणां तदपि श्रद्धामात्रकं प्रेममात्रकं प्रसादमात्रकं छन्दमात्रकं विच्छन्दयिष्यन्ति विवेचयिष्यन्ति विवर्तयिष्यन्ति, नात्र शिक्षितव्यमिति वक्ष्यन्ति, नैतद्बुद्धवचनमिति वाचं भाषिष्यन्ते। एवं ते आत्मसंतानानुपहत्य विवेच्य परसंतानानप्युपहत्य विवेच्य प्रज्ञापारमितामभ्याख्यास्यन्ति। प्रज्ञापारमितायामभ्याख्यातायां सर्वज्ञता अभ्याख्याता भवति। सर्वज्ञतायामभ्याख्यातायामतीतानागतप्रत्युत्पन्ना बुद्धा भगवन्तोऽभ्याख्याता भवन्ति। ते बुद्धानां भगवतामन्तिकादपक्रान्ता भविष्यन्ति, धर्मात्परिमुक्ता भविष्यन्ति, संघात्परिबाह्या भविष्यन्ति। एवं तेषां सर्वेण सर्वं सर्वथा सर्वं त्रिरत्नात्परिबाह्यभावो भविष्यति। ते सत्त्वानां हितसुखोपच्छेदक्रियया महानिरयविपाकसंवर्तनीयं कर्म उपचेष्यन्ति। ते अनेनैवंरूपेण कर्माभिसंस्कारेणोपस्थापितेन समुत्थापितेन धर्मव्यसनसंवर्तनीयेन दुष्प्रज्ञसंवर्तनीयेन कर्मणा बहूनि वर्षशतानि बहूनि वर्षसहस्राणि बहूनि वर्षशतसहस्राणि बहूनि वर्षकोटीशतानि बहूनि वर्षकोटीसहस्राणि बहूनि वर्षकोटीशतसहस्राणि बहूनि वर्षकोटीनियुतशतसहस्राणि महानिरयेषूपपत्स्यन्ते। ते महानिरयान्महानिरयं संक्रमिष्यन्ति। तेषां तथा सुचिरं महानिरयान्महानिरयं संक्रामतां तेजःसंवर्तनी प्रादुर्भविष्यति। तेजःसंवर्तन्यां प्रादुर्भूतायां येऽन्येषु लोकधातुषु महानिरयाः, तत्र ते क्षेप्स्यन्ते। ते तेषु महानिरयेषु उपपत्स्यन्ते। ते तत्र विक्षिप्तास्तेषु महानिरयेषूपपन्नाः समानास्तत्रापि महानिरयान्महानिरयं संक्रमिष्यन्ति। तेषां तत्रापि महानिरयान्महानिरयं संक्रामतां तत्रापि पुनरेव तथैव तेजःसंवर्तनी प्रादुर्भविष्यति। ते तस्यां तेजःसंवर्तन्यां प्रादुर्भूतायां ततश्च्युताः समानाः पुनरेव अन्येषु लोकधातुषु ये महानिरयास्तत्र क्षेप्स्यन्ते। ते तेषु महानिरयेषूपपत्स्यन्ते। ते तत्रापि तथैव महानिरयान्महानिरयं संक्रमिष्यन्ति। तेषां तत्रापि सुचिरं महानिरयान्महानिरयं संक्रामतां तत्रापि तथैव तेजःसंवर्तनी प्रादुर्भविष्यति। ते तस्यां तेजःसंवर्तन्यां प्रादुर्भूतायां पुनरेव ततश्च्युतास्तेनैव अक्षीणेन सावशेषेण कर्मणा इहैव लोकधातौ पुनः क्षेप्स्यन्ते। क्षिप्ताः सन्तो महानिरयेषूपपत्स्यन्ते। ते पुनरेव तानि महानिरयेषु महान्ति महानिरयदुःखानि

प्रत्यनुभविष्यन्ति। तावत्प्रत्यनुभविष्यन्ति, यावत्पुनरेव तेजःसंवर्तनी प्रादुर्भविष्यति। एवं ते बहुदुःखवेदनीयं कर्म प्रत्यनुभविष्यन्ति। तत्कस्य हेतोः? यथापि नाम दुर्भाषितत्वाद्वाचः॥ R 181 W 397

अथ खल्वायुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्–पञ्च भगवन् आनन्तर्याणि कर्माणि कृतान्युपचितानि अस्य मनोदुश्चरितस्य वाग्दुश्चरितस्य च न प्रतिवर्णिकान्यपि न अनुरूपाण्यपि न प्रतिरूपाण्यपि भवन्ति। भगवानाह–एवमेतच्छारिपुत्र, एवमेतत्। 5 पञ्चानन्तर्याणि शारिपुत्र कर्माणि कृतान्युपचितान्यस्य मनोदुश्चरितस्य च वाग्दुश्चरितस्य च न प्रतिवर्णिकान्यपि न अनुरूपाण्यपि न प्रतिरूपाण्यपि अस्य कर्मणः कृतस्य संचितस्य आचितस्य उपचितस्य। ये केचिदिमां गम्भीरा प्रज्ञापारमितां भाष्यमाणां देश्यमानामुपदिश्यमानामुद्दिश्यमानां प्रतिबाधितव्यां मंस्यन्ते, प्रतिक्षेप्स्यन्ति प्रतिक्रोक्ष्यन्ति, नात्र शिक्षितव्यमिति वक्ष्यन्ति, नेयं तथागतभाषितेति वाचं भाषिष्यन्ते, ततोऽन्यानपि सत्त्वान् 10 विवेचयिष्यन्ति। ते स्वसंतानानुपहत्य परसंतानानुपहनिष्यन्ति। ते स्वसंतानान् सविषान् कृत्वा परसंतानान् सविषान् करिष्यन्ति। स्वयं नष्टाः परानपि नाशयिष्यन्ति। स्वयं गम्भीरां प्रज्ञापारमितामजानाना अनवबुध्यमानाः परानपि ग्राहयिष्यन्ति, नात्र शिक्षितव्यमिति वाचं भाषिष्यन्ते। नाहं शारिपुत्र एवंरूपाणां पुद्गलानां दर्शनमप्यभ्यनुजानामि, कुतस्तैः सह संवासं कुतो वा लाभसत्कारं कुतः स्थानम्? तत्कस्य हेतोः? धर्मदूषका हि ते शारिपुत्र 15 तथारूपाः पुद्गला वेदितव्या इति। कसम्बकजातास्ते शारिपुत्र तथारूपाः पुद्गला वेदितव्याः। कृष्णाभिजातिकाः कृष्णाहिजातिकास्ते शारिपुत्र तथारूपाः पुद्गला वेदितव्याः। तेषां शारिपुत्र तथारूपाणां पुद्गलानां ये श्रोतव्यं मंस्यन्ते, सर्वे ते अनयेन व्यसनमापत्स्यन्ते। ये च शारिपुत्र प्रज्ञापारमितां दूषयन्ति, इमे ते शारिपुत्र धर्मदूषकाः पुद्गला वेदितव्याः। शारिपुत्र आह–न भगवता तस्य पुद्गलस्य तत्रोपपन्नस्य महानिरयगतस्यात्मभावस्य प्रमाणमाख्यातम्। 20 भगवानाह–तिष्ठतु शारिपुत्र तस्य पुद्गलस्य तत्रोपपन्नस्य महानिरयगतस्यात्मभावस्य प्रमाणम्। तत्कस्य हेतोः? मा तथारूपस्य पुद्गलस्य तदात्मभावस्य प्रमाणं श्रुत्वा उष्णं रुधिरं मुखादागच्छेत्, मरणं वा निगच्छेत्, मरणमात्रकं वा दुःखमागाढमाबाधं स्पृशेत्, दह्येत वा, शोकशल्यो वा अस्याविशेत्, महाप्रपातं वा प्रपतेत्, उपशुष्येत वा म्लायेत वा। नैव महाप्रतिभयं तस्यात्मभावस्य प्रमाणमश्रौषीद्यस्येमे दोषाः संविद्यन्ते॥ 25 R 182 W 399

न भगवानायुष्मतः शारिपुत्रस्यावकाशं करोति–इयत्तस्यात्मभावस्य प्रमाणं भविष्यतीति। द्वितीयकमपि तृतीयकमप्यायुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्–आख्यातु मे भगवांस्तस्य पुद्गलस्यात्मभावस्य प्रमाणम्। पश्चिमाया जनताया आलोकः कृतो भविष्यति–अनेन वाङ्मनःकर्मणा कृतेन संचितेनोपचितेनोपचितेन एवं महान्तं महानिरयेष्वात्मभावं परिगृह्णीतेति। भगवानाह–एष एव शारिपुत्र पश्चिमाया जनताया आलोकः कृतो भविष्यति, 30 यदनेन वाङ्मनोदुश्चरितेन अकुशलेन कर्माभिसंस्कारेण अभिसंस्कृतेन संचितेनाचितेनोपचितेन इयच्चिरदुःखं प्रत्यनुभविष्यतीति। या एतस्यैव शारिपुत्र दुःखस्याप्रमेयता बहुदुःखता W 400

R 183 व्याख्याता, एष एव शुक्लांशिकस्य कुलपुत्रस्य कुलदुहितुर्वा संवेगो भविष्यति । ततः स तेभ्यो धर्मव्यसनसंवर्तनीयेभ्यः कर्मभ्यो विनिवृत्य पुण्याभिसंस्कारमेव कुर्यात्, जीवितहेतोरपि सद्धर्मं न प्रतिक्षेप्स्यति–मा भूदस्माकमपि तादृशैर्दुःखैः समवधानमिति ॥

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्–सुसंवृतकायकर्मवाक्कर्ममनस्कर्मणा
W 401 5 भगवन् कुलपुत्रेण वा कुलदुहित्रा वा भवितव्यम् । तत्कस्य हेतोः? यत्र हि नाम भगवन् एवंरूपेण वाग्दुर्भाषितेन इयान् महापुण्यस्कन्धः प्रसूयते । कतमेन पुनर्भगवन् कर्मणा इयान् महापुण्यस्कन्धः प्रसूयते । भगवानाह–एवंरूपेण सुभूते वाग्दुर्भाषितेन इयान् महापुण्यस्कन्धः प्रसूयते । इहैव ते सुभूते मोहपुरुषाः स्वाख्याते धर्मविनये प्रव्रजिता भविष्यन्ति, य इमां गम्भीरां प्रज्ञापारमितां दूषयितव्यां मंस्यन्ते, प्रतिक्षेप्तव्यां मंस्यन्ते,
10 प्रतिबाधितव्यां मंस्यन्ते । प्रज्ञापारमितायां च प्रतिबाधितायां बुद्धानां भगवतां [बुद्धबोधिः] प्रतिबाधिता भवति । बुद्धबोधौ प्रतिबाधितायामतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां सर्वज्ञता प्रतिबाधिता भवति । सर्वज्ञतायां प्रतिबाधितायां सद्धर्मः प्रतिबाधितो भवति । सद्धर्मे प्रतिबाधिते तथागतश्रावकसंघः प्रतिबाधितो भवति । तथागतश्रावकसंघेऽपि प्रतिबाधिते एवं तस्य सर्वेण सर्वं सर्वथा सर्वं त्रिरत्नात्परिबाह्यभावो भवति, अप्रमेयासंख्येयतरश्च
15 महानकुशलकर्माभिसंस्कारः परिगृहीतो भवति ॥

W 402
R 184 एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्–कोऽत्र भगवन् हेतुः कः प्रत्ययो यत्स कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितां प्रतिबाधितव्यां मंस्यते? भगवानाह–
W 403 माराधिष्ठितो वा सुभूते स कुलपुत्रो वा कुलदुहिता वा भविष्यति । दुष्प्रज्ञसंवर्तनीयेन वा कर्मणा गम्भीरेषु धर्मेषु नास्य श्रद्धा, नास्य प्रसादः । आभ्यां सुभूते द्वाभ्यां पापाभ्यां
20 धर्माभ्यां समन्वागतः स कुलपुत्रो वा कुलदुहिता वा इमां प्रज्ञापारमितां प्रतिबाधिष्यते । पुनरपरं सुभूते स कुलपुत्रो वा कुलदुहिता वा पापमित्रहस्तगतो वा भविष्यति, अनभियुक्तो वा भविष्यति, स्कन्धाभिनिविष्टो वा भविष्यति, आत्मोत्कर्षी परेषां पंसको दोषान्तरप्रेक्षी वा भविष्यति । एभिरपि सुभूते चतुर्भिराकारैः स कुलपुत्रो वा कुलदुहिता वा समन्वागतो भविष्यति, य इमां प्रज्ञापारमितां भाष्यमाणां देश्यमानामुपदिश्यमानां प्रतिबाधितव्यां
25 मंस्यते इति ॥

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां निरयपरिवर्तो नाम सप्तमः ॥

## ८ विशुद्धिपरिवर्तोऽष्टमः ।

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—दुरधिमोचा भगवन् प्रज्ञापारमिता अनभियुक्तेन कुशलमूलविरहितेन पापमित्रहस्तगतेन । भगवानाह—एवमेतत्सुभूते, एवमेतत् । दुरधिमोचा सुभूते प्रज्ञापारमिता अनभियुक्तेन परीत्तकुशलमूलेन दुर्मेधसा अनर्थिकेन अल्पश्रुतेन हीनप्रज्ञेन पापमित्रोपस्तब्धेन अशुश्रूषणापरिपृच्छकजातीयेन कुशलेषु धर्मेष्वनभियुक्तेन ॥ R 185 W 405 5

सुभूतिराह—कियद्गम्भीरा बतेयं भगवन् प्रज्ञापारमिता दुरधिमोचतया ? भगवानाह—रूपं सुभूते अबद्धममुक्तम् । तत्कस्य हेतोः ? रूपास्वभावत्वात्सुभूते रूपमबद्धममुक्तम् । एवं वेदना संज्ञा संस्काराः । विज्ञानं सुभूते अबद्धममुक्तम् । तत्कस्य हेतोः ? विज्ञानास्वभावत्वात्सुभूते विज्ञानमबद्धममुक्तम् । रूपस्य सुभूते पूर्वान्तोऽबद्धोऽमुक्तः । तत्कस्य हेतोः ? 10 W 406 पूर्वान्तास्वभावं हि सुभूते रूपम् । रूपस्य सुभूते अपरान्तोऽबद्धोऽमुक्तः । तत्कस्य हेतोः ? अपरान्तास्वभावं हि सुभूते रूपम् । प्रत्युत्पन्नं सुभूते रूपमबद्धमुक्तम् । तत्कस्य हेतोः ? प्रत्युत्पन्नास्वभावं हि सुभूते प्रत्युत्पन्नं रूपम् । एवं वेदना संज्ञा संस्काराः । विज्ञानस्य R 186 सुभूते पूर्वान्तोऽबद्धोऽमुक्तः । तत्कस्य हेतोः ? पूर्वान्तास्वभावं हि सुभूते विज्ञानम् । विज्ञानस्य सुभूते अपरान्तोऽबद्धोऽमुक्तः । तत्कस्य हेतोः ? अपरान्तास्वभावं हि सुभूते 15 विज्ञानम् । प्रत्युत्पन्नं सुभूते विज्ञानमबद्धममुक्तम् । तत्कस्य हेतोः ? प्रत्युत्पन्नास्वभावं हि सुभूते प्रत्युत्पन्नं विज्ञानम् ॥

सुभूतिराह—दुरधिमोचा भगवन् प्रज्ञापारमिता, परमदुरधिमोचा भगवन् प्रज्ञापारमिता अनभियुक्तेन अनवरोपितकुशलमूलेन पापमित्रहस्तगतेन मारवशगतेन कुसीदेन हीनवीर्येण मुषितस्मृतिना दुष्प्रज्ञेन । भगवानाह—एवमेतत्सुभूते, एवमेतत् । दुरधिमोचा 20 W 407 सुभूते प्रज्ञापारमिता, परमदुरधिमोचा सुभूते प्रज्ञापारमिता अनभियुक्तेन अनवरोपितकुशलमूलेन पापमित्रहस्तगतेन मारवशगतेन कुसीदेन हीनवीर्येण मुषितस्मृतिना दुष्प्रज्ञेन । तत्कस्य हेतोः ? या सुभूते रूपविशुद्धिः, सा फलविशुद्धिः, या फलविशुद्धिः, सा रूपविशुद्धिः । इति हि सुभूते रूपविशुद्धिश्च फलविशुद्धिश्च अद्वयमेतदद्वैधीकारमभिन्नमच्छिन्नम् । इति हि सुभूते फलविशुद्धितो रूपविशुद्धी रूपविशुद्धितः फलविशुद्धिः । एवं वेदनासंज्ञा- 25 संस्काराः । या सुभूते विज्ञानविशुद्धिः, सा फलविशुद्धिः, या फलविशुद्धिः सा विज्ञानविशुद्धिः । इति हि सुभूते विज्ञानविशुद्धिश्च फलविशुद्धिश्च अद्वयमेतदद्वैधीकारमभिन्नमच्छिन्नम् । इति हि सुभूते फलविशुद्धितो विज्ञानविशुद्धिर्विज्ञानविशुद्धितः फलविशुद्धिः । पुनरपरं सुभूते या रूपविशुद्धिः सा सर्वज्ञताविशुद्धिः, या सर्वज्ञताविशुद्धिः सा रूप- W 408 R 187 विशुद्धिः । इति हि सुभूते रूपविशुद्धिश्च सर्वज्ञताविशुद्धिश्च अद्वयमेतदद्वैधीकारमभिन्न- 30 मच्छिन्नम् । इति हि सुभूते सर्वज्ञताविशुद्धितो रूपविशुद्धिः, रूपविशुद्धितः सर्वज्ञताविशुद्धिः । एवं वेदनासंज्ञासंस्काराः । या सुभूते विज्ञानविशुद्धिः सा सर्वज्ञताविशुद्धिः । या सर्वज्ञता-

विशुद्धिः सा विज्ञानविशुद्धिः। इति हि सुभूते विज्ञानविशुद्धिश्च सर्वज्ञताविशुद्धिश्च अद्वयमेतदद्वैधीकारमभिन्नमच्छिन्नम्। इति हि सुभूते सर्वज्ञताविशुद्धितो विज्ञानविशुद्धिः, विज्ञानविशुद्धितः सर्वज्ञताविशुद्धिः॥

W 409 अथ खल्वायुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्–गम्भीरा भगवन् प्रज्ञापारमिता। 5 भगवानाह–विशुद्धत्वाच्छारिपुत्र। आह–अवभासकरी भगवन् प्रज्ञापारमिता। भगवानाह–विशुद्धत्वाच्छारिपुत्र। आह–आलोको भगवन् प्रज्ञापारमिता। भगवानाह–विशुद्धत्वाच्छारिपुत्र। आह–अप्रतिसंधिर्भगवन् प्रज्ञापारमिता। भगवानाह–विशुद्धत्वाच्छारिपुत्र। आह–असंक्लेशो भगवन् प्रज्ञापारमिता। भगवानाह–विशुद्धत्वाच्छारिपुत्र। आह–अप्राप्तिरनभिसमयो भगवन् प्रज्ञापारमिता। भगवानाह–विशुद्धत्वाच्छारिपुत्र। आह–अनभि- R 188 10 निर्वृत्तिर्भगवन् प्रज्ञापारमिता। भगवानाह–विशुद्धत्वाच्छारिपुत्र। आह–अत्यन्तानुपपत्तिर्भगवन् प्रज्ञापारमिता कामधातुरूपधात्वारूप्यधातुषु। भगवानाह–विशुद्धत्वाच्छारिपुत्र। W 410 आह–न जानाति न संजानीते भगवन् प्रज्ञापारमिता। भगवानाह–विशुद्धत्वाच्छारिपुत्र। आह–किं भगवन्[1] प्रज्ञापारमिता न जानाति न संजानीते? भगवानाह–रूपं शारिपुत्र प्रज्ञापारमिता न जानाति न संजानीते। तत्कस्य हेतोः? विशुद्धत्वाच्छारिपुत्र। एवं वेदना- 15 संज्ञासंस्काराः। विज्ञानं शारिपुत्र प्रज्ञापारमिता न जानाति न संजानीते। तत्कस्य हेतोः? विशुद्धत्वाच्छारिपुत्र। आह–प्रज्ञापारमिता भगवन् सर्वज्ञताया नापकारं करोति, नोपकारं करोति? भगवानाह–विशुद्धत्वाच्छारिपुत्र। आह–प्रज्ञापारमिता भगवन् न कंचि- W 411 द्धर्मं परिगृह्णाति, न परित्यजति? भगवानाह–विशुद्धत्वाच्छारिपुत्र। अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्–आत्मविशुद्धितो भगवन् रूपविशुद्धिः? भगवानाह–अत्यन्त- 20 विशुद्धत्वात्सुभूते। आह–आत्मविशुद्धितो भगवन् वेदनासंज्ञासंस्कारविशुद्धिः। आत्मवि- R 189 शुद्धितो भगवन् विज्ञानविशुद्धिः? भगवानाह–अत्यन्तविशुद्धत्वात्सुभूते। आह–आत्मविशु- W 412 द्धितो भगवन् फलविशुद्धिः? भगवानाह–अत्यन्तविशुद्धत्वात्सुभूते। आह–आत्मविशुद्धितो भगवन् सर्वज्ञताविशुद्धिः? भगवानाह–अत्यन्तविशुद्धत्वात्सुभूते। आह–आत्मविशुद्धितो भगवन् न प्राप्तिर्नाभिसमयः? भगवानाह–अत्यन्तविशुद्धत्वात्सुभूते। आह–आत्मापर्यन्ततया 25 भगवन् रूपापर्यन्तता? भगवानाह–अत्यन्तविशुद्धत्वात्सुभूते। आह–आत्मापर्यन्ततया भगवन् वेदनासंज्ञासंस्कारविज्ञानापर्यन्तता? भगवानाह–अत्यन्तविशुद्धत्वात्सुभूते। आह– W 413 य एवमस्य बोधिसत्त्वस्य महासत्त्वस्य भगवन् अवबोधः, इयमस्य प्रज्ञापारमिता? भगवानाह–अत्यन्तविशुद्धत्वात्सुभूते। आयुष्मान् सुभूतिराह–सा खलु पुनरियं भगवन् प्रज्ञापारमिता नापरे तीरे, न परे तीरे, नाप्युभयमन्तरेण विप्रकृता स्थिता। भगवानाह–अत्यन्तविशुद्धत्वात्सुभूते॥

W 414 R 190 30 आयुष्मान् सुभूतिराह–एवमपि भगवन् संज्ञास्यते बोधिसत्त्वो महासत्त्वो रिञ्चिष्यतीमां प्रज्ञापारमितां दूरीकरिष्यतीमां प्रज्ञापारमिताम्। भगवानाह–साधु साधु सुभूते। एवमेतत्

---

१ W पुनर्भगवन्.

सुभूते, एवमेतत् । तत्कस्य हेतोः ? नामतोऽपि हि सुभूतो सङ्गो निमित्ततोऽपि सङ्गः ।
एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्–आश्चर्यं भगवन् यावदियं प्रज्ञापारमिता W 415
स्वाख्याता सुनिर्दिष्टा सुपरिनिष्ठिता, यत्र हि नाम भगवता इमेऽपि सङ्गा आख्याताः ।
अथ खल्वायुष्मान् शारिपुत्र आयुष्मन्तं सुभूतिमेतदवोचत्–कतमे ते आयुष्मन् सुभूते
सङ्गाः ? सुभूतिराह–रूपमायुष्मन् शारिपुत्र शून्यमिति सङ्गः । एवं वेदनासंज्ञासंस्काराः । 5
विज्ञानमायुष्मन् शारिपुत्र शून्यमिति सङ्गः । अतीतेषु धर्मेष्वतीता धर्मा इति संजानीते,
सङ्गः । अनागतेषु धर्मेष्वनागता धर्मा इति संजानीते, सङ्गः । प्रत्युत्पन्नेषु धर्मेषु
प्रत्युत्पन्ना धर्मा इति संजानीते, सङ्गः । इयन्तं पुण्यस्कन्धं प्रसूयते बोधिसत्त्वयानिकः
पुद्गलः प्रथमेन चित्तोत्पादेनेति संजानीते, सङ्गः ॥

अथ खलु शक्रो देवानामिन्द्र आयुष्मन्तं सुभूतिमेतदवोचत्–कतमेन आर्य सुभूते 10 W 416
पर्यायेण सङ्गः ? सुभूतिराह–सचेत्कौशिक तद्बोधिचित्तं संजानीते–इदं तत्प्रथमं बोधिचित्त-
मिति, अनुत्तरायां सम्यक्संबोधौ परिणामयामीति परिणामयति । न च चित्तप्रकृतिः शक्या
परिणामयितुं तेन कुलपुत्रेण वा कुलदुहित्रा वा महायानसंप्रस्थितेन । तस्मात्तर्हि कौशिक परं
संदर्शयता समादापयता समुत्तेजयता संप्रहर्षयता अनुत्तरायां सम्यक्संबोधौ भूतानुगमेन W 417
संदर्शयितव्यं समादापयितव्यं समुत्तेजयितव्यं संप्रहर्षयितव्यम् । एवमात्मानं च न क्षिणोति, 15 R 191
बुद्धानुज्ञातया च समादापनया परं समादापयति स कुलपुत्रो वा कुलदुहिता वा ।
इमाश्चास्य सर्वाः सङ्गकोट्यो विवर्जिता भवन्ति ॥

अथ खलु भगवानायुष्मते सुभूतये साधुकारमदात्–साधु साधु सुभूते, यस्त्वं
बोधिसत्त्वान् महासत्त्वानिमाः सङ्गकोटीर्बोधयसि । तेन हि सुभूते अन्यानपि सूक्ष्मतरान्
सङ्गानाख्यास्यामि, तान् शृणु, साधु च सुष्ठु च मनसि कुरु । भाषिष्येऽहं ते । साधु भगवन् 20
इत्यायुष्मान् सुभूतिर्भगवतः प्रत्यश्रौषीत् ॥

भगवानेतदवोचत्–इह सुभूते श्राद्धः कुलपुत्रो वा कुलदुहिता वा तथागतमर्हन्तं
सम्यक्संबुद्धं निमित्ततो मनसि करोति । यावन्ति खलु पुनः सुभूते निमित्तानि, तावन्तः W 418
सङ्गाः । तत्कस्य हेतोः ? निमित्ततो हि सुभूते सङ्गः । इति हि सोऽतीतानागतप्रत्युत्पन्नानां
बुद्धानां भगवतां ये अनास्रवा धर्मास्ताननुमोदे इत्यनुमोद्य अनुमोदनासहगतं कुशलमूल- 25
मनुत्तरायां सम्यक्संबोधौ परिणामयामीति परिणामयति । या खलु पुनः सुभूते धर्माणां
धर्मता, न सा अतीता वा अनागता वा प्रत्युत्पन्ना वा । या नातीता नानागता न प्रत्युत्पन्ना,
सा त्र्यध्वनिर्मुक्ता । या त्र्यध्वनिर्मुक्ता, न सा शक्या परिणामयितुं न निमित्तीकर्तुं
नारम्बणीकर्तुम् । नापि सा दृष्टश्रुतमतविज्ञाता ॥

सुभूतिराह–गम्भीरा भगवन् प्रकृतिर्धर्माणाम् । भगवानाह–विविक्तत्वात्सुभूते । 30 R 192 W 419
आह–प्रकृतिगम्भीरा भगवन् प्रज्ञापारमिता । भगवानाह–प्रकृतिविशुद्धत्वात्सुभूते । प्रकृति-

विविक्तत्वात्प्रकृतिगम्भीरा प्रज्ञापारमिता। सुभूतिराह–प्रकृतिविविक्ता भगवन् प्रज्ञापारमिता। नमस्करोमि भगवन् प्रज्ञापारमितायै॥

W 420 भगवानाह–सर्वधर्मा अपि सुभूते प्रकृतिविविक्ताः। या च सुभूते सर्वधर्माणां प्रकृतिविविक्तता, सा प्रज्ञापारमिता। तत्कस्य हेतोः? तथा हि सुभूते अकृताः सर्वधर्मा-
5 स्तथागतेनार्हता सम्यक्संबुद्धेनाभिसंबुद्धाः। सुभूतिराह–तस्मात्तर्हि भगवन् सर्वधर्मा अनभिसंबुद्धास्तथागतेनार्हता सम्यक्संबुद्धेन? भगवानाह–तथाहि सुभूते प्रकृत्यैव न ते धर्माः किंचित्। या च प्रकृतिः, सा अप्रकृतिः, या च प्रकृतिः, सा प्रकृतिः सर्वधर्माणा-
W 421 मेकलक्षणत्वाद्यदुत अलक्षणत्वात्। तस्मात्तर्हि सुभूते सर्वधर्मा अनभिसंबुद्धास्तथागते-नार्हता सम्यक्संबुद्धेन। तत्कस्य हेतोः? न हि सुभूते द्वे धर्मप्रकृती। एकैव हि सुभूते
10 सर्वधर्माणां प्रकृतिः। या च सुभूते सर्वधर्माणां प्रकृतिः, सा अप्रकृतिः, या च अप्रकृतिः, सा प्रकृतिः। एवमेताः सुभूते सर्वाः सङ्गकोट्यो विवर्जिता भवन्ति॥

R 193 सुभूतिराह–गम्भीरा भगवन् प्रज्ञापारमिता। भगवानाह–आकाशगम्भीरतया सुभूते गम्भीरा प्रज्ञापारमिता। सुभूतिराह–दुरनुबोधा भगवन् प्रज्ञापारमिता। भगवानाह–तथा हि सुभूते न कश्चिदभिसंबुध्यते। आह–अचिन्त्या भगवन् प्रज्ञापारमिता। भगवानाह–
15 तथा हि सुभूते प्रज्ञापारमिता न चित्तेन ज्ञातव्या न चित्तगमनीया। आह–अकृता भगवन् प्रज्ञापारमिता। भगवानाह–कारकानुपलब्धितः सुभूते अकृता प्रज्ञापारमिता॥

W 424 आह–तेन हि भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां कथं चरितव्यम्? भगवानाह–सचेत्सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्न रूपे चरति, चरति प्रज्ञापारमितायाम्। एवं सचेन्न वेदनायां न संज्ञायां न संस्कारेषु। सचेन्न विज्ञाने चरति, चरति
20 प्रज्ञापारमितायाम्। सचेद्रूपमनित्यमिति न चरति, चरति प्रज्ञापारमितायाम्। एवं वेदना-संज्ञासंस्काराः। सचेद्विज्ञानमनित्यमिति न चरति, चरति प्रज्ञापारमितायाम्। सचेद्रूपं शून्यमिति न चरति, चरति प्रज्ञापारमितायाम्। एवं वेदनासंज्ञासंस्काराः। सचेद्विज्ञानं
R 194 शून्यमिति न चरति, चरति प्रज्ञापारमितायाम्। सचेद्रूपमप्रतिपूर्णं प्रतिपूर्णमिति न चरति, चरति प्रज्ञापारमितायाम्। या च रूपस्याप्रतिपूर्णता प्रतिपूर्णता वा, न तद्रूपम्। एवं
25 वेदनासंज्ञासंस्काराः। सचेद्विज्ञानमप्रतिपूर्णं प्रतिपूर्णमिति न चरति, चरति प्रज्ञापार-मितायाम्। या च विज्ञानस्याप्रतिपूर्णता प्रतिपूर्णता वा, न तद्विज्ञानम्। सचेदेवमपि न चरति, चरति प्रज्ञापारमितायाम्॥

W 425 एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्–आश्चर्यं भगवन् यावद्यदेवं बोधि-सत्त्वानां महासत्त्वानां ससङ्गता च असङ्गता च ख्याताः। भगवानाह–रूपं ससङ्गमसङ्गमिति
30 सुभूते न चरति, चरति प्रज्ञापारमितायाम्। एवं वेदनासंज्ञासंस्काराः। विज्ञानं ससङ्ग-मसङ्गमिति सुभूते न चरति, चरति प्रज्ञापारमितायाम्। चक्षुः ससङ्गमसङ्गमिति न चरति,

चरति प्रज्ञापारमितायाम्। एवं यावन्मनःसंस्पर्शजा वेदना ससङ्गासङ्गेति न चरति, चरति प्रज्ञापारमितायाम्। पृथिवीधातुः ससङ्गोऽसङ्ग इति न चरति, चरति प्रज्ञापारमितायाम्। यावद्विज्ञानधातुः ससङ्गोऽसङ्ग इति न चरति, चरति प्रज्ञापारमितायाम्। दानपारमिता ससङ्गासङ्गेति न चरति, चरति प्रज्ञापारमितायाम्। एवं शीलपारमिता क्षान्तिपारमिता वीर्यपारमिता ध्यानपारमिता। प्रज्ञापारमिता ससङ्गासङ्गेति न चरति, चरति प्रज्ञापार- 5 मितायाम्। एवं सप्तत्रिंशद्बोधिपक्षा धर्मा बलानि वैशारद्यानि प्रतिसंविदो अष्टादशावेणिका बुद्धधर्माः ससङ्गासङ्गा इति न चरति, चरति प्रज्ञापारमितायाम्। स्रोतआपत्तिफलं ससङ्ग- मसङ्गमिति न चरति, चरति प्रज्ञापारमितायाम्। एवं सकृदागामिफलमनागामिफलमर्हत्त्वं ससङ्गमसङ्गमिति न चरति, चरति प्रज्ञापारमितायाम्। प्रत्येकबुद्धत्वं ससङ्गमसङ्गमिति न चरति, चरति प्रज्ञापारमितायाम्। बुद्धत्वं ससङ्गमसङ्गमिति न चरति, चरति प्रज्ञापार- 10 मितायाम्। सर्वज्ञतापि सुभूते ससङ्गासङ्गेति न चरति, चरति प्रज्ञापारमितायाम्। एवं चरन् सुभूते बोधिसत्त्वो महासत्त्वो न रूपे सङ्गं जनयति, न वेदनायां न संज्ञायां न संस्कारेषु। न विज्ञाने सङ्गं जनयति। न चक्षुषि सङ्गं जनयति। यावन्न मनःसंस्पर्श- जायां वेदनायां सङ्गं जनयति। न पृथिवीधातौ सङ्गं जनयति, यावन्न विज्ञानधातौ सङ्गं जनयति, न दानपारमितायां सङ्गं जनयति, न शीलपारमितायां न क्षान्तिपारमितायां न 15 वीर्यपारमितायां न ध्यानपारमितायां न प्रज्ञापारमितायां सङ्गं जनयति, न बोधिपक्षेषु धर्मेषु, न बलेषु, न वैशारद्येषु, न प्रतिसंवित्सु, नाष्टादशस्वावेणिकेषु बुद्धधर्मेषु सङ्गं जनयति, न स्रोतआपत्तिफले सङ्गं जनयति, न सकृदागामिफले न अनागामिफले न अर्हत्त्वे सङ्गं जनयति, न प्रत्येकबुद्धत्वे सङ्गं जनयति, न बुद्धत्वे सङ्गं जनयति, नापि सर्वज्ञतायां सङ्गं जनयति। तत्कस्य हेतोः? असक्ता अबद्धा अमुक्ता असमतिक्रान्ता हि सुभूते सर्व- 20 ज्ञता। एवं हि सुभूते सर्वसङ्गसमतिक्रमाय बोधिसत्त्वैर्महासत्त्वैः प्रज्ञापारमितायां चरितव्यम्॥

R 195 W 426 W 427

सुभूतिराह—आश्चर्यं भगवन्, यावद्गम्भीरोऽयं भगवन् धर्मः प्रज्ञापारमिता नाम। या देश्यमानापि न परिहीयते, अदेश्यमानापि न परिहीयते। देश्यमानापि न वर्धते। अदेश्यमानापि न वर्धते। एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—साधु साधु सुभूते। एवमेतत्सुभूते, एवमेतत्। तद्यथापि नाम सुभूते तथागतोऽर्हन् सम्यक्संबुद्धो यावज्जीवं 25 तिष्ठन्नाकाशस्य वर्णं भाषेत, नाकाशस्य वृद्धिर्भवेत्। अभाष्यमाणेऽपि वर्णे नैवाकाशस्य परिहानिर्भवेत्। तद्यथापि नाम सुभूते मायापुरुषो भाष्यमाणेऽपि वर्णे नानुनीयते न संक्लिश्यते, अभाष्यमाणेऽपि वर्णे न प्रतिहन्यते, न संक्लिश्यते। एवमेव सुभूते या धर्माणां धर्मता, सा देश्यमानापि तावत्येव, अदेश्यमानापि तावत्येव॥

R 196 W 428

स्थविरः सुभूतिराह—दुष्करकारको भगवन् बोधिसत्त्वो महासत्त्वो यो गम्भीरायां 30 प्रज्ञापारमितायां चरन् प्रज्ञापारमितां भावयन् न संसीदति नोत्प्लवते। अत्र च नाम योगमापद्यते, न च प्रत्युदावर्तते। आकाशभावनैषा भगवन् यदुत प्रज्ञापारमिताभावना।

नमस्कर्तव्यास्ते भगवन् बोधिसत्त्वा महासत्त्वाः, यैरयं संनाहः संनद्धः। तत्कस्य हेतोः? आकाशेन सार्धं स भगवन् संनद्धुकामो यः सत्त्वानां कृतशः संनाहं बध्नाति। महासंनाहसंनद्धो भगवन् बोधिसत्त्वो महासत्त्वः। शूरो भगवन् बोधिसत्त्वो महासत्त्वो य आकाशसमानां सत्त्वानां धर्मधातुसमानां सत्त्वानां कृतशः संनाहं संनद्धुकामोऽनुत्तरां सम्यक्संबोधिमभि-
W 429 R 197 5 संबोद्धुकामः। आकाशं स भगवन् परिमोचयितुकामः। आकाशं स भगवन् उत्क्षेप्तुकामः। महावीर्यपारमितासंनाहप्राप्तः स भगवन् बोधिसत्त्वो महासत्त्वो य आकाशसमानां धर्मधातुसमानां सत्त्वानां कृतशः संनाहं संनह्यते॥

अथ खल्वन्यतमो भिक्षुर्येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्—नमस्करोमि भगवन् प्रज्ञापारमितायै। तथा हि भगवन् प्रज्ञापारमिता न कंचिद्धर्ममुत्पादयति, न कंचिद्धर्मं
10 निरोधयति॥

अथ खलु शक्रो देवानामिन्द्र आयुष्मन्तं सुभूतिमेतदवोचत्—य आर्य सुभूते अत्र प्रज्ञापारमितायामेव योगमापत्स्यते, क्व स योगमापत्स्यते? सुभूतिराह—आकाशे स कौशिक योगमापत्स्यते, यः प्रज्ञापारमितायां योगमापत्स्यते। अभ्यवकाशे स कौशिक योगमापत्स्यते,
W 430 यः प्रज्ञापारमितायां शिक्षितव्यं योगमापत्तव्यं मंस्यते॥

15 अथ खलु शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—आज्ञापयतु भगवान्। तस्य कुलपुत्रस्य वा कुलदुहितुर्वा रक्षावरणगुप्तिं करोमि य इमां प्रज्ञापारमितां धारयति। अथ खल्वायुष्मान् सुभूतिः शक्रं देवानामिन्द्रमेतदवोचत्—समनुपश्यसि त्वं कौशिक तं धर्मं यस्य धर्मस्य रक्षावरणगुप्तिं करिष्यसि? शक्र आह—नो हीदमार्य सुभूते। सुभूतिराह—एवं कौशिक सचेद्बोधिसत्त्वो महासत्त्वो यथानिर्दिष्टायां प्रज्ञापारमितायां स्थास्यति, सैव तस्य
20 रक्षावरणगुप्तिर्भविष्यति। अथ विरहितो भविष्यति प्रज्ञापारमितया, लप्स्यन्तेऽस्य अवतार-
R 198 प्रेक्षिणोऽवतारगवेषिणो मनुष्याश्च अमनुष्याश्च अवतारम्। अपि च कौशिक आकाशस्य स रक्षावरणगुप्तिं संविधातव्यां मन्येत, यो बोधिसत्त्वस्य महासत्त्वस्य रक्षावरणगुप्तिं संविधातव्यां मन्येत प्रज्ञापारमितायां चरतः। तत्किं मन्यसे कौशिक प्रतिबलस्त्वं प्रतिश्रुत्काया
W 431 रक्षावरणगुप्तिं संविधातुम्? शक्र आह—न ह्येतदार्य सुभूते। सुभूतिराह—एवमेव कौशिक
25 बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् विहरन् प्रतिश्रुत्कोपमाः सर्वधर्मा इति परिजानाति। स[1] च तान्न मन्यते, न समनुपश्यति न जानाति न संजानीते। ते च धर्मा
W 432 न विद्यन्ते न संदृश्यन्ते न संविद्यन्ते नोपलभ्यन्ते इति विहरति। सचेदेवं विहरति, चरति प्रज्ञापारमितायाम्॥

अथ खलु बुद्धानुभावेन ये त्रिसाहस्रमहासाहस्रे लोकधातौ चत्वारो महाराजानः,
30 सर्वे च शक्रा देवेन्द्राः, सर्वे च महाब्रह्माणः, सहापतिश्च महाब्रह्मा, ते सर्वे येन भगवां-

---

१ R अतश्च for स च.

स्तेनोपसंक्रान्ताः । उपसंक्रम्य भगवतः पादौ शिरसाभिवन्द्य भगवन्तं त्रिः प्रदक्षिणीकृत्य एकान्तेऽतिष्ठन् । एकान्ते स्थिताश्च ते महाराजानः, सर्वे च शक्रा देवेन्द्राः, सर्वे च ब्रह्मकायिका देवा महाब्रह्माणश्च, सहापतिश्च महाब्रह्मा बुद्धानुभावेन बुद्धाधिष्ठानेन बुद्धसहस्रं समन्वाहरन्ति स्म । एभिरेव नामभिरेभिरेव पदैरेभिरेवाक्षरैः सुभूतिनामधेयैरेव (R 199) भिक्षुभिरियमेव प्रज्ञापारमितोपदिष्टा, अयमेव प्रज्ञापारमितापरिवर्तः । तत्रापि शक्रा एव 5 (W 433) देवेन्द्राः परिपृच्छन्ति स्म, परिप्रश्नयन्ति स्म–अस्मिन्नेव पृथिवीप्रदेशे इयमेव प्रज्ञापारमिता भाषिता । मैत्रेयोऽपि बोधिसत्त्वो महासत्त्वोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्य अस्मिन्नेव पृथिवीप्रदेशे एनामेव प्रज्ञापारमितां भाषिष्यते इति ॥

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां विशुद्धिपरिवर्तो नामाष्टमः ॥



# ९ स्तुतिपरिवर्तो नवमः ।

R 200 W 435 अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—प्रज्ञापारमितेति भगवन् नामधेयमात्रमेतत् । तच्च नाम इदमिति नोपलभ्यते । वाग्वस्त्वेव नामेत्युच्यते । सापि प्रज्ञापारमिता न विद्यते नोपलभ्यते । यथैव नाम, तथैव प्रज्ञापारमिता । यथा प्रज्ञापारमिता तथा नाम । 5 धर्मद्वयमेतन्न विद्यते नोपलभ्यते । किं कारणं भगवन् मैत्रेयो बोधिसत्त्वो महासत्त्वोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्य एभिरेव नामभिः एभिरेव पदैः एभिरेवाक्षरैः अस्मिन्नेव पृथिवीप्रदेशे प्रज्ञापारमितां भाषिष्यते? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—तथा हि सुभूते W 436 मैत्रेयो बोधिसत्त्वो महासत्त्वो न रूपं नित्यं नानित्यं न रूपं बद्धं न मुक्तम्, अत्यन्तविशुद्धमित्यभिसंभोत्स्यते । एवं न वेदनां न संज्ञां न संस्कारान् । न विज्ञानं नित्यं नानित्यम्, 10 न विज्ञानं बद्धं न मुक्तम्, अत्यन्तविशुद्धमित्यभिसंभोत्स्यते । अनेन सुभूते कारणेन मैत्रेयो बोधिसत्त्वो महासत्त्वः अनुत्तरां सम्यक्संबोधिमभिसंबुध्य एभिरेव नामभिरेभिरेव पदव्यञ्जनैरस्मिन्नेव पृथिवीप्रदेशे इमामेव प्रज्ञापारमितां भाषिष्यते ॥

एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—परिशुद्धा बतेयं भगवन् प्रज्ञापार- R 201 मिता? भगवानाह—रूपविशुद्धितः सुभूते परिशुद्धा प्रज्ञापारमिता । एवं वेदनासंज्ञासंस्काराः । 15 विज्ञानविशुद्धितः सुभूते परिशुद्धा प्रज्ञापारमिता । रूपानुत्पादानिरोधासंक्लेशाव्यवदान- W 437 विशुद्धितः सुभूते परिशुद्धा प्रज्ञापारमिता । एवं वेदनासंज्ञासंस्काराः । विज्ञानानुत्पादानिरोधासंक्लेशाव्यवदानविशुद्धितः सुभूते परिशुद्धा प्रज्ञापारमिता । आकाशविशुद्धितः सुभूते परिशुद्धा प्रज्ञापारमिता । रूपनिरुपलेपापरिग्रहतया सुभूते परिशुद्धा प्रज्ञापारमिता । एवं वेदनासंज्ञासंस्काराः । विज्ञाननिरुपलेपापरिग्रहतया सुभूते परिशुद्धा प्रज्ञापारमिता । 20 आकाशप्रतिश्रुत्कावचनीयप्रव्याहारनिरुपलेपतया सुभूते परिशुद्धा प्रज्ञापारमिता । सर्वोपलेपानुलेपधर्मानुपलेपतया सुभूते परिशुद्धा प्रज्ञापारमिता ॥

एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—सुलब्धा बत लाभास्तेषां भगवन् W 438 कुलपुत्राणां कुलदुहितॄणां च, येषामियं प्रज्ञापारमिता श्रोत्रावभासमप्यागमिष्यति, प्रागेव य उद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्दे- 25 क्ष्यन्ति स्वाध्यास्यन्ति । न तेषां चक्षूरोगो भविष्यति, न श्रोत्ररोगो न घ्राणरोगो न जिह्वारोगो न कायरोगो भविष्यति । न धन्धायितता[1] भविष्यति, न ते विषमापरिहारेण कालं करिष्यन्ति । R 202 बहूनि चैषां देवतासहस्राणि पृष्ठतः पृष्ठतोऽनुबद्धानि भविष्यन्ति । अष्टमीं चतुर्दशीं पञ्चदशीं च स धर्मभाणकः कुलपुत्रो वा कुलदुहिता वा यत्र यत्र प्रज्ञापारमितां भाषिष्यते, तत्र तत्र बहुतरं पुण्यं प्रसविष्यति । एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—एवमेत- 30 त्सुभूते, एवमेतत् । बहूनि सुभूते तस्य कुलपुत्रस्य वा कुलदुहितुर्वा देवतासहस्राणि

[1] R धन्वायितता throught the text.

पृष्ठतः पृष्ठतोऽनुबद्धानि भविष्यन्ति। बहूनि च देवतासहस्राणि तत्रागमिष्यन्ति सर्वाणि धर्मश्रवणार्थिकानि। तानि च रक्षावरणगुप्तिं संविधास्यन्ति तस्य धर्मभाणकस्य इमां प्रज्ञापार- W 439 मितां भाषमाणस्य। तत्कस्य हेतोः? सदेवमानुषासुरस्य हि सुभूते लोकस्य प्रज्ञापारमिता अनुत्तरं रत्नम्। अतोऽपि सुभूते कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहुतरं पुण्यं प्रसविष्यति। अपि तु खलु पुनः सुभूते बहवोऽन्तराया भविष्यन्ति अस्या गम्भीरायाः 5 प्रज्ञापारमिताया लिख्यमानाया उद्गृह्यमाणाया धार्यमाणाया वाच्यमानायाः पर्यवाप्यमानायाः प्रवर्त्यमानाया उपदिश्यमानाया उद्दिश्यमानायाः स्वाध्याय्यमानायाः। तत्कस्य हेतोः? तथा हि सुभूते बहुप्रत्यर्थिकानि महारत्नानि भवन्ति। यथासारं च गुरुतरप्रत्यर्थिकानि भवन्ति। अनुत्तरं चेदं सुभूते महारत्नं लोकस्य यदुत प्रज्ञापारमिता। हिताय सुखाय W 440 प्रतिपन्ना लोकस्य। सर्वधर्माणामनुत्पादायानिरोधायासंक्लेशायाविनाशयोगेन प्रत्युपस्थिता। 10 न च सुभूते प्रज्ञापारमिता कंचिद्धर्ममालीयते, न कंचिद्धर्मं संक्लिश्यते, न कंचिद्धर्मं R 203 परिगृह्णाति। तत्कस्य हेतोः? तथा हि सुभूते सर्वे ते धर्मा न संविद्यन्ते नोपलभ्यन्ते। अनुपलब्धितः सुभूते अनुपलिप्ता प्रज्ञापारमिता। अनुपलिप्तेति सुभूते इयं प्रज्ञापारमिता। तथा हि सुभूते रूपनिरुपलेपतया अनुपलिप्तेयं प्रज्ञापारमिता। एवं वेदनासंज्ञासंस्काराः। W 441 विज्ञाननिरुपलेपतया सुभूते अनुपलिप्तेयं प्रज्ञापारमिता। सचेदेवमपि सुभूते बोधिसत्त्वो 15 महासत्त्वो न संजानीते, चरति प्रज्ञापारमितायाम्। सा खलु पुनरियं सुभूते प्रज्ञापारमिता न कस्यचिद्धर्मस्यावेशिका वा निवेशिका वा संदर्शिका वा निदर्शिका वा आवाहिका वा निर्वाहिका वा॥

अथ खलु संबहुलानि देवपुत्रसहस्राणि अन्तरीक्षे किलकिलाप्रक्ष्वेडितेन चैलविक्षेपा- W 442 नकार्षुः, द्वितीयं बतेदं धर्मचक्रप्रवर्तनं जम्बूद्वीपे पश्याम इति चावोचन्। अथ खलु 20 भगवानायुष्मन्तं सुभूतिं स्थविरमेतदवोचत्—नेदं सुभूते द्वितीयं धर्मचक्रप्रवर्तनं नापि कस्य- चिद्धर्मस्य प्रवर्तनं वा निवर्तनं वा। एवमियं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमिता॥

एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—महापारमितेयं भगवंस्तस्य बोधि- R 204 सत्त्वस्य महासत्त्वस्य, यस्यासङ्गता सर्वधर्मेषु, योऽसावनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामो न च कंचिद्धर्ममभिसंबुध्यते, धर्मचक्रं च प्रवर्तयिष्यति, न च कंचिद्धर्मं संदर्शयिष्यति। तत्कस्य 25 W 443 हेतोः? न हि कश्चिद्धर्मो य उपलभ्यते, यो वा धर्मः सूच्यते। नापि कश्चिद्धर्मं प्रवर्त- यिष्यति। तत्कस्य हेतोः? अत्यन्तानभिनिर्वृत्ता हि भगवन् सर्वधर्माः। नापि कंचिद्धर्मं निवर्तयिष्यति। तत्कस्य हेतोः? आद्यनभिनिर्वृत्ता हि भगवन् सर्वधर्माः, प्रकृतिविविक्तत्वा- त्सर्वधर्माणाम्॥

एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—एवमेतत्सुभूते, एवमेतत्। न हि सुभूते 30 शून्यता प्रवर्तते वा निवर्तते वा। नापि सुभूते आनिमित्तं प्रवर्तते वा निवर्तते वा। नापि सुभूते W 444 अप्रणिहितं प्रवर्तते वा निवर्तते वा। या सुभूते एवं देशना, इयं सा सर्वधर्माणां देशना।

नैव च केनचिद्देशिता, नापि केनचिच्छ्रुता, नापि केनचित्प्रतीच्छिता, नापि केनचित्साक्षात्कृता, नापि केनचित्साक्षात्क्रियते, नापि केनचित्साक्षात्करिष्यते। नाप्यनया धर्मदेशनया कश्चित्परिनिर्वृतो नापि परिनिर्वास्यति नापि परिनिर्वाति। नाप्यनया धर्मदेशनया कश्चिद्दक्षिणीयः कृतः॥

W 445 R 205 5 एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—असत्पारमितेयं भगवन् आकाशसत्तामुपादाय। असमसमतापारमितेयं भगवन् सर्वधर्मानुपलब्धितामुपादाय। विविक्तपारमितेयं भगवन् अत्यन्तशून्यतामुपादाय। अनवमृद्यपारमितेयं भगवन् सर्वधर्मानुपलब्धितामुपादाय। W 446 अपदपारमितेयं भगवन् अनामाशरीरतामुपादाय। अस्वभावपारमितेयं भगवन् अनागतिमगतिमुपादाय। अवचनपारमितेयं भगवन् सर्वधर्माविकल्पतामुपादाय। अनाम10पारमितेयं भगवन् स्कन्धानुपलब्धितामुपादाय। अगमनपारमितेयं भगवन् सर्वधर्मागमनतामुपादाय। असंहार्यपारमितेयं भगवन् सर्वधर्माग्राह्यतामुपादाय। अक्षयपारमितेयं भगवन् W 447 अक्षयधर्मयोगतामुपादाय। अनुत्पत्तिपारमितेयं भगवन् सर्वधर्मानभिनिर्वृत्तितामुपादाय। अकारकपारमितेयं भगवन् कारकानुपलब्धितामुपादाय। अजानकपारमितेयं भगवन् सर्वधर्माणामनात्मतामुपादाय। असंक्रान्तिपारमितेयं भगवन् च्युत्युपपत्त्यनुपत्तितामुपादाय।[1] 15 अविनयपारमितेयं भगवन् पूर्वान्तापरान्तप्रत्युत्पन्नार्थानुपलब्धितामुपादाय। स्वप्नप्रतिश्रुत्काप्रतिभासमरीचिमायापारमितेयं भगवन् अनुत्पादविज्ञापनतामुपादाय। असंक्लेशपारमितेयं भगवन् रागद्वेषमोहास्वभावतामुपादाय। अव्यवदानपारमितेयं भगवन् आश्रयानुपलब्धिता- W 448 R 206 मुपादाय। अनुपलेपपारमितेयं भगवन् आकाशानुपलेपतामुपादाय। अप्रपञ्चपारमितेयं भगवन् सर्वधर्ममननसमतिक्रमतामुपादाय। अमननपारमितेयं भगवन् अनिञ्जनतामुपादाय। 20 अचलितपारमितेयं भगवन् धर्मधातुस्थितितामुपादाय। विरागपारमितेयं भगवन् सर्वधर्मावितथतामुपादाय।[2] असमुत्थानपारमितेयं भगवन् सर्वधर्मनिर्विकल्पतामुपादाय। शान्तपारमितेयं भगवन् सर्वधर्मनिमित्तानुपलब्धितामुपादाय। निर्दोषपारमितेयं भगवन् गुणपारमितामुपादाय। निःक्लेशपारमितेयं भगवन् परिकल्पासत्तामुपादाय। निःसत्त्वपारमितेयं[3] W 450 भगवन् भूतकोटितामुपादाय। अप्रमाणपारमितेयं भगवन् सर्वधर्मसमुत्थानासमुत्थानता25मुपादाय। अन्तद्वयाननुगमपारमितेयं भगवन् सर्वधर्मानभिनिवेशनतामुपादाय। असंभिन्नपारमितेयं भगवन् सर्वधर्मासंभेदनतामुपादाय। अपरामृष्टपारमितेयं भगवन् सर्वश्रावकप्रत्येकबुद्धभूम्यस्पृहणतामुपादाय। अविकल्पपारमितेयं भगवन् विकल्पसमतामुपादाय। अप्रमेयपारमितेयं भगवन् अप्रमाणधर्मतामुपादाय। असङ्गपारमितेयं भगवन् सर्वधर्मासक्तता- W 451 मुपादाय। अनित्यपारमितेयं भगवन् सर्वधर्मासंस्कृततामुपादाय। दुःखपारमितेयं भगवन् 30 आकाशसमधर्मतामुपादाय। शून्यपारमितेयं भगवन् सर्वधर्मानुपलब्धितामुपादाय। अनात्मपारमितेयं भगवन् सर्वधर्मानभिनिवेशनतामुपादाय। अलक्षणपारमितेयं भगवन् सर्वधर्मानभि-

---

१ R श्रुत्युप°. २ R सर्वधर्मवितथ°. ३ RW निःस्वत्व.°

निर्वृत्तितामुपादाय। सर्वशून्यतापारमितेयं भगवन् अनन्तापर्यन्ततामुपादाय। स्मृत्यु- R 207
पस्थानादिबोधिपक्षधर्मपारमितेयं भगवंस्तेषामनुपलब्धितामुपादाय। शून्यतानिमित्ताप्रणिहित- W 452
पारमितेयं भगवन् त्रिविमोक्षमुखानुपलब्धितामुपादाय। अष्टविमोक्षपारमितेयं भगवंस्तेषा- W 453
मनुपलब्धितामुपादाय। नवानुपूर्वविहारपारमितेयं भगवन् प्रथमध्यानादीनामनुपलब्धिता- W 454
मुपादाय। चतुःसत्यपारमितेयं भगवन् दुःखादीनामनुपलब्धितामुपादाय। दशपारमितेयं 5
भगवन् दानादीनामनुपलब्धितामुपादाय। बलपारमितेयं भगवन् अनवमृद्यतामुपादाय। W 455
वैशारद्यपारमितेयं भगवन् अत्यन्तानवलीनतामुपादाय। प्रतिसंवित्पारमितेयं भगवन् सर्व-
ज्ञतासङ्गाप्रतिघातितामुपादाय। सर्वबुद्धधर्मावेणिकपारमितेयं भगवन् गणनासमतिक्रमता-
मुपादाय। तथागततथतापारमितेयं भगवन् सर्वधर्मावितथतामुपादाय। स्वयंभूपारमितेयं
भगवन् सर्वधर्मास्वभावतामुपादाय। सर्वज्ञज्ञानपारमितेयं भगवन् यदुत प्रज्ञापारमिता 10
सर्वधर्मस्वभावसर्वाकारपरिज्ञानतामुपादायेति॥

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां स्तुतिपरिवर्तो नाम नवमः॥ W 457



## १० धारणगुणपरिकीर्तनपरिवर्तो दशमः ।

R 208
W 459

अथ खलु शक्रस्य देवानामिन्द्रस्यैतदभूत्—पूर्वजिनकृताधिकारास्ते कुलपुत्राः कुलदुहितरश्च भविष्यन्ति बहुबुद्धावरोपितकुशलमूलाः, कल्याणमित्रपरिगृहीताश्च भविष्यन्ति, येषामियं प्रज्ञापारमिता श्रोत्रावभासमप्यागमिष्यति। कः पुनर्वादो य एनामेवं गम्भीरां प्रज्ञापार-
5 मितामुद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति। उद्गृह्य धारयित्वा वाचयित्वा पर्यवाप्य प्रवर्त्य देशयित्वोपदिश्योद्दिश्य स्वाध्याय्य तथत्वाय शिक्षिष्यन्ते, तथत्वाय प्रतिपत्स्यन्ते, तथत्वाय योगमापत्स्यन्ते। न ते अवरमात्रकेण कुशलमूलेन समन्वागता भविष्यन्ति। बहुबुद्धपर्युपासितास्ते कुलपुत्राः कुलदुहितरश्च भविष्यन्ति। परिपृष्टाः परिप्रश्नीकृताश्च ते बुद्धा भगवन्तो भविष्यन्ति कुलपुत्रैः कुलदुहितृ-
10 भिश्चैनामेव प्रज्ञापारमिताम्। श्रुता चेयं पौर्विकाणामपि तथागतानामर्हतां सम्यक्संबुद्धानामन्तिकात्, य एनां प्रज्ञापारमितामेतर्ह्यपि श्रोष्यन्ति। श्रुत्वा चोद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति, तथत्वाय शिक्षिष्यन्ते, तथत्वाय प्रतिपत्स्यन्ते, तथत्वाय योगमापत्स्यन्ते। बहुबुद्धावरोपित-

R 209
W 460

कुशलमूलास्ते कुलपुत्राः कुलदुहितरश्च वेदितव्याः, य एतस्यामेव गम्भीरायां प्रज्ञापारमितायां
15 भाष्यमाणायां देश्यमानायामुपदिश्यमानायामुद्दिश्यमानायां स्वाध्याय्यमानायां नावलेष्यन्ते न संलेष्यन्ते, न विपत्स्यन्ति न विषादमापत्स्यन्ते, न विपृष्ठीकरिष्यन्ति मानसम्, न भग्नपृष्ठीकरिष्यन्ति, नोत्त्रसिष्यन्ति न संत्रसिष्यन्ति न संत्रासमापत्स्यन्ते॥

अथ खल्वायुष्मान् शारिपुत्रः शक्रस्य देवानामिन्द्रस्य इममेवंरूपं चैतसैव चेतःपरिवितर्कमाज्ञाय भगवन्तमेतदवोचत्—यो भगवन् इहैवं गम्भीरायां प्रज्ञापारमितायां भाष्यमाणायां

W 461

20 देश्यमानायामुपदिश्यमानायां कुलपुत्रो वा कुलदुहिता वा अभिश्रद्दधदवकल्पयन्नधिमुच्य प्रसन्नचित्तो बोधाय चित्तमुत्पाद्य एनां प्रज्ञापारमितामुद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति देशयिष्यत्युपदेक्ष्यत्युद्देक्ष्यति स्वाध्यास्यति, तथत्वाय शिक्षिष्यते, तथत्वाय प्रतिपत्स्यते, तथत्वाय योगमापत्स्यते, यथाविनिवर्तनीयो बोधिसत्त्वो महासत्त्वस्तथा स धारयितव्यः। तत्कस्य हेतोः? गम्भीरा भगवन् इयं प्रज्ञापारमिता। न हि भगवन्
25 परीत्तकुशलमूलेनापरिपृच्छकजातीयेन अश्रुत्वा बुद्धानां भगवतां संमुखीभावतः पूर्वमचरितवता इहैवेयमेवं गम्भीरा प्रज्ञापारमिता अधिमोक्तुं शक्या। ये पुनरनधिमुच्य एनामनवबुध्यमानाः

R 210
W 462

प्रतिक्षेप्तव्यां मंस्यन्ते, पूर्वान्ततोऽपि भगवंस्तैः कुलपुत्रैः कुलदुहितृभिश्चेयं गम्भीरा प्रज्ञापारमिता भाष्यमाणा प्रतिक्षिप्ता। तत्कस्य हेतोः? यथापि नाम परीत्तत्वात्कुशलमूलानाम्। न हि भगवन् अचरितवद्भिः पूर्वान्तत इयं गम्भीरा प्रज्ञापारमिता शक्या अधिमोक्तुम्। येऽपि
30 च प्रतिक्षेप्स्यन्ति एनां गम्भीरां प्रज्ञापारमितां भाष्यमाणाम्, तेऽप्येवं वेदितव्याः—पूर्वान्ततोऽप्येभिरियं गम्भीरा प्रज्ञापारमिता भाष्यमाणा प्रतिक्षिप्ता। तथा ह्येषामस्यां गम्भीरायां प्रज्ञापारमितायां भाष्यमाणायां नास्ति श्रद्धा, नास्ति क्षान्तिर्नास्ति रुचिर्नास्ति च्छन्दो नास्ति वीर्यं

नास्त्यप्रमादो नास्त्यधिमुक्तिः, न चैभिः पूर्वं बुद्धा भगवन्तो बुद्धश्रावका वा परिपृष्टाः, न च परिप्रश्नीकृता इति ॥

अथ खलु शक्रो देवानामिन्द्र आयुष्मन्तं शारिपुत्रमेतदवोचत्—गम्भीरा आर्य शारिपुत्र प्रज्ञापारमिता। किमत्राश्चर्यं स्याद्यदस्यां गम्भीरायां प्रज्ञापारमितायां भाष्यमाणायां पूर्वमचरितावी बोधिसत्त्वो महासत्त्वो नाधिमुच्येत ? अथ खलु शक्रो देवानामिन्द्रो भगवन्त- 5 मेतदवोचत्—नमस्करोमि भगवन् प्रज्ञापारमितायै। सर्वज्ञज्ञानस्य स भगवन्नमस्कारं करोति, W 463 यः प्रज्ञापारमितायै नमस्कारं करोति। भगवानाह—एवमेव कौशिक, एवमेतत्। सर्वज्ञज्ञानस्य स कौशिक नमस्कारं करोति यः प्रज्ञापारमितायै नमस्कारं करोति। तत्कस्य हेतोः ? अतोनिर्जाता हि कौशिक बुद्धानां भगवतां सर्वज्ञता। सर्वज्ञज्ञाननिर्जाता च पुनः R 211 प्रज्ञापारमिता प्रभाव्यते। एवमस्यां प्रज्ञापारमितायां चरितव्यम्। एवमस्यां प्रज्ञापारमितायां 10 स्थातव्यम्। एवमस्यां प्रज्ञापारमितायां प्रतिपत्तव्यम्। एवमस्यां प्रज्ञापारमितायां योगमापत्तव्यम् ॥

अथ खलु शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—कथं भगवन् प्रज्ञापारमितायां चरन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां स्थितो भवति ? कथं प्रज्ञापारमितायां चरन् प्रज्ञापारमितायां योगमापद्यते ? एवमुक्ते भगवान् शक्रं देवानामिन्द्रमेतदवोचत्—साधु साधु 15 W 464 कौशिक। साधु खलु पुनस्त्वं कौशिक यस्त्वं तथागतमर्हन्तं सम्यक्संबुद्धमेनमर्थं परिप्रष्टव्यं परिप्रश्नीकर्तव्यं मन्यसे। इदमपि ते कौशिक बुद्धानुभावेन प्रतिभानमुत्पन्नम्। इह कौशिक बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् रूपे न तिष्ठति, रूपमिति न तिष्ठति। यतः कौशिक बोधिसत्त्वो महासत्त्वो रूपे न तिष्ठति, रूपमिति न तिष्ठति, एवं रूपे योगमापद्यते। एवं वेदनायां संज्ञायां संस्कारेषु। विज्ञाने न[1] तिष्ठति, विज्ञानमिति 20 न तिष्ठति। यतः कौशिक बोधिसत्त्वो महासत्त्वो विज्ञाने न तिष्ठति, विज्ञानमिति न तिष्ठति, एवं विज्ञाने योगमापद्यते। रूपमिति कौशिक न योजयति, यतः कौशिक रूपमिति न R 212 योजयति, एवं रूपमिति न तिष्ठति। एवं वेदनासंज्ञासंस्काराः। विज्ञानमिति कौशिक न योजयति, यतः कौशिक विज्ञानमिति न योजयति, एवं विज्ञानमिति न तिष्ठति। W 465 एवं प्रज्ञापारमितायां स्थितो भवति। एवं योगमापद्यते ॥ 25

अथ खल्वायुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्—गम्भीरा भगवन् प्रज्ञापारमिता। दुरवगाहा भगवन् प्रज्ञापारमिता। दुरुद्रहा भगवन् प्रज्ञापारमिता। अप्रमाणा भगवन् प्रज्ञापारमिता। भगवानाह—एवमेतच्छारिपुत्र, एवमेतत्। रूपं गम्भीरमिति शारिपुत्र न तिष्ठति। यतः शारिपुत्र रूपं गम्भीरमिति न तिष्ठति, एवं रूपे योगमापद्यते। एवं वेदना- संज्ञासंस्काराः। विज्ञानं शारिपुत्र गम्भीरमिति न तिष्ठति। यतः शारिपुत्र विज्ञानं 30 W 466 गम्भीरमिति न तिष्ठति, एवं विज्ञाने योगमापद्यते। रूपं शारिपुत्र गम्भीरमिति न योग-

---

[1] W om. न.

अष्ट. १४

मापद्यते। यतः शारिपुत्र रूपं गम्भीरमिति न योगमापद्यते, एवं रूपं गम्भीरमिति न तिष्ठति। एवं वेदनासंज्ञासंस्काराः। विज्ञानं शारिपुत्र गम्भीरमिति न योगमापद्यते। यतः शारिपुत्र विज्ञानं गम्भीरमिति न योगमापद्यते, एवं विज्ञानं गम्भीरमिति न तिष्ठति॥

एवमुक्ते आयुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्—गम्भीरा भगवन् प्रज्ञापारमिता 5 अविनिवर्तनीयस्य व्याकृतस्य बोधिसत्त्वस्य महासत्त्वस्य पुरतो भाषितव्या। तत्कस्य हेतोः? स हि भगवन् न काङ्क्षिष्यति, न विचिकित्सिष्यति न धंधायिष्यति न विवदिष्यति॥

W 467 R 213 अथ खलु शक्रो देवानामिन्द्र आयुष्मन्तं शारिपुत्रमेतदवोचत्—सचेत्पुनरार्य शारिपुत्र अव्याकृतस्य बोधिसत्त्वस्य महासत्त्वस्य पुरत इयं प्रज्ञापारमिता भाष्येत, को दोषो भवेत्? एवमुक्ते आयुष्मान् शारिपुत्रः शक्रं देवानामिन्द्रमेतदवोचत्—दूरतः स कौशिक बोधिसत्त्वो 10 महासत्त्व आगतो वेदितव्यः। चिरयानसंप्रस्थितः परिपक्वकुशलमूलः स कौशिक बोधिसत्त्वो महासत्त्वो वेदितव्यः, योऽव्याकृत इमां प्रज्ञापारमितां लप्स्यते दर्शनाय वन्दनाय पर्युपासनाय श्रवणाय। श्रुत्वा च नोत्त्रसिष्यति न संत्रसिष्यति न संत्रासमापत्स्यते। न चेदानीमसौ चिरेण व्याकरणं प्रतिलप्स्यतेऽनुत्तरायाः सम्यक्संबोधेः। आसन्नं तस्य व्याकरणं वेदितव्यम्। स बोधिसत्त्वो महासत्त्वो नैकं वा द्वौ वा त्रीन् वा तथागतानर्हतः सम्यक्सं- 15 बुद्धानतिक्रमिष्यति, ततो व्याकरणं प्रतिलप्स्यतेऽनुत्तरायां सम्यक्संबोधौ। अपि तु तानारागयिष्यति, आरागयित्वा तांस्तथागतानर्हतः सम्यक्संबुद्धान्न विरागयिष्यति। तथागतदर्शनं च व्याकरणेनावन्ध्यं करिष्यति, तथागतदर्शनाच्च ततो व्याकरणं प्रतिलप्स्यतेऽनुत्तरायां W 468 सम्यक्संबोधौ। यावच्च व्याकरणं प्रतिलप्स्यतेऽनुत्तरायां सम्यक्संबोधौ, तावदवन्ध्यं करिष्यति तथागतदर्शनवन्दनपर्युपासनोपस्थानं यावन्नानुत्तरां सम्यक्संबोधिमभिसंबुद्ध इति॥

20 अथ खल्वायुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्—दूरतः स भगवन् बोधिसत्त्वो महासत्त्व आगतो भविष्यति। चिरयानसंप्रस्थितः। परिपक्वकुशलमूलो हि भगवन् स R 214 बोधिसत्त्वो महासत्त्वो वेदितव्यः, य इमां गम्भीरां प्रज्ञापारमितां लप्स्यते दर्शनाय वन्दनाय पर्युपासनाय श्रवणाय। कः पुनर्वादोऽत्र यः श्रुत्वा चोद्ग्रहीष्यति धारयिष्यति वाचयिष्यति W 469 पर्यवाप्स्यति प्रवर्तयिष्यति देशयिष्यत्युपदेक्ष्यत्युद्देक्ष्यति स्वाध्यास्यति॥

25 अथ खलु भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्—एवमेतच्छारिपुत्र, एवमेतत्। दूरतः स शारिपुत्र बोधिसत्त्वो महासत्त्व आगतो वेदितव्यः। चिरयानसंप्रस्थितः। परिपक्वकुशलमूलो हि स शारिपुत्र बोधिसत्त्वो महासत्त्वो भविष्यति, य इमां गम्भीरां प्रज्ञापारमितां लप्स्यते दर्शनाय वन्दनाय पर्युपासनाय श्रवणाय। कः पुनर्वादोऽत्र यः श्रुत्वा चोद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति देशयिष्यत्युपदेक्ष्यत्युद्देक्ष्यति स्वाध्यास्यति॥

30 अथ खल्वायुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्—प्रतिभाति मे भगवन्, प्रतिभाति मे सुगत औपम्योदाहरणम्। तद्यथापि नाम भगवन् योऽयं बोधिसत्त्वयानिकः कुलपुत्रो वा कुलदुहिता वा स्वप्नान्तरगतोऽपि बोधिमण्डे निषीदेत्, वेदितव्यमेतद्भगवन्, अयं बोधि-

सत्त्वो महासत्त्व आसन्नोऽनुत्तरायाः सम्यक्संबोधेरभिसंबोधायेति । एवमेव भगवन् यः कुलपुत्रो वा कुलदुहिता वा इमां गम्भीरां प्रज्ञापारमितां लप्स्यते दर्शनाय वन्दनाय पर्युपासनाय श्रवणाय, कः पुनर्वादः श्रुत्वा चोद्ग्रहीतुं धारयितुं वाचयितुं पर्यवाप्तुं प्रवर्तयितुं देशयितुं उपदेष्टुं उद्देष्टुं स्वाध्यापनाय । वेदितव्यमेतद्भगवन् दूरतोऽयं बोधिसत्त्वयानिकः पुद्गल आगतश्चिरयानसंप्रस्थितः । आसन्नोऽयं बोधिसत्त्वयानिकः पुद्गलो व्याकरणस्य । व्याकरिष्यन्त्येनं बुद्धा भगवन्तो बोधिसत्त्वं महासत्त्वमनुत्तरायाः सम्यक्संबोधेरभिसंबोधायेति । चिरयानसंप्रस्थितः परिपक्वकुशलमूलो हि स बोधिसत्त्वो महासत्त्वो वेदितव्यः, यस्येयं गम्भीरा प्रज्ञापारमिता उपपत्स्यतेऽन्ततः श्रवणायापि । कः पुनर्वादोऽत्र भगवन् यः कुलपुत्रो वा कुलदुहिता वा एनां गम्भीरां प्रज्ञापारमितामुद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति देशयिष्यत्युपदेक्ष्यत्युद्देक्ष्यति स्वाध्यास्यति । तत्कस्य हेतोः? भूयस्त्वेन हि भगवन् धर्मव्यसनसंवर्तनीयैः सत्त्वाः कर्मोपचयैरविहिताः, तेषां भूयस्त्वेन अस्यां गम्भीरायां प्रज्ञापारमितायां चित्तानि प्रतिकूलानि भविष्यन्ति, चित्तानि परिवेल्लयिष्यन्ति । न ह्यनुपचितकुशलमूलाः सत्त्वा अस्यां भूयस्त्वेन भूतकोट्यां प्रस्कन्दन्ति प्रसीदन्ति । उपचितकुशलमूलाः खलु पुनस्ते भगवन् सूपचितकुशलमूलाः कुलपुत्राः कुलदुहितरश्च वेदितव्याः, येषामस्यां भूतकोट्यां चित्तं प्रस्कन्दति प्रसीदति । तद्यथापि नाम भगवन् पुरुषो योजनशतिकादटवीकान्ताराद् द्वियोजनशतिकाद्वा त्रियोजनशतिकाद्वा चतुर्योजनशतिकाद्वा पञ्चयोजनशतिकाद्वा दशयोजनशतिकाद्वा अटवीकान्तारान्निष्क्रामेत् । स[1] निष्क्रम्य पश्येत्पूर्वनिमित्तानि गोपालकान् वा पशुपालकान् वा सीमा वा आरामसंपदो वा वनसंपदो वा, ततोऽन्यानि वा निमित्तानि, यैर्निमित्तैर्ग्रामो वा नगरं वा निगमो वा सूच्येत । तस्य तानि पूर्वनिमित्तानि दृष्ट्वैवं भवति–यथेमानि पूर्वनिमित्तानि दृश्यन्ते, तथा आसन्नो मे ग्रामो वा नगरं वा निगमो वा इति । स आश्वासप्राप्तो भवति । नास्य भूयश्चोरमनसिकारो भवति । एवमेव भगवन् यस्य बोधिसत्त्वस्य महासत्त्वस्येयं गम्भीरा प्रज्ञापारमिता उपवर्तते, वेदितव्यं तेन भगवन् अभ्यासन्नोऽस्म्यनुत्तरायाः सम्यक्संबोधेः, नचिरेण व्याकरणं प्रतिलप्स्येऽनुत्तरायाः सम्यक्संबोधेरिति । नापि तेनोत्रसितव्यं न संत्रसितव्यं न भेतव्यं श्रावकभूमेर्वा प्रत्येकबुद्धभूमेर्वा । तत्कस्य हेतोः? तथा हि अस्येमानि पूर्वनिमित्तानि संदृश्यन्ते यदुतेमां गम्भीरां प्रज्ञापारमितां लभते दर्शनाय वन्दनाय पर्युपासनाय श्रवणाय । एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्–एवमेतच्छारिपुत्र, एवमेतत् । प्रतिभातु ते शारिपुत्र पुनरप्येतत्स्थानम्, यथापि नामैतद्बुद्धानुभावेन व्याहरसि व्याहरिष्यसि च ॥

एवमुक्ते आयुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्–तद्यथापि नाम भगवन् इह कश्चिदेव पुरुषो महासमुद्रं द्रष्टुकामो भवेत् । स गच्छेन्महासमुद्रं दर्शनाय । यथा यथा च स गच्छेन्महासमुद्रं दर्शनाय, तथा तथा सचेत्पश्येत्स्तम्भं वा स्तम्भनिमित्तं वा पर्वतं वा

---

१ R न for स.

पर्वतनिमित्तं वा, तेनैवं वेदितव्यं दूरे तावदितो महासमुद्र इति । सचेन्न भूयः पश्येत्स्तम्बं वा स्तम्बनिमित्तं वा पर्वतं वा पर्वतनिमित्तं वा, तेनैवं वेदितव्यम्—अभ्यासन्न इतो महासमुद्र इति । W 473 तत्कस्य हेतोः? अनुपूर्वनिम्नो हि महासमुद्रः, न महासमुद्रस्याभ्यन्तरे कश्चित्स्तम्बो वा स्तम्बनिमित्तं R 217 वा पर्वतो वा पर्वतनिमित्तं वेति । किंचापि स न महासमुद्रं साक्षात्पश्यति चक्षुषा, अथ च 5 पुनः स निष्ठां गच्छति—अभ्यासन्नोऽस्मि महासमुद्रस्य, नेतो भूयो दूरे महासमुद्र इति । एवमेव भगवन् बोधिसत्त्वेन महासत्त्वेनेमां गम्भीरां प्रज्ञापारमितां शृण्वता वेदितव्यम्—किंचाप्यहं तैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैर्न संमुखं व्याकृतः, अथ च पुनरभ्यासन्नोऽस्म्यनुत्तरायाः सम्यक्संबोधेर्व्याकरणस्य । तत्कस्य हेतोः? तथा ह्येनां गम्भीरां प्रज्ञापारमितां लभते दर्शनाय वन्दनाय पर्युपासनाय श्रवणायेति । तद्यथापि नाम भगवन् वसन्ते प्रत्युपस्थिते शीर्णपर्णपलाशेषु नाना- W 474 10 वृक्षेषु नानापल्लवाः प्रादुर्भवन्ति । पल्लवेषु प्रादुर्भूतेष्वात्तमनस्का भवन्ति जाम्बूद्वीपका मनुष्याः तानि पूर्वनिमित्तानि वनेषु दृष्ट्वा नचिराद्वनपुष्पाणि च फलानि च प्रादुर्भविष्यन्ति । तत्कस्य हेतोः? तथा हि इमानि पूर्वनिमित्तानि स्तम्बेषु दृश्यन्त इति । एवमेव भगवन् यदा बोधिसत्त्वो महासत्त्वो लभते इमां गम्भीरां प्रज्ञापारमितां दर्शनाय वन्दनाय पर्युपासनाय श्रवणाय, उपवर्तते तस्येयं गम्भीरा प्रज्ञापारमिता । तदा परिपक्वकुशलः स बोधिसत्त्वो 15 महासत्त्वो वेदितव्यः—तेनैव पूर्वकेण कुशलमूलेनोपनामितेयं तस्मै गम्भीरा प्रज्ञापारमिता । तत्र या देवताः पूर्वबुद्धदर्शिन्यः, ताः प्रमुदिता भवन्ति प्रीतिसौमनस्यजाताः—पौर्वकाणामपि बोधिसत्त्वानां महासत्त्वानामिमान्येव पूर्वनिमित्तान्यभूवन्ननुत्तरायाः सम्यक्संबोधेर्व्याकरणाय । नचिरेण बतायं बोधिसत्त्वो महासत्त्वो व्याकरणं प्रतिलप्स्यतेऽनुत्तरायाः R 218 सम्यक्संबोधेरिति । तद्यथापि नाम भगवन् स्त्री गुर्विणी गुरुगर्भा । तस्या यदा कायो 20 वेष्टते, अधिमात्रं वा कायक्लमथो जायते, न च सा चंक्रमणशीला भवति । अल्पाहारा च भवति । अल्पस्त्यानमिद्धा च भवति । अल्पभाष्या च भवति । अल्पस्थामा च भवति । वेदनाबहुला च भवति । क्रन्दन्ती च बहुलं विहरति । न च संवासशीला भवति । W 475 पौर्वकेणायोनिशोमनसिकारेणासेवितेन निषेवितेन भावितेन बहुलीकृतेन इमामेवंरूपां कायेन वेदनां प्रत्यनुभवामीति, तदा वेदितव्यमिदं भगवन्—यथास्याः पूर्वनिमित्तानि संदृश्यन्ते, तथा 25 नचिरेण बतेयं स्त्री प्रसोष्यते इति । एवमेव भगवन् यदा बोधिसत्त्वस्य महासत्त्वस्येयं गम्भीरा प्रज्ञापारमिता उपवर्तते दर्शनाय वन्दनाय पर्युपासनाय श्रवणाय, शृण्वतश्चैनां रमते चित्तमस्यां प्रज्ञापारमितायाम्, अर्थिकतया चोत्पद्यते, तदा वेदितव्यमिदं भगवन्—नचिरेण बतायं बोधिसत्त्वो महासत्त्वो व्याकरणं प्रतिलप्स्यतेऽनुत्तरायाः सम्यक्संबोधेरिति ॥

एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्—साधु साधु शारिपुत्र । इदमपि ते 30 शारिपुत्र बुद्धानुभावेन प्रतिभाति । अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—आश्चर्यं भगवन् यावत्सुपरिगृहीताश्च सुपरीत्ताश्च सुपरीन्दिताश्च इमे बोधिसत्त्वा महासत्त्वास्तथागते- R 219 W 476 नार्हता सम्यक्संबुद्धेन । भगवानाह—तथा हि ते[1] सुभूते बोधिसत्त्वा महासत्त्वा बहुजन-

१ R om. ते.

हिताय प्रतिपन्ना बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च। अनुकम्पका अनुकम्पामुपादाय अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामाः। अनुत्तरां सम्यक्संबोधिमभिसंबुध्यानुत्तरं धर्मं देशयितुकामाः॥

सुभूतिराह—इह भगवन् बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः कथं प्रज्ञापारमिताभावना परिपूरिं गच्छति? भगवानाह—यदि सुभूते बोधिसत्त्वो महासत्त्वः 5 प्रज्ञापारमितायां चरन् न रूपस्य वृद्धिं समनुपश्यति, चरति प्रज्ञापारमितायाम्। एवं न वेदनाया न संज्ञाया न संस्काराणाम्। न विज्ञानस्य वृद्धिं समनुपश्यति, चरति प्रज्ञापारमितायाम्। न रूपस्य परिहाणिं समनुपश्यति, चरति प्रज्ञापारमितायाम्। एवं न वेदनाया W 477 न संज्ञाया न संस्काराणाम्। न विज्ञानस्य परिहाणिं समनुपश्यति, चरति प्रज्ञापारमितायाम्। धर्मं न समनुपश्यति, चरति प्रज्ञापारमितायाम्। अधर्ममपि न समनुपश्यति, 10 चरति प्रज्ञापारमितायाम्। एवमस्य प्रज्ञापारमिताभावना परिपूरिं गच्छति॥

सुभूतिराह—अचिन्त्यमिदं भगवन् देश्यते। भगवानाह—रूपं हि सुभूते अचिन्त्यम्। एवं वेदनासंज्ञासंस्काराः। विज्ञानं हि सुभूते अचिन्त्यम्। रूपमचिन्त्यमित्यपि सुभूते न संजानीते, चरति प्रज्ञापारमितायाम्। एवं वेदनासंस्काराः। विज्ञानमचिन्त्यमित्यपि सुभूते न संजानीते, चरति प्रज्ञापारमितायाम्॥ 15

R 220 W 478 अथ खल्वायुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्—कोऽत्र भगवन् अधिमोक्षयिष्यति एवंगम्भीरायां प्रज्ञापारमितायाम्? भगवानाह—यः शारिपुत्र चरितावी बोधिसत्त्वो महासत्त्वो भविष्यति प्रज्ञापारमितायाम्, सोऽत्र प्रज्ञापारमितायामधिमोक्षयिष्यति। आयुष्मान् शारिपुत्र आह—कथं भगवन् चरितावी बोधिसत्त्वो महासत्त्वो भविष्यति, कथं चरितावीति नामधेयं लभते? भगवानाह—इह शारिपुत्र बोधिसत्त्वो महासत्त्वो बलानि न कल्पयति, 20 वैशारद्यानि न कल्पयति, बुद्धधर्मानपि न कल्पयति, सर्वज्ञतामपि न कल्पयति। तत्कस्य हेतोः? बलानि हि शारिपुत्र अचिन्त्यानि, वैशारद्यान्यप्यचिन्त्यानि, बुद्धधर्मा अप्यचिन्त्याः, सर्वज्ञताप्यचिन्त्या, सर्वधर्मा अप्यचिन्त्याः। एवं चरितावी शारिपुत्र बोधिसत्त्वो महासत्त्वो न क्वचिच्चरति, चरति प्रज्ञापारमितायाम्। एवं स चरितावीत्युच्यते, चरितावीति नामधेयं लभते॥ 25

W 479 अथ खलु आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—गम्भीरा भगवन् प्रज्ञापारमिता। रत्नराशिर्भगवन् प्रज्ञापारमिता। शुद्धराशिर्भगवन् प्रज्ञापारमिता आकाशशुद्धतामुपादाय। आश्चर्यं भगवन् स्याद्यदेनां प्रज्ञापारमितामुद्गृह्णतां धारयतां वाचयतां पर्यवाप्नुवतां प्रवर्तयतां देशयतामुपदिशतामुद्दिशतां स्वाध्यायतां लिखतां च कुलपुत्राणां कुलदुहितॄणां च बहवोऽन्तराया उत्पद्येरन्। एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—एवमेतत्सुभूते, एवमेतत्। 30 R 221 बहवः सुभूते अन्तराया इमां प्रज्ञापारमितामुद्गृह्णतां धारयतां वाचयतां पर्यवाप्नुवतां प्रवर्तयतां देशयतामुपदिशतामुद्दिशतां स्वाध्यायतां लिखतां च कुलपुत्राणां कुलदुहितॄणां च W 480

भविष्यन्ति। तत्कस्य हेतोः? तथा हि सुभूते इमां प्रज्ञापारमितामुद्गृह्णतां धारयतां वाचयतां पर्यवाप्नुवतां प्रवर्तयतां देशयतामुपदिशतामुद्दिशतां स्वाध्यायतां लिखतां च कुलपुत्राणां कुलदुहितॄणां च मारः पापीयानौत्सुक्यमापत्स्यतेऽन्तरायं कर्तुम्। तत्र शीघ्रं लिखता सचेन्मासेन वा मासद्वयेन वा मासत्रयेण वा लिख्येत, लिखितव्यैव भवेत्। सचेत्संवत्सरेण 5 ततो वापरेण लिखिता भवेत्, तथापि लिखितव्यैव खलु पुनः सुभूते भवति तेन कुलपुत्रेण कुलदुहित्रा वा इयं प्रज्ञापारमिता। तत्कस्य हेतोः? एवं ह्येतत्सुभूते भवति यन्महारत्नानां बहवोऽन्तराया उत्पद्यन्ते॥

W 481 एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—इह भगवन् प्रज्ञापारमितायामुद्गृह्यमाणायां धार्यमाणायां वाच्यमानायां पर्यवाप्यमानायां प्रवर्त्यमानायां देश्यमानायामुपदिश्य-10 मानायामुद्दिश्यमानायां स्वाध्याय्यमानायां लिख्यमानायां च मारः पापीयान् बहुप्रकारमौत्सुक्यमापत्स्यते, अन्तरायकर्मण उद्योगं च करिष्यति। भगवानाह—किंचापि सुभूते मारः W 482 पापीयानुद्योगमापत्स्यते अन्तरायकर्मणः अस्यां प्रज्ञापारमितायामुद्गृह्यमाणायां धार्यमाणायां[1] वाच्यमानायां पर्यवाप्यमानायां प्रवर्त्यमानायां देश्यमानायामुपदिश्यमानायामुद्दिश्यमानायां R 222 स्वाध्याय्यमानायां लिख्यमानायां च, अथ च पुनर्न प्रसहिष्यतेऽच्छिद्रसमादानस्य बोधिसत्त्वस्य 15 महासत्त्वस्यान्तरायं कर्तुम्॥

अथ खल्वायुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्—यदा भगवन् इमां प्रज्ञापारमितामुद्गृह्णतां धारयतां वाचयतां पर्यवाप्नुवतां प्रवर्तयतां देशयतामुपदिशतामुद्दिशतां स्वाध्यायतां लिखतां च कुलपुत्राणां कुलदुहितॄणां च मारः पापीयानौत्सुक्यमापत्स्यते अन्तरायकरणाय, तदा कथमेतर्हि भगवन् कुलपुत्राः कुलदुहितरश्च इमां प्रज्ञापारमितामुद्ग्रहीष्यन्ति धारयि-20 ष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति लिखिष्यन्ति च? कस्य चानुभावेन भगवंस्ते कुलपुत्राः कुलदुहितरश्च इमां प्रज्ञापारमितामुद्ग्रहीष्यन्ति धारयिष्यन्ति[2] वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति लिखिष्यन्ति च? एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्—बुद्धानां शारिपुत्र भगवतां तथागतानामर्हतां सम्यक्संबुद्धानामनुभावेन ते W 483 25 कुलपुत्राः कुलदुहितरश्च इमां प्रज्ञापारमितामुद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति लिखिष्यन्ति च, तथत्वाय शिक्षिष्यन्ते, तथत्वाय प्रतिपत्स्यन्ते, तथत्वाय योगमापत्स्यन्ते। तत्कस्य हेतोः? एषा हि शारिपुत्र धर्माणां धर्मता, ये तेऽप्रमेयेष्वसंख्येयेषु लोकधातुषु बुद्धा भगवन्तस्तिष्ठन्ति R 223 ध्रियन्ते यापयन्ति, ते इमां प्रज्ञापारमितां समन्वाहरिष्यन्ति परिग्रहीष्यन्ति भाष्यमाणामुद्गृह्य-30 माणां धार्यमाणां वाच्यमानां पर्यवाप्यमानां प्रवर्त्यमानां देश्यमानामुपदिश्यमानामुद्दिश्यमानां स्वाध्याय्यमानां लिख्यमानां च। ये चैनां प्रज्ञापारमितां कुलपुत्राः कुलदुहितरश्चोद्ग्रही-

१ W om. धार्यमाणायां. २ R om. धारयिष्यन्ति.

ष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति च, तथत्वाय शिक्षिष्यन्ते, तथत्वाय प्रतिपत्स्यन्ते, तथत्वाय योगमापत्स्यन्ते, तांश्च ते बुद्धा भगवन्तः समन्वाहरिष्यन्ति परिग्रहीष्यन्ति च। न हि शारिपुत्र बुद्धसमन्वा- W 484 हृतानां बुद्धपरिगृहीतानां च कुलपुत्राणां कुलदुहितॄणां च शक्यमन्तरायं कर्तुम् ॥

एवमुक्ते आयुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्—येऽपि ते भगवन् बोधिसत्त्वा 5 महासत्त्वा इमां गम्भीरां प्रज्ञापारमितां श्रोष्यन्ति उद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति लिखिष्यन्ति च, तथत्वाय शिक्षिष्यन्ते, तथत्वाय प्रतिपत्स्यन्ते, तथत्वाय योगमापत्स्यन्ते, सर्वे ते भगवन् बुद्धानुभावेन बुद्धाधिष्ठानेन बुद्धपरिग्रहेण च इमां प्रज्ञापारमितां श्रोष्यन्ति उद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति 10 स्वाध्यास्यन्ति लिखिष्यन्ति च, तथत्वाय च शिक्षिष्यन्ते, तथत्वाय प्रतिपत्स्यन्ते, तथत्वाय योगमापत्स्यन्ते, एवं च संपादयिष्यन्ति ॥

एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्—एवमेतच्छारिपुत्र, एवमेतत्। सर्वे ते R 224 शारिपुत्र बोधिसत्त्वा महासत्त्वा बुद्धानुभावेन बुद्धाधिष्ठानेन बुद्धपरिग्रहेण च इमां गम्भीरां प्रज्ञापारमितां श्रोष्यन्ति उद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति 15 W 485 देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति लिखिष्यन्ति च, तथत्वाय शिक्षिष्यन्ते, तथत्वाय प्रतिपत्स्यन्ते, तथत्वाय योगमापत्स्यन्ते। ज्ञातास्ते शारिपुत्र तथागतेन। अधिष्ठितास्ते शारिपुत्र तथागतेन। दृष्टास्ते शारिपुत्र तथागतेन। व्यवलोकितास्ते शारिपुत्र तथागतेन बुद्धचक्षुषा। ये ते बोधिसत्त्वा महासत्त्वा इमां प्रज्ञापारमितां श्रोष्यन्ति उद्ग्रहीष्यन्ति धारयि- ष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्या- 20 स्यन्ति लिखिष्यन्ति च, तथत्वाय च शिक्षिष्यन्ते, तथत्वाय प्रतिपत्स्यन्ते, तथत्वाय योग- मापत्स्यन्ते, श्रुत्वो उद्गृह्य धारयित्वा वाचयित्वा पर्यवाप्य प्रवर्त्य देशयित्वोपदिश्योद्दिश्य स्वाध्याय्य लिखित्वा तथत्वाय शिक्षमाणास्तथत्वाय प्रतिपद्यमानास्तथत्वाय योगमापद्यमाना आसन्नीभविष्यन्त्यनुत्तरायाः सम्यक्संबोधेः, तथत्वाय स्थास्यन्त्यनुत्तरायै सम्यक्संबोधये[1]। W 486 येऽपि शारिपुत्र एनां प्रज्ञापारमितां लिखित्वा धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति 25 देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति लिखिष्यन्ति, न च तथत्वाय शिक्षिष्यन्ते, न च तथत्वाय प्रतिपत्स्यन्ते, न च तथत्वाय योगमापत्स्यन्ते, ते न तथत्वाय शिक्षमाणा न तथत्वाय प्रतिपद्यमाना न तथत्वाय योगमापद्यमाना न तथतायां स्थास्यन्त्यनुत्तरायां सम्य- R 225 क्संबोधौ, तेऽपि शारिपुत्र तथागतेन ज्ञाताः। तेऽपि तथागतेनाधिष्ठिताः। तेऽपि तथागतेन दृष्टाः। तेऽपि तथागतेन व्यवलोकिता बुद्धचक्षुषा। तेषामपि शारिपुत्र महार्थिको महानु- 30 शंसो महाफलो महाविपाकश्च स परिश्रमः परिस्पन्दश्च भविष्यति। तत्कस्य हेतोः? तथा हि प्रज्ञापारमिता परमार्थोपसंहिता सर्वधर्माणां यथाभूतप्रतिवेधाय प्रत्युपस्थिता सर्वसत्त्वा-

१ R प्रतिबोधाय.

W 487 नाम् । इमे खलु पुनः शारिपुत्र षट्पारमिताप्रतिसंयुक्ताः सूत्रान्तास्तथागतस्यात्ययेन दक्षिणापथे प्रचरिष्यन्ति, दक्षिणापथात्पुनरेव वर्तन्यां प्रचरिष्यन्ति, वर्तन्याः पुनरुत्तरपथे प्रचरिष्यन्ति । नवमण्डप्राप्ते धर्मविनये सद्धर्मस्यान्तर्धानकालसमये समन्वाहृतास्ते शारिपुत्र तथागतेन कुलपुत्राः कुलदुहितरश्च । तस्मिन् काले य इमां प्रज्ञापारमितामुद्ग्रहीष्यन्ति 5 धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति, अन्तशो लिखित्वा पुस्तकगतामपि कृत्वा धारयिष्यन्ति, ज्ञातास्ते शारिपुत्र तथागतेन। अधिष्ठितास्ते शारिपुत्र तथागतेन। दृष्टास्ते शारिपुत्र तथागतेन। व्यवलोकितास्ते शारिपुत्र तथागतेन बुद्धचक्षुषा ॥

W 488 शारिपुत्र आह—इयमपि भगवन् प्रज्ञापारमिता एवंगम्भीरा पश्चिमे काले पश्चिमे 10 समये वैस्तारिकी भविष्यत्युत्तरस्यां दिशि उत्तरे दिग्भागे? भगवानाह—ये तत्र शारिपुत्र उत्तरस्यां R 226 दिश्युत्तरे दिग्भागे इमां गम्भीरां प्रज्ञापारमितां श्रुत्वा अत्र प्रज्ञापारमितायां योगमापत्स्यन्ते, ते वैस्तारिकीं करिष्यन्ति । चिरयानसंप्रस्थितास्ते शारिपुत्र बोधिसत्त्वा महासत्त्वा वेदितव्याः, य इमां प्रज्ञापारमितां श्रोष्यन्ति लिखिष्यन्ति उद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति, तथत्वाय शिक्षिष्यन्ते, 15 तथत्वाय प्रतिपत्स्यन्ते, तथत्वाय योगमापत्स्यन्ते ॥

W 489 शारिपुत्र आह—कियन्तस्ते भगवन् बोधिसत्त्वा महासत्त्वा भविष्यन्ति[1] उत्तरस्यां दिशि उत्तरे दिग्भागे, बहव उताहो अल्पकाः? य इमां गम्भीरां प्रज्ञापारमितां श्रोष्यन्ति लिखिष्यन्ति उद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्ति उपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति, तथत्वाय शिक्षिष्यन्ते, तथत्वाय प्रतिपत्स्यन्ते, तथत्वाय 20 योगमापत्स्यन्ते? भगवानाह—बहवस्ते शारिपुत्र सुबहवः उत्तरापथे उत्तरस्यां दिश्युत्तरे दिग्भागे बोधिसत्त्वा महासत्त्वा भविष्यन्ति । किंचापि शारिपुत्र बहवस्ते, तेभ्योऽपि बहुभ्योऽल्पकास्ते बोधिसत्त्वा महासत्त्वा भविष्यन्ति, य इमां गम्भीरां प्रज्ञापारमितां श्रोष्यन्ति लिखिष्यन्त्युद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्ति उपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति, तथत्वाय शिक्षिष्यन्ते, तथत्वाय प्रतिपत्स्यन्ते, तथत्वाय 25 योगमापत्स्यन्ते, प्रज्ञापारमितायां च भाष्यमाणायां नावलेष्यन्ते न संलेष्यन्ते, न विषत्स्यन्ति न विषादमापत्स्यन्ते, न विपृष्ठीकरिष्यन्ति मानसम् , न भग्नपृष्ठीकरिष्यन्ति, नोत्त्रसिष्यन्ति न R 227 संत्रसिष्यन्ति न संत्रासमापत्स्यन्ते, चिरयानसंप्रस्थितास्ते बोधिसत्त्वा महासत्त्वा वेदितव्याः। W 490 अनुबद्धास्तैः पौर्वकास्तथागता अर्हन्तः सम्यक्संबुद्धाः, परिपृष्टाः परिपृच्छिताः परिप्रश्नीकृताः। पूजिताश्च तैः पौर्वकास्तथागता अर्हन्तः सम्यक्संबुद्धाः कुलपुत्रैः कुलदुहितृभिश्च 30 बोधिसत्त्वयानिकैः पुद्गलैः । शीलेषु च ते परिपूर्णकारिणो भविष्यन्ति, बहुजनस्य च तेऽर्थं करिष्यन्ति, यदुत इमामेवानुत्तरां सम्यक्संबोधिमारभ्य । तत्कस्य हेतोः? तथा हि तेषां

---

१ W om. भविष्यन्ति.

कुलपुत्राणां कुलदुहितॄणां च मयैव सर्वज्ञताप्रतिसंयुक्तैव कथा कृता। तेषां जाति-
व्यतिवृत्तानामपि एत एव सर्वज्ञताप्रतिसंयुक्ताः प्रज्ञापारमिताप्रतिसंयुक्ताः समुदाचारा
भविष्यन्ति। एनामेव च ते कथां करिष्यन्ति, एनामेव च कथामभिनन्दिष्यन्ति, यदुत
अनुत्तरां सम्यक्संबोधिमारभ्य। तेषु च सुस्थिताः समाहिताश्च भविष्यन्ति अस्यां W 491
प्रज्ञापारमितायाम्। मारेणापि ते न शक्या भेदयितुम्, कुतः पुनरन्यैः सत्त्वैः, यदुत च्छन्दतो 5
वा मन्त्रतो वा। तत्कस्य हेतोः? यथापि नाम तद्दृढस्थामत्वादनुत्तरायां सम्यक्संबोधौ। ते
च कुलपुत्राः कुलदुहितरश्च श्रुत्वा एनां प्रज्ञापारमितामुदारं प्रीतिप्रामोद्यप्रसादं प्रति-
लप्स्यन्ते। बहुजनस्य च ते कुशलमूलान्यवरोपयिष्यन्ति यदुतानुत्तरायां सम्यक्संबोधौ। W 492
तत्कस्य हेतोः? एवं हि तैः कुलपुत्रैः कुलदुहितृभिश्च ममान्तिके संमुखं वाग्भाषिता—
बहूनि प्राणिशतानि बहूनि प्राणिसहस्राणि बहूनि प्राणिशतसहस्राणि बहूनि प्राणिकोटी- 10
शतानि बहूनि प्राणिकोटीसहस्राणि बहूनि प्राणिकोटीशतसहस्राणि बहूनि प्राणिकोटी-
नियुतशतसहस्राणि बोधिसत्त्वचर्यां चरन्तो वयमनुत्तरायां सम्यक्संबोधौ प्रस्थापयिष्यामः R 228
संदर्शयिष्यामः समादापयिष्यामः समुत्तेजयिष्यामः संप्रहर्षयिष्यामः संप्रभावयिष्यामः
संबोधये प्रतिष्ठापयिष्याम इति, अविनिवर्तनीयान् करिष्याम इति। तत्कस्य हेतोः? अनु-
मोदितं हि शारिपुत्र मया तेषां बोधिसत्त्वयानिकानां कुलपुत्राणां कुलदुहितॄणां च चित्तेन 15
चित्तं व्यवलोक्य यैरियं वाग्भाषिता—बोधाय चरन्तो वयं बहूनि प्राणिशतानि बहूनि
प्राणिसहस्राणि बहूनि प्राणिशतसहस्राणि बहूनि प्राणिकोटीशतानि बहूनि प्राणिकोटी-
सहस्राणि बहूनि प्राणिकोटीशतसहस्राणि बहूनि प्राणिकोटीनियुतशतसहस्राणि अनुत्तरायां
सम्यक्संबोधौ प्रस्थापयिष्यामः संदर्शयिष्यामः समादापयिष्यामः समुत्तेजयिष्यामः संप्रहर्ष- W 493
यिष्यामः संप्रभावयिष्यामः, संबोधये प्रतिष्ठापयिष्याम इति, अविनिवर्तनीयान् करिष्याम 20
इति। एवं च ते कुलपुत्राः कुलदुहितरश्च उदाराधिमुक्तिका भविष्यन्ति, यदन्यान्यपि ते
बुद्धक्षेत्राण्यध्यालम्बितव्यानि मंस्यन्ते। यत्र संमुखीभूतास्तथागता अर्हन्तः सम्यक्संबुद्धा धर्मं
देशयिष्यन्ति, तत्र संमुखीभूतानां तथागतानामर्हतां सम्यक्संबुद्धानामन्तिकात्पुनरेवैनां
गम्भीरां प्रज्ञापारमितां विस्तरेण श्रोष्यन्ति। तेष्वपि ते बुद्धक्षेत्रेषु बहूनि प्राणिशतानि
बहूनि प्राणिसहस्राणि बहूनि प्राणिशतसहस्राणि बहूनि प्राणिकोटीशतानि बहूनि प्राणि- 25
कोटीसहस्राणि बहूनि प्राणिकोटीशतसहस्राणि बहूनि प्राणिकोटीनियुतशतसहस्राणि
अनुत्तरायां सम्यक्संबोधौ प्रस्थापयिष्यन्ति संदर्शयिष्यन्ति समादापयिष्यन्ति समुत्तेजयि- R 229
ष्यन्ति संप्रहर्षयिष्यन्ति संप्रभावयिष्यन्ति, संबोधये प्रतिष्ठापयिष्यन्ति, अविनिवर्तनीयान्
करिष्यन्ति॥

एवमुक्ते आयुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्—आश्चर्यं भगवन् यावदिदं तथा- 30 W 494
गतेनार्हता सम्यक्संबुद्धेन अतीतानागतप्रत्युत्पन्नेषु धर्मेषु नास्ति किंचिददृष्टं वा अश्रुतं
वा अविदितं वा अविज्ञातं वा। न स कश्चिद्धर्मो यो न ज्ञातो न स काचिच्चर्या सत्त्वानां या
न विज्ञाता, यत्र हि नाम अनागतानामपि बोधिसत्त्वानां महासत्त्वानां चर्या ज्ञाता बोधि-

च्छन्दिकानामध्याशयसंपन्नानामारब्धवीर्याणाम्। ये तस्मिन् काले इमां गम्भीरां प्रज्ञापारमितामुद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्ति उपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति लिखिष्यन्ति च, ये च तस्मिन् काले आसां षण्णां पारमितानां कृतशः सर्वसत्त्वानामर्थाय उद्योगमापद्य अन्वेषिष्यन्ते पर्येषिष्यन्ते गवेषिष्यन्ते, तेषां
5 च कुलपुत्राणां कुलदुहितॄणां च अन्वेषमाणानां पर्येषमाणानां केचिद्गवेषमाणा बोधिसत्त्वा लप्स्यन्ते, केचिन्न लप्स्यन्ते, केचिदगवेषयन्तोऽपि लप्स्यन्ते एनां गम्भीरां प्रज्ञापारमिताम्।
W 495 किमत्र भगवन् कारणम्? एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्—एवमेतच्छारिपुत्र, एवमेतत्। नास्ति किंचित्तथागतस्य अतीतानागतप्रत्युत्पन्नेषु धर्मेष्वदृष्टं वा अश्रुतं वा अविदितं वा अविज्ञातं वा। तस्मिन् खलु पुनः शारिपुत्र काले तस्मिन् समये केचिद्बोधिसत्त्वा
R 230 10 मार्गयमाणा पर्येषमाणा गवेषमाणा अपि लप्स्यन्ते इमां प्रज्ञापारमिताम्। केचिद्बोधिसत्त्वा अमार्गयमाणा अपर्येषमाणा अगवेषयन्तोऽपि लप्स्यन्ते। तत्कस्य हेतोः? तथा हि तैर्बोधिसत्त्वैर्महासत्त्वैरियं प्रज्ञापारमिता पूर्वान्ततोऽपि अनिक्षिप्तधुरैर्मार्गिता च पर्यन्विष्टा च। ते तेनैव पूर्वकेण कुशलमूलच्छन्देन एनां प्रज्ञापारमिताममार्गयन्तोऽपि अपर्येषमाणा अपि अगवेषयन्तोऽपि लप्स्यन्ते। यान्यपि च ततोऽन्यान्यपि सूत्राणि एनामेव प्रज्ञापारमितामभि-
15 वदन्ति, तानि चैषां स्वयमेवोपगमिष्यन्ति उपपत्स्यन्ते उपनंस्यन्ते च। तत्कस्य हेतोः?
W 496 एवमेतच्छारिपुत्र भवति—य एनां प्रज्ञापारमितां बोधिसत्त्वो महासत्त्वोऽनिक्षिप्तधुरो मार्गयति च पर्येषते च, स जातिव्यतिवृत्तोऽपि जन्मान्तरव्यतिवृत्तोऽपि एनां प्रज्ञापारमितां लप्स्यते। ततोऽन्यानि च सूत्राणि प्रज्ञापारमिताप्रतिसंयुक्तानि तस्य स्वयमेवोपगमिष्यन्ति, उपपत्स्यन्ते उपनंस्यन्ते चेति॥

20 एवमुक्ते आयुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्—इमे एव केवलं भगवंस्तेषां कुलपुत्राणां कुलदुहितॄणां च षट्पारमिताप्रतिसंयुक्ताः सूत्रान्ता उपपत्स्यन्ते उपनंस्यन्ते, नान्ये? भगवानाह—ये चान्येऽपि शारिपुत्र गम्भीरा गम्भीराः सूत्रान्ता भविष्यन्ति, तेऽपि तेषां
W 497 कुलपुत्राणां कुलदुहितॄणां च स्वयमेवोपपत्स्यन्ते स्वयमेवोपनंस्यन्ते च। तत्कस्य हेतोः? एवं ह्येतच्छारिपुत्र भवति—ये बोधिसत्त्वा महासत्त्वा अनुत्तरायां सम्यक्संबोधौ प्रस्थापयिष्यन्ति
25 संदर्शयिष्यन्ति समादापयिष्यन्ति समुत्तेजयिष्यन्ति संप्रहर्षयिष्यन्ति प्रभावयिष्यन्ति,
R 231 संबोधये प्रतिष्ठापयिष्यन्ति, अविनिवर्तनीयान् करिष्यन्ति, स्वयं च तत्र शिक्षिष्यन्ते, तेषां शारिपुत्र जातिव्यतिवृत्तानामपि इमे गम्भीरा गम्भीरा अनुपलम्भप्रतिसंयुक्ताः शून्यताप्रतिसंयुक्ताः षट्पारमिताप्रतिसंयुक्ताश्च सूत्रान्ताः स्वयमेवोपगमिष्यन्ति, स्वयमेवोपपत्स्यन्ते स्वयमेवोपनंस्यन्ते चेति॥

30 आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां धारणगुणपरिकीर्तनपरिवर्तो नाम दशमः॥



## ११ मारकर्मपरिवर्त एकादशः ।

अथ खलु आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—गुणा इमे भगवंस्तेषां कुलपुत्राणां कुलदुहितॄणां च भगवता परिकीर्तिताः । केचित्पुनर्भगवंस्तेषामन्तराया उत्पत्स्यन्ते ? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—बहूनि सुभूते तेषां मारकर्माण्यन्तरायकराण्युत्पत्स्यन्ते । सुभूतिराह—कियद्रूपाणि भगवंस्तेषां बहूनि मारकर्माण्यन्तरायकराण्युत्पत्स्यन्ते ? भगवानाह— 5 तेषां सुभूते बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमितां भाषमाणानां चिरेण प्रतिभानमुत्पत्स्यते। इदं सुभूते प्रथमं मारकर्म वेदितव्यम् । तदपि च प्रतिभानं जायमानमेव विक्षेप्स्यते । इदमपि सुभूते मारकर्म वेदितव्यम् । ते विजृम्भमाणा हसन्त उच्चग्घयन्तो लिखिष्यन्ति । इदमपि सुभूते मारकर्म वेदितव्यम् । विक्षिप्तचित्ताः पर्यवाप्स्यन्ति । इदमपि सुभूते मारकर्म वेदितव्यम् । अन्योन्यविज्ञानसमङ्गिनो लिखिष्यन्ति । इदमपि सुभूते मारकर्म वेदितव्यम् । 10 स्मृतिं न प्रतिलप्स्यन्ते। इदमपि सुभूते मारकर्म वेदितव्यम् । परस्परमुपहसन्तो लिखिष्यन्ति। इदमपि सुभूते मारकर्म वेदितव्यम् । परस्परमुच्चग्घयमाना लिखिष्यन्ति । इदमपि सुभूते मारकर्म वेदितव्यम् । विक्षिप्तचक्षुषो लिखिष्यन्ति । इदमपि सुभूते मारकर्म वेदितव्यम् । लिखतामन्योन्यं विसामग्री भविष्यति । इदमपि सुभूते मारकर्म वेदितव्यम् । न वयमत्र गाधं नास्वादं लभामहे इत्युत्थायासनात्प्रक्रमिष्यन्ति । इदमपि सुभूते मारकर्म वेदितव्यम् । न 15 वयमत्र व्याकृताः प्रज्ञापारमितायामित्यप्रसन्नचित्ता उत्थायासनात्प्रक्रमिष्यन्ति । इदमपि सुभूते मारकर्म वेदितव्यम् । न नोऽत्र ग्रामस्य वा नगरस्य वा निगमस्य वा नामधेयं परिगृहीतं यत्र नो जन्म, न नोऽत्र नाम गोत्रं वा गृहीतम्, न मातापित्रोर्नाम गोत्रं वा गृहीतम्, नापि कुलस्य यत्र नो जन्मेति, ते प्रज्ञापारमितां न श्रोतव्यां मंस्यन्ते, ततोऽपक्रमितव्यं मंस्यन्ते । यथा यथा च अपक्रमिष्यन्ति, तैर्यावद्भिश्चित्तोत्पादैस्तथा तथा तावतः 20 कल्पान् संसारस्य पुनः पुनः परिग्रहीष्यन्ति, यत्र तैः पुनरेव योगमापत्तव्यं भविष्यति । तत्कस्मात्? इमां हि सुभूते प्रज्ञापारमितामशृण्वन्तो बोधिसत्त्वा महासत्त्वा लौकिकलोकोत्तरेषु धर्मेषु न निर्जायन्ते। इदमपि सुभूते तेषां मारकर्म वेदितव्यम् । पुनरपरं सुभूते बोधिसत्त्वयानिकाः पुद्गला इमां प्रज्ञापारमितां सर्वज्ञज्ञानस्याहारिकां विवर्ज्य उत्सृज्य ये ते सूत्रान्ता नैव सर्वज्ञज्ञानस्याहारिकास्तान् पर्येषितव्यान् मंस्यन्ते । इदमपि सुभूते तेषां मारकर्म 25 वेदितव्यम् । यथा खलु पुनः सुभूते न लौकिकलोकोत्तरेषु शिक्षितुकामा न लौकिकलोकोत्तरेषु धर्मेषु निर्यातुकामा इह प्रज्ञापारमितायां न शिक्षन्ते। प्रज्ञापारमितायामशिक्षमाणा न लौकिकलोकोत्तरेषु धर्मेषु निर्यान्ति । एवं ते परीत्तबुद्धयो लौकिकलोकोत्तराणां यथाभूतपरिज्ञाया मूलं प्रज्ञापारमितां विवर्ज्य उत्सृज्य प्रशाखामध्यालम्बितव्यां मंस्यन्ते । तद्यथापि नाम सुभूते कुक्कुरः स्वामिनोऽन्तिकात्पिण्डाग्रं छोरयित्वा कर्मकरस्यान्तिकात्कवलं पर्येषितव्यं 30 मन्येत, एवमेव सुभूते भविष्यन्त्यनागतेऽध्वनि एके बोधिसत्त्वयानिकाः, पुद्गलाः, ये इमां प्रज्ञापारमितां सर्वज्ञज्ञानस्य मूलं छोरयित्वा शाखापत्रपलालभूते श्रावकप्रत्येकबुद्धयाने

R 232 W 499 W 500 R 233 W 501 W 502 R 234

सारं बुद्धत्वं पर्येषितव्यं मंस्यन्ते। इदमपि सुभूते तेषां मारकर्म वेदितव्यम्। तत्कस्य हेतोः? न हि तेऽल्पबुद्धयो ज्ञास्यन्ति–प्रज्ञापारमिता आहारिका सर्वज्ञज्ञानस्येति। ते प्रज्ञापारमितां विवर्ज्य उत्सृज्य छोरयित्वा ततोऽन्ये सूत्रान्ता ये श्रावकभूमिमभिवदन्ति, W 503 प्रत्येकबुद्धभूमिमभिवदन्ति, तानधिकतरं पर्यवाप्तव्यान् मंस्यन्ते। शाखापत्रपलालोपमाः 5 प्रतिपन्नास्ते तथारूपा बोधिसत्त्वा वेदितव्याः। तत्कस्य हेतोः? न हि सुभूते बोधिसत्त्वेन महासत्त्वेनैवं शिक्षितव्यं यथा श्रावकयानिकाः प्रत्येकबुद्धयानिका वा पुद्गलाः शिक्षन्ते। कथं च सुभूते श्रावकयानिकाः प्रत्येकबुद्धयानिका वा पुद्गलाः शिक्षन्ते? तेषां सुभूते एवं भवति–एकमात्मानं दमयिष्यामः, एकमात्मानं शमयिष्यामः, एकमात्मानं परिनिर्वापयिष्यामः, इत्यात्मदमशमथपरिनिर्वाणाय सर्वकुशलमूलाभिसंस्कारप्रयोगानारभन्ते। न खलु पुनः 10 सुभूते बोधिसत्त्वेन महासत्त्वेनैवं शिक्षितव्यम्। अपि तु खलु पुनः सुभूते बोधिसत्त्वेन R 235 महासत्त्वेनैवं शिक्षितव्यम्–आत्मानं च तथतायां स्थापयिष्यामि सर्वलोकानुग्रहाय, सर्वसत्त्वानपि तथतायां स्थापयिष्यामि, अप्रमेयं सत्त्वधातुं परिनिर्वापयिष्यामीति। सर्वकुशलमूला- W 504 भिसंस्कारप्रयोगा बोधिसत्त्वेन महासत्त्वेनैवमारब्धव्याः, न च तैर्मन्तव्यम्। तद्यथापि नाम सुभूते कश्चिदेव पुरुषो हस्तिनमपश्यन् हस्तिनो वर्णसंस्थाने पर्येषेत। सोऽन्धकारे हस्तिनं 15 लब्ध्वा येन प्रकाशं तेनोपनिध्यायेत। तेनोपनिध्यायन् हस्तिपदं पर्येषितव्यं मन्येत। हस्तिपदाच्च हस्तिनो वर्णसंस्थाने ग्रहीतव्ये मन्येत। तत्किं मन्यसे सुभूते अपि नु स पण्डितजातीयः पुरुषो भवेत्? सुभूतिराह–नो हीदं भगवन्। भगवानाह–एवमेव सुभूते तथारूपास्ते बोधिसत्त्वयानिकाः पुद्गला वेदितव्याः, य इमां प्रज्ञापारमितामजानाना अपरिपृच्छन्तस्तां छोरयित्वा अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामा ये ते सूत्रान्ताः श्रावक- 20 भूमिमभिवदन्ति, प्रत्येकबुद्धभूमिमभिवदन्ति, तान् पर्येषितव्यान् मंस्यन्ते। इदमपि सुभूते तेषां मारकर्म वेदितव्यम्। तद्यथापि नाम सुभूते रत्नार्थिकः पुरुषो महासमुद्रं दृष्ट्वा नावगाहेत, रत्नानि न निध्यायेत् नाभ्यालम्बेत। स रत्नहेतोर्गोष्पदं पर्येषितव्यं मन्येत। स गोष्पदोदकेन महासमुद्रं समीकर्तव्यं मन्येत। तत्किं मन्यसे सुभूते-अपि नु स पण्डितजातीयः पुरुषो W 505 वेदितव्यः? सुभूतिराह-नो हीदं भगवन्। भगवानाह–एवमेव सुभूते तथारूपास्ते 25 बोधिसत्त्वयानिकाः पुद्गला वेदितव्याः, य इमां गम्भीरां प्रज्ञापारमितां लब्ध्वाप्यनवगाहमाना R 236 अविजानन्तस्त्यक्ष्यन्ति। ये च सूत्रान्ताः श्रावकभूमिमभिवदन्ति, प्रत्येकबुद्धभूमिमभिवदन्ति, अल्पोत्सुकविहारितया तान् पर्येषितव्यान् मंस्यन्ते। यत्र बोधिसत्त्वयानं न संवर्ण्यते, केवलमात्मदमशमथपरिनिर्वाणमेव इत्यपि प्रतिसंलयनमिति। स्रोतआपत्तिफलं प्राप्नुयामिति, सकृदागामिफलमित्यनागामिफलमित्यर्हत्त्वं प्राप्नुयामिति, प्रत्येकबोधिं प्राप्नुयामिति, दृष्ट एव 30 धर्मे अनुपादाय आस्रवेभ्यश्चित्तं विमोच्य परिनिर्वापयामीति। इदमुच्यते श्रावकप्रत्येकबुद्ध- W 506 भूमिप्रतिसंयुक्तमिति। नात्र बोधिसत्त्वैर्महासत्त्वैरेवं चित्तमुत्पादयितव्यम्। तत्कस्य हेतोः? महायानसंप्रस्थिता हि सुभूते बोधिसत्त्वा महासत्त्वा महासंनाहसंनद्धा भवन्ति। न तैः

कदाचिदल्पोत्सुकतायां चित्तमुत्पादयितव्यम् । तत्कस्य हेतोः? लोकपरिणायका हि भवन्ति ते सत्पुरुषा लोकार्थकराः। तस्मात्तैर्नित्यकालं सततसमितं षट्पारमितासु शिक्षितव्यम्। ये च खलु पुनः सुभूते अपरिपक्वकुशलमूलाः परीत्तकुबुद्धिका मृदुकाध्याशया बोधिसत्त्वयानिकाः पुद्गलाः, ते षट्पारमिताप्रतिसंयुक्तान् सूत्रान्तानजानाना अनवबुद्ध्यमाना इमां प्रज्ञापारमितां छोरयित्वा ये ते सूत्रान्ताः श्रावकप्रत्येकबुद्धभूमिमभिवदन्ति, तान् 5 पर्येषितव्यान् मंस्यन्ते। इदमपि सुभूते मारकर्म वेदितव्यं तेषां तथारूपाणां बोधिसत्त्वयानिकानां पुद्गलानाम् तद्यथापि नाम सुभूते पलगण्डो वा पलगण्डान्तेवासी वा वैजयन्तस्य प्रासादस्य प्रमाणेन प्रासादं कर्तुकामो निर्मातुकामः स्यात्। स सूर्याचन्द्रमसोर्विमानप्रमाणं मण्डलं पर्येषेत। पर्येषमाणः स सूर्याचन्द्रमसोर्विमानं पश्येत्। स ततः प्रमाणं ग्रहीतव्यं मन्यते। तत्किं मन्यसे सुभूते वैजयन्तप्रासादप्रमाणं प्रासादं कर्तुकामेन निर्मातुकामेन 10 सूर्याचन्द्रमसोर्विमानात्प्रमाणं ग्रहीतव्यं भवति? सुभूतिराह—नो हीदं भगवन्। भगवानाह—एवमेव सुभूते भविष्यन्त्यनागतेऽध्वनि एके बोधिसत्त्वयानिकाः पुद्गलाः, ये प्रज्ञापारमितां श्रुत्वा प्रज्ञापारमितां लब्ध्वा प्रज्ञापारमितां रिञ्चित्वा प्रज्ञापारमितामुत्सृज्य श्रावकप्रत्येकबुद्धभूमिप्रतिसंयुक्तैः सूत्रान्तैः सर्वज्ञतां पर्येषितव्यां मंस्यन्ते, ये ते सूत्रान्ता एवमभिवदन्ति—एकमात्मानं दमयिष्यामः, एकमात्मानं शमयिष्यामः, एकमात्मानं परिनिर्वापयिष्याम इति। 15 केवलमात्मदमशमथपरिनिर्वाणमेवोपनयन्ति, तथारूपान् सूत्रान्तान् पर्येष्यन्ते, तथा च शिक्षितव्यं मंस्यन्ते। तत्किं मन्यसे सुभूते अपि नु ते पण्डितजातीयाः बोधिसत्त्वा वेदितव्याः? सुभूतिराह—नो हीदं भगवन्। भगवानाह—इदमपि सुभूते तेषां मारकर्म वेदितव्यम्। तद्यथापि नाम सुभूते कश्चिदेव पुरुषो राजानं च चक्रवर्तिनं द्रष्टुकामो भवेत्, स राजानं चक्रवर्तिनं पश्येत्। दृष्ट्वा च ईदृशो राजा चक्रवर्ती वर्णेन संस्थानेन 20 तेजसा ऋद्ध्या चेति निमित्तं गृहीत्वा कोट्टराजं पश्येत्। स तस्य कोट्टराजस्य वर्णं संस्थानं तेज ऋद्धिं च निमित्तं च गृहीत्वा अप्रतिबलो विशेषग्रहणं प्रति एवं वदेत्—ईदृश एव स राजा चक्रवर्ती वर्णेन संस्थानेन तेजसा ऋद्ध्या च निमित्तेन चेति। तत्किं मन्यसे सुभूते अपि नु स पण्डितजातीयः पुरुषो वेदितव्यो यश्चक्रवर्तिनं कोट्टराजेन समीकर्तव्यं मन्येत? सुभूतिराह—नो हीदं भगवन्। भगवानाह—एवमेव सुभूते भविष्यन्त्य- 25 नागतेऽध्वनि एके बोधिसत्त्वयानिकाः पुद्गलाः, य इमां प्रज्ञापारमितां श्रुत्वा प्रज्ञापारमितां लब्ध्वा प्रज्ञापारमितां रिञ्चित्वा प्रज्ञापारमितामुत्सृज्य श्रावकप्रत्येकबुद्धभूमिप्रतिसंयुक्तैः सूत्रान्तैः सर्वज्ञतां पर्येषितव्यां मंस्यन्ते। इदमपि सुभूते तेषां मारकर्म वेदितव्यम्। न खलु पुनरहं सुभूते एभिरेवंरूपैः श्रावकप्रत्येकबुद्धभूमिप्रतिसंयुक्तैः सूत्रान्तैर्बोधिसत्त्वस्य महासत्त्वस्य सर्वज्ञतां पर्येषितव्यां वदामि। अपि तु खलु पुनः सुभूते 30 यत्तथागतेन प्रज्ञापारमितायां बोधिसत्त्वानां महासत्त्वानामुपायकौशल्यमाख्यातम्, तत्राशिक्षित्वा बोधिसत्त्वो महासत्त्वो न निर्यास्यत्यनुत्तरायां सम्यक्संबोधौ। तत्कस्य हेतोः?

R 237 W 507 W 508 R 238

W 509 धन्वको ह्यन्येषु सूत्रान्तेषु बोधिसत्त्वसमुदागमः। तस्मात्तर्हि सुभूते तथागत एनामनुशंसां प्रज्ञापारमितायां पश्यन् अनेकपर्यायेण बोधिसत्त्वान् महासत्त्वानस्यां प्रज्ञापारमितायां संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति संनिवेशयति प्रतिष्ठापयति-एवं बोधिसत्त्वा महासत्त्वा अविनिवर्तनीया भवेयुरनुत्तरायाः सम्यक्संबोधेरिति। तत्किं मन्यसे सुभूते अपि नु 5 पण्डितजातीयास्ते बोधिसत्त्वाः प्रतिभान्ति, ये अविनिवर्तनीययानं महायानमवाप्य समासाद्य पुनरेव तद्विवर्ज्य विवर्त्य हीनयानं पर्येषितव्यं मंस्यन्ते? सुभूतिराह-नो हीदं भगवन्। R 239 भगवानाह-तद्यथापि नाम सुभूते बुभुक्षितः पुरुषः शतरसं भोजनं लब्ध्वा हितविपाकं सुखविपाकं यावदायुःपर्यन्तं क्षुत्पिपासानिवर्तकम्, तदपास्य षष्टिकोदनं पर्येषितव्यं मन्येत। षष्टिकोदनं लब्ध्वा शतरसं भोजनमुत्सृज्य विवर्ज्य तं षष्टिकोदनं परिभोक्तव्यं मन्येत। तत्किं 10 मन्यसे सुभूते अपि नु स पुरुषः पण्डितजातीयो भवेत्? सुभूतिराह-नो हीदं भगवन्। भगवानाह-एवमेव सुभूते भविष्यन्त्यनागतेऽध्वनि एके बोधिसत्त्वाः, य इमां प्रज्ञापारमितां श्रुत्वा प्रज्ञापारमितां लब्ध्वा प्रज्ञापारमितां रिञ्चिष्यन्ति, प्रज्ञापारमितामुत्स्रक्ष्यन्ति प्रज्ञापारमितां छोरयिष्यन्ति, प्रज्ञापारमितां दूरीकरिष्यन्ति, प्रज्ञापारमितां रिञ्चित्वा प्रज्ञापारमितामुत्सृज्य प्रज्ञापारमितां छोरयित्वा प्रज्ञापारमितां दूरीकृत्य ततः श्रावकप्रत्येकबुद्धयानप्रतिसंयुक्तान् 15 सूत्रान्तान् पर्येषितव्यान् मंस्यन्ते। ये ते सूत्रान्ताः श्रावकप्रत्येकबुद्धभूमिमभिवदन्ति, तैः सर्वज्ञतां पर्येषितव्यां मंस्यन्ते। तत्किं मन्यसे सुभूते अपि नु पण्डितजातीयास्ते बोधिसत्त्वा W 510 वेदितव्याः? सुभूतिराह-नो हीदं भगवन्। भगवानाह-इदमपि सुभूते तेषां मारकर्म वेदितव्यम्। तद्यथापि नाम सुभूते कश्चिदेव पुरुषोऽनर्घ्यं मणिरत्नं लब्ध्वा अल्पार्घ्येण अल्पसारेण मणिरत्नेन सार्धं समीकर्तव्यं मन्येत। तत्किं मन्यसे सुभूते अपि नु स 20 पण्डितजातीयः पुरुषो वेदितव्यः? सुभूतिराह-नो हीदं भगवन्। भगवानाह-एवमेव R 240 सुभूते भविष्यन्त्यनागतेऽध्वनि एके बोधिसत्त्वयानिकाः पुद्गलाः, य इदं गम्भीरं प्रभास्वरं प्रज्ञापारमितारत्नं लब्ध्वा श्रुत्वा श्रावकप्रत्येकबुद्धयानेन समीकर्तव्यं मंस्यन्ते, श्रावकप्रत्येकबुद्धभूमौ च सर्वज्ञतामुपायकौशल्यं च पर्येषितव्यं मंस्यन्ते। तत्किं मन्यसे सुभूते अपि नु पण्डितजातीयास्ते बोधिसत्त्वा वेदितव्याः? सुभूतिराह-नो हीदं भगवन्। भगवानाह- 25 इदमपि सुभूते तेषां बोधिसत्त्वानां महासत्त्वानां मारकर्म वेदितव्यम्। पुनरपरं सुभूते अस्यां गम्भीरायां प्रज्ञापारमितायां भाष्यमाणायां देश्यमानायामुपदिश्यमानायामुद्दिश्यमानायामुद्गृह्यमाणायां वाच्यमानायां स्वाध्याय्यमानायामन्तशो लिख्यमानायामपि बहूनि प्रतिभाना- W 511 न्युत्पत्स्यन्ते, यानि चित्तविक्षेपं करिष्यन्ति। इदमपि सुभूते तेषां बोधिसत्त्वानां महासत्त्वानां मारकर्म वेदितव्यम्॥

30 एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्-शक्या पुनर्भगवन् प्रज्ञापारमिता लिखितुम्? भगवानाह-नो हीदं सुभूते। ये केचित्सुभूते प्रज्ञापारमितां लिप्यक्षरैर्लिखित्वा प्रज्ञापारमिता लिखितेति मंस्यन्ते, असतीति वा अक्षरेषु प्रज्ञापारमितामभिनिवेक्ष्यन्ते, अनक्षरेति वा, इदमपि सुभूते तेषां मारकर्म वेदितव्यम्॥

पुनरपरं सुभूते प्रज्ञापारमितायां लिख्यमानायां देशमनसिकारा उत्पत्स्यन्ते, ग्राम-
नगरनिगमजनपदराष्ट्रराजधानीमनसिकारा उत्पत्स्यन्ते, उद्यानमनसिकारा उत्पत्स्यन्ते, गुरु-
मनसिकारा उत्पत्स्यन्ते, आख्यानमनसिकारा उत्पत्स्यन्ते, चौरमनसिकारा उत्पत्स्यन्ते, गुल्म- R 241
स्थानमनसिकारा उत्पत्स्यन्ते, विशिखामनसिकारा उत्पत्स्यन्ते, शिबिकामनसिकारा उत्प-
त्स्यन्ते, सुखमनसिकारा उत्पत्स्यन्ते, दुःखमनसिकारा उत्पत्स्यन्ते, भयमनसिकारा उत्पत्स्यन्ते, 5
स्त्रीमनसिकारा उत्पत्स्यन्ते, पुरुषमनसिकारा उत्पत्स्यन्ते, नपुंसकमनसिकारा उत्पत्स्यन्ते,
प्रियाप्रियव्यत्यस्तमनसिकारा उत्पत्स्यन्ते, मातापितृप्रतिसंयुक्ता मनसिकारा उत्पत्स्यन्ते, भ्रातृ-
भगिनीप्रतिसंयुक्ता मनसिकारा उत्पत्स्यन्ते, मित्रबान्धवसालोहितामात्यप्रतिसंयुक्ता मनसि- W 512
कारा उत्पत्स्यन्ते, प्रजापतिपुत्रदुहितृप्रतिसंयुक्ता मनसिकारा उत्पत्स्यन्ते, गृहभोजनपान-
प्रतिसंयुक्ता मनसिकारा उत्पत्स्यन्ते, चैलमनसिकारा उत्पत्स्यन्ते, शयनासनमनसिकारा 10
जीवितमनसिकारा इतिकर्तव्यतामनसिकारा रागमनसिकारा द्वेषमनसिकारा मोहमनसिकारा
ऋतुमनसिकारा सुकालमनसिकारा दुष्कालमनसिकारा गीतमनसिकारा वाद्यमनसिकारा
नृत्यमनसिकारा काव्यनाटकेतिहासमनसिकाराः शास्त्रमनसिकारा व्यवहारमनसिकारा
हास्यमनसिकारा लास्यमनसिकाराः शोकमनसिकारा आयासमनसिकारा आत्ममनसिकाराः,
इत्येतांश्चान्यांश्च सुभूते मनसिकारान् मारः पापीयानुपसंहरिष्यति अस्यां प्रज्ञापारमितायां 15
भाष्यमाणायां देश्यमानायामुपदिश्यमानायामुद्गृह्यमाणायां वाच्यमानायामुद्दिश्यमानायां
स्वाध्याय्यमानायामन्तशो लिख्यमानायामन्तरायं करिष्यति, चित्तविक्षेपं करिष्यति बोधि-
सत्त्वानां महासत्त्वानाम् । तत्र बोधिसत्त्वेन महासत्त्वेन मारकर्माणि बोद्धव्यानि । बुद्ध्वा
च विवर्जयितव्यानि । पुनरपरं सुभूते उत्पत्स्यन्ते राजमनसिकाराः कुमारमनसिकारा R 242
हस्तिमनसिकारा अश्वमनसिकारा रथमनसिकारा गुल्मदर्शनमनसिकाराः । इदमपि सुभूते 20
तेषां मारकर्म वेदितव्यम्। पुनरपरं सुभूते उत्पत्स्यन्ते अग्निमनसिकारा इच्छामनसिकारा
धनधान्यसमृद्धिमनसिकाराः। इदमपि सुभूते बोधिसत्त्वानां महासत्त्वानां मारकर्म वेदितव्यम् ॥

पुनरपरं सुभूते बोधिसत्त्वानां महासत्त्वानामुत्पत्स्यन्ते लाभसत्कारचीवरपिण्डपात- W 513
शयनासनग्लानप्रत्ययभैषज्यपरिष्काराणामन्तराया इमां प्रज्ञापारमितां भाषमाणानां देशयता-
मुपदिशतामुद्दिशतां स्वाध्यायतामन्तशो लिखतां लाभसत्कारश्लोकस्वादाश्चित्तोत्पीडा वा। 25
इदमपि सुभूते बोधिसत्त्वैर्महासत्त्वैर्मारकर्म वेदितव्यम् । एतानि तैः सर्वाणि मारकर्माणि
बोद्धव्यानि, बुद्ध्वा च विवर्जयितव्यानि ॥

पुनरपरं सुभूते बोधिसत्त्वानां महासत्त्वानामिमां प्रज्ञापारमितां भाषमाणानां
देशयतामुपदिशतामुद्दिशतां स्वाध्यायतामन्तशो लिखतां ये ते गम्भीरा गम्भीराः सूत्रान्ता
भविष्यन्ति श्रावकप्रत्येकबुद्धभूमिप्रतिसंयुक्ताः, तान् मारः पापीयान् भिक्षुवेषेणोपसंक्रम्य 30
उपसंहरिष्यति—इह शिक्षस्व, इदं लिख, इदमुद्दिश, इदं स्वाध्याय, इतः सर्वज्ञता निष्पत्स्यते R 243
इति। न खलु पुनः सुभूते बोधिसत्त्वेन महासत्त्वेन उपायकुशलेन तेभ्यः स्पृहोत्पादयितव्या।
तत्कस्य हेतोः? किं चापि सुभूते तेषु सूत्रान्तेषु शून्यतानिमित्ताप्रणिहितानि भाषितानि, W 514

न खलु पुनरुपायकौशल्यं तत्र बोधिसत्त्वानां महासत्त्वानामाख्यातम्। तत्र येऽनभिज्ञा भविष्यन्ति बोधिसत्त्वा उपायकौशल्यज्ञानविशेषस्य, ते इमां गम्भीरां प्रज्ञापारमितां रिञ्चितव्यां मंस्यन्ते। ते इमां गम्भीरां प्रज्ञापारमितां रिञ्चित्वा श्रावकप्रत्येकबुद्धभूमिप्रतिसंयुक्तेषु सूत्रान्तेषु उपायकौशल्यं पर्येषितव्यं मंस्यन्ते। इदमपि सुभूते बोधिसत्त्वेन महासत्त्वेन 5 मारकर्म वेदितव्यम्॥

पुनरपरं सुभूते धार्मश्रवणिकश्छन्दिको भविष्यति प्रज्ञापारमितामुद्ग्रहीतुकामः, धर्मभाणकश्च किलासी भविष्यति न धर्मं देशयितुकामः। इदमपि सुभूते बोधिसत्त्वेन महासत्त्वेन विसामग्रीमारकर्म वेदितव्यम्। पुनरपरं सुभूते धर्मभाणकश्च अकिलासी भविष्यति प्रज्ञापारमितां दातुकामः, धार्मश्रवणिकश्च किलासी वा बहुकृत्यो वा भविष्यति। 10 इदमपि सुभूते बोधिसत्त्वेन महासत्त्वेन विसामग्रीमारकर्म वेदितव्यम्। पुनरपरं सुभूते W 515 धार्मश्रवणिकश्छन्दिको भविष्यति प्रज्ञापारमितामुद्ग्रहीतुकामो धारयितुकामो वाचयितुकामः पर्यवाप्तुकामः प्रवर्तयितुकामोऽन्तशो लिखितुकामोऽपि भविष्यति, गतिमांश्च मतिमांश्च स्मृतिमांश्च भविष्यति। धर्मभाणकश्चान्यद्देशान्तरं क्षेप्स्यते नोद्धट्टितज्ञो वा न वा विपञ्चितज्ञः, अन- R 244 भिज्ञो वा भविष्यति। इयमपि सुभूते तत्र विसामग्री भविष्यति प्रज्ञापारमितायां भाष्यमाणायां 15 देश्यमानायामुपदिश्यमानायामुद्दिश्यमानायां स्वाध्याय्यमानायां शिक्ष्यमाणायामन्तशः लिख्यमानायाम्। इदमपि सुभूते बोधिसत्त्वेन महासत्त्वेन विसामग्रीमारकर्म वेदितव्यम्। पुनरपरं सुभूते धर्मभाणकश्च अकिलासी भविष्यत्यभिज्ञो दातुकामो वाचयितुकाम इमां प्रज्ञापारमिताम्, धार्मश्रवणिकश्च देशान्तरं प्रस्थितो भविष्यति नोद्धट्टितज्ञो वा न वा विपञ्चितज्ञोऽनभिज्ञो वा भविष्यति। इदमपि सुभूते बोधिसत्त्वेन महासत्त्वेन विसामग्रीमारकर्म वेदितव्यम्। W 516 20 पुनरपरं सुभूते धर्मभाणकश्च आमिषगुरुको लाभसत्कारचीवरगुरुको भविष्यति। धार्मश्रवणिकश्च अल्पेच्छः संतुष्टः प्रविविक्तोऽर्थं वा न दातुकामो भविष्यति। इयमपि सुभूते तत्र विसामग्री भविष्यति प्रज्ञापारमितायां शिक्ष्यमाणायां लिख्यमानायाम्। इदमपि सुभूते बोधिसत्त्वेन महासत्त्वेन मारकर्म वेदितव्यम्। पुनरपरं सुभूते धार्मश्रवणिकश्च श्राद्धो भविष्यति इमां प्रज्ञापारमितां श्रोतुकामोऽर्थमवबोद्धुकामोऽर्थं दातुकामोऽर्थं परित्यक्तुकामः। 25 धर्मभाणकश्च अश्राद्धो भविष्यति अल्पेच्छो वा न वा भाषितुकामः। अतोऽपि सुभूते विसामग्रीमारकर्म वेदितव्यम्। पुनरपरं सुभूते धार्मश्रवणिकश्च श्राद्धो भविष्यति श्रोतुकामोऽर्थमवबोद्धुकामः। धर्मभाणकस्य च तानि सूत्राणि धर्मान्तरायिकतया न संभविष्यन्ति R 245 नावतरिष्यन्ति। अतोऽपि सुभूते धार्मश्रवणिकस्याप्राप्तधर्मभाणिनः प्रतिवाणी भविष्यति। W 517 इयमपि सुभूते तत्र विसामग्री भविष्यति प्रज्ञापारमितामुद्गृह्णतां धारयतां वाचयतां पर्यवाप्नु- 30 वतां प्रवर्तयतामन्तशो लिखताम्। इदमपि सुभूते बोधिसत्त्वेन महासत्त्वेन मारकर्म वेदितव्यम्। पुनरपरं सुभूते धर्मभाणकश्च भाषितुकामो भविष्यति। धार्मश्रवणिकश्च अच्छन्दिको भविष्यति श्रवणाय। इयमपि सुभूते तत्र विसामग्री भविष्यति प्रज्ञापारमितामुद्ग्रहीतुं

धारयितुं वाचयितुं पर्यवाप्तुं प्रवर्तयितुमन्तशो लिखितुम्। इदमपि सुभूते बोधिसत्त्वेन महासत्त्वेन मारकर्म वेदितव्यम्। पुनरपरं सुभूते धार्मश्रवणिको मिद्धगुरुको भविष्यति, कायगुरुको भविष्यति। स तेन मिद्धगुरुकत्वेन समन्वागतः कायक्लमथेन समन्वागतो न श्रोतुकामो भविष्यति। धर्मभाणकश्च भाषितुकामो भविष्यति। इदमपि सुभूते बोधिसत्त्वेन महासत्त्वेन विसामग्रीमारकर्म वेदितव्यम्। पुनरपरं सुभूते धर्मभाणको मिद्धगुरुको भविष्यति, कायगुरुको भविष्यति। स तेन मिद्धगुरुकत्वेन समन्वागतः कायक्लमथेन समन्वागतो न भाषितुकामो भविष्यति। धार्मश्रवणिकश्च श्रोतुकामो भविष्यति। इयमपि सुभूते तत्र विसामग्री भविष्यति लिखनाय वाचनाय पर्यवाप्तये वा। इदमपि सुभूते बोधिसत्त्वेन महासत्त्वेन मारकर्म वेदितव्यम्॥

पुनरपरं सुभूते प्रज्ञापारमितायां लिख्यमानायां भाष्यमाणायां शिक्ष्यमाणायां कश्चि-देव तत्रागत्य निरयाणामवर्णं भाषिष्यते, तिर्यग्योनेरवर्णं भाषिष्यते, प्रेतविषयस्यावर्णं भाषिष्यते, असुरकायानामवर्णं भाषिष्यते—एवंदुःखा निरयाः, एवंदुःखा तिर्यग्योनिः, एवंदुःखः प्रेतविषयः, एवंदुःखा आसुराः कायाः, एवंदुःखाः संस्काराः। इहैव दुःखस्यान्तः करणीय इति। इदमपि सुभूते बोधिसत्त्वेन महासत्त्वेन विसामग्रीमारकर्म वेदितव्यम्॥

पुनरपरं सुभूते प्रज्ञापारमितायां लिख्यमानायां भाष्यमाणायां शिक्ष्यमाणायां वा कश्चिदेव तत्रागत्य देवानां वर्णं भाषिष्यते—एवंसुखिता देवाः, एवंसुखाः स्वर्गाः, एवं कामधातौ कामाः सेवितव्याः, एवं रूपधातौ ध्यानानि समापत्तव्यानि, एवमारूप्यधातौ तत्समापत्तयः समापत्तव्याः। तदपि च सर्वं प्रज्ञया विमृश्य सर्वत्र दुःखोपपत्तिरिति। उक्तं हीदं भगवता—अच्छटासंघातमात्रकमप्यहं भिक्षवो भवाभिनिर्वृत्तिं न वर्णयामि। सर्वं हि संस्कृतमनित्यं सर्वं भयावगतं दुःखं सर्वं त्रैधातुकं शून्यं सर्वधर्मा अनात्मानः। तदेवं सर्व-मशाश्वतमनित्यं दुःखं विपरिणामधर्मकं विदित्वा पण्डितैरिहैव स्रोतआपत्तिफलं प्राप्तव्यम्, सकृदागामिफलमनागामिफलम्, इहैवार्हत्त्वं प्राप्तव्यम्। मा नो भूयस्ताभिः संपत्तिविपत्तिभि-र्दुःखभूयिष्ठाभिः समवधानं भूदिति। तत्रैके बोधिसत्त्वाः संवेगमापत्स्यन्ते। इदमपि सुभूते बोधिसत्त्वेन महासत्त्वेन विसामग्रीमारकर्म वेदितव्यम्॥

पुनरपरं सुभूते येऽपि ते भिक्षवो धर्मभाणकाः, ते एकाकिताभिरता भविष्यन्ति। येऽपि धार्मश्रवणिकास्तेऽपि पर्षद्गुरुका भविष्यन्ति। तेऽपि धर्मभाणका एवं वक्ष्यन्ति—ये मामनुवर्त्स्यन्ति[1], तेभ्योऽहमिमां प्रज्ञापारमितां दास्यामि। ये मां नानुवर्त्स्यन्ति, तेभ्यो न दास्यामीति। एवं ते कुलपुत्राः कुलदुहितरश्च अर्थिकतया छन्दिकतया धर्मगौरवेण तं धर्मभाणकमनुवर्त्स्यन्ति, न[2] चावकाशं दास्यन्ति। स च धर्मभाणक आमिषकिंचित्काभिलाषी, ते च न दातुकामाः। स च तेन तेन गमिष्यति, येन येन दुर्भिक्षश्च अयोगक्षेमश्च जीवितान्तरायश्च भविष्यति। ते च धार्मश्रवणिकाः परेभ्यः श्रोष्यन्ति—असौ प्रदेशो

1 R अनुभत्स्यन्ति throughout. 2 R ते च for न च.

W 521 दुर्भिक्षश्च अयोगक्षेमश्च। तस्मिंश्च प्रदेशे जीवितान्तरायो भवेदिति। स च धर्मभाणकस्तान् कुलपुत्रानेवमभिव्याहरिष्यति–अमुष्मिन् कुलपुत्राः प्रदेशे दुर्भिक्षभयम्। कच्चित्कुलपुत्रा यूयमागमिष्यथ मा पश्चाद्विप्रतिसारिणो भविष्यथ दुर्भिक्षभयं प्रविष्टाः? एवं ते तेन धर्मभाणकेन सूक्ष्मेणोपायेन प्रतिक्षेप्स्यते। ते च निर्विण्णरूपा एवं ज्ञास्यन्ति–प्रत्याख्यान-5 निमित्तान्येतानि, नैतानि दातुकामतानिमित्तानीति। नायं दातुकाम इति विदित्वा नानुवर्त्स्यन्ति। इयमपि सुभूते तत्र विसामग्री भविष्यति प्रज्ञापारमितायां लिख्यमानायां शिक्ष्यमाणायां देश्यमानायामुपदिश्यमानायामुद्दिश्यमानायां स्वाध्याय्यमानायाम्। इदमपि सुभूते बोधिसत्त्वेन महासत्त्वेन मारकर्म वेदितव्यम्॥

पुनरपरं सुभूते धर्मभाणको येन जन्तुभयं येन व्यालभयं येनामनुष्यभयं[1] तेन 10 संप्रस्थितो भविष्यति। स तेन चरन् विहरन् येन व्यालकान्तारं सरीसृपकान्तारं चोरकान्तारं पानीयकान्तारं दुर्भिक्षकान्तारं तेन प्रक्रमिष्यति। स तान् धार्मश्रवणिकानेवं W 522 वक्ष्यति–यत्खलु कुलपुत्रा जानीध्वं यस्मिन् प्रदेशे जन्तुभयं व्यालभयं क्रव्यादभयं सरीसृपकान्तारं चोरकान्तारं पानीयकान्तारं दुर्भिक्षकान्तारं तेन वयं संप्रस्थिताः। जानीध्वं कुलपुत्राः–शक्ष्यथ यूयमेतानि दुःखानि प्रत्यनुभवितुम्? एवं तान् सूक्ष्मेणोपायेन प्रत्याख्या-R 248 15 स्यति। ततस्ते निर्वेत्स्यन्ते। निर्विण्णाः सन्तो नानुवर्त्स्यन्ति। ते पुनरेव प्रत्युदावर्त्स्यन्ते। अयमपि सुभूते प्रज्ञापारमितायामन्तराय उत्पत्स्यते उद्दिश्यमानायाः स्वाध्याय्यमानायाः यावल्लिख्यमानायाः। इदमपि सुभूते बोधिसत्त्वेन महासत्त्वेन विसामग्रीमारकर्म वेदितव्यम्॥

पुनरपरं सुभूते धर्मभाणको भिक्षुर्मित्रकुलभिक्षादकुलगुरुको भविष्यति। स तया मित्रकुलभिक्षादकुलगुरुकतया अभीक्ष्णं मित्रकुलभिक्षादकुलान्यवलोकयितव्यान्युपसंक्रमित-20 व्यानि मंस्यते। स तया अभीक्ष्णावलोकनतया बहुकृत्यतया तान् धार्मश्रवणिकान् प्रत्याख्यास्यति–अस्ति तावन्मे किंचिदवलोकयितव्यम्, अस्ति तावन्ममोपसंक्रमितव्यमिति। इयमपि सुभूते तत्र विसामग्री भविष्यति प्रज्ञापारमितायां लिख्यमानायां पर्यवाप्यमाणायाम्। इदमपि सुभूते बोधिसत्वेन महासत्वेन मारकर्म वेदितव्यम्॥

W 523 इति हि सुभूते मारः पापीयांस्तैस्तैः प्रकारैस्तथा तथा चेष्टिष्यते, यथेमां प्रज्ञापार-25 मितां न कश्चिदुद्ग्रहीष्यति, न धारयिष्यति, न वाचयिष्यति, न पर्यवाप्स्यति, न प्रवर्तयिष्यति, न देशयिष्यति, नोपदेक्ष्यति, नोद्देक्ष्यति, न स्वाध्यास्यति, न लेखयिष्यति, न लिखिष्यति। तस्मात्तर्हि सुभूते यावन्तोऽन्तराया विसामग्र्यां संवर्तन्ते, तानि सर्वाणि बोधिसत्त्वेन महासत्त्वेन मारकर्माणीति बोद्धव्यानि, बुद्ध्वा च विवर्जयितव्यानीति॥

एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्–किमत्र भगवन् कारणं यदिह मारः R 249 30 पापीयानेवं महान्तमुद्योगमापत्स्यते? तथा तथा चोपायेन चेष्टिष्यते, यथेमां प्रज्ञापारमितां

1 R मनुष्य° for अमनुष्य°.

न कश्चिदुद्ग्रहीष्यति न धारयिष्यति न वाचयिष्यति न पर्यवाप्स्यति न प्रवर्तयिष्यति न देशयिष्यति नोपदेक्ष्यति नोद्देक्ष्यति न स्वाध्यास्यति न लेखयिष्यति न लिखिष्यति? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—प्रज्ञापारमितानिर्जाता हि सुभूते बुद्धानां भगवतां सर्वज्ञता। सर्वज्ञतानिर्जातं च तथागतशासनम्। तथागतशासननिर्जातं च अप्रमेयाणामसंख्येयानां सत्त्वानां क्लेशप्रहाणम्। प्रहीणक्लेशानां च मारः पापीयानवतारं न लभते। 5 अलभमानो दुःखार्तो दुर्मनाः शोकशल्यपरिगतो भवति। अतः स प्रज्ञापारमितायां लिख्यमानायां पर्यवाप्यमाणायां महता संवेगेन महान्तमुद्योगमापद्यते। स महतोद्योगेन तथा तथोपायेन चेष्टते, यथा न कश्चिदिमां प्रज्ञापारमितां लिखेद्वा पर्यवाप्नुयाद्वेति॥ W 524

पुनरपरं सुभूते मारः पापीयान् श्रमणवेषेणागत्य भेदं प्रक्षेप्स्यति। एवं च नवयानसंप्रस्थिताः कुलपुत्रा विवेचयिष्यन्ति नैषा प्रज्ञापारमिता यामायुष्मन्तः शृण्वन्ति। यथा 10 पुनर्मम सूत्रागतं सूत्रपर्यापन्नम्, इयं सा प्रज्ञापारमिता। इत्येवं सुभूते मारः पापीयान् संशयं प्रक्षेप्स्यति। एवं च पुनः सुभूते मारः पापीयान् श्रमणवेषेणागत्य भेदं प्रक्षिप्य नवयानसंप्रस्थितान् बोधिसत्त्वानल्पबुद्धिकान् मन्दबुद्धिकान् परीत्तबुद्धिकानन्धीकृतानव्याकृताननुत्तरायां सम्यक्संबोधौ संशयं पातयिष्यति। ते संशयप्राप्ता इमां प्रज्ञापारमितां नोद्ग्रहीष्यन्ति न धारयिष्यन्ति न वाचयिष्यन्ति न पर्यवाप्स्यन्ति न प्रवर्तयिष्यन्ति न 15 R 250 देशयिष्यन्ति नोपदेक्ष्यन्ति नोद्देक्ष्यन्ति न स्वाध्यास्यन्ति न लेखयिष्यन्ति न लिखिष्यन्ति। इदमपि सुभूते बोधिसत्त्वेन महासत्त्वेन मारकर्म वेदितव्यम्॥

पुनरपरं सुभूते मारः पापीयान् भिक्षून्निर्माय बुद्धवेषेणागत्य एवं मारकर्मोपसंहरिष्यति—यो बोधिसत्त्वो गम्भीरेषु धर्मेषु चरति, स भूतकोटिं साक्षात्करोति। स श्रावको भवति, न बोधिसत्त्वो यथायं बोधिसत्त्व इति। इदमपि सुभूते बोधिसत्त्वेन महासत्त्वेन 20 मारकर्म वेदितव्यम्॥ W 525

एवं सुभूते मारः पापीयानेवमादिकानि सुबहूनि अन्यान्यपि मारकर्माण्युत्पादयिष्यति अस्यां प्रज्ञापारमितायां लिख्यमानायां पर्यवाप्यमाणायाम्। तानि बोधिसत्त्वेन महासत्त्वेन बोद्धव्यानि। बुद्ध्वा च विवर्जयितव्यानि। न भक्तव्यानि। आरब्धवीर्येण स्मृतिमता संप्रजानता च भवितव्यम्॥ 25

एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—एवमेतद्भगवन्, एवमेतत्सुगत। यानि तानि भगवन् महारत्नानि, तानि बहुप्रत्यर्थिकानि भवन्ति। तत्कस्य हेतोः? यदुत दुर्लभत्वान्महार्घत्वाच्च। अप्राणि हि तानि भगवन् भवन्ति। तस्मात्तानि च बहुप्रत्यर्थिकानि भवन्ति। एवमेव भगवन् अस्याः प्रज्ञापारमितायाः प्रायेण बहवोऽन्तराया उत्पत्स्यन्ते। W 526 तत्र येऽन्तरायवशेन कुसीदा भविष्यन्ति, वेदितव्यमिदं भगवन् माराधिष्ठितास्ते बोधिसत्त्वा 30 भविष्यन्ति, नवयानसंप्रस्थिताश्च ते भगवन् भविष्यन्ति, अल्पबुद्धयश्च ते भगवन् भविष्यन्ति,

R 251 मन्दबुद्धयश्च ते भगवन् भविष्यन्ति, परीत्तबुद्धयश्च ते भगवन् भविष्यन्ति, विपर्यस्तबुद्धयश्च ते भगवन् भविष्यन्ति। नापि तेषामुदारोदारेषु धर्मेषु चित्तं प्रक्रमिष्यति, ये इमां प्रज्ञापारमितां नोद्ग्रहीतव्यां मंस्यन्ते, न धारयितव्यां न वाचयितव्यां न पर्यवाप्तव्यां न प्रवर्तयितव्यां न देशयितव्यां नोपदेष्टव्यां नोद्देष्टव्यां न स्वाध्यातव्यां न लेखयितव्यामन्तशो न लिखितव्यामपि मंस्यन्ते ॥

एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—एवमेतत्सुभूते, एवमेतत्। माराधिष्ठितास्ते सुभूते बोधिसत्त्वा वेदितव्याः। नवयानसंप्रस्थिताश्च ते सुभूते बोधिसत्त्वा भविष्यन्ति, अल्पबुद्धयश्च ते भविष्यन्ति, मन्दबुद्धयश्च ते भविष्यन्ति, परीत्तबुद्धयश्च ते भविष्यन्ति, विपर्यस्तबुद्धयश्च ते भविष्यन्ति। न च तेषामुदारोदारेषु धर्मेषु चित्तं प्रक्रमि-
10 ष्यति, य इमां प्रज्ञापारमितां नोद्ग्रहीतव्यां मंस्यन्ते, न धारयितव्यां न वाचयितव्यां न पर्यवाप्तव्यां न प्रवर्तयितव्यां नोपदेष्टव्यां नोद्देष्टव्यां न स्वाध्यातव्यां न लेखयितव्यामन्तशो न लिखितव्यामपि मंस्यन्ते ॥

W 527 किंचापि सुभूते इमानि मारकर्माण्युत्पत्स्यन्ते, सुबहवश्चात्र मारदोषा अन्तरायकरा उत्पत्स्यन्ते। अथ च सुभूते य इमां प्रज्ञापारमितामुद्ग्रहीतव्यां मंस्यन्ते धारयितव्यां वाचयि-
15 तव्यां पर्यवाप्तव्यां प्रवर्तयितव्यामुपदेष्टव्यामुद्देष्टव्यां स्वाध्यातव्यां लेखयितव्यामन्तशो लिखितव्यामपि मंस्यन्ते, वेदितव्यमेतत्सुभूते बुद्धानुभावेन बुद्धाधिष्ठानेन ते मंस्यन्ते। बुद्धपरिग्रहेणोद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्य-
R 252 न्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति लेखयिष्यन्त्यन्तशो लिखिष्यन्तीति। तत्कस्य हेतोः? मारोऽपि ह्यत्र पापीयान् महान्तमुद्योगमापत्स्यते अन्तरायकरणाय। तथागतोऽप्यर्हन् सम्यक्संबुद्ध
20 उद्योगमापत्स्यतेऽनुपरिग्रहायेति ॥

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां मारकर्मपरिवर्तो नामैकादशः ॥



# १२ लोकसंदर्शनपरिवर्तो द्वादशः ।

अथ खलु भगवान् पुनरप्यायुष्मन्तं सुभूतिमामन्त्रयते स्म–तद्यथापि नाम सुभूते स्त्रिया बहवः पुत्रा भवेयुः, पञ्च वा दश वा विंशतिर्वा त्रिंशद्वा चत्वारिंशद्वा पञ्चाशद्वा शतं वा सहस्रं वा । सर्वे ते मातुर्ग्लानाया उद्योगमापद्येरन्–कथमस्माकं मातुर्जीवितान्तरायो न भवेदिति, कथमस्माकं माता चिरं जीवेत्, कथमस्माकं मातुः कायो न विनश्येत्, कथमस्माकं माता 5 चिरस्थितिका भवेत्, कथमस्माकं मातुर्नाम अविनष्टं भवेत्, कथमस्माकं मातुर्न दुःखा वेदनोत्पद्येत, न चास्या अस्पर्शविहारः अमनआपः काये उत्पद्येत । तत्कस्य हेतोः ? एतया हि वयं जनिताः । दुष्करकारिकैषा अस्माकं जीवितस्य दात्री लोकस्य च संदर्शयित्री । इति ते पुत्रास्तां मातरं सर्वसुखोपधानैः सुभृतां धारयेयुः, सुगोपायितां गोपायेयुः, सुकेलायितां केलायेयुः–मा खल्वस्याः काचिद्दुःखा वेदना दुःखो वा स्पर्श उत्पद्येत, चक्षुषो वा 10 श्रोत्रतो वा घ्राणतो वा जिह्वातो वा कायतो वा मनस्तो वा वाततो वा पित्ततो वा श्लेष्मतो वा संनिपाततो वा दंशतो वा मशकतो वा सरीसृपतो वा मनुष्यतो वा अमनुष्यतो वा आपाततो वा उत्पाततो वा अनिष्टनिपातः शरीरे निपतेत् । एवं ते पुत्रास्तां मातरं सर्वसुखोपधानैः समन्वाहृत्य केलायेयुर्ममायेयुर्गोपायेयुः–एषास्माकं माता जनयित्री, दुष्करकारिकैषा अस्माकं जीवितस्य दात्री, लोकस्य च संदर्शयित्रीति । एवमेव सुभूते तथागता अर्हन्तः सम्यक्संबुद्धा 15 इमां प्रज्ञापारमितां समन्वाहरन्ति । येऽपि ते लिखन्ति उद्गृह्णन्ति धारयन्ति वाचयन्ति पर्यवाप्नुवन्ति प्रवर्तयन्ति देशयन्त्युपदिशन्त्युद्दिशन्ति स्वाध्यायन्ति, सर्वे ते तथागतस्यार्हतः सम्यक्संबुद्धस्यानुभावेन अधिष्ठानेन समन्वाहारेण । येऽपि तेऽन्येषु लोकधातुषु तथागता अर्हन्तः सम्यक्संबुद्धा एतर्हि तिष्ठन्ति ध्रियन्ते यापयन्ति बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय, हिताय सुखाय देवानां च मनुष्याणां च, 20 सर्वसत्त्वानां चानुकम्पका अनुकम्पामुपादाय, तेऽपि सर्वे इमां प्रज्ञापारमितां समन्वाहरन्ति, औत्सुक्यमापद्यन्ते–किमितीयं प्रज्ञापारमिता चिरस्थितिका भवेत्, किमित्यस्याः प्रज्ञापारमिताया नाम अविनष्टं भवेत्, किमित्यस्याः प्रज्ञापारमिताया भाष्यमाणाया लिख्यमानायाः शिक्ष्यमाणाया मारः पापीयान् मारकायिका वा देवता अन्तरायं न कुर्युरिति । एवं हि सुभूते तथागता अर्हन्तः सम्यक्संबुद्धा एनां प्रज्ञापारमितां केलायन्ति ममायन्ति गोपायन्ति । तत्कस्य 25 हेतोः ? एषा हि माता जनयित्री तथागतानामर्हतां सम्यक्संबुद्धानाम् । अस्याः सर्वज्ञताया दर्शयित्री लोकस्य च संदर्शयित्री । अतोनिर्जाता हि सुभूते तथागता अर्हन्तः सम्यक्संबुद्धाः । प्रज्ञापारमिता हि सुभूते तथागतानामर्हतां सम्यक्संबुद्धानामस्य सर्वज्ञज्ञानस्य जनयित्री दर्शयित्री, एवमस्य लोकस्य संदर्शयित्री । अतोनिर्जाता हि सुभूते तथागतानामर्हतां सम्यक्संबुद्धानां सर्वज्ञता । येऽपि केचित्सुभूते अतीतेऽध्वनि तथागता अर्हन्तः सम्यक्संबुद्धा 30 अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः, तेऽपि सर्वे एनामेव प्रज्ञापारमितामागम्य अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः । येऽपि ते सुभूते भविष्यन्त्यनागतेऽध्वनि तथागता अर्हन्तः

R 253 W 529 · R 254 W 530 · W 531 · R 255 W 536

सम्यक्संबुद्धा अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते, तेऽपि सर्वे एनामेव प्रज्ञापारमितामागम्य
W 537 अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते । येऽपि ते सुभूते एतर्हि अप्रमेयेष्वसंख्येयेषु लोकधातुषु
तथागता अर्हन्तः सम्यक्संबुद्धा दशदिशि लोके तिष्ठन्ति ध्रियन्ते यापयन्ति बहुजनहिताय
बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय, हिताय सुखाय देवानां च मनुष्याणां
5 च, अनुकम्पका अनुकम्पामुपादाय अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः, तेऽपि सर्वे एनामेव
प्रज्ञापारमितामागम्य अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः । अहमपि सुभूते एतर्हि तथागतोऽर्हन्
सम्यक्संबुद्ध एनामेव प्रज्ञापारमितामागम्य अनुत्तरां सम्यक्संबोधिमभिसंबुद्धः । एवमियं सुभूते
प्रज्ञापारमिता तथागतानामर्हतां सम्यक्संबुद्धानां जनयित्री, एवमस्य लोकस्य संदर्शयित्री ॥

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—यद्भगवानेवमाह—प्रज्ञापारमिता तथा-
10 गतानामर्हतां सम्यक्संबुद्धानामस्य लोकस्य संदर्शयित्रीति, कथं भगवन् प्रज्ञापारमिता
तथागतानामर्हतां सम्यक्संबुद्धानामस्य लोकस्य संदर्शयित्री? कतमश्च भगवन् लोकस्तथा-
R 256 गतैरर्हद्भिः सम्यक्संबुद्धैराख्यातः? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—पञ्च सुभूते
स्कन्धाः तथागतेन लोक इत्याख्याताः । कतमे पञ्च? यदुत रूपं वेदना संज्ञा संस्कारा
विज्ञानम् । इमे सुभूते पञ्च स्कन्धास्तथागतेन लोक इत्याख्याताः ॥

15 सुभूतिराह—कथं भगवंस्तथागतानां प्रज्ञापारमितया पञ्च स्कन्धा दर्शिताः? किं
W 538 वा भगवन् प्रज्ञापारमितया दर्शितम्? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—न
लुज्यन्ते न प्रलुज्यन्ते इति सुभूते पञ्च स्कन्धा लोक इति तथागतानां प्रज्ञापारमितया
दर्शिताः । तत्कस्य हेतोः न लुज्यन्ते न प्रलुज्यन्ते इति दर्शिताः? शून्यतास्वभावा हि
सुभूते पञ्च स्कन्धाः, अस्वभावत्वात् । न च सुभूते शून्यता लुज्यते वा प्रलुज्यते वा ।
20 एवमियं सुभूते प्रज्ञापारमिता तथागतानामर्हतां सम्यक्संबुद्धानामस्य लोकस्य संदर्शयित्री ।
न च सुभूते आनिमित्तं वा अप्रणिहितं वा अनभिसंस्कारो वा अनुत्पादो वा अभावो वा
धर्मधातुर्वा लुज्यते वा प्रलुज्यते वा । एवमियं सुभूते प्रज्ञापारमिता तथागतानामर्हत
सम्यक्संबुद्धानामस्य लोकस्य संदर्शयित्री ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाः सत्त्वाः, असंख्येयाः
25 सत्त्वा इति यथाभूतं प्रजानाति । कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाः
सत्त्वाः, असंख्येयाः सत्त्वा इति यथाभूतं प्रजानाति? सत्त्वास्वभावतया सुभूते अप्रमेयाः
R 257 W 539 सत्त्वा असंख्येयाः सत्त्वा इति यथाभूतं प्रजानाति । एवं हि सुभूते तथागत इमां प्रज्ञापार-
मितामागम्य अप्रमेयाः सत्त्वा असंख्येयाः सत्त्वा इति यथाभूतं प्रजानाति । यान्यपि तानि
सुभूते अप्रमेयाणामसंख्येयानां सत्त्वानां चित्तचरितानि, तान्यपि सुभूते तथागतः सत्त्वा-
30 सद्भावतयैव प्रजानाति । एवं खलु सुभूते प्रज्ञापारमितामागम्य तथागतोऽप्रमेयाणामसंख्ये-
यानां सत्त्वानामप्रमेयाण्यसंख्येयानि चित्तचरितानि च यथाभूतं प्रजानाति । एवं हि सुभूते
प्रज्ञापारमिता तथागतानामर्हतां सम्यक्संबुद्धानामस्य लोकस्य संदर्शयित्री ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणामसंख्येयानां सत्त्वानां संक्षिप्तानि चित्तानि संक्षिप्तानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणामसंख्येयानां सत्त्वानां संक्षिप्तानि चित्तानि संक्षिप्तानि चित्तानीति यथाभूतं प्रजानाति? स संक्षेपं क्षयतः क्षयं च अक्षयतो यथाभूतं प्रजानाति। एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणामसंख्येयानां सत्त्वानां 5 संक्षिप्तानि चित्तानि संक्षिप्तानि चित्तानीति यथाभूतं प्रजानाति॥

W 540 पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणामसंख्येयानां सत्त्वानां विक्षिप्तानि चित्तानि विक्षिप्तानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणामसंख्येयानां सत्त्वानां विक्षिप्तानि चित्तानि विक्षिप्तानि चित्तानीति यथाभूतं प्रजानाति? धर्मततः सुभूते तानि चित्तानि विक्षिप्तानि। अलक्षणानि 10 हि तानि चित्तानि अक्षीणान्यविक्षीणान्यविक्षिप्तानि तानि चित्तानीति यथाभूतं प्रजानाति। R 258 एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणामसंख्येयानां सत्त्वानां विक्षिप्तानि चित्तानि विक्षिप्तानि चित्तानीति यथाभूतं प्रजानाति॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणामसंख्येयानां सत्त्वानामप्रमेयाक्षयाणि चित्तान्यप्रमेयाक्षयाणि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते 15 तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणामसंख्येयानां सत्त्वानामप्रमेयाक्षयाणि चित्तानि अप्रमेयाक्षयाणि चित्तानीति यथाभूतं प्रजानाति? तस्य सुभूते तथागतस्याधिष्ठितं भवति W 541 तच्चित्तम्, अनिरोधमनुत्पादमस्थितमनाश्रयमसममप्रमेयमसंख्येयम्[1], येनैव यथाभूतं प्रजानाति आकाशाप्रमेयाक्षयतया चित्ताप्रमेयाक्षयतेति। एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणामसंख्येयानां सत्त्वानामप्रमेयाक्षयाणि चित्तान्यप्रमेयाक्षयाणि चित्तानीति 20 यथाभूतं प्रजानाति॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां संक्लिष्टानि चित्तानि संक्लिष्टानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां संक्लिष्टानि चित्तानि संक्लिष्टानि चित्तानीति यथाभूतं प्रजानाति? असंक्लेशसंक्लिष्टानि सुभूते तानि चित्तानि असंकेतानि। एवं हि सुभूते 25 तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां संक्लिष्टानि चित्तानि संक्लिष्टानि चित्तानीति यथाभूतं प्रजानाति॥

W 542 पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामसंक्लिष्टानि चित्तान्यसंक्लिष्टानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञा- R 259 पारमितामागम्य अप्रमेयाणां सत्त्वानामसंक्लिष्टानि चित्तान्यसंक्लिष्टानि चित्तानीति यथाभूतं 30 प्रजानाति? प्रकृतिप्रभास्वराणि सुभूते तानि चित्तानि। एवं हि सुभूते तथागत इमां

१ W om. असमम्.

प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामसंक्लिष्टानि चित्तान्यसंक्लिष्टानि चित्तानीति यथाभूतं प्रजानाति ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां लीनानि चित्तानि लीनानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापार- 5 मितामागम्य अप्रमेयाणां सत्त्वानां लीनानि चित्तानि लीनानि चित्तानीति यथाभूतं प्रजा- नाति? अनालयलीनानि सुभूते तानि चित्तानि। एवं हि सुभूते तथागत इमां प्रज्ञापार- मितामागम्य अप्रमेयाणां सत्त्वानां लीनानि चित्तानि लीनानि चित्तानीति यथाभूतं प्रजानाति ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां प्रगृहीतानि 10 चित्तानि प्रगृहीतानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां प्रगृहीतानि चित्तानि प्रगृहीतानि चित्तानीति W 543 यथाभूतं प्रजानाति? अग्राह्याणि सुभूते तानि चित्तानि प्रग्रहीतव्यानि। एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां प्रगृहीतानि चित्तानि प्रगृहीतानि चित्तानीति यथाभूतं प्रजानाति ॥

15 पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां सास्रवाणि R 260 चित्तानि सास्रवाणि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां सास्रवाणि चित्तानि सास्रवाणि चित्तानीति यथाभूतं प्रजानाति? अस्वभावानि सुभूते तानि चित्तानि असत्संकल्पानि। एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां सास्रवाणि चित्तानि सास्रवाणि चित्तानीति 20 यथाभूतं प्रजानाति ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामनास्रवाणि चित्तान्यनास्रवाणि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामनास्रवाणि चित्तान्यनास्रवाणि चित्तानीति यथाभूतं W 544 प्रजानाति? अभावगतिकानि सुभूते तानि चित्तानि अनाभोगानि। एवं हि सुभूते तथागत 25 इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामनास्रवाणि चित्तान्यनास्रवाणि चित्तानीति यथाभूतं प्रजानाति ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां सरागाणि चित्तानि सरागाणि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां सरागाणि चित्तानि सरागाणि चित्तानीति यथाभूतं 30 प्रजानाति? या सुभूते चित्तस्य सरागता, न सा चित्तस्य यथाभूतता। या चित्तस्य यथाभूतता, न सा चित्तस्य सरागता। एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां सरागाणि चित्तानि सरागाणि चित्तानीति यथाभूतं प्रजानाति ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां वीतरागाणि चित्तानि वीतरागाणि चित्तानीति यथाभूतं प्रजानाति । कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां वीतरागाणि चित्तानि वीतरागाणि चित्तानीति यथाभूतं प्रजानाति? यः सुभूते चित्तस्य विगमः, न सा चित्तस्य सरागता। या वीतरागस्य चित्तस्य यथाभूतता, न सा चित्तस्य सरागता। एवं हि सुभूते तथागत इमां प्रज्ञा- 5 W 545 पारमितामागम्य अप्रमेयाणां सत्त्वानां वीतरागाणि चित्तानि वीतरागाणि चित्तानीति यथाभूतं प्रजानाति ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां सदोषाणि चित्तानि सदोषाणि चित्तानीति यथाभूतं प्रजानाति । कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां सदोषाणि चित्तानि सदोषाणि चित्तानीति 10 यथाभूतं प्रजानाति? या सुभूते चित्तस्य सदोषता, न सा चित्तस्य यथाभूतता। या चित्तस्य यथाभूतता, न सा चित्तस्य सदोषता। एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां सदोषाणि चित्तानि सदोषाणि चित्तानीति यथाभूतं प्रजानाति ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां वीतदोषाणि चित्तानि वीतदोषाणि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां 15 प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां वीतदोषाणि चित्तानि वीतदोषाणि चित्तानीति यथाभूतं प्रजानाति? यः सुभूते चित्तस्य विगमः, न सा चित्तस्य सदोषता। या वीतदोषस्य चित्तस्य यथाभूतता, न सा चित्तस्य सदोषता । एवं हि सुभूते तथागत इमां R 262 प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां वीतदोषाणि चित्तानि वीतदोषाणि चित्तानीति यथाभूतं प्रजानाति ॥ 20

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां समोहानि चित्तानि समोहानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां समोहानि चित्तानि समोहानि चित्तानीति यथाभूतं प्रजानाति? या सुभूते चित्तस्य समोहता, न सा चित्तस्य यथाभूतता। या चित्तस्य यथाभूतता, न सा चित्तस्य समोहता । एवं हि सुभूते तथागत इमां प्रज्ञापार- 25 मितामागम्य अप्रमेयाणां सत्त्वानां समोहानि चित्तानि समोहानि चित्तानीति यथाभूतं प्रजानाति ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां वीतमोहानि W 546 चित्तानि वीतमोहानि चित्तानीति यथाभूतं प्रजानाति । कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां वीतमोहानि चित्तानि वीतमोहानि चित्तानीति 30 यथाभूतं प्रजानाति? यः सुभूते चित्तस्य विगमः, न सा चित्तस्य समोहता। या वीतमोहस्य चित्तस्य यथाभूतता, न सा चित्तस्य समोहता। एवं हि सुभूते तथागत इमां

प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां वीतमोहानि चित्तानि वीतमोहानि चित्तानीति यथाभूतं प्रजानाति ॥

R 263 पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामविपुलानि चित्तान्यविपुलानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां 5 प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामविपुलानि चित्तानि अविपुलानि चित्तानीति यथाभूतं प्रजानाति? असमुत्थानयोगानि सुभूते तानि चित्तानि असमुत्थानपर्यापन्नानि। एवं W 547 सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामविपुलानि चित्तान्यविपुलानि चित्तानीति यथाभूतं प्रजानाति ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां विपुलानि 10 चित्तानि विपुलानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां विपुलानि चित्तानि विपुलानि चित्तानीति यथाभूतं प्रजानाति? न हीयन्ते सुभूते तानि चित्तानि, न विवर्धन्ते तानि चित्तानि, न विगच्छन्ति तानि चित्तानि, अविगमत्वादेव चित्तानाम्। एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां विपुलानि चित्तानि विपुलानि चित्तानीति 15 यथाभूतं प्रजानाति ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानाममहद्गतानि चित्तान्यमहद्गतानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानाममहद्गतानि चित्तान्यमहद्गतानि चित्तानीति यथा-भूतं प्रजानाति? अनागतिकानि सुभूते तानि चित्तानि अगतिकानि अपर्यापन्नानि। एवं W 548 20 हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानाममहद्गतानि चित्तान्यमह-द्गतानि चित्तानीति यथाभूतं प्रजानाति ॥

R 264 पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां महद्गतानि चित्तानि महद्गतानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां महद्गतानि चित्तानि महद्गतानि चित्तानीति 25 यथाभूतं प्रजानाति? समतासमानि सुभूते तानि चित्तानि स्वभावसमानि। एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां महद्गतानि चित्तानि महद्गतानि चित्तानीति यथाभूतं प्रजानाति ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामप्रमाणानि चित्तान्यप्रमाणानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां 30 प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामप्रमाणानि चित्तान्यप्रमाणानि चित्तानीति यथाभूतं प्रजानाति? अनिश्रयत्वात्सुभूते तानि चित्तान्यप्रमाणानि। एवं हि सुभूते तथागत इमां

प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामप्रमाणानि चित्तानि अप्रमाणानि चित्तानीति यथाभूतं प्रजानाति ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां सनिदर्शनानि चित्तानि सनिदर्शनानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां सनिदर्शनानि चित्तानि सनिदर्शनानि चित्तानीति यथाभूतं प्रजानाति? समदर्शनानि सुभूते तानि चित्तानि चित्तस्वभावानि। एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां सनिदर्शनानि चित्तानि सनिदर्शनानि चित्तानीति यथाभूतं प्रजानाति ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामनिदर्शनानि चित्तान्यनिदर्शनानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामनिदर्शनानि चित्तान्यनिदर्शनानि चित्तानीति यथाभूतं प्रजानाति? अलक्षणत्वादर्थविविक्तत्वात्सुभूते अदृश्यं तच्चित्तं त्रयाणां चक्षुषां सर्वेषां वा अनवभासगतम्। एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामनिदर्शनानि चित्तान्यनिदर्शनानि चित्तानीति यथाभूतं प्रजानाति ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां सप्रतिघानि चित्तानि सप्रतिघानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां सप्रतिघानि चित्तानि सप्रतिघानि चित्तानीति यथाभूतं प्रजानाति? असत्संकल्पितानि सुभूते तानि चित्तानि, शून्यान्यारम्बणवशिकानि। एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां सप्रतिघानि चित्तानि सप्रतिघानि चित्तानीति यथाभूतं प्रजानाति ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामप्रतिघानि चित्तान्यप्रतिघानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामप्रतिघानि चित्तान्यप्रतिघानि चित्तानीति यथाभूतं प्रजानाति? अद्वयभूतानि सुभूते तानि चित्तानि अभूतसंभूतानि। एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामप्रतिघानि चित्तान्यप्रतिघानि चित्तानीति यथाभूतं प्रजानाति ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां सोत्तराणि चित्तानि सोत्तराणि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां सोत्तरानि चित्तानि सोत्तराणि चित्तानीति यथाभूतं प्रजानाति? या सुभूते सोत्तरस्य चित्तस्य यथाभूतता, न तत्रास्ति मन्यमानता। एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां सोत्तराणि चित्तानि सोत्तराणि चित्तानीति यथाभूतं प्रजानाति ॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामनुत्तराणि चित्तान्यनुत्तराणि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामनुत्तराणि चित्तान्यनुत्तराणि चित्तानीति यथाभूतं प्रजानाति? अण्वपि हि सुभूते चित्तमनुपलब्धम्। ततो निष्प्रपञ्चानि तानि चित्तानि।
5 एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामनुत्तराणि चित्तान्यनुत्तराणि चित्तानीति यथाभूतं प्रजानाति॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामसमाहितानि चित्तान्यसमाहितानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां
R 267 प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामसमाहितानि चित्तान्यसमाहितानि चित्तानीति
10 यथाभूतं प्रजानाति? असमसमानि हि सुभूते तानि चित्तानि असमवहितानि, एवमसमाहितानि तानि चित्तानि। एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामसमाहितानि चित्तान्यसमाहितानि चित्तानीति यथाभूतं प्रजानाति॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां समाहितानि चित्तानि समाहितानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां
15 प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां समाहितानि चित्तानि समाहितानि चित्तानीति यथाभूतं प्रजानाति? समसमानि हि सुभूते तानि चित्तानि समवहितानि। एवं समाहितानि चित्तान्याकाशसमानि। एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां समाहितानि चित्तानि समाहितानि चित्तानीति यथाभूतं प्रजानाति॥

W 552 पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामविमुक्तानि
20 चित्तान्यविमुक्तानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामविमुक्तानि चित्तान्यविमुक्तानि चित्तानीति यथाभूतं प्रजानाति? स्वभावविमुक्तानि सुभूते तानि चित्तानि अभावस्वभावानि। एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामविमुक्तानि चित्तान्यविमुक्तानि चित्तानीति यथाभूतं प्रजानाति॥

25 पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां विमुक्तानि
R 268 चित्तानि विमुक्तानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानां विमुक्तानि चित्तानि विमुक्तानि चित्तानीति यथाभूतं प्रजानाति? चित्तं हि सुभूते तथागतेन न अतीतमुपलब्धं न अनागतम्, न प्रत्युत्पन्नमुपलब्धम्, असत्त्वाच्चित्तस्य। एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य
30 अप्रमेयाणां सत्त्वानां विमुक्तानि चित्तानि विमुक्तानि चित्तानीति यथाभूतं प्रजानाति॥

W 553 पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामदृश्यानि चित्तान्यदृश्यानि चित्तानीति यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापार-

मितामागम्य अप्रमेयाणां सत्त्वानामदृश्यानि चित्तान्यदृश्यानि चित्तानीति यथाभूतं प्रजानाति? असत्त्वात्सुभूते अदृश्यं तच्चित्तम्। अभूतत्वादविज्ञेयम्, अपरिनिष्पत्तितोऽग्राह्यं प्रज्ञाचक्षुषा दिव्येन चक्षुषा। कुतः पुनर्मांसचक्षुषा? सर्वेषामनवभासगतत्वात्। एवं हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणां सत्त्वानामदृश्यानि चित्तान्यदृश्यानि चित्तानीति यथाभूतं प्रजानाति। एवं हि सुभूते प्रज्ञापारमिता तथागतानामर्हतां 5 W 554 सम्यक्संबुद्धानामस्य लोकस्य संदर्शयित्री॥

पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणासंख्येयानां परसत्त्वानां परपुद्गलानामुन्मिञ्जितनिमिञ्जितानि यथाभूतं प्रजानाति। कथं च सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणामसंख्येयाणां परसत्त्वानां परपुद्गलानामुन्मिञ्जितनिमिञ्जितानि यथाभूतं प्रजानाति? सर्वाणि तानि सुभूते रूपनिश्रितानि उत्पद्यमानान्युत्पद्यन्ते इति 10 R 269 यथाभूतं प्रजानाति। एवं वेदना संज्ञा संस्काराः। सर्वाणि तानि विज्ञाननिश्रितानि उत्पद्यमानान्युत्पद्यन्ते इति यथाभूतं प्रजानाति। तत्र सुभूते कथं तथागतेन तान्युन्मिञ्जितनिमिञ्जितानि रूपनिश्रितानि विज्ञातानि भवन्ति? एवं वेदना संज्ञा संस्काराः? कथं तथागतेन तान्युन्मिञ्जितनिमिञ्जितानि विज्ञाननिश्रितानि विज्ञातानि भवन्ति? भवति तथागतः परं मरणादिति रूपगतमेतत्। न भवति तथागतः परं मरणादिति रूपगतमेतत्। 15 भवति च न भवति च तथागतः परं मरणादिति रूपगतमेतत्। नैव भवति न न भवति तथागतः परं मरणादिति रूपगतमेतत्। एवं वेदना संज्ञा संस्काराः। भवति तथागतः परं W 555 मरणादिति विज्ञानगतमेतत्। न भवति तथागतः परं मरणादिति विज्ञानगतमेतत्। भवति च न भवति च तथागतः परं मरणादिति विज्ञानगतमेतत्। नैव भवति न न भवति तथागतः परं मरणादिति विज्ञानगतमेतत्। शाश्वत आत्मा अवलोकश्च इदमेव सत्यं मोहमन्यदिति 20 रूपगतमेतत्। अशाश्वत आत्मा अवलोकश्च इदमेव सत्यं मोहमन्यदिति रूपगतमेतत्। शाश्वतश्च अशाश्वत आत्मावलोकश्च इदमेव सत्यं मोहमन्यदिति रूपगतमेतत्। नैव शाश्वतो नाशाश्वत आत्मा अवलोकश्च इदमेव सत्यं मोहमन्यदिति रूपगतमेतत्। एवं वेदना संज्ञा R 270 संस्काराः। शाश्वत आत्मावलोकश्च इदमेव सत्यं मोहमन्यदिति विज्ञानगतमेतत्। अशाश्वत आत्मा अवलोकश्च इदमेव सत्यं मोहमन्यदिति विज्ञानगतमेतत्। शाश्वतश्चाशाश्वत आत्मा अवलोकश्च 25 इदमेव सत्यं मोहमन्यदिति विज्ञानगतमेतत्। नैव शाश्वतो नाशाश्वत आत्मा अवलोकश्च इदमेव सत्यं मोहमन्यदिति विज्ञानगतमेतत्। अन्तवानात्मा अवलोकश्च इदमेव सत्यं मोहमन्यदिति रूपगतमेतत्। अनन्तवानात्मा अवलोकश्च इदमेव सत्यं मोहमन्यदिति रूपगतमेतत्। अन्तवांश्च अनन्तवांश्चात्मा अवलोकश्च इदमेव सत्यं मोहमन्यदिति रूपगतमेतत्। नैवान्तवान् नानन्तवानात्मा अवलोकश्च इदमेव सत्यं मोहमन्यदिति रूपगतमेतत्। एवं वेदना संज्ञा संस्काराः। अन्त- 30 W 556 वानात्मा अवलोकश्च इदमेव सत्यं मोहमन्यदिति विज्ञानगतमेतत्। अनन्तवानात्मा अवलोकश्च इदमेव सत्यं मोहमन्यदिति विज्ञानगतमेतत्। अन्तवांश्च अनन्तवांश्चात्मा अवलोकश्च इदमेव

सत्यं मोहमन्यदिति विज्ञानगतमेतत् । नैवान्तवान् नानन्तवानात्मा अवलोकश्च इदमेव सत्यं मोहमन्यदिति विज्ञानगतमेतत् । स जीवस्तच्छरीरमिदमेव सत्यं मोहमन्यदिति रूपगतमेतत् । अन्यो जीवोऽन्यच्छरीरमिदमेव सत्यं मोहमन्यदिति रूपगतमेतत् । एवं वेदना संज्ञा संस्काराः । स जीवस्तच्छरीरमिदमेव सत्यं मोहमन्यदिति विज्ञानगतमेतत् । अन्यो जीवोऽन्यच्छरीरमिदमेव 5 सत्यं मोहमन्यदिति विज्ञानगतमेतत् । एवं हि सुभूते तथागतेनार्हता सम्यक्संबुद्धेन इमां प्रज्ञापारमितामागम्य अप्रमेयाणामसंख्येयानां परसत्त्वानां परपुद्गलानां तान्युन्मिञ्जितनिमिञ्जितानि रूपनिश्रितानि विज्ञातानि भवन्ति । एवं वेदना संज्ञा संस्काराः । तान्युन्मिञ्जितनिमिञ्जितानि विज्ञाननिश्रितानि विज्ञातानि भवन्ति ॥

R 271 W 557 पुनरपरं सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणाममसंख्येयानां परसत्त्वानां 10 परपुद्गलानां तान्युन्मिञ्जितनिमिञ्जितानि यथाभूतं प्रजानाति । इह सुभूते तथागतो रूपं जानाति । कथं च सुभूते तथागतो रूपं जानाति ? तथा सुभूते तथागतो रूपं जानाति, यथा तथता । एवं हि सुभूते तथागतो रूपं जानाति । एवं वेदना संज्ञा संस्काराः । इह सुभूते तथागतो विज्ञानं जानाति । कथं च सुभूते तथागतो विज्ञानं जानाति ? तथा सुभूते तथागतो विज्ञानं जानाति, यथा तथता । एवं हि सुभूते तथागतो विज्ञानं जानाति । एवं 15 हि सुभूते तथागत इमां प्रज्ञापारमितामागम्य अप्रमेयाणामसंख्येयानां परसत्त्वानां परपुद्गलानां तान्युन्मिञ्जितनिमिञ्जितानि यथाभूतं प्रजानाति । एवं हि सुभूते तथागतस्तथागततथतया च स्कन्धतथतया च उन्मिञ्जितनिमिञ्जिततथतया च तथतां प्रज्ञपयति । यैव च सुभूते W 558 स्कन्धतथता, सैव लोकस्यापि तथता । तत्कस्य हेतोः ? उक्तं ह्येतत्सुभूते तथागतेन–पञ्च स्कन्धा लोक इति संज्ञाताः इति । तस्मात्तर्हि सुभूते या स्कन्धतथता, सा लोकतथता । 20 या लोकतथता, सा सर्वधर्मतथता । या सर्वधर्मतथता, सा स्रोतआपत्तिफलतथता । या स्रोतआपत्तिफलतथता, सा सकृदागामिफलतथता । या सकृदागामिफलतथता, सा अनागामिफलतथता । या अनागामिफलतथता, सा अर्हत्त्वफलतथता । या अर्हत्त्वफलतथता, सा प्रत्येकबुद्धत्वतथता । या प्रत्येकबुद्धत्वतथता, सा तथागततथता । इति हि तथागततथता च स्कन्धतथता च सर्वधर्मतथता च सर्वार्यश्रावकप्रत्येकबुद्धतथता च एकैवैषा तथता R 272 W 559 25 अनेकभावाभावापगता अनेकत्वादनानात्वादक्षयत्वादविकारत्वादद्वयत्वादद्वैधीकारत्वात् । एवमेषा सुभूते तथता तथागतेन प्रज्ञापारमितामागम्य अभिसंबुद्धा । एवं हि सुभूते प्रज्ञापारमिता तथागतानामर्हतां सम्यक्संबुद्धानामस्य लोकस्य संदर्शयित्री । एवं हि सुभूते तथागतोऽस्य लोकस्य लोकं संदर्शयति । एवं चास्य लोकस्य दर्शनं भवति–एवं हि सुभूते प्रज्ञापारमिता तथागतानामर्हतां सम्यक्संबुद्धानां माता जननी जनयित्री । एवं हि सुभूते 30 तथागतस्तथतामभिसंबुध्य लोकस्य तथतां जानाति, अवितथतां जानाति, अनन्यतथतां जानाति । एवं च सुभूते तथागतस्तथतामभिसंबुद्धः संस्तथागत इत्युच्यते ॥

स्थविरः सुभूतिराह–गम्भीरा भगवंस्तथता। अतो भगवंस्तथतातो बुद्धानां भगवतां बोधिः प्रभाव्यते प्रकाश्यते। कोऽत्र भगवन् अन्योऽधिमोक्ष्यतेऽविनिवर्तनीयो बोधिसत्त्वो महासत्त्वोऽर्हन् वा परिपूर्णसंकल्पो दृष्टिसंपन्नो वा पुद्गलः? तथा हि भगवन् इमानि स्थानानि परमगम्भीराणि तथागतेनाभिसंबुध्य आख्यातानि। एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्–एवमेतत्सुभूते, एवमेतत्। परमगम्भीराणीमानि स्थानानि तथागतेनाभि- 5 संबुध्य आख्यातानि। तथा हि सुभूते अक्षयैषा तथता, या तथागतेनाभिसंबुद्धा, W 560 अभिसंबुध्य अक्षयाक्षयैवाख्याता ॥

अथ खलु शक्रदेवेन्द्रप्रमुखाः कामावचरा रूपावराश्च देवपुत्रा ब्रह्मकायिकानां च विंशतिदेवपुत्रसहस्राणि येन भगवांस्तेनोपसंक्रम्य भगवतः पादौ शिरसाभिवन्द्य एकान्ते तस्थुः। एकान्तस्थिताश्च ते कामावचरा रूपावचराश्च देवपुत्रा भगवन्तमेतदवोचन्– 10 गम्भीरा भगवन् धर्माः प्रकाश्यन्ते। कथं भगवन् अत्र लक्षणानि स्थाप्यन्ते? भगवानाह– शून्यमिति देवपुत्रा अत्र लक्षणानि स्थाप्यन्ते। आनिमित्तमिति अप्रणिहितमिति देवपुत्रा R 273 अत्र लक्षणानि स्थाप्यन्ते। अनभिसंस्कार इति अनुत्पाद इति अनिरोध इति असंक्लेश इति अव्यवदानमिति अभाव इति निर्वाणमिति धर्मधातुरिति तथतेति देवपुत्रा अत्र W 561 लक्षणानि स्थाप्यन्ते। तत्कस्य हेतोः? अनिश्रितानि हि देवपुत्रा एतानि लक्षणानि। 15 आकाशसदृशानि हि देवपुत्रा एतानि लक्षणानि। नैतानि लक्षणानि तथागतेनार्हता सम्यक्संबुद्धेन स्थापितानि। नैतानि लक्षणानि रूपसंख्यातानि। एवं न वेदनासंज्ञा-संस्कारविज्ञानसंख्यातानि। नैतानि लक्षणानि रूपनिश्रितानि, न वेदनासंज्ञासंस्कार-विज्ञाननिश्रितानि। नैतानि लक्षणानि देवैर्वा नागैर्वा मनुष्यैर्वा अमनुष्यैर्वा[1] स्थापितानि। नैतानि लक्षणानि सदेवमानुषासुरेण लोकेन शक्यानि चालयितुम्। तत्कस्य हेतोः? 20 सदेवमानुषासुरोऽपि हि लोक एतल्लक्षण एव। नाप्येतानि[2] लक्षणानि केनापि हस्तेन W 562 स्थापितानि। यो देवपुत्रा एवं वदेत्–इदमाकाशं केनापि स्थापितमिति, अपि नु स देवपुत्राः सम्यग्वदन् वदेत्? एवमुक्ते कामावचरा रूपावराश्च देवपुत्रा भगवन्तमेतदवो-चन्–न भगवन् आकाशं केनचित्स्थापितम्। तत्कस्य हेतोः? असंस्कृतत्वाद्भगवन् आकाशस्य नाकाशं केनचित्स्थापितम् ॥ 25

अथ खलु भगवांस्तान् कामावचरान् रूपावरांश्च देवपुत्रानामन्त्रयते स्म–एवमेतद्देव- R 274 पुत्राः। उत्पादाद्वा तथागतानामनुत्पादाद्वा तथैवैतानि लक्षणानि स्थितानि। तत्कस्य हेतोः? यथैतानि हि स्थितानि, तथाभूतानि तथागतेनाभिसंबुध्य आख्यातानि। तस्माद्देव-पुत्रास्तथागतस्तथागत इत्युच्यते ॥

---

१ W om. अमनुष्यैर्वा. २ W तानि for एतानि.

W 563 अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—गम्भीराणि भगवन् इमानि लक्षणानि तथागतेनाभिसंबुद्धानि। तथागतानां चासङ्गज्ञानं यदुत प्रज्ञापारमिता। असङ्गज्ञानाय प्रज्ञापारमिता तथागतानां गोचरः। एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—एवमेतत्सुभूते, एवमेतत्। एवं हि सुभूते प्रज्ञापारमिता तथागतानामर्हतां सम्यक्संबुद्धानामस्य 5 लोकस्य संदर्शयित्री। यथा सुभूते तथागता अर्हन्तः सम्यक्संबुद्धा इमं धर्मं प्रज्ञापारमितामुपनिश्रित्य विहरन्ति, तथैवैते धर्माः सदा स्थिताः, अस्थानतस्तथागतैरभिसंबुद्धाः। अतस्ते W 564 धर्ममेवोपनिश्रित्य विहरन्ति, धर्मं सत्कुर्वन्ति गुरुकुर्वन्ति मानयन्ति पूजयन्त्यर्चयन्त्यपचायन्ति। प्रज्ञापारमितैवैषा सुभूते धर्माणां धर्मतेति तथागता अर्हन्तः सम्यक्संबुद्धाः प्रज्ञापारमितां सत्कुर्वन्ति गुरुकुर्वन्ति मानयन्ति पूजयन्त्यर्चयन्त्यपचायन्ति। तत्कस्य हेतोः? अतो हि सुभूते 10 प्रज्ञापारमितातस्तथागतानामर्हतां सम्यक्संबुद्धानां सर्वज्ञतायाः प्रभावना भवति। कृतज्ञाः कृतवेदिनश्च तथागता अर्हन्तः सम्यक्संबुद्धाः। यत्खलु सुभूते सम्यग्वदन्तो वदेयुः—कृतज्ञः कृतवेदीति, तत्तथागतं हि ते सम्यग्वदन्तो वदन्ति—कृतज्ञः कृतवेदीति। यत्खलु सुभूते R 275 तथागतोऽर्हन् सम्यक्संबुद्धो येन येन यानेनागतः, यया यया प्रतिपदा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धः, तथागतस्तदेव यानं तामेव प्रतिपदमनुगृह्णीते अनुपरिपालयति, तयैव 15 कृतज्ञतया कृतवेदितया। इयं सुभूते तथागतस्य कृतज्ञता कृतवेदिता द्रष्टव्या। पुनरपरं W 565 सुभूते तथागतेन सर्वधर्मा अकृता अकृता इत्यभिसंबुद्धाः, अविकृता अविकृता इत्यभिसंबुद्धाः, अनभिसंस्कृता अनभिसंस्कृता इत्यभिसंबुद्धाः। इयमपि सुभूते तथागतस्य कृतज्ञता कृतवेदिता द्रष्टव्या। प्रज्ञापारमितां ह्यागम्य सुभूते तथागतस्यार्हतः सम्यक्संबुद्धस्य एवं सर्वधर्मेषु ज्ञानं प्रवृत्तम्। अनेनापि सुभूते पर्यायेण प्रज्ञापारमिता तथागतानामर्हतां सम्य- 20 क्संबुद्धानामस्य लोकस्य संदर्शयित्री॥

एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—यदा भगवन् सर्वधर्मा अजानका अपश्यकाः, तदा कथं भगवन् प्रज्ञापारमिता तथागतानामर्हतां सम्यक्संबुद्धानामस्य लोकस्य संदर्शयित्री? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—साधु साधु सुभूते, यस्त्वं तथागतमर्हन्तं सम्यक्संबुद्धमेतमर्थं परिप्रश्नीकर्तव्यं मन्यसे। सुभूतिरेवमाह—सर्वधर्मा अजानका W 566 25 अपश्यका इति। एवमेतत्सुभूते, एवमेतत्। सर्वधर्मा अजानका अपश्यकाः। कथं सुभूते सर्वधर्मा अजानका अपश्यकाः? सर्वधर्मा हि सुभूते शून्याः। सर्वधर्मा हि सुभूते अनिश्रिताः। एवं हि सुभूते सर्वधर्मा अजानका अपश्यकाः। एवमेते सुभूते सर्वधर्माः प्रज्ञापारमितामागम्य तथागतैरभिसंबुद्धाः। एवमपि सुभूते प्रज्ञापारमिता तथागतानामर्हतां R 276 सम्यक्संबुद्धानामस्य लोकस्य संदर्शयित्री रूपस्यादृष्टत्वात्। एवं वेदनायाः संज्ञायाः संस्काराणां 30 विज्ञानस्यादृष्टत्वात्संदर्शयित्री। एवं हि सुभूते प्रज्ञापारमिता तथागतानामर्हतां सम्यक्संबुद्धानामस्य लोकस्य संदर्शयित्री भवति॥

सुभूतिराह—कथं भगवन् रूपस्यादृष्टता भवति? कथं वेदनायाः संज्ञायाः संस्काराणाम्? कथं भगवन् विज्ञानस्यादृष्टता भवति? भगवानाह—यदि सुभूते न रूपारम्बणं विज्ञानमुत्पद्यते, एवं रूपस्यादृष्टता भवति। एवं वेदना संज्ञा संस्काराः। यदि सुभूते न विज्ञानारम्बणं विज्ञानमुत्पद्यते, एवं विज्ञानस्यादृष्टता भवति। या च सुभूते रूपस्यादृष्टता, या च वेदनायाः संज्ञायाः संस्काराणाम्, या च सुभूते विज्ञानस्यादृष्टता, सैव लोकस्य 5 दृष्टता भवति। एवं हि सुभूते लोकस्तथागतेन दृष्टो भवति। एवं हि सुभूते प्रज्ञापारमिता W 567 तथागतानामर्हतां सम्यक्संबुद्धानामस्य लोकस्य संदर्शयित्री। कथं च सुभूते प्रज्ञापारमिता लोकं संदर्शयति? इति लोकः शून्य इति लोकं सूचयति, एवं प्रज्ञापयति, एवं लोकं संदर्शयति। इति लोकोऽचिन्त्य इति, लोकः शान्त इति, लोको विविक्त इति लोकविशुद्ध्या लोकं सूचयति। एवं लोकं प्रज्ञापयति, एवं संदर्शयतीति॥ 10

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां लोकसंदर्शनपरिवर्तो नाम द्वादशः॥ W 568



# १३ अचिन्त्यपरिवर्तस्त्रयोदशः ।

R 277 W 569 अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—गम्भीरा भगवन् प्रज्ञापारमिता ।
महाकृत्येन बतेयं भगवन् प्रज्ञापारमिता प्रत्युपस्थिता । अचिन्त्यकृत्येनातुल्यकृत्येनाप्रमेयकृत्ये-
नासंख्येयकृत्येनासमसमकृत्येन बतेयं भगवन् प्रज्ञापारमिता प्रत्युपस्थिता । भगवानाह—
5 एवमेतत्सुभूते, एवमेतत् । महाकृत्येनेयं सुभूते प्रज्ञापारमिता प्रत्युपस्थिता । अचिन्त्यकृत्ये-
नातुल्यकृत्येनाप्रमेयकृत्येनासंख्येयकृत्येनासमसमकृत्येनेयं सुभूते प्रज्ञापारमिता प्रत्युपस्थिता ।
W 570 कथं च सुभूते अचिन्त्यकृत्येनेयं प्रज्ञापारमिता प्रत्युपस्थिता ? अचिन्त्यं हि सुभूते तथा-
गतत्वं बुद्धत्वं स्वयंभूत्वं सर्वज्ञत्वम् । एवं हि सुभूते अचिन्त्यकृत्येनेयं प्रज्ञापारमिता
प्रत्युपस्थिता । न हीदं शक्यं चित्तेन चिन्तयितुम् । तत्कस्य हेतोः ? न हि चित्तं वा
10 चेतना वा चैतसिको वा अत्र धर्मः प्रवर्तते । कथं च सुभूते अतुल्यकृत्येनेयं प्रज्ञापारमिता
प्रत्युपस्थिता ? न शक्यं सुभूते तथागतत्वं बुद्धत्वं स्वयंभूत्वं सर्वज्ञत्वं चिन्तयितुं वा तुलयितुं
वा । एवं हि सुभूते अतुल्यकृत्येनेयं प्रज्ञापारमिता प्रत्युपस्थिता । कथं च सुभूते अप्रमेय-
कृत्येनेयं प्रज्ञापारमिता प्रत्युपस्थिता ? अप्रमेयं हि सुभूते तथागतत्वं बुद्धत्वं स्वयंभूत्वं
सर्वज्ञत्वम् । एवं हि सुभूते अप्रमेयकृत्येनेयं प्रज्ञापारमिता प्रत्युपस्थिता । कथं च सुभूते
15 असंख्येयकृत्येनेयं प्रज्ञापारमिता प्रत्युपस्थिता ? असंख्येयं हि सुभूते तथागतत्वं बुद्धत्वं
R 278 स्वयंभूत्वं सर्वज्ञत्वम् । एवं हि सुभूते असंख्येयकृत्येनेयं प्रज्ञापारमिता प्रत्युपस्थिता । कथं
च सुभूते असमसमकृत्येनेयं प्रज्ञापारमिता प्रत्युपस्थिता ? नास्ति सुभूते तथागतस्यार्हतः
सम्यक्संबुद्धस्य स्वयंभुवः सर्वज्ञस्य समः, कुतः पुनरुत्तरः ? एवं हि सुभूते असमसमकृत्येनेयं
प्रज्ञापारमिता प्रत्युपस्थिता ॥

W 571 20 स्थविरः सुभूतिराह—किं पुनर्भगवंस्तथागतत्वमेवाचिन्त्यमतुल्यमप्रमेयमसंख्येयमसम-
समम् ? एवं बुद्धत्वमेव स्वयंभूत्वमेव सर्वज्ञत्वमेव अतुल्यमप्रमेयमसंख्येयमसमसमम्, उताहो
रूपमप्यचिन्त्यमतुल्यमप्रमेयमसंख्येयमसमसमम् ? एवं वेदनापि संज्ञापि संस्कारा अपि ?
विज्ञानमप्यचिन्त्यमतुल्यमप्रमेयमसंख्येयमसमसमम्, उताहो सर्वधर्मा अप्यचिन्त्या अतुल्या
अप्रमेया असंख्येया असमसमाः ? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—एवमेत-
25 त्सुभूते, एवमेतत् । रूपमपि सुभूते अचिन्त्यमतुल्यमप्रमेयमसंख्येयमसमसमम् । एवं
वेदनापि संज्ञापि संस्कारा अपि । विज्ञानमपि सुभूते अचिन्त्यमतुल्यमप्रमेयमसंख्येयमसमसमम् ।
W 572 एवं सर्वधर्मा अपि सुभूते अचिन्त्या अतुल्या अप्रमेया असंख्येया असमसमाः । तत्कस्य हेतोः ?
रूपस्य हि सुभूते या धर्मता, न तत्र चित्तं न चेतना न चैतसिका धर्मा न तुलना । एवं
वेदनायाः संज्ञायाः संस्काराणाम् । विज्ञानस्य हि सुभूते या धर्मता, न तत्र चित्तं न चेतना न
30 चैतसिका धर्मा न तुलना । सर्वधर्माणां हि सुभूते या धर्मता, न तत्र चित्तं न चेतना न
R 279 चैतसिका धर्मा न तुलना । एवं हि सुभूते रूपमप्यचिन्त्यमतुल्यम् । एवं वेदनापि संज्ञापि
संस्कारा अपि । विज्ञानमप्यचिन्त्यमतुल्यम् । एवं सर्वधर्मा अप्यचिन्त्या अतुल्याः । रूपमपि

सुभूते अप्रमेयम्। एवं वेदनापि संज्ञापि संस्कारा अपि। विज्ञानमपि सुभूते अप्रमेयम्, सर्वधर्मा अपि सुभूते अप्रमेयाः। तत्कस्य हेतोः? रूपस्य हि सुभूते प्रमाणं न प्रज्ञायते। एवं वेदनायाः संज्ञायाः संस्काराणाम्। विज्ञानस्य हि सुभूते प्रमाणं न प्रज्ञायते। सर्वधर्माणामपि हि सुभूते प्रमाणं न प्रज्ञायते। केन कारणेन सुभूते रूपस्य प्रमाणं न प्रज्ञायते? केन कारणेन वेदनायाः संज्ञायाः संस्काराणाम्? केन कारणेन सुभूते विज्ञानस्य प्रमाणं न 5 प्रज्ञायते? केन कारणेन सुभूते सर्वधर्माणामपि प्रमाणं न प्रज्ञायते? रूपस्य हि सुभूते प्रमाणं न विद्यते। एवं वेदनायाः संज्ञायाः संस्काराणाम्। विज्ञानस्य हि सुभूते प्रमाणं न विद्यते। सर्वधर्माणामपि हि सुभूते प्रमाणं न विद्यते। केन कारणेन सुभूते रूपस्य प्रमाणं न W 573 विद्यते? एवं वेदनायाः संज्ञायाः संस्काराणाम्? केन कारणेन सुभूते विज्ञानस्य प्रमाणं न विद्यते? केन कारणेन सुभूते सर्वधर्माणामपि प्रमाणं न विद्यते? अप्रमाणत्वात्सुभूते सर्व- 10 धर्माणाम्। रूपमपि सुभूते असंख्येयम्। एवं वेदना संज्ञा संस्काराः। विज्ञानमपि सुभूते असंख्येयम्। सर्वधर्मा अपि सुभूते असंख्येयाः, गणनासमतिक्रान्तत्वात्। रूपमपि सुभूते असमसमम्। एवं वेदना संज्ञा संस्काराः। विज्ञानमपि सुभूते असमसमम्। एवं सर्वधर्मा अपि सुभूते असमसमाः, आकाशसमत्वात्सुभूते सर्वधर्माणाम्। तत्किं मन्यसे सुभूते अपि तु अस्त्याकाशस्य समो वा गणना वा प्रमाणं वा तुल्यं वा चित्तं वा चैतसिका वा धर्माः? 15 सुभूतिराह—नो हीदं भगवन्। भगवानाह—एवमेव सुभूते अनेन पर्यायेण सर्वधर्मा अपि R 280 W 574 अचिन्त्या अतुल्या अप्रमेया असंख्येया असमसमाः। एते च सुभूते तथागतधर्मा अचिन्त्याश्चित्तोपरमत्वात्, अतुल्यास्तुलनासमतिक्रान्तत्वात्। अचिन्त्या अतुल्या इति सुभूते विज्ञानगतस्यैतद्धर्मस्याधिवचनम्। एवमप्रमेया असंख्येया असमसमा इति सुभूते समसंख्याप्रमाणोपरमत्वादप्रमेया असंख्येया असमसमास्तथागतधर्माः। आकाशसमासंख्येयाप्रमेयतया असमसमा 20 असंख्येया अप्रमेया एते धर्माः। आकाशतुल्यतया अतुल्या असमवहिता बतेमे धर्माः। तस्मात्सुभूते अतुल्या एते धर्मा उच्यन्ते। आकाशाचिन्त्यतया अचिन्त्या एते धर्माः। आकाशातुल्यतया अतुल्या एते धर्माः। आकाशाप्रमेयतया अप्रमेया एते धर्माः। आकाशासंख्येयतया असंख्येया एते धर्माः। आकाशासमसमतया असमसमा एते धर्माः। अस्यां खलु पुनरचिन्त्यतायामतुल्यतायामप्रमेयतायामसंख्येयतायामसमसमतायां भाष्यमाणायां पञ्चानां 25 W 575 भिक्षुशतानामनुपादाय आस्रवेभ्यश्चित्तानि विमुक्तानि, विंशतेश्च भिक्षुणीशतानामनुपादाय आस्रवेभ्यश्चित्तानि विमुक्तानि, षष्टेश्चोपासकशतानां विरजो विगतमलं धर्मेषु धर्मचक्षुर्विशुद्धम्, त्रिंशतेश्चोपासिकानां विरजो विगतमलं धर्मेषु धर्मचक्षुर्विशुद्धम्, विंशत्या च बोधिसत्त्वैरनुत्पत्तिकेषु धर्मेषु क्षान्तिः प्रतिलब्धाभूत्। ते च भगवता इहैव भद्रकल्पे व्याकृता अनुत्तरायां सम्यक्संबोधौ। येऽपि ते उपासका उपासिकाश्च येषां विरजो 30 विगतमलं धर्मेषु धर्मचक्षुर्विशुद्धम्, तेऽपि भगवता व्याकृताः। तेषामप्यनुपादायास्रवेभ्यश्चित्तं विमोक्ष्यते॥

R 281 W 576 अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—गम्भीरा भगवन् प्रज्ञापारमिता। महाकृत्येन बतेयं भगवन् प्रज्ञापारमिता प्रत्युपस्थिता। एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—एवमेतत्सुभूते, एवमेतत्। गम्भीरा सुभूते प्रज्ञापारमिता। महाकृत्येनेयं सुभूते प्रज्ञापारमिता प्रत्युपस्थिता। तत्कस्य हेतोः? अत्र हि सुभूते सर्वज्ञता समायुक्ता, अत्र 5 प्रत्येकबुद्धभूमिः समायुक्ता, अत्र सर्वश्रावकभूमिः समायुक्ता। तद्यथापि नाम सुभूते राज्ञः क्षत्रियस्य मूर्धाभिषिक्तस्य जनपदस्थामवीर्यप्राप्तस्य यानि तानि राजकृत्यानि, यानि च नगरकृत्यानि, यानि च जनपदकृत्यानि, सर्वाणि तानि अमात्यसमायुक्तानि भवन्ति। अल्पोत्सुकस्ततो राजा भवत्यपहृतभारः। एवमेव सुभूते ये केचिद्बुद्धधर्मा वा प्रत्येकबुद्धधर्मा वा श्रावकधर्मा वा, सर्वे ते प्रज्ञापारमितासमायुक्ताः। प्रज्ञापारमिता तत्र कृत्यं करोति। 10 अनेन सुभूते पर्यायेण महाकृत्येनेयं प्रज्ञापारमिता प्रत्युपस्थिता रूपस्यापरिग्रहाय अनभिनिवेशाय। एवं वेदनायाः संज्ञायाः संस्काराणाम्। विज्ञानस्यापरिग्रहाय अनभिनिवेशाय, W 577 स्रोतआपत्तिफलस्यापरिग्रहायानभिनिवेशाय, एवं सकृदागामिफलस्यानागामिफलस्यार्हत्त्वफलस्यापरिग्रहायानभिनिवेशाय, प्रत्येकबोधेरपरिग्रहायानभिनिवेशाय, सर्वज्ञताया अपरिग्रहायानभिनिवेशाय प्रज्ञापारमिता प्रत्युपस्थिता॥

15 सुभूतिराह—कथं भगवन् सर्वज्ञताया अपरिग्रहायानभिनिवेशाय प्रज्ञापारमिता R 282 प्रत्युपस्थिता? भगवानाह—तत्किं मन्यसे सुभूते समनुपश्यसि त्वमर्हत्त्वं यत्र परिग्रहं वा अभिनिवेशं वा कुर्याः? सुभूतिराह—नो हीदं भगवन्। नाहं भगवंस्तं धर्मं समनुपश्यामि W 578 यं परिगृह्णीयामभिनिवेशेयं वा अर्हत्त्वमिति। भगवानाह—एवमेतत्सुभूते, एवमेतत्। अहमपि सुभूते तथागतत्वं न समनुपश्यामि। सोऽहं सुभूते तथागतत्वमसमनुपश्यन् न परिगृह्णामि 20 नाभिनिवेशे। तस्मात्तर्हि सुभूते सर्वज्ञताप्यपरिग्रहा अनभिनिवेशा। सुभूतिराह—सर्वज्ञतापि भगवन् अपरिग्रहा अनभिनिवेशेति? मा भगवन् नवयानसंप्रस्थिताः परीत्तकुशलमूला बोधिसत्त्वा महासत्त्वा इमं निर्देशं श्रुत्वा उत्त्रसिषुः संत्रसिषुः संत्रासमापत्स्यन्ते। अपि तु खलु पुनर्भगवन् ये बोधिसत्त्वा महासत्त्वा हेतुसंपन्नाः पूर्वजिनकृताधिकारा दीर्घरात्रावरोपितकुशलमूला भविष्यन्ति, त इमां गम्भीरां प्रज्ञापारमितां श्रुत्वा अधिमोक्ष्यन्ति। भगवानाह— 25 एवमेतत्सुभूते, एवमेतत्॥

W 579 अथ खलु ते कामावचरा रूपावचराश्च देवपुत्रा भगवन्तमेतदवोचन्—गम्भीरा भगवन् R 283 प्रज्ञापारमिता, दुर्दृशा दुरनुबोधा। पूर्वजिनकृताधिकारा दीर्घरात्रावरोपितकुशलमूलास्ते भगवन् सत्त्वा भविष्यन्ति, य एनां गम्भीरां प्रज्ञापारमितामधिमोक्ष्यन्ति। सचेद्भगवंस्त्रिसाहस्रमहासाहस्रे लोकधातौ ये सत्त्वाः, ते सर्वे श्रद्धानुसारिभूमौ कल्पं वा कल्पावशेषं वा 30 चरेयुः, यश्चेह गम्भीरायां प्रज्ञापारमितायामेकदिवसमपि क्षान्तिं रोचयेद्गवेषेत चिन्तयेत्तुलयेदुपपरीक्षेत उपनिध्यायेत्, अयमेव भगवंस्तेभ्यः श्रेयान्। एवमुक्ते भगवांस्तान् कामाव-

चरान् रूपावचरांश्च देवपुत्रानामन्त्रयामास–यदि देवपुत्राः कश्चिदेव कुलपुत्रो वा कुल- W 231
दुहिता वा इमां गम्भीरां प्रज्ञापारमितां शृणुयात्, यावदस्य देवपुत्राः क्षिप्रतरं निर्वाणं
प्रतिकाङ्क्षितव्यम्, न त्वेव तेषां श्रद्धानुसारिभूमौ कल्पं वा कल्पावशेषं वा चरताम्। अथ
खलु ते कामावचरा रूपावचराश्च देवपुत्रा भगवन्तमेतदवोचन्–महापारमितेयं भगवन्
यदुत प्रज्ञापारमिता। इत्युक्त्वा भगवतः पादौ शिरसा अभिवन्द्य भगवन्तं त्रिः प्रदक्षिणीकृत्य 5
भगवतोऽन्तिकाद् गमिष्याम इत्यारोच्य प्रक्रान्ताः। तेऽविदूरं गत्वा अन्तर्हिताः। कामावचराश्च
देवपुत्राः कामधातौ प्रातिष्ठन्त, रूपावचराश्च देवपुत्रा ब्रह्मलोके प्रातिष्ठन्तेति॥

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायामचिन्त्यपरिवर्तो नाम त्रयोदशः॥



## १४ औपम्यपरिवर्तश्चतुर्दशः ।

R 284 W 581 अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्–यो भगवन् बोधिसत्त्वो महासत्त्वः सहश्रवणेनैव अस्यां गम्भीरायां प्रज्ञापारमितायामधिमुच्यते नावलीयते न संलीयते नावतिष्ठते न धन्धायति न विचिकित्सति न काङ्क्षति, अभिनन्दति च प्रज्ञापारमिताम्, स भगवन् 5 कुतश्च्युत्वा कुत्रोपपन्नः? भगवानाह–यः सुभूते बोधिसत्त्वो महासत्त्वः सहश्रवणेनैव अस्यां गम्भीरायां प्रज्ञापारमितायामधिमोक्ष्यते नावलेष्यते न संलेष्यते नावस्थास्यते न धन्धायिष्यति न विचिकित्सिष्यति न काङ्क्षिष्यति, अभिनन्दिष्यति च दर्शनं श्रवणं च, धारयिष्यति भावयिष्यत्येनां गम्भीरां प्रज्ञापारमिताम्, प्रज्ञापारमिताप्रतिसंयुक्तांश्च मनसिकारान्न विहास्यति, न विपृष्ठीकरिष्यति मानसम्, छन्दं जनयिष्यत्युद्ग्रहीतुं धारयितुं वाचयितुं पर्यवाप्तुं 10 प्रवर्तयितुम्, करिष्यत्यनुबन्धम्, अनुगमिष्यति धर्मभाणकं नोत्स्रक्ष्यति। तद्यथापि नाम W 582 सुभूते तरुणवत्सा गौर्नोत्सृजति वत्सम्, एवमेव सुभूते यो बोधिसत्त्वो महासत्त्व एनां गम्भीरां प्रज्ञापारमितां श्रुत्वा तावन्न प्रहास्यति धर्मभाणकं यावदस्येयं प्रज्ञापारमिता कायगता वा भविष्यति पुस्तकगता वा, अयं सुभूते बोधिसत्त्वो महासत्त्वो मनुष्येभ्य एव च्युतो मनुष्येष्वेवोपपन्नः ॥

R 285 15 सुभूतिराह–स्याद्भगवन् एतैरेव गुणैः समन्वागतो बोधिसत्त्वो महासत्त्वोऽन्येभ्यो बुद्धक्षेत्रेभ्यश्च्युत इहोपपन्नः? भगवानाह–स्यात्सुभूते बोधिसत्त्वो महासत्त्वोऽन्येभ्यो बुद्धक्षेत्रेभ्योऽन्यान् बुद्धान् भगवतः पर्युपास्य परिपृच्छ्य परिप्रश्नीकृत्य तेभ्यश्च्युत इहोपपन्नः, एतैरेव गुणैः समन्वागतो वेदितव्यः। पुनरपरं सुभूते यो बोधिसत्त्वो महासत्त्वस्तुषितेभ्यो देवेभ्यश्च्युत इहोपपन्नः, सोऽप्येतैरेव गुणैः समन्वागतो वेदितव्यः। येन मैत्रेयो बोधिसत्त्वो 20 महासत्त्वः पर्युपासितः परिपृष्टः परिपृच्छितः परिप्रश्नीकृतः इमां प्रज्ञापारमितामारभ्य, W 583 सोऽप्येतैरेव गुणैः समन्वागतो वेदितव्यः। येन खलु पुनः सुभूते बोधिसत्त्वेन महासत्त्वेन पूर्वान्तत इयं गम्भीरा प्रज्ञापारमिता श्रुता, न तु परिपृष्टा भवेत्, न परिपृच्छिता न परिप्रश्नीकृता, तस्य पुनरपि मनुष्येष्वेवोपपन्नस्य अस्यां गम्भीरायां प्रज्ञापारमितायां भाष्यमाणायां भवति काङ्क्षायितत्वम्, भवति धन्धायितत्वम्, भवति चित्तस्यावलीनता, वेदितव्यमेत-25 त्सुभूते, अयं बोधिसत्त्वः पूर्वान्ततोऽप्यपरिपृच्छकजातीयोऽभूत्। तत्कस्य हेतोः? तथा हि अस्यां अस्यां गम्भीरायां प्रज्ञापारमितायां भाष्यमाणायां भवति काङ्क्षायितत्वम्, भवति धन्धायितत्वम्, भवति चित्तस्यावलीनतेति ॥

पुनरपरं सुभूते येन बोधिसत्त्वेन महासत्त्वेनेयं गम्भीरा प्रज्ञापारमिता पूर्वान्ततोऽपि श्रुता भवति, पर्युपासिता परिपृष्टा परिपृच्छिता परिप्रश्नीकृता च भवति, एकं वा 30 दिनं द्वे वा त्रीणि वा चत्वारि वा पञ्च वा दिनानि, तस्य तावत्कालिकी श्रद्धा भवति, संह्रियते च, पुनरेवासंहार्या च भवति परिपृच्छया। तत्कस्य हेतोः? एवं R 286 ह्येतत्सुभूते भवति-येन पूर्वं न संपरिपृष्टा भवतीयं प्रज्ञापारमिता, न संपरिपृच्छिता,

न संपरिप्रश्नीकृता, न चानुवर्तिता भवति, तस्य कंचित्कालं छन्दोऽनुवर्तते अस्यां गम्भीरायां प्रज्ञापारमितायां श्रवणाय, कंचित्कालं छन्दो न भवति । स पुनरेवोत्क्षिप्यतेऽवसीदति । तस्य चलाचला बुद्धिर्भवति । तूलपिचूपमश्च स भवति । सोऽयं बोधिसत्त्वोऽचिरयानसंप्रस्थितो वेदितव्यः । नवेन यानेनागतः स बोधिसत्त्वस्तां श्रद्धां तं प्रसादं तं छन्दं प्रहास्यति, यदुतैनां गम्भीरां प्रज्ञापारमितां नानुग्रहीष्यति नानुवर्तिष्यते 5 नानुपरिवारयिष्यति । तस्य द्वयोर्भूम्योरन्यतरा भूमिः प्रतिकाङ्क्षितव्या—श्रावकभूमिर्वा प्रत्येकबुद्धभूमिर्वा । तद्यथापि नाम सुभूते महासमुद्रगतायां नावि भिन्नायां ये तत्र काष्ठं वा न गृह्णन्ति फलकं वा, मृतशरीरं वा नाध्यालम्बन्ते, वेदितव्यमेतत्—अप्राप्ता एवैते पारमुदके कालं करिष्यन्तीति । ये खलु पुनः सुभूते महासमुद्रगतायां नावि भिन्नायां तत्र काष्ठं वा गृह्णन्ति फलकं वा, मृतशरीरं वा अध्यालम्बन्ते, वेदितव्यमेतत्सुभूते—नैते उदके 10 कालं करिष्यन्ति, स्वस्तिना अनन्तरायेण पारमुत्तरिष्यन्ति, अक्षताश्चानुपहताश्च स्थले स्थास्यन्तीति । एवमेव सुभूते यो बोधिसत्त्वः श्रद्धामात्रकेण प्रसादमात्रकेण प्रेममात्रकेण छन्दमात्रकेण समन्वागतः स च प्रज्ञापारमितां नाध्यालम्बते, वेदितव्यमेतत्सुभूते अन्तरैवैष व्यध्वनि व्यवसादमापत्स्यते, अप्राप्त एव सर्वज्ञतां श्रावकत्वे प्रत्येकबुद्धत्वे वा स्थास्यतीति । येषां खलु पुनः सुभूते बोधिसत्त्वानां महासत्त्वानामस्ति श्रद्धा, अस्ति क्षान्तिः, अस्ति रुचिः, 15 अस्ति छन्दः, अस्ति वीर्यम्, अस्त्यप्रमादः, अस्त्यधिमुक्तिः, अस्त्यध्याशयः, अस्ति त्यागः, अस्ति गौरवम्, अस्ति प्रीतिः, अस्ति प्रामोद्यम्, अस्ति प्रसादः, अस्ति प्रेम, अस्त्यनिक्षिप्तधुरता अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम्, ते च प्रज्ञापारमितामध्यालम्बन्ते । एवं तेषां सा श्रद्धा सा क्षान्तिः सा रुचिः स च्छन्दः तद्वीर्यं सोऽप्रमादः साधिमुक्तिः सोऽध्याशयः स त्यागः तद्गौरवं सा प्रीतिः तत्प्रामोद्यं स प्रसादः तत्प्रेम सा अनिक्षिप्तधुरता अनुत्तरां सम्यक्सं- 20 बोधिमभिसंबोद्धुम् । ते च प्रज्ञापारमितां प्राप्य सर्वज्ञतायां स्थास्यन्ति । तद्यथापि नाम सुभूते स्त्री वा पुरुषो वा अपरिपक्वेन घटेनोदकं परिवहेत्, वेदितव्यमेतत्सुभूते—नायं घटश्चिरमनुवर्त्स्यते, क्षिप्रमेव परिभेत्स्यते, प्रविलेष्यते इति । तत्कस्य हेतोः? यथापि नाम तदपरिपक्वत्वाद्घटस्य, स भूमिपर्यवसान एव भविष्यतीति । एवमेव सुभूते किंचापि बोधिसत्त्वस्य अस्ति श्रद्धा अस्ति क्षान्तिः अस्ति रुचिः अस्ति छन्दः अस्ति वीर्यम् अस्त्यप्रमादः, 25 अस्त्यधिमुक्तिः अस्त्यध्याशयः अस्ति त्यागः, अस्ति गौरवम्, अस्ति प्रीतिः अस्ति प्रामोद्यम्, अस्ति प्रसादः, अस्ति प्रेम, अस्त्यनिक्षिप्तधुरता अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम् । स च प्रज्ञापारमितया उपायकौशल्येन च अपरिगृहीतो भवति, वेदितव्यमेतत्सुभूते अयं बोधिसत्त्वोऽन्तरा व्यध्वनि व्यवसादमापत्स्यत इति । कश्च सुभूते बोधिसत्त्वस्यान्तरा व्यध्वनि व्यवसादः—श्रावकभूमिर्वा प्रत्येकबुद्धभूमिर्वा? तद्यथापि नाम सुभूते स्त्री वा पुरुषो वा 30 सुपरिपक्वेन घटेन नदीतो वा सरस्तो वा तडागतो वा उदपानाद्वा ततोऽन्येभ्यो वा उदकाधारेभ्य उदकं परिवहेत्, तस्य तदुदकं परिवहतो वेदितव्यमेतत्सुभूते स्वस्तिना

W 584 W 585 R 287 W 586

R 288 W 587 अनन्तरायेण अयं घटो गृहं गमिष्यतीति। तत्कस्य हेतोः? यथापि नाम सुपरिपक्कत्वाद्धटस्य। एवमेव सुभूते यस्य बोधिसत्त्वस्य अस्ति श्रद्धा अस्ति क्षान्तिः अस्ति रुचिः अस्ति छन्दः, अस्ति वीर्यम्, अस्त्यप्रमादः, अस्त्यधिमुक्तिः अस्त्यध्याशयः, अस्ति त्यागः, अस्ति गौरवम्, अस्ति प्रीतिः अस्ति प्रामोद्यम्, अस्ति प्रसादः, अस्ति प्रेम, अस्त्यनिक्षिप्तधुरता 5 अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम्। स च प्रज्ञापारमितया उपायकौशल्येन च परिगृहीतो भवति। वेदितव्यमेतत्सुभूते नायं बोधिसत्त्वो महासत्त्वोऽन्तरा व्यध्वनि व्यवसादमापत्स्यते। अक्षतोऽनुपहतः सर्वज्ञतायां स्थास्यतीति। तद्यथापि नाम सुभूते दुष्प्रज्ञजातीयः पुरुषः सामुद्रिकां नावमनाकोटितामपरिकर्मकृतां चिरबन्धनबद्धामुदकेऽवतार्य समारोपितभाण्डां परिपूर्णां भारार्तामभिरूढः स्यात्, वेदितव्यमेतत्सुभूते—एवंधर्मेयं नौर्भविष्यति, यदुत 10 उदकेऽसंतीर्णभाण्डैव संसत्स्यतीति। तस्यान्येन भाण्डं भविष्यति, अन्येन सा नौर्विपत्स्यते इति। एवं स सार्थवाहोऽनुपायकुशलो दौष्प्रज्ञेन महता अर्थवियोगेन समन्वागतो भविष्यति, महतश्च रत्नाकरात्परिहीणो भविष्यतीति। एवमेव सुभूते किंचापि बोधिसत्त्वस्य अस्ति श्रद्धा अस्ति क्षान्तिः, अस्ति रुचिः अस्ति छन्दः, अस्ति वीर्यम्, अस्त्यप्रमादः, अस्त्यधिमुक्तिः अस्त्यध्याशयः, अस्ति त्यागः, अस्ति गौरवम्, अस्ति प्रीतिः, अस्ति प्रामोद्यम्, अस्ति 15 प्रसादः, अस्ति प्रेम, अस्त्यनिक्षिप्तधुरता अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम्, स च प्रज्ञापार-W 588 R 289 मितया उपायकौशल्येन च विरहितो भवति, वेदितव्यमेतत्सुभूते अप्राप्त एवायं बोधिसत्त्वः सर्वज्ञतारत्नाकरमन्तरा संसत्स्यति, व्यवसादमापत्स्यते, महतः स्वार्थात्परिहीणो भविष्यति, महतश्च परार्थरत्नराशेः परिहीणो भविष्यति, यदुत सर्वज्ञतामहार्थरत्नाकरात्परिहीणत्वादिति। का पुनः सुभूते बोधिसत्त्वस्य अन्तरा व्यध्वनि संसीदना? यदुत श्रावकभूमिर्वा प्रत्येक-20 बुद्धभूमिर्वा। तद्यथापि नाम सुभूते पण्डितजातीयः सार्थवाहः सामुद्रिकां नावं सुबद्धां बन्धयित्वा स्वाकोटितामाकोटयित्वा सुपरिकर्मकृतां कृत्वा उदकेऽवतार्य भाण्डमारोप्य पूर्णां कृत्वा समं योजयित्वा युक्तेन वातेनाभिप्रेतां दिशमनुपूर्वेण गच्छेत्, ततस्तद्यानमिति, वेदितव्यमेतत्सुभूते नेयं नौरुदके संसत्स्यति। गमिष्यतीयं नौस्तं प्रदेशं यत्रानया गन्तव्यम्। महालाभेन चायं सार्थवाहः संयोक्ष्यते यदुत लौकिकै रत्नैरिति। एवमेव सुभूते यस्य बोधिसत्त्वस्य 25 महासत्त्वस्य अस्ति श्रद्धा अस्ति क्षान्तिः अस्ति रुचिः अस्ति छन्दः अस्ति वीर्यम्, अस्त्यप्रमादः अस्त्यधिमुक्तिः, अस्त्याध्याशयः, अस्ति त्यागः, अस्ति गौरवम्, अस्ति प्रीतिः अस्ति प्रामोद्यम्, अस्ति प्रसादः, अस्ति प्रेम, अस्त्यनिक्षिप्तधुरता अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम्, स च प्रज्ञापारमितया परिगृहीत उपायकौशल्येन चाविरहितो भवति, वेदितव्यमेतत्सुभूते नायं बोधिसत्त्वो-महासत्त्वोऽन्तरा व्यध्वनि संसत्स्यति, न व्यवसादमापत्स्यते, स्थास्यत्ययं बोधिसत्त्वो महासत्त्वो W 589 30 ऽनुत्तरायां सम्यक्संबोधौ। तत्कस्य हेतोः? एवं ह्येतत्सुभूते भवति—यतोऽस्य बोधिसत्त्वस्य महासत्त्वस्य अस्ति श्रद्धा, अस्ति क्षान्तिः, अस्ति रुचिः, अस्ति छन्दः, अस्ति वीर्यम्, अस्त्यप्रमादः, अस्त्यधिमुक्तिः, अस्त्यध्याशयः, अस्ति त्यागः, अस्ति गौरवम्, अस्ति

अस्ति प्रीतिः, अस्ति प्रामोद्यम्, अस्ति प्रसादः, अस्ति प्रेम, अस्त्यनिक्षिप्तधुरता अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम्। एते चास्य धर्माः प्रज्ञापारमितया परिगृहीता उपायकौशल्येन चाविरहिता न श्रावकभूमिं न प्रत्येकबुद्धभूमिं वा प्रतिपत्स्यन्ते। अपि तु येन सर्वज्ञता, तेनैते धर्मा अभिमुखाः संप्रस्थिताः, ततोऽस्या अनुत्तरायाः सम्यक्संबोधेरभिसंबोधाय भविष्यन्तीति। तद्यथापि नाम सुभूते कश्चिदेव पुरुषो जीर्णो वृद्धो महल्लकः सविंशतिवर्षशतिको जात्या भवेत्, तस्य कश्चिदेव शरीरे व्याधिरुत्पद्येत वाततो वा पित्ततो वा श्लेष्मतो वा संनिपाततो वा। तत्किं मन्यसे सुभूते अपि नु स पुरुषोऽपरिगृहीतो मञ्चादुत्तिष्ठेत्? सुभूतिराह–नो हीदं भगवन्। भगवानाह–सचेत्पुनः सुभूते स पुरुषो मञ्चादुत्तिष्ठेत, अथ च पुनर्न प्रतिबलोऽर्धक्रोशान्तरमपि प्रक्रमितुम्। स तया जरया तेन च व्याधिना क्षपितो यद्यपि मञ्चादुत्तिष्ठेत्, तथापि पुनरप्रतिबलः स पुरुषः प्रक्रमणाय। एवमेव सुभूते किंचापि बोधिसत्त्वस्य अस्ति श्रद्धा, अस्ति क्षान्तिः, अस्ति रुचिः, अस्ति छन्दः, अस्ति वीर्यम्, अस्त्यप्रमादः, अस्त्यधिमुक्तिः, अस्त्यध्याशयः, अस्ति त्यागः, अस्ति गौरवम्, अस्ति प्रीतिः, अस्ति प्रामोद्यम्, अस्ति प्रेम, अस्त्यनिक्षिप्तधुरता अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम्। स च प्रज्ञापारमितया अपरिगृहीत उपायकौशल्येन च विरहितो भवति, किंचापि संप्रस्थितोऽनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम्। अथ च पुनः सुभूते एवं वेदितव्यम्–अयं बोधिसत्त्वोऽन्तरा व्यध्वनि संसत्स्यति, व्यवसादमापत्स्यते, यदुत श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा स्थास्यतीति। तत्कस्य हेतोः? यथापि नाम प्रज्ञापारमितया अपरिगृहीतत्वादुपायकौशल्येन च विरहितत्वात्। तद्यथापि नाम सुभूते स एव पुरुषो जीर्णो वृद्धो महल्लकः सविंशतिवर्षशतिको जात्या भवेत्, तस्य शरीरे कश्चिदेव व्याधिरुत्पद्येत वाततो वा पित्ततो वा श्लेष्मतो वा संनिपाततो वा, स च मञ्चादुत्तिष्ठेत्। तमेनं द्वौ बलवन्तौ पुरुषौ वामदक्षिणाभ्यां पार्श्वाभ्यां स्वभ्यालम्बितमभ्यालम्ब्य सुपरिगृहीतं परिगृह्य एवं वदेताम्–गच्छ त्वं भोः पुरुष येनाकाङ्क्षसि यावच्चाकाङ्क्षसि गन्तुम्, अनुपरिगृहीतस्त्वमावाभ्याम्, न तवान्तरामार्गे पतनभयं भविष्यति, यावन्न त्वं तदधिष्ठानमनुप्राप्तो भविष्यसि, यत्र त्वया गन्तव्यमिति। एवमेव सुभूते यस्य बोधिसत्त्वस्य महासत्त्वस्य अस्ति श्रद्धा, अस्ति क्षान्तिः, अस्ति रुचिः, अस्ति छन्दः, अस्ति वीर्यम्, अस्त्यप्रमादः, अस्त्यधिमुक्तिः, अस्त्यध्याशयः, अस्ति त्यागः, अस्ति गौरवम्, अस्ति प्रीतिः, अस्ति प्रामोद्यम्, अस्ति प्रसादः, अस्ति प्रेम अस्त्यनिक्षिप्तधुरता अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम्, स च प्रज्ञापारमितया अनुपरिगृहीतो भवति, उपायकौशल्यसमन्वागतश्च भवति। वेदितव्यमेतत्सुभूते नायं बोधिसत्त्वो महासत्त्वोऽन्तरा व्यध्वनि संसत्स्यति, न व्यवसादमापत्स्यते, प्रतिबलोऽयं बोधिसत्त्वो महासत्त्वस्तत्स्थानमनुप्राप्तुं यदुतानुत्तरं सम्यक्संबोधिस्थानमिति॥

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायामौपम्यपरिवर्तो नाम चतुर्दशः॥

# १५ देवपरिवर्तः पञ्चदशः ।

R 292 W 593 अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—आदिकर्मिकेण भगवन् बोधिसत्त्वेन महासत्त्वेन कथं प्रज्ञापारमितायां स्थातव्यं कथं शिक्षितव्यम्? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—इह सुभूते आदिकर्मिकेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितु-5 कामेन कल्याणमित्राणि सेवितव्यानि भक्तव्यानि पर्युपासितव्यानि। यान्येनं प्रज्ञापारमितायामववदिष्यन्ति अनुशासिष्यन्ति, यानि चास्मै प्रज्ञापारमिताया अर्थमुपदेक्ष्यन्ति, तान्येव चास्य सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्राणि वेदितव्यानि। एवं चास्मै प्रज्ञापारमिताया अर्थमुपदेक्ष्यन्ति—एहि त्वं कुलपुत्र दानपारमितायां योगमापद्यस्व, एवं शीलपारमितायां क्षान्तिपारमितायां वीर्यपारमितायां ध्यानपारमितायां प्रज्ञापारमितायां योगमापद्यस्व। यद्यदेव त्वं कुलपुत्र 10 दानं ददासि, तत्सर्वमनुत्तरायां सम्यक्संबोधौ परिणामय। मा च त्वं कुलपुत्र अनुत्तरां सम्यक्संबोधिं रूपतः परामृक्षः, एवं मा वेदनातो मा संज्ञातो मा संस्कारेभ्यः। मा च त्वं कुलपुत्र अनुत्तरां सम्यक्संबोधिं विज्ञानतः परामृक्षः। तत्कस्य हेतोः? अपरामृष्टा हि कुलपुत्र सर्वज्ञता। एवं यद्यदेव त्वं कुलपुत्र शीलं रक्षसि...पेयालं...यद्यदेव त्वं कुलपुत्र R 293 क्षान्त्या संपादयसि, यद्यदेव त्वं कुलपुत्र वीर्यमारभसे, यद्यदेव त्वं कुलपुत्र ध्यानं समापद्यसे, 15 यद्यदेव त्वं कुलपुत्र प्रज्ञायां परिजयं करोषि, तत्सर्वमनुत्तरायां सम्यक्संबोधौ परिणामय। मा च त्वं कुलपुत्र अनुत्तरां सम्यक्संबोधिं रूपतः परामृक्षः। एवं मा वेदनातो मा संज्ञातो W 594 मा संस्कारेभ्यः। मा च त्वं कुलपुत्र अनुत्तरां सम्यक्संबोधिं विज्ञानतः परामृक्षः। तत्कस्य हेतोः? अपरामृष्टा हि कुलपुत्र सर्वज्ञता। मा च त्वं कुलपुत्र श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा स्पृहां कार्षीरिति। एवं हि सुभूते आदिकर्मिको बोधिसत्त्वो महासत्त्वोऽनुपूर्वेण कल्याण-20 मित्रैः प्रज्ञापारमितायामवतारयितव्यः॥

W 595 सुभूतिराह—दुष्करकारका भगवन् बोधिसत्त्वा महासत्त्वाः, येऽनुत्तरां सम्यक्संबोधिमभिसंबोद्धुं संप्रस्थिताः। एवंरूपं दानमागम्य, एवंरूपं शीलम्, एवंरूपां क्षान्तिम्, एवंरूपं वीर्यम्, एवंरूपं ध्यानम्, एवंरूपां प्रज्ञामागम्य स्वाधीनेऽपि परिनिर्वाणे नेच्छन्ति परिनिर्वातुम्। अपि तु परमदुःखितं सत्त्वधातुमभिसमीक्ष्य अनुत्तरां सम्यक्संबोधिमभि-25 संबोद्धुकामाः संसारान्नोत्रस्यन्ति। एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—एवमेतत्सुभूते, एवमेतत्। दुष्करकारकाः सुभूते बोधिसत्त्वा महासत्त्वाः ये लोकहिताय संप्रस्थिताः, लोकसुखाय लोकानुकम्पायै संप्रस्थिताः, लोकस्य त्राणं भविष्यामः, लोकस्य शरणं W 596 भविष्यामः, लोकस्य लयनं भविष्यामः, लोकस्य परायणं भविष्यामः, लोकस्य द्वीपा भविष्यामः, लोकस्यालोका भविष्यामः, लोकस्य परिणायका भविष्यामः, अनुत्तरां 30 सम्यक्संबोधिमभिसंबुध्य लोकस्य गतिर्भविष्यामः, इत्येवंरूपमनुत्तरायां सम्यक्संबोधौ वीर्यमारभन्ते। कथं च सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तो R 294 लोकस्य त्राणं भवन्ति? यानि तानि सुभूते संसारावचराणि दुःखानि लोकस्य, तत एनं

त्रायन्ते, तेषां दुःखानां प्रहाणाय व्यायच्छन्ते, वीर्यमारभन्ते । एवं हि सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तो लोकस्य त्राणं भवन्ति । कथं च सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तो लोकस्य शरणं भवन्ति ? ये सुभूते सत्त्वा जातिधर्मिणो जराधर्मिणो व्याधिधर्मिणो मरणधर्मिणः शोकपरिदेवदुःखदौर्मनस्योपायासधर्मिणः सत्त्वाः, तान् सर्वान् जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासेभ्यः परिमोचयन्ति । एवं हि सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तो लोकस्य शरणं भवन्ति । कथं च सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तो लोकस्य लयनं भवन्ति? यत्सुभूते तथागता अर्हन्तः सम्यक्संबुद्धाः सत्त्वेभ्योऽश्लेषाय धर्मं देशयन्ति । एवं हि सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तो लोकस्य लयनं भवन्ति । सुभूतिराह–कथं भगवन् अश्लेषो भवति? भगवानाह–यः सुभूते रूपस्यासंबन्धः, स रूपस्याश्लेषः । यो रूपस्याश्लेषः, स रूपस्यासंबन्धः । यो रूपस्यासंबन्धः, स रूपस्यानुत्पादोऽनिरोधः । यो रूपस्यानुत्पादोऽनिरोधः, स रूपस्याश्लेषः । यो रूपस्याश्लेषः, अयं रूपस्यासंबन्धः, अयं रूपस्याश्लेषः । एवं वेदनायाः संज्ञायाः संस्काराणाम् । यः सुभूते विज्ञानस्यासंबन्धः, स विज्ञानस्याश्लेषः । यो विज्ञानस्याश्लेषः, स विज्ञानस्यासंबन्धः । यो विज्ञानस्यासंबन्धः, स विज्ञानस्यानुत्पादोऽनिरोधः । यो विज्ञानस्यानुत्पादोऽनिरोधः, स विज्ञानस्याश्लेषः । यो विज्ञानस्याश्लेषः अयं विज्ञानस्यासंबन्धः, अयं विज्ञानस्याश्लेषः । एवं हि सुभूते सर्वधर्मा असंश्लिष्टा असंबद्धा इति ज्ञानदर्शनादश्लेषो भवति । एवं हि सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तो लोकस्य लयनं भवन्ति । कथं च सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तो लोकस्य परायणं भवन्ति? यत्सुभूते रूपस्य पारं न तद्रूपम् । यथा च सुभूते पारं तथा रूपम् । एवं वेदना संज्ञा संस्काराः । यत्सुभूते विज्ञानस्य पारं न तद्विज्ञानम् । यथा च सुभूते पारं तथा विज्ञानम् । यथा च सुभूते रूपम्, एवं वेदना संज्ञा संस्काराः । विज्ञानं पारं तथा सर्वधर्माः । सुभूतिराह–यदि भगवन् यथा रूपम्, एवं वेदना संज्ञा संस्काराः विज्ञानं पारं तथा सर्वधर्माः, ननु भगवन् बोधिसत्त्वैर्महासत्त्वैरभिसंबुद्धा एव भवन्ति सर्वधर्माः । तत्कस्य हेतोः? न ह्यत्र भगवन् कश्चिद्विकल्पः । भगवानाह–एवमेतत्सुभूते, एवमेतत् । यत्तत्पारं न तत्र कश्चिद्विकल्पः । अविकल्पत्वात्सुभूते बोधिसत्त्वैर्महासत्त्वैरभिसंबुद्धा एव भवन्ति सर्वधर्माः । इदमपि सुभूते परमदुष्करं बोधिसत्त्वानां महासत्त्वानाम्, य एवं च सर्वधर्मानुपनिध्यायन्ति, न च साक्षात्कुर्वन्ति, न चावलीयन्ते–एवमस्माभिरेते धर्मा अभिसंबोद्धव्याः, एवं च अनुत्तरां सम्यक्संबोधिमभिसंबुध्य एनान् धर्मान् देशयिष्यामः प्रकाशयिष्याम इत्युपनिध्यायन्ति । एवं हि सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तो लोकस्य परायणं भवन्ति । कथं च सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः

W 600 सन्तो लोकस्य द्वीपा भवन्ति? तद्यथापि नाम सुभूते ये प्रदेशा उदकपरिच्छिन्ना भवन्ति नदीषु वा महोदधिषु वा, ते उच्यन्ते द्वीपा इति। एवमेव सुभूते पूर्वान्तापरान्तपरिच्छिन्नं रूपम्। एवं वेदना संज्ञा संस्काराः। एवमेव सुभूते पूर्वान्तापरान्तपरिच्छिन्नं विज्ञानम्। एतेन सुभूते परिच्छेदेन सर्वधर्माः पूर्वान्तापरान्तपरिच्छिन्नाः। यश्च सुभूते सर्वधर्माणां 5 परिच्छेदः, एतच्छान्तम्, एतत्प्रणीतम्, एतत्परिनिर्वाणम्, एतद्यथावत्, एतदविपरीतम्। एवं खलु सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तो लोकस्य द्वीपा भवन्ति। कथं च सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तो लोकस्य आलोका भवन्ति? इह सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तो दीर्घरात्रमविद्याण्डकोशपटलपर्यवनद्धानां सत्त्वानां तमोभिभूतानां प्रज्ञया 10 अवभासयन्तः सर्वाज्ञानतमोन्धकारं विधुन्वन्ति। एवं खलु सुभूते बोधिसत्त्वा महासत्त्वा W 601 R 297 अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तो लोकस्य आलोका भवन्ति। कथं च सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तो लोकस्य परिणायका भवन्ति? इह सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तो रूपस्य प्रकृत्यनुत्पादानिरोधाय धर्मं देशयन्ति। एवं वेदनायाः संज्ञायाः संस्काराणाम्। विज्ञानस्य 15 प्रकृत्यनुत्पादानिरोधाय धर्मं देशयन्ति। पृथग्जनधर्माणामपि प्रकृत्यनुत्पादानिरोधाय धर्मं देशयन्ति। श्रावकधर्माणामपि प्रकृत्यनुत्पादानिरोधाय धर्मं देशयन्ति। प्रत्येकबुद्धधर्माणामपि प्रकृत्यनुत्पादानिरोधाय धर्मं देशयन्ति। बोधिसत्त्वधर्माणामपि प्रकृत्यनुत्पादानिरोधाय धर्मं देशयन्ति। बुद्धधर्माणामपि प्रकृत्यनुत्पादानिरोधाय धर्मं देशयन्ति। सर्वधर्माणामपि प्रकृत्यनुत्पादानिरोधाय धर्मं देशयन्ति। एवं खलु सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभि- 20 संबुद्धाः सन्तो लोकस्य परिणायका भवन्ति। कथं च सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां W 602 सम्यक्संबोधिमभिसंबुद्धाः सन्तो लोकस्य गतिर्भवन्ति? इह सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तो लोकस्य आकाशगतिकं रूपमिति धर्मं देशयन्ति। एवं वेदना संज्ञा संस्काराः। आकाशगतिकं विज्ञानमिति धर्मं देशयन्ति। एवमेव सुभूते सर्वधर्मा आकाशगतिका अनागतिका अगतिका आकाशसमाः। यथा आकाशमनागतमगतमकृतमविकृत- 25 मनभिसंस्कृतमस्थितमसंस्थितमव्यवस्थितमनुत्पन्नमनिरुद्धम्, एवमेव सुभूते सर्वधर्मा अनागता अगता अकृता अविकृता अनभिसंस्कृता अस्थिता असंस्थिता अव्यवस्थिता अनुत्पन्ना अनिरुद्धा R 298 आकाशकल्पत्वादविकल्पाः। तत्कस्य हेतोः? या सुभूते रूपस्य शून्यता, न सा आगच्छति W 603 वा गच्छति वा। एवं वेदनायाः संज्ञायाः संस्काराणाम्। या सुभूते विज्ञानस्य शून्यता, न सा आगच्छति वा गच्छति वा। एवमेव सुभूते या सर्वधर्माणां शून्यता, न सा आगच्छति 30 वा गच्छति वा। तत्कस्य हेतोः? शून्यतागतिका हि सुभूते सर्वधर्माः। ते तां गतिं न व्यतिवर्तन्ते। आनिमित्तगतिका हि सुभूते सर्वधर्माः। ते तां गतिं न व्यतिवर्तन्ते। अप्रणिहितगतिका हि सुभूते सर्वधर्माः। ते तां गतिं न व्यतिवर्तन्ते। अनभिसंस्कारगतिका हि

सुभूते सर्वधर्माः। ते तां गतिं न व्यतिवर्तन्ते। अनुत्पादगतिका हि सुभूते सर्वधर्माः। ते तां गतिं न व्यतिवर्तन्ते। अजातिगतिका हि सुभूते सर्वधर्माः। ते तां गतिं न व्यतिवर्तन्ते। अभावगतिका हि सुभूते सर्वधर्माः। ते तां गतिं न व्यतिवर्तन्ते। स्वप्नगतिका हि सुभूते सर्वधर्माः। ते तां गतिं न व्यतिवर्तन्ते। आत्मगतिका हि सुभूते सर्वधर्माः। ते तां गतिं न व्यतिवर्तन्ते। अपर्यन्तगतिका हि सुभूते सर्वधर्माः। ते तां गतिं न व्यतिवर्तन्ते। 5 शान्तगतिका हि सुभूते सर्वधर्माः। ते तां गतिं न व्यतिवर्तन्ते। निर्वाणगतिका हि सुभूते सर्वधर्माः। ते तां गतिं न व्यतिवर्तन्ते। अप्रत्युद्धारगतिका हि सुभूते सर्वधर्माः। ते तां गतिं न व्यतिवर्तन्ते। अनागतिका हि सुभूते सर्वधर्माः। ते तां गतिं न व्यति-वर्तन्ते। अगतिका हि सुभूते सर्वधर्माः। ते तां गतिं न व्यतिवर्तन्ते। अचलगतिका हि सुभूते सर्वधर्माः। ते तां गतिं न व्यतिवर्तन्ते। रूपगतिका हि सुभूते सर्वधर्माः। ते तां 10 गतिं न व्यतिवर्तन्ते। एवं वेदना संज्ञा संस्काराः। विज्ञानगतिका हि सुभूते सर्वधर्माः। ते तां गतिं न व्यतिवर्तन्ते। अर्हत्प्रत्येकबुद्धत्वानुत्तरसम्यक्संबोधिगतिका हि सुभूते सर्वधर्माः। ते तां गतिं न व्यतिवर्तन्ते। अतश्च बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधि-मभिसंबुद्धाः सन्त आकाशगतिकाः सर्वधर्मा इति धर्मं देशयन्ति। एवं खलु सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तो लोकस्य गतिर्भवन्ति॥ 15

W 604 R 299 W 605

सुभूतिराह—के भगवन् इमां गम्भीरां प्रज्ञापारमितामाज्ञास्यन्ति? भगवानाह—ये सुभूते चरिताविनो बोधिसत्त्वा महासत्त्वा भविष्यन्ति पौर्वकाणां तथागतानामर्हतां सम्यक्संबुद्धानामन्तिके परिपक्वकुशलमूलाः, ते सुभूते बोधिसत्त्वा वेदितव्याः ये इमां गम्भीरां प्रज्ञापारमितामाज्ञास्यन्ति। सुभूतिराह—किंस्वभावा भगवंस्ते बोधिसत्त्वा महासत्त्वा भविष्यन्ति, ये इमां गम्भीरां प्रज्ञापारमितामाज्ञास्यन्ति? भगवानाह—वैनयिकविविक्तस्वभावास्ते 20 सुभूते बोधिसत्त्वा महासत्त्वा भविष्यन्ति, य इमां गम्भीरां प्रज्ञापारमितामाज्ञास्यन्ति॥

W 606

सुभूतिराह—किं भगवन् एवंगतिका एव ते बोधिसत्त्वा महासत्त्वा भविष्यन्ति? एनामेव गतिमभिसंबुध्य सत्त्वानामेनामेव गतिं देशयिष्यन्ति? एवं ते सत्त्वानां गतिर्भविष्यन्ति? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—एवमेतत्सुभूते, एवमेतत्। एवंगतिका एव ते सुभूते बोधिसत्त्वा महासत्त्वा भविष्यन्ति। एनामेव गतिमभिसंबुध्य सत्त्वानाम् एनामेव गतिं 25 देशयिष्यन्ति। एवं ते सत्त्वानां गतिर्भविष्यन्ति। एवं हि सुभूते बोधिसत्त्वा महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तोऽप्रमेयाणामसंख्येयानां सत्त्वानां गतिर्भविष्यन्ति॥

R 300 W 607

सुभूतिराह—दुष्करकारको भगवन् बोधिसत्त्वो महासत्त्वो येनायं संनाहः संनद्धः—अप्रमेयानसंख्येयान् सत्त्वान् परिनिर्वापयिष्यामीति। एवमुक्ते भगवानायुष्मन्तं सुभूतिमेत-दवोचत्—एवमेतत्सुभूते, एवमेतत्। दुष्करकारकः स सुभूते बोधिसत्त्वो महासत्त्वो येनायं 30 संनाहः संनद्धः—अप्रमेयानसंख्येयान् सत्त्वान् परिनिर्वापयिष्यामीति। स खलु पुनरयं सुभूते

संनाहो बोधिसत्त्वस्य महासत्त्वस्य महासंनाहसंनद्धस्य न रूपसंबद्धो न रूपस्यार्थाय संबद्धः। एवं वेदना संज्ञा संस्काराः। न विज्ञानसंबद्धो न विज्ञानस्यार्थाय संबद्धः। न श्रावकभूमिसंबद्धो न श्रावकभूमेरर्थाय संबद्धः। न प्रत्येकबुद्धभूमिसंबद्धो न प्रत्येक[बुद्ध]भूमेरर्थाय संबद्धः। नापि बुद्धभूमिसंबद्धो नापि बुद्धभूमेरर्थाय संबद्धः। तत्कस्य हेतोः? सर्वधर्मासंनद्धो
5 बतायं सुभूते संनाहो बोधिसत्त्वस्य महासत्त्वस्य महासंनाहसंनद्धस्य॥

W 608 सुभूतिराह—अस्य भगवन् बोधिसत्त्वस्य महासत्त्वस्य एवं महासंनाहसंनद्धस्य एवं गम्भीरारायां प्रज्ञापारमितायां चरतस्त्रीणि स्थानानि न प्रतिकाङ्क्षितव्यानि। कतमानि त्रीणि? यदुत श्रावकभूमिर्वा प्रत्येकबुद्धभूमिर्वा बुद्धभूमिर्वा। एवमुक्ते भगवानायुष्मन्तं
R 301 सुभूतिमेतदवोचत्—कतमं त्वं सुभूते अर्थवशं संपश्यन्नेवं वदसि—अस्य बोधिसत्त्वस्य
10 महासत्त्वस्य एवंमहासंनाहसंनद्धस्य एवं गम्भीरायां प्रज्ञापारमितायां चरतस्त्रीणि स्थानानि न प्रतिकाङ्क्षितव्यानि। कतमानि त्रीणि? यदुत श्रावकभूमिर्वा प्रत्येकबुद्धभूमिर्वा बुद्धभूमिर्वेति? अस्थानं सुभूते ह्येतदनवकाशोऽस्य बोधिसत्त्वस्य महासत्त्वस्य एवंमहासंनाहसंनद्धस्य एवं
W 609 गम्भीरायां प्रज्ञापारमितायां चरतः श्रावकभूमिर्वा प्रत्येकबुद्धभूमिर्वा। अपि तु बुद्धभूमिरेवास्य प्रतिकाङ्क्षितव्या येनायं सर्वसत्त्वानां कृतशः संनाहः संनद्धः॥

15 सुभूतिराह—गम्भीरा भगवन् प्रज्ञापारमिता। सा न केनचिद्भावयितव्या। तां हि न कश्चिद्भावितवान्, नापि कश्चिद्भावयति, नापि कश्चिद्भावयिष्यति, नापि किंचिद्भावयितव्यम्, न कचिद्भावयितव्यम्। तत्कस्य हेतोः? न हि भगवन् प्रज्ञापारमितायां न कश्चिद्धर्मः परिनिष्पन्नः। आकाशभावनैषा भगवन् यदुत प्रज्ञापारमिताभावना। सर्वधर्मभावनैषा भगवन् यदुत प्रज्ञापारमिताभावना। असङ्गभावनैषा भगवन् यदुत प्रज्ञापारमिताभावना।
20 अनन्तभावनैषा भगवन् यदुत प्रज्ञापारमिताभावना। असद्भावनैषा भगवन् यदुत प्रज्ञापारमिताभावना। अपरिग्रहभावनैषा भगवन् यदुत प्रज्ञापारमिताभावना॥

W 610 एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—एवमेतत्सुभूते, एवमेतत्। अतो हि
R 302 सुभूते गम्भीरायाः प्रज्ञापारमिताया विहारेण विहरन् बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीय उपपरीक्षितव्योऽनुत्तरायाः सम्यक्संबोधेः—कच्चित्सुभूते बोधिसत्त्वो महासत्त्वोऽस्यां गम्भीरायां
25 प्रज्ञापारमितायां नाभिनिवेशं करोति। कच्चित्परभणितानि परमन्त्रितानि नाभिनिविशते। कच्चिद्बोधिसत्त्वो महासत्त्वो न परस्य श्रद्धया गच्छति। कच्चित्सुभूते बोधिसत्त्वो महासत्त्वोऽस्यां गम्भीरायां प्रज्ञापारमितायां भाष्यमाणायां नावलीयते न संलीयते न विपृष्ठीभवति नोत्रस्यति न संत्रस्यति न संत्रासमापद्यते, न काङ्क्षति न विचिकित्सति न धन्धायते, अवगाहतेऽधिमुच्यतेऽभिनन्दति प्रज्ञापारमिताया दर्शनं श्रवणं च। वेदितव्यमिदं सुभूते
30 पूर्वान्तेऽप्यनेन प्रज्ञापारमिता परिपृष्टा। तत्कस्य हेतोः? तथा हि सुभूते गम्भीरायां प्रज्ञापारमितायां भाष्यमाणायां नोत्रस्यति न संत्रस्यति न संत्रासमापद्यते॥

सुभूतिराह–यो भगवन् बोधिसत्त्वो महासत्त्वो गम्भीरायां प्रज्ञापारमितायां भाष्यमाणायां[1] नोत्रस्यति न संत्रस्यति न संत्रासमापद्यते, कतमेन भगवन् आकारेण तेन प्रज्ञापारमिता व्यवचारिता भवति? भगवानाह–सर्वज्ञतानिम्नया सुभूते संतत्या तेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमिता व्यवचारिता भवति। सुभूतिराह–कथं भगवन् सर्वज्ञतानिम्ना संततिर्व्यव-चारिता भवति? भगवानाह–आकाशनिम्नया सुभूते संतत्या आकाशप्रवणया आकाश- 5 प्राग्भारया सुभूते संतत्या सर्वज्ञतानिम्ना संततिर्व्यवचारिता भवति। या खलु पुनः सुभूते सर्वज्ञतानिम्नया संतत्या व्यवचारणा, इयं सा सुभूते व्यवचारणा। तत्कस्य हेतोः? अप्रमेया हि सुभूते सर्वज्ञता, अप्रमाणा हि सुभूते सर्वज्ञता। यत्सुभूते अप्रमेयमप्रमाणम्, न तद्रूपं न वेदना न संज्ञा न संस्कारा न विज्ञानं न प्राप्तिर्नाभिसमयो नाधिगमो न मार्गो न मार्गफलं न ज्ञानं न विज्ञानं नोत्पत्तिर्न विनाशो नोत्पादो न व्ययो न निरोधो न 10 भावना न विभावना, नापि केनचित्कृतं नापि कुतश्चिदागतं नापि क्वचिद् गच्छति नापि क्वचिद्देशे नापि क्वचित्प्रदेशे स्थितम्, अपि तु अप्रमेयप्रमाणमित्येवं संख्यां गच्छति। आकाशाप्रमेयतया सर्वज्ञताप्रमेयता। या च अप्रमेयता, न सा शक्या केनचिदभिसंबोद्धुम्। न रूपेण न वेदनया न संज्ञया न संस्कारैर्न विज्ञानेन न दानपारमितया न शीलपारमितया न क्षान्तिपारमितया न वीर्यपारमितया न ध्यानपारमितया न प्रज्ञापारमितया शक्या 15 अभिसंबोद्धम्। तत्कस्य हेतोः? रूपमेव हि सुभूते सर्वज्ञता। एवं वेदनैव संज्ञैव संस्कारा एव। विज्ञानमेव हि सुभूते सर्वज्ञता। दानपारमितैव हि सुभूते सर्वज्ञता। शीलपारमितैव क्षान्तिपारमितैव वीर्यपारमितैव ध्यानपारमितैव प्रज्ञापारमितैव हि सुभूते सर्वज्ञता॥

अथ खलु शक्रो देवानामिन्द्रः सार्धं कामावचरैर्देवपुत्रैर्ब्रह्मापि सहापतिः सार्धं रूपावचरैर्देवपुत्रैर्येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसाभिवन्द्य 20 भगवन्तं त्रिः प्रदक्षिणीकृत्य एकान्ते तस्थौ। एकान्ते स्थितश्च शक्रो देवेन्द्रः कामावचरै-र्देवपुत्रैः सार्धं ब्रह्मापि सहापतिः रूपावचरैर्देवपुत्रैः सार्धं भगवन्तमेतदवोचत्–गम्भीरा भगवन् प्रज्ञापारमिता। दुरवगाहा भगवन् प्रज्ञापारमिता। दुर्दृशा भगवन् प्रज्ञापारमिता। दुरनुबोधा भगवन् प्रज्ञापारमिता। इदमप्यर्थवशं संपश्यतस्तथागतस्यार्हतः सम्यक्संबुद्धस्य अनुत्तरां सम्यक्संबोधिमभिसंबुद्धमात्रस्य बोधिमण्डे निषण्णस्य अल्पोत्सुकतायां चित्तमवनतं 25 न धर्मदेशनायाम्॥

एवमुक्ते भगवान् शक्रं देवानामिन्द्रं कामावचरांश्च देवपुत्रान् ब्रह्माणं च सहापतिं रूपावचरांश्च देवपुत्रानामन्त्रयते स्म–एवमेतद्देवपुत्राः, एवमेतत्। गम्भीरा बतेयं देवपुत्राः प्रज्ञापारमिता। दुरवगाहेयं देवपुत्राः प्रज्ञापारमिता। दुर्दृशेयं देवपुत्राः प्रज्ञापारमिता। दुरनुबोधेयं देवपुत्राः प्रज्ञापारमिता। इदमप्यर्थवशं संपश्यतस्तथागतस्यार्हतः सम्यक्संबुद्धस्य 30

W 611 · R 303 · W 612 · W 613 · W 614 · R 304 · W 615

1 W om. भाष्यमाणायां.

अनुत्तरां सम्यक्संबोधिमभिसंबुद्धमात्रस्य बोधिमण्डे निषण्णस्य अल्पोत्सुकतायां चित्तमवनतं न धर्मदेशनायाम्—गम्भीरो बतायं मया धर्मोऽभिसंबुद्ध इति, यत्र न कश्चिदभिसंबुद्धो न कश्चिदभिसंभोत्स्यते न कश्चिदभिसंबुध्यते। इयं सा धर्मस्य गम्भीरता। आकाशगम्भीरतया गम्भीरोऽयं धर्मः। आत्मगम्भीरतया गम्भीरोऽयं धर्मः। सर्वधर्मानागमनतया गम्भीरोऽयं 5 धर्मः। सर्वधर्मागमनतया गम्भीरोऽयं धर्मो मयाभिसंबुद्ध इति॥

R 305 W 616 एवमुक्ते शक्रो देवानामिन्द्रः कामावचराश्च देवपुत्राः ब्रह्मापि सहापतिः रूपावचराश्च देवपुत्रा भगवन्तमेतदवोचन्—आश्चर्यं भगवन्, अद्भुतं सुगत। सर्वलोकविप्रत्यनीकोऽयं धर्मो देश्यते। अनुग्रहाय च भगवन् धर्माणामयं धर्मो देश्यते। उद्ग्रहे च लोकश्चरतीति॥

10 आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां देवपरिवर्तो नाम पञ्चदशः॥



# १६ तथतापरिवर्तः षोडशः।

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्–सर्वधर्मानुपलम्भो बतायं भगवन् धर्मो देश्यते। नायं भगवन् धर्मः क्वचित्प्रतिहन्यते। अप्रतिहतलक्षणो बतायं भगवन् धर्मः आकाशसमतया सर्वपदानुपलब्धितः। अप्रतिमलक्षणो बतायं भगवन् धर्मोऽद्वितीयत्वात्। अप्रतिलक्षणो बतायं भगवन् धर्मो निष्प्रत्यर्थिकत्वात्। अपदो बतायं भगवन् धर्मोऽनभिनिर्वृत्तत्वात्। अनुत्पादो बतायं भगवन् धर्मः सर्वोपपत्त्यनुपपत्तित्वात्। अपथो बतायं भगवन् धर्मः सर्वपथानुपलब्धित्वात्॥ R 306 W 617 5

अथ खलु शक्रो देवानामिन्द्रो ब्रह्मा सहापतिस्ते च कामावचरा रूपावचराश्च देवपुत्रा भगवन्तमेतदवोचन्–अनुजातो बतायं भगवन् भगवतः श्रावक आर्यसुभूतिः स्थविरः। तत्कस्य हेतोः? तथा हि भगवन् यं यमेव अयमार्यसुभूतिः स्थविरो धर्मं देशयति, तं तमेव धर्मं शून्यतामारभ्य देशयति॥ W 618 10

अथ खल्वायुष्मान् सुभूतिः शक्रं देवानामिन्द्रं ब्रह्माणं च सहापतिं तांश्च कामावचरान् रूपावचरांश्च देवपुत्रानामन्त्रयते स्म–यद्देवपुत्रा एवं वदथ–अनुजातोऽयं सुभूतिः स्थविरस्तथागतस्येति। अजातत्वात्सुभूतिः स्थविरोऽनुजातस्तथागतस्य। अनुजातस्तथतां सुभूतिः स्थविरस्तथागतस्य। यथा तथागततथता अनागता अगता, एवं हि सुभूतितथता अनागता अगता। एवं हि सुभूतिः स्थविरस्तथागततथतामनुजातः। आदित एव सुभूतिः स्थविरस्तथागततथतामनुजातः। तत्कस्य हेतोः? या हि तथागततथता, सा सर्वधर्मतथता। या सर्वधर्मतथता, सा तथागततथता। या च तथागततथता, या च सर्वधर्मतथता, सैव सुभूतेः स्थविरस्य तथता। तां तथतामनुजातः सुभूतिः स्थविरः। अतोऽनुजातस्तथागतस्य।[1] सापि च तथता अतथता। तां तथतामनुजातः। एवं हि सुभूतिः स्थविरस्तथागतमनुजातः। तथागतस्य या सा तथतायाः स्थितिता, तया स्थितितया सुभूतिः स्थविरस्तथागतमनुजातः। यथा तथागततथता अविकारा निर्विकारा, अविकल्पा निर्विकल्पा, एवं हि सुभूतितथता अविकारा निर्विकारा, अविकल्पा निर्विकल्पा। एवं हि सुभूतिः स्थविरस्तया तथतया अविकारो निर्विकारोऽविकल्पो निर्विकल्पस्तथागतस्यानुजातः। यथा च तथागततथता अविकारा निर्विकारा अविकल्पा निर्विकल्पा, न क्वचित्प्रतिहन्यते, एवं सर्वधर्मतथता अविकारा निर्विकारा अविकल्पा निर्विकल्पा, न क्वचित्प्रतिहन्यते। तत्कस्य हेतोः? या च तथागततथता, या च सर्वधर्मतथता, एकैवैषा तथता अद्वयाद्वैधीकारा अद्वयतथता। न क्वचित्तथता, न कुतश्चित्तथता, न कस्यचित्तथता। यतः सा न कस्यचित्तथता, ततः सा तथता अद्वयाद्वैधीकारा अद्वयतथता। एवं हि सुभूतिः स्थविरोऽनुजातस्तथागतस्याकृततथतया। या च अकृततथता, न सा कदाचिन्न तथता। यतश्च R 307 15 W 619 20 W 620 25 W 621 30

[1] Ap अनुजातस्तथागतस्य.

R 308 सा न कदाचिन्न तथता, ततः सा तथता अद्वयाद्वैधीकारा अद्वयतथता। एवं हि सुभूतिः स्थविरोऽनुजातस्तथागतम्। यथा तथागततथता सर्वत्र सर्वधर्मेष्वविकल्पा निर्विकल्पा, एवं सुभूतितथता सर्वत्र सर्वधर्मेष्वविकल्पा निर्विकल्पा। एवमेव च तथागततथतयाभिनिर्मितः सुभूतिश्चेति द्वयमप्यलुप्तमेतदभिन्नं भेदकानुपलब्धितः। एवं हि सुभूतिः स्थविरस्तथागत-
W 622 5 मनुजातः। यथा तथागततथता नान्यत्र सर्वधर्मतथतायाः, एवं हि सुभूतितथता नान्यत्र सर्वधर्मतथतायाः। या नान्यत्र सर्वधर्मतथतायाः, न सा कस्यचिन्न[1] तथता। सैव सा तथता सर्वधर्मतथता। तां तथतां सुभूतिः स्थविरोऽनन्यतथतानुगमेनोपगतः। न चात्र कश्चिन्न क्वचिदनुगतिमुपगतः। एवं हि सुभूतिः स्थविरस्तथागतमनुजातः। यथा तथागततथता नातीता न अनागता न प्रत्युत्पन्ना, एवं सर्वधर्मतथता नातीता नानागता न प्रत्युत्पन्ना।
W 623 10 एवं हि सुभूतिः स्थविरस्तां तथतामनुजातस्तथागतमनुजात इत्युच्यते। तथागततथतयापि ह्यनुगतस्तथतां तथागततथतया अतीततथतामनुगतः। अतीततथतया तथागततथतामनुगतः। तथागततथतया अनागततथतामनुगतः। अनागततथतया तथागततथतामनुगतः। तथागत-तथतया प्रत्युत्पन्नतथतामनुगतः। प्रत्युत्पन्नतथतया तथागततथतामनुगतः। तथागततथतया अतीतानागतप्रत्युत्पन्नतथतामनुगतः। अतीतानागतप्रत्युत्पन्नतथतया तथागततथतामनुगतः।
15 इति हि सुभूतितथता च अतीतानागतप्रत्युत्पन्नतथता च तथागततथता च अद्वयमेतदद्वैधी-कारम्। एवं सर्वधर्मतथता च सुभूतितथता च अद्वयमेतदद्वैधीकारम्। यैव च भगवतो
R 309 बोधिसत्त्वभूतस्य तथता, सैव भगवतोऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य तथता। इयं सा तथता, यया तथतया बोधिसत्त्वो महासत्त्वोऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धः सन् तथागत
W 642 इति नामधेयं लभते। अस्यां खलु पुनस्तथातगतथतायां निर्दिश्यमानायामियं महापृथिवी
20 तस्यां वेलायां षड्विकारमष्टादशमहानिमित्तमकम्पत्, प्राकम्पत्, संप्राकम्पत्, अचलत् प्राचलत् संप्राचलत्, अवेधत् प्रावेधत् संप्रावेधत्, अरणत् प्रारणत् संप्रारणत्, अक्षुभ्यत् प्राक्षुभ्यत् संप्राक्षुभ्यत्, अगर्जत् प्रागर्जत् संप्रागर्जत् तथागतस्यैवानुत्तरां
W 643 सम्यक्संबोधिमभिसंबुध्यमानस्येति। पुनरपरं सुभूतिः स्थविरस्तान् देवपुत्रानामन्त्रयते स्म—एवं हि देवपुत्राः सुभूतिः स्थविरस्तथागतमनुजातः॥

25 पुनरपरं सुभूतिः स्थविरो न रूपमनुजातो न वेदनां न संज्ञां न संस्कारान् न विज्ञानमनुजातो न स्रोतआपत्तिफलमनुजातो न सकृदागामिफलं न अनागामिफलं न अर्हत्त्वफलमनुजातो न प्रत्येकबुद्धत्वमनुजातो न बुद्धत्वमनुजातः। तत्कस्य हेतोः? तथा हि ते धर्मा न संविद्यन्ते नोपलभ्यन्ते यैरनुजायेत, ये चानुजायेरन्। एवं हि सुभूतिः स्थविरस्तथागतमनुजातः॥

30 अथ खल्वायुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्—गम्भीरचर्येयं भगवन् यदुत तथता। एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्—एवमेतच्छारिपुत्र, एवमेतत्।

---

[1] R क्वचित् for कस्यचित्.

गम्भीरचर्येयं शारिपुत्र यदुत तथता। अस्मिन् खलु पुनस्तथतानिर्देशे निर्दिश्यमाने त्रयाणां भिक्षुशतानामनुपादायास्रवेभ्यश्चित्तानि विमुक्तानि, पञ्चानां च भिक्षुणीशतानां विरजो विगतमलं धर्मेषु धर्मचक्षुर्विशुद्धम्, पञ्चभिश्च देवपुत्रसहस्रैः पूर्वपरिकर्मकृतैरनुत्पत्तिकेषु धर्मेषु क्षान्तिः प्रतिलब्धा, षष्टेश्च बोधिसत्त्वानामनुपादायास्रवेभ्यश्चित्तानि विमुक्तानि॥ R 310 W 644

अथ खल्वायुष्मान् शारिपुत्रस्तेषां बोधिसत्त्वानामनुपादायास्रवेभ्यश्चित्तानि विमुक्तानि 5 विदित्वा भगवन्तमेतदवोचत्—को भगवन् हेतुः कः प्रत्ययो यदेतेषां बोधिसत्त्वानामनुपादायास्रवेभ्यश्चित्तानि विमुक्तानि? भगवानाह—एतैः शारिपुत्र बोधिसत्त्वैः पञ्चबुद्धशतानि पर्युपासितानि, सर्वत्र च दानं दत्तं शीलं रक्षितं क्षान्त्या संपादितं वीर्यमारब्धं ध्यानान्युत्पादितानि। ते खलु पुनरिमे प्रज्ञापारमितया अपरिगृहीता उपायकौशल्येन च विरहिता अभूवन्। किंचापि शारिपुत्र एतेषां बोधिसत्त्वानामस्ति मार्गः शून्यता वा आनिमित्तचर्या 10 वा अप्रणिहितमनसिकारता वा, अथ च पुनरेतैरुपायकौशल्यविकलत्वाद्भूतकोटिः साक्षात्कृता, श्रावकभूमौ निर्जाताः, न बुद्धभूमौ। तद्यथापि नाम शारिपुत्र पक्षिणः शकुनेर्योजनशतिको वा द्वियोजनशतिको वा त्रियोजनशतिको वा चतुर्योजनशतिको वा पञ्चयोजनशतिको वा आत्मभावो भवेत्। स त्रायस्त्रिंशेषु देवेषु वर्तमानो जम्बूद्वीपमागन्तव्यं मन्येत। स खलु पुनः शारिपुत्र पक्षी शकुनिरजातपक्षो वा भवेत्, शीर्णपक्षो वा भवेत्, 15 छिन्नपक्षो वा भवेत्। स त्रायस्त्रिंशतो देवनिकायादात्मानमुत्सृजेत्—इह[1] जम्बूद्वीपे प्रतिष्ठास्यामीति मन्येत। अथ तस्य पक्षिणः शकुनेस्ततः पततः आकाशे अन्तरीक्षे स्थितस्य अन्तरा चित्तस्यैवं भवेत्—अहो बताहं पुनरेव त्रायस्त्रिंशेषु देवेषु प्रतिष्ठेयमिति। तत्किं मन्यसे शारिपुत्र अपि नु स पक्षी शकुनिः प्रतिबलः पुनरेव त्रायस्त्रिंशेषु देवेषु प्रतिष्ठातुम्? आयुष्मान् शारिपुत्र आह—नो हीदं भगवन्। भगवानाह—सचेत्पुनरेवं चिन्तयेत्—अहो 20 बताहमक्षतोऽनुपहतो जम्बूद्वीपे प्रतिष्ठेयमिति। तत्किं मन्यसे शारिपुत्र अपि नु स पक्षी शकुनिरक्षतोऽनुपहतो जम्बूद्वीपे प्रतिष्ठेत्? शारिपुत्र आह—नो हीदं भगवन्। क्षतश्च स भगवन् उपहतश्च भवेज्जम्बूद्वीपे च पतितः सन् मरणं वा निगच्छेत् मरणमात्रकं वा दुःखम्। तत्कस्य हेतोः? एवं ह्येतद्भगवन् भवति—यदस्य महांश्चात्मभावो भवति, पक्षौ चास्य न भवतः, उच्चाच्च प्रपतति॥ 25 R 311 W 645 W 646

एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्—एवमेतच्छारिपुत्र, एवमेतत्। किंचापि शारिपुत्र बोधिसत्त्वो महासत्त्वोऽनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पाद्य गङ्गानदीवालुकोपमान् कल्पांस्तिष्ठन् दानं दद्यात्, शीलं रक्षेत्, क्षान्त्या संपादयेत्, वीर्यमारभेत, ध्यानानि समापद्येत, महच्चास्य प्रस्थानं भवेत्, महांश्चास्य चित्तोत्पादो भवेदनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम्। सचेदयं प्रज्ञापारमितया अपरिगृहीत उपायकौशल्येन च 30 विरहितो भवेत्, एवं श्रावकभूमिं वा प्रत्येकबुद्धभूमिं वा पतति॥

1 W उत्सृज्येह for उत्सृजेत्–इह.

R 312 W 647 पुनरपरं शारिपुत्र बोधिसत्त्वो महासत्त्वोऽतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां तच्छीलं तं समाधिं तां प्रज्ञां तां विमुक्तिं तद्विमुक्तिज्ञानदर्शनं समन्वाहरति, आधारयति निमित्तयोगेन, न स तथागतानामर्हतां सम्यक्संबुद्धानां शीलं न जानाति न पश्यति। न समाधिं न प्रज्ञां न विमुक्तिं न विमुक्तिज्ञानदर्शनं तथागतानामर्हतां सम्यक्संबुद्धानां 5 जानाति, न पश्यति। सोऽजानन्नपश्यन् शून्यतायाः शब्दं शृणोति। स तं शब्दं निमित्ती-करोति। तं शब्दं निमित्तीकृत्य अनुत्तरायां सम्यक्संबोधौ परिणामयितुमिच्छति। ततो वेदितव्यमेतत्—स्थास्यत्ययं श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वेति। तत्कस्य हेतोः? एवं ह्येतच्छारिपुत्र भवति—यत्प्रज्ञापारमितया अपरिगृहीतः उपायकौशल्येन च विरहितो भवति॥

W 648 शारिपुत्र आह—यथाहं भगवन् भगवतो भाषितस्यार्थमाजानामि—यो बोधिसत्त्वः 10 प्रज्ञापारमितया अपरिगृहीतः उपायकौशल्येन च विरहितः, किंचापि स बहुनापि पुण्य-संभारेण युक्तः कल्याणमित्रविरहितश्च भवति, संशयस्तस्यानुत्तरां सम्यक्संबोधिं प्राप्तुम्। तस्मात्तर्हि भगवन् बोधिसत्त्वेन महासत्त्वेन अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन प्रज्ञापार-W 649 मिता भावयितव्या, उपायकुशलेन च भवितव्यम्। एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतद-वोचत्—एवमेतच्छारिपुत्र, एवमेतत्। यः शारिपुत्र बोधिसत्त्वः प्रज्ञापारमितया अपरिगृहीतः, R 313 15 उपायकौशल्येन च विरहितः, किंचापि स बहुना पुण्यसंभारेण युक्तः कल्याणमित्रविरहितश्च भवति, संशयस्तस्यानुत्तरां सम्यक्संबोधिं प्राप्तुम्। तस्मात्तर्हि शारिपुत्र बोधिसत्त्वेन महासत्त्वेन अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन प्रज्ञापारमिता भावयितव्या, उपायकुशलेन च भवितव्यम्॥

अथ खलु शक्रो देवानामिन्द्रः सार्धं कामावचरैर्देवपुत्रैः, ब्रह्मापि सहापतिः रूपावचरै-20 र्देवपुत्रैः सार्धं भगवन्तमेतदवोचत्—गम्भीरा भगवन् प्रज्ञापारमिता, दुरभिसंभवा भगवन् अनुत्तरा सम्यक्संबोधिः। परमदुरभिसंभवा भगवन् अनुत्तरा सम्यक्संबोधिरभिसंबोद्धुम्। अथ खलु भगवांस्तान् शक्रदेवेन्द्रप्रमुखान् कामावचरान् देवपुत्रान् सहापतिमहाब्रह्मप्रमुखान् रूपावचरांश्च देवपुत्रानामन्त्रयते स्म—एवमेतद्देवपुत्राः, एवमेतत्। गम्भीरेयं देवपुत्राः प्रज्ञापारमिता। दुरभिसंभवा अनुत्तरा सम्यक्संबोधिः। परमदुरभिसंभवा अनुत्तरा सम्यक्सं-25 बोधिरभिसंबोद्धुं दुष्प्रज्ञैर्हीनवीर्यैर्हीनाधिमुक्तिकैरनुपायकुशलैः पापमित्रसंसेविभिः॥

W 650 अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—यद्भगवानेवमाह—दुरभिसंभवा अनुत्तरा सम्यक्संबोधिः। परमदुरभिसंभवा अनुत्तरा सम्यक्संबोधिरभिसंबोद्धुमिति, कथं भगवन् दुरभिसंभवा अनुत्तरा सम्यक्संबोधिः? परमदुरभिसंभवा अनुत्तरा सम्यक्संबोधिरभिसंबोद्धुम्, यत्र न कश्चिदभिसंबुध्यते? तत्कस्य हेतोः? शून्यत्वाद्भगवन् सर्वधर्माणाम्। न स 30 कश्चिद्धर्मः संविद्यते यो धर्मः शक्योऽभिसंबोद्धुम्। तथा हि भगवन् सर्वधर्माः शून्याः। यस्यापि भगवन् धर्मस्य प्रहाणाय धर्मो देश्यते, सोऽपि धर्मो न संविद्यते। एवं यश्चाभि-R 314 W 395 संबुध्येत अनुत्तरां सम्यक्संबोधिम्, यच्चाभिसंबोद्धव्यम्, यश्च जानीयात्, यच्च ज्ञातव्यम्,

सर्व एते धर्माः शून्याः। अनेनापि भगवन् पर्यायेण ममैवं भवति—स्वभिसंभवा अनुत्तरा सम्यक्संबोधिरभिसंबोद्धुं न दुरभिसंभवेति। एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—असंभवत्वात्सुभूते दुरभिसंभवा अनुत्तरा सम्यक्संबोधिः। असद्भूतत्वात्सुभूते दुरभिसंभवा अनुत्तरा सम्यक्संबोधिः। अविकल्पत्वात्सुभूते दुरभिसंभवा अनुत्तरा सम्यक्संबोधिः। अविठपित्वात्सुभूते दुरभिसंभवा अनुत्तरा सम्यक्संबोधिः। परमदुरभिसंभवा अनुत्तरा 5 सम्यक्संबोधिरभिसंबोद्धुम्॥

अथ खल्वायुष्मान् शारिपुत्र आयुष्मन्तं सुभूतिमेतदवोचत्—शून्यमित्यनेनाप्यायुष्मन् सुभूते पर्यायेण दुरभिसंभवा अनुत्तरा सम्यक्संबोधिः। परमदुरभिसंभवा अनुत्तरा W 652 सम्यक्संबोधिरभिसंबोद्धुम्। तत्कस्य हेतोः? न ह्यायुष्मन् सुभूते आकाशस्यैवं भवति—अहमनुत्तरां सम्यक्संबोधिमभिसंभोत्स्ये इति। एवं च आयुष्मन् सुभूते इमे धर्मा अभिसंबो- 10 द्धव्याः। तत्कस्य हेतोः? आकाशसमा ह्यायुष्मन् सुभूते सर्वधर्माः। यदि चायुष्मन् सुभूते स्वभिसंभवा भवेदनुत्तरा सम्यक्संबोधिः, न त्वेवं गङ्गानदीवालुकोपमा बोधिसत्त्वा विवर्तेरन्ननुत्तरायाः सम्यक्संबोधेः। यस्मात्तर्ह्यायुष्मन् सुभूते गङ्गानदीवालुकोपमा बोधिसत्त्वा विवर्तन्तेऽनुत्तरायाः सम्यक्संबोधेः, तस्मादायुष्मन् सुभूते एवं विज्ञायते—दुरभिसंभवा R 315 अनुत्तरा सम्यक्संबोधिः। परमदुभिसंभवा अनुत्तरा सम्यक्संबोधिरभिसंबोद्धुमिति॥ 15

एवमुक्ते आयुष्मन् सुभूतिरायुष्मन्तं शारिपुत्रमेतदवोचत्—किं पुनरायुष्मन् शारिपुत्र रूपं विवर्तते अनुत्तरायाः सम्यक्संबोधेः? शारिपुत्र आह—नो हीदमायुष्मन् सुभूते। W 653 सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र अन्यत्र रूपात्स धर्मः, यो विवर्ततेऽनुत्तरायाः सम्यक्संबोधेः? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र वेदना संज्ञा संस्कारा विज्ञानं विवर्ततेऽनुत्तरायाः सम्यक्संबोधेः? आह—नो हीदमायुष्मन् 20 सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र अन्यत्र वेदनायाः संज्ञायाः संस्कारेभ्योऽन्यत्र विज्ञानात् स धर्मः, यो विवर्ततेऽनुत्तरायाः सम्यक्संबोधेः? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र या रूपतथता, सा विवर्ततेऽनुत्तरायाः सम्यक्संबोधेः? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र या वेदनातथता संज्ञातथता संस्कारतथता, या विज्ञानतथता, सा विवर्ततेऽनुत्तरायाः सम्यक्संबोधेः? आह—नो 25 हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र अन्यत्र रूपतथतायाः स धर्मः, यो R 316 विवर्ततेऽनुत्तरायाः सम्यक्संबोधेः? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र अन्यत्र वेदनातथतायाः संज्ञातथतायाः संस्कारतथतायाः, अन्यत्र विज्ञानतथतायाः स धर्मः, यो विवर्ततेऽनुत्तरायाः सम्यक्संबोधेः? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र रूपमभिसंबुध्यते अनुत्तरां सम्यक्संबोधिम्? आह—नो हीदमायुष्मन् 30 W 654 सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र वेदना संज्ञा संस्कारा विज्ञानमभिसंबुध्यते अनुत्तरां सम्यक्संबोधिम्? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन्

शारिपुत्र अन्यत्र रूपात्स धर्मः, योऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यते? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र अन्यत्र वेदनायाः संज्ञायाः संस्कारेभ्यः, अन्यत्र विज्ञानात्स धर्मः, योऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यते? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र रूपतथता अनुत्तरां संबोधिमभिसंबुध्यते?

R 317 5 आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र वेदनातथता संज्ञातथता संस्कारतथता विज्ञानतथता अनुत्तरां सम्यक्संबोधिमभिसंबुध्यते? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र अन्यत्र रूपतथतायाः

W 655 स धर्मः, योऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यते? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र अन्यत्र वेदनातथतायाः संज्ञातथतायाः संस्कारतथतायाः, अन्यत्र

10 विज्ञानतथतायाः स धर्मः, योऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यते? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र रूपं बोद्धव्यमनुत्तरायां सम्यक्संबोधौ? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र वेदना संज्ञा संस्कारा विज्ञानं बोद्धव्यमनुत्तरायां सम्यक्संबोधौ? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र अन्यत्र रूपात्स धर्मः, यो बोद्धव्योऽनुत्तरायां

15 सम्यक्संबोधौ? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र

R 318 अन्यत्र वेदनायाः संज्ञायाः संस्कारेभ्यः, अन्यत्र विज्ञानात्स धर्मः यो बोद्धव्योऽनुत्तरायां सम्यक्संबोधौ? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र रूपतथता बोद्धव्या अनुत्तरायां सम्यक्संबोधौ? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र वेदनातथता संज्ञातथता संस्कारतथता विज्ञानतथता

20 बोद्धव्या अनुत्तरायां सम्यक्संबोधौ? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र अन्यत्र रूपतथतायाः स धर्मः, यो बोद्धव्योऽनुत्तरायां सम्यक्संबोधौ?

W 656 आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र अन्यत्र वेदनातथतायाः संज्ञातथतायाः संस्कारतथतायाः, अन्यत्र विज्ञानतथतायाः स धर्मः, यो बोद्धव्योऽनुत्तरायां सम्यक्संबोधौ? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—तत्किं मन्यसे

25 आयुष्मन् शारिपुत्र तथता विवर्तते अनुत्तरायाः सम्यक्संबोधेः? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—तत्किं मन्यसे आयुष्मन् शारिपुत्र तथतायां स धर्मः, यो विवर्तते

R 319 अनुत्तरायाः सम्यक्संबोधेः? आह—नो हीदमायुष्मन् सुभूते। सुभूतिराह—तत्कतमः पुनरायुष्मन् शारिपुत्र स धर्मो यो विवर्तते अनुत्तरायाः सम्यक्संबोधेः? यस्तस्यामेव धर्मतायां स्थितः सर्वधर्मास्थानयोगेन? कतमो वा पुनः स शारिपुत्र धर्मो या तथता?

30 कच्चिद्वा पुनरायुष्मन् शारिपुत्र तथता विवर्तिष्यते? आह—नो हीदमायुष्मन् सुभूते।

W 657 सुभूतिराह—एवमायुष्मन् शारिपुत्र सत्यतः स्थितितोऽनुपलभ्यमानानां सर्वधर्माणां कतमः स धर्मः, यो विवर्तिष्यते अनुत्तरायाः सम्यक्संबोधेः? एवमुक्ते आयुष्मान् शारिपुत्र आयुष्मन्तं

सुभूतिमेतदवोचत्—यया धर्मनयजाल्या आयुष्मान् सुभूतिः स्थविरो निर्दिशति, तया न स कश्चिद्धर्मो यो विवर्ततेऽनुत्तरायाः सम्यक्संबोधेः। ये च खलु पुनरिमे आयुष्मन् सुभूते त्रयो बोधिसत्त्वयानिकाः पुद्गलास्तथागतेनाख्याताः, एषां त्रयाणां व्यवस्थानं न भवति। एकमेव हि यानं भवति यदुत बुद्धयानं बोधिसत्त्वयानं यथा आयुष्मतः सुभूतेर्निर्देशः॥

अथ खल्वायुष्मान् पूर्णो मैत्रायणीपुत्र आयुष्मन्तं शारिपुत्रमेतदवोचत्—किं पुनरायुष्मन् शारिपुत्र आयुष्मान् सुभूतिः स्थविरः एकमपि बोधिसत्त्वं नाभ्युपगच्छति श्रावकयानिकं वा प्रत्येकबुद्धयानिकं वा महायानिकं वा। प्रष्टव्यस्तावदयमायुष्मान् सुभूतिः स्थविरः। अथ खल्वायुष्मान् शारिपुत्र आयुष्मन्तं सुभूतिमेतदवोचत्—किं पुनस्त्वमायुष्मन् सुभूते एकमपि बोधिसत्त्वं नाभ्युपगच्छसि श्रावकयानिकं वा प्रत्येकबुद्धयानिकं वा महायानिकं वा? सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र या तथतायास्तथता, तत्र तथतायामेकमपि बोधिसत्त्वं समनुपश्यसि श्रावकयानिकं वा प्रत्येकबुद्धयानिकं वा महायानिकं वा? शारिपुत्र आह—न ह्येतदायुष्मन् सुभूते। तथतापि तावत् त्रिभिराकारैर्नोपलभ्यते, प्रागेव बोधिसत्त्वः। सुभूतिराह—किं पुनरायुष्मन् शारिपुत्र तथता एकेनाप्याकारेणोपलभ्यते? आह—न ह्येतदायुष्मन् सुभूते। सुभूतिराह—कच्चित्पुनस्त्वमायुष्मन् शारिपुत्र तथतायामेकमपि बोधिसत्त्वधर्मं समनुपश्यसि? आह—न ह्येतदायुष्मन् सुभूते। सुभूतिराह—एवमायुष्मन् शारिपुत्र सत्यतः स्थितितस्तस्य बोधिसत्त्वधर्मस्यानुपलभ्यमानस्य कुतस्तवैवं भवति—अयं श्रावकयानिकः, अयं प्रत्येकबुद्धयानिकः, अयं महायानिक इति? एवमेतेषामायुष्मन् शारिपुत्र बोधिसत्त्वानां तथतायां प्रविभाव्यमानानामविशेषतां निर्विशेषतां निर्नानाकरणतां श्रुत्वा यस्य बोधिसत्त्वस्य महासत्त्वस्य चित्तं नावलीयते न संलीयते न पृष्ठीभवति, वेदितव्यमेतत्—निर्यास्यत्ययं बोधिसत्त्वो महासत्त्वो बोध्या इति॥

अथ खलु भगवानायुष्मन्तं सुभूतिमेतदवोचत्—साधु साधु सुभूते। एवमेतत्सुभूते, एवमेतत्। प्रतिभाति ते सुभूते यथापि नाम तथागतानुभावेन बुद्धाधिष्ठानेनेदं वदसि। एवमेतेषां बोधिसत्त्वानां तथतायां प्रविभाव्यमानानामविशेषतां निर्विशेषतां निर्नानाकरणतां श्रुत्वा यस्य बोधिसत्त्वस्य महासत्त्वस्य चित्तं नावलीयते न संलीयते न पृष्ठीभवति, वेदितव्यमेतत्—निर्यास्यत्ययं बोधिसत्त्वो महासत्त्वो बोध्या इति। अथ खल्वायुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्—कतमया भगवन् बोध्या निर्यास्यत्ययं बोधिसत्त्वो महासत्त्वः? भगवानाह—अनुत्तरया शारिपुत्र सम्यक्संबोध्या निर्यास्यत्ययं बोधिसत्त्वो महासत्त्वः॥

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—अनुत्तरायां भगवन् सम्यक्संबोधौ निर्यातुकामेन बोधिसत्त्वेन महासत्त्वेन कथं स्थातव्यं कथं शिक्षितव्यम्? भगवानाह—अनुत्तरायां सुभूते सम्यक्संबोधौ निर्यातुकामेन बोधिसत्त्वेन महासत्त्वेन सर्वसत्त्वेषु समं स्थातव्यम्। सर्वसत्त्वेषु समं चित्तमुत्पादयितव्यम्। न विषमचित्तेन परे आलम्बितव्याः। मैत्रचित्तेन परे आलम्बि-

तव्याः। हितचित्तेन परे आलम्बितव्याः। कल्याणचित्तेन परे आलम्बितव्याः। निहतमानचित्तेन परे आलम्बितव्याः। अप्रतिहतचित्तेन परे आलम्बितव्याः। अविहिंसाचित्तेन परे आलम्बितव्याः। अविहेठनाचित्तेन परे आलम्बितव्याः। सर्वसत्त्वेषु मातृसंज्ञामुपस्थाय पितृसंज्ञां पुत्रसंज्ञां दुहितृसंज्ञां चोपस्थाप्य परे आलम्बितव्याः। एवं हि सुभूते 5 बोधिसत्त्वेन महासत्त्वेन अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन सर्वसत्त्वानामन्तिके स्थातव्यम्, एवं शिक्षितव्यम्–सर्वसत्त्वानामहं नाथ इति। स्वयं च सर्वपापनिवृत्तौ स्थातव्यम्। दानं दातव्यं शीलं रक्षितव्यं क्षान्त्या संपादयितव्यं वीर्यमारब्धव्यं ध्यानं समापत्तव्यं प्रज्ञायां परिजयः कर्तव्यः, अनुलोमप्रतिलोमप्रतीत्यसमुत्पादो व्यवलोकयितव्यः, अन्येषामपि तत्र समादापकेन तद्वर्णवादिना तत्समनुज्ञेन च भवितव्यम्। एवं सत्येषु यावद्बोधिसत्त्व-10 न्यामावक्रान्तौ सत्त्वपरिपाचने च स्थित्वा अन्येषामपि तत्र समादापकेन तद्वर्णवादिना तत्समनुज्ञेन च भवितव्यम्। तस्यैवं स्पृहयत एवं शिक्षमाणस्य अनावरणं रूपं यावद्धर्मस्थितिरनावरणा भविष्यतीति॥

R 322 W 662

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां तथतापरिवर्तो नाम षोडशः॥ W 663



## १७ अविनिवर्तनीयाकारलिङ्गनिमित्तपरिवर्तः सप्तदशः।

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—अविनिवर्तनीयस्य भगवन् बोधिसत्त्वस्य महासत्त्वस्य के आकाराः, कानि लिङ्गानि, कानि निमित्तानि? कथं वा भगवन् वयं जानीयाम अयमविनिवर्तनीयो बोधिसत्त्वो महासत्त्व इति? भगवानाह—या च सुभूते पृथग्जनभूमिः, या च श्रावकभूमिः, या च प्रत्येकबुद्धभूमिः, या च बुद्धभूमिः, इयं 5 तथताभूमिरित्युच्यते। सर्वाश्चैतास्तथताया अद्वया अद्वैधीकारा अविकल्पा निर्विकल्पा इति तां तथतां तां धर्मतामवतरन्ति। तथतायां स्थितस्तथतां न कल्पयति न विकल्पयति, एवमवतरति। एवमवतीर्णो यथातथतां श्रुत्वापि ततोऽपि चापक्रम्य न काङ्क्षति न विमतिं करोति, न विचिकित्सति, नैवमिति न धन्धायति, अपि तु एवमेतत्तथतैवेत्यधिमुच्यत्यवगाहते, न च यत्किंचनप्रलापी भवति, अर्थसंहितामेव वाचं भाषते नानर्थसंहिताम्, न च परेषां 10 कृताकृतानि व्यवलोकयति। एभिः सुभूते आकारैरेभिर्लिङ्गैरेभिर्निमित्तैः समन्वागतो बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयोऽनुत्तरायाः सम्यक्संबोधेर्धारयितव्यः॥

R 323 W 665 W 666

पुनरपरं सुभूते अविनिवर्तनीयो बोधिसत्त्वो महासत्त्वो नान्येषां श्रमणानां ब्राह्मणानां वा मुखमुल्लोकयति—इमे भगवन्तः[1] श्रमणा ब्राह्मणा वा ज्ञेयं जानन्ति, दृश्यं पश्यन्तीति। न चान्यान् देवान्नमस्करोति, न चान्येभ्यो देवेभ्यः पुष्पं वा धूपं वा गन्धं वा माल्यं वा विलेपनं 15 वा चूर्णं वा वस्त्रं वा छत्रं वा ध्वजं वा घण्टां वा पताकां वा दीपं वा दातव्यं मन्यते, न चान्यं देवं व्यपाश्रयते। एभिरपि सुभूते आकारैरेभिर्लिङ्गैरेभिर्निमित्तैः समन्वागतो बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयोऽनुत्तरायाः सम्यक्संबोधेर्धारयितव्यः। स खलु पुनः सुभूते अविनिवर्तनीयो बोधिसत्त्वो महासत्त्वो नापायेषूपपद्यते, न च स्त्रीभावं परिगृह्णाति॥

W 667 R 324

पुनरपरं सुभूते अविनिवर्तनीयो बोधिसत्त्वो महासत्त्वो दशकुशलान् कर्मपथान् 20 समादाय वर्तते। स आत्मना च प्राणातिपातात्प्रतिविरतो भवति, परानपि च प्राणातिपातविरमणाय समादापयति। आत्मना च अदत्तादानात्प्रतिविरतो भवति, परानपि च अदत्तादानविरमणाय समादापयति। आत्मना च काममिथ्याचारात्प्रतिविरतो भवति, परानपि च काममिथ्याचारविरमणाय समादापयति। आत्मना च सुरामैरेयमद्यप्रमादस्थानात्प्रतिविरतो भवति, परानपि सुरामैरेयमद्यप्रमादस्थानविरमणाय समादापयति। आत्मना च अनृतवचना- 25 त्प्रतिविरतो भवति, परानपि च अनृतवचनविरमणाय समादापयति। आत्मना च पिशुनवचनात्प्रतिविरतो भवति, परानपि च पिशुनवचनविरमणाय समादापयति। आत्मना च परुषवचनात्प्रतिविरतो भवति, परानपि च परुषवचनविरमणाय समादापयति। आत्मना च संभिन्नप्रलापात्प्रतिविरतो भवति, परानपि च संभिन्नप्रलापविरमणाय समादापयति। आत्मना च अभिध्यातः प्रतिविरतो भवति, परानपि च अभिध्यानविरमणाय समादापयति। 30

W 668 R 325

[1] W भदन्तः.

आत्मना च व्यापादात्प्रतिविरतो भवति, परानपि च व्यापादविरमणाय समादापयति। आत्मना च मिथ्यादर्शनात्प्रतिविरतो भवति, परानपि च मिथ्यादर्शनविरमणाय समादापयति। एवं खलु सुभूते अविनिवर्तनीयो बोधिसत्त्वो महासत्त्वः स्वयं च दशकुशलान् कर्मपथान् समादाय वर्तते, परानपि च दशकुशलेषु कर्मपथेषु संदर्शयति समादापयति 5 समुत्तेजयति संप्रहर्षयति प्रतिष्ठापयति दृढीकरोति। स स्वप्नान्तरगतोऽपि दशकुशलान् कर्मपथानेकैकतो वा बाहुल्यतो वा सर्वेण सर्वं सर्वथा सर्वं नाध्यापद्यते, चित्तेनापि न समुदाचरति। तस्य खलु पुनः सुभूते अविनिवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्य स्वप्नान्तरगतस्यापि दशकुशलाः कर्मपथा आमुखीभवन्ति। एभिरपि सुभूते आकारैरेभिर्लिङ्गैरेभिर्निमित्तैः समन्वागतो बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयोऽनुत्तरायाः सम्यक्संबोधे-10 र्धारयितव्यः॥

W 669 पुनरपरं सुभूते अविनिवर्तनीयो बोधिसत्त्वो महासत्त्वो यं यं धर्मं पर्यवाप्नोति, ददाति च, तं तं एवंचित्तः पर्यवाप्नोति, ददाति च—इममहं धर्मं सर्वसत्त्वानामर्थाय पर्यवाप्नोमि ददामि च, हिताय सुखाय च। इति चैष भवतु, अनया धर्मदेशनया धार्मिका अभिप्रायाः सर्वसत्त्वानां परिपूर्यन्तामिति। तच्च धर्मदानं सर्वसत्त्वसाधारणं करोति। एभिरपि सुभूते 15 आकारैरेभिर्लिङ्गैरेभिर्निमित्तैः समन्वागतो बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयोऽनुत्तरायाः सम्यक्संबोधेर्धारयितव्यः॥

R 326 W 670 पुनरपरं सुभूते अविनिवर्तनीयो बोधिसत्त्वो महासत्त्वो गम्भीरेषु धर्मेषु भाष्यमाणेषु न काङ्क्षति, न विमतिं करोति, न विचिकित्सति न धन्धायति, हितवचनश्च भवति, मितवचनश्च भवति, स्निग्धवचनश्च भवति, अल्पस्त्यानमिद्धश्च भवति, निरनुशयश्च भवति। 20 सोऽभिक्रामन् वा प्रतिक्रामन् वा न भ्रान्तचित्तोऽभिक्रामति वा, प्रतिक्रामति वा। उपस्थितस्मृतिरभिक्रामति, उपस्थितस्मृतिः प्रतिक्रामति। न विलम्बितं पादं भूमेरुत्क्षिपति, न विलम्बितं पादं भूमौ निक्षिपति। सुखमेवोत्क्षिपति, सुखं निक्षिपति। न च सहसा पादं भूमेरुत्क्षिपति, न च सहसा पादं भूमौ निक्षिपति, पश्यन्नेव भूमिप्रदेशमाक्रामति। तस्य W 671 खलु पुनः सुभूते अविनिवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्य शरीरे चीवरपरिभोगो न 25 यूकिलो भवति। स चौक्षसमुदाचारश्च भवति। अल्पाबाधश्च भवति। अल्पादीनवश्च भवति। यानि खलु पुनरन्येषां सत्त्वानामशीतिः कृमिकुलसहस्राणि काये संभवन्ति, तानि तस्य काये सर्वेण सर्वं सर्वथा सर्वं न संभवन्ति। तत्कस्य हेतोः? तथा हि तस्य तानि कुशलमूलानि सर्वलोकाभ्युद्गतानि भवन्ति॥

यथा यथा च तस्य तानि कुशलमूलानि विवर्धन्ते, तथा तथा स बोधिसत्त्वो W 672 R 327 30 महासत्त्वः कायपरिशुद्धिं च परिगृह्णीते, वाक्परिशुद्धिं च परिगृह्णीते, चित्तपरिशुद्धिं च परिगृह्णीते। सुभूतिराह—का पुनर्भगवंस्तस्य बोधिसत्त्वस्य महासत्त्वस्य चित्तपरिशुद्धिर्वेदि-

तव्या? भगवानाह—यथा यथा सुभूते तस्य बोधिसत्त्वस्य महासत्त्वस्य तानि कुशलमूलानि विवर्धन्ते, तथा तथा स बोधिसत्त्वो महासत्त्वश्चित्तालपकृत्यतां च परिगृह्णीते, चित्ताशाठ्यतां च चित्तामायावितां च चित्ताकुटिलतां चित्तावङ्कतां च परिगृह्णीते, यया च सुभूते चित्तपरिशुद्ध्या श्रावकप्रत्येकबुद्धभूमिमतिक्रान्तो भवति। इयं सुभूते तस्य बोधिसत्त्वस्य महासत्त्वस्य चित्तपरिशुद्धिर्वेदितव्या। एभिरपि सुभूते आकारैरेभिर्लिङ्गैरेभिर्निमित्तैः समन्वा- 5 गतो बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयोऽनुत्तरायाः सम्यक्संबोधेर्धारयितव्यः॥

पुनरपरं सुभूते अविनिवर्तनीयो बोधिसत्त्वो महासत्त्वो न लाभसत्कारश्लोकगुरुको भवति, न चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारगुरुको भवति, नेर्ष्यामात्सर्य- W 673 बहुलो भवति। न च गम्भीरेषु धर्मेषु भाष्यमाणेषु संसीदति। स्थिरबुद्धिश्च भवति, गम्भीर- बुद्धिश्च भवति, सत्कृत्य च परतो धर्मं शृणोति। यं च सत्कृत्य परतो धर्मं शृणोति, तं 10 सर्वं प्रज्ञापारमितायां संस्यन्दयति। यानि च लौकिकानि शिल्पस्थानकर्मस्थानानि, तानि सर्वाणि प्रज्ञापारमितामागम्य धर्मतया संस्यन्दयति। न च कंचिद्धर्मं समनुपश्यति, यं न धर्मधातुना योजयति। सर्वमेव च तं प्रयुज्यमानं समनुपश्यति। एभिरपि सुभूते आकारै- रेभिर्लिङ्गैरेभिर्निमित्तैः समन्वागतो बोधिसत्त्वो महासत्त्वः अविनिवर्तनीयोऽनुत्तरायाः सम्य- क्संबोधेर्धारयितव्यः॥ 15

पुनरपरं सुभूते मारः पापीयानष्टौ महानिरयानभिनिर्माय तत्र एकैकस्मिन् महानिरये R 328 W 674 बहूनि बोधिसत्त्वशतानि बहूनि बोधिसत्त्वसहस्राणि बहूनि बोधिसत्त्वशतसहस्राण्यभिनिर्माय अविनिवर्तनीयं बोधिसत्त्वं महासत्त्वमेवं वदेत्—ये तथागतेन अविनिवर्तनीया बोधिसत्त्वा महासत्त्वा व्याकृताः, ते एतेषु महानिरयेषूपपन्नाः। त्वमप्येवं महानिरयेषु प्रपत्स्यसे, यतस्त्वम- विनिवर्तनीयो व्याकृतः। पुनरेव त्वमेतद्बोधिचित्तं प्रतिदेशय, प्रतिनिःसृज। किं ते बुद्धत्वेन? 20 एवं त्वं न निरयेषूपपत्स्यसे। एवं त्वं कुर्वन् स्वर्गोपगो भविष्यसीति। सचेदेवमपि बोधिसत्त्वस्य महासत्त्वस्य चित्तं न क्षुभ्यति, न चलति, एवं जानाति—अस्थानमेतदनवकाशः, यदविनिवर्तनीयो बोधिसत्त्वो महासत्त्वोऽपायेषूपपद्यते इति। एभिरपि सुभूते आकारै- रेभिर्लिङ्गैरेभिर्निमित्तैः समन्वागतो बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयोऽनुत्तरायाः सम्यक्सं- बोधेर्धारयितव्यः॥ 25

पुनरपरं सुभूते मारः पापीयान् श्रमणवेषेण अविनिवर्तनीयं बोधिसत्त्वं महासत्त्व- मुपसंक्रम्यैवं वक्ष्यति—यदेतत्त्वया पूर्वं श्रुतं तत्प्रतिदेशय, यत्त्वया पूर्वं परिगृहीतं तत्प्रतिनिः- सृज। सचेत्त्वमेवं प्रतिदेशयिष्यसि, सचेत्त्वमेवं प्रतिनिःस्रक्ष्यसि, एवं वयं त्वां पुनः पुनरुपसंक्रमिष्यामः। यदेतत्त्वयेदानीं श्रुतम्, नैतद्बुद्धवचनम्। कविकृतं काव्यमेतत्। यत्पुनरिदमहं भाषे, एतद्बुद्धभाषितम्, एतद्बुद्धवचनमिति। एतच्छ्रुत्वा सचेद्बोधिसत्त्वः 30 क्षुभ्यति चलति, वेदितव्यमेतत्सुभूते—नायं व्याकृतो बोधिसत्त्वस्तथागतैः। अनियतोऽयं W 675

बोधिसत्त्वोऽनुत्तरायां सम्यक्संबोधौ । नायमविनिवर्तनीयधातौ स्थित इति। सचेत्पुनः सुभूते बोधिसत्त्वो महासत्त्वो न क्षुभ्यति न[1] चलति, श्रुत्वापि चेमां वाचं मारस्य पापीयसः धर्मतामेव प्रतिसरति, अनुत्पादमेवानिरोधमेवानभिसंस्कारमेव प्रतिसरति, न परस्य श्रद्धया गच्छति। तद्यथापि नाम सुभूते अर्हन् भिक्षुः क्षीणास्रवो न परस्य श्रद्धया गच्छति धर्मतायां 5 प्रत्यक्षकारी। असंहार्यो भवति मारेण पापीयसा। एवमेव सुभूते अविनिवर्तनीयो बोधिसत्त्वो महासत्त्वोऽनवमर्दनीयः श्रावकयानिकैः पुद्गलैः प्रत्येकबुद्धयानिकैश्च । अप्रत्युदावर्तनीयधर्मा भवति, श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा नियतो भवति सर्वज्ञतायां सम्यक्संबोधिपरायणः। स खलु पुनः सुभूते बोधिसत्त्वो महासत्त्वो यदा अविनिवर्तनीयधातौ स्थितो भवति, तदा अपरप्रणेयो भवति । एभिरपि सुभूते आकारैरेभिर्लिङ्गैरेभिर्निमित्तैः समन्वागतो बोधिसत्त्वो 10 महासत्त्वोऽविनिवर्तनीयोऽनुत्तरायाः सम्यक्संबोधेर्धारयितव्यः ॥

W 676 पुनरपरं सुभूते अविनिवर्तनीयं बोधिसत्त्वं महासत्त्वमुपसंक्रम्य कश्चिदेवं वक्ष्यति—संसारचारिकैषा, नैषा बोधिसत्त्वचारिका। इहैव त्वं दुःखस्यान्तं कुरु । न भूयस्तानि संसारावचराणि दुःखदौर्मनस्यानि प्रत्यनुभविष्यसीति। अहो बत तवायमिहैव तावदात्मभावोऽनभिनिर्वृत्तो भविष्यति, कुतः पुनस्त्वमन्यमात्मभावं परिग्रहीतव्यं मन्यसे इति वा। 15 सचेदेवमपि न क्षुभ्यति न चलति, तमेनं मारः पापीयान् स्वयमेवं वक्ष्यति—इच्छसि त्वं द्रष्टुं तान् बोधिसत्त्वान् महासत्त्वान् यैर्गङ्गानदीवालुकोपमान् कल्पान् बुद्धा भगवन्तः R 330 प्रत्युपस्थिताश्चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः, गङ्गानदीवालुकोपमानां बुद्धानां भगवतामन्तिकेषु ब्रह्मचर्यं चरितम्, गङ्गानदीवालुकोपमा एव बुद्धा भगवन्तः पर्युपासिताः परिपृष्टाः परिप्रश्नीकृताश्च अस्यैव बोधिसत्त्वयानस्यार्थाय कथं बोधिसत्त्वै-20 र्महासत्त्वैः स्थातव्यमिति? यथा च बोधिसत्त्वैर्महासत्त्वैः स्थातव्यम्, तथा च तैस्तथागतैरेवाख्यातम्। तथापि स्थित्वा तथा चरित्वा तथैव योगमापद्य अद्यापि तैरेव तावन्न अनुत्तरा सम्यक्संबोधिरभिसंबुद्धा। तथा अववादानुशासन्यां स्थितैस्तथा शिक्षमाणैः सर्वज्ञता नानुप्राप्ता। कुतः पुनस्त्वमनुत्तरां सम्यक्संबोधिमनुप्राप्स्यसीति? सचेदेवमपि न क्षुभ्यति न चलति, तं मारः पापीयांस्तस्मिन्नेव पृथिवीप्रदेशे भिक्षूनभिनिर्मायैवं वक्ष्यति—एते भिक्षवोऽर्हन्तः क्षीणा-25 स्रवाः संवृत्ताः, ये बोधये संप्रस्थिता अभूवन्, तत्र तर्हि अर्हत्त्वमनुप्राप्ता अर्हत्त्वे स्थिताः। कुतः पुनस्त्वमनुत्तरां सम्यक्संबोधिमनुप्राप्स्यतीति? सचेत्खलु पुनरेवमपि भाष्यमाणे एवं निर्दि-W 677 श्यमाने बोधिसत्त्वस्य महासत्त्वस्य चित्तं न क्षुभ्यति न चलति, अयं बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयोऽनुत्तरायाः सम्यक्संबोधेर्धारयितव्यः । सचेद्बोधिसत्त्वस्य महासत्त्वस्य चित्तं परतः श्रुत्वैवं विवेकपदानि धर्मताया न परिहीयते, न प्रत्युदावर्ततेऽस्य मानसम्, न 30 चान्यथाभावश्चित्तस्य भवति, तानि च सर्वाणि मारकर्माणि तथा संजानाति—अस्थानं सुभूते अनवकाशः, यत्स बोधिसत्त्वो महासत्त्वस्तथा चरन् पारमितासु न सर्वज्ञतामनुप्राप्नु-

१ W om. न चलति.

यात्—अस्थानमेतदनवकाशो यत्तथा चरतस्तथा शिक्षमाणस्य बोधिसत्त्वस्य महासत्त्वस्य यथा तथागतैराख्यातं तया चर्यया अविरहितस्य एभिः पारमिताप्रतिसंयुक्तैर्मनसिकारैर्विहरतो मारः पापीयान्नावतारं लप्स्यते। सचेद्बोधिसत्त्वो महासत्त्वो मारकर्माणि बुध्यते, परतश्च श्रुत्वा विवेकपदानि न परिहीयते, न प्रत्युदावर्ततेऽस्य मानसम्, न चास्य चित्तमन्यथा भवति, तानि च मारकर्माणि तथा संजानाति। एभिरपि सुभूते आकारैरेभिर्लिङ्गैरेभिर्निमित्तैः 5 समन्वागतो बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयोऽनुत्तरायाः सम्यक्संबोधेर्धारयितव्यः॥ R 331 W 678

पुनरपरं सुभूते अविनिवर्तनीयो बोधिसत्त्वो महासत्त्वो न रूपसंज्ञामभिसंस्करोति, न रूपसंज्ञामुत्पादयति। एवं न वेदनासंज्ञां न संज्ञासंज्ञां न संस्कारसंज्ञाम्। न विज्ञानसंज्ञामभिसंस्करोति, न विज्ञानसंज्ञामुत्पादयति। तत्कस्य हेतोः? तथा हि अविनिवर्तनीयो बोधिसत्त्वो महासत्त्वः स्वलक्षणशून्यैर्धर्मैर्बोधिसत्त्वन्यामावक्रान्तः[1]। तमपि धर्मं नोपलभते 10 नाभिसंस्करोति नोत्पादयति। तत उच्यते अनुत्पादज्ञानक्षान्तिको बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीय इति। एभिरपि सुभूते आकारैरेभिर्लिङ्गैरेभिर्निमित्तैः समन्वागतो बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयोऽनुत्तरायाः सम्यक्संबोधेर्धारयितव्यः॥ W 679

पुनरपरं सुभूते मारः पापीयान् भिक्षुवेषेणोपसंक्रम्य बोधिसत्त्वं महासत्त्वमेवं विच्छन्दयिष्यति—आकाशसमैषा यदुत सर्वज्ञता। असन्नेष धर्मो यदुत सर्वज्ञता। असंविद्यमान 15 एष धर्मो यदुत सर्वज्ञता। कोऽत्राज्ञास्यति, कोऽत्राभिसंभोत्स्यते? नैतेन कश्चिन्निर्यास्यति—यश्चाभिसंबुध्येत, यच्चाभिसंबोद्धव्यम्, यश्च आजानीयात्, यच्च आज्ञातव्यम्। सर्वत्र ते धर्मा आकाशसमाः। निरर्थकं त्वं विहन्यसे। मारकर्मैवैतत्परिदीपितं यदुत अनुत्तरा सम्यक्संबोधिरभिसंबोद्धव्येति, नैतद्बुद्धभाषितमिति। तेन कुलपुत्रेण वा कुलदुहित्रा वा एवं ज्ञातव्यमेवं समन्वाहर्तव्यमेवं वेदितव्यम्—मारकर्मैवैतत्, येयं विवेचनता। एवं चिन्तयित्वा तत्र 20 दृढचित्तेन भवितव्यम्, अप्रकम्प्यचित्तेनासंहार्यचित्तेन भवितव्यम्। एभिरपि सुभूते आकारैरेभिर्लिङ्गैरेभिर्निमित्तैः समन्वागतो बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयोऽनुत्तरायाः सम्यक्संबोधेर्धारयितव्यः॥ W 680 R 332

पुनरपरं सुभूते अविनिवर्तनीयो बोधिसत्त्वो महासत्त्वः श्रावकप्रत्येकबुद्धभूमिनिर्वृत्तः सर्वज्ञतायां प्रवृत्तो भवति। स आकाङ्क्षन् प्रथमं ध्यानं समापद्यते। तथा द्वितीयं तथा 25 तृतीयं तथा चतुर्थं ध्यानं समापद्यते। स एभिश्चतुर्भिर्ध्यानैर्विहरति, ध्यानपरिजयं च करोति, ध्यानानि च समापद्यते, न च ध्यानवशेनोपपद्यते। स पुनरेव कामावचरान् धर्मानध्यालम्बते। इदमपि सुभूते अविनिवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्य अविनिवर्तनीयलक्षणं वेदितव्यम्॥ W 681

पुनरपरं सुभूते अविनिवर्तनीयो बोधिसत्त्वो महासत्त्वो न नामगुरुको भवति, न 30 कीर्तिशब्दश्लोकगुरुको भवति, न नाम्नि सज्जते। सोऽसंक्षुभितचित्तो भवति, सर्वसत्त्वेषु

---

1 R बोधिसत्त्वन्यामवक्रान्तः.

हितचित्तश्च भवति। सोऽभिक्रामन् वा प्रतिक्रामन् वा अभ्रान्तचित्तोऽभिक्रामति, अभ्रान्तचित्तः प्रतिक्रामति। स्मृतिमानेवाभिक्रामति, स्मृतिमानेव प्रतिक्रामति। सचेत्सोऽगारमध्यावसति, नास्य भवत्यधिमात्रः कामेषु कामाभिष्वङ्गो वा अभिप्रायो वा। स निर्वित्संज्ञ्येव कामान् परिभुङ्क्ते। स उत्रस्तसंज्ञ्येव कामान् परिभुङ्क्ते। तद्यथापि सुभूते चौरकान्तारमध्यगतः

V 682
R 333

5 पुरुषः आहारकृत्यं कुर्वन्नुत्रस्तसंज्ञ्येवाहारं कुर्यात्, गमनसंज्ञ्येवाहारं कुर्यात्, कदा नु खलु नाम अहमितश्चौरकान्तारादतिक्रान्तो भविष्यामीत्येवंसंज्ञी अविश्रब्धमाहारमाहरति। एवमेव सुभूते अविनिवर्तनीया बोधिसत्त्वा महासत्त्वा अगारमध्यावसन्तो यान् यानेव कामान् परिभुञ्जते, तांस्ताननर्थिका एव अगृद्धा एव असक्ता एव कामान् परिभुञ्जते। अनर्थिका एव च ते भवन्ति प्रियरूपसातरूपैः पञ्चभिः कामगुणैः। तेऽगारमध्यावसन्तो न समविषमेण

10 जीविकां कल्पयन्ति। धर्मेणैव जीविकां कल्पयन्ति नाधर्मेणापि। मरणमुपगच्छन्ति न त्वेव परेषामपमर्दनं कुर्वन्ति। तत्कस्य हेतोः? तथा हि तैः सत्पुरुषैर्महापुरुषैरतिपुरुषैः पुरुषप्रवरैः पुरुषशोभनैः पुरुषर्षभैः पुरुषोदारैः पुरुषशौटीरैः पुरुषपुंगवैः पुरुषधुर्यैः पुरुषपद्मैः पुरुषपुण्डरीकैः पुरुषाजानेयैः पुरुषनागैः पुरुषसिंहैः पुरुषदम्यसारथिभिः सर्वसत्त्वाः परमसुखे नियोजयितव्याः। एवं हि सुभूते अगारमध्यावसन्ति बोधिसत्त्वा महासत्त्वा

V 683

15 यथापि नाम प्रज्ञापारमिताबलाधानप्राप्तत्वात्। एभिरपि सुभूते आकारैरेभिर्लिङ्गैरेभिर्निमित्तैः समन्वागता बोधिसत्त्वा महासत्त्वा अविनिवर्तनीया अनुत्तरायाः सम्यक्संबोधेर्धारयितव्याः॥

पुनरपरं सुभूते अविनिवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्य वज्रपाणिर्महायक्षो नित्यानुबद्धो भवति। स दुर्धर्षो भवति, अनतिक्रमणीयश्च भवति मनुष्यैर्वा अमनुष्यैर्वा, दुरासदः सर्वसत्त्वानाम्। स न विक्षिप्तचित्तो भवति, न विकलेन्द्रियो भवति, परिपूर्णे-

R 334

20 न्द्रियश्च भवति नापरिपूर्णेन्द्रियः। पुरुषवृषभेन्द्रियसमन्वागतश्च भवति नासत्पुरुषः। स यानीमानि स्त्रीणां वशीकरणानि मन्त्रजाप्यौषधिविद्याभैषज्यादीनि, तानि सर्वाणि सर्वेण सर्वं न प्रयोजयति। शुद्धाजीवश्च भवति न मिथ्याजीवः। न विग्रहविवादशीलः। ऋजुदृष्टिकश्च भवति। नात्मोत्कर्षी न परपंसकः। स एभिश्चान्यैश्च गुणैः समन्वागतो भवति। स न स्त्रियं न च पुरुषं व्याकरोति—पुत्रो वा ते भविष्यति, दुहिता वा ते भविष्यतीति।

V 684

25 तस्यैवमादिका एवंरूपा आदेयतादोषा न भवन्ति। एभिरपि सुभूते आकारैरेभिर्लिङ्गैरेभिर्निमित्तैः समन्वागतो बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयोऽनुत्तरायाः सम्यक्संबोधेर्धारयितव्यः॥

पुनरपरं सुभूते अविनिवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्य ये आकारा यानि लिङ्गानि यानि निमित्तानि यैराकारैर्यैर्लिङ्गैर्यैर्निमित्तैः समन्वागतो बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयो वेदितव्योऽनुत्तरायाः सम्यक्संबोधेः, तानाकारांस्तानि लिङ्गानि तानि निमित्तानि

30 देशयिष्यामि। ते पुनः कतमे? तद्यथा—न ते स्कन्धायतनधातुप्रतीत्यसमुत्पादयोगानुयोगमनुयुक्ता विहरन्ति, न संगणिकारामकथायोगानुयोगमनुयुक्ता विहरन्ति, न राजकथायोगानुयोगमनुयुक्ता विहरन्ति, न चौरकथायोगानुयोगमनुयुक्ता विहरन्ति, न सेनाकथायोगानु-

V 685

योगमनुयुक्ता विहरन्ति, न युद्धकथायोगानुयोगमनुयुक्ता विहरन्ति, न ग्रामनगरनिगमजनपदराष्ट्रराजधानीकथायोगानुयोगमनुयुक्ता विहरन्ति, नात्मकथायोगानुयोगमनुयुक्ता विहरन्ति, नामात्यमहामात्रकथायोगानुयोगमनुयुक्ता विहरन्ति, न स्त्रीपुरुषनपुंसककथायोगानुयोगमनुयुक्ता विहरन्ति, न यानोद्यानविहारप्रासादह्रदसरस्तडागपुष्करिणीवनारामशैलकथायोगानुयोगमनुयुक्ता विहरन्ति, न यक्षराक्षसप्रेतपिशाचकटपूतनकुम्भाण्डकथायोगानुयोगमनुयुक्ता विहरन्ति, 5 नान्नपानवस्त्राभरणगन्धमाल्यविलेपनकथायोगानुयोगमनुयुक्ता विहरन्ति, न वीथीचत्वरशृङ्गाटकविशिखापणशिबिकाकुटुम्बकथायोगानुयोगमनुयुक्ता विहरन्ति, न गीतनृत्याख्यायिकानटनर्तकचारणकथायोगानुयोगमनुयुक्ता विहरन्ति, न सागरनदीद्वीपकथायोगानुयोगमनुयुक्ता विहरन्ति, न धर्मविरुद्धकथायोगानुयोगमनुयुक्ता विहरन्ति, न पृथग्जनरतिकथायोगानुयोगमनुयुक्ता विहरन्ति, अपि तु प्रज्ञापारमिताकथायोगानुयोगमनुयुक्ता विहरन्ति। अविरहिताश्च 10 भवन्ति सर्वज्ञताप्रतिसंयुक्तैर्मनसिकारैः। न च ते कलहभण्डनविग्रहविवादकथायोगानुयोगमनुयुक्ता विहरन्ति। धर्मकामा एव च ते भवन्ति, नाधर्मकामाः। अभेदवर्णवादिनश्च ते भवन्ति, न भेदवर्णवादिनः। मित्रकामाश्च ते भवन्ति, नामित्रकामाः। धर्मवादिनश्च ते भवन्ति, नाधर्मवादिनः। ते तथागतदर्शनमेवाकाङ्क्षन्त आकाङ्क्षन्ति अन्येषु लोकधातुषु ये तथागता अर्हन्तः सम्यक्संबुद्धास्तिष्ठन्ति ध्रियन्ते यापयन्ति, तेषामन्तिके उपपत्तये चित्त- 15 मुत्पादयन्ति। ते आकाङ्क्षन्तस्तत्रोपपद्यन्ते। एवं ते अविरहिता भवन्ति तथागतदर्शनेन तथागतपर्युपासनेन तथागतपर्युपस्थानेन च॥

R 335 W 686 W 687

पुनरपरं सुभूते अविनिवर्तनीया बोधिसत्त्वा महासत्त्वाः कामावचरेभ्यो देवेभ्यश्च्युता रूपावचरेभ्य आरूप्यावचरेभ्यो वा देवेभ्यश्च्युताः सन्तः इहैव मध्यदेशे जम्बूद्वीपे प्रत्याजायन्ते। यत्र सत्त्वाः कलासु कोविदाः, काव्येषु कोविदाः, मन्त्रेषु कोविदाः, विद्यासु कोविदाः, 20 शास्त्रेषु कोविदाः, निमित्तेषु कोविदाः, धर्मार्थकोविदाः। अल्पकाः प्रत्यन्तजनपदेषु प्रत्याजायन्ते, यद्भूयस्त्वेन मध्यदेशे प्रत्याजायन्ते। येऽपि प्रत्यन्तेषु जनपदेषु प्रत्याजायन्ते, तेऽपि महानगरेषु प्रत्याजायन्ते। एतेऽपि तेषां गुणाः संविद्यन्ते। एभिरपि सुभूते आकारैरेभिर्लिङ्गैरेभिर्निमित्तैः समन्वागतो बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयोऽनुत्तरायाः सम्यक्संबोधेर्धारयितव्यः॥ 25

R 336

पुनरपरं सुभूते अविनिवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्य नैवं भवति—अविनिवर्तनीयो वाहम्, न वाहमविनिवर्तनीय इति। नास्यैवं विचिकित्सोत्पद्यते, न चास्य संशयो भवति, स्वस्यां भूमौ नाप्यस्य संसीदना भवति। तद्यथापि नाम सुभूते स्रोतआपन्नः स्रोतआपत्तिफले स्वकायां भूमौ न काङ्क्षति न विचिकित्सति। न चास्य संशयो भवति। स्वस्यां भूमौ नाप्यस्य संसीदना भवति। उत्पन्नोत्पन्नानि च मारकर्माणि क्षिप्रमेवाबुध्यते। 30 न चोत्पन्नोत्पन्नानां मारकर्मणां वशेन गच्छति। तद्यथापि नाम सुभूते पुरुष आनन्तर्यकारी आनन्तर्यचित्तेन अविरहितो भवति, यावन्मरणावस्थायाम्, न तच्चित्तं शक्नोति प्रतिविनोद-

W 688 R 337

यितुं वा विष्कम्भयितुं वा। अनुवर्तत एवास्य तच्चित्तं यावन्मरणकालसमयेऽपि। एवमेव सुभूते अविनिवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्य अविनिवर्तनीयचित्तं स्थितं भवति, W 689 स्वकायामविनिवर्तनीयायां भूमावविकम्प्यं भवति। सदेवमानुषासुरेणापि लोकेन न शक्यं चालयितुं वा कम्पयितुं वा। उत्पन्नोत्पन्नानि च मारकर्माण्येव बुध्यते। न चोत्पन्नोत्पन्नानां 5 मारकर्मणां वशेन गच्छति। तस्य स्वस्यां भूमौ निष्काङ्क्षस्य निर्विचिकित्सस्य जातिव्यतिवृत्तस्यापि न श्रावकचित्तं न प्रत्येकबुद्धचित्तं वोत्पद्यते। जातिव्यतिवृत्तस्याप्येवं भवति—नाहं नाभिसंभोत्स्ये। अभिसंभोत्स्ये एवाहमनुत्तरां सम्यक्संबोधिं स्वस्यां भूमौ स्थितः। अपरप्रणेयो भवति, अनवमर्दनीयश्च भवति स्वस्यां भूमौ। तत्कस्य हेतोः? तथा हि स स्थितोऽसंहार्येण चित्तेन असंहार्येण ज्ञानेन समन्वागतो भवति। सचेत्खलु पुनर्मारः पापीयान् 10 बुद्धवेषेणोपसंक्रामेत्, तमुपसंक्रम्यैवं वदेत्—इहैव त्वमर्हत्त्वं साक्षात्कुरु। न त्वं व्याकृतोऽनुत्तरायां सम्यक्संबोधौ। न तव ते आकारास्तानि लिङ्गानि तानि निमित्तानि वा संविद्यन्ते, यैराकारैर्यैर्लिङ्गैर्यैर्निमित्तैः समन्वागतो बोधिसत्त्वो महासत्त्वोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यते। किं वात्र त्वं चरसीति? सचेत्पुनर्बोधिसत्त्वस्य महासत्त्वस्य अन्यथा चित्तं भवति, वेदितव्यमेतत्सुभूते नायं बोधिसत्त्वो व्याकृतः पौर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैरनुत्तरायां सम्यक्सं- W 690 15 बोधाविति। सचेत्पुनरेवं समन्वाहरति—मारो बतायं पापीयान् बुद्धवेषमभिनिर्मायोपसंक्रान्तः, R 338 माराधिष्ठितो वा मारनिर्मितो वेति, नायं तथागतः। यथोक्तं तथागतेनार्हता सम्यक्संबुद्धेन तथा तन्नान्यथा। सचेदेवं प्रत्यवेक्षते, एवं समन्वाहरति—मारो बतायं पापीयान् बुद्धाधिष्ठानं कृत्वा मां विवेचयितुकामोऽनुत्तरायाः सम्यक्संबोधित इति। सचेन्मारः प्रत्युदावर्तते, वेदितव्यमेतत्सुभूते व्याकृतोऽयं बोधिसत्त्वो महासत्त्वोऽनुत्तरायां सम्यक्संबोधौ पौर्वकैस्तथा- 20 गतैरर्हद्भिः सम्यक्संबुद्धैः। स्थितोऽयं बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयायां बोधिसत्त्वभूमौ। सचेत्सुभूते बोधिसत्त्वस्य महासत्त्वस्य इमे आकारा इमानि लिङ्गानि इमानि निमित्तानि संविद्यन्ते, वेदितव्यमेतत्सुभूते यथा अस्येमे गुणाः। अद्धा[1] बतायं बोधिसत्त्वो महासत्त्वो व्याकृतः पौर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैः। स्थितोऽयं बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयायां बोधिसत्त्वभूमौ। तत्कस्य हेतोः? तथा ह्यस्य ते आकारास्तानि लिङ्गानि तानि 25 निमित्तानि संविद्यन्ते, यानि अविनिवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्य। एभिरपि सुभूते आकारैरेभिर्लिङ्गैरेभिर्निमित्तैः समन्वागतो बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयोऽनुत्तरायाः सम्यक्संबोधेर्धारयितव्यः॥

W 691 पुनरपरं सुभूते अविनिवर्तनीयो बोधिसत्त्वो महासत्त्वः सद्धर्मपरिग्रहस्य कृतशः आत्मपरित्यागमपि करोति, जीवितपरित्यागमपि करोति। तस्माद्बोधिसत्त्वो महासत्त्वोऽविनि- 30 वर्तनीयः सद्धर्मपरिग्रहाय परमुद्योगमापद्यते अतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां R 339 प्रेम्णा च गौरवेण च। धर्मकाया बुद्धा भगवन्त इति धर्मे प्रेम च गौरवं चोपादाय

---

1 R अबद्धो.

सद्धर्मपरिग्रहं करोति । नायं केवलमतीतानामेव बुद्धानां भगवतां सद्धर्मपरिग्रहः, प्रत्युत्पन्नानामपि बुद्धानां भगवतामेष एव सद्धर्मपरिग्रहः, अनागतानामपि बुद्धानां भगवतामेष एव सद्धर्मपरिग्रहः–अहमपि तत्र तेषामनागतानां बुद्धानां भगवतां संख्यां गणनां प्रविष्ट इति, अहमपि तत्र व्याकृतोऽनुत्तरायां सम्यक्संबोधौ, ममाप्येष एव सद्धर्मपरिग्रह इति । स इममप्यर्थवशं संपश्यन् सद्धर्मपरिग्रहस्य कृतश आत्मपरित्यागमपि करोति, जीवितपरि- 5 त्यागमपि करोति । न च तत्र संसीदति, न च कौसीद्यमापद्यते । एभिरपि सुभूते आकारैरेभिर्लिङ्गैरेभिर्निमित्तैः समन्वागतो बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयोऽनुत्तरायाः सम्यक्संबोधेर्धारयितव्यः ॥

W 692 पुनरपरं सुभूते अविनिवर्तनीयो बोधिसत्त्वो महासत्त्वस्तथागतस्यार्हतः सम्यक्संबुद्धस्य धर्मं देशयतो न काङ्क्षति, न विचिकित्सति । सुभूतिराह–किं तथागतस्यैव भगवन् 10 धर्मं देशयतो न काङ्क्षति न विचिकित्सति, न श्रावकस्य? भगवानाह–श्रावकस्यापि सुभूते धर्मं देशयतो न काङ्क्षति न विचिकित्सति । तत्कस्य हेतोः? तथा हि तेन बोधिसत्त्वेन महासत्त्वेन अनुत्पत्तिकेषु धर्मेषु क्षान्तिः प्रतिलब्धा । तेन सर्वधर्माणां धर्मतामविरुद्धां शृणोति । शृण्वंश्च न काङ्क्षति, न विचिकित्सति । एभिः सुभूते गुणैः समन्वागतो बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयो भवति । इमान्यपि सुभूते अविनिवर्तनीयस्य 15 R 340 बोधिसत्त्वस्य महासत्त्वस्य आकारलिङ्गनिमित्तानि वेदितव्यान्यनुत्तरायाः सम्यक्संबोधेरिति ॥

W 693

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायामविनिवर्तनीयाकारलिङ्गनिमित्तपरिवर्तो नाम सप्तदशः ॥

# १८ शून्यतापरिवर्तोऽष्टादशः ।

R 341
W 695

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—आश्चर्यं भगवन् महागुणसमन्वागतो बोधिसत्त्वो महासत्त्वः। अप्रमाणगुणसमन्वागतो भगवन् बोधिसत्त्वो महासत्त्वः। अपरिमित-गुणसमन्वागतो भगवन् बोधिसत्त्वो महासत्त्वः। एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्— 5 एवमेतत्सुभूते, एवमेतत्। तत्कस्य हेतोः? अविनिवर्तनीयेन हि सुभूते बोधिसत्त्वेन महासत्त्वेन अनन्तमपर्यन्तं ज्ञानं प्रतिलब्धमसंहार्यं सर्वश्रावकप्रत्येकबुद्धैः ॥

W 696

सुभूतिराह—प्रतिबलो भगवन् अविनिवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्य गङ्गानदी-वालुकोपमान् कल्पानाकारान् लिङ्गानि निमित्तानि निर्देष्टुम्। अत एव भगवन् बोधिसत्त्वस्य महासत्त्वस्य गम्भीराणि गम्भीराणि स्थानानि प्रज्ञापारमिताप्रतिसंयुक्तानि सूचयितव्यानि। 10 एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—साधु साधु सुभूते यस्त्वं गम्भीराणि गम्भीराणि स्थानान्यारभ्य निगमयितुकामः। गम्भीरमिति सुभूते शून्यताया एतदधिवचनम्। आनिमित्तस्य अप्रणिहितस्य अनभिसंस्कारस्य अनुत्पादस्य अजातेरभावस्य विरागस्य निरोधस्य निर्वाणस्य विगमस्यैतत्सुभूते अधिवचनं यदुत गम्भीरमिति ॥

R 342
W 697

सुभूतिराह—एतेषामेव भगवन् केवलमेतद्धर्माणामधिवचनं न पुनः सर्वधर्माणाम्? 15 भगवानाह—सर्वधर्माणामप्येतत्सुभूते अधिवचनं यदुत गम्भीरमिति। तत्कस्य हेतोः? रूपं हि सुभूते गम्भीरम्। एवं वेदना संज्ञा संस्काराः। विज्ञानं हि सुभूते गम्भीरम्। कथं च सुभूते रूपं गम्भीरम्? कथं वेदना संज्ञा संस्काराः? कथं च सुभूते विज्ञानं गम्भीरम्? यथा सुभूते तथता, तथा गम्भीरं रूपम्। एवं वेदना संज्ञा संस्काराः। यथा सुभूते तथता, तथा गम्भीरं विज्ञानम्। तत्र सुभूते यथा रूपतथता, तथा गम्भीरं रूपम्। यथा वेदना-

W 698

20 तथता संज्ञातथता संस्कारतथता। तत्र सुभूते यथा विज्ञानतथता, तथा गम्भीरं विज्ञानम्। यत्र सुभूते न रूपम्, इयं रूपस्य गम्भीरता। यत्र सुभूते न वेदना न संज्ञा न संस्कारा न विज्ञानम्, इयं वेदनासंज्ञासंस्काराणाम्, इयं विज्ञानस्य गम्भीरता ॥

सुभूतिराह—आश्चर्यं भगवन् यावत्सूक्ष्मेणोपायेन रूपतश्च निवारितो निर्वाणं च सूचितम्। एवं वेदना संज्ञा संस्काराः। यावत्सूक्ष्मेणोपायेन विज्ञानतश्च निवारितो निर्वाणं

W 699

25 च सूचितम्। भगवानाह—इमानि सुभूते गम्भीराणि गम्भीराणि स्थानानि प्रज्ञापारमिता-प्रतिसंयुक्तानि यश्चिन्तयिष्यति तुलयिष्यति उपनिध्यास्यति-एवं मया स्थातव्यं यथा प्रज्ञा-पारमितायामाज्ञप्तम्। एवं मया शिक्षितव्यं यथा प्रज्ञापारमितायामाख्यातम्। एवं मया

R 343

प्रतिपत्तव्यं यथा प्रज्ञापारमितायामुपदिष्टम्। तथा संपादयमानस्तथोपनिध्यायंस्तथोपपरीक्ष-माणस्तथा प्रयुज्यमानस्तथा घटमानस्तथा व्यायच्छमान एकदिवसमप्यत्र योगमापद्यते। अयं 30 बोधिसत्त्वो महासत्त्वस्तेनैकदिवसेन कियत्कर्म करोति? तद्यथापि नाम सुभूते कश्चिदेव

W 700

पुरुषो रागचरितो वितर्कचरितः। तस्य पुरुषस्य रागचरितस्य वितर्कचरितस्य स्त्रिया अभिरूपया प्रासादिकया दर्शनीयया सह संकेतः कृतो भवेत्। सा खलु पुनः स्त्री

परपरिगृहीता भवेत् । न वशयेदात्मानमगारान्निष्क्रमितुम् । तत्किं मन्यसे सुभूते किंप्रतिसंयुक्तास्तस्य पुरुषस्य वितर्काः प्रवर्तेरन् ? सुभूतिराह—स्त्रीप्रतिसंयुक्ता एव भगवंस्तस्य पुरुषस्य वितर्काः प्रवर्तेरन्—इयमागच्छति, इयमागता । तया सार्धमेवं करिष्यामि, एवं रमिष्यामि, एवं क्रीडिष्यामि, एवं प्रविचारयिष्यामीति । भगवानाह—तत्किं मन्यसे सुभूते दिवसस्यात्ययेन तस्य पुरुषस्य कियन्तो वितर्का उत्पद्येरन् ? । सुभूतिराह—बहवो भगवन् दिवसस्यात्ययेन 5 तस्य पुरुषस्य वितर्का उत्पद्येरन् । भगवानाह—यावन्तः सुभूते तस्य पुरुषस्य दिवसस्यात्ययेन वितर्का उत्पद्येरन्, इयतः सुभूते कल्पान् बोधिसत्त्वो महासत्त्वश्छोरयति विपृष्ठीकरोति संसाराद्व्यन्तीकरोति, य इह प्रज्ञापारमितायां यथाज्ञप्तं यथाख्यातं यथोपदिष्टं यथोद्दिष्टं यथानिर्दिष्टं तिष्ठति शिक्षते प्रतिपद्यते उपनिध्यायति योगमापद्यते, तांश्च दोषान् विवर्जयति, यैर्दोषैर्बोधिसत्त्वो महासत्त्वो विवर्ततेऽनुत्तरायाः सम्यक्संबोधेः । एवं हि सुभूते यश्च 10 बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायोगमनुयुक्तः, अनेन विहारेण विहरन् यदुत प्रज्ञापारमिताप्रतिसंयुक्तैर्मनसिकारैः, एकदिवसेन तावत्कर्म करोति । यश्च प्रज्ञापारमिताविरहितो बोधिसत्त्वो गङ्गानदीवालुकोपमान् कल्पांस्तिष्ठन् दानं दद्यात्, अयमेव ततो विशिष्यते योऽयं बोधिसत्त्वो महासत्त्व एवमेकदिवसमपि प्रज्ञापारमितायां योगमापद्यते ॥

W 701
R 344
W 702

पुनरपरं सुभूते यश्च बोधिसत्त्वो महासत्त्वो गङ्गानदीवालुकोपमान् कल्पांस्तिष्ठन् 15 स्रोतआपन्नेभ्यो दानं दद्यात्, प्रतिष्ठापयेत्, एवं[1] सकृदागामिष्वनागामिष्वर्हत्सु दानं दद्यात्, प्रतिष्ठापयेत् । प्रत्येकबुद्धेषु दानं दद्यात् प्रतिष्ठापयेत् । तथागतेष्वर्हत्सु सम्यक्संबुद्धेषु दानं दद्यात् प्रतिष्ठापयेत्, विरहितश्च प्रज्ञापारमितया । यश्च बोधिसत्त्वो महासत्त्वो यथोपदिष्टं यथोद्दिष्टं यथानिर्दिष्टं प्रज्ञापारमितायां तथैव योगमापद्येत एकदिवसमपि । अयं बोधिसत्त्वो महासत्त्वस्ततः पौर्विकाद्बोधिसत्त्वाद्बहुतरं पुण्यं प्रसवति ॥ 20

W 703

पुनरपरं सुभूते यो बोधिसत्त्वो गङ्गानदीवालुकोपमान् कल्पांस्तिष्ठन् स्रोतआपन्नेषु यावत्सम्यक्संबुद्धेषु दानं दद्यात् प्रतिष्ठापयेत्, शीलेषु च परिपूर्णकारी भवेत्, विरहितश्च प्रज्ञापारमितया भवेत् । यश्च बोधिसत्त्वो महासत्त्वः प्रज्ञापारमिताविहारी ततो मनसिकाराद्व्युत्थाय धर्मं देशयेत्, अयमेव सुभूते बोधिसत्त्वो महासत्त्वस्ततः पौर्विकाद्बोधिसत्त्वाद्बहुतरं पुण्यं प्रसवति ॥ 25

पुनरपरं सुभूते यो बोधिसत्त्वो गङ्गानदीवालुकोपमान् कल्पांस्तिष्ठन् स्रोतआपन्नेषु यावत्सम्यक्संबुद्धेषु दानं दद्यात् प्रतिष्ठापयेत्, शीलेषु च परिपूर्णकारी भवेत्, क्षान्त्या च समन्वागतो भवेत्, विरहितश्च प्रज्ञापारमितया । यश्च बोधिसत्त्वो महासत्त्वः प्रज्ञापारमिताविहारी ततो मनसिकाराद्व्युत्थाय धर्मदानं[2] दद्यात्, अयमेव सुभूते बोधिसत्त्वो महासत्त्वो महासत्त्वस्ततः पौर्विकाद्बोधिसत्त्वाद्बहुतरं पुण्यं प्रसवति ॥ 30

R 345
W 704

१ R om. from एवं upto प्रतिष्ठापयेत्. २ R दानं for धर्मदानं.

पुनरपरं सुभूते यो बोधिसत्त्वो महासत्त्वो[1] गङ्गानदीवालुकोपमान् कल्पांस्तिष्ठन् स्रोतआपन्नेषु यावत्सम्यक्संबुद्धेषु दानं दद्यात् प्रतिष्ठापयेत्, शीलेषु परिपूर्णकारी, क्षान्त्या च समन्वागतः, आरब्धवीर्यः सन् ध्यानेषु बोधिपक्षेषु च धर्मेषु योगमापद्येत, विरहितश्च प्रज्ञापारमितया। यश्च खलु पुनः सुभूते बोधिसत्त्वो महासत्त्वस्तथा धर्मदानं दत्वा 5 अनुत्तरायां सम्यक्संबोधौ परिणामयेत्, अयमेव सुभूते बोधिसत्त्वो महासत्त्वस्ततः पौर्वका-द्बोधिसत्त्वाद्बहुतरं पुण्यं प्रसवति॥

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वस्तथा धर्मदानं दत्वा प्रज्ञापारमितोक्तेन परिणामेन अनुत्तरायां सम्यक्संबोधौ परिणामयेत्, अयं ततो बहुतरं पुण्यं प्रसवति॥

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वस्तथा धर्मदानं दत्वा प्रज्ञापारमितोक्तेन परिणामेन W 705 10 अनुत्तरायां सम्यक्संबोधौ परिणामयेत्, परिणाम्य च प्रतिसंलाने न[2] पुनरेव योगमापद्येत। यश्च खलु पुनः सुभूते बोधिसत्त्वो महासत्त्वस्तथा धर्मदानमेव दद्यात्, न पुनः प्रतिसंलाने योगमा-R 346 पद्येत, स बोधिसत्त्वो महासत्त्वो न तावत्पुण्यं प्रसवति, यावद्य एवं धर्मदानं ददद् बोधिसत्त्वो महासत्त्वः प्रतिसंलाने च पुनरेव योगमापद्यमानः प्रज्ञापारमितया च परिगृहीतस्तत्प्रति-संलानमविरहितं करोति प्रज्ञापारमितया, अयं बोधिसत्त्वो महासत्त्वो बहुतरं पुण्यं प्रसवति॥

W 706 15 सुभूतिराह—यदा भगवन् अभिसंस्कारो विकल्प इत्युक्तं भगवता, तदा कथं बहुतरं पुण्यं प्रसवतीत्युच्यते? भगवानाह—सोऽपीदानीं सुभूते पुण्याभिसंस्कारो बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः शून्यक इत्येवाख्यायते, रिक्तक इत्येवाख्यायते, तुच्छक इत्येवाख्यायते, असारक इत्येवाख्यायते। यथा यथा खलु पुनः सुभूते बोधिसत्त्वो महासत्त्व एवं सर्वधर्मान् प्रत्यवेक्षते, तथा तथा सुभूते बोधिसत्त्वो महासत्त्वोऽविरहितो 20 भवति प्रज्ञापारमितया। यथा यथा च सुभूते बोधिसत्त्वो महासत्त्वोऽविरहितो भवति प्रज्ञापारमितया, तथा तथा अप्रमेयमसंख्येयं पुण्यं प्रसवति॥

W 707 सुभूतिराह—अप्रमेयस्य च भगवन् असंख्येयस्य च किं नानाकरणं वा, कः प्रतिविशेषो वा? भगवानाह—अप्रमेयमिति सुभूते यत्र प्रमाणान्युपरमन्ते। असंख्येयमिति सुभूते यन्न शक्यं संख्ययापि क्षपयितुम्॥

25 सुभूतिराह—स्याद्भगवन् पर्यायो यद्रूपमप्रमेयं भवेत्, एवं वेदना संज्ञा संस्काराः। W 708 R 347 स्याद्भगवन् पर्यायो यद्विज्ञानमप्रमेयं भवेत्? भगवानाह—यत्सुभूतिरेवमाह—स्याद्भगवन् पर्यायो यद्रूपमप्रमेयं भवेत्, एवं वेदना संज्ञा संस्काराः। स्याद्भगवन् पर्यायो यद्विज्ञानमप्रमेयं भवेदिति। स्यात्सुभूते पर्यायो येन रूपमेवाप्रमेयं भवेत्, एवं वेदनैव संज्ञैव संस्कारा एव। स्यात्सुभूते पर्यायो येन विज्ञानमेवाप्रमेयं भवेत्। सुभूतिराह—कस्य पुनर्भगवन् एतदधिवचनमप्रमेयमिति? 30 भगवानाह—शून्यतायाः सुभूते एतदधिवचनमप्रमेयमिति। आनिमित्तस्यैतदधिवचनम्। अप्रणिहितस्य सुभूते एतदधिवचनमप्रमेयमिति॥

---

१ W om. महासत्त्वो. २ R om. न.

सुभूतिराह—किं शून्यताया एव भगवन् केवलमेतदधिवचनमप्रमेयमिति, आनिमित्तस्यैव अप्रणिहितस्यैव भगवन् केवलमेतदधिवचनमप्रमेयमिति, नान्येषां धर्माणाम्? W 709 भगवानाह—तत्किं मन्यसे सुभूते ननु मया सर्वधर्माः शून्या इत्याख्याताः? सुभूतिराह—शून्या एव भगवन् सर्वधर्मास्तथागतेनाख्याताः। भगवानाह—ये च सुभूते शून्याः, अक्षया अपि ते। या च शून्यता, अप्रमेयतापि सा। तस्मात्तर्हि सुभूते एषां धर्माणामर्थतो विशेषो 5 वा नानाकरणं वा नोपलभ्यते। अभिलापा एते सुभूते तथागतेनाख्याताः अभिलपिताः—अप्रमेयमिति वा, असंख्येयमिति वा, अक्षयमिति वा, शून्यमिति[1] वा, आनिमित्तमिति वा W 710 अप्रणिहितमिति वा, अनभिसंस्कार इति वा, अनुत्पाद इति वा, अजातिरिति वा, अभाव इति वा, विराग इति वा, निरोध इति वा, निर्वाणमिति वा। देशनाभिनिर्हारनिर्देश एष सुभूते तथागतेनार्हता सम्यक्संबुद्धेनाख्यातः॥ 10

सुभूतिराह—आश्चर्यं भगवन् यावद्यदियं तथागतेनार्हता सम्यक्संबुद्धेन सर्वधर्माणां R 348 धर्मता देशिता, सा च सर्वधर्माणां धर्मता अनभिलाप्या। यथाहं भगवन् भगवतो भाषितस्यार्थमाजानामि, तथा सर्वधर्मा अपि भगवन् अनभिलाप्याः। भगवानाह—एवमेतत्सुभूते, एवमेतत्। सर्वधर्मा अपि सुभूते अनभिलाप्याः। तत्कस्य हेतोः? या च सुभूते सर्वधर्माणां शून्यता, न सा शक्या अभिलपितुम्। सुभूतिराह—किं पुनर्भगवन् अनभि- 15 W 711 लप्यस्यार्थस्य वृद्धिर्वास्ति, परिहाणिर्वा विद्यते? भगवानाह—नो हीदं सुभूते। सुभूतिराह—सचेद्भगवन् अनभिलप्यस्यार्थस्य न वृद्धिर्न परिहाणिः, दानपारमिताया अपि भगवन् न वृद्धिर्न परिहाणिर्भविष्यति। एवं शीलपारमिताया अपि, क्षान्तिपारमिताया अपि, वीर्यपारमिताया अपि, ध्यानपारमिताया अपि, प्रज्ञापारमिताया अपि भगवन् न वृद्धिर्न परिहाणिर्भविष्यति। सचेद्भगवन् आसां षण्णां पारमितानां न वृद्धिर्न परिहाणिः, कथं 20 भगवन् विवर्धमानानां षण्णां पारमितानां बलेन बोधिसत्त्वो महासत्त्वोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यते? कथं च अनुत्तरायाः सम्यक्संबोधेरभ्यासन्नीभवति? न च भगवन् अप्रतिपूरयन् W 712 पारमितां बोधिसत्त्वो महासत्त्वोऽभ्यासन्नीभवत्यनुत्तरायाः सम्यक्संबोधेः। भगवानाह—एवमेतत्सुभूते, एवमेतत्। न खलु पुनः सुभूते पारमितार्थस्य काचिद्वृद्धिर्वास्ति परिहाणिर्वा R 349 विद्यते। अपि तु खलु पुनः सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः 25 प्रज्ञापारमितां भावयत उपायकुशलस्य नैवं भवति—इयं दानपारमिता विवर्धते, इयं दानपारमिता परिहीयते इति। अपि तु खलु पुनरस्यैवं भवति—नामधेयमात्रमेतद्यदुत दानपारमितेति। स दानं ददत् तान् मनसिकारांस्तांश्चित्तोत्पादांस्तानि कुशलमूलानि अनुत्तरायां सम्यक्संबोधौ परिणामयति। यथा अनुत्तरा सम्यक्संबोधिस्तथा परिणामयति॥

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः प्रज्ञापारमितां 30 W 713 भावयतः उपायकुशलस्य नैवं भवति—इयं शीलपारमिता विवर्धते, इयं शीलपारमिता

---

१ W om. शून्यमिति वा.

परिहीयते इति। अपि तु खलु पुनरस्यैवं भवति–नामधेयमात्रमेतद्यदुत शीलपारमितेति। स शीलं समादाय वर्तमानस्तान् मनसिकारांस्तांश्चित्तोत्पादांस्तानि कुशलमूलानि अनुत्तरायां सम्यक्संबोधौ परिणामयति। यथा अनुत्तरा सम्यक्संबोधिस्तथा परिणामयति॥

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः प्रज्ञापारमितां 5 भावयतः उपायकुशलस्य नैवं भवति–इयं क्षान्तिपारमिता विवर्धते, इयं क्षान्तिपारमिता परिहीयते इति। अपि तु खलु पुनरस्यैवं भवति–नामधेयमात्रमेतद्यदुत क्षान्तिपारमितेति। स क्षान्त्या संपादयंस्तान् मनसिकारांस्तांश्चित्तोत्पादांस्तानि च कुशलमूलानि अनुत्तरायां सम्यक्संबोधौ परिणामयति। यथा अनुत्तरा सम्यक्संबोधिस्तथा परिणामयति॥

R 350 पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः प्रज्ञापारमितां 10 भावयत उपायकुशलस्य नैवं भवति–इयं वीर्यपारमिता विवर्धते, इयं वीर्यपारमिता परिहीयते इति। अपि तु खलु पुनरस्यैवं भवति–नामधेयमात्रमेतद्यदुत वीर्यपारमितेति। स वीर्यमारभमाणस्तान् मनसिकारांस्तांश्चित्तोत्पादांस्तानि च कुशलमूलानि अनुत्तरायै सम्यक्संबोधये W 714 परिणामयति। यथा अनुत्तरा सम्यक्संबोधिस्तथा परिणामयति॥

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः प्रज्ञापारमितां 15 भावयतः उपायकुशलस्य नैवं भवति–इयं ध्यानपारमिता विवर्धते, इयं ध्यानपारमिता परिहीयते इति। अपि तु खलु पुनरस्यैवं भवति–नामधेयमात्रमेतद्यदुत ध्यानपारमितेति। स ध्यानानि समापद्यमानस्तान् मनसिकारांस्तांश्चित्तोत्पादांस्तानि च कुशलमूलानि अनुत्तरायां सम्यक्संबोधौ परिणामयति। यथा अनुत्तरा सम्यक्संबोधिस्तथा परिणामयति॥

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः प्रज्ञापारमितां भावयतः 20 उपायकुशलस्य नैवं भवति–इयं प्रज्ञापारमिता विवर्धते, इयं प्रज्ञापारमिता परिहीयते इति। अपि तु खलु पुनरस्यैवं भवति–नामधेयमात्रमेतद्यदुत प्रज्ञापारमितेति। स प्रज्ञापारमितायां चरन् प्रज्ञापारमितां भावयंस्तान् मनसिकारांस्तांश्चित्तोत्पादांस्तानि च कुशलमूलानि अनुत्तरायां सम्यक्संबोधौ परिणामयति। यथा अनुत्तरा सम्यक्संबोधिस्तथा परिणामयति॥

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्–का पुनरेषा भगवन् अनुत्तरा R 351 25 सम्यक्संबोधिः? भगवानाह–तथतैषा सुभूते अनुत्तरा सम्यक्संबोधिः। न च सुभूते तथता W 715 विवर्धते वा, परिहीयते वा। सचेद्बोधिसत्त्वो महासत्त्वस्तत्प्रतिसंयुक्तैर्मनसिकारैरभीक्ष्णं बहुलं विहरति, एवं स आसन्नीभवत्यनुत्तरायाः सम्यक्संबोधेः, तैश्च मनसिकारैर्न परिहीयते। एवं खलु सुभूते अनभिलप्यस्यार्थस्य न वृद्धिर्न परिहाणिर्भवति। एवं पारमितानां न वृद्धिर्न परिहाणिर्भवति। एवं सर्वधर्माणामपि सुभूते न वृद्धिर्न परिहाणिर्भवति। एवं हि सुभूते 30 बोधिसत्त्वो महासत्त्व एभिरेवंरूपैर्मनसिकारैर्विहरन् आसन्नीभवत्यनुत्तरायाः सम्यक्संबोधेरिति॥

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां शून्यतापरिवर्तो नामाष्टादशः॥

## १९ गङ्गदेवीभगिनीपरिवर्त एकोनविंशः ।

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—किं पुनर्भगवन् प्रथमचित्तोत्पादेन बोधिसत्त्वो महासत्त्वोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यते, उताहो पश्चिमचित्तोत्पादेन बोधिसत्त्वो महासत्त्वोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यते? पौर्वको भगवंश्चित्तोत्पादः पश्चिमकेन चित्तोत्पादेन असमवहितः, पश्चिमकश्चित्तोत्पादः पौर्वकेण चित्तोत्पादेन असमवहितः। 5 कथं भगवन् बोधिसत्त्वस्य महासत्त्वस्य कुशलमूलानामुपचयो भवति? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—तत्किं मन्यसे सुभूते तैलप्रद्योतस्य ज्वलतोऽर्चिषा प्रथमाभिनिपातेन सा वर्तिर्दग्धा, उताहो पश्चिमाभिनिपातेनार्चिषा सा वर्तिर्दग्धा? सुभूतिराह—नो हीदं भगवन्। न हि भगवन् अर्चिषा प्रथमाभिनिपातेन सा वर्तिर्दग्धा। न च प्रथमाभिनिपातमनागम्य अर्चिषा सा वर्तिर्दग्धा। न च भगवन् पश्चिमाभिनिपातेनार्चिषा सा 10 वर्तिर्दग्धा, न च पश्चिमाभिनिपातमनागम्य अर्चिषा सा वर्तिर्दग्धा। भगवानाह—तत्किं मन्यसे सुभूते अपि नु सा वर्तिर्दग्धा? सुभूतिराह—दग्धा भगवन्, दग्धा सुगत। भगवानाह—एवमेव सुभूते न च प्रथमचित्तोत्पादेन बोधिसत्त्वो महासत्त्वोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यते, न च प्रथमचित्तोत्पादमनागम्य अनुत्तरां सम्यक्संबोधिमभिसंबुध्यते। न च पश्चिमचित्तोत्पादेन अनुत्तरां सम्यक्संबोधिमभिसंबुध्यते, न च पश्चिमचित्तोत्पाद- 15 मनागम्य अनुत्तरां सम्यक्संबोधिमभिसंबुध्यते। न च तैश्चित्तोपादैर्न चान्यत्र तेभ्यश्चित्तोत्पादेभ्योऽभिसंबुध्यते। अभिसंबुध्यते च बोधिसत्त्वो महासत्त्वोऽनुत्तरां सम्यक्संबोधिम्॥

R 352 W 717 W 718 W 719 R 353 W 720

एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—गम्भीरोऽयं भगवन् प्रतीत्यसमुत्पादः। न च नाम भगवन् प्रथमचित्तोत्पादेनैव बोधिसत्त्वो महासत्त्वोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यते, न च नाम प्रथमचित्तोत्पादमनागम्य अनुत्तरां सम्यक्संबोधिमभिसं- 20 बुध्यते। न च नाम पश्चिमचित्तोत्पादेनैव बोधिसत्त्वो महासत्त्वोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यते, न च नाम पश्चिमचित्तोत्पादमनागम्य अनुत्तरां सम्यक्संबोधिमभिसंबुध्यते, न च नाम तैश्चित्तोत्पादैर्न चान्यत्र तेभ्यश्चित्तोत्पादेभ्योऽभिसंबुध्यते। अभिसंबुध्यते च बोधिसत्त्वो महासत्त्वोऽनुत्तरां सम्यक्संबोधिम्॥

W 721

एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—तत्किं मन्यसे सुभूते यच्चित्तं निरुद्धम्, 25 अपि नु तत्पुनरुत्पत्स्यते? सुभूतिराह—नो हीदं भगवन्। भगवानाह—तत्किं मन्यसे सुभूते यच्चित्तमनुत्पन्नम्, अपि नु तन्निरोधधर्मि? आह—निरोधधर्मि भगवन्। भगवानाह—तत्किं मन्यसे सुभूते यन्निरोधधर्मि, अपि नु तन्निरोत्स्यते?[1] आह—नो हीदं भगवन्। भगवानाह—तत्किं मन्यसे सुभूते यच्चित्तमनुत्पन्नम्, अपि नु तन्निरोधधर्मि? आह—नो हीदं भगवन्। भगवानाह—तत्किं मन्यसे सुभूते यन्निरोधधर्मि, अपि नु 30 तन्निरोत्स्यते? आह—नो हीदं भगवन्। भगवानाह—तत्किं मन्यसे सुभूते यच्चित्तमनुत्पादा-

W 722 R 354

१ R तदुत्पत्स्यते for तन्निरोत्स्यते.

W 723 निरोधधर्मि, अपि नु तन्निरोत्स्यते? आह–नो हीदं भगवन्। भगवानाह–तत्किं मन्यसे सुभूते यो धर्मः प्रकृत्या स्वभावनिरुद्ध एव, स धर्मो निरोत्स्यते? आह–नो हीदं भगवन्। भगवानाह–तत्किं मन्यसे सुभूते या धर्माणां धर्मता सा निरोत्स्यते? आह–नो हीदं भगवन्। भगवानाह–तत्किं मन्यसे सुभूते तथैव स्थास्यति यथा तथता? आह–तथैव

W 724 R 355 5 भगवन् स्थास्यति यथा तथता। भगवानाह–तत्किं मन्यसे सुभूते यदि तथैव स्थास्यति यथा तथता, तदा मा कूटस्था भूत्? आह–नो हीदं भगवन्। भगवानाह–तत्किं मन्यसे सुभूते गम्भीरा तथता? आह–गम्भीरा भगवन्। भगवानाह–तत्किं मन्यसे तथतायां

W 725 चित्तम्? आह–नो हीदं भगवन्। भगवानाह–तत्किं मन्यसे सुभूते चित्तं तथता? आह–नो हीदं भगवन्। भगवानाह–तत्किं मन्यसे सुभूते अन्यत्तथतायाश्चित्तम्? आह–नो

10 हीदं भगवन्। भगवानाह–समनुपश्यसि त्वं सुभूते तथताम्? आह–नो हीदं भगवन्। भगवानाह–तत्किं मन्यसे सुभूते य एवं चरति स गम्भीरे चरति? आह–यो भगवन् एवं

W 726 चरति, स न क्वचिच्चरति। तत्कस्य हेतोः? तथा ह्यस्य ते समुदाचारा न प्रवर्तन्ते, न समुदाचरन्ति। भगवानाह–यः सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितां चरति,

R 356 स क्व चरति? आह–चरति भगवन् परमार्थे। भगवानाह–तत्किं मन्यसे सुभूते

15 यो बोधिसत्त्वो महासत्त्वः परमार्थे चरति, स निमित्ते चरति? आह–नो हीदं भगवन्।

W 727 भगवानाह–तत्किं मन्यसे सुभूते अपि नु तस्य निमित्तमविभावितम्? आह–नो हीदं भगवन्। भगवानाह–तत्किं मन्यसे सुभूते अपि नु बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो निमित्तं विभावितं भवति? सुभूतिराह–न स भगवन् बोधिसत्त्वो महासत्त्व एवं प्रयुज्यते–कथमहं बोधिसत्त्वचर्यां चरन्निहैव निमित्तप्रहाणमनुप्राप्नुयामिति। सचेत्पुनरनु-

20 प्राप्नुयात्, अप्रतिपूर्णैः सर्वबुद्धधर्मैः श्रावको भवेत्। एतत्तद्भगवन् बोधिसत्त्वस्य महासत्त्वस्यो-

W 728 पायकौशल्यं यत्, तच्च निमित्तं जानाति, यल्लक्षणं यन्निमित्तमानिमित्ते च परिजयं करोति॥

अथ खल्वायुष्मान् शारिपुत्र आयुष्मन्तं सुभूतिमेतदवोचत्–य आयुष्मन् सुभूते बोधिसत्त्वो महासत्त्वः स्वप्नान्तरगतस्त्रीणि विमोक्षमुखानि भावयति–शून्यतामानिमित्तमप्रणिहितं च, अपि नु तस्य प्रज्ञापारमिता विवर्धते? सुभूतिराह–सचेदायुष्मन् शारिपुत्र

25 दिवसभावनया विवर्धते, एवं स्वप्नान्तरगतस्यापि विवर्धते। तत्कस्य हेतोः? अविकल्पो हि

W 729 R 357 आयुष्मन् शारिपुत्र स्वप्नश्च दिवसश्चोक्तो भगवता। सचेदायुष्मन् शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितालाभी दिवसे दिवसे प्रज्ञापारमितायां चरति, ततोऽस्य प्रज्ञापारमिताभ्यासतः स्वप्नान्तरगतस्यापि बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितावैपुल्येन भवितव्यम्। शारिपुत्र आह–यत्पुनरायुष्मन् सुभूते स्त्री वा पुरुषो वा स्वप्नान्तरगतः कर्म

30 शुभमशुभं वा करोति, किं भवति तस्य कर्मण आचयो वा उपचयो वा? सुभूतिराह–यथा

W 730 स्वप्नोपमाः सर्वधर्मा उक्ता भगवता, तथा न तस्य कर्मणो भवत्याचयो वा उपचयो वा। अथ पुनरायुष्मन् शारिपुत्र स पुरुषः प्रतिविबुद्धः सन् विकल्पयन् हतसंज्ञामुत्पादयति,

भवति तस्य कर्मण आचयो वा उपचयो वा। कथं च आयुष्मन् शारिपुत्र विकल्पयन् हतसंज्ञामुत्पादयति? सचेत्स्वप्नान्तरगतः प्राणातिपातं कृत्वा प्रतिविबुद्धः सन्नेवं विकल्पयति-अहो हतः, साधु हतः, सुष्ठु हतः, मया हतः, इत्येवं विकल्पयन् हतसंज्ञामुत्पादयति। शारिपुत्र आह-सचेदायुष्मन् सुभूते स पुरुषः प्रतिविबुद्धः सन् विकल्पयन् हतसंज्ञामुत्पादयति-अहो हतः, साधु हतः, सुष्ठु हतः, मया हत इति, भवति तस्य कर्मण आचयो वा उपचयो वा? बुद्धो भगवानपि विकल्पयन् क्षयसंज्ञामुत्पादयति। तस्यापि कर्मण आचयो वा उपचयो वा भवेत्? सुभूतिराह-नो हीदमायुष्मन् शारिपुत्र। तत्कस्य हेतोः? सर्वकल्पविकल्पप्रहीणो हि तथागतः। तद्यथापि नाम आकाशमेव आयुष्मन् शारिपुत्र नानारम्बणं कर्मोत्पद्यते, नानारम्बणं चित्तमुत्पद्यते। तस्मात्तर्ह्यायुष्मन् शारिपुत्र सारम्बणमेव कर्मोत्पद्यते, न अनारम्बणम्। सारम्बणमेव चित्तमुत्पद्यते, न अनारम्बणम्। दृष्टश्रुतमतविज्ञातेष्वायुष्मन् शारिपुत्र धर्मेषु बुद्धिः[1] प्रवर्तते। तत्र काचिद्बुद्धिः संक्लेशं परिगृह्णाति, काचिद्बुद्धिर्व्यवदानं परिगृह्णाति। तस्मात्तर्हि आयुष्मन् शारिपुत्र सारम्बणैव चेतनोत्पद्यते न अनारम्बणा[2], सारम्बणमेव कर्मोत्पद्यते न अनारम्बणम्। शारिपुत्र आह-यदायुष्मन् सुभूते सर्वारम्बणानि विविक्तानि आख्यातानि भगवता, तदा कस्मादायुष्मन् सुभूते सारम्बणैव चेतनोत्पद्यते न अनारम्बणा? सुभूतिराह-निमित्तीकृत्य आयुष्मन् शारिपुत्र विद्यमानमेवारम्बणमारम्बणीकृत्य सारम्बणैव चेतनोत्पद्यते, न अनारम्बणा। चेतनाप्यायुष्मन् शारिपुत्र विविक्ता, निमित्तमपि विविक्तम्। एवमविद्याप्रत्ययाः संस्कारा अपि विविक्ताः, संस्कारप्रत्ययं विज्ञानमपि, यावज्जातिप्रत्ययं जरामरणमपि विविक्तम्। एवमेव आयुष्मन् शारिपुत्र सर्वारम्बणानि विविक्तानि। निमित्तेन विविक्ता चेतना लोकव्यवहारमुपादायोत्पद्यत इति॥

शारिपुत्र आह-यदायुष्मन् सुभूते बोधिसत्त्वो महासत्त्वः स्वप्नान्तरगतो दानं दद्यात्, तच्च दानमनुत्तरायां सम्यक्संबोधौ परिणामयति। परिणामितं किं तद्दानं वक्तव्यम्? सुभूतिराह-अयमायुष्मन् शारिपुत्र मैत्रेयो बोधिसत्त्वो महासत्त्वः संमुखीभूतः। एष तथागतेन व्याकृतोऽनुत्तरायां सम्यक्संबोधौ। एषोऽत्रार्थे कायसाक्षी। एष प्रष्टव्यः। एष एनमर्थं विसर्जयिष्यति। अथ खल्वायुष्मान् शारिपुत्रो मैत्रेयं बोधिसत्त्वं महासत्त्वमेतदवोचत्-अयमायुष्मन् मैत्रेय सुभूतिः स्थविर एवमाह-अयं मैत्रेयो बोधिसत्त्वो महासत्त्वः। एष एनमर्थं विसर्जयिष्यतीति। विसर्जय आयुष्मन्नजित एनमर्थम्। अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्व आयुष्मन्तं सुभूतिमेतदवोचत्-यदायुष्मान् सुभूतिरेवमाह-अयं मैत्रेयो बोधिसत्त्वो महासत्त्वः। एष एनमर्थं विसर्जयिष्यतीति। किं पुनरायुष्मन् सुभूते यदेतन्नामधेयं मैत्रेय इति? एतदेनमर्थं विसर्जयिष्यति, उत रूपं विसर्जयिष्यति, उत वेदना संज्ञा संस्काराः, अथ विज्ञानं विसर्जयिष्यति, उताहो वर्णो विसर्जयिष्यति, अथ संस्थानं विसर्जयिष्यति, उताहो या रूपस्य शून्यता, सा विसर्जयिष्यति? एवं या वेदनायाः संज्ञायाः संस्काराणाम्,

१ RW बुद्धेः for बुद्धिः. २ RW अनारम्बणम्.

या विज्ञानस्य शून्यता, सा विसर्जयिष्यति? या खलु पुनरायुष्मन् सुभूते रूपस्य शून्यता, न सा प्रतिबला विसर्जयितुम्। एवं वेदनायाः संज्ञायाः संस्काराणाम्। या खलु पुनरायुष्मन् सुभूते विज्ञानस्य शून्यता, न सा प्रतिबला विसर्जयितुम्। तमप्यहमायुष्मन् सुभूते धर्मं न समनुपश्यामि, यो धर्मो विसर्जयेत्। तमप्यहं धर्मं न समनुपश्यामि, यो धर्मो विसर्जयितव्यः। तमप्यहं धर्मं न समनुपश्यामि, येन धर्मेण विसर्जयेत्। तमप्यहं धर्मं न समनुपश्यामि, यो धर्मो व्याकृतोऽनुत्तरायां सम्यक्संबोधौ॥

R 360 — 5

W 736

अथ खल्वायुष्मान् शारिपुत्रो मैत्रेयं बोधिसत्त्वं महासत्त्वमेतदवोचत्—कच्चित्पुनरायुष्मन् मैत्रेय त्वया एते धर्मा एवं साक्षात्कृताः, यथैनान् वाचा भाषसे? मैत्रेय आह—न मया आयुष्मन् शारिपुत्र एते धर्मा एवं साक्षात्कृताः, यथैनान् वाचा भाषे। एवमप्यहमेनानायुष्मन् शारिपुत्र धर्मान्न वेद्मि, नोपलभे, न समनुपश्यामि, यथा वाचा भाषे, चित्तेन वा चिन्तयामि। अपि तु खलु पुनरायुष्मन् शारिपुत्र न कायेन स्पृश्येत, न वाचा भाष्येत, न मनसा समन्वाहियेत। एवंस्वभावाः सर्वे धर्मा अस्वभावत्वात्। अथ खल्वायुष्मतः शारिपुत्रस्यैतदभूत्—गम्भीरप्रज्ञो बतायं मैत्रेयो बोधिसत्त्वो महासत्त्वः, यथापि नाम दीर्घरात्रं प्रज्ञापारमितायां चरितावी निर्दिशति॥

10 — W 737

15 — R 361

अथ खलु भगवानायुष्मन्तं शारिपुत्रमामन्त्रयते स्म—कुतस्ते शारिपुत्र एतदभूत्—गम्भीरप्रज्ञो बतायं मैत्रेयो बोधिसत्त्वो महासत्त्व इति? समनुपश्यसि त्वं शारिपुत्र तं धर्मं येन धर्मेण समन्वागतोऽर्हन्निति प्रभाव्यते? शारिपुत्र आह—न ह्येतद्भगवन्। भगवानाह—एवमेव शारिपुत्र बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो नैवं भवति—अयं धर्मो व्याकृतोऽनुत्तरायां सम्यक्संबोधौ, अयं धर्मो व्याकरिष्यतेऽनुत्तरायां सम्यक्संबोधौ, अयं धर्मो व्याक्रियतेऽनुत्तरायां सम्यक्संबोधौ, अयं धर्मोऽनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते। एवं चरन् बोधिसत्त्वो महासत्त्वश्चरति प्रज्ञापारमितायाम्। स चरन्नोत्रस्यति, न संत्रस्यति, न संत्रासमापद्यते। लब्धबलाधानत्वान्नाहं नाभिसंभोत्स्य इत्येवं योगमापद्यते। सचेदेवं चरति, चरति प्रज्ञापारमितायाम्॥

20 — W 738

पुनरपरं शारिपुत्र व्यालकान्तारमध्यगतेन बोधिसत्त्वेन महासत्त्वेन नोत्रसितव्यम्, न संत्रसितव्यम्, न संत्रासमापत्तव्यम्। तत्कस्य हेतोः? तथा हि तेन बोधिसत्त्वेन महासत्त्वेन सर्वं परित्यक्तव्यं सर्वसत्त्वानामर्थाय। तेनैवं चित्तमुत्पादयितव्यम्—यदि चेन्मां व्याला भक्षयेयुः, तेभ्य एव तद्दानं दत्तं भवतु। मम च दानपारमितापरिपूरिर्भविष्यति। अनुत्तरा च मे सम्यक्संबोधिरासन्नीभविष्यति। तथा च करिष्यामि, यथा मे अनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य सतः तिर्यग्योनिगताः सत्त्वाः सर्वेण सर्वं सर्वथा सर्वं सर्वत्र मे बुद्धक्षेत्रे न भविष्यन्ति, न प्रज्ञास्यन्ते, दिव्योपभोगपरिभोगाश्च भविष्यन्तीति॥

25 — W 739

30

पुनरपरं शारिपुत्र चोरकान्तारमध्यगतेन बोधिसत्त्वेन महासत्त्वेन नोत्रसितव्यम्, न संत्रसितव्यम्, न संत्रासमापत्तव्यम्। तत्कस्य हेतोः? सर्वस्वपरित्यागकुशलाभिरता हि

बोधिसत्त्वा महासत्त्वा भवन्ति। उत्सृष्टकायेनापि च बोधिसत्त्वेन महासत्त्वेन भवितव्यं परित्यक्तसर्वपरिष्कारोपकरणेन। तेनैवं चित्तमुत्पादयितव्यम्—सचेन्मम सत्त्वाः सर्वपरिष्कारोपकरणानि हरेयुः, तेभ्य एव तद्दानं दत्तं भवतु। यदि चेन्मां केचिज्जीविताद्व्यपरोपयेयुः, तत्र न मया व्यापादक्रोधरोषा उत्पादयितव्याः। तेषामपि च मया न कायेन न वाचा न मनसा अपराद्धव्यम्। एवं च मे तस्मिन् समये दानपारमिता च शीलपारमिता च क्षान्तिपारमिता च परिपूरिं गमिष्यति। अनुत्तरा च मे सम्यक्संबोधिरभ्यासन्नीभविष्यति। तथा च करिष्यामि, तथा च प्रतिपत्स्ये, यथा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य सतश्चोरकान्ताराण्यपि तस्मिन् बुद्धक्षेत्रे सर्वेण सर्वं सर्वथा सर्वं न भविष्यन्ति, न प्रज्ञास्यन्ते। तथा च बुद्धक्षेत्रपरिशुद्धये व्यापत्स्ये, यथा मे अनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य सतस्तस्मिन् बुद्धक्षेत्रे एते चान्ये च दोषाः सर्वेण सर्वं सर्वथा सर्वं न भविष्यन्ति, न प्रज्ञास्यन्ते॥

पुनरपरं शारिपुत्र पानीयकान्तारमध्यगतेन बोधिसत्त्वेन महासत्त्वेन नोत्रसितव्यं न संत्रसितव्यं न संत्रासमापत्तव्यम्। तत्कस्य हेतोः? असंत्रस्तानुत्रस्तधर्माणो हि बोधिसत्त्वा महासत्त्वा भवन्ति। एवं चानेन चित्तमुत्पादयितव्यम्—सर्वसत्त्वानां मया सर्वतृष्णाच्छेदाय शिक्षितव्यम्। न च बोधिसत्त्वेन महासत्त्वेनोत्रसितव्यम्, न संत्रसितव्यम्, न संत्रासमापत्तव्यम्। सचेदहं तृष्णया कालं करिष्यामि, प्रेतलोके ममोपपत्तिर्भविष्यतीति। अपि तु खलु पुनः सर्वसत्त्वानामन्तिके महाकरुणाचित्तमुत्पादयितव्यम्—अहो बत अल्पपुण्या अमी सत्त्वाः, यदेतेषां लोके एवंरूपाणि पानीयकान्ताराणि प्रज्ञायन्ते। तथा पुनरहं करिष्यामि, तथा प्रतिपत्स्ये, यथा मे अनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य सतस्तस्मिन् बुद्धक्षेत्रे सर्वेण सर्वं सर्वथा सर्वं पानीयकान्ताराणि न भविष्यन्ति, न प्रज्ञास्यन्ते। तथा च सर्वसत्त्वान् पुण्यैः संनियोक्ष्ये, यथा अष्टाङ्गोपेतपानीयलाभिनोऽमी भविष्यन्ति। तथा च दृढं वीर्यमारप्स्ये सर्वसत्त्वानां कृतशः, यथा वीर्यपारमिता च मे तस्मिन् समये परिपूरिं गमिष्यतीति॥

पुनरपरं शारिपुत्र बुभुक्षाकान्तारमध्यगतेन बोधिसत्त्वेन महासत्त्वेन नोत्रसितव्यं न संत्रसितव्यं न संत्रासमापत्तव्यम्। एवं चानेन संनाहः संनाह्यः—तथा दृढं वीर्यमारप्स्ये, तथा च स्वं बुद्धक्षेत्रं परिशोधयिष्यामि, यथा मे अनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य सतस्तस्मिन् बुद्धक्षेत्रे एवंरूपाणि बुभुक्षाकान्ताराणि सर्वेण सर्वं सर्वथा सर्वं न भविष्यन्ति, न प्रज्ञास्यन्ते। सुखिता एव ते सत्त्वा भविष्यन्ति सुखसमङ्गिनः सर्वसुखसमर्पिताः। तथा च करिष्यामि, यथा तेषां सत्त्वानां यो य एवाभिप्रायो भविष्यति, यद्यदेवाकाङ्क्षिष्यन्ति मनसा, तत्तदेव प्रादुर्भविष्यति तद्यथापि नाम देवानां त्रायस्त्रिंशानां मनसैव सर्वमुत्पद्यते, यथा तेषां सत्त्वानां मनसैव सर्वं प्रादुर्भविष्यति, मनसा सर्वमुत्पत्स्यते, तथा दृढं वीर्यमारप्स्ये। यथा तेषां सत्त्वानां धार्मिका अभिप्रायाः परिपूरिं गमिष्यन्ति, अवैकल्यं च जीवितपरिष्कारैः सर्वसत्त्वानां

R 364 भविष्यति सर्वथा सर्वतः सर्वदा, तथा च स्वचित्तपरिशुद्धये व्यायंस्ये सर्वसत्त्वानां कृतशः, यथा ध्यानपारमिता च मे तस्मिन् समये परिपूरिं गमिष्यतीति ॥

W 742 पुनरपरं शारिपुत्र व्याधिकान्तारमध्यगतेन बोधिसत्त्वेन महासत्त्वेन नोत्रसितव्यं न संत्रसितव्यं न संत्रासमापत्तव्यम्। एवं चानेनोपपरीक्षितव्यं चिन्तयितव्यं तुलयितव्यम्–5 नेह स कश्चिद्धर्मो यो व्याध्या बाध्यते, नापि स कश्चिद्धर्मो यो व्याधिर्नाम। एवं तेन शून्यता प्रत्यवेक्षितव्या। न चोत्रसितव्यं न संत्रसितव्यं न संत्रासमापत्तव्यम्। न च शारिपुत्र बोधिसत्त्वेन महासत्त्वेनैवं चित्तमुत्पादयितव्यम्–चिरेणानुत्तरां सम्यक्संबोधिमभिसंभोत्स्ये इति नोत्रसितव्यं न संत्रसितव्यं न संत्रासमापत्तव्यम्। तत्कस्य हेतोः? यो हि चित्तक्षणः, इयती सैषा अपूर्वा कोटिर्यदुत अकोटिः। एवं तेन बोधिसत्त्वेन महासत्त्वेन 10 [न] दुष्करसंज्ञोत्पादयितव्या–बह्वी दीर्घा चैषा अपूर्वा कोटिरिति, एकचित्तक्षणसमायुक्ता ह्येषा अपूर्वा कोटिर्यदुत अकोटिः। एवं शारिपुत्र बोधिसत्त्वेन महासत्त्वेन चिरेणानुत्तरां सम्यक्संबोधिमभिसंभोत्स्ये इति नोत्रसितव्यं न संत्रसितव्यं न संत्रासमापत्तव्यम्। यः खलु पुनः शारिपुत्र बोधिसत्त्वो महासत्त्व एभ्यश्चान्येभ्यश्च दृष्टश्रुतमतविज्ञातेभ्यो भयभैरवेभ्यो नोत्रस्यति न संत्रस्यति न संत्रासमापद्यते, ज्ञातव्यमिदं शारिपुत्र भव्योऽयं कुलपुत्रो वा W 743 15 कुलदुहिता वा अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुमिति। एवं च शारिपुत्र बोधिसत्त्वेन R 365 महासत्त्वेन महासंनाहः संनद्धव्यः–तथा करिष्यामि, तथा दृढं वीर्यमारप्स्ये, यथा मे अनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य सतस्तस्मिन् बुद्धक्षेत्रे सर्वसत्त्वानां सर्वेण सर्वं सर्वथा सर्वं सर्वव्याधयो न भविष्यन्ति, न प्रज्ञास्यन्ते। तथा करिष्यामि, यथा तथागतानामुक्तवादी यथोक्तकारी च भविष्यामि। तथा च प्रज्ञापारमितायां परिजयं करिष्यामि सर्वसत्त्वानां 20 कृतशः, यथा प्रज्ञापारमितापि मे तस्मिन् समये परिपूरिं गमिष्यतीति ॥

अथ खलु तत्र पर्षदि अन्यतरा स्त्री संनिपतिता संनिषण्णाभूत्। सा उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्–अहं भगवन् अत्र स्थाने नोत्रसिष्यामि, न संत्रसिष्यामि, न संत्रासमापत्स्ये। अनुत्रस्ता च असंत्रस्ता[१] च सर्वसत्त्वेभ्यो धर्मं देशयिष्यामीति। अथ खलु 25 भगवांस्तस्यां वेलायां सुवर्णवर्णस्मितं प्रादुरकरोत्। तदनन्तापर्यन्तान् लोकधातूनाभया स्फरित्वा यावद्ब्रह्मलोकमभ्युद्गम्य पुनरेव प्रत्युदावृत्य भगवन्तं त्रिः प्रदक्षिणीकृत्य भगवत W 744 एव मूर्ध्नि अन्तरधीयत। समनन्तरं प्रादुष्कृते च भगवता तस्मिन् स्मिते अथ खलु सा स्त्री R 366 सुवर्णपुष्पाणि गृहीत्वा भगवन्तं सुवर्णपुष्पैरभ्यवाकिरदभिप्राकिरत्। अथ खलु तानि सुवर्णपुष्पाण्यसक्तानि अन्तरीक्षे विहायसि स्थितान्यभूवन् ॥

30 अथ खल्वायुष्मानानन्द उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्–को भगवन् हेतुः,

१ W om. असंत्रस्ता.

कः प्रत्ययः स्मितस्य प्रादुष्करणाय? नाहेतुकं नाप्रत्ययं तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्रादुष्कुर्वन्ति। एवमुक्ते भगवानायुष्मन्तमानन्दमेतदवोचत्—इयमानन्द गङ्गदेवा[1] भगिनी अनागतेऽध्वनि सुवर्णपुष्पो नाम तथागतो भविष्यति अर्हन् सम्यक्संबुद्धो विद्या- W 745
चरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च। बुद्धो भगवाँल्लोक उत्पत्स्यते, तारकोपमे कल्पेऽनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते। सेय- 5
मानन्द गङ्गदेवा भगिनी स्त्रीभावं विवर्त्य पुरुषभावं प्रतिलभ्य इतश्च्युत्वा अक्षोभ्यस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य बुद्धक्षेत्रे अभिरत्यां लोकधातावुपपत्स्यते। तत्र चोपपन्ना अक्षोभ्यस्य तथागतास्यार्हतः सम्यक्संबुद्धस्यान्तिके ब्रह्मचर्यं चरिष्यति। ततश्च्युता सती बुद्धक्षेत्राद्बुद्धक्षेत्रं संक्रमिष्यति अविरहिता तथागतदर्शनेन। ततोऽपि बुद्धक्षेत्राद्बुद्धक्षेत्राणि संक्रमिष्यति। यान्यविरहितानि भविष्यन्ति बुद्धैर्भगवद्भिस्तत्र तत्र संक्रमिष्यति। तद्यथापि नाम आनन्द 10
राजा चक्रवर्ती प्रासादात्प्रासादं संक्रामेत्, स यावज्जीवं पादतलाभ्यां धरणीतलं नाक्रामेत्, R 367
स यावन्मरणावस्थायां भूमितलं पद्भ्यामनाक्रम्य कालं कुर्यात्, एवमेव आनन्द इयं गङ्गदेवा भगिनी बुद्धक्षेत्रं संक्रमिष्यति। तत्र च अविरहिता भविष्यति बुद्धैर्भगवद्भिर्यावन्नानुत्तरां सम्यक्संबोधिमभिसंबुध्यते॥

अथ खल्वायुष्मत आनन्दस्यैतदभूत्—ये तत्राक्षोभ्यस्य तथागतस्यार्हतः सम्यक्सं- 15 W 746
बुद्धस्यान्तिके बोधिसत्त्वा महासत्त्वा भविष्यन्ति, तथागतसंनिपात एव स वेदितव्यः। अथ खलु भगवानायुष्मत आनन्दस्य इममेवंरूपं चेतसैव चेतःपरिवितर्कमाज्ञाय आयुष्मन्तमानन्दमेतदवोचत्—एवमेतदानन्द, एवमेतत्। उत्तीर्णपङ्कास्ते बोधिसत्त्वा महासत्त्वाः, ये अक्षोभ्यस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य बुद्धक्षेत्रे ब्रह्मचर्यं चरन्ति। बोधिपरिनिष्पत्त्युपगतास्ते आनन्द बोधिसत्त्वा महासत्त्वा वेदितव्याः। तस्य खलु पुनरानन्द सुवर्णपुष्पस्य तथा- 20
गतस्यार्हतः सम्यक्संबुद्धस्य न प्रमाणबद्धः श्रावकसंघो भविष्यति। तत्कस्य हेतोः? तावन्तो ह्यानन्द तत्र श्रावका भविष्यन्ति येषां नास्ति प्रमाणम्। अपि त्वप्रमेया असंख्येया इत्येवं संख्यां गमिष्यन्ति। तेन खलु पुनरानन्द कालेन तेन समयेन तस्मिन् बुद्धक्षेत्रे न व्यालकान्ताराणि भविष्यन्ति, न चौरकान्ताराणि न पानीयकान्ताराणि न व्याधिकान्ताराणि न दुर्भिक्षकान्ताराणि भविष्यन्ति। एतानि चान्यानि च आनन्द असातकान्ताराणि तस्मिन् 25
बुद्धक्षेत्रे सर्वेण सर्वं सर्वथा सर्वं न भविष्यन्ति, न प्रज्ञास्यन्ते। सुवर्णपुष्पस्य खलु पुन- R 368
रानन्द तथागतस्यार्हतः सम्यक्संबुद्धस्य अनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य इमान्येवंरूपाणि W 747
भयभैरवकान्ताराणि सर्वेण सर्वं सर्वथा सर्वं तदानीं न भविष्यन्ति, न प्रज्ञास्यन्ते॥

एवमुक्ते आयुष्मानानन्दो भगवन्तमेतदवोचत्—अनया भगवन् गङ्गदेवया भगिन्या कतमस्य तथागतस्यान्तिके प्रथमचित्तोत्पादकुशलमूलमवरोपितमनुत्तरायां सम्यक्संबोधौ? 30
एवमुक्ते भगवानायुष्मन्तमानन्दमेतदवोचत्—अनया आनन्द गङ्गदेवया भगिन्या दीपंकरस्य

[1] Mss. use both गङ्गदेवा and °देवी promiscuously.

तथागतस्यार्हतः सम्यक्संबुद्धस्यान्तिके प्रथमचित्तोत्पादकुशलमूलमवरोपितम्, अनुत्तरायां सम्यक्संबोधौ परिणामितं च । स च दीपंकरस्तथागतोऽर्हन् सम्यक्संबुद्धः सुवर्णपुष्पैरेवावकीर्णोऽनुत्तरां सम्यक्संबोधिं प्रार्थयमानया । यदा मया पञ्चभिरुत्पलैर्दीपंकरस्तथागतोऽर्हन् सम्यक्संबुद्धोऽवकीर्णः, अनुत्पत्तिकेषु च मया धर्मेषु क्षान्तिः प्रतिलब्धा, ततोऽहं दीपंकरेण 5 तथागतेनार्हता सम्यक्संबुद्धेन व्याकृतोऽनुत्तरायां सम्यक्संबोधौ–भविष्यसि त्वं माणवक अनागतेऽध्वनि शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवानिति । (W 748, R 369) तदा एतस्या भगिन्या मम व्याकरणं श्रुत्वा एवं चित्तमुदपादि–अहो बत अहमप्येवं व्याक्रियेय अनुत्तरायां सम्यक्संबोधौ यथायं माणवको व्याकृतोऽनुत्तरायां सम्यक्संबोधौ । एवं च आनन्द 10 एतस्या भगिन्या दीपंकरस्य तथागतस्यार्हतः सम्यक्संबुद्धस्यान्तिके प्रथमचित्तोत्पादकुशलमूलमवरोपितमभूदनुत्तरायां सम्यक्संबोधौ । एवमुक्ते आयुष्मानानन्दो भगवन्तमेतदवोचत्–कृतपरिकर्मा बतेयं भगवन् कृतपर्यन्ता गङ्गदेवा भगिनी व्याकृता अनुत्तरायां सम्यक्संबोधौ । एवमुक्ते भगवानायुष्मन्तमानन्दमेतदवोचत्–एवमेतदानन्द, एवमेतत् यथा वदसि–कृतपरिकर्मा बतेयं कृतपर्यन्ता गङ्गदेवा भगिनी व्याकृता अनुत्तरायां सम्यक्संबोधाविति ॥

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां गङ्गदेवीभगिनीपरिवर्तो नाम एकोनविंशतितमः ॥



१ W om. व्याकृतो.

## २० उपायकौशल्यमीमांसापरिवर्तो विंशतितमः।

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्–प्रज्ञापारमितायां भगवंश्चरता बोधिसत्त्वेन महासत्त्वेन कथं शून्यतायां परिजयः कर्तव्यः, कथं वा शून्यतासमाधिः समापत्तव्यः? भगवानाह–इह सुभूते बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूपं शून्यमिति प्रत्यवेक्षितव्यम्। एवं वेदना संज्ञा संस्काराः। विज्ञानं शून्यमिति प्रत्यवेक्षितव्यम्। तथा च प्रत्यवेक्षितव्यमविक्षिप्तया चित्तसंतत्या यथा प्रत्यवेक्षमाणो रूपमिति तां धर्मतां धर्मतया न समनुपश्येत्। तां च असमनुपश्यन् धर्मतां न साक्षात्कुर्याद्भूतकोटिम्। एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्–यद्भगवानेवमाह–न बोधिसत्त्वेन महासत्त्वेन शून्यता साक्षात्कर्तव्येति। कथं भगवन् तस्मिन् समाधौ स्थितो बोधिसत्त्वो महासत्त्वः शून्यतां न साक्षात्करोति? भगवानाह–यतः सुभूते बोधिसत्त्वो महासत्त्वः सर्वाकारवरोपेतां शून्यतां प्रत्यवेक्षते, न च साक्षात्करिष्यामीति प्रत्यवेक्षते, न च साक्षात्कर्तव्येति प्रत्यवेक्षते, परिजयं करिष्यामीति प्रत्यवेक्षते, परिजयस्यायं कालः, नायं कालः साक्षात्क्रियाया इति प्रत्यवेक्षते, असमाहित एवारम्बणे चित्तमुपनिबध्नाति–प्रज्ञापारमिता च मे परिगृहीता भविष्यति, न च साक्षात्कृतेति। अत्रान्तरा बोधिसत्त्वो महासत्त्वो न परिहीयते बोधिपक्षैर्धर्मैः, न च आस्रवक्षयं करोति, अत्र च परिजयं करोति। यस्मिन् समये बोधिसत्त्वो महासत्त्वः शून्यतासमाधिविमोक्षमुखेन विहरति, तस्मिन् समये बोधिसत्त्वेन महासत्त्वेन आनिमित्तेन च समाधिना विहर्तव्यम्, न च आनिमित्तं साक्षात्कर्तव्यम्। तत्कस्य हेतोः? एवमारूढकुशलमूलधर्मसमन्वागतो हि बोधिसत्त्वो महासत्त्वः–परिपाकस्यायं कालः, नायं कालः साक्षात्क्रियाया इति प्रत्यवेक्षते। प्रज्ञापारमितया च परिगृहीतो भूतकोटिं न साक्षात्करोति। तद्यथापि नाम सुभूते कश्चिदेव पुरुषः परमशूरश्च भवेत्, परमवीर्यसमन्वागतश्च भवेत्, दृढप्रतिष्ठानश्च भवेत्, अभिरूपश्च भवेत्, प्रासादिकश्च भवेत्, परमदर्शनीयश्च भवेत्, बहुगुणसमन्वागतश्च भवेत्, परमगुणसमन्वागतश्च भवेत्, परमैश्वर्यशीलश्रुतत्यागादिगुणैश्च समन्वागतो भवेत्, मेधावी च भवेत्, वचनसमर्थश्च भवेत्, प्रतिभानसंपन्नश्च भवेत्, प्रतिपत्तिसंपन्नश्च भवेत्, कालज्ञश्च भवेत्, देशज्ञश्च भवेत्, स्थानज्ञश्च भवेत्, इष्वस्त्रे च परमगतिं गतो भवेत्, बहुप्रहरणावरणश्च भवेत्, सर्वासु च कलासु परमकुशलो भवेत्, सुपरिनिष्पन्नतया सर्वेष्वेव च शिल्पस्थानेषु परमगतिको भवेत्, स्मृतिमांश्च भवेत्, मतिमांश्च भवेत्, गतिमांश्च भवेत्, धृतिमांश्च भवेत्, नीतिमांश्च भवेत्, सर्वशास्त्रविशारदश्च भवेत्, मित्रवांश्च भवेत्, अर्थवांश्च भवेत्, बलवांश्च भवेत्, अहीनाङ्गश्च भवेत्, परिपूर्णेन्द्रियश्च भवेत्, सर्वोपकरणसंपन्नश्च भवेत्, बहुजनस्य च प्रियो मनआपश्च भवेत्। स यद्यदेव किंचित्कार्यमारभेत, तत्र तत्र सर्वत्र निस्तरणसमर्थो भवेत्, नयेन च व्यवहरेत्, सर्वत्र चास्य महालाभो भवेत्। तेन महालाभेन समन्वागतः सन् बहुजनं संविभजेत्, सत्कर्तव्यं च सत्कुर्यात्, गुरुकर्तव्यं च गुरुकुर्यात्, मानयितव्यं च मानयेत्,

पूजयितव्यं च पूजयेत्। तत्किं मन्यसे सुभूते अपि नु स पुरुषस्ततोनिदानं भूयस्या मात्रया आत्तमनस्को भवेत्, प्रमुदितश्च भवेत्, प्रीतिसौमनस्यजातश्च भवेत्? सुभूतिराह–एवमेतद्भगवन्, एवमेतत्सुगत। भगवानाह–स खलु पुनः सुभूते पुरुषस्तया महासंपत्त्या समन्वागतो मातापितृपुत्रदारान् गृहीत्वा केनचिदेव कारणसामग्रीयोगेन महाटवीकान्तारं
5 प्रतिपन्नो भवेत् महाप्रतिभयं बालानां भीषणं रोमहर्षणम्। स तत्र प्रविष्टः संस्तान् मातापितृपुत्रदारानभयेनाभिनिमन्त्रयेत्–मा भैष्ट, मा भैष्ट, अहमितो युष्मान् महाभयभैरवादटवीकान्तारात्क्षेमेण स्वस्तिना शीघ्रमपक्रामयिष्यामि, शीघ्रं परिमोचयिष्यामीति। तत्र खलु पुनः सुभूते अटवीकान्तारे तस्य पुरुषस्य बहवः प्रत्यर्थिकाः बहवः प्रत्यमित्राः प्रत्युपस्थिता भवेयुः। तत्किं मन्यसे सुभूते अपि नु स शूरः पुरुषस्तैः प्रत्यर्थिकैः प्रत्यमित्रैरभ्युत्थितैरवि-
10 निवर्त्यो दृढवीर्यबलसमन्वागतः प्रज्ञावानतिस्निग्धः सानुक्रोशो धीरो महासंभारसमन्वागतस्तान् मातापितृपुत्रदारान् परित्यज्य ततो महाभयभैरवादटवीकान्तारादात्मानमेकमपक्रामयितव्यं मन्येत? सुभूतिराह–नो हीदं भगवन्। तत्कस्य हेतोः? तथा हि भगवंस्तस्य पुरुषस्य
R 373 तन्मातापितृपुत्रदारमपरित्यक्तम्, आध्यात्मिकश्च बाह्यश्च बलवान् संभारः। तस्य तत्र अटवीकान्तारे बहुतरकाश्च शूरतरकाश्च दृढप्रहरणतरकाश्च तेषां प्रत्यर्थिकानां प्रत्य-
15 मित्राणामन्ये उदारतरकाः प्रत्यर्थिकाः प्रत्यमित्रास्तिष्ठन्ति रक्षन्ति। ते तस्य प्रत्यर्थिकाः प्रत्यमित्रा अवतारप्रेक्षिणोऽवतारगवेषिणोऽवतारं न लप्स्यन्ते। तेन स भगवन् प्रतिबलः
W 753 पुरुषोऽक्षतो[1]ऽनुपहतस्तन्मातापितृपुत्रदारमात्मानं च ततो महाभयभैरवादटवीकान्ताराच्छक्तः क्षेमेण स्वस्तिना शीघ्रमपक्रामयितुं यावद्ग्रामं वा नगरं वा निगमं वा अनुप्राप्तः स्यात्॥

एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्–एवमेव सुभूते बोधिसत्त्वो महासत्त्वः
20 सर्वसत्त्वहितानुकम्पी मैत्रीविहारी करुणाविहारी मुदिताविहारी उपेक्षाविहारी उपाय-
W 754 कौशल्येन प्रज्ञापारमितया च परिगृहीतः कुशलमूलानि सम्यग्बुद्धानुज्ञातया परिणामनया परिणाम्य किंचापि शून्यतामानिमित्तमप्रणिहितं च समाधिविमोक्षमुखान्यवतरति, न त्वेव भूतकोटिं साक्षात्करोति, यदुत श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा। तत्कस्य हेतोः? तथा ह्यस्य बलवत्तमा दृढतमाश्च परिग्राहकाः, यदुत प्रज्ञापारमिता उपायकौशल्यं च। तेन
25 अस्यापरित्यक्ताः सर्वसत्त्वाः, तेनैष प्रतिबलः स्वस्तिना क्षेमेण अनुत्तरां सम्यक्संबोधिमभिसं-बोद्धुम्। यस्मिन् समये सुभूते बोधिसत्त्वो महासत्त्वः सर्वसत्त्वानामन्तिके मैत्रीचित्तमारम्बणी-कृत्य तान् परमया मैत्र्या परिबध्नाति, अत्रान्तरे बोधिसत्त्वो महासत्त्वः क्लेशपक्षं मारपक्षं
R 374 चातिक्रम्य श्रावकभूमिं प्रत्येकबुद्धभूमिं चातिक्रम्य तत्र समाधाववतिष्ठते। अप्राप्तश्च स सुभूते आस्रवक्षयं परमपारमितायां शून्यतायां परिजयं करोति। यस्मिन् समये सुभूते
30 बोधिसत्त्वो महासत्त्वः शून्यतासमाधिविमोक्षमुखेन विहरति, अत्रान्तरे बोधिसत्त्वो महासत्त्वो न चेदानीं नानिमित्तेन समाधिना विहरति। न चानेन आनिमित्तः समाधिः साक्षात्कृतो

---

१ R अक्कतो for अक्षतो.

भवति। तद्यथापि नाम सुभूते पक्षी शकुनिराकाशेऽन्तरीक्षे चरति, न च भूमौ पतति, न च कंचिन्निश्रयं निश्रित्य तिष्ठति, आकाश एवान्तरीक्षे विहरति, न च तत्रापि निश्रितो न प्रतिष्ठितः। एवमेव सुभूते बोधिसत्त्वो महासत्त्वः शून्यताविहारेण विहरति, शून्यतायां परिजयं करोति, आनिमित्तविहारेण च विहरति, आनिमित्ते च परिजयं करोति, अप्रणि- W 755
हितविहारेण च विहरति,अप्रणिहिते च परिजयं करोति। न च शून्यतायां वा आनिमित्ते 5
वा अप्रणिहिते वा पतत्यपरिपूर्णैर्बुद्धधर्मैः। तद्यथापि नाम सुभूते बलवानिष्वस्त्राचार्य इष्वस्त्रशिक्षायां सुशिक्षितः सुपरिनिष्ठितः। स ऊर्ध्वं काण्डं क्षिपेत्। ऊर्ध्वं काण्डं क्षिप्त्वा तदन्यैः काण्डैस्तत्काण्डं भूमौ पतत् प्रतिनिवारयेत्, वारयेत्, तस्य पौर्विकस्य काण्डस्य काण्डपरंपरया भूमौ पतनं न दद्यात्, तावत्तत्काण्डं भूमौ न पतेत्, यावन्नाकाङ्क्षेत्— अहो बतेदं काण्डं भूमौ पतेदिति। एवमेव सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां 10
चरन् उपायकौशल्यपरिगृहीतः तावत्तां परमां भूतकोटिं न साक्षात्करोति, यावन्न तानि कुशलमूलान्यनुत्तरायां सम्यक्संबोधौ परिपक्वानि सुपरिपक्वानि। यदा तानि कुशलमूलान्यनु- त्तरायां सम्यक्संबोधौ परिपक्वानि भवन्ति सुपरिपक्वानि, तदा तां परमां भूतकोटिं साक्षा- R 375
त्करोति। तस्मात्तर्हि सुभूते बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता प्रज्ञापारमितां भाव- यता एवमेतेषां धर्माणां गम्भीरधर्मता प्रत्यवेक्षितव्या उपनिध्यातव्या, न च साक्षात्कर्तव्या॥ 15

एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—दुष्करकारको भगवन् बोधिसत्त्वो W 756
महासत्त्वः। परमदुष्करकारको भगवन् बोधिसत्त्वो महासत्त्वः, यः शून्यतायां चरति, शून्यतया च विहरति, शून्यतां च समाधिं समापद्यते, न च भूतकोटिं साक्षात्करोति। अत्याश्चर्यमिदं भगवन्, परमाश्चर्यमिदं सुगत। एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवो- चत्—एवमेतत्सुभूते, एवमेतत्। दुष्करकारको बोधिसत्त्वो महासत्त्वः। परमदुष्करकारको 20
बोधिसत्त्वो महासत्त्वः यः शून्यतायां चरति, शून्यतायां च विहरति, शून्यतां च समाधिं समापद्यते, न च भूतकोटिं साक्षात्करोति। तत्कस्य हेतोः? तथा हि सुभूते बोधिसत्त्वस्य महासत्त्वस्य सर्वसत्त्वा अपरित्यक्ताः। तस्येमे एवंरूपाः प्रणिधानविशेषा भवन्ति—मयैते सर्वसत्त्वाः परिमोचयितव्या इति। यदा बोधिसत्त्वो महासत्त्व एवं चित्तमभिनिर्हरति—सर्वसत्त्वा ममापरित्यक्ताः, मयैते परिमोचयितव्या इति, शून्यतां च समाधिविमोक्षमुखमभिनिर्हरति, 25
आनिमित्तं च समाधिविमोक्षमुखमभिनिर्हरति, अप्रणिहितं च समाधिविमोक्षमुखमभिनि- र्हरति, तदा उपायकौशल्यसमन्वागतो बोधिसत्त्वो महासत्त्वो वेदितव्यः—नायमन्तरा भूतकोटिं साक्षात्करिष्यत्यपरिपूर्णैर्बुद्धधर्मैः। तत्कस्य हेतोः? तथा हि अस्योपायकौशल्यं रक्षां करोति। स चैवास्य चित्तोत्पादो यत्तस्य सर्वसत्त्वा अपरित्यक्ताः। स एवमनेन R 376
चित्तोत्पादेनोपायकौशल्येन समन्वागतोऽन्तरा भूतकोटिं न साक्षात्करोति॥ 30

पुनरपरं सुभूते यदा बोधिसत्त्वो महासत्त्व इमानि गम्भीराणि स्थानानि प्रत्यवेक्षते, W 757
प्रत्यवेक्षितुकामो वा भवति—तद्यथा शून्यतां समाधिविमोक्षमुखम्, आनिमित्तं समाधिविमोक्ष-

मुखम्, अप्रणिहितं समाधिविमोक्षमुखम्, तेनैवं चित्तमभिनिर्हर्तव्यम्–दीर्घरात्रममी सत्त्वाः सत्त्वसंज्ञया उपलम्भे चरन्ति । तेषां सत्त्वानामुपलम्भदृष्टिकानामुपलम्भदृष्टिप्रहाणाय अनुत्तरां सम्यक्संबोधिमभिसंबुध्य धर्मं देशयिष्यामि । इति संचिन्त्य शून्यतां समाधिविमोक्षमुखं समापद्यते, न च भूतकोटिं साक्षात्करोति । आनिमित्तं समाधिविमोक्षमुखं 5 समापद्यते, न च भूतकोटिं साक्षात्करोति । अप्रणिहितं समाधिविमोक्षमुखं समापद्यते, न च भूतकोटिं साक्षात्करोति । एवं बोधिसत्त्वो महासत्त्वोऽनेन चित्तोत्पादेन अनेन चोपायकौशल्येन समन्वागतो नान्तरा भूतकोटिं साक्षात्करोति, न च परिहीयते मैत्रीसमाधितो न करुणामुदितोपेक्षासमाधितः । तत्कस्य हेतोः? उपायकौशल्यपरिगृहीतो हि बोधिसत्त्वो महासत्त्वो भूयस्या मात्रया विवर्धते शुक्लैर्धर्मैः । तीक्ष्णतराणि चास्य श्रद्धादीनीन्द्रियाणि 10 भवन्ति, बलबोध्यमार्गं च प्रतिलभते ॥

W 758 पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्यैवं भवति–दीर्घरात्रममी सत्त्वा धर्मसंज्ञया उपलम्भे चरन्ति । तेषामुपलम्भदृष्टिकानामुपलम्भदृष्टिप्रहाणाय अनुत्तरां सम्यक्संबोधिमभिसंबुध्य धर्मं देशयिष्यामीति । R 377 सोऽनेन चित्तोत्पादेन पौर्वकेण चोपायकौशल्येन समन्वागतः शून्यतां समाधिविमोक्षमुखं समापद्यते । न च भूतकोटिं साक्षात्करोति । न च परिहीयते 15 मैत्रीकरुणामुदितोपेक्षासमाधितः । तत्कस्य हेतोः? उपायकौशल्यपरिगृहीतो बोधिसत्त्वो महासत्त्वो भूयस्या मात्रया विवर्धते शुक्लैर्धर्मैः । तीक्ष्णतराणि चास्य श्रद्धादीनीन्द्रियाणि भवन्ति । बलबोध्यङ्गानि मार्गं च प्रतिलभते ॥

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्यैवं भवति–दीर्घरात्रममी सत्त्वा निमित्तसंज्ञया निमित्ते चरन्ति । तेषां निमित्तसंज्ञाप्रहाणाय अनुत्तरां सम्यक्संबोधिमभिसंबुध्य धर्मं देश- 20 यिष्यामीति । स आनिमित्तं समाधिविमोक्षमुखं समापद्यते सत्त्वानां कृतशः । सोऽनेन चित्तो- W 759 त्पादेन पौर्वकेण चोपायकौशल्येन समन्वागतः आनिमित्तं समाधिविमोक्षमुखं समापद्यते, न च भूतकोटिं साक्षात्करोति । न च परिहीयते मैत्र्याः करुणाया मुदिताया उपेक्षायाः सर्वसमाधितः । तत्कस्य हेतोः? उपायकौशल्यपरिगृहीतो हि बोधिसत्त्वो महासत्त्वो भूयस्या मात्रया विवर्धते शुक्लैर्धर्मैः । तीक्ष्णतराणि चास्य श्रद्धादीनीन्द्रियाणि भवन्ति । बलानि बोध्य- 25 ङ्गानि मार्गं च प्रतिलभते ॥

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्यैवं भवति–दीर्घरात्रममी सत्त्वा नित्यसंज्ञया सुखसंज्ञया आत्मसंज्ञया शुभसंज्ञया च विपर्यस्ताः । तथा करिष्यामि यथा अनुत्तरां सम्यक्संबोधिमभिसंबुध्य नित्यसंज्ञायाः सुखसंज्ञायाः आत्मसंज्ञायाः शुभसंज्ञाया विपर्यासस्य प्रहाणाय धर्मं देशयिष्यामि–अनित्यमेतत्सर्वं न नित्यमिति । दुःखमेतत्सर्वं न सुखमिति । अनात्मक- 30 मेतत्सर्वं नैतत्सात्मकमिति । अशुभमेतत्सर्वं नैतच्छुभमिति । सोऽनेन चित्तोत्पादेन समन्वा- R 378 गतः पौर्वकेण चोपायकौशल्येन प्रज्ञापारमितया च परिगृहीतो नान्तरा भूतकोटिं साक्षा-

१ W धर्मान्.

त्करोति अपरिपूर्णेषु बुद्धधर्मेषु। एवमप्रणिहितं समाधिविमोक्षमुखमुपसंपद्य विहरति। न च भूतकोटिं साक्षात्करोति। न च परिहीयते मैत्रीतो वा करुणातो वा मुदितातो वा उपेक्षातो वा। तत्कस्य हेतोः? उपायकौशल्यपरिगृहीतो बोधिसत्त्वो महासत्त्वो भूयस्या मात्रया विवर्धते शुक्लैर्धर्मैः। तीक्ष्णतराणि चास्य श्रद्धादीनीन्द्रियाणि भवन्ति। बलानि बोध्यङ्गानि मार्गं च प्रतिलभते। यो हि कश्चित्सुभूते बोधिसत्त्वो महासत्त्व इमं चित्तोत्पाद- 5 W 760 मुत्पादयति, इत्यपीमे सत्त्वा दीर्घरात्रमुपलम्भे चरिताविनः एतर्ह्युपलम्भे चरन्ति। निमित्तसंज्ञायां चरिताविनः एतर्ह्यपि निमित्तसंज्ञायां चरन्ति। विपर्यासे चरिताविनः एतर्ह्यपि विपर्यासे चरन्ति। पिण्डसंज्ञायां चरिताविनः एतर्ह्यपि पिण्डसंज्ञायां चरन्ति। अभूतसंज्ञायां चरिताविनः एतर्ह्यपि अभूतसंज्ञायां चरन्ति। मिथ्यादृष्टौ चरिताविनः एतर्ह्यपि मिथ्यादृष्टौ चरन्ति। तथा करिष्यामि यथैषामेते दोषाः सर्वेण सर्वं सर्वथा सर्वं न भविष्यन्ति, न 10 प्रज्ञास्यन्ते[1]। इत्येवं सर्वसत्त्वान् समन्वाहरति। एवं च बोधिसत्त्वो महासत्त्वोऽनेन स्मृतिसमन्वाहारेण अनेन चित्तोत्पादेन समन्वागतः उपायकौशल्येन च समन्वागतः प्रज्ञापारमितया च परिगृहीतः एवमेतेषां गम्भीराणां धर्माणां धर्मतां प्रत्यवेक्षमाणः शून्यतातो वा आनिमित्ततो वा अप्रणिहिततो वा अनभिसंस्कारतो वा अनुत्पादतो वा अजातितो वा अभावतो R 379 वा। अस्थानमेतत्सुभूतेऽनवकाशः, यत्स बोधिसत्त्वो महासत्त्व एवं ज्ञानसमन्वागतोऽनभिसंस्कारे 15 वा पतेत्, त्रैधातुकेन वा सार्धं संवसेत्, नैतत्स्थानं विद्यते॥

एवं हि सुभूते बोधिसत्त्वो महासत्त्वः परिप्रष्टव्यो बोधिसत्त्वेन महासत्त्वेन अनुत्तरां W 761 सम्यक्संबोधिमभिसंबोद्धुकामेन—कतमेषां धर्माणां परिजयः कर्तव्यः? कियद्रूपाणि च चित्तान्यभिनिर्हर्तव्यानि? यानि चित्तान्यभिनिर्हरन् बोधिसत्त्वो महासत्त्वो न शून्यतां साक्षात्करोति, न आनिमित्तं साक्षात्करोति, न अप्रणिहितं साक्षात्करोति, न अनभि- 20 संस्कारं साक्षात्करोति, न अनुत्पादं साक्षात्करोति, न अजातिं साक्षात्करोति, न अभावं साक्षात्करोति, प्रज्ञापारमितां च भावयति। सचेत्सुभूते बोधिसत्त्वो महासत्त्वो बोधिसत्त्वेन महासत्त्वेनैवं पृष्टे[2] एवं व्याकरोति—शून्यतैव बोधिसत्त्वेन महासत्त्वेन मनसि कर्तव्या। आनिमित्तमेव अप्रणिहितमेव अनभिसंस्कार एव अनुत्पाद एव अजातिरेव अभाव एव बोधिसत्त्वेन महासत्त्वेन मनसि कर्तव्य इति। सचेत्तं सर्वसत्त्वापरित्यागचित्तोत्पादं नोप- 25 दर्शयेत्, उपायकौशल्यं वा न व्याकुर्यात्, वेदितव्यमेतत्सुभूते नायं व्याकृतो बोधिसत्त्वो महासत्त्वोऽनुत्तरायां सम्यक्संबोधावविनिवर्तनीयत्वे तैः पौर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैः। तत्कस्य हेतोः? यो ह्यसावविनिवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्यावेणिको धर्मः, तं धर्मं न सूचयति, न प्रभावयति, नोपदर्शयति, न प्रजानाति, परिपृष्टो न व्याकरोति, न विसर्जयति, न तां भूमिमवक्रामयति, योऽविनिवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्य भूमिरिति॥ 30

सुभूतिराह—स्यात्पुनर्भगवन् पर्यायो येन पर्यायेण बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयो R 380

१ W प्रज्ञायन्ते. २ W पृष्टं.

W 762 भवेत्? भगवानाह—स्यात्सुभूते स पर्यायो येन पर्यायेण स बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयो भवेत्। सचेद्बोधिसत्त्वो महासत्त्व इमां प्रज्ञापारमितां श्रुत्वा वा अश्रुत्वा वा एवं प्रतिपद्येत, एवं विसर्जयेत्—अविनिवर्तनीयो बोधिसत्त्वो महासत्त्वो वेदितव्यः। सुभूतिराह—तेन हि भगवन् बहवो बोधाय चरन्ति। अल्पकाः पुनर्य एवं विसर्जयन्ति। भगवानाह—तथा हि 5 सुभूते अल्पकास्ते बोधिसत्त्वा महासत्त्वा ये व्याकृता अविनिवर्तनीयायां ज्ञानभूमौ। ये पुनस्ते व्याकृता भविष्यन्ति, ते एवं विसर्जयिष्यन्ति। ते ते बोधिसत्त्वा महासत्त्वा उत्तप्तावरोपितकुशलमूला वेदितव्याः। ते ते बोधिसत्त्वा महासत्त्वा असंहार्याः सदेवमानुषासुरेण लोकेन। W 763 सचेत्पुनः सुभूते बोधिसत्त्वो महासत्त्वः स्वप्नान्तरगतोऽपि स्वप्नोपमाः सर्वधर्मा इति व्यवलोकयति, न च साक्षात्करोति, इदमपि सुभूते अविनिवर्तनीयस्य 10 बोधिसत्त्वस्य महासत्त्वस्य अविनिवर्तनीयलक्षणं वेदितव्यम्॥

W 764 पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः स्वप्नान्तरगतोऽपि श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा त्रैधातुकाय च स्पृहामनुशंसाचित्तं नोत्पादयति, इदमपि सुभूते अविनिवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्य अविनिवर्तनीयलक्षणं वेदितव्यम्॥

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः स्वप्नान्तरगतोऽप्यनेकशतायाः पर्षदोऽनेक- 15 सहस्राया यावदनेककोटीनियुतशतसहस्रायाः पर्षदो मध्यगतं मण्डलमाले निषण्णं भिक्षुसंघ- R 381 परिवृतं बोधिसत्त्वसंघपुरस्कृतं धर्मं देशयन्तं तथागतमर्हन्तं सम्यक्संबुद्धमात्मानं पश्यति। इदमपि सुभूते अविनिवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्याविनिवर्तनीयलक्षणं वेदितव्यम्॥

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः स्वप्नान्तरगतोऽपि वैहायसमभ्युद्गम्य सत्त्वेभ्यो धर्मं देशयति, तां च व्यामप्रभां संजानीते, तांश्च भिक्षूनभिनिर्मिमीते, येऽन्यासु दिक्षु 20 गत्वा अन्येषु लोकधातुषु बुद्धकृत्यं कुर्वन्ति, धर्मं च देशयन्ति। एवमपि सुभूते स्वप्नान्तरगतोऽविनिवर्तनीयो बोधिसत्त्वो महासत्त्वः संजानीते। इदमपि सुभूते अविनिवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्य अविनिवर्तनीयलक्षणं वेदितव्यम्॥

W 765 पुनरपरं सुभूते स्वप्नान्तरगतो बोधिसत्त्वो महासत्त्वो नोत्त्रस्यति, न संत्रस्यति, न संत्रासमापद्यते। ग्रामघाते वा नगरघाते वा निगमघाते वा जनपदघाते वा राष्ट्रघाते वा 25 अग्निदाहे वा वर्तमाने व्यालमृगान् वा ततोऽन्यानपि वा क्षुद्रमृगजातीन् दृष्ट्वा शिरश्छेदे वा प्रत्युपस्थिते ततोऽन्यान्यपि वा महाभयभैरवाणि दुःखदौर्मनस्यानि वा प्राप्य ततोऽन्येषामपि वा सत्त्वानां महाभयभैरवाणि दुःखानि दृष्ट्वा नास्य भयभैरवमुत्पद्यते, नोत्त्रस्यति न संत्रस्यति न संत्रासमापद्यते। ततश्च स्वप्नान्तरात्प्रतिविबुद्धस्य समनन्तरव्युत्थितस्यैवं भवति—स्वप्नोपममिदं सर्वं त्रैधातुकम्। एवं च मया अनुत्तरां सम्यक्संबोधिमभिसंबुध्य सम्यग्देशयता 30 धर्मो देशयितव्य इति। इदमपि सुभूते अविनिवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्य अविनिवर्तनीयलक्षणं वेदितव्यम्॥

पुनरपरं सुभूते अविनिवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्य स्वप्नान्तरगतस्य नैरयिकान् सत्त्वान् दृष्ट्वा एवं भवति–तथा करिष्यामि यथा मेऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य बुद्धक्षेत्रे सर्वेण सर्वं सर्वथा सर्वं सर्वेऽप्यपाया न भविष्यन्तीति। इदमपि सुभूते अविनिवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्य अपायपरिशुद्धिलक्षणं वेदितव्यम्॥ R 382

तत्र सुभूते कथं विज्ञायेत अस्याविनिवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्य अनुत्तरां 5 सम्यक्संबोधिमभिसंबुद्धस्य बुद्धक्षेत्रे सर्वेण सर्वं सर्वथा सर्वं सर्वेऽप्यपाया न भविष्यन्तीति? सचेत्सुभूते बोधिसत्त्वो महासत्त्वः स्वप्नान्तरगतोऽपि निरयगतांस्तिर्यक्प्रेतगतान् वा सत्त्वान् दृष्ट्वा स्मृतिं प्रतिलभते। स तां स्मृतिं प्रतिलभ्य एवं चिन्तयति–तथा करिष्यामि यथा मेऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य[1] बुद्धक्षेत्रे सर्वेण सर्वं सर्वथा सर्वं सर्वेऽप्यपाया न भविष्यन्तीति। एवं सुभूते बोधिसत्त्वस्य महासत्त्वस्य अपायपरिशुद्धिलक्षणं वेदितव्यम्। 10 इदमपि सुभूते अविवर्तनीयस्य बोधिसत्त्वस्य महासत्त्वस्य अविनिवर्तनीयलक्षणं वेदितव्यम्॥ W 766

पुनरपरं सुभूते स्वप्नान्तरगतो बोधिसत्त्वो महासत्त्वो नगरदाहे वा ग्रामदाहे वा वर्तमाने प्रतिविबुद्धः संस्ततः स्वप्नादेवं समन्वाहरति यथा–मया स्वप्नान्तरगतेन ये आकाराः यानि लिङ्गानि यानि निमित्तानि दृष्टानि, यैराकारैर्यैर्लिङ्गैर्यैर्निमित्तैरविवर्तनीयो बोधिसत्त्वो महासत्त्वो धारयितव्यः, ते आकारास्तानि लिङ्गानि तानि निमित्तानि मम संविद्यन्ते। 15 एतेन सत्येन सत्यवचनेन अयं नगरदाहो वा ग्रामदाहो वा वर्तमान उपशाम्यतु, शीतीभवतु, अस्तं गच्छतु। सचेत्सुभूते ग्रामदाहो वा नगरदाहो वा उपशाम्यति, शीतीभवति, अस्तं गच्छति, वेदितव्यमेतत्सुभूते व्याकृतोऽयं बोधिसत्त्वो महासत्त्वस्तैः पौर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैरविनिवर्तनीयोऽनुत्तरायाः सम्यक्संबोधेरिति। सचेन्नोपशाम्यति, न शीतीभवति, नास्तं गच्छति, वेदितव्यमेतत्सुभूते नायं व्याकृतो बोधिसत्त्वो महासत्त्वोऽनुत्तरायां 20 सम्यक्संबोधाविति। सचेत्पुनः सुभूते सोऽग्निदाहोऽतिक्रम्य गृहाद्गृहं रथ्याया रथ्यामन्यतरान्यतरां रथ्यां वा गृहं वा गच्छति, दहति, नोपशाम्यति, न शीतीभवति, नास्तं गच्छति, वेदितव्यमेतत्सुभूते धर्मप्रत्याख्यानं दुष्प्रज्ञसंवर्तनीयं तेन बोधिसत्त्वेन महासत्त्वेन कर्मोपचितम्। ततोऽस्यैतद्दृष्टधर्मसंवर्तनीयमेव कर्म विपच्यते। तत एव धर्मप्रत्याख्यानात्सावशेषं कर्मैवं विपच्यते। इत्ययं सुभूते हेतुरयं प्रत्ययोऽस्य बोधिसत्त्वस्य महासत्त्वस्य 25 अविनिवर्तनीयलक्षणताया इति। अयमपि सुभूते बोधिसत्त्वो महासत्त्वोऽविनिवर्तनीयोऽनुत्तरायाः सम्यक्संबोधेर्धारयितव्यः॥ R 383 W 767

पुनरपरं सुभूते यैराकारैर्यैर्लिङ्गैर्यैर्निमित्तैरविनिवर्तनीयो बोधिसत्त्वो महासत्त्वो धारयितव्यः, तानाकारांस्तानि लिङ्गानि तानि निमित्तानि देशयिष्यामि। तत्साधु च सुष्ठु च शृणु, मनसि कुरु, भाषिष्येऽहं ते। साधु भगवन्नित्यायुष्मान् सुभूतिर्भगवतः प्रत्यश्रौषीत्। 30 भगवानेतदवोचत्–सचेत्सुभूते कश्चिदेव पुरुषो वा स्त्री वा दारको वा दारिका वा

[1] W अभिसंबुध्य.

W 768 अमनुष्येण गृहीतो भवेदाविष्टः। तत्र बोधिसत्त्वेन महासत्त्वेन उपसंक्रम्य एवमधिष्ठानं
R 384 समन्वाहर्तव्यम् । सचेदहं तैः पौर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैर्व्याकृतोऽनुत्तरायां
सम्यक्संबोधौ, परिशुद्धो मेऽध्याशयः अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम्। यथाहमनुत्तरां
सम्यक्संबोधिमभिसंबोद्धुकामः, परिशुद्धो मे मनसिकारोऽनुत्तरायां सम्यक्संबोधौ। अपगतं
5 मे श्रावकचित्तं प्रत्येकबुद्धचित्तं च, तेन मया अनुत्तरा सम्यक्संबोधिरभिसंबोद्धव्या। नाहं
नानुत्तरां सम्यक्संबोधिमभिसंभोत्स्ये। अभिसंभोत्स्य एवाहमनुत्तरां सम्यक्संबोधिम्। येऽपि
ते अप्रमेयेष्वसंख्येयेषु लोकधातुषु बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति, न तेषां
तथागतानामर्हतां सम्यक्संबुद्धानां किंचिदज्ञातं वा अदृष्टं वा अविदितं वा असाक्षात्कृतं
वा अनभिसंबुद्धं वा। यथा ते बुद्धा भगवन्तो जानन्तो ममाध्याशयम्—इत्यप्यहमनुत्तरां
10 सम्यक्संबोधिमभिसंभोत्स्ये इति। अनेन सत्येन सत्यवचनेन इयं स्त्री वा पुरुषो वा दारको
वा दारिका वा येन अमनुष्यग्रहेण गृहीतो वा आविष्टो वा, सोऽपक्रामतु। सचेत्सोऽमनुष्यः
एवं भाषमाणेन बोधिसत्त्वेन महासत्त्वेन नापक्रामति, वेदितव्यमेतत्सुभूते नायं व्याकृतो
बोधिसत्त्वो महासत्त्वस्तैः पौर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैरनुत्तरायां सम्यक्संबोधाविति।
सचेत्पुनः सुभूते एवं भाषमाणस्य बोधिसत्त्वस्य महासत्त्वस्य सोऽमनुष्योऽपक्रामति,
15 वेदितव्यमेतत्सुभूते व्याकृतोऽयं बोधिसत्त्वो महासत्त्वस्तैः पौर्वकैस्तथागतैरर्हद्भिः सम्यक्सं-
बुद्धैरनुत्तरायां सम्यक्संबोधाविति॥

W 769 आर्याष्टसाहस्रिकायां प्रज्ञापारमितायामुपायकौशल्यमीमांसापरिवर्तो नाम विंशतितमः॥



# २१ मारकर्मपरिवर्त एकविंशतितमः ।

तत्र खलु पुनः सुभूते बोधिसत्त्वो महासत्त्व एवं भाषिष्यते—येन सत्येन सत्यवचनेन अहं व्याकृतः तैः पौर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैरनुत्तरायां सम्यक्संबोधौ, तेन सत्येन सत्यवचनेन अयममनुष्योऽपक्रामत्विति । तत्र सुभूते मारः पापीयानौत्सुक्यमापत्स्यते तस्य अमनुष्यस्यापक्रमणाय । तत्कस्य हेतोः ? मारो ह्यत्र पापीयांस्तस्य बोधिसत्त्वस्य महासत्त्वस्य 5 चिरयानसंप्रस्थितस्यान्तिके बलवत्तरं तेजोवत्तरं चोद्योगमापत्स्यते—कथमयममनुष्योऽपक्रामेदिति । एवं सोऽमनुष्यो माराधिष्ठानेनापक्रमिष्यति । एवं च तस्य बोधिसत्त्वस्य महासत्त्वस्य भविष्यति-ममैषोऽनुभावेन अमनुष्योऽपक्रान्त इति । न पुनः स एवं ज्ञास्यति-मारस्यैषोऽनुभावेन अमनुष्योऽपक्रान्त इति । स तेन तावन्मात्रकेणौत्सुक्यमापत्स्यते । स तेनौत्सुक्येन ततोऽन्यान् बोधिसत्त्वान् महासत्त्वानवमंस्यते उच्चग्घयिष्यति उल्लापयिष्यति कुत्सयिष्यति 10 पंसयिष्यति—अहं व्याकृतस्तैः पौर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैरनुत्तरायां सम्यक्संबोधाविति । स तेन तावन्मात्रकेण भूयो मानं जनयिष्यति, मानं संजनयिष्यति, मानं वर्धयिष्यति, मानं संवर्धयिष्यति, मानं स्तम्भयिष्यति, मानमुपस्तम्भयिष्यति, मानं बृंहयिष्यति, मानमुपबृंहयिष्यति, मानमुत्पादयिष्यति । स तेन मानेन अतिमानेन मानातिमानेन मिथ्यामानेन अभिमानेन दूरीकरिष्यति सर्वज्ञताम्, दूरीकरिष्यत्यनुत्तरं बुद्धज्ञानम्, स्वयंभू- 15 ज्ञानम्, सर्वज्ञज्ञानम् । दूरीकरिष्यत्यनुत्तरां सम्यक्संबोधिम् । स तथारूपाणि कल्याणमित्राणि कल्याणधर्मण उदाराधिमुक्तिकानध्याशयसंपन्नानुपायकुशलानविनिवर्तनीयधर्मसमन्वागतांश्च बोधिसत्त्वान् महासत्त्वान् दृष्ट्वा अभिमानमुत्पाद्य अवमन्यमानस्तथारूपाणि कल्याणमित्राणि न सेविष्यते, न भजिष्यते, न पर्युपासिष्यते, न परिप्रक्ष्यति । तदेव मारबन्धनं गाढीकरिष्यति । तस्य द्वे भूमी प्रतिकाङ्क्षितव्ये—श्रावकभूमिर्वा प्रत्येकबुद्धभूमिर्वा । एवं सुभूते 20 सत्याधिष्ठानेन मारः पापीयानचिरयानसंप्रस्थितस्य बोधिसत्त्वस्य महासत्त्वस्य अल्पश्रद्धस्य अल्पश्रुतस्य कल्याणमित्रविरहितस्य प्रज्ञापारमितया अपरिगृहीतस्य उपायकौशल्यविरहितस्य अन्तरायं करिष्यत्यनुत्तरायाः सम्यक्संबोधेः । इदमपि सुभूते बोधिसत्त्वस्य महासत्त्वस्य मारकर्म वेदितव्यम् ॥

R 385 W 771 R 386 W 772

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य नामापदेशेनापि मारकर्म भविष्यति । 25 कथं च सुभूते बोधिसत्त्वस्य महासत्त्वस्य नामापदेशेनापि मारकर्म भविष्यति ? इह सुभूते बोधिसत्त्वं महासत्त्वं नामापदेशेनापि नामाधिष्ठानेनापि मारः पापीयानुपसंक्रमिष्यति । अन्यतरान्यतरेण वेषेणोपसंक्रम्य एवं वक्ष्यति—तैर्व्याकृतस्त्वं पौर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैरनुत्तरायां सम्यक्संबोधौ । तत्कस्य हेतोः ? तव हीदं नामधेयम् । इदं ते मातुर्नामधेयम् । इदं ते पितुर्नामधेयम् । इदं ते भ्रातुर्नामधेयम् । इदं ते भगिन्या नामधेयम् । 30 इदं ते मित्रामात्यज्ञातिसालोहितानां नामधेयम् । यावदासप्तमं मातामहपितामहयुगस्य नामधेयमुदीरयिष्यति—अमुष्यां दिशि त्वं जातः, अमुष्मिन् जनपदे अमुष्मिन् ग्रामे वा

W 773

R 387 नगरे वा निगमे वा जात इति। सचेत्प्रकृत्या[1] मृदुको भविष्यति, तमेनमेवं वक्ष्यति–पूर्वमपि त्वमेव मृदुकोऽभूः। सचेत्प्रकृत्या तीक्ष्णेन्द्रियो भविष्यति, ततस्तमेवं वक्ष्यति–पूर्वमपि त्वं तीक्ष्णेन्द्रियोऽभूः। सचेदारण्यको भविष्यति, सचेत्पिण्डपातिको भविष्यति, सचेत्पांसुकूलिको भविष्यति, सचेत्खलुपश्चाद्भक्तिको भविष्यति, सचेदेकासनिको भविष्यति, सचेद्याथा-

W 774 5 संस्तरिको भविष्यति, सचेत्त्रैचीवरिको भविष्यति, सचेत् श्मशानिको भविष्यति, सचेद्वृक्षमूलिको भविष्यति, सचेन्नैषद्यिको भविष्यति, सचेदभ्यवकाशिको भविष्यति, सचेन्नामन्तिको भविष्यति, सचेदल्पेच्छः संतुष्टः प्रविविक्तो भविष्यति, सचेदपगतपादम्रक्षणो भविष्यति, सचेन्मृदुभाषी अल्पवाग् भविष्यति, तमेनं मारः पापीयांस्तेन तेन दृष्टधार्मिकेण गुणेनादेक्ष्यति–पूर्वमपि त्वमनेन चानेन च गुणेन समन्वागतोऽभूः। नियतस्त्वं व्याकृतस्तैः पौर्वकै-

10 स्तथागतैरर्हद्भिः सम्यक्संबुद्धैरनुत्तरायां सम्यक्संबोधौ अविनिवर्तनीयायां बोधिसत्त्वभूमौ। तत्कस्य हेतोः? तथा हि ते अमी एवंरूपा धुतगुणाः संविद्यन्ते। निश्चयेन त्वं पूर्वमप्येतैरेव धुतगुणैः समन्वागतोऽभूः। एवं स तेन पौर्वकेण नामापदेशेन नामाधिष्ठानेन प्रत्युत्पन्नधुतगुणसंलेखेन च मन्यनामुत्पादयिष्यति। तस्यैवं भविष्यति–व्याकृतोऽहं तैः

W 775 पौर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैरनुत्तरायां सम्यक्संबोधौ, यथा मे अमी गुणाः संविद्यन्ते।

15 तं च मारः पापीयानेवं वक्ष्यति–अविनिवर्तनीयस्त्वं व्याकृतस्तथागतेनार्हता सम्यक्संबुद्धेन

R 388 अनुत्तरायां सम्यक्संबोधौ। तत्कस्य हेतोः? तथा हि तव एते एवंरूपा धुतगुणा संविद्यन्ते। तस्य खलु पुनः सुभूते मारः पापीयान् कदाचिद्भिक्षुवेषेणोपसंक्रमिष्यति, कदाचिद्भिक्षुणीवेषेण, कदाचिदुपासकवेषेण, कदाचिदुपासिकावेषेण, कदाचिद्ब्राह्मणवेषेण, कदाचिद्गृहपतिवेषेण, कदाचिन्मातृवेषेण, कदाचित्पितृवेषेण, कदाचि-

20 द्भ्रातृवेषेण, कदाचिद्भगिनीवेषेण, कदाचिन्मित्रामात्यज्ञातिसालोहितवेषेण उपसंक्रमिष्यति। उपसंक्रम्यैवं वक्ष्यति–व्याकृतस्त्वं पौर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैरनुत्तरायां सम्यक्संबोधौ अविनिवर्तनीयायां बोधिसत्त्वभूमौ। तत्कस्य हेतोः? तथा हि ते एवंरूपा धुतगुणाः संविद्यन्ते, येऽविनिवर्तनीयानां बोधिसत्त्वानां महासत्त्वानां गुणाः। ये खलु पुनः सुभूते मया अविनिवर्तनीयानां बोधिसत्त्वानां महासत्त्वानां गुणा आख्याताः, आकारा लिङ्गानि

25 निमित्तानि चाख्यातानि, तानि तस्य न भविष्यन्ति। वेदितव्यमेतत्सुभूते ततोऽन्यैर्बोधिसत्त्वैर्महासत्त्वैः–माराधिष्ठितो बतायं बोधिसत्त्वो महासत्त्व इति। तत्कस्य हेतोः? ये आकारा यानि लिङ्गानि यानि निमित्तानि अविनिवर्तनीयानां बोधिसत्त्वानां महासत्त्वानाम्, तानि तस्य न भविष्यन्ति। स खलु पुनः सुभूते बोधिसत्त्वो महासत्त्वोऽनेन नामाधिष्ठानेन अभिमानमुत्पाद-

W 776 यिष्यति। अभिमानमुत्पाद्य मानाभिभूतः स्तम्भाभिभूतो माराधिष्ठानेनाभिभूतस्तदन्यान्

30 बोधिसत्त्वान् महासत्त्वानवमंस्यते उच्चग्घयिष्यति उल्लापयिष्यति कुत्सयिष्यति पंसयिष्यति। इदमपि सुभूते बोधिसत्त्वेन महासत्त्वेन नामाधिष्ठानेन मारकर्म वेदितव्यम्॥

---

[1] R प्रक्ष्यति for प्रकृत्या.

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन नामापदेशेन नामव्याकरणेन मारकर्म वेदितव्यम्। कथं च सुभूते बोधिसत्त्वेन महासत्त्वेन नामापदेशेन नामव्याकरणेन मारकर्म वेदितव्यम्? इह सुभूते मारः पापीयान् भिक्षुवेषेणोपसंक्रम्य बोधिसत्त्वं महासत्त्वमेवं व्याकरिष्यति—तवानुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य सतः इदं नामधेयं भविष्यतीति यदेव तेन चित्तेनानुवर्तितमनुवितर्कितमनुविचारितं भवति—अहो बत मेऽनुत्तरां सम्यक्सं- 5 बोधिमभिसंबुद्धस्य सतः इदमेवंरूपं नामधेयं भवेदिति, तदेव नामधेयं व्याकरिष्यति। तत्र दुष्प्रज्ञजातीयस्य अनुपायकुशलस्य बोधिसत्त्वस्यैवं भविष्यति—यथा मया नामधेयमनुवर्तितमनुवितर्कितमनुविचारितम्, अहो बत मेऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य सतः इदं नामधेयं भवेदिति, तथा तेन भिक्षुणा निर्दिष्टमिति। स एवं यच्च नामधेयं स्वयमनुविचिन्तितम्, यच्च तेन मारेण पापीयसा मारकायिकाभिर्वा देवताभिरभिनिर्मितेन माराधिष्ठितेन वा भिक्षुणा 10 नामधेयमुदीरितम्, तदुभयं तुलयित्वा यथा च मम चित्तोत्पाद उत्पन्नः, यथा च अनेन भिक्षुणा निर्दिष्टं मम नामधेयं समेति नाम्ना, नामव्याकृतोऽहं तैः पौर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैरनुत्तरायां सम्यक्संबोधाविति मंस्यते। यानि च मया सुभूते अविनिवर्तनीयानां बोधिसत्त्वानां महासत्त्वानामाकारा लिङ्गानि निमित्तानि आख्यातानि, तानि तस्य न भविष्यन्ति। स तैर्विरहितोऽनेन नामापदेशेन नामव्याकरणेन मन्यनामुत्पादयिष्यति। स 15 मन्यनामुत्पाद्य ततोऽन्यान् बोधिसत्त्वान् महासत्त्वानवमंस्यते—अहं व्याकृतोऽनुत्तरायां सम्यक्संबोधौ, नैते व्याकृता अनुत्तरायां सम्यक्संबोधाविति। एवं स तेन मानेन अतिमानेन मानातिमानेन अभिमानेन मिथ्यामानेन च तदन्यान् बोधिसत्त्वान् महासत्त्वानवमन्यमानो दूरीकरिष्यति सर्वज्ञताम्, दूरीकरिष्यति बुद्धज्ञानम्। तस्य प्रज्ञापारमितया अपरिगृहीतस्य उपायकौशल्यविरहितस्य कल्याणमित्रविरहितस्य पापमित्रपरिगृहीतस्य द्वयोर्भूम्योरन्यतरा 20 भूमिः प्रतिकाङ्क्षितव्या—श्रावकभूमिर्वा प्रत्येकबुद्धभूमिर्वा। सचेत्पुनश्चिरं सुचिरं संधाव्य संसृत्य एनामेव प्रज्ञापारमितामागम्य अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामो भवेत्, यदि चासावुपसर्पेत् कल्याणमित्राणि, अभीक्ष्णं च तान्युपसंक्रमिष्यति, तेनैव चात्मभावप्रतिलम्भेन तावत्पूर्वकांश्चित्तोत्पादान् विगर्हिष्यति, वान्तीकरिष्यति, जुगुप्सिष्यति, प्रतिनिःस्रक्ष्यति, प्रतिदेशयिष्यति, तथापि बुद्धभूमिस्तस्य दुर्लभा भविष्यति। तत्कस्य हेतोः? ताव- 25 द्गुरुतरं हि सुभूते बोधिसत्त्वस्य महासत्त्वस्य मननापत्तिस्थानम्। तद्यथापि नाम सुभूते भिक्षोः श्रावकयानिकस्य श्रावकभूमौ चतस्रो मूलापत्तयो गुर्व्यो भवन्ति, यतोऽन्यतरान्यतरामापत्तिमध्यापद्य अभिक्षुर्भवत्यश्रमणोऽशाक्यपुत्रीयः, इयमेव ताभ्यश्चतसृभ्य आपत्तिभ्यो गुरुतरा आपत्तिः, योऽयं मानचित्तोत्पादः, यदुत नामापदेशेन बोधिसत्त्वस्य महासत्त्वस्यावमाननया महानकुशलश्चित्तोत्पाद उत्पन्नः। अयं ताभ्यश्चतसृभ्य आपत्तिभ्यो गुरुतरश्चित्तो- 30 त्पादो वेदितव्यः॥

तिष्ठन्तु सुभूते चतस्रो गुर्व्यो मूलापत्तयः। पञ्चभ्योऽपि सुभूते आनन्तर्येभ्यः

R 391 कर्मभ्यो गुरुतरोऽयं चित्तोत्पादः, योऽयं बोधिसत्त्वस्य महासत्त्वस्य नामापदेशेन मानसहगतश्चित्तोत्पाद उत्पन्नः। अयं तेभ्यः पञ्चभ्य आनन्तर्येभ्यः कर्मभ्यो गुरुतरश्चित्तोत्पादो वेदितव्यः। इति हि सुभूते अनेनापि नामापदेशेन सूक्ष्मसूक्ष्माणि मारकर्माण्युत्पत्स्यन्ते। तानि बोधिसत्त्वेन महासत्त्वेन बोद्धव्यानि। अन्येभ्यश्चावबोधयितव्यानि, बुद्ध्वा च 5 विवर्जयितव्यानि ॥

W 779 पुनरपरं सुभूते मारः पापीयान् विवेकगुणेन बोधिसत्त्वं महासत्त्वमुपसंक्रम्य चोदयिष्यति स्मारयिष्यति। कथं च सुभूते मारः पापीयान् विवेकगुणेन बोधिसत्त्वं महासत्त्वमुपसंक्रम्य चोदयिष्यति स्मारयिष्यति? इह सुभूते मारः पापीयान् बोधिसत्त्वं महासत्त्वमुपसंक्रमिष्यति, उपसंक्रम्यैवं वक्ष्यति—विवेकस्य तथागतो वर्णवादी अरण्यवनप्रस्थगिरि10 गुहाश्मशानपलालपुञ्जादिषु विहर्तव्यमिति। न चाहं सुभूते बोधिसत्त्वस्य महासत्त्वस्य एवंविधं विवेकं वदामि, यदुत आरण्यकानि प्रान्तानि शयनासनानि विजनपदानि विविक्तानि विविधानि वनप्रस्थगिरिगुहाश्मशानपलालपुञ्जादीनि ॥

सुभूतिराह—कतमः पुनः स भगवन् बोधिसत्त्वस्य महासत्त्वस्य अन्यो विवेको यदि W 780 वा आरण्यकानि प्रान्तानि शयनासनानि विजनपदानि विविक्तानि विविधानि वनप्रस्थगिरि15 गुहाश्मशानपलालपुञ्जादीनि? यदि तानि नाध्यावसति, कियद्रूपः पुनर्भगवन् बोधिसत्त्वस्य महासत्त्वस्यान्यो विवेकः? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—सचेत्सुभूते बोधिR 392 सत्त्वो महासत्त्वो विविक्तो भवति श्रावकप्रतिसंयुक्तैर्मनसिकारैः, विविक्तो भवति प्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः, एवं स बोधिसत्त्वो महासत्त्वो विविक्तो विहरति। ग्रामान्तेऽपि हि विहरन् प्रज्ञापारमितोपायकौशल्यपरिगृहीतः सर्वसत्त्वमैत्रीमहाकरुणाविहारेण विहरेत्। 20 अनेन विहारेण विहरन् विविक्त एव स विहरति। अयं खलु पुनः सुभूते मया बोधिसत्त्वस्य महासत्त्वस्य श्रावकप्रत्येकबुद्धप्रतिसंयुक्तमनसिकारविवेकोऽनुज्ञातः। अनेन विवेकेन विहरन् बोधिसत्त्वो महासत्त्वो रात्रिंदिवान्यतिनामयति, विविक्तो विहरति। सचेद्बोधिसत्त्वो महासत्त्वोऽरण्यवनप्रस्थगिरिगुहाश्मशानप्रान्तशयनासनेष्वनेन विहारेण विहरति, विविक्तो बोधिसत्त्वो महासत्त्वो विहरति। यं पुनः सुभूते मारः पापीयान् विवेकमुपदेक्ष्यति अरण्य25 वनप्रस्थगिरिगुहाश्मशानप्रान्तशयनासनविहारान्, स तेन विवेकेन श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः संकीर्ण एव सन् प्रज्ञापारमितायामनभियुज्यमानो न सर्वज्ञज्ञानं[1] परिपूरयति। एवं स संकीर्णविहारेण विहरन् सोऽपरिशुद्धेन मनसिकारेण विहरन् अपरिशुद्धकायवाङ्मनःकर्मान्त एव भविष्यति। अपरिशुद्धकायवाङ्मनःकर्मान्त एव संस्ततोऽन्यानपि बोधिसत्त्वान् महासत्त्वान् ग्रामान्तविहारिणोऽसंकीर्णान् श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः प्रज्ञोपाय30 महाकरुणाविहारविहारिणोऽवमंस्यते। अरण्येऽपि विहरन् सोऽपरिशुद्धकायवाङ्मनःकर्मान्तः W 781 सन् संकीर्णविहार्येव भवति, न विविक्तविहारी। स प्रज्ञोपायमहाकरुणाविहारविहारिणो

१ W सर्वज्ञानं.

ग्रामान्ते विहरतः परिशुद्धकायवाङ्मनःकर्मसमुदाचारान् श्रावकप्रत्येकबुद्धप्रतिसंयुक्तमनसिकारविविक्तानसंकीर्णान् श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैस्तांस्तावत्सोऽवमन्यमानो न ध्यानसमाधिसमापत्तिविमोक्षाभिज्ञानां लाभी भविष्यति। न चास्य ताः परिपूरिं गमिष्यन्ति। तत्कस्य हेतोः? तथा हि सोऽनुपायकुशलो भवति॥ R 393

किंचापि सुभूते बोधिसत्त्वो महासत्त्वो योजनशतिकेष्वटवीकान्तारेषु विहरेदपगतव्यालमृगपक्षिसंघेषु अपगतक्षुद्रमृगव्यालयक्षराक्षसानुविचरितेषु अपगतचौरकान्तारभयभैरवोपद्रवेषु संतिष्ठेत्, वर्षं वा वर्षशतं वा वर्षसहस्रं वा वर्षशतसहस्रं वा वर्षकोटीं वा वर्षकोटीशतं वा वर्षकोटीसहस्रं वा वर्षकोटीशतसहस्रं वा वर्षकोटीनियुतशतसहस्रं वा, ततो वा उपरि। इमं च विवेकं मयोपदिष्टं न जानीयात्, येन विवेकेन बोधिसत्त्वो महासत्त्वोऽध्याशयसंप्रस्थितोऽध्याशयसंपन्नो विहरति। तं सोऽनुपायकुशलो बोधिसत्त्वो महासत्त्वोऽजानन्नरण्यपरमो विहरति। तत्र च विवेके निश्रितः आलीनोऽध्यवसितोऽध्यवसायमापन्नः। नैव मे सुभूते एतावता स बोधिसत्त्वश्चित्तमाराधयति। तत्कस्य हेतोः? यः सुभूते विवेको बोधिसत्त्वानां महासत्त्वानां मया आख्यातः, तेन विवेकेन विहरन्नस्मिन् विवेके न संदृश्यते। तमेनं[1] मारः पापीयानुपसंक्रम्य उपर्यन्तरीक्षे विहायसि स्थित्वा एवं वक्ष्यति—साधु साधु कुलपुत्र, एष बोधिसत्त्वानां महासत्त्वानां तथागतेन विवेक आख्यातः। अनेनैव त्वं कुलपुत्र विवेकेन विहर। एवं त्वं क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे। स ततो विवेकात्पुनरेव अरण्याद्ग्रामान्तमवतीर्य तदन्यान् बोधिसत्त्वान् महासत्त्वान् पेशलान् भिक्षून् सब्रह्मचारिणः कल्याणधर्मणोऽसंकीर्णान् श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः परिशुद्धकायवाङ्मनःकर्मान्तान् जीवानवमंस्यते। स एवं वक्ष्यति—संकीर्णविहारेण बतेमे आयुष्मन्तो विहरन्ति, न विविक्तविहारेण। आकीर्णविहारेण बतेमे आयुष्मन्तो विहरन्ति, न विविक्तविहारेण विहरन्तीति। ये ते बोधिसत्त्वा महासत्त्वा विविक्तविहारेण विहरन्ति, तान् संकीर्णविहारेण चोदयिष्यति, आकीर्णविहारेण चोदयिष्यति। ये च ते संकीर्णविहारेण विहरन्ति, तान् स विविक्तविहारेण समुदाचरिष्यति, तत्र गौरवमुत्पादयिष्यति। यत्र च गौरवमुत्पादयितव्यम्, तत्र मानमुत्पादयिष्यति। तत्कस्य हेतोः? अहममनुष्यैश्चोद्ये, अहममनुष्यैः स्मार्ये। एष सुभूते विहारो येनाहं विहारेण विहरामि। कं ग्रामान्तविहारिणममनुष्याश्चोदयिष्यन्ति, कं ग्रामान्तेरे विहरन्तममनुष्याः स्मारयिष्यन्ति, इत्येवं हि बोधिसत्त्वयानिकान् पुद्गलानवमंस्यते। अयं सुभूते बोधिसत्त्वचण्डालो वेदितव्यः, बोधिसत्त्वदूषी वेदितव्यः, बोधिसत्त्वप्रतिरूपको वेदितव्यः, बोधिसत्त्वप्रतिवर्णिको वेदितव्यः, बोधिसत्त्वकारण्डवको वेदितव्यः, चौरः श्रमणवेषेण, चौरो बोधिसत्त्वयानिकानां पुद्गलानाम्, चौरः सदेवकस्य लोकस्य। तज्जातीयः खलुः पुनः सुभूते पुद्गलो न सेवितव्यो न भक्तव्यो न पर्युपासितव्यः। तत्कस्य हेतोः? अभिमानपतिता हि ते तथारूपाः पुद्गला वेदितव्याः। अन्येषामपि तथारूपाणामल्प-

(margin: 5, 10, 15, 20, 25, 30; W 782, R 394, W 783, R 395)

[1] W तमेवं.

स्थामानामचिरयानसंप्रस्थितानां संदूषणं कुर्युः। अविशुद्धधर्माणो हि ते तथारूपाः पुद्गला वेदितव्याः। अनार्या[1] हि ते तथारूपाः पुद्गला वेदितव्याः। अनार्यधर्माणो हि ते तथारूपाः पुद्गला वेदितव्याः। यस्य खलु पुनः सुभूते बोधिसत्त्वस्य महासत्त्वस्य अपरित्यक्ताः सर्वसत्त्वाः, अपरित्यक्ता सर्वज्ञता, अपरित्यक्ता अनुत्तरा सम्यक्संबोधिः, तेन बोधिसत्त्वेन महासत्त्वेन 5 अध्याशयेन अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन सर्वसत्त्वानामर्थं कर्तुकामेन तज्जातीयाः पुद्गला न सेवितव्याः, न भक्तव्याः, न पर्युपासितव्याः। अपि तु खलु पुनः सुभूते W 784 सर्वसत्त्वानामर्थाय अभ्युत्थितेन एतेषां च अन्येषां च मारकर्मणामवबोधाय नित्यमेवोद्विग्नचित्तेन भवितव्यं सर्वसत्त्वानां मार्गमप्रतिलभमानानामुपदेष्टुमुत्रस्तमानसेन असंसृष्टेन त्रैधातुकेन। तत्रापि तावन्मैत्रायमाणेन करुणायमानेन महाकरुणामुत्पाद्य अनुकम्पामुपादाय सम्यक्प्रति-10 पन्नेषु सत्त्वेषु मुदितचित्तेनानुपलब्धिधर्मतया धर्माणामुपेक्षकेण एवं चित्तमुत्पादयितव्यम्—तथा करिष्यामि यथा सर्वे मारकर्मदोषाः सर्वेण सर्वं सर्वथा सर्वं सर्वत्र सर्वदा च न भविष्यन्ति, नोत्पत्स्यन्ते। सचेदुत्पत्स्यन्ते, क्षिप्रमेव प्रतिगमिष्यन्ति, एवं शिक्षिष्ये इति। अयमपि बोधिसत्त्वानां महासत्त्वानां स्वयमभिज्ञाय पराक्रमो वेदितव्यः। इदमपि सुभूते बोधिसत्त्वेन महासत्त्वेन विवेकगुणेन मारकर्म वेदितव्यमिति॥

15 आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां मारकर्मपरिवर्तो नाम एकविंशतितमः॥



१ Āp W अनाचार्याः.

## २२ कल्याणमित्रपरिवर्तो द्वाविंशतितमः।

अथ खलु भगवान् पुनरप्यायुष्मन्तं सुभूतिमामन्त्रयते स्म—इह सुभूते बोधिसत्त्वेन महासत्त्वेन अध्याशयसंप्रस्थितेन अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन आदित एव कल्याणमित्राणि सेवितव्यानि भक्तव्यानि पर्युपासितव्यानि। सुभूतिराह—कतमानि तानि पुनर्भगवन् बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्राणि वेदितव्यानि, यानि बोधिसत्त्वेन महासत्त्वेन अध्याशयसंप्रस्थितेन अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन आदित एव कल्याणमित्राणि सेवितव्यानि भक्तव्यानि पर्युपासितव्यानि? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—बुद्धा एव सुभूते भगवन्तः, ये च तेऽविनिवर्तनीया बोधिसत्त्वा महासत्त्वा बोधिसत्त्वचर्याकुशलाः, य एनं पारमितास्ववदन्ति अनुशासति, येऽस्मै प्रज्ञापारमितां देशयन्त्युपदिशन्ति। इमानि तानि सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्राणि वेदितव्यानि। प्रज्ञापारमितैव सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं वेदितव्यम्। सर्वा एव च सुभूते षट् पारमिता बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्राणि वेदितव्यानि। षडेव पारमिताः शास्ता, षट् पारमिता मार्गः, षट् पारमिता आलोकः, षट् पारमिता उल्का, षट् पारमिता अवभासः, षट् पारमितास्त्राणम्, षट् पारमिताः शरणम्, षट् पारमिता लयनम्, षट् पारमिताः परायणम्, षट् पारमिता द्वीपः, षट् पारमिता माता, षट् पारमिताः पिता, षट् पारमिता ज्ञानाय बोधाय अनुत्तरायै सम्यक्संबोधये संवर्तन्ते। तत्कस्य हेतोः? अत्र हि सुभूते प्रज्ञापारमिता परिनिष्ठिता भवति यदुत षट्पारमितासु। येऽपि ते सुभूते अतीतेऽध्वनि तथागता अर्हन्तः सम्यक्संबुद्धा अनुत्तरां सम्यक्संबोधिमभिसंबुध्य परिनिर्वृताः, तेषामपि बुद्धानां भगवतामितोनिर्जातैव सर्वज्ञता, यदुत षड्भ्यः पारमिताभ्यः। येऽपि ते सुभूते भविष्यन्त्यनागतेऽध्वनि तथागता अर्हन्तः सम्यक्संबुद्धा अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते, तेषामपि बुद्धानां भगवतामितोनिर्जातैव सर्वज्ञता, यदुत षड्भ्यः पारमिताभ्यः। येऽपि ते सुभूते अप्रमेयेष्वसंख्येयेष्वपरिमाणेष्वचिन्त्येषु लोकधातुषु तथागता अर्हन्तः सम्यक्संबुद्धा एतर्ह्यनुत्तरां सम्यक्संबोधिमभिसंबुद्धास्तिष्ठन्ति, ध्रियन्ते, यापयन्ति, धर्मं च देशयन्ति, तेषामपि बुद्धानां भगवतामितोनिर्जातैव सर्वज्ञता, यदुत षड्भ्यः पारमिताभ्यः। अहमपि सुभूते तथागतोऽर्हन् सम्यक्संबुद्ध एतर्ह्यनुत्तरां सम्यक्संबोधिमभिसंबुद्धः। ममापि हि सुभूते इतोनिर्जातैव सर्वज्ञता, यदुत षड्भ्यः पारमिताभ्यः। तत्कस्य हेतोः? आसु हि सुभूते षट्सु पारमितासु सप्तत्रिंशद्बोधिपक्षा धर्मा अन्तर्गताः, चत्वारो ब्रह्मविहाराः, चत्वारि संग्रहवस्तूनि। यावांश्च कश्चिद्बुद्धधर्मो बुद्धज्ञानं स्वयंभूज्ञानमचिन्त्यज्ञानमतुल्यज्ञानमप्रमेयज्ञानमसंख्येयज्ञानमसमज्ञानमसमसमज्ञानं सर्वज्ञज्ञानम्, सर्वं तत् षट्सु पारमितास्वन्तर्गतम्। तस्मात्तर्हि सुभूते बोधिसत्त्वस्य महासत्त्वस्य षट् पारमिता एव कल्याणमित्राणि वेदितव्यानि, षडेव पारमिताः शास्ता, षट् पारमिता मार्गः, षट् पारमिता आलोकः, षट् पारमिता उल्का, षट् पारमिता अवभासः, षट् पारमितास्त्राणम्, षट्

R 396 W 785 · R 397 W 786 · R 398

पारमिताः शरणम्, षट् पारमिता लयनम्, षट् पारमिताः परायणम्, षट् पारमिता
W 787 द्वीपः, षट् पारमिता माता, षट् पारमिताः पिता, षट् पारमिता ज्ञानाय बोधाय सर्व-
ज्ञतायै अनुत्तरसम्यक्संबोधिप्राप्तये संवर्तन्ते । सर्वसत्त्वानामप्रत्युपकारिणामपि उपकारिभूतो
भवति, यदा बोधिसत्त्वो महासत्त्वः षट्पारमितासु शिक्षते ॥

W 788 5 आसु खलु पुनः सुभूते षट्सु पारमितासु शिक्षितुकामेन बोधिसत्त्वेन महासत्त्वेन
इयमेव प्रज्ञापारमिता श्रोतव्या उद्ग्रहीतव्या धारयितव्या वाचयितव्या पर्यवाप्तव्या प्रवर्तयि-
तव्या देशयितव्या उपदेष्टव्या उद्देष्टव्या स्वाध्यातव्या, अर्थतश्च धर्मतश्च नयतश्चोपपरी-
क्षितव्या उपनिध्यातव्या परिप्रष्टव्या परिप्रश्नयितव्या । तत्कस्य हेतोः? एषा हि प्रज्ञापार-
मिता षण्णां पारमितानां पूर्वंगमा नायिका परिणायिका संदर्शिका अवदर्शिका जनयित्री
10 धात्री । तत्कस्य हेतोः? प्रज्ञापारमिताविरहिता हि पञ्च पारमिता न प्रज्ञायन्ते, नापि
पारमितानामधेयं लभन्ते । तस्मात्तर्हि सुभूते अपरप्रणेयतां गन्तुकामेन बोधिसत्त्वेन
महासत्त्वेन अपरप्रणेयतायां स्थातुकामेन इहैव प्रज्ञापारमितायां शिक्षितव्यम् ॥

W 789
R 399 सुभूतिराह—किंलक्षणा भगवन् प्रज्ञापारमिता? एवमुक्ते भगवानायुष्मन्तं सुभूति-
मेतदवोचत्—असङ्गलक्षणा सुभूते प्रज्ञापारमिता । सुभूतिराह—स्याद्भगवन् पर्यायो येन
15 पर्यायेण येनैवासङ्गलक्षणेन प्रज्ञापारमिता संविद्यते, तेनैव असङ्गलक्षणेन सर्वधर्माः संविद्येरन्?
भगवानाह—एवमेतत्सुभूते, एवमेतत् । स्यात्सुभूते पर्यायो येन पर्यायेण येनैव असङ्गलक्षणेन
प्रज्ञापारमिता संविद्यते, तेनैव असङ्गलक्षणेन सर्वधर्माः संविद्यन्ते । तत्कस्य हेतोः? सर्वधर्मा
हि सुभूते विविक्ताः । सर्वधर्मा हि सुभूते शून्याः । तस्मात्तर्हि सुभूते येनैव असङ्गलक्षणेन
प्रज्ञापारमिता विविक्ता शून्या, तेनैव असङ्गलक्षणेन सर्वधर्मा विविक्ताः शून्याः। सुभूतिराह—
20 यदि भगवन् सर्वधर्मा विविक्ताः, सर्वधर्माः शून्याः, कथं भगवन् सत्त्वानां संक्लेशः प्रज्ञायते, कथं
भगवन् सत्त्वानां व्यवदानं प्रज्ञायते? न च भगवन् विविक्तं संक्लिश्यते, न भगवन् विविक्तं
व्यवदायति । न च भगवन् शून्यं संक्लिश्यते, न च भगवन् शून्यं व्यवदायति । न च
भगवन् विविक्तं वा शून्यं वा अनुत्तरां सम्यक्संबोधिमभिसंबुध्यते । अन्यत्रापि भगवन्
शून्यतायाः सर्वधर्मो नोपलभ्यते, योऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धो वा, अभिसंभोत्स्यते
25 वा, अभिसंबुध्यते वा । कथं वा वयं भगवन् अस्य भाषितस्यार्थमाजानीमः? देशयतु
भगवन्, देशयतु सुगत । एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—तत्किं मन्यसे
दीर्घरात्रं सत्त्वा अहंकारे ममकारे चरन्ति? सुभूतिराह—एवमेतद्भगवन्, एवमेतत्सुगत ।
R 400 दीर्घरात्रं सत्त्वा अहंकारे ममकारे चरन्ति। भगवानाह—तत्किं मन्यसे सुभूते अपि नु
W 790 अहंकारममकारौ शून्यौ? सुभूतिराह—शून्यौ भगवन्, शून्यौ सुगत । भगवानाह—तत्किं
30 मन्यसे सुभूते अहंकारेण ममकारेण च सत्त्वाः संसारे संसरन्ति? सुभूतिराह—एवमेतद्भगवन्,
एवमेतत्सुगत । अहंकारेण ममकारेण च सत्त्वाः संसारे संसरन्ति । भगवानाह—एवं खलु
सुभूते सत्त्वानां संक्लेशः प्रज्ञायते । यथा सत्त्वानामुद्ग्रहोऽभिनिवेशः, तथा संक्लेशः । न चात्र

कश्चित्संक्लिश्यते । यथा च सुभूते अनुद्ग्रहोऽनभिनिवेशः, तथा नाहंकारममकारौ प्रज्ञायेते । एवं खलु सुभूते सर्वसत्त्वानां व्यवदानं प्रज्ञायते । यथा सत्त्वानामनुद्ग्रहोऽनभिनिवेशः, तथा व्यवदानम् । न चात्र कश्चिद्व्यवदायति । एवं खलु सुभूते चरन् बोधिसत्त्वो महासत्त्वश्चरति प्रज्ञापारमितायाम् । एवं खलु सुभूते सर्वधर्मेषु विविक्तेषु सर्वधर्मेषु शून्येषु सत्त्वानां संक्लेशो व्यवदानं च प्रज्ञायते । सुभूतिराह–आश्चर्यं भगवन् यावद्यदिदं 5 W 791 सर्वधर्मेषु विविक्तेषु सर्वधर्मेषु शून्येषु सत्त्वानां संक्लेशो व्यवदानं च प्रज्ञायते । एवं च भगवंश्चरन् बोधिसत्त्वो महासत्त्वश्चरति प्रज्ञापारमितायाम् । एवं हि चरन् बोधिसत्त्वो महासत्त्वो न रूपे चरति, न वेदनायां न संज्ञायां न संस्कारेषु, न विज्ञाने चरति । एवं चरन् भगवन् बोधिसत्त्वो महासत्त्वोऽनवमर्दनीयो भवति सदेवमानुषासुरेण R 401 लोकेन । एवं चरन् भगवन् बोधिसत्त्वो महासत्त्वः सर्वेषां श्रावकयानिकानां प्रत्येक- 10 बुद्धयानिकानां च पुद्गलानां चर्यामभिभवति, अनभिभूतं च स्थानं प्रतिलभते । तत्कस्य हेतोः ? अनभिभूतं हि भगवन् बुद्धत्वं तथागतत्वं स्वयंभूत्वं सर्वज्ञत्वम् । अनेनापि भगवन् मनसिकारेण प्रज्ञापारमिताप्रतिसंयुक्तेन विहारेण विहरन् बोधिसत्त्वो महासत्त्वो रात्रिंदिवा- न्यतिनामयेत्, आसन्नः स्यादनुत्तरायाः सम्यक्संबोधेः, क्षिप्रं चानुत्तरां सम्यक्संबोधिमभि- संबुध्येत । एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्–एवमेतत्सुभूते, एवमेतत् । एवं 15 चरन् सुभूते बोधिसत्त्वो महासत्त्वश्चरति प्रज्ञापारमितायाम् । एवं हि चरन् सुभूते बोधिसत्त्वो महासत्त्वो न रूपे चरति, न वेदनायां न संज्ञायां न संस्कारेषु, न विज्ञाने चरति । एवं चरन् सुभूते बोधिसत्त्वो महासत्त्वोऽनवमर्दनीयो भवति सदेवमानुषासुरेण लोकेन । एवं चरन् सुभूते बोधिसत्त्वो महासत्त्वः सर्वेषां श्रावकयानिकानां प्रत्येकबुद्ध- यानिकानां च पुद्गलानां चर्यामभिभवति, अनभिभूतं च स्थानं प्रतिलभते । तत्कस्य 20 W 792 हेतोः ? अनभिभूतं हि सुभूते बुद्धत्वं तथागतत्वं स्वयंभूत्वं सर्वज्ञत्वम् । अनेनापि सुभूते मनसिकारेण प्रज्ञापारमिताप्रतिसंयुक्तेन विहारेण विहरन् बोधिसत्त्वो महासत्त्वो रात्रिंदिवा- न्यतिनामयेत्, आसन्नः स्यादनुत्तरायाः सम्यक्संबोधेः, क्षिप्रं च अनुत्तरां सम्यक्संबोधि- मभिसंबुध्येत ॥

सचेत्खलु पुनः सुभूते ये जम्बूद्वीपे सत्त्वाः, ते सर्वेऽपूर्वाचरमं मानुष्यकमात्मभावं 25 प्रतिलभेरन्, मानुष्यकमात्मभावं प्रतिलभ्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयेरन्, अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य यावज्जीवं तिष्ठेयुः, यावज्जीवं तिष्ठन्तो यावज्जीवं R 402 सर्वतथागतान् सत्कुर्युर्गुरुकुर्युर्मानयेयुः पूजयेयुरर्चयेयुरपचाययेयुः, एवं सर्वसत्त्वेभ्योऽपि दानं दद्युः, तच्च दानमनुत्तरायां सम्यक्संबोधौ परिणामयेयुः । तत्किं मन्यसे सुभूते अपि नु ते बोधिसत्त्वा महासत्त्वास्ततोनिदानं बहु पुण्यं प्रसवेयुः ? सुभूतिराह–बहु भगवन्, बहु सुगत । 30 भगवानाह–अतः खलु पुनः सुभूते स कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवति, W 793 यो बोधिसत्त्वो महासत्त्वोऽन्ततः एकदिवसमपि प्रज्ञापारमिताप्रतिसंयुक्तैर्मनसिकारैर्विहरति ।

तत्कस्य हेतोः? यथा यथा हि सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमिताप्रतिसंयुक्तैर्मनसिकारै रात्रिंदिवं विहरति, तथा तथा सर्वसत्त्वानां दक्षिणीयतां गच्छति। तत्कस्य हेतोः? तथा हि सुभूते नास्ति तदन्येषां सत्त्वानां तादृशं मैत्रीसहगतं चित्तम्, यथा तस्य बोधिसत्त्वस्य महासत्त्वस्य, स्थापयित्वा बुद्धान् भगवतः। तत्कस्य हेतोः? अप्रतिपुद्गला हि सुभूते 5 तथागताः। निरुपमा हि सुभूते तथागताः। अचिन्त्यधर्मसमन्वागता हि सुभूते तथागता अर्हन्तः सम्यक्संबुद्धाः॥

कथं च सुभूते स कुलपुत्रो वा कुलदुहिता वा तावत्तत्पुण्यमभिनिर्हरति? तादृश्या सुभूते प्रज्ञया समन्वागतः स बोधिसत्त्वो महासत्त्वो भवति, यादृश्या प्रज्ञया समन्वागतो वध्यगतानिव सर्वसत्त्वान् पश्यति। तेन तस्यां वेलायां महाकरुणापरिगृहीतो भवति। स R 403 10 दिव्येन चक्षुषा व्यवलोकयन् अप्रमेयानसंख्येयानपरिमेयानपरिमाणान् सत्त्वानानन्तर्यकर्मसमन्वागतान् पश्यति, अक्षणप्राप्तांश्च विहन्यमानांश्च दृष्टिजालप्रतिच्छन्नांश्च मार्गमप्रतिलभमानान्। अपरांश्च क्षणप्राप्तान् पश्यति, क्षणांश्च विरागयतः पश्यति। तस्य तस्यां वेलायां महान् संवेग उत्पद्यते। ते चास्य सर्वसत्त्वास्तया महामैत्र्या तया च महाकरुणया स्फारित्वा मनसिकृता भवन्ति–अहमेतेषां सर्वेषां सत्त्वानां नाथो भविष्यामि, अहमेनान् 15 सर्वसत्वान् सर्वदुःखेभ्यो मोचयिष्यामीति। न च तेन वा अन्येन वा निमित्तेन सार्धं संवसति। अयमपि सुभूते बोधिसत्त्वस्य महासत्त्वस्य महान् प्रज्ञालोकोऽनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम्। अनेन हि सुभूते विहारेण विहरन्तो बोधिसत्त्वा महासत्त्वाः सर्वलोकस्य W 794 दक्षिणीयतां परिगृह्णन्ति, न च विवर्तन्तेऽनुत्तरायाः सम्यक्संबोधेः। येषां च दायकानां दानपतीनां च परिभुञ्जते चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारान्, अस्यां 20 प्रज्ञापारमितायां सूपस्थितचित्ताः, तेषां दायकानां दानपतीनां च दानदक्षिणां विशोधयन्ति। सर्वज्ञता चैषामासन्नीभवति। तस्मात्तर्हि सुभूते बोधिसत्त्वेन महासत्त्वेन अमोघं राष्ट्रं पिण्डं परिभोक्तुकामेन सर्वसत्वानां मार्गमुपदेष्टुकामेन विपुलमवभासं कर्तुकामेन संसारगतान् R 404 सत्त्वान् संसारात्परिमोचयितुकामेन सर्वसत्त्वानां चक्षुर्विशोधयितुकामेन अनेन प्रज्ञापारमिताप्रतिसंयुक्तेन मनसिकारेण विहर्तव्यम्। सचेदनेन मनसिकारेण विहर्तुमिच्छति, तेन 25 प्रज्ञापारमिताप्रतिसंयुक्ता मनसिकाराः समन्वाहर्तव्याः। तत्कस्य हेतोः? यो ह्येनान् समन्वाहर्तव्यान् मंस्यते, स एवास्य मनसिकारो भविष्यति। ततोऽन्येषां मनसिकाराणां प्रज्ञापारमिताविरहितानामवकाशो न दातव्यः। तथा च कर्तव्यं यथायं प्रज्ञापारमिताप्रति- W 795 संयुक्तैर्मनसिकारै रात्रिंदिवानि क्षपयेत्। तद्यथापि नाम सुभूते केनचिदेव पुरुषेण मणिरत्नज्ञाने वर्तमानेन मणिरत्नजातिज्ञेन अप्रतिलब्धपूर्वं महामणिरत्नं प्रतिलब्धं भवेत्। स 30 तन्महामणिरत्नं प्रतिलभ्य महतोदारेण प्रीतिप्रामोद्येन समन्वागतो भवेत्। तस्य तन्महामणिरत्नं पुनरेव प्रणश्येत्। स ततोनिदानं महता दुःखदौर्मनस्येन संयुज्येत। तस्य सततसमितं तन्महामणिरत्नं प्रति संयुक्ता एव मनसिकाराः प्रवर्तेरन्–अहो बताहं तेन

महामणिरत्नेन विप्रयुक्त इति हि स पुरुषस्तस्य महामणिरत्नस्य न विस्मरेत् यावत् तद्वा अन्यद्वा तद्गुणं तज्जातिकं तेन महामणिरत्नं प्रतिलब्धं भवेत्। एवमेव सुभूते बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितामहामणिरत्नपरिभ्रष्टेन महामणिरत्नपरिभ्रष्टेनेव महामणिरत्नेन रत्नसंज्ञिना प्रज्ञापारमितामनसिकाराविप्रयुक्तेन प्रज्ञापारमितामनसिकाराविरहितसर्वज्ञताचित्तेन तावदन्वेष्टव्या, यावत्सा वा अन्या वा प्रतिलब्धा भवति। तावत्तेन प्रज्ञापारमितामहामणिरत्नप्रतिलम्भप्रतिसंयुक्तैर्मनसिकारैः सर्वज्ञतामहामणिरत्नप्रतिलम्भप्रतिसंयुक्तैर्मनसिकारैरविरहितेन भवितव्यम्॥

सुभूतिराह—यत्पुनर्भगवन् सर्वधर्माः सर्वमनसिकाराः स्वभावेन विरहिताः शून्या उक्ता भगवता, तत्कथं भगवन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमिताप्रतिसंयुक्तैर्मनसिकारैः सर्वज्ञताप्रतिसंयुक्तैर्मनसिकारैरविरहितो भवति? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—सचेत्सुभूते बोधिसत्त्वो महासत्त्व एवं मनसि करोति—सर्वधर्माः स्वभावेन विविक्ताः, सर्वधर्माः स्वभावेन शून्या इति, एवमेतन्मनसि कुर्वन् प्रज्ञापारमिताप्रतिसंयुक्तैर्मनसिकारैः सर्वज्ञताप्रतिसंयुक्तैर्मनसिकारैरविरहितो भवति। तत्कस्य हेतोः? प्रज्ञापारमिता हि सुभूते शून्या। सा नैव विवर्धते, न च परिहीयते। सुभूतिराह—सचेद्भगवन् प्रज्ञापारमिता शून्या, सा नैव विवर्धते न च परिहीयते, कथं भगवन् बोधिसत्त्वो महासत्त्वोऽविवर्धमानया प्रज्ञापारमितया बोधये समुदागच्छति, कथं च अनुत्तरां सम्यक्संबोधिमभिसंबुध्यते? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—न खलु पुनः सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् विवर्धते वा परिहीयते वा। यथैव सुभूते प्रज्ञापारमिता शून्या, सा नैव विवर्धते न च परिहीयते, एवमेव सुभूते बोधिसत्त्वो महासत्त्वः शून्यः। स नैव विवर्धते, न च परिहीयते। यतः सुभूते यथैव प्रज्ञापारमिता शून्या, सा नैव विवर्धते न च परिहीयते, एवमेव सुभूते बोधिसत्त्वो महासत्त्वः शून्यः। स नैव विवर्धते, न च परिहीयते। ततो बोधिसत्त्वो महासत्त्वो बोधये समुदागच्छति, एवं च अनुत्तरां सम्यक्संबोधिमभिसंबुध्यते। सचेत्सुभूते बोधिसत्त्वो महासत्त्वः एवं भाष्यमाणे नोत्रस्यति न संत्रस्यति न संत्रासमापद्यते न संसीदति, वेदितव्यमेतत्सुभूते चरत्ययं बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायामिति॥

सुभूतिराह—किं पुनर्भगवन् प्रज्ञापारमिता चरति प्रज्ञापारमितायाम्? भगवानाह—नो हीदं सुभूते। आह—किं पुनर्भगवन् या प्रज्ञापारमितायाः शून्यता, सा चरति प्रज्ञापारमितायाम्? भगवानाह—नो हीदं सुभूते। आह—किं पुनर्भगवन् अन्यत्र प्रज्ञापारमिताशून्यतायाः स कश्चिद्धर्म उपलभ्यते, यश्चरति प्रज्ञापारमितायाम्? भगवानाह—नो हीदं सुभूते। आह—किं पुनर्भगवन् शून्यता चरति प्रज्ञापारमितायाम्? भगवानाह—नो हीदं सुभूते। आह—किं पुनर्भगवन् शून्यतायां स कश्चिद्धर्म उपलभ्यते यश्चरति प्रज्ञापारमितायाम्? भगवानाह—नो हीदं सुभूते। आह—किं पुनर्भगवन् शून्यता चरति शून्यतायाम्? भगवानाह—नो हीदं सुभूते। आह—किं पुनर्भगवन् रूपं चरति प्रज्ञापारमितायाम्?

भगवानाह—नो हीदं सुभूते। आह—किं पुनर्भगवन् वेदना संज्ञा संस्काराः, किं पुनर्भगवन् विज्ञानं चरति प्रज्ञापारमितायाम्? भगवानाह—नो हीदं सुभूते। आह—किं पुनर्भगवन् अन्यत्र रूपात्स धर्मः कश्चिदुपलभ्यते, यश्चरति प्रज्ञापारमितायाम्? भगवानाह—नो हीदं सुभूते। आह—किं पुनर्भगवन् अन्यत्र वेदनायाः संज्ञायाः संस्कारेभ्यः, अन्यत्र विज्ञानात्स 5 धर्मः कश्चिदुपलभ्यते, यश्चरति प्रज्ञापारमितायाम्? भगवानाह—नो हीदं सुभूते। सुभूतिराह—कथं पुनर्भगवन् बोधिसत्त्वो महासत्त्वश्चरति प्रज्ञापारमितायाम्? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—किं पुनः सुभूते समनुपश्यसि त्वं तं धर्मं यश्चरति प्रज्ञापारमितायाम्? R 408 सुभूतिराह—नो हीदं भगवन्। भगवानाह—समनुपश्यसि त्वं सुभूते तां प्रज्ञापारमितां यत्र प्रज्ञापारमितायां बोधिसत्त्वो महासत्त्वश्चरति? आह—नो हीदं भगवन्। भगवानाह—तत्किं 10 मन्यसे सुभूते यो धर्मोऽनुपलम्भः, तं धर्मं समनुपश्यसि? अपि नु स एव धर्म उत्पन्नो वा उत्पत्स्यते वा उत्पद्यते वा, निरुद्धो वा निरोत्स्यते वा निरुध्यते वा? आह—नो हीदं W 799 भगवन्। भगवानाह—एवं खलु सुभूते बोधिसत्त्वस्य महासत्त्वस्य अनुत्पत्तिकेषु धर्मेषु क्षान्तिरेवंरूपा भवति। एवंरूपया च सुभूते क्षान्त्या समन्वागतो बोधिसत्त्वो महासत्त्वो व्याक्रियतेऽनुत्तरायां सम्यक्संबोधौ। इयं सुभूते तथागतस्य वैशारद्यप्रतिपद् यां प्रतिपद्यमानो 15 बोधिसत्त्वो महासत्त्वः एवं चरन् एवं घटमानः एवं व्यायच्छमानोऽनुत्तरं बुद्धज्ञानं सर्वज्ञज्ञानं महासार्थवाहज्ञानं नानुप्राप्स्यतीति नैतत्स्थानं विद्यते॥

W 800 सुभूतिराह—या भगवन् सर्वधर्माणामनुत्पत्तिकधर्मता, सा व्याक्रियतेऽनुत्तरायां सम्यक्संबोधौ? भगवानाह—नो हीदं सुभूते। सुभूतिराह—कथमस्येदानीं[1] भगवन् धर्मस्य व्याकरणं भवत्यनुत्तरायां सम्यक्संबोधौ? भगवानाह—किं पुनः सुभूते समनुपश्यसि त्वं तं 20 धर्मं यस्य धर्मस्य व्याकरणं भवत्यनुत्तरायां सम्यक्संबोधौ? सुभूतिराह—नो हीदं भगवन्। R 409 नाहं भगवंस्तं धर्मं समनुपश्यामि यो धर्मो व्याकृतो व्याकरिष्यते व्याक्रियते वा अनुत्तरायां सम्यक्संबोधौ। तमप्यहं भगवन् धर्मं न समनुपश्यामि, यो धर्मोऽभिसंबुध्यते, यो धर्मोऽभिसंबोद्धव्यः, येन वा धर्मेणाभिसंबुध्यते। तत्कस्य हेतोः? सर्वधर्मेषु भगवन् अनुपलभ्यमानेषु न मे एवं भवति—अयं धर्मोऽभिसंबुध्यते, अयं धर्मोऽभिसंबोद्धव्यः, अनेन 25 वा धर्मेणाभिसंबुध्यते इति॥

W 801 आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां कल्याणमित्रपरिवर्तो नाम द्वाविंशतितमः॥



१ R कतमस्य for कथमस्य.

## २३ शक्रपरिवर्तस्त्रयोविंशतितमः ।

तेन खलु पुनः समयेन शक्रो देवानामिन्द्रस्तस्यामेव पर्षदि संनिपतितः संनिषण्णोऽभूत् । अथ खलु शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्–गम्भीरेयं भगवन् प्रज्ञापारमिता । दुर्दृशा दुरनुबोधा बतेयं भगवन् प्रज्ञापारमिता । एवमुक्ते भगवान् शक्रं देवानामिन्द्रमेतदवोचत्–एवमेतत्कौशिक, एवमेतत् । गम्भीरेयं कौशिक प्रज्ञापारमिता । दुर्दृशा 5 दुरनुबोधा बतेयं कौशिक प्रज्ञापारमिता । आकाशगम्भीरतया गम्भीरेयं प्रज्ञापारमिता । विविक्तत्वाद्दुर्दृशा । शून्यत्वाद्दुरनुबोधेयं प्रज्ञापारमिता । एवमुक्ते शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्–न ते भगवन् सत्त्वा अवरकेण कुशलमूलेन समन्वागता भविष्यन्ति य इमां गम्भीरां प्रज्ञापारमितां श्रोष्यन्ति । श्रुत्वा च उद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति लिखि- 10 ष्यन्ति । एवमुक्ते भगवान् शक्रं देवानामिन्द्रमेतदवोचत्–एवमेतत्कौशिक, एवमेतत् । न ते कौशिक सत्त्वा अवरकेण कुशलमूलेन समन्वागता भविष्यन्ति, य इमां गम्भीरां प्रज्ञापारमितां श्रोष्यन्ति । श्रुत्वा चोद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति लिखिष्यन्ति । यावन्तः कौशिक जम्बूद्वीपे सत्त्वाः, ते सर्वे दशकुशलकर्मपथसमन्वागता भवेयुः, तत्किं मन्यसे कौशिक 15 अपि नु ते सत्त्वास्ततोनिदानं बहु पुण्यं प्रसवेयुः ? शक्र आह–बहु भगवन्, बहु सुगत । भगवानाह–अतः खलु पुनः स कौशिक कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवति, य इमां प्रज्ञापारमितां श्रोष्यति । श्रुत्वा च उद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति देशयिष्यत्युपदेक्ष्यत्युद्देक्ष्यति स्वाध्यास्यति लिखिष्यति । अस्य कौशिक पुण्यस्कन्धस्य असौ पौर्वकाणां जाम्बूद्वीपकानां सर्वसत्त्वानां शीलमयः पुण्यस्कन्धः शत- 20 तमीमपि कलां नोपैति । सहस्रतमीमपि शतसहस्रतमीमपि कोटीतमीमपि कोटीशततमीमपि कोटीसहस्रतमीमपि कोटीशतसहस्रतमीमपि कोटीनियुतशतसहस्रतमीमपि कलां नोपैति । संख्यामपि कलामपि गणनामपि उपमामपि औपम्यमपि उपनिसामपि उपनिषदमपि न क्षमते, येन कुशलमूलेन स कुलपुत्रो वा कुलदुहिता वा समन्वागतो भवति, य इमां गम्भीरां प्रज्ञापारमितां श्रोष्यति । श्रुत्वा चोद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्त- 25 यिष्यति देशयिष्यत्युपदेक्ष्यत्युद्देक्ष्यति स्वाध्यास्यति लिखिष्यति ॥

अथ खल्वन्यतरो भिक्षुः शक्रं देवानामिन्द्रमेतदवोचत–अभिभूतोऽसि कौशिक तेन कुलपुत्रेण वा कुलदुहित्रा वा य इमां गम्भीरां प्रज्ञापारमितां श्रोष्यति । श्रुत्वा चोद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति देशयिष्यत्युपदेक्ष्यत्युद्देक्ष्यति स्वाध्यास्यति लिखिष्यति । एवमुक्ते शक्रो देवानामिन्द्रस्तं भिक्षुमेतदवोचत्–एकचित्तोत्पादेनैव अहमार्य 30 तेन कुलपुत्रेण वा कुलदुहित्रा वा अभिभूतः । कः पुनर्वादो य इमां गम्भीरां प्रज्ञापारमितां श्रोष्यति । श्रुत्वा च उद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति

R 410 W 803 R 411 W 804 R 412

W 805 देशयिष्यत्युपदेक्ष्यत्युद्देक्ष्यति स्वाध्यास्यति लिखिष्यति । कः पुनर्वादो ये श्रुत्वा उद्गृह्य धारयित्वा वाचयित्वा पर्यवाप्य प्रवर्त्य देशयित्वोपदिश्योद्दिश्य स्वाध्याय्य लिखित्वा तथत्वाय शिक्षिष्यन्ते, तथत्वाय प्रतिपत्स्यन्ते, तथत्वाय योगमापत्स्यन्ते। ते सदेवमानुषासुरं लोकमभिभवन्तो गमिष्यन्ति बोधिसत्त्वा महासत्त्वाः । न केवलं ते सदेवमानुषासुरं 5 लोकमभिभवन्तो गमिष्यन्ति, येऽपि ते स्रोतआपन्नाः सकृदागामिनोऽनागामिनोऽर्हन्तः सम्यक्संबुद्धाः, तानपि ते सर्वानभिभवन्तो गमिष्यन्ति बोधिसत्त्वा महासत्त्वाः । न केवलं स्रोतआपन्नान् सकृदागामिनोऽनागामिनोऽर्हतः प्रत्येकबुद्धानभिभवन्तो गमिष्यन्ति, येऽपि ते बोधिसत्त्वा महासत्त्वा महादानपतयः प्रज्ञापारमितोपायकौशल्यविरहिताः, तानपि ते सर्वानभिभवन्तो गमिष्यन्ति बोधिसत्त्वा महासत्त्वाः । न केवलं तान् महादानपतीन् 10 बोधिसत्त्वानभिभवन्तो गमिष्यन्ति, येऽपि ते बोधिसत्त्वा महासत्त्वाः परिशुद्धशीला अखण्डेन शीलस्कन्धेनाच्छिद्रेणाकल्मषेण परिपूर्णेन परिशुद्धेन अशबलेन शीलस्कन्धेन समन्वागताः प्रज्ञापारमितोपायकौशल्यविरहिताः, तानपि ते सर्वानभिभवन्तो गमिष्यन्ति बोधिसत्त्वा महासत्त्वाः । न केवलमखण्डेनाच्छिद्रेणाकल्मषेण परिपूर्णेन परिशुद्धेन अशबलेन शील-स्कन्धेन समन्वागतान् बोधिसत्त्वान् महासत्त्वानभिभवन्तो गमिष्यन्ति, येऽपि ते बोधिसत्त्वा

R 413 15 महासत्त्वाः क्षान्तिसंपन्ना उपशमसंपन्ना अप्रतिहतचित्ता अन्ततो दग्धस्थूणायामप्याघातचित्तं नोत्पादयन्ति प्रज्ञापारमितोपायकौशल्यविरहिताः, तानपि ते सर्वानभिभवन्तो गमिष्यन्ति बोधिसत्त्वा महासत्त्वाः । न केवलं क्षान्तिसंपन्नानुपशमसंपन्नानप्रतिहतचित्तान् बोधिसत्त्वान् महासत्त्वानभिभवन्तो गमिष्यन्ति, येऽपि ते बोधिसत्त्वा महासत्त्वा आरब्धवीर्या अनिक्षिप्तधुरा

W 806 अकुसीदा अनवलीनकायवाङ्मनःकर्मान्ताः प्रज्ञापारमितोपायकौशल्यविरहिताः, तानपि ते 20 सर्वानभिभवन्तो गमिष्यन्ति बोधिसत्त्वा महासत्त्वाः । न केवलमारब्धवीर्याननिक्षिप्तधुरानकु-सीदाननवलीनकायवाङ्मनःकर्मान्तान् बोधिसत्त्वान् महासत्त्वानभिभवन्तो गमिष्यन्ति, येऽपि ते बोधिसत्त्वा महासत्त्वा ध्यानारामा ध्यानरता ध्यानबलिनो ध्यानबलवन्तो ध्यानप्रतिष्ठिता ध्यानवशिनः प्रज्ञापारमितोपायकौशल्यविरहिताः, तानपि ते सर्वानभिभवन्तो गमिष्यन्ति बोधिसत्त्वा महासत्त्वाः । यथानिर्दिष्टायां हि प्रज्ञापारमितायां चरन् बोधिसत्त्वो महासत्त्वः 25 सदेवमानुषासुरलोकं सर्वान् श्रावकप्रत्येकबुद्धयानिकाननुपायकुशलांश्च बोधिसत्त्वान् महा-सत्त्वानभिभवति, तेषां चानभिभूतो भवति । तत्कस्य हेतोः? यो हि बोधिसत्त्वो महासत्त्वो यथानिर्दिष्टायां प्रज्ञापारमितायां चरति, प्रज्ञापारमितामनुवर्तते, अयं बोधिसत्त्वो महासत्त्वः सर्वज्ञवंशस्यानुपच्छेदाय स्थितो भवति । अयं बोधिसत्त्वो महासत्त्वस्तथागतान् न दूरीकरि-ष्यति । अयं बोधिसत्त्वो महासत्त्व एवं प्रतिपद्यमानो नचिराद्गमिष्यति बोधिमण्डम् । अयं

R 414 30 बोधिसत्त्वो महासत्त्व एवं शिक्षमाणः सत्त्वान् क्लेशपङ्के संसीदमानानुद्धरिष्यति । अयं बोधिसत्त्वो महासत्त्व एवं शिक्षमाणो बोधिसत्त्वशिक्षायां शिक्षते, न श्रावकशिक्षायां शिक्षते,

W 807 न प्रत्येकबुद्धशिक्षायां शिक्षते । एवं शिक्षमाणं च प्रज्ञापारमितायां बोधिसत्त्वं महासत्त्वं

चत्वारो लोकपाला महाराजान उपसंक्रम्यैवं वक्ष्यन्ति—क्षिप्रं त्वं कुलपुत्र अस्यां बोधिसत्त्वचर्यायां शिक्षस्व, लघु शिक्षस्व । इमानि ते चत्वारि पात्राणि यानि त्वया बोधिमण्डे निषद्य अनुत्तरां सम्यक्संबोधिमभिसंबुद्धेन प्रतिग्रहीतव्यानीति । एवं शिक्षमाणं बोधिसत्त्वं महासत्त्वं यथानिर्दिष्टायां प्रज्ञापारमितायां न केवलं चत्वारो लोकपाला महाराजान उपसंक्रमितव्यं मंस्यन्ते, अहमपि भगवंस्तं बोधिसत्त्वं महासत्त्वमुपसंक्रमिष्यामि, कः पुनर्वादस्तदन्ये 5 देवपुत्राः । तथागतैरपि सोऽर्हद्भिः सम्यक्संबुद्धैर्नित्यमेव समन्वाहृतो भविष्यति बोधिसत्त्वो महासत्त्वः । एवं प्रज्ञापारमितायां चरतो बोधिसत्त्वस्य महासत्त्वस्य यानि कानिचिल्लौकिकानि दुःखानि परोपक्रमिकाणि वा अन्यानि वा उत्पद्येरन्, तान्यस्य सर्वेण सर्वं सर्वथा सर्वं नोत्पत्स्यन्ते । अयमपि भगवन् दृष्टधार्मिको गुणस्तस्य बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो भवति ॥ 10

अथ खल्वायुष्मत आनन्दस्यैतदभवत्—किमयं शक्रो देवानामिन्द्रः स्वकेन प्रतिभानेन भाषते, उताहो बुद्धानुभावेनेति? अथ खलु बुद्धानुभावेन शक्रो देवानामिन्द्र आयुष्मत आनन्दस्य चेतसैव चेतःपरिवितर्कमाज्ञाय आयुष्मन्तमानन्दमेतदवोचत्—बुद्धानुभावोऽयमार्यानन्द वेदितव्यः, बुद्धाधिष्ठानमिदमपि आर्यानन्द वेदितव्यम्, अप्रतिबलो ह्यहमार्यानन्द बोधिसत्त्वान् महासत्त्वानारभ्य व्याहर्तुम् । अथ खलु भगवानायुष्मन्तमानन्दमामन्त्रयते स्म— 15 एवमेतदानन्द, एवमेतत् यथा शक्रेण देवानामिन्द्रेण भाषितम् । तथागतस्यैषोऽनुभावः, तथागतस्यैतदधिष्ठानम्, यच्छक्रेण देवानामिन्द्रेण भाषितमिति ॥ W 808 R 415

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां शक्रपरिवर्तो नाम त्रयोविंशतितमः ॥



# २४ अभिमानपरिवर्तश्चतुर्विंशतितमः ।

R 416 W 809 अथ खलु भगवान् पुनरप्यायुष्मन्तमानन्दमामन्त्रयते स्म–यस्मिन् खलु पुनरानन्द समये बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां शिक्षते, प्रज्ञापारमितायां योगमापद्यते, प्रज्ञापारमितां भावयति, तस्मिन् आनन्द समये ये त्रिसाहस्रमहासाहस्रे लोकधातौ माराः 5 पापीयांसः, ते सर्वे संशयिता भवन्ति–किमयं बोधिसत्त्वो महासत्त्वोऽन्तरा भूतकोटिं साक्षात्करिष्यति श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा, उताहो अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते इति। पुनरपरमानन्द तस्मिन् समये माराः पापीयांसः शोकशल्यविद्धा भवन्ति यस्मिन् समये बोधिसत्त्वो महासत्त्वः प्रज्ञापारमिताविहारेण विहरति। पुनरपरमानन्द यस्मिन् समये बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरति, प्रज्ञापारमितायां योगमापद्यते, प्रज्ञापारमितां 10 भावयति, तस्मिन् समये माराः पापीयांसो बोधिसत्त्वस्य महासत्त्वस्य विहेठामुपसंहरन्ति, भयं संजनयन्ति, उल्कापातान् दिशि दिश्युत्सृजन्ति, दिग्दाहानुपदर्शयन्ति–अप्येव नाम अयं बोधिसत्त्वो महासत्त्वोऽवलीयेत वा रोमहर्षो वा अस्य भवेत्, येनास्यैकचित्तोत्पादोऽपि R 417 क्षीयेत अनुत्तरायाः सम्यक्संबोधेरिति। तत्र आनन्द न सर्वस्य बोधिसत्त्वस्य महासत्त्वस्य मारः पापीयानुपसंक्रामति विहेठनाभिप्रायः, अपि तु कस्यचिदुपसंक्रामति, कस्यचिन्नोप- 15 संक्रामति ॥

आनन्द आह–कियद्रूपस्य भगवन् बोधिसत्त्वस्य महासत्त्वस्य उपसंक्रामति मारः W 810 पापीयान् विहेठनाभिप्रायः? भगवानाह–येन आनन्द बोधिसत्त्वेन महासत्त्वेन पूर्वान्ततः प्रज्ञापारमितायां भाष्यमाणायामधिमुक्तिचित्तं नोत्पादितं भवति, अस्य आनन्द बोधिसत्त्वस्य महासत्त्वस्य मारः पापीयानुपसंक्रामति विहेठनाभिप्रायः, अवतारं चास्य लभते ॥

20 पुनरपरमानन्द यो बोधिसत्त्वो महासत्त्वो गम्भीरायां प्रज्ञापारमितायां भाष्यमाणायां संशयप्राप्तो भवति, विमतिमुत्पादयति–स्याद्वेयं प्रज्ञापारमिता, एवं न वा स्यादिति, अस्याप्यानन्द बोधिसत्त्वस्य महासत्त्वस्य मारः पापीयानुपसंक्रामति विहेठनाभिप्रायः, अवतारं चास्य लभते ॥

पुनरपरमानन्द यो बोधिसत्त्वो महासत्त्वः कल्याणमित्रविरहितो भवति, पापमित्रपरि- 25 गृहीतश्च भवति, स गम्भीराणि गम्भीराणि स्थानानि प्रज्ञापारमितायां भाष्यमाणायां न शृणोति, अशृण्वन्न जानाति, अजानन्न परिपृच्छति–कथं प्रज्ञापारमिता भावयितव्येति, अस्याप्यानन्द बोधिसत्त्वस्य महासत्त्वस्य मारः पापीयानुपसंक्रामति विहेठनाभिप्रायः, अवतारं चास्य लभते ॥

पुनरपरमानन्द यो बोधिसत्त्वो महासत्त्वोऽसद्धर्मपरिग्राहकमालीनो भवति–एष मम R 418 सहायकः, सर्वार्थेषु मां न परित्यजति, बहवोऽपि बोधिसत्त्वा महासत्त्वा ममान्येऽपि सहायकाः 30 सन्ति। न च पुनस्ते ममाभिप्रायं परिपूरयन्ति। अयं तु मया प्रतिरूपः सहायो लब्धः। अयं ममाभिप्रायं परिपूरयिष्यति। अस्याप्यानन्द बोधिसत्त्वस्य महासत्त्वस्य मारः पापीयानुप- संक्रामति विहेठनाभिप्रायः, अवतारं चास्य लभते ॥

पुनरपरमानन्द यो बोधिसत्त्वो महासत्त्वोऽस्यां गम्भीरायां प्रज्ञापारमितायां भाष्य-
माणायामन्यं बोधिसत्त्वमेवं वदेत्—गम्भीरा बतेयं प्रज्ञापारमिता। किं तवैनया श्रुतया? न
ह्येवमत्र युज्यमानमन्येषु सूत्रान्तेषु यथा तथागतेन भाषितम्। अहमप्यस्यामगाधमास्वादं
न लभे। किं तवैनया श्रुतया लिखितया वेति? एवमन्यानपि बोधिसत्त्वान् महासत्त्वान् W 811
विवेचयते। अस्याप्यानन्द बोधिसत्त्वस्य महासत्त्वस्य मारः पापीयानुपसंक्रामति विहेठनाभि- 5
प्रायः, अवतारं चास्य लभते॥

पुनरपरमानन्द यस्मिन् समये बोधिसत्त्वो महासत्त्वोऽन्यान् बोधिसत्त्वानवमन्यते—
अहं विवेकविहारेण विहरामि, नान्ये विवेकविहारेण विहरन्ति, नान्येषां विवेकविहाराः
संविद्यन्ते इति। तस्मिन्नानन्द समये मारः पापीयांस्तुष्ट उदग्र आत्तमनाः प्रमुदितः
प्रीतिसौमनस्यजातो भवति, संहर्षजातो हर्षितचित्तः प्रीतिप्रामोद्यजातो भवति। तत्कस्य 10
हेतोः? दूरीकरोत्येषोऽनुत्तरां सम्यक्संबोधिमिति॥

पुनरपरमानन्द यस्मिन् समये बोधिसत्त्वस्य महासत्त्वस्य नामग्रहणं वा गोत्रग्रहणं
वा धुतगुणपरिकीर्तनं वा भवति, एवं स तावन्मात्रकेण ततोऽन्यान् बोधिसत्त्वान् महासत्त्वान्
पेशलान् कल्याणधर्मणोऽवमन्यते। ते च तस्य गुणा न संविद्यन्ते, येऽविनिवर्तनीयानां R 419
बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमितायां चरतां गुणाः, ते आकारास्तानि लिङ्गानि तानि 15
निमित्तानि तस्य न संविद्यन्ते। सोऽसंविद्यमानेष्वविनिवर्तनीयगुणेषु क्लेशमुत्पादयति, यदुत
आत्मानमुत्क्रोशयति, परान् पंसयति—न खल्वेते तेषु धर्मेषु संदृश्यन्ते, यत्राहं संदृश्य इति।
तत्र माराणां पापीयसामेवं भवति—न शून्यानि मारभवनानि भविष्यन्ति, उत्सदानि भवि-
ष्यन्ति। महानिरयास्तिर्यञ्चः प्रेतविषया आसुराश्च काया उत्सदा भविष्यन्तीति। तथा च
मारः पापीयानधिष्ठास्यति, यथा ते बोधिसत्त्वा महासत्त्वा एवं प्रवृत्ता अध्याक्रान्ता लाभ- 20
सत्कारेण भविष्यन्ति, आदेयवचनाश्च भविष्यन्ति। ते तया आदेयवचनतया बहुजनं
ग्राहयिष्यन्ति। तेषां च स महाजनः श्रोतव्यं श्रद्धातव्यं[1] मंस्यते। ते दृष्ट्वा श्रुत्वा च
तेषामनुकृतिमापत्स्यन्ते। ते दृष्टश्रुतानुकृतिमापद्यमाना न तथत्वाय शिक्षिष्यन्ते, न तथत्वाय W 812
प्रतिपत्स्यन्ते, न तथत्वाय योगमापत्स्यन्ते। एवं ते न तथतायां शिक्षमाणा न तथतायां
प्रतिपद्यमाना न तथतायां योगमापद्यमानाः संक्लेशं विवर्धयिष्यन्ति। एवं ते विपर्यस्तया 25
चित्तसंतत्या यद्यदेव कर्म आरप्स्यन्ते कायेन वा वाचा वा मनसा वा, तत्सर्वमनिर्दिष्टत्वाय
अकान्तत्वाय अप्रियत्वाय अमनआपत्वाय संवर्त्स्यते। एवं ते महानिरया उत्सदा भविष्यन्ति,
तिर्यञ्चः प्रेतविषया आसुराश्च कायाः, मारभवनानि चोत्सदानि भविष्यन्ति। इममप्यानन्द R 420
अर्थवशं संपश्यन् मारः पापीयांस्तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातो भवति॥

पुनरपरमानन्द यस्मिन् समये बोधिसत्त्वो महासत्त्वः श्रावकयानिकेन पुद्गलेन सार्धं 30
कलहायति विवदति विगृह्णीते आक्रोशति परिभाषते व्यापद्यते दोषमुत्पादयति, तस्मिन्

---

१ W om. श्रद्धातव्यं·

समये मारस्य पापीयस एवं भवति—दूरीकरिष्यति बतायं कुलपुत्रः सर्वज्ञताम्, अतिदूरे स्थास्यति सर्वज्ञतायाः। सचेत्पुनर्बोधिसत्त्वयानिकः पुद्गलोऽन्येन बोधिसत्त्वयानिकेन पुद्गलेन सार्धं कलहायति विवदति विगृह्णीते आक्रोशति परिभाषते व्यापद्यते दोषमुत्पादयति, तत्र मारः पापीयान् भूयस्या मात्रया तुष्टो भवति, उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्य-
5 जातो भवति। एवं चास्य भवति—उभावप्येतौ बोधिसत्त्वौ दूरे स्थास्यतः सर्वज्ञताया इति॥

पुनरपरमानन्द यो बोधिसत्त्वो महासत्त्वो व्याकृतोऽव्याकृतेन बोधिसत्त्वेन महासत्त्वेन सार्धं कलहायेत् विवदेत् विगृह्णीयात् आक्रोशेत् परिभाषेत व्यापद्येत दोषमुत्पादयेत्, चित्तं चाघातयेत्, तेन बोधिसत्त्वेन महासत्त्वेन चित्तोत्पादे तावत एव कल्पान् संनाहः संनाह्यः, सचेदस्यापरित्यक्ता सर्वज्ञता॥

10 एवमुक्ते आयुष्मानानन्दो भगवन्तमेतदवोचत्—अस्ति भगवंस्तेषां चित्तोत्पादानां किं-
R 421 W 813 चिन्निःसरणम्, उताहो तावत एव कल्पानवश्यं तेन बोधिसत्त्वेन महासत्त्वेन संनाहः संनह्यः? भगवानाह—सनिःसरणमानन्द मया धर्मो देशितः श्रावकयानिकानां प्रत्येकबुद्धयानिकानां बोधिसत्त्वयानिकानां च पुद्गलानाम्। तत्र आनन्द योऽयं बोधिसत्त्वयानिकः पुद्गलो बोधि-सत्त्वयानिकेन पुद्गलेन सार्धं कलहायित्वा विवदित्वा विगृह्य आक्रुश्य परिभाष्य व्यापद्य
15 दोषमुत्पाद्य न प्रतिदेशयति, नायत्यां संवराय प्रतिपद्यते, अनुशयं वहति, अनुशयबद्धो विहरति, नाहमानन्द तस्य पुद्गलस्य निःसरणं वदामि। अवश्यं तेन आनन्द पुद्गलेन पुनरेव तावत एव कल्पान् संनाहः संनह्यः। यः पुनरानन्द बोधिसत्त्वयानिकः पुद्गलो बोधिसत्त्वयानिकेन पुद्गलेन सार्धं कलहायित्वा विवदित्वा विगृह्य आक्रुश्य परिभाष्य व्यापद्य दोषमुत्पाद्य प्रतिदेशयति, प्रतिदेश्य आयत्यां संवराय प्रतिपद्यते, एवं च चित्तमुत्पादयति—येन मया सर्वसत्त्वानां
20 विग्रहा विवादा विरोधा उत्सारयितव्या निध्यापयितव्याः प्रशमयितव्याः, सोऽहं नाम स्वयमेव विवदामि। लाभा मे दुर्लब्धा न सुलब्धाः, योऽहं जल्पिते प्रतिजल्पामि। येन मया सर्वसत्त्वानां संक्रमभूतेन भवितव्यम्, सोऽहं परेषु त्वमित्यपि वाचं भाषे, परुषं वा कर्कशं वा प्रतिवचो ददामि। इदमपि मया नैव वक्तव्यम्। जडसदृशेन एडमूकसमेन मया कलहविग्रहविवादेषु भवितव्यम्, परतो दुरुक्तानि दुरागतानि दुर्भाषितानि भाष्य-
R 422 25 माणानि शृण्वता चित्तं नाघातयितव्यम्। परेषामन्तिके न ममैतत्साधु, न चैतन्ममां प्रतिरूपम्, योऽहं परस्य दोषान्तरं संजाने। एतदपि मे न प्रतिरूपम्, यदहं परेष दोषान्तरमपि श्रोतव्यं मन्ये। तत्कस्य हेतोः? न मया अध्याशयो विकोपयितव्यः, येन
W 814 मया सर्वसत्त्वाः सर्वसुखोपधानैः सुखयितव्याः, परिनिर्वापयितव्याश्च अनुत्तरां सम्यक्संबोधि-मभिसंबुध्य, स नामाहं व्यापद्ये। न च मया स्वेपराद्धेष्वपि[1] परेषु व्यापत्तव्यम्। स नामाहं
30 क्षोभं गच्छामि। इदं मया न करणीयम्। दृढपराक्रमतया पराक्रान्तव्यम्। न च मया जीवितान्तरायेऽपि क्रियमाणे क्षोभः करणीयः, न भ्रुकुटिर्मुखे उत्पादयितव्येति। अस्याह-

[1] W अपराद्धेष्वपि.

मानन्द बोधिसत्त्वस्य महासत्त्वस्य निःसरणं वदामि[1]। एवं चानन्द बोधिसत्त्वेन महासत्त्वेन श्रावकयानिकानामपि पुद्गलानामन्तिके स्थातव्यम्, यथा न कस्यचित्सत्त्वस्यान्तिके क्षुभ्येत, एवमेव च सर्वसत्त्वानामन्तिके स्थातव्यम्। कथं चानन्द बोधिसत्त्वेन महासत्त्वेन अपरेषां बोधिसत्त्वयानिकानां पुद्गलानामन्तिके स्थातव्यम्? तद्यथापि नाम आनन्द शास्तरि। एते मम बोधिसत्त्वा महासत्त्वाः[2] शास्तार इत्येवं स्थातव्यम्। एकयानसमारूढा बतेमे मम बोधिसत्त्वा महासत्त्वाः, एकमार्गसमारूढा बतेमे मम बोधिसत्त्वा महासत्त्वाः, समानाभिप्राया बतेमे मम बोधिसत्त्वा महासत्त्वाः, समयानसंप्रस्थिता बतेमे मम बोधिसत्त्वा महासत्त्वाः। यत्रैभिः शिक्षितव्यम्, तत्र मया शिक्षितव्यम्। यथैव चैभिः शिक्षितव्यम्, तथैव मया शिक्षितव्यम्। सचेत्पुनरेषां कश्चिद्व्यवकीर्णविहारेण विहरिष्यति, न मया व्यवकीर्णविहारेण विहर्तव्यम्। सचेत्पुनरेतेऽव्यवकीर्णविहारेण विहरिष्यन्ति सर्वज्ञताप्रतिसंयुक्तैर्मनसिकारैः, मयाप्येवं शिक्षितव्यम्। एवं सर्वज्ञतायां शिक्षमाणस्य आनन्द बोधिसत्त्वस्य महासत्त्वस्य अन्तरायो न भवत्यनुत्तरायाः सम्यक्संबोधेः, क्षिप्रं च अनुत्तरां सम्यक्संबोधिमभिसंबुध्यते इति॥

W 815 W 816 R 423

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायामभिमानपरिवर्तो नाम चतुर्विंशतितमः॥

---

१ W वहामि. २ W om. महासत्त्वाः.

# २५ शिक्षापरिवर्तः पञ्चविंशतितमः ।

R 424
W 817
*अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्*—क्व पुनर्भगवन् शिक्षमाणो बोधिसत्त्वो महासत्त्वः सर्वज्ञतायां शिक्षते ? भगवानाह—सचेत्सुभूते बोधिसत्त्वो महासत्त्वः क्षये शिक्षते, सर्वज्ञतायां शिक्षते । एवमनुत्पादेऽनिरोधेऽजातौ अभावे विवेके विरागे आकाशे धर्मधातौ ।
5 सचेत्सुभूते बोधिसत्त्वो महासत्त्वो निर्वाणे शिक्षते, सर्वज्ञतायां शिक्षते । सुभूतिराह—किं कारणं भगवन् बोधिसत्त्वो महासत्त्वः क्षये शिक्षमाणः शिक्षते सर्वज्ञतायाम्, एवमनुत्पादेऽनिरोधेऽजातौ अभावे विवेके विरागे आकाशे धर्मधातौ निर्वाणे शिक्षमाणः शिक्षते सर्वज्ञतायाम्? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—यत्सुभूते एवं वदसि—किं कारणं बोधिसत्त्वो महासत्त्वः क्षये शिक्षमाणः शिक्षते सर्वज्ञतायाम् । एवमनुत्पादेऽनिरोधेऽजातौ
10 अभावे विवेके विरागे आकाशे धर्मधातौ निर्वाणे शिक्षमाणः शिक्षते सर्वज्ञतायामिति ? तत्किं मन्यसे सुभूते या तथागतस्य तथता यया तथतया तथागतस्तथागत इति प्रभाव्यते, अपि नु सा क्षीयते ? सुभूतिराह—नो हीदं भगवन् । तत्कस्य हेतोः ? न हि भगवन्
R 425
क्षयः क्षीयते । अक्षयो हि भगवन् क्षयः । भगवानाह—तत्किं मन्यसे सुभूते या तथागतस्य तथता यया तथतया तथागतस्तथागत इति प्रभाव्यते, अपि नु सा उत्पद्यते वा
W 818
15 निरुध्यते वा जायते वा भवति वा विभवति वा विविच्यते वा रज्यते वा विरज्यते वा आकाशीभवति वा धर्मीभवति वा ? आह—नो हीदं भगवन् । भगवानाह—तत्किं मन्यसे सुभूते या तथागतस्य तथता यया तथतया तथागतस्तथागत इति प्रभाव्यते, अपि नु सा निर्वाति ? आह—नो हीदं भगवन् । भगवानाह—तस्मात्तर्हि सुभूते एवं शिक्षमाणो बोधिसत्त्वो महासत्त्वः न तथता क्षीयते इत्येवं शिक्षते । एवं शिक्षमाणः सुभूते बोधिसत्त्वो
20 महासत्त्वः शिक्षते सर्वज्ञतायाम् । एवं शिक्षमाणः शिक्षते प्रज्ञापारमितायाम्, शिक्षते बुद्धभूमौ, शिक्षते बलेषु, शिक्षते वैशारद्येषु, शिक्षते सर्वबुद्धधर्मेषु, शिक्षते सर्वज्ञज्ञाने । एवं शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वः सर्वशिक्षापारमितामनुप्राप्स्यति । एवं शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वो न शक्यो मारेण वा मारपर्षदा वा मारकायिकाभिर्वा देवताभिरभिमर्दितुम् । एवं शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वः क्षिप्रमविनि-
25 वर्तनीयधर्मतामनुप्राप्स्यति । एवं शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वः क्षिप्रं बोधिमण्डे निषत्स्यति । एवं शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वः स्वके गोचरे चरति । एवं शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वः शिक्षते नाथकरकेषु धर्मेषु, शिक्षते महामैत्र्याम्, महाकरुणायां शिक्षते, महामुदितायां शिक्षते, महोपेक्षायां शिक्षते । एवं शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वः शिक्षते त्रिपरिवर्तस्य द्वादशाकारस्य धर्मचक्रस्य प्रवर्तनाय । एवं
30 शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वः सर्वधातुं नोनीकरिष्यामीति शिक्षते । एवं
W 819
शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वस्तथागतवंशस्यानुपच्छेदाय शिक्षते । एवं शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वोऽमृतधातुद्वारं वि[1]वरिष्यामीति शिक्षते । नेयं सुभूते उदारा

---

१ R W विचरिष्यामि.

शिक्षा शक्या हीनसत्त्वेन शिक्षितुम्। न हि अल्पस्थाम्ना शक्यमस्यां शिक्षायां शिक्षितुम्। तत्कस्य हेतोः? सर्वसत्त्वसारा हि ते सुभूते, सर्वसत्त्वनाथकामा हि ते सुभूते, येऽस्यां शिक्षायां शिक्षन्ते। सर्वसत्त्वाभ्युद्गततां तेऽनुप्राप्तुकामाः, य इह शिक्षन्ते। एवं शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वो न निरयेषूपपद्यते, न तिर्यग्योनिषूपपद्यते, न प्रेतविषयेषूपपद्यते, नासुरेषु कायेषूपपद्यते, न प्रत्यन्तजनपदेषूपपद्यते, न चण्डालकुलेषूपपद्यते, न शाकुनिक- 5 कुलेषूपपद्यते, न निषादधीवरौरभ्रिककुलेषूपपद्यते, नाप्यन्येष्वेवंरूपेषु हीनजातिकेषु हीनकर्मसेविषु वा कुलेषूपपद्यते। एवं शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वो नान्धो भवति, न बधिरो भवति, न काणो भवति, न कुण्ठो भवति, न कुब्जो भवति, न कुणिर्भवति, न लङ्गो भवति, न खञ्जो भवति, न जडो[1] भवति, न लोलो भवति, न लोठो भवति, न कलो भवति, न हीनाङ्गो भवति, न विकलाङ्गो भवति, न विकृताङ्गो भवति, न 10 दुर्बलो भवति, न दुर्वर्णो भवति, न दुःसंस्थानो भवति, न हीनेन्द्रियो भवति, न विकले- न्द्रियो भवति। सर्वाकारपरिपूर्णेन्द्रियो भवति, स्वरसंपन्नो भवति। एवं शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वो न प्राणातिपाती भवति, नादत्तादायी भवति, न काममिथ्याचारी भवति, न मृषावादी भवति, न पिशुनवाग्भवति, न परुषवाग्भवति, न संभिन्नप्रलापी भवति, नाभिध्यालुर्भवति, न व्यापन्नचित्तो भवति, न मिथ्यादृष्टिको भवति, न मिथ्याजीवेन 15 जीविकां कल्पयति। एवं शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वो न दीर्घायुष्केषु देवेषू- पपद्यते, न दुःशीलपरिग्राहको भवति, नाभूतधर्मपरिग्राहको भवति, न ध्यानसमापत्ति- वशेनोपपद्यते। तत्कस्य हेतोः? अस्ति हि तस्योपायकौशल्यं येनोपायकौशल्येन समन्वागतो बोधिसत्त्वो महासत्त्वो न दीर्घायुष्केषु देवेषूपपद्यते। तत्पुनः सुभूते उपायकौशल्यं बोधि- सत्त्वस्य महासत्त्वस्य कतमत्? यदुत इयमेव प्रज्ञापारमिता। तथा च अत्रोपायकौशल्ये 20 योगमापद्यते, यथा अन्येनोपायकौशल्येन समन्वागतो बोधिसत्त्वो महासत्त्वो ध्यानानि च समापद्यते, न च ध्यानवशेनोपपद्यते। एवं शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वो बलपरिशुद्धिं निगच्छति, वैशारद्यपरिशुद्धिं निगच्छति, सर्वबुद्धधर्मपरिशुद्धिं निगच्छति, तामनुप्राप्नोति॥

R 427 W 820 R 428

आयुष्मान् सुभूतिराह—यदा भगवन् सर्वधर्मा एवं प्रकृतिपरिशुद्धाः, तत्कतमस्य भगवन् 25 धर्मस्य बोधिसत्त्वो महासत्त्वो बलपरिशुद्धिं निगच्छति, वैशारद्यपरिशुद्धिं निगच्छति, सर्वबुद्धधर्मपरिशुद्धिं निगच्छति, तामनुप्राप्नोति? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्— एवमेतत्सुभूते, एवमेतत्। तत्कस्य हेतोः? सर्वधर्मा हि सुभूते प्रकृत्यैव परिशुद्धाः। एवं सुभूते प्रकृतिपरिशुद्धेषु सर्वधर्मेषु बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां शिक्षमाणस्य या असंसीदनता अनवलीनता, इयं सा सुभूते प्रज्ञापारमिता। एवं सुभूते बालपृथग्जना 30 एनान् धर्मानजानन्तोऽपश्यन्तो धर्माणां धर्मतां न जानन्ति, न पश्यन्ति। तेषां सत्त्वानां

---

[1] Ap जड्गो (क्वचिज्जङ्ग इति पाठः। तत्राप्ययमेवार्थ इति केचित्)..

कृतशः सुभूते बोधिसत्त्वा महासत्त्वा व्यायच्छन्ते, वीर्यमारभन्ते—वयमेवमजानकान् सत्त्वान् जानयिष्यामः, वयमेवमपश्यकान् सत्त्वान् पश्ययिष्यामः इत्यत्र शिक्षायां शिक्षन्ते । अत्र शिक्षायां शिक्षमाणा बोधिसत्त्वा महासत्त्वा बलान्यनुप्राप्नुवन्ति, वैशारद्यान्यनुप्राप्नुवन्ति । सर्वबुद्धधर्मा-
W 821 ननुप्राप्नुवन्ति । एवं शिक्षमाणाः सुभूते बोधिसत्त्वा महासत्त्वाः परसत्त्वानां परपुद्गलानां
W 822 5 चित्तचरितविस्पन्दितानि यथाभूतं प्रजानन्ति । यथाभूतं प्रजानन्तः परचित्तचरितज्ञ-
R 429 तायाः पारं गच्छन्ति । तद्यथापि नाम सुभूते अल्पकास्ते महापृथिव्यां पृथिवीप्रदेशाः येऽपगतपाषाणाः, यत्र सुवर्णं वा जातरूपं वा रजतं वोत्पद्यते । अथ खलु पुनर्बहुतरकास्ते महापृथिव्यां पृथिवीप्रदेशाः, य ऊषरा उज्जङ्गला विविधतृणकाण्ड[1]कण्टकाधानाः । एवमेव सुभूते अल्पकास्ते बोधिसत्त्वा महासत्त्वाः सत्त्वनिकाये संविद्यन्ते, येऽस्यां सर्वज्ञताशिक्षायां
10 शिक्षन्ते यदुत प्रज्ञापारमिताशिक्षायाम् । अथ खलु बहुतरकास्ते सत्त्वाः सत्त्वनिकाये संविद्यन्ते, ये श्रावकप्रत्येकबुद्धशिक्षायां शिक्षन्ते ॥

पुनरपरं सुभूते तद्यथापि नाम अल्पकास्ते सत्त्वाः सत्त्वनिकाये संविद्यन्ते, ये चक्रवर्तिराज्यसंवर्तनीयं कर्म समादाय वर्तन्ते । अथ खलु बहुतरकास्ते सत्त्वाः सत्त्वनिकाये संविद्यन्ते, ये कोट्टराज्यसंवर्तनीयं कर्म समादाय वर्तन्ते । एवमेव सुभूते अल्पकास्ते
W 823 15 बोधिसत्त्वा महासत्त्वाः सत्त्वनिकाये संविद्यन्ते, ये इमं मार्गमारूढा यदुत प्रज्ञापारमितामार्गम्, अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यामहे इति । अथ खलु बहुतरकास्ते सत्त्वाः सत्त्वनिकाये संविद्यन्ते, ये श्रावकप्रत्येकबुद्धमार्गमारूढाः ॥

पुनरपरं सुभूते तद्यथापि नाम अल्पकास्ते सत्त्वाः सत्त्वनिकाये संविद्यन्ते, ये शक्रसंवर्तनीयं कर्म समादाय वर्तन्ते । अथ खलु बहुतरकास्ते सत्त्वाः सत्त्वनिकाये संविद्यन्ते,
20 ये देवलोकसंवर्तनीयं कर्म समादाय वर्तन्ते । एवमेव सुभूते अल्पकास्ते बोधिसत्त्वा महासत्त्वाः सत्त्वनिकाये संविद्यन्ते, येऽस्यां प्रज्ञापारमिताशिक्षायां शिक्षन्ते । अथ खलु बहुतरकास्ते बोधिसत्त्वा महासत्त्वाः सत्त्वनिकाये संविद्यन्ते, ये श्रावकप्रत्येकबुद्धशिक्षायां शिक्षन्ते ॥

R 430 पुनरपरं सुभूते तद्यथापि नाम अल्पकास्ते सत्त्वाः सत्त्वनिकाये संविद्यन्ते, ये
25 ब्रह्मसंवर्तनीयं कर्म समादाय वर्तन्ते । अथ खलु बहुतरकास्ते सत्त्वाः सत्त्वनिकाये संविद्यन्ते, ये ब्रह्मपार्षद्यसंवर्तनीयं कर्म समादाय वर्तन्ते । एवमेव सुभूते अल्पकास्ते बोधिसत्त्वा महासत्त्वाः सत्त्वनिकाये संविद्यन्ते, येऽविनिवर्तनीया अनुत्तरायाः सम्यक्संबोधेः । अथ खलु बहुतरकास्ते बोधिसत्त्वा महासत्त्वाः सत्त्वनिकाये संविद्यन्ते, ये विवर्तन्तेऽनुत्तरायाः सम्यक्संबोधेः । तस्मात्तर्हि सुभूते अल्पकास्ते सत्त्वाः सत्त्वनिकाये संविद्यन्ते, येऽनुत्तरायां सम्यक्सं-
30 बोधौ संप्रस्थिताः । तेभ्योऽपि सुभूते अल्पेभ्योऽल्पतरकास्ते सत्त्वाः, ये तथत्वाय प्रतिपद्यन्ते ।

---

१ R W °खाण्ड°.

तेभ्योऽपि सुभूते अल्पतरकेभ्यस्तथत्वाय प्रतिपद्यमानेभ्योऽल्पतमास्ते ये प्रज्ञापारमितायां योगमापद्यन्ते। तेभ्योऽपि सुभूते अल्पतमेभ्यः प्रज्ञापारमितायां योगमापद्यमानेभ्योऽल्पतमास्ते बोधिसत्त्वा महासत्त्वाः, येऽविनिवर्तनीया अनुत्तरायाः सम्यक्संबोधेः। तस्मात्तर्हि सुभूते बोधिसत्त्वेन महासत्त्वेन य एतेऽल्पतमेभ्योऽल्पतमा अविनिवर्तनीया बोधिसत्त्वा महासत्त्वाः, तेषु गणनां गन्तुकामेन इहैव प्रज्ञापारमितायां शिक्षितव्यम्, योगमापत्तव्यम्॥ 5 W 824

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य एवं प्रज्ञापारमितायां शिक्षमाणस्य न खिलसहगतं चित्तमुत्पद्यते, न विचिकित्सासहगतं चित्तमुत्पद्यते, नेर्ष्यामात्सर्यसहगतं चित्तमुत्पद्यते, न दौःशील्यसहगतं चित्तमुत्पद्यते, न व्यापादसहगतं चित्तमुत्पद्यते, न कौसीद्यसहगतं चित्तमुत्पद्यते, न विक्षेपसहगतं चित्तमुत्पद्यते, न दौष्प्रज्ञसहगतं चित्तमुत्पद्यते। एवं हि सुभूते प्रज्ञापारमितायां शिक्षमाणेन बोधिसत्त्वेन महासत्त्वेन सर्वाः पारमिताः 10 संगृहीता भवन्ति, सर्वाः पारमिता उद्गृहीता भवन्ति, सर्वाः पारमिता अनुगता भवन्ति, R 431 सर्वाः पारमिता अन्तर्गता भवन्ति। तद्यथापि नाम सुभूते सत्कायदृष्टौ द्वाषष्टिदृष्टिगतान्यन्तर्गतानि भवन्ति, W 825 एवमेव सुभूते प्रज्ञापारमितायां शिक्षमाणस्य बोधिसत्त्वस्य महासत्त्वस्य तस्यां सर्वाः पारमिता अन्तर्गता भवन्ति। तद्यथापि नाम सुभूते पुरुषस्य जीवितेन्द्रिये प्रवर्तमाने सर्वाणीन्द्रियाण्यन्तर्गतानि भवन्ति, एवमेव सुभूते बोधिसत्त्वस्य 15 महासत्त्वस्य प्रज्ञापारमितायां शिक्षमाणस्य सर्वकुशला धर्मा अन्तर्गता भवन्ति। तद्यथापि नाम सुभूते पुरुषस्य जीवितेन्द्रिये निरुद्धे सर्वाणीन्द्रियाणि निरुद्धानि भवन्ति, एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां शिक्षमाणस्य अज्ञाने निरुद्धे सर्वेऽकुशला धर्मा निरुद्धा भवन्ति, सर्वाश्च तदन्याः पारमिता अन्तर्गताः परिगृहीता भवन्ति। तस्मात्तर्हि सुभूते बोधिसत्त्वेन महासत्त्वेन सर्वाः पारमिताः परिग्रहीतुकामेन प्रज्ञापारमितायां शिक्षित- 20 व्यम्। प्रज्ञापारमितायां शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वः सर्वसत्त्वानामग्रतायां शिक्षते। तत्कस्य हेतोः? पुण्याग्रत्वात्। तत्किं मन्यसे सुभूते यावन्तस्त्रिसाहस्रमहासाहस्रे लोकधातौ सर्वसत्त्वाः सत्त्वसंग्रहेण संगृह्यमाणाः, अपि नु ते बहवो भवन्ति? सुभूतिराह—जाम्बूद्वीपका एव तावद्भगवन् बहवः सत्त्वा भवन्ति, कः पुनर्वादो ये त्रिसाहस्रमहासाहस्रे लोकधातौ सत्त्वाः। भगवानाह—यः सुभूते एको बोधिसत्त्वो महासत्त्वो यावज्जीवं तिष्ठंस्तान् सर्वसत्त्वान् 25 W 826 चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः सर्वसुखोपधानैश्चोपतिष्ठेत्, तत्किं मन्यसे सुभूते अपि नु स बोधिसत्त्वो महासत्त्वस्ततोनिदानं बहुतरं पुण्यं प्रसवति? R 432 सुभूतिराह—बहु भगवन्, बहु सुगत। भगवानाह—अतः स सुभूते बोधिसत्त्वो महासत्त्वस्ततोनिदानं बहुतरं पुण्यं प्रसवति, य इमां प्रज्ञापारमितामन्तशोऽच्छटासंघातमात्रकमपि भावयेत्। तत्कस्य हेतोः? एवं महार्थिका हि सुभूते प्रज्ञापारमिता बोधिसत्त्वस्य महासत्त्वस्य अनुत्तरायाः 30 सम्यक्संबोधेराहारिका। तस्मात्तर्हि सुभूते बोधिसत्त्वेन महासत्त्वेन अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन सर्वसत्त्वानामनुत्तरतां गन्तुकामेन सर्वसत्त्वानामनाथानां नाथेन भवितुकामेन

बुद्धविषयमनुप्राप्तुकामेन बुद्धवृषभितामनुगन्तुकामेन बुद्धविक्रीडितं विक्रीडितुकामेन बुद्ध-सिंहनादं नदितुकामेन बुद्धसंपत्तिमनुप्राप्तुकामेन त्रिसाहस्रमहासाहस्रे लोकधातौ धर्मसांकथ्यं कर्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम् । प्रज्ञापारमितायां सुभूते शिक्षमाणस्य बोधिसत्त्वस्य महासत्त्वस्य नाहं तां संपत्तिं समनुपश्यामि, या तेन न शिक्षिता 5 भवति । सुभूतिराह–किं पुनर्भगवन् श्रावकसंपत्तिरपि तेन बोधिसत्त्वेन महासत्त्वेन शिक्षिता भवति? भगवानाह–श्रावकसंपत्तिरपि सुभूते तेन बोधिसत्त्वेन महासत्त्वेन शिक्षिता भवति । न खलु पुनः सुभूते बोधिसत्त्वो महासत्त्वः श्रावकसंपत्त्यां स्थास्यामीति शिक्षते, श्रावकसंपत्तिर्वा मे भविष्यतीति नैवं शिक्षते । येऽपि ते सुभूते श्रावकगणाः, तानपि स जानाति, न च तत्रावतिष्ठते । एवं च व्यवचारयति, न च प्रतिवहति–मयाप्येते श्रावकगुणा देशयितव्याः 10 प्रकाशयितव्या इति शिक्षते । एवं शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वः सदेवमानुषासुरस्य लोकस्य दक्षिणीयतां गच्छति । एवं शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वः सर्वांस्ततोऽन्यान् दक्षिणीयान् श्रावकप्रतिसंयुक्तान् प्रत्येकबुद्धप्रतिसंयुक्तांश्चाभिभवति, सर्वज्ञता चास्य आसन्नीभवति । एवं शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्वो न रिञ्चति, प्रज्ञापारमितां चरति प्रज्ञापारमितायामविरहितः प्रज्ञापारमिताविहारेण । एवं चरन् सुभूते 15 बोधिसत्त्वो महासत्त्वोऽपरिहाणधर्मा अपरिहाणधर्मेति वेदितव्यः । सर्वज्ञताया दूरीकरोति श्रावकभूमिम्, प्रत्येकबुद्धभूमिं च, आसन्नीभवत्यनुत्तरायाः सम्यक्संबोधेः । सचेत्पुनरस्यैवं भवति–इयं सा प्रज्ञापारमिता इमां सर्वज्ञतामाहरिष्यति, इत्येवं संजानीते, चरति प्रज्ञापारमिताम् । अथ तामपि प्रज्ञापारमितां न संजानीते–इयं सा प्रज्ञापारमिता, अस्य वा प्रज्ञापारमिता सर्वज्ञतामाहरिष्यतीति वा, एवमपि सुभूते बोधिसत्त्वो महासत्त्वो न संजानीते, न समनुपश्यति । 20 सचेदेवं चरति बोधिसत्त्वो महासत्त्वः, चरति प्रज्ञापारमितायामिति ॥

R 433 W 827 W 828

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां शिक्षापरिवर्तो नाम पञ्चविंशतितमः ॥



## २६ मायोपमपरिवर्तः षड्विंशतितमः ।

अथ खलु शक्रस्य देवानामिन्द्रस्यैतदभूत्[1]–चरन्नेव तावदयं बोधिसत्त्वो महासत्त्वः सर्वसत्त्वानभिभवति, कः पुनर्वादो यदा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धो भविष्यति । लाभास्तेषां सत्त्वानां सुलब्धाः, सुजीवितं च ते सत्त्वा जीवन्ति, येषां सर्वज्ञतायां चित्तं क्रामति । कः पुनर्वादो यैरनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम् । स्पृहणीयास्ते सत्त्वा 5 ये सत्त्वसारा अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते ॥ R 434 W 829

अथ खलु शक्रो देवानामिन्द्रो मान्दारवाणि पुष्पाण्यभिनिर्माय पुष्पाणामञ्जलिं कृत्वा तथागतमर्हन्तं सम्यक्संबुद्धमभ्यवाकिरत्, एवं च वाचमभाषत–यैर्बोधिसत्त्वयानिकैः पुद्गलैरनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्–अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यामहे, अभिसंबुध्य सर्वसत्त्वान्[2] महता संसारार्णवेनोह्यमानान् समे पारिमे तीरे प्रतिष्ठापयिष्याम इति, 10 समृध्यन्तां तेषामभीप्सिताः परिचिन्तिताः, परिगृहीताश्चित्तोत्पादाः एतेषामेव बुद्धधर्माणां परिपूरणाय भवन्तु, एतेषामेव सर्वज्ञताप्रतिसंयुक्तानां धर्माणां परिपूरणाय भवन्तु, एतेषामेव स्वयंभूधर्माणां परिपूरणाय भवन्तु, एतेषामेव असंहार्यधर्माणां परिपूरणाय भवन्तु । न मे W 830 भगवन् एकचित्तोत्पादोऽप्युत्पद्यते, यत्ते बोधिसत्त्वा महासत्त्वा महाकरुणया समन्वागता R 435 विवर्तेरन् अनुत्तरायाः सम्यक्संबोधेरिति । न मे भगवन् एकचित्तोत्पादोऽप्युत्पद्यते यत्ते 15 बोधिसत्त्वयानिकाः पुद्गला अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुं संप्रस्थिताः, ततो विवर्तेरन् । इति यद्भूयस्या मात्रया प्रणिधिं जनयिष्यन्त्यनुत्तरायां सम्यक्संबोधौ इमानि संसारावचराणि दुःखानि सत्त्वानां संपश्यन्तः । तत्कस्य हेतोः? तया महाकरुणया अर्थकामा हितकामा हि ते सदेवमानुषासुरस्य लोकस्यानुकम्पकाः, ये इमैरेवंरूपैश्चित्तोत्पादैः समन्वागताः किमिति वयं तीर्णाः सत्त्वांस्तारयेम, मुक्ता मोचयेम, आश्वस्ता आश्वासयेम, परिनिर्वृताः परिनिर्वापयेम, 20 W 831 इत्येतैश्चित्तोत्पादैर्विहरन्ति । यस्तेषां भगवन् प्रथमयानसंप्रस्थितानां बोधिसत्त्वानां महासत्त्वानां चित्तोत्पादाननुमोदते, अविनिवर्तनीयानामप्यविनिवर्तनीयधर्मतामनुमोदते, एकजातिप्रतिबद्धानामपि बोधिसत्त्वानां महासत्त्वानामेकजातिप्रतिबद्धधर्मतामनुमोदते, कियत्स भगवन् कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसवति? एवमुक्ते भगवान् शक्रं देवानामिन्द्रमेतदवोचत्–स्यात्खलु पुनः कौशिक शक्येत सुमेरोः पर्वतराजस्य पलाग्रेण तुल्यमानस्य 25 प्रमाणं ग्रहीतुम्, न त्वेव कौशिक तस्य कुलपुत्रस्य वा कुलदुहितुर्वा बोधिसत्त्वस्य महासत्त्वस्यानुमोदनासहगतस्य चित्तोत्पादस्य पुण्यप्रमाणं ग्रहीतुम् । स्यात्खलु पुनः कौशिक W 832 शक्येत चातुर्महाद्वीपके लोकधातौ पलाग्रेण तुल्यमाने प्रमाणं ग्रहीतुम्, न त्वेव कौशिक तस्यानुमोदनासहगस्य चित्तोत्पादस्य पुण्यप्रमाणं ग्रहीतुम् । स्यात्खलु पुनः कौशिक शक्येत साहस्रे चूलिके लोकधातौ तुल्यमाने पलाग्रेण प्रमाणं ग्रहीतुम्, न त्वेव कौशिक तस्यानु- 30 R 436 मोदनासहगतस्य चित्तोत्पादस्य पुण्यप्रमाणं ग्रहीतुम् । स्यात्खलु पुनः कौशिक शक्येत

1 W अभवत्. 2 W सर्वान् for सर्वसत्त्वान्.

द्विसाहस्रे मध्यमे लोकधातौ पलाग्रेण तुल्यमाने प्रमाणं ग्रहीतुम्, न त्वेव कौशिक तस्यानुमोदनासहगतस्य चित्तोत्पादस्य पुण्यप्रमाणं ग्रहीतुम्। स्यात्खलु पुनः कौशिक शक्येत त्रिसाहस्रमहासाहस्रे लोकधातौ तुल्यमाने पलाग्रेण प्रमाणं ग्रहीतुम्, न त्वेव कौशिक तस्य कुलपुत्रस्य वा कुलदुहितुर्वा बोधिसत्त्वस्य महासत्त्वस्यानुमोदनासहगतस्य चित्तोत्पादस्य 5 पुण्यप्रमाणं ग्रहीतुम्॥

W 833 एवमुक्ते शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—माराधिष्ठितास्ते भगवन् सत्त्वा वेदितव्याः, ये बोधिसत्त्वानां महासत्त्वानां प्रथमचित्तोत्पादमुपादाय यावदनुत्तरां सम्यक्संबोधिमभिसंबुद्धानामेवमप्रमेयमनुमोदनासहगतस्य चित्तोत्पादस्य पुण्यमिति न शृण्वन्ति, न जानन्ति, न पश्यन्ति, तामनुमोदनां न समन्वाहरन्ति। मारपक्षिका भगवंस्ते सत्त्वा 10 भविष्यन्ति, ये बोधिसत्त्वानां महासत्त्वानामिमांश्चित्तोत्पादान्नानुमोदिष्यन्ते। मारभवनेभ्यश्च ते भगवन् सत्त्वाश्च्युता भविष्यन्ति, य इमांश्चित्तोत्पादांस्तेषां बोधिसत्त्वानां महासत्त्वानां नानुमोदिष्यन्ते। तत्कस्य हेतोः? मारभवनविध्वंसनकरा हि तैर्भगवन् इमे चित्तोत्पादा अभिनिर्हृताः, यैरमी चित्तोत्पादा अनुत्तरायां सम्यक्संबोधौ परिणामिताः, अनुमोदिता वा अमी चित्तोपादाः। अनुमोदितव्या भगवंस्तेषां बोधिसत्त्वानां महासत्त्वानाममी चित्तोत्पादाः, R 437 15 यैर्बोधिसत्त्वैर्महासत्त्वैरनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। येषां भगवंस्तथागतोऽपरित्यक्तः, धर्मोऽपरित्यक्तः, संघोऽपरित्यक्तः, तैः कुलपुत्रैः कुलदुहितृभिश्चेमे चित्तोत्पादा अनुमोदितव्याः॥

W 834 एवमुक्ते भगवान् शक्रं देवानामिन्द्रमेतदवोचत्—एवमेतत्कौशिक, एवमेतत्। येषां कौशिक तथागतोऽपरित्यक्तः, धर्मोऽपरित्यक्तः, संघोऽपरित्यक्तः, तैः कुलपुत्रैः कुलदुहितृभिश्चेमे चित्तोत्पादा अनुमोदितव्याः। यैः कौशिक कुलपुत्रैः कुलदुहितृभिश्चेमे चित्तोपादा 20 अनुमोदिता बोधिसत्त्वयानिकैर्वा प्रत्येकबुद्धयानिकैर्वा श्रावकयानिकैर्वा, ते क्षिप्रं तथागतानर्हतः सम्यक्संबुद्धानारागयिष्यन्ति, न विरागयिष्यन्ति। एवमुक्ते शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—एवमेतद्भगवन्, एवमेतत्सुगत। यैः कुलपुत्रैः कुलदुहितृभिश्चेमे चित्तोत्पादा अनुमोदिता बोधिसत्त्वयानिकैर्वा प्रत्येकबुद्धयानिकैर्वा श्रावकयानिकैर्वा, ते क्षिप्रं तथागतानर्हतः सम्यक्संबुद्धानारागयिष्यन्ति, न विरागयिष्यन्ति। एवं तैरनुमोदनासहगतैः R 438 25 श्चित्तोत्पादकुशलमूलैर्यत्र यत्रोपपत्स्यन्ते, तत्र तत्र सत्कृताश्च भविष्यन्ति, गुरुकृताश्च भविष्यन्ति, मानिताश्च भविष्यन्ति, पूजिताश्च भविष्यन्ति, अर्चिताश्च भविष्यन्ति, अपचायिताश्च भविष्यन्ति। न च ते अमनआपानि रूपाणि द्रक्ष्यन्ति। न च ते अमनआपान् गन्धान् घ्रास्यन्ति। न च ते अमनआपान् रसान् परिभोक्ष्यन्ते। न च ते अमनआपानि 30 स्प्रष्टव्यानि स्प्रक्ष्यन्ति। न च तेषामपायेषूपपत्तिः प्रतिकाङ्क्षितव्या। स्वर्गोपपत्तिस्तेषां प्रतिकाङ्क्षितव्या। तत्कस्य हेतोः? तथा हि तैः कुलपुत्रैः कुलदुहितृभिर्वा सर्वसत्त्वसुखावहान्यप्रमेयाणामसंख्येयानां सत्त्वानां कुशलमूलान्यनुमोदितानि। यैरपि भगवंश्छन्दमुत्पाद्य बोधये बोधिसत्त्वयानिकानां पुद्गलानां ते चित्तोत्पादा अनुमोदिताः, तेषां ते चित्तोत्पादा

विवर्धमाना अनुत्तरायाः सम्यक्संबोधेराहारका भविष्यन्ति। तेऽप्यनुत्तरां सम्यक्संबोधिमभिसंबुध्य अप्रमेयानसंख्येयान् सत्त्वान् परिनिर्वापयिष्यन्ति। भगवानाह—एवमेतत्कौशिक, एवमेतत्, यथा त्वया वाग्भाषिता तथागतस्यैवानुभावेन। येन कौशिक कुलपुत्रेण वा कुलदुहित्रा वा बोधिसत्त्वयानिकानां पुद्गलानां ते चित्तोत्पादा अनुमोदिताः, अनेन कौशिक पर्यायेण तेन कुलपुत्रेण वा कुलदुहित्रा वा बोधिसत्त्वयानिकानां पुद्गलानां तांश्चित्तोत्पादाननुमोद्य अप्रमेयाणां सत्त्वानामसंख्येयानां सत्त्वानां कुशलमूलान्यनुमोदितानि भवन्ति, अवरोपितानि अभिनिर्हृतानि च भवन्ति॥ W 836 5

सुभूतिराह—कथं च भगवन् मायोपमं चित्तमनुत्तरां सम्यक्संबोधिमभिसंबुध्यते? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—तत्किं मन्यसे सुभूते समनुपश्यसि त्वं मायोपमं चित्तम्? सुभूतिराह—नो हीदं भगवन्। भगवानाह—तत्किं मन्यसे सुभूते समनुपश्यसि त्वं मायाम्? आह—नो हीदं भगवन्। नाहं भगवन् मायोपमं चित्तं नापि मायां समनुपश्यामि। भगवानाह—तत्किं मन्यसे सुभूते यत्र मायां नापि मायोपमं चित्तं समनुपश्यसि, तत्किं त्वमन्यत्र मायाया मायोपमाद्वा चित्तात् तं धर्मं समनुपश्यसि यो धर्मोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यते? आह—नो हीदं भगवन्। नाहं भगवन् अन्यत्र मायाया मायोपमाद्वा चित्तात् तं धर्मं समनुपश्यामि, यो धर्मोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यते। सोऽहं भगवन् अन्यत्र मायाया मायोपमाद्वा चित्तात् तं धर्ममसमनुश्यन् कतमं धर्ममुपदेक्ष्यामि अस्तीति वा नास्तीति वा? यश्च अत्यन्तविविक्तो धर्मः, न सोऽस्तीति वा नास्तीति वा उपैति। योऽपि धर्मोऽत्यन्ततया विविक्तः, नासावनुत्तरां सम्यक्संबोधिमभिसंबुध्यते। तत्कस्य हेतोः? न हि भगवन् असंविद्यमानो धर्मोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यते। तस्मात्तर्हि भगवन् अत्यन्तविविक्ता प्रज्ञापारमिता। यश्च धर्मोऽत्यन्तविविक्तः, नासौ धर्मो भावयितव्यः। नाप्यसौ कस्यचिद्धर्मस्यावाहको वा निर्वाहको वा। कथं भगवन् बोधिसत्त्वो महासत्त्वोऽत्यन्तविविक्तां प्रज्ञापारमितामागम्य अनुत्तरां सम्यक्संबोधिमभिसंबुध्यते? अनुत्तरापि नाम भगवन् सम्यक्संबोधिरत्यन्तविविक्ता। यदा भगवन् प्रज्ञापारमिताप्यत्यन्तविविक्ता, अनुत्तरापि सम्यक्संबोधिरत्यन्तविविक्ता, तदा कथं भगवन् विविक्तेन विविक्तमभिसंबुद्धं भवति? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—साधु साधु सुभूते। एवमेतत्सुभूते, एवमेतत्। अत्यन्तविविक्ता सुभूते प्रज्ञापारमिता, अत्यन्तविविक्तैव अनुत्तरा सम्यक्संबोधिः। यत एव सुभूते अत्यन्तविविक्ता प्रज्ञापारमिता, अत एव अत्यन्तविविक्ता अनुत्तरा सम्यक्संबोधिरभिसंबुध्यते। सचेत्सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितामत्यन्तविविक्तामिति संजानीते, न सा प्रज्ञापारमिता स्यात्। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितामागम्य अनुत्तरां सम्यक्संबोधिमभिसंबुध्यते, नापि सुभूते प्रज्ञापारमितामागम्य अनुत्तरां सम्यक्संबोधिमभिसंबुध्यते। न च विवेकेन विवेकमभिसंबुध्यते, अभिसंबुध्यते च बोधिसत्त्वो महासत्त्वोऽनुत्तरां सम्यक्संबोधिम्। न च प्रज्ञापारमितामनागम्याभिसंबुध्यते॥ W 837 10 R 439 15 W 838 20 R 440 25 W 839 30

सुभूतिराह–यथाहं भगवन् भगवतो भाषितस्यार्थमाजानामि, तथा गम्भीरे भगवन् अर्थे चरति बोधिसत्त्वो महासत्त्वः। भगवानाह–एवमेतत्सुभूते, एवमेतत्। गम्भीरेऽर्थे सुभूते चरति बोधिसत्त्वो महासत्त्वः। दुष्करकारकः सुभूते बोधिसत्त्वो महासत्त्वः, यो गम्भीरेऽर्थे चरति, तं चार्थं न साक्षात्करोति यदुत श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा ॥

W 840 5 सुभूतिराह–यथाहं भगवन् भगवतो भाषितस्यार्थमाजानामि, तथा न कश्चिद्दुष्कर-
R 441 कारको बोधिसत्त्वो महासत्त्वः। तत्कस्य हेतोः? तथा हि भगवन् स एव धर्मो नोपलभ्यते यः साक्षात्कुर्यात्, सोऽपि धर्मो नोपलभ्यते यः साक्षात्क्रियते, सोऽपि धर्मो नोपलभ्यते येन साक्षात्क्रियेत। सचेद्भगवन् एवं भाष्यमाणे बोधिसत्त्वो महासत्त्वो न संसीदति, नावलीयते न संलीयते, न विपृष्ठीभवति, नोत्रस्यति न संत्रस्यति न संत्रासमापद्यते, चरति प्रज्ञापारमितायाम्। सचेच्चरामीति न समनुपश्यति, चरति प्रज्ञापारमितायाम्।
10 आसन्ना मेऽनुत्तरा सम्यक्संबोधिरिति सचेदेवमपि न समनुपश्यति, चरति प्रज्ञापारमितायाम्। दूरीकृता मे श्रावकभूमिः प्रत्येकबुद्धभूमिर्वेति सचेदस्यैवमपि न भवति, चरति प्रज्ञापारमितायाम्। तद्यथापि नाम भगवन् आकाशस्य नैवं भवति–कस्यचिदहमासन्नः, कस्यचिद्वा दूर इति। तत्कस्य हेतोः? अविकल्पत्वाद्भगवन् आकाशस्य। एवमेव भगवन् प्रज्ञापारमितायां चरतो बोधिसत्त्वस्य महासत्त्वस्य नैवं भवति–अनुत्तरा सम्यक्सबोधिर्ममासन्ना,
W 841 15 श्रावकभूमिः प्रत्येकबुद्धभूमिश्च मम दूर इति। तत्कस्य हेतोः? निर्विकल्पत्वाद्भगवन् प्रज्ञापारमितायाः। तद्यथापि नाम भगवन् मायापुरुषस्य नैवं भवति–मायाकारो ममासन्नः, यः पुनरन्यो जनकायः संनिपतितः स मम दूर इति। तत्कस्य हेतोः? अविकल्पत्वाद्भगवन् मायापुरुषस्य। एवमेव भगवन् प्रज्ञापारमितायां चरतो बोधिसत्त्वस्य महासत्त्वस्य नैवं भवति–अनुत्तरा सम्यक्संबोधिर्ममासन्ना, श्रावकभूमिः प्रत्येकबुद्धभूमिश्च मम दूर इति।
R 442 20 तत्कस्य हेतोः? अविकल्पत्वाद्भगवन् प्रज्ञापारमितायाः। तद्यथापि नाम भगवन् प्रतिभासस्य नैवं भवति–येनारम्बणेन प्रतिभास उत्पद्यते तन्ममासन्ने, ये तु खलु पुनरत्र नोपसंक्रान्ता आदर्शे वा उदकपात्रे वा ते मम दूर इति। तत्कस्य हेतोः? अविकल्पत्वाद्भगवन् प्रतिभासस्य। एवमेव भगवन् प्रज्ञापारमितायां चरतो बोधिसत्त्वस्य महासत्त्वस्य नैवं भवति–अनुत्तरा सम्यक्संबोधिर्ममासन्ना, श्रावकभूमिः प्रत्येकबुद्धभूमिश्च मम दूर इति। तत्
25 कस्य हेतोः? अविकल्पत्वाद्भगवन् प्रज्ञापारमितायाः। तद्यथापि नाम भगवंस्तथागतस्य
W 842 कश्चित्प्रियो वा अप्रियो वा न संविद्यते, तत्कस्य हेतोः? सर्वकल्पविकल्पप्रहीणत्वात्तथागतस्य, एवमेव भगवन् प्रज्ञापारमितायां चरतो बोधिसत्त्वस्य महासत्त्वस्य न कश्चित्प्रियो वा अप्रियो वा संविद्यते। तत्कस्य हेतोः? अविकल्पत्वाद्भगवन् प्रज्ञापारमितायाः। यथैव हि भगवन्
30 सर्वकल्पविकल्पप्रहीणस्तथागतः, तथैव भगवन् प्रज्ञापारमितापि सर्वकल्पविकल्पप्रहीणा। तद्यथापि नाम भगवंस्तथागतेनार्हता सम्यक्संबुद्धेन यो निर्मितको निर्मितः, न तस्यैवं भवति–श्रावकभूमिः प्रत्येकबुद्धभूमिश्च मम दूरे, अनुत्तरा सम्यक्संबोधिर्ममासन्नेति। तत्कस्य

हेतोः? अविकल्पत्वाद्भगवन्निर्मितस्य। एवमेव भगवन् बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितां चरतो नैवं भवति–श्रावकभूमिः प्रत्येकबुद्धभूमिश्च मम दूरे, अनुत्तरा सम्यक्संबोधिर्ममासन्नेति। तत्कस्य हेतोः? अविकल्पत्वादेव भगवन् प्रज्ञापारमितायाः। तद्यथापि नाम भगवन् स निर्मितको यस्य कृत्यस्य कृतशो निर्मितः, तत्कृत्यं करोति। स च निर्मितकोऽविकल्पः। तत्कस्य हेतोः? अविकल्पत्वादेव निर्मितस्य। एवमेव भगवन् बोधिसत्त्वो 5 महासत्त्वो यस्य कृत्यस्य कृतश इमां प्रज्ञापारमितां भावयति, तच्च कृत्यं करोति, सा च प्रज्ञापारमिता अविकल्पा। तत्कस्य हेतोः? अविकल्पत्वादेव भगवन् प्रज्ञापारमितायाः। तद्यथापि नाम भगवन् दक्षेण पलगण्डेन वा पलगण्डान्तेवासिना वा दारुमयी स्त्री वा पुरुषो वा यन्त्रयुक्तः कृतो भवेत्। स यस्य कृत्यस्यार्थाय कृतः, तच्च कृत्यं करोति। स च दारुसंघातोऽविकल्पः। तत्कस्य हेतोः? अविकल्पत्वादेव भगवन् दारुसंघातस्य। एवमेव 10 भगवन् बोधिसत्त्वो महासत्त्वो यस्य कृत्यस्य कृतश इमां प्रज्ञापारमितां भावयति, तच्च कृत्यं करोति, सा च प्रज्ञापारमिता अविकल्पा। तत्कस्य हेतोः? अविकल्पत्वादेव भगवन् अस्याः प्रज्ञापारमिताया इति॥

R 443　W 843

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां मायोपमपरिवर्तो नाम षड्विंशतितमः॥

W 844



# २७ सारपरिवर्तः सप्तविंशतितमः ।

R 444 W 845 अथ खल्वायुष्मान् शारिपुत्र आयुष्मन्तं सुभूतिमेतदवोचत्—सारे बतायमायुष्मन् सुभूते बोधिसत्त्वो महासत्त्वश्चरति, यः प्रज्ञापारमितायां चरति । एवमुक्ते आयुष्मान् सुभूतिरायुष्मन्तं शारिपुत्रमेतदवोचत्—सारे बतायमायुष्मन् शारिपुत्र बोधिसत्त्वो महासत्त्वश्चरति, 5 यः प्रज्ञापारमितायां चरति ॥

अथ खलु संबहुलानां कामावचराणां देवपुत्रसहस्राणामेतदभवत्—नमस्कर्तव्यास्ते सत्त्वाः, यैरनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पादितानि अभिनिर्हृतानि । ये चेह गम्भीरायां प्रज्ञापारमितायां चरन्ति, तथा चरन्तो भूतकोटिं न साक्षात्कुर्वन्ति, यदुत श्रावकभूमौ वा W 846 प्रत्येकबुद्धभूमौ वा । अनेनापि पर्यायेण दुष्करकारका बोधिसत्त्वा महासत्त्वा वेदितव्याः, ये 10 धर्माणां धर्मतायां चरन्ति, न च तां धर्मतां साक्षात्कुर्वन्ति । अथ खल्वायुष्मान् सुभूतिस्तेषां संबहुलानां कामावचराणां देवपुत्रसहस्राणां चेतसैव चेतःपरिवितर्कमाज्ञाय तानि संबहुलानि कामावचराणां देवपुत्राणां सहस्राण्यामन्त्रयन्ते स्म—नेदं देवपुत्रास्तेषां बोधिसत्त्वानां महासत्त्वानां R 445 दुष्करम्, यत्ते तां भूतकोटिं न साक्षात्कुर्वन्ति । इदं तु देवपुत्रास्तेषां बोधिसत्त्वानां महासत्त्वानां दुष्करं चैव परमदुष्करं चैव, यदप्रमेयानसंख्येयानप्रमाणान् सत्त्वान् परिनिर्वापयिष्याम इति 15 संनाहं संनह्यन्ते । ते च सत्त्वा अत्यन्ततया न संविद्यन्ते, असंविद्यमाना नोपलभ्यन्ते, सत्त्वविविक्तत्वात् । एवं वैनयिका अत्यन्ततया न संविद्यन्ते । एवं च बोधिसत्त्वा महासत्त्वा W 847 अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुं संप्रस्थिताः सत्त्वान् विनेष्याम इति, आकाशं स देवपुत्रा विनेतव्यं मन्येत यः सत्त्वान् विनेतव्यान् मन्येत । तत्कस्य हेतोः? आकाशविविक्ततया हि देवपुत्राः सत्त्वविविक्तता वेदितव्या । अनेन देवपुत्राः पर्यायेण दुष्करकारका बोधिसत्त्वा 20 महासत्त्वाः, येऽसंविद्यमानानामनुपलभ्यमानानां सत्त्वानां कृतशः संनाहं संनह्यन्ते । आकाशेन स देवपुत्राः सार्धं वेदितव्यं मन्येत, यः सत्त्वानां कृतशः संनाहं संनद्धव्यं मन्येत । अयं च संनाहो बोधिसत्त्वेन महासत्त्वेन सत्त्वानां कृतशः संनद्धः । सर्वात्यन्ततया सत्त्वानुपलब्धिरुक्ता तथागतेनार्हता सम्यक्संबुद्धेन । सा च सत्त्वविविक्ततयैव वेदितव्या, वैनयिकविविक्ततया च सत्त्वविविक्तता वेदितव्या । सचेदत्रैवं भाष्यमाणे बोधिसत्त्वो 25 महासत्त्वो न संसीदति, वेदितव्यमेतद्देवपुत्राः—चरत्ययं बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायाम् । तत्कस्य हेतोः? सत्त्वविविक्ततया हि रूपविविक्तता वेदितव्या । एवं सत्त्व-R 446 विविक्ततया वेदनासंज्ञासंस्कारविविक्तता वेदितव्या । सत्त्वविविक्ततया विज्ञानविविक्तता वेदितव्या । एवं यावत्सत्त्वविविक्ततया सर्वधर्मविविक्तता वेदितव्या । एवं देवपुत्राः सर्वधर्मविविक्तता द्रष्टव्या । एवं देवपुत्राः सर्वधर्मविविक्ततायां भाष्यमाणायां बोधिसत्त्वो महासत्त्वो W 848 30 न संसीदति । यतो न संसीदति, ततश्चरति प्रज्ञापारमितायाम् ॥

अथ खलु भगवान् जानन्नेव आयुष्मन्तं सुभूतिमेतदवोचत्—किं कारणं सुभूते बोधिसत्त्वो महासत्त्व एवं सर्वधर्मविविक्ततायां भाष्यमाणायां न संसीदति? सुभूतिराह—

विविक्तत्वाद्भगवन्न संसीदति। अनेन भगवन् कारणेन बोधिसत्त्वो महासत्त्वः सर्वधर्मविविक्ततायां भाष्यमाणायां न संसीदति। नापि भगवन् कश्चिद्धर्मः संसीदति। तत्कस्य हेतोः? न हि भगवन् कश्चिद्धर्म उपलभ्यते, यः संसीदेत्। सोऽपि भगवन् धर्मो नोपलभ्येत, येन धर्मेण यो धर्मः संसीदेत्। भगवानाह—एवमेतत्सुभूते, एवमेतत्। अपि तु खलु पुनः सुभूते सचेदेवं भाष्यमाणे देश्यमाने निर्दिश्यमाने एवमुपदिश्यमाने बोधिसत्त्वो महासत्त्वो न संसीदति न विषीदति न 5 विषादमापद्यते, नावलीयते न संलीयते, न विपृष्ठीकरोति मानसम्, न भग्नपृष्ठीकरोति, नोत्रस्यति न संत्रस्यति न संत्रासमापद्यते, चरति प्रज्ञापारमितायाम्। सुभूतिराह—एवमेतद्भगवन्, एवमेतत्सुगत। सचेद्भगवन् बोधिसत्त्वो महासत्त्व एवं चरति, चरति प्रज्ञापारमितायाम्। एवं चरन्तं बोधिसत्त्वं महासत्त्वं सेन्द्रका देवाः सब्रह्मकाः सप्रजापतिकाः सेशानाः सर्षिनरनारीगणा आरात्प्राञ्जलीभूता नमस्यन्ति। भगवानाह—न केवलं सुभूते एवं चरन्तं बोधिसत्त्वं 10 महासत्त्वं सेन्द्रका देवाः सब्रह्मकाः सप्रजापतिकाः सेशानाः सर्षिनरनारीगणा आरात्प्राञ्जलीभूता नमस्यन्ति, येऽपि ते सुभूते ब्रह्मकायिका देवा ब्रह्मपुरोहिता ब्रह्मपार्षद्या महाब्रह्माणः परीत्ताभा अप्रमाणाभा आभास्वराः परीत्तशुभा अप्रमाणशुभाः शुभकृत्स्ना अनभ्रकाः पुण्यप्रसवा बृहत्फला असंज्ञिसत्त्वा अबृहा अतपाः सुदृशाः सुदर्शना अकनिष्ठाश्च देवाः, तेऽपि सुभूते तं बोधिसत्त्वं महासत्त्वं प्रज्ञापारमितायां एवं चरन्तं नमस्यन्ति। येऽपि ते सुभूते अप्रमेयेष्वसंख्येयेषु 15 लोकधातुषु तथागता अर्हन्तः सम्यक्संबुद्धा एतर्हि तिष्ठन्ति ध्रियन्ते यापयन्ति, तेऽपि बुद्धा भगवन्तः प्रज्ञापारमितायामेवं चरन्तं बोधिसत्त्वं महासत्त्वं बुद्धचक्षुषा पश्यन्ति। ते च सुभूते बोधिसत्त्वं महासत्त्वं प्रज्ञापारमितायां चरन्तमनुगृह्णन्ति, समन्वाहरन्ति। ये च खलु पुनः सुभूते बोधिसत्त्वा महासत्त्वाः प्रज्ञापारमितायां चरन्तस्तथागतैरर्हद्भिः सम्यक्संबुद्धैरनुगृह्यन्ते समन्वाह्रियन्ते, ते ते सुभूते बोधिसत्त्वा महासत्त्वा अविनिवर्तनीया अनुत्तरायाः सम्यक्सं- 20 बोधेर्धारयितव्याः। न च तेषामन्तराया उत्पत्स्यन्ते मारतो वा अन्यतो वा। तत्कस्य हेतोः? ये सुभूते त्रिसाहस्रमहासाहस्रे लोकधातौ सत्त्वाः, ते सर्वे माराः पापीयांसो भवेयुः। एकैकश्च मारः पापीयांस्तावतीरेव मारसेना अभिनिर्मिमीते। तेऽपि सुभूते माराः पापीयांसस्तस्य बुद्धसमन्वाहृतस्य बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो न प्रतिबला अन्तरायं कर्तुमनुत्तरायाः सम्यक्संबोधेः। तिष्ठन्तु खलु पुनः सुभूते त्रिसाहस्रमहासाहस्रे 25 लोकधातौ सर्वसत्त्वा माराः पापीयांसः, यावन्तः सुभूते गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सत्त्वाः, तेऽपि सर्वे माराः पापीयांसो भवेयुः, एकैकश्च मारः पापीयांस्तावतीरेव मारसेना अभिनिर्मिमीते, तेऽपि सुभूते माराः पापीयांसस्तस्य बुद्धसमन्वाहृतस्य बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो न प्रतिबला अन्तरायं कर्तुमनुत्तरायाः सम्यक्संबोधेः। द्वाभ्यां सुभूते धर्माभ्यां समन्वागतो बोधिसत्त्वो महासत्त्वस्तस्मिन् समये 30 दुर्धर्षो भवति मारैः पापीयोभिर्मारकायिकाभिर्वा देवताभिः। कतमाभ्यां द्वाभ्याम्? यदुत सर्वसत्त्वाश्चास्य अपरित्यक्ता भवन्ति, सर्वधर्माश्च अनेन शून्यतातो व्यवलोकिता भवन्ति।

W 849 W 850 R 447 W 851 R 448 W 852

आभ्यां सुभूते द्वाभ्यां धर्माभ्यां समन्वागतो बोधिसत्त्वो महासत्त्वो दुर्धर्षो भवति मारैः पापीयोभिर्मारकायिकाभिर्वा देवताभिः। अपराभ्यां सुभूते द्वाभ्यां धर्माभ्यां समन्वागतो बोधिसत्त्वो महासत्त्वो दुर्धर्षो भवति मारैः पापीयोभिर्मारकायिकाभिर्वा देवताभिः। कतमाभ्यां द्वाभ्याम्? यदुत यथावादी तथाकारी च भवति, बुद्धैश्च भगवद्भिः समन्वाह्रियते।
5 आभ्यां सुभूते द्वाभ्यां समन्वागतो बोधिसत्त्वो महासत्त्वो दुर्धर्षो भवति मारैः पापीयोभिर्मारकायिकाभिर्वा देवताभिः। एवं चरतः सुभूते बोधिसत्त्वस्य महासत्त्वस्य देवा अप्युपसंक्रमितव्यं मंस्यन्ते। उपसंक्रम्य च परिप्रष्टव्यं मंस्यन्ते, परिप्रश्नीकर्तव्यं मंस्यन्ते, पर्युपासितव्यं मंस्यन्ते, उत्साहं चास्य वर्धयिष्यन्ति—क्षिप्रं त्वं कुलपुत्र अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे। तस्मात्तर्हि कुलपुत्र अनेनैव विहारेण विहर यदुत प्रज्ञापारमिताविहारेण।
10 तत्कस्य हेतोः? एतेनैव हि त्वं कुलपुत्र विहारेण विहरन् अनाथानां सत्त्वानां नाथो भविष्यसि, अत्राणानां सत्त्वानां त्राता भविष्यसि, अशरणानां सत्त्वानां शरणं भविष्यसि, अलयनानां सत्त्वानां लयनं भविष्यसि, अपरायणानां सत्त्वानां परायणं भविष्यसि, अद्वीपानां सत्त्वानां द्वीपो भविष्यसि, अन्धानां सत्त्वानामालोको भविष्यसि, अपरिणायकानां सत्त्वानां परिणायको भविष्यसि, अगतिकानां सत्त्वानां गतिर्भविष्यसि, मार्गप्रनष्टानां सत्त्वानामप्रतिशरणानां
15 मार्गप्रणेता प्रतिशरणं भविष्यसि। एवं ते देवपुत्रास्तस्य बोधिसत्त्वस्य महासत्त्वस्योत्साहं वर्धयिष्यन्ति। तत्कस्य हेतोः? एतेन हि सुभूते प्रज्ञापारमिताविहारेण विहरतो बोधिसत्त्वस्य महासत्त्वस्य ये तेऽप्रमेयेष्वसंख्येयेषु लोकधातुषु बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति, तेऽपि भिक्षुसंघपरिवृता बोधिसत्त्वगणपुरस्कृताः प्रज्ञापारमितायां चरतो विहरतस्तस्य बोधिसत्त्वस्य महासत्त्वस्य एभिरेवंरूपैर्गुणैः समन्वागतस्य यदुत प्रज्ञापारमिताविहरणगुणैः,
20 बुद्धा भगवन्तो नाम च गोत्रं च बलं च वर्णं च रूपं च परिकीर्तयमानरूपा धर्मं देशयन्ति, उदानं चोदानयन्ति तस्य बोधिसत्त्वस्य महासत्त्वस्य। तद्यथापि नाम सुभूते अहमेतर्हि रत्नकेतोर्बोधिसत्त्वस्य महासत्त्वस्य, शिखिनो बोधिसत्त्वस्य महासत्त्वस्य नाम च गोत्रं च बलं च वर्णं च रूपं च परिकीर्तयमानरूपो धर्मं देशयामि, उदानं चोदानयामि अपरेषां च बोधिसत्त्वानां महासत्त्वानाम्, य एतर्हि अक्षोभ्यस्य तथागतस्यार्हतः सम्यक्सं-
25 बुद्धस्यान्तिके ब्रह्मचर्यं चरन्ति। एवमेव सुभूते तेऽपि बुद्धा भगवन्तो ये एतर्हि इह मम बुद्धक्षेत्रे बोधिसत्त्वा महासत्त्वा ब्रह्मचर्यं चरन्ति, अनेन च प्रज्ञापारमिताविहारेण विहरन्ति, तेषां च बोधिसत्त्वानां महासत्त्वानां नाम च गोत्रं च बलं च वर्णं च रूपं च परिकीर्तयमानरूपा धर्मं देशयन्ति, उदानं चोदानयन्ति॥

सुभूतिराह—किं सर्वेषामेव भगवन् बोधिसत्त्वानां महासत्त्वानां नाम च गोत्रं च
30 बलं च वर्णं च रूपं च परिकीर्तयमानरूपास्ते बुद्धा भगवन्तो धर्मं देशयन्ति, उदानं चोदानयन्ति? भगवानाह—नो हीदं सुभूते। न सुभूते सर्वेषां बोधिसत्त्वानां महासत्त्वानां नाम च गोत्रं च बलं च वर्णं च रूपं च परिकीर्तयमानरूपास्ते बुद्धा भगवन्तो धर्मं

देशयन्ति, उदानं चोदानयन्ति, किं तर्हि सुभूते ये तेऽविनिवर्तनीया बोधिसत्त्वा महासत्त्वाः सर्वसङ्गविगताः, तेषां ते बुद्धा भगवन्तो नाम च गोत्रं च बलं च वर्णं च रूपं च परिकीर्तयमानरूपा धर्मं देशयन्ति, उदानं चोदानयन्ति ॥

W 855 सुभूतिराह—सन्ति भगवन् अविनिवर्तनीयान् बोधिसत्त्वान् महासत्त्वान् स्थापयित्वा ततोऽन्ये बोधिसत्त्वा महासत्त्वाः, येषां ते बुद्धा भगवन्तो नाम च गोत्रं च बलं वर्णं च 5 रूपं च परिकीर्तयमानरूपा धर्मं देशयन्ति, उदानं चोदानयन्ति? भगवानाह—सन्ति सुभूते प्रतिपक्षबलिनो बोधिसत्त्वयानिकाः पुद्गलाः अविनिवर्तनीयान् बोधिसत्त्वान् महा- R 451 सत्वान् स्थापयित्वा, येषां ते बुद्धा भगवन्तो नाम च गोत्रं च बलं च वर्णं च रूपं च परिकीर्तयमानरूपा धर्मं देशयन्ति, उदानं चोदानयन्ति। ते पुनः कतमे? ये एतर्हि अक्षोभ्यस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य बोधिसत्त्वचर्यामनुशिक्षमाणरूपा बोधिसत्त्व- 10 चारिकां चरन्ति, अनुशिक्षमाणरूपा विहरन्ति, इमे ते सुभूते बोधिसत्त्वयानिकाः पुद्गला अविनिवर्तनीयान् बोधिसत्वान् महासत्वान् स्थापयित्वा येषां ते बुद्धा भगवन्तो नाम च गोत्रं च बलं च वर्णं च रूपं च परिकीर्तयमानरूपा धर्मं देशयन्ति, उदानं चोदानयन्ति। येऽपि ते सुभूते रत्नकेतोर्बोधिसत्त्वस्य महासत्त्वस्य बोधिसत्त्वचर्यामनुशिक्षमाणरूपा बोधि- सत्त्वचर्यां चरन्ति, अनुशिक्षमाणा विहरन्ति, इमेऽपि ते सुभूते बोधिसत्त्वा महासत्त्वा अवि- 15 निवर्तनीयान् बोधिसत्वान् महासत्वान् स्थापयित्वा येषां ते बुद्धा भगवन्तो नाम च गोत्रं च बलं च वर्णं च रूपं च परिकीर्तयमानरूपा धर्मं देशयन्ति, उदानं चोदानयन्ति ॥

W 856 पुनरपरं सुभूते ये बोधिसत्त्वा महासत्त्वाः प्रज्ञापारमितायां चरन्तः सर्वधर्मा अनुत्पत्तिका इत्यधिमुच्यन्ति, न च तावदनुत्पत्तिकधर्मक्षान्तिप्रतिलब्धा भवन्ति। सर्वधर्माः शान्ता इत्यधिमुच्यन्ति, न च सर्वधर्मेष्वविनिवर्तनीयवशिताप्राप्तिमवक्रान्ता भवन्ति। 20 W 857 अनेनापि सुभूते विहारेण विहरतां तेषां बोधिसत्त्वानां महासत्त्वानां ते बुद्धा भगवन्तो नाम च गोत्रं च बलं च वर्णं च रूपं च परिकीर्तयमानरूपा धर्मं देशयन्ति, उदानं R 452 चोदानयन्ति। येषां खलु पुनः सुभूते बोधिसत्त्वानां महासत्त्वानां ते बुद्धा भगवन्तो नाम च गोत्रं च बलं च वर्णं च रूपं च परिकीर्तयमानरूपा धर्मं देशयन्ति, उदानं चोदानयन्ति, प्रहीणा तेषां श्रावकभूमिः प्रत्येकबुद्धभूमिश्च। बुद्धभूमिरेव तेषां प्रतिकाङ्क्षितव्या। तेऽपि 25 व्याकरिष्यन्तेऽनुत्तरायां सम्यक्संबोधौ। तत्कस्य हेतोः? येषां हि सुभूते बोधिसत्त्वानां महासत्त्वानां एवं प्रज्ञापारमितायां चरतां ते बुद्धा भगवन्तो नाम च गोत्रं च बलं च वर्णं च रूपं च परिकीर्तयमानरूपा धर्मं देशयन्ति, उदानं चोदानयन्ति, तेऽप्यविनिवर्तनीय- तायां स्थास्यन्ति ॥

W 858 पुनरपरं सुभूते ये बोधिसत्त्वा महासत्त्वा इमां गम्भीरां प्रज्ञापारमितां भाष्यमाणां 30 श्रुत्वा अधिमोक्ष्यन्ति, न धन्धायिष्यन्ति, न काङ्क्षिष्यन्ति, न विचिकित्सिष्यन्ति, एवमेतद्यथा तथागतेनार्हता सम्यक्संबुद्धेन भाषितमित्यधिमुच्य विस्तरेण श्रोष्यन्ति, एवं च चित्तमुत्पाद-

यिष्यन्ति—इमां वयं प्रज्ञापारमितामक्षोभ्यस्य तथागतस्यार्हतः सम्यक्संबुद्धस्यान्तिकाद्विस्तरेण शृणुयामेति, तेषां च बोधिसत्त्वयानिकानां पुद्गलानां ये चास्य बुद्धक्षेत्रे ब्रह्मचर्यं चरन्ति, तेषां चान्तिकादिमामेव प्रज्ञापारमितां श्रुत्वा अधिमोक्ष्यन्ति, तेऽप्येनां प्रज्ञापारमितामधि-
R 453 मुच्यमाना यथा तथागतेन भाषिता तथा चाधिमोक्ष्यन्ते, तथा चाधिमुच्यमाना अविनिवर्त-
5 नीयतायां स्थास्यन्ति। एवं सुभूते बहुकरं प्रज्ञापारमितायाः श्रवणमपि वदामि, कः पुनर्वादो य एनामधिमोक्ष्यन्ति। अधिमुच्य तथत्वाय स्थास्यन्ति। तथत्वाय प्रतिपत्स्यन्ते। तथत्वाय स्थित्वा तथत्वाय प्रतिपद्य तिष्ठन्ति तथतायाम्। तथतायां तिष्ठन्तः सर्वज्ञतायां च धर्मं देशयन्ति॥

W 859 सुभूतिराह—यदा भगवंस्तथताविनिर्मुक्तो नान्यः कश्चिद्धर्म उपलभ्यते, तदा कोऽयं
10 भगवन् धर्मः स्थास्यति तथतायाम्, को वा अयमनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते, को वा अयमिमं धर्मं देशयिष्यति? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्—यत्सुभूते एवं वदसि—यदा तथताविनिर्मुक्तो नान्यः कश्चिद्धर्म उपलभ्यते, तदा कोऽयं भगवन् धर्मस्तथतायां स्थास्यति, को वायमनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते, को वायमिमं धर्मं देशयिष्यतीति। न सुभूते तथताविनिर्मुक्तोऽन्यः कश्चिद्धर्म उपलभ्यते, यो धर्मस्तथतायां स्थास्यति।
15 तथतैव तावत्सुभूते नोपलभ्यते, कः पुनर्वादो यस्तथतायां स्थास्यति। न सुभूते तथता अनुत्तरां सम्यक्संबोधिमभिसंबुध्यते। सोऽपि सुभूते धर्मो न कश्चिदुपलभ्यते, योऽनुत्तरां
W 860 सम्यक्संबोधिमभिसंबुद्धो वा, अभिसंभोत्स्यते वा, अभिसंबुध्यते वा। न सुभूते तथता धर्मं देशयति। सोऽपि सुभूते नोपलभ्यते, यो धर्मो देश्येत॥

R 454 W 861 अथ खलु शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—गम्भीरा भगवन् प्रज्ञापारमिता।
20 दुष्करकारका भगवन् बोधिसत्त्वा महासत्त्वाः, येऽनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामाः। तत्कस्य हेतोः? न च नाम भगवन् कश्चिद्धर्मस्तथतायां तिष्ठति, नापि कश्चिद्धर्मोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यते, नापि कश्चिद्धर्मं देशयति। अत्र च ते नावलीयन्ते, नापि काङ्क्षन्ति, नापि धन्धायन्ते॥

अथ खल्वायुष्मान् सुभूतिः शक्रं देवानामिन्द्रमेतदवोचत्—यत्कौशिक एवं वदसि—
25 दुष्करकारका बोधिसत्त्वा महासत्त्वाः, येषामेवं गम्भीरेषु धर्मेषु भाष्यमाणेषु न भवति काङ्क्षायितत्वं धन्धायितत्वं वेति। सर्वधर्मेषु कौशिक शून्येषु कस्यात्र काङ्क्षायितता वा
W 862 भवति धन्धायितता वा भवति? शक्र आह—यद्यदेव आर्यसुभूतिर्निर्दिशति, तत्तदेव शून्यतामारभ्य निर्दिशति, न च क्वचित्सज्जति। तद्यथापि नाम अन्तरीक्षे इषुः क्षिप्तो नैव क्वचित्सज्जति, एवमेव आर्यसुभूतेर्धर्मदेशना न क्वचित्सज्जति॥

30 अथ खलु शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्—कच्चिदहं भगवन् सुभूतिं स्थविरमारभ्य एवं भाषमाण एवं निर्दिशंस्तथागतस्योक्तवादी भवामि धर्मवादी च, धर्मस्य चानुधर्मं व्याकुर्वन् व्याकरोमि? एवमुक्ते भगवान् शक्रं देवानामिन्द्रमेतदवोचत्—यत्खलु

त्वं कौशिक एवं भाषसे—एवमेतत्कौशिक, एवमेतत् । एवं भाषमाण एवं निर्दिशंस्तथागतस्योक्तवादी भवसि धर्मवादी च, धर्मस्य चानुधर्मं व्याकुर्वन् व्याकरोषि । तत्कस्य हेतोः ? यद्यदेव हि कौशिक सुभूतेः स्थविरस्य प्रतिभाति, तत्तदेव कौशिक शून्यतामारभ्य प्रतिभाति । तत्कस्य हेतोः ? सुभूतिर्हि कौशिक स्थविरः प्रज्ञापारमितामपि तावन्न समनुपश्यति, नोपलभते, कुतः पुनर्यः प्रज्ञापारमितायां चरति । बोधिमेव तावन्नोपलभते, किं पुनर्यो बोधिमभिसंभोत्स्यते । सर्वज्ञतामेव तावन्नोपलभते, कुतः पुनर्यः सर्वज्ञतामनुप्राप्स्यति । तथतामेव तावन्नोपलभते, कुतः पुनर्यस्तथागतो भविष्यति । अनुत्पादमेव तावन्नोपलभते, किं पुनर्योऽनुत्पादं साक्षात्करिष्यति । बोधिसत्त्वमेव तावन्नोपलभते, कुतः पुनर्यो बोधिमभिसंभोत्स्यते । बलान्येव तावन्नोपलभते, कुतः पुनर्यो बलसमङ्गी भविष्यति । वैशारद्यान्येव तावन्नोपलभते, कुतः पुनर्यो विशारदो भविष्यति । धर्ममेव तावन्नोपलभते, कुतः पुनर्यो धर्मं देशयिष्यति । सर्वधर्मविविक्तविहारेण सर्वधर्मानुपलम्भविहारेण हि कौशिक सुभूतिः स्थविरो विहरति । यः खलु पुनरयं कौशिक सुभूतेः स्थविरस्य सर्वधर्मविविक्तविहारः सर्वधर्मानुपलम्भविहारश्च, एष कौशिक विहारो बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो विहरतः शततमीमपि कलां नोपैति । सहस्रतमीमपि शतसहस्रतमीमपि कोटीतमीमपि कोटीशततमीमपि कोटीसहस्रतमीमपि कोटीशतसहस्रतमीमपि कोटीनियुतशतसहस्रतमीमपि कलां नोपैति । संख्यामपि कलामपि गणनामपि उपमामपि औपम्यमपि उपनिसामपि उपनिषदमपि न क्षमते । तथागतविहारं हि कौशिक स्थापयित्वा ततोऽन्यान् सर्वान् विहारानभिभवत्ययं विहारः, योऽयं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो विहरतो विहारः । अयं कौशिक तेषां सर्वविहाराणामग्र आख्यायते, श्रेष्ठ आख्यायते, ज्येष्ठ आख्यायते, वर आख्यायते, प्रवर आख्यायते, प्रणीत आख्यायते, उत्तम आख्यायते, अनुत्तम आख्यायते, निरुत्तर आख्यायते, असम आख्यायते, असमसम आख्यायते । सर्वश्रावकप्रत्येकबुद्धविहारानयं विहारोऽभिभवति, योऽयं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो विहरतो विहारः । तस्मात्तर्हि कौशिक सर्वसत्त्वानामग्रतां गन्तुकामेन श्रेष्ठतां गन्तुकामेन ज्येष्ठतां गन्तुकामेन वरतां गन्तुकामेन प्रवरतां गन्तुकामेन प्रणीततां गन्तुकामेन उत्तमतां गन्तुकामेन अनुत्तमतां गन्तुकामेन निरुत्तरतां गन्तुकामेन असमतां गन्तुकामेन असमसमतां गन्तुकामेन कौशिक कुलपुत्रेण वा कुलदुहित्रा वा अनेन विहारेण विहर्तव्यम्, योऽयं बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमितायां चरतां विहरतां विहार इति ॥

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां सारपरिवर्तो नाम सप्तविंशतितमः ॥



# २८ अवकीर्णकुसुमपरिवर्तोऽष्टाविंशतितमः।

R 457 W 865 अथ खलु तस्मिन् समयेऽन्यतरो देवपुत्रस्त्रायस्त्रिंशैर्देवपुत्रैः सार्धं मान्दारवाणि महामान्दारवाणि च पुष्पाणि गृहीत्वा येन भगवांस्तेनोपसंक्रान्तः। षष्ठं शतं च भिक्षूणां तस्मिन्नेव समये तस्यामेव पर्षदि संनिपतितं संनिषण्णं चाभूत्। ते उत्थायासनेभ्य एकांसा-
5 न्युत्तरासङ्गानि कृत्वा दक्षिणानि जानुमण्डलानि पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणमयामासुः। तेषां भिक्षूणां बुद्धानुभावेन तेऽञ्जलिप्रग्रहा मान्दारवमहामान्दारवाणां पुष्पाणां परिपूर्णा अभूवन्। ते तैर्मान्दारवैर्महामान्दारवैश्च पुष्पैस्तथागतमर्हन्तं सम्यक्संबुद्धमवाकिरन्, अभ्यवाकिरन्, अभिप्राकिरन्, एवं च वाचमभाषन्त—वयं भगवन् अस्यां प्रज्ञापारमितायां चरिष्यामः, वयं भगवन् अनेन अनुत्तरेण प्रज्ञापारमिताविहारेण विहरिष्याम इति॥

10 अथ खलु भगवांस्तस्यां वेलायां स्मितं प्रादुरकरोत्। धर्मता खलु पुनरेषां बुद्धानां भगवताम्—यदा स्मितं प्रादुष्कुर्वन्ति, अथ तदा नानावर्णा अनेकवर्णा रश्मयो भगवतो मुखद्वारान्निश्चरन्ति—तद्यथा नीलपीतलोहितावदातमाञ्जिष्ठस्फटिकरजतसुवर्णवर्णाः[1]। ते निश्चर्य अनन्तापर्यन्तान् लोकधातूनाभया अवभास्य यावद्ब्रह्मलोकमभ्युद्गम्य पुनरेव प्रत्युदावृत्य भगवन्तं त्रिः प्रदक्षिणीकृत्य भगवतो मूर्धन्यन्तर्धीयन्ते॥

R 458 W 866 15 अथ खल्वायुष्मानानन्द उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणमय्य भगवन्तमेतदवोचत्—नाहेतुकं नाप्रत्ययं तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्रादुष्कुर्वन्ति। को भगवन् हेतुः, कः प्रत्ययः स्मितस्य प्रादुष्करणाय? एवमुक्ते भगवानायुष्मन्तमानन्दमेतदवोचत्—इदमानन्द भिक्षूणां षष्ठं[2] शतमनागतेऽध्वनि तारकोपमे कल्पे अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते, अभिसंबुध्य
20 च सत्त्वेभ्यो धर्मं देशयिष्यति। सर्वे चैकनामानो भविष्यन्ति यदुत अवकीर्णकुसुमनामानः। तथागता अर्हन्तः सम्यक्संबुद्धाः शास्तारो लोके भविष्यन्ति। तेषां[3] खलु पुनरानन्द अवकीर्णकुसुमनाम्नां तथागतानामर्हतां सम्यक्संबुद्धानां सर्वेषां समः श्रावकसंघो भविष्यति। सर्वेषां च तेषामवकीर्णकुसुमनाम्नां तथागतानामर्हतां सम्यक्संबुद्धानां सममेवायुःप्रमाणं भविष्यति विंशतिकल्पसहस्राणि। सर्वेषामेव चैकैकस्य वैस्तारिकं प्रवचनं भविष्यति
25 पृथुवैपुल्यप्राप्तं देवमनुष्येषु। सर्वेषामेव च सद्धर्मः समं स्थास्यति, विंशतिमेव कल्पसहस्राण्येकैकस्य। सर्वे च ते यतो यत एव ग्रामनगरनिगमजनपदराष्ट्रराजधानीतोऽभिनिष्क्रमिष्यन्ति, अभिनिष्क्रम्य यत्र यत्र धर्मचक्रं प्रवर्तयिष्यन्ति, प्रवर्त्य च यत्र यत्र च विहरिष्यन्ति, यतो यतश्च यत्र यत्रैव च प्रवेक्ष्यन्ति, येन येन च यतो यत एव चाभिनिष्क्रमिष्यन्ति, ततस्ततस्तत्र तत्र तेषां प्रविशतामभिनिष्क्रामतां विहरतां च पञ्चवर्णिकानां पुष्पाणां पुष्पवर्षाः
R 459 30 प्रवर्तिष्यन्ते। तस्मात्तर्हि आनन्द बोधिसत्त्वैर्महासत्त्वैरुत्तमेन विहारेण विहर्तुकामैः प्रज्ञापार-

---

१ W om. °वर्ण°. २ W षट्शतं for षष्ठं शतम्. ३ W एषां.

मिताविहारेण विहर्तव्यम् । तथागतविहारेण आनन्द विहर्तुकामैः प्रज्ञापारमिताविहारेण विहर्तव्यम् । ये हि केचिदानन्द बोधिसत्त्वा महासत्त्वाः प्रज्ञापारमितायां चरिष्यन्ति, निष्ठा तत्र गन्तव्या—मनुष्येभ्य एवैते च्युता भविष्यन्ति । ते इहोपपन्नास्तुषितेभ्य एव वा देवनिकायेभ्यश्च्युता भविष्यन्ति मनुष्येष्वेवोपपन्नाः । तत्कस्य हेतोः ? तथा हि मनुष्येषु तुषितेषु च देवेषु इयं प्रज्ञापारमिता विस्तरेण प्रचरिष्यतीति । तथागतावलोकिताः खलु पुनरानन्द ते बोधिसत्त्वा महासत्त्वा वेदितव्याः, य इह प्रज्ञापारमितायां चरिष्यन्ति, य इमां प्रज्ञापारमितामुद्ग्रहीष्यन्ति, धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति, अन्तशो लिखिष्यन्ति, उद्गृह्य धारयित्वा वाचयित्वा पर्यवाप्य प्रवर्त्य देशयित्वोपदिश्योद्दिश्य स्वाध्याय्य अन्तशो लिखित्वा बोधिसत्त्वान् महासत्त्वानववदिष्यन्ति अनुशासिष्यन्ति संदर्शयिष्यन्ति समादापयिष्यन्ति समुत्तेजयिष्यन्ति संप्रहर्षयिष्यन्ति । अवरोपितकुशलमूलास्ते आनन्द बोधिसत्त्वा महासत्त्वा वेदितव्यास्तथागतेष्वर्हत्सु सम्यक्संबुद्धेषु । न केवलं श्रावकप्रत्येकबुद्धानामन्तिके तैः कुशलमूलान्यवरोपितानि इह प्रज्ञापारमितायां शिक्षितुम्, निःसंशयं खलु पुनरानन्द तथागतेष्वर्हत्सु सम्यक्संबुद्धेषु तैः कुशलमूलान्यवरोपितानि बोधिसत्त्वैर्महासत्त्वैः, य इह प्रज्ञापारमितायां शिक्षन्ते, न चोत्रासमापद्यन्ते । ये च आनन्द एनां प्रज्ञापारमितामुद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति लिखिष्यन्ति च, तथा अर्थतश्च धर्मतश्च नयतश्चानुगमिष्यन्ति, निष्ठा आनन्द तत्र गन्तव्या—संमुखीभूतास्ते अभूवन् बोधिसत्त्वा महासत्त्वास्तथागतानामर्हतां सम्यक्संबुद्धानामिति । ये चैनां प्रज्ञापारमितां न प्रतिक्रोशन्ति, न प्रतिवहन्ति, न प्रतिकोपयन्ति, न प्रतिसंहरन्ति, न प्रतिषेधयन्ति, न प्रतिक्षिपन्ति, न प्रतिबाधितव्यां मंस्यन्ते, तेऽप्यानन्द बोधिसत्त्वा महासत्त्वाः पूर्वजिनकृताधिकारा वेदितव्याः ॥

किंचाप्यानन्द बोधिसत्त्वेन महासत्त्वेन तथागतानामर्हतां सम्यक्संबुद्धानामन्तिके कुशलमूलमवरोपितम्, एवं हि तन्न श्रावकप्रत्येकबुद्धत्वाय दास्यति विपाकम्। सचेद्बोधिसत्त्वो महासत्त्वोऽनुत्तरायां सम्यक्संबोधौ न विसंवादयिष्यति प्रणिधानम्, अपि तु खलु पुनरानन्द प्रायेण तेन बोधिसत्त्वेन महासत्त्वेन कृतज्ञेन भवितव्यं प्रज्ञापारमितायां चरितवता । तस्मात्तर्हि ते आनन्द परीन्दामि अनुपरीन्दामि इमां प्रज्ञापारमितां भूयस्या मात्रया अक्षरसंनिपातादुद्ग्रहणाय धारणाय वाचनाय पर्यवाप्तये प्रवर्तनाय चिरस्थितये यथेयं नान्तर्धीयेत । सचेत्त्वमानन्द यो मया ते धर्मो देशितः साक्षात् स्थापयित्वा प्रज्ञापारमिताम्, तां सर्वां धर्मदेशनामुद्गृह्य पुनरेव विप्रणाशयेः, पुनरेवोत्सृजेः विस्मारयेः, न मे त्वमानन्द एतावता अपराद्धः स्याः । यत्खलु पुनस्त्वमानन्द प्रज्ञापारमिताप्रतिसंयुक्तं पदं वा पदसामन्तकं वा नाशयेः, उत्सृजेः, विस्मारयेः, तावता त्वमानन्द ममापराद्धः स्याः, न च मे त्वं चित्तमाराधयेः। सचेत्पुनस्त्वमानन्द प्रज्ञापारमितामुद्गृह्य पुनरेव नाशयेः, पुनरेवोत्सृजेः, विस्मारयेः, न त्वयाहं सत्कृतो गुरुकृतः स्याम्, न मानितो न पूजितो नार्चितो नापचायितः स्याम् । येऽपि

ते आनन्द अतीतानागतप्रत्युत्पन्ना बुद्धा भगवन्तः, तेऽपि त्वया आनन्द न सत्कृता न गुरुकृता न मानिता न पूजिता नार्चिता नापचायिता भवन्ति। सचेत्पुनस्त्वमानन्द प्रज्ञापारमितामुद्गृह्य पुनरेव नाशयेः, पुनरेवोत्सृजेः, विस्मारयेः, तावता त्वमानन्द ममापराद्धः
W 870 स्याः, न च मे त्वं चित्तमाराधयेः। तत्कस्य हेतोः? उक्तमेतदानन्द तथागतेन—प्रज्ञापारमिता
5 अतीतानागतप्रत्युत्पन्नानां तथागतानामर्हतां सम्यक्संबुद्धानां माता जननी जनयित्री सर्वज्ञताया आहारिकेति। तस्मात्तर्हि आनन्द परीन्दामि अनुपरीन्दामि ते इमां प्रज्ञापारमिताम्, यथेयं नान्तर्धीयेत। उद्ग्रहीतव्येयमानन्द प्रज्ञापारमिता, धारयितव्येयमानन्द प्रज्ञापारमिता, वाचयितव्येयमानन्द प्रज्ञापारमिता, पर्यवाप्तव्येयमानन्द प्रज्ञापारमिता, प्रवर्तयितव्येयमानन्द प्रज्ञापारयिता, देशयितव्येयमानन्द प्रज्ञापारमिता, उपदेष्टव्येयमानन्द प्रज्ञापारमिता, उद्देष्ट-
10 व्येयमानन्द प्रज्ञापारमिता, स्वाध्यातव्येयमानन्द प्रज्ञापारमिता, लिखितव्येयमानन्द प्रज्ञापारमिता, भावयितव्येयमानन्द प्रज्ञापारमिता। सुमनसिकृता च सुधृता च सुपर्यवाप्ता च सुप्रवर्तिता च त्वया आनन्द इयं प्रज्ञापारमिता कर्तव्या। सुपरिव्यक्तेनाक्षरपदव्यञ्जनेन
R 462 सुनिरुक्ता चोद्ग्रहीतव्या। तत्कस्य हेतोः? अतीतानागतप्रत्युत्पन्नानां हि आनन्द तथागतानामर्हतां सम्यक्संबुद्धानां धर्मकायतेति तां धर्मतां प्रमाणीकृत्य। यथा तत्त्वमानन्द एतर्हि मे
W 871 15 तथागतस्य तिष्ठतो ध्रियमाणस्य यापयतो हितैषितया प्रेमतो वा गौरवतो वा कल्याणतो वा स्पर्शविहारतो वा कर्तव्यं वा दातव्यं वा समन्वाहर्तव्यं वा मन्यसे, तथैव त्वया आनन्द इयं प्रज्ञापारमिता उद्ग्रहीतव्या धारयितव्या वाचयितव्या पर्यवाप्तव्या प्रवर्तयितव्या देशयितव्या उपदेष्टव्या उद्देष्टव्या स्वाध्यातव्या लिखितव्या भावयितव्या सत्कर्तव्या गुरुकर्तव्या मानयितव्या पूजयितव्या अर्चयितव्या अपचायितव्या, तया हितैषितया तेन प्रेम्णा तेन
20 गौरवेण तया गुणवत्तया। एवं त्वया आनन्द अहं पूजितो भवामि, ते च बोधिसत्त्वा महासत्त्वाः। अतीतानागतप्रत्युत्पन्नानां च बुद्धानां भगवतामन्तिके प्रेम च प्रसादश्च गौरवं चोत्पादितं भवति। यदि ते आनन्द अहं प्रियो मनआपोऽपरित्यक्तस्तथागतः, ततस्ते आनन्द इयं प्रज्ञापारमिता प्रिया मनआपा अपरित्यजनीया भवतु, यथा ते एकपदमपि न प्रणश्येत्, यथा नान्तर्धीयेत। बह्वपि ते आनन्द अहं भाषेयं प्रज्ञापारमितायाः परीन्दनामारभ्य
25 कल्पं वा कल्पावशेषं वा कल्पशतं वा कल्पसहस्रं वा कल्पशतसहस्रं वा कल्पकोटीं वा कल्पकोटीशतं वा कल्पकोटीसहस्रं वा कल्पकोटीशतसहस्रं वा ततो वा उपरि। संक्षेपेण आनन्द यादृशस्तवाहं शास्ता, तादृशी ते प्रज्ञापारमिता शास्ता। यादृशास्ते अतीतानागतप्रत्युत्पन्ना बुद्धा भगवन्तः सदेवमानुषासुरस्य लोकस्य शास्तारः, तादृशी प्रज्ञापारमिता सदेवमानुषासुरस्य लोकस्य शास्ता। तस्मात्तर्हि आनन्द अपरिमाणा प्रज्ञापारमिता। अपरिमाणया
R 463 30 परीन्दनया प्रज्ञापारमितां ते परीन्दाम्यनुपरीन्दामि सदेवमानुषासुरस्य लोकस्य हिताय सुखाय। यस्य आनन्द तथागतो न परित्यक्तः, धर्मो न परित्यक्तः, संघो न परित्यक्तः, अतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां बोधिर्न परित्यक्ता, तस्य प्रज्ञापारमिता अपरित्यक्ता भवतु। इय-
W 872

मस्माकमनुशासनी। योऽपि कश्चिदानन्द एनां प्रज्ञापारमितामुद्गृह्णीयाद्धारयेत्पर्यवाप्नुयात्प्रवर्तयेद्देशयेदुपदिशेदुद्दिशेत्स्वाध्यायेत् लिखेद्वाचयेत्, अतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां तेन बोधिरनुपरिगृहीता भवेत्। यो हि कश्चिदानन्द एनां प्रज्ञापारमितां प्रलुज्यमानामनुपरिगृह्णीते, अतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां तेन बोधिरनुपरिगृहीता भवति। तत्कस्य हेतोः? प्रज्ञापारमितानिर्जाता हि आनन्द बुद्धानां भगवतां बोधिः। येऽपि ते आनन्द 5 अभूवन्नतीतेऽध्वनि तथागता अर्हन्तः सम्यक्संबुद्धाः, तेषामप्यानन्द बुद्धानां भगवतां प्रज्ञापारमितानिर्जातैव अनुत्तरा सम्यक्संबोधिरभूत्। तेऽपि ते आनन्द अनागतेऽध्वनि भविष्यन्ति तथागता अर्हन्तः सम्यक्संबुद्धाः, तेषामप्यानन्द बुद्धानां भगवतां प्रज्ञापारमितानिर्जातैव अनुत्तरा सम्यक्संबोधिर्भविष्यति। येऽपि ते आनन्द अप्रमेयेष्वसंख्येयेषु लोकधातुषु तथागता अर्हन्तः सम्यक्संबुद्धा एतर्हि तिष्ठन्ति ध्रियन्ते यापयन्ति, तेषामप्यानन्द बुद्धानां भगवतां 10 प्रज्ञापारमितानिर्जातैव अनुत्तरा सम्यक्संबोधिः। तस्मात्तर्हि आनन्द बोधिसत्त्वेन महासत्त्वेन अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन षट्सु पारमितासु शिक्षितुकामेन इयमेव प्रज्ञापारमिता श्रोतव्या उद्ग्रहीतव्या धारयितव्या वाचयितव्या पर्यवाप्तव्या प्रवर्तयितव्या देशयितव्योपदेष्टव्योद्देष्टव्या स्वाध्यातव्या लिखितव्या। इहैव प्रज्ञापारमितायां शिक्षितव्यं योगमापत्तव्यम्। [W 873] [R 464] तत्कस्य हेतोः? एषा हि आनन्द प्रज्ञापारमिता बोधिसत्त्वानां महासत्त्वानां माता जननी 15 जनयित्री। येऽपि केचिदानन्द बोधिसत्त्वा महासत्त्वाः षट्सु पारमितासु शिक्षित्वा निर्याताः, निर्यास्यन्ति निर्यान्ति च अनुत्तरायां सम्यक्संबोधौ, सर्वे ते आनन्द प्रज्ञापारमितामागम्य षट्सु पारमितासु शिक्षिताः। तेऽपि सर्वे एनामेव प्रज्ञापारमितामागम्य षट्सु पारमितासु निर्जाताः। तत्कस्य हेतोः? प्रज्ञापारमितानिर्जाता हि आनन्द सर्वाः पारमिताः आहारिका भवन्त्यनुत्तरायाः सम्यक्संबोधेः। तस्मात्तर्हि आनन्द भूयस्या मात्रया एनां प्रज्ञापारमितां 20 द्वितीयकमपि तृतीयकमपि परीन्दाम्यनुपरीन्दामि ते, यथेयं नान्तर्धीयेत। एषा हि आनन्द तथागतानामर्हतां सम्यक्संबुद्धानामक्षयो धर्मकोषः, यदुत प्रज्ञापारमिता। तत्कस्य हेतोः? यो हि आनन्द अतीतेऽध्वनि अनवराग्रे संसारे सत्त्वानां बुद्धैर्भगवद्भिर्धर्मो देशितः, सर्वः स इत एव धर्मकोषात्, यदुत प्रज्ञापारमितातः। येऽपि ते आनन्द अनागतेऽध्वनि बुद्धा भगवन्तोऽपरिमिते संसारेऽनुत्तरां सम्यक्संबोधिमभिसंबुध्य सत्त्वानां धर्मं देशयिष्यन्ति, तेऽपि 25 बुद्धा भगवन्त इत एव धर्मकोषात्, यदुत प्रज्ञापारमितातः। येऽपि ते आनन्द एतर्हि अप्रमेयेष्वसंख्येयेषु लोकधातुषु बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति, धर्मं च देशयन्ति, तेषामप्यानन्द बुद्धानां भगवतामित एव धर्मकोषात्प्रभावना भवति, यदुत प्रज्ञापारमितातः। [W 874] [R 465] तस्मात्तर्हि आनन्द अक्षय एष धर्मकोषो यदुत प्रज्ञापारमिताकोषः। सचेत्त्वमानन्द श्रावकयानि[1]...गतमर्हन्तं सम्यक्संबुद्धं पश्यन्ति स्म भिक्षुसंघपरिवृतं बोधिसत्त्वगण- 30

[1] It appears that some portion of the text after श्रावकयानि° is missing in all Mss. The commentator हरिभद्र notes श्रावकयानिकानां as a प्रतीक and gives explanation of क्षण, लव etc, though the available text does not contain these words here.

पुरस्कृतं धर्मं देशयन्तं सागरोपमायां गम्भीरायामक्षोभ्यायां पर्षदि बोधिसत्त्वैर्महासत्त्वैरचिन्त्यगुणसमन्वागतैः परिवृतं पुरस्कृतं सर्वैश्चार्हद्भिः क्षीणास्रवैर्निःक्लेशैर्वशीभूतैः सुविमुक्तचित्तैः सुविमुक्तप्रज्ञैराजानेयैर्महानागैः कृतकृत्यैः कृतकरणीयैरपहृतभारैरनुप्राप्तस्वकार्थैः परिक्षीणभवसंयोजनैः सम्यगाज्ञासुविमुक्तचित्तैः सर्वचेतोवशिपरमपारमिप्राप्तैः ॥

W 875 5 अथ खलु भगवांस्तमृद्ध्यभिसंस्कारं पुनरेव प्रतिसंहरति स्म। प्रतिसंहृते च भगवता तस्मिन् ऋद्ध्यभिसंस्कारे न भूयः स भगवानक्षोभ्यस्तथागतोऽर्हन् सम्यक्संबुद्धः संदृश्यते स्म। ते च सर्वे बोधिसत्त्वा महासत्त्वाः, ते च महाश्रावकाः, तच्च बुद्धक्षेत्रं तासां चतसृणां गन्धर्वासुरगरुडकिन्नरमहोरगाणां मनुष्यामनुष्याणां च न चक्षुष आभासं भूय आगच्छन्ति स्म। तत्कस्य हेतोः? प्रतिसंहृतो हि तथागतेनार्हता सम्यक्संबुद्धेन स ऋद्ध्यभिसंस्कारः। 10 तेन ते सर्वे सर्वेषां तेषां न भूयश्चक्षुष आभासमागच्छन्ति स्म ॥

अथ खलु भगवानायुष्मन्तमानन्दमामन्त्रयते स्म–एवमानन्द सर्वधर्मा न चक्षुषोऽप्याभासमागच्छन्ति, न धर्मा धर्माणामाभासमागच्छन्ति, न धर्मा धर्मान् पश्यन्ति, न धर्मा धर्मान् जानन्ति। तत्कस्य हेतोः? सर्वधर्मा हि आनन्द अजानका अपश्यकाः, न कार्यसमर्थाः। तत्कस्य हेतोः? निरीहका हि आनन्द सर्वधर्मा अग्राह्या आकाशनिरीहकतया। अचिन्त्या 15 ह्यानन्द सर्वधर्मा मायापुरुषोपमाः। अवेदका ह्यानन्द सर्वधर्मा असद्भावतामुपादाय। एवं चरन्त आनन्द बोधिसत्त्वा महासत्त्वाश्चरन्ति प्रज्ञापारमितायाम्। न कंचिद्धर्ममभिनिविशन्ते। एवं शिक्षमाणा आनन्द बोधिसत्त्वा महासत्त्वाः शिक्षन्ते प्रज्ञापारमितायाम्। सर्वशिक्षापरमपारमितां महाबोधिं प्राप्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्। तत्कस्य हेतोः? एषा ह्यानन्द शिक्षा सर्वशिक्षाणामग्रा आख्यायते, श्रेष्ठा आख्यायते, ज्येष्ठा 20 आख्यायते, वरा आख्यायते, प्रवरा आख्यायते, प्रणीता आख्यायते, उत्तमा आख्यायते, अनुत्तमा आख्यायते, निरुत्तरा आख्यायते, असमा आख्यायते, असमसमा आख्यायते, सर्वलोकहितावहा सर्वलोकसुखावहा अनाथानां नाथकरी बुद्धानुज्ञाता बुद्धप्रशस्ता। अस्यामानन्द प्रज्ञापारमितायां शिक्षित्वा अत्र शिक्षायां स्थित्वा तथागता अर्हन्तः सम्यक्संबुद्धा इमं त्रिसाहस्रमहासाहस्रं लोकधातुमेकेन पदाङ्गुष्ठेनोत्क्षिप्य पुनरेव निक्षिपेयुः। न च तेषां 25 बुद्धानां भगवतामेवं स्यात्–उत्क्षिप्तो वायं त्रिसाहस्रमहासाहस्रो लोकधातुः निक्षिप्तो वेति। तत्कस्य हेतोः? अप्रमेयासंख्येयगुणसमन्वागता हि प्रज्ञापारमिता। अस्यामानन्द प्रज्ञापारमिताशिक्षायां शिक्षित्वा बुद्धा भगवन्तोऽतीतानागतप्रत्युत्पन्नेषु धर्मेष्वसङ्गतामनुप्राप्ताः। यावत्य आनन्द काश्चिच्छिक्षाः अतीतानागतप्रत्युत्पन्नेऽध्वनि, सर्वासां तासामानन्द शिक्षाणामियमेव प्रज्ञापारमिताशिक्षा अग्रा आख्यायते, श्रेष्ठा आख्यायते, ज्येष्ठा आख्यायते, वरा आख्यायते, 30 प्रवरा आख्यायते, प्रणीता आख्यायते, उत्तमा आख्यायते, अनुत्तमा आख्यायते, निरुत्तरा आख्यायते, असमा आख्यायते, असमसमा आख्यायते। अप्रमाणा ह्यानन्द प्रज्ञापारमिता। अक्षया ह्यानन्द प्रज्ञापारमिता। अपर्यन्ता ह्यानन्द प्रज्ञापारमिता। तत्कस्य हेतोः? असत्त्वादेव

R 466 W 876 W 877 R 467

प्रज्ञापारमितायाः। आकाशस्य हि स आनन्द प्रमाणं वा क्षयं वा पर्यन्तं वा ग्रहीतव्यं मन्येत, यः प्रज्ञापारमितायाः प्रमाणं वा क्षयं वा पर्यन्तं वा ग्रहीतव्यं मन्येत। तत्कस्य हेतोः? अप्रमाणा ह्यानन्द प्रज्ञापारमिता। अक्षया ह्यानन्द प्रज्ञापारमिता। अपर्यन्ता ह्यानन्द प्रज्ञापारमिता। न मया आनन्द प्रज्ञापारमितायाः प्रमाणं वा क्षयो वा पर्यन्तो वा आख्यातः। नामकायपदकायव्यञ्जनकायाः खलु पुनरानन्द प्रमाणबद्धाः। नेयमानन्द 5 W 878 प्रज्ञापारमिता प्रमाणबद्धा। तत्कस्य हेतोः? न ह्यानन्द नामकायपदकायव्यञ्जनकायाः प्रज्ञापारमिता। न हि प्रमाणवतीयमानन्द प्रज्ञापारमिता। अपरिमाणा ह्यानन्द प्रज्ञापारमिता॥

आनन्द आह—केन पुनः कारणेन भगवन् भगवता प्रज्ञापारमितायाः प्रमाणं नाख्यातम्? भगवानाह—अक्षयत्वादानन्द प्रज्ञापारमितायास्तथागतः प्रमाणं न निर्दिशति। 10 विविक्तत्वादानन्द प्रज्ञापारमितायाः प्रमाणं तथागतेन नाख्यातम्। न ह्यानन्द विविक्तस्य धर्मस्य विविक्ततााप्युपलभ्यते, कुतः पुनरस्य प्रमाणं भविष्यति? एवमानन्द प्रज्ञापारमिता अप्रमेयत्वादप्रमाणा अपरिमाणा। येऽपि ते आनन्द अतीतेऽध्वन्यभूवंस्तथागता अर्हन्तः सम्यक्संबुद्धाः, तेऽप्यानन्द इत एव प्रज्ञापारमितातः प्रभाविताः। न चानन्द इयं प्रज्ञापारमिता क्षीणा वा परिक्षीणा वा। येऽपि ते आनन्द अनागतेऽध्वनि भविष्यन्ति तथागता 15 R 468 अर्हन्तः सम्यक्संबुद्धाः, तेऽप्यानन्द इत एव प्रज्ञापारमितातः प्रभावयिष्यन्ते। न चानन्द W 879 इयं प्रज्ञापारमिता क्षेष्यते वा परिक्षेष्यते वा। येऽपि ते आनन्द एतर्ह्यप्रमेयेष्वसंख्येयेषु लोकधातुषु तथागता अर्हन्तः सम्यक्संबुद्धास्तिष्ठन्ति ध्रियन्ते यापयन्ति, तेऽप्यानन्द इत एव प्रज्ञापारमितातः प्रभाव्यन्ते। न चेयमानन्द प्रज्ञापारमिता क्षीयते वा परिक्षीयते वा। अहमप्यानन्द एतर्हि तथागतोऽर्हन् सम्यक्संबुद्धः। ममाप्यानन्द इत एव प्रज्ञापारमितातः 20 प्रभावना। न चानन्द इयं प्रज्ञापारमिता क्षीयते वा परिक्षीयते वा। तत्कस्य हेतोः? आकाशं हि स आनन्द क्षययितव्यं मन्येत, यः प्रज्ञापारमितां क्षययितव्यां मन्येत। तस्मात्तर्ह्यानन्द अक्षयेयं प्रज्ञापारमिता॥

W 880 अथ खल्वायुष्मतः सुभूतेरेतदभवत्—गम्भीरमिदं स्थानं तथागतेन भाषितम्। यन्न्वहं तथागतं पृच्छेयमेतत्स्थानम्। अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—अक्षया 25 भगवन् प्रज्ञापारमिता? भगवानाह—अक्षया हि सुभूते प्रज्ञापारमिता यदुत आकाशाक्षयत्वात्सर्वधर्मानुत्पादतः। सुभूतिराह—कथं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमिता अभिनिर्हर्तव्या? भगवानाह—रूपाक्षयत्वेन सुभूते बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमिता अभिनिर्हर्तव्या। एवं वेदनासंज्ञासंस्काराः। विज्ञानाक्षयत्वेन सुभूते बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमिता अभिनिर्हर्तव्या। एवं खलु सुभूते बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमिता 30 R 469 अभिनिर्हर्तव्या। अविद्याक्षयत्वेन सुभूते बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमिता अभिनिर्हर्तव्या। एवं संस्काराक्षयत्वेन विज्ञानाक्षयत्वेन नामरूपाक्षयत्वेन षडायतनाक्षयत्वेन स्पर्शा-

W 881 क्षयत्वेन वेदनाक्षयत्वेन तृष्णाक्षयत्वेन उपादानाक्षयत्वेन भवाक्षयत्वेन जात्यक्षयत्वेन जरामरणाक्षयत्वेन शोकपरिदेवदुःखदौर्मनस्योपायासाक्षयत्वेन सुभूते बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमिता अभिनिर्हर्तव्या । इयं सुभूते बोधिसत्त्वस्य महासत्त्वस्य अन्तद्वयविवर्जिता प्रतीत्यसमुत्पादव्यवलोकना । एवं व्यवलोकयन् सुभूते बोधिसत्त्वो महासत्त्वः प्रतीत्यनुत्पादमनाद्यन्तमध्यं
5 तं व्यवलोकयति । अयं सुभूते बोधिसत्त्वस्य महासत्त्वस्यावेणिको धर्मो बोधिमण्डे निषण्णस्य, यदेवं प्रतीत्यसमुत्पादं व्यवलोकयति । एवं व्यवलोकयतः सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रतीत्यसमुत्पादः सर्वज्ञज्ञानप्रतिलम्भो भवति । यो हि कश्चित्सुभूते बोधिसत्त्वो महासत्त्वः अनेन अक्षयाभिनिर्हारेण प्रज्ञापारमितायां चरन् प्रतीत्यसमुत्पादं व्यवलोकयति, स न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा स्थास्यति, अपि तु स्थास्यति सर्वज्ञतायाम् । ये केचि-
10 त्सुभूते बोधिसत्त्वा महासत्त्वा विवर्तन्तेऽनुत्तरायाः सम्यक्संबोधेः, सचेत् इमान् मनसिकारानिदं चोपायकौशल्यमनागम्य न जानन्ति–कथं प्रज्ञापारमितायां चरता बोधिसत्त्वेन R 470 महासत्त्वेन अक्षयाभिनिर्हारेण प्रज्ञापारमिता अभिनिर्हर्तव्या, कथं च अक्षयाभिनिर्हारेण प्रज्ञापारमितायां प्रतीत्यसमुत्पादो व्यवलोकयितव्य इति । ये केचित्सुभूते बोधिसत्त्वा महासत्त्वा विवृत्ता विवर्तन्ते, विवर्त्स्यन्ते च अनुत्तरायाः सम्यक्संबोधेः, सर्वे ते इदमुपाय-
15 कौशल्यमनागम्य विवृत्ता विवर्तन्ते विवर्त्स्यन्ते च । ये केचित्सुभूते बोधिसत्त्वा महासत्त्वा न विवृत्ता न विवर्तन्ते न विवर्त्स्यन्ते च, सर्वे ते इमां प्रज्ञापारमितामागम्य न विवृत्ता न विवर्तन्ते न विवर्त्स्यन्ते च अनुत्तरायाः सम्यक्संबोधेः । एवं प्रज्ञापारमितायां चरता बोधिसत्त्वेन महासत्त्वेन अक्षयाभिनिर्हारेण प्रज्ञापारमिता अभिनिर्हर्तव्या । एवं च अक्षयाभिनिर्हारेण W 882 प्रज्ञापारमितायां प्रतीत्यसमुत्पादो व्यवलोकयितव्यः । एवं खलु पुनः सुभूते बोधिसत्त्वो
20 महासत्त्वः प्रतीत्यसमुत्पादं व्यवलोकयन् न कंचिद्धर्ममहेतुकमुत्पद्यमानं समनुपश्यति, न कंचिद्धर्मं नित्यं वा ध्रुवं वा शाश्वतं वा अविपरिणामधर्मकं वा समनुपश्यति । न कंचिद्धर्मं कारकं वा वेदकं वा समनुपश्यति । इयं सुभूते बोधिसत्त्वस्य महासत्त्वस्य इमां प्रज्ञापारमितामक्षयाभिनिर्हारेण अभिनिर्हरतोऽस्यां प्रज्ञापारमितायां चरतः प्रतीत्यसमुत्पादव्यवलोकना । यस्मिन् समये सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितामक्षयाभिनिर्हारेण अभिनिर्हरन्
R 471 25 प्रतीत्यसमुत्पादं व्यवलोकयति, तस्मिन् समये सुभूते बोधिसत्त्वो महासत्त्वो न रूपं समनुपश्यति, न वेदनां न संज्ञां न संस्कारान्, न विज्ञानं समनुपश्यति, नाविद्यां समनुपश्यति । एवं न संस्कारान्न विज्ञानं न नामरूपं न षडायतनं न स्पर्शं न वेदनां न तृष्णां नोपादानं न भवं न जातिं न जरामरणं न शोकपरिदेवदुःखदौर्मनस्योपायासान् समनुपश्यति । इदं बुद्धक्षेत्रमिति न समनुपश्यति, अन्यद्बुद्धक्षेत्रमिति न समनुपश्यति ।
30 तमपि धर्मं न समनुपश्यति, येन धर्मेण इदं वा अन्यद्वा बुद्धक्षेत्रं समनुपश्येत् । इयं सा सुभूते बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमिता । यस्मिन् समये सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरति, तस्मिन् समये मारः पापीयान् परमशोकशल्यसमर्पितो भवति ।

तद्यथापि नाम सुभूते पुरुषो मातापितृषु कालगतेषु परमशोकशल्यसमर्पितो भवति, एवमेव सुभूते यस्मिन् समये बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरति, तस्मिन् समये मारः पापीयान् परमशोकशल्यसमर्पितो भवति ॥

सुभूतिराह–किमेक एव भगवन् मारः पापीयान् परमशोकशल्यसमर्पितो भवति, W 883 उताहो बहवो माराः पापीयांसः परमशोकशल्यसमर्पिता भवन्ति, उताहो ये त्रिसाहस्र- 5 महासाहस्रे लोकधातौ माराः पापीयांसः तेऽपि सर्वे तस्मिन् समये परमशोकशल्यसमर्पिता भवन्ति ? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्–यस्मिन् समये सुभूते बोधिसत्त्वो W 885 महासत्त्वः प्रज्ञापारमिताविहारेण विहरति, तस्मिन् समये ये त्रिसाहस्रमहासाहस्रे लोकधातौ माराः पापीयांसः ते सर्वे परमशोकशल्यसमर्पिता भवन्ति, स्वकस्वकेष्वासनेषु न रमन्ते । तत्कस्य हेतोः ? प्रज्ञापारमिताविहारेण हि विहरतोऽस्य सुभूते बोधिसत्त्वस्य महासत्त्वस्य 10 R 472 सदेवमानुषासुरो लोकोऽवतारं न लभते ग्रहणाय, गाधं न लभते, यत्रैनं गृहीत्वा विहेठयेद्वा विवर्तयेद्वा अनुत्तरायाः सम्यक्संबोधेः । तस्मात्तर्हि सुभूते बोधिसत्त्वेन महासत्त्वेन अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन प्रज्ञापारमितायां चरितव्यम् । तत्कस्य हेतोः ? प्रज्ञापारमितायां W 886 हि सुभूते चरतो बोधिसत्त्वस्य महासत्त्वस्य दानपारमिता भावनापरिपूरिं गच्छति, एवं शीलपारमिता क्षान्तिपारमिता वीर्यपारमिता ध्यानपारमिता भावनापरिपूरिं गच्छति । प्रज्ञा- 15 पारमितायां हि सुभूते चरतो बोधिसत्त्वस्य महासत्त्वस्य सर्वाः षट् पारमिता भावनापरिपूरिं गच्छन्ति, सर्वाणि चोपायकौशल्यानि भावनापरिपूरिं गच्छन्ति । तस्य बोधिसत्त्वस्य महा- सत्त्वस्य प्रज्ञापारमितायां चरतो यानि कानिचिन्मारकर्माण्युत्पद्येरन्, सर्वाणि तान्युत्पद्य- मानान्येव स प्रज्ञास्यति, प्रजानन् विसर्जयिष्यति । सर्वोपायकौशल्यानि सुभूते परिग्रहीतु- W 887 कामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरितव्यम्, प्रज्ञापारमिता भावयितव्या । 20 यस्मिन् समये सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरति, प्रज्ञापारमितामभिनिर्हरति, W 889 तस्मिन् समये सुभूते न बोधिसत्त्वेन महासत्त्वेन येऽप्रमेयेष्वसंख्येयेषु लोकधातुषु बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति, ते समन्वाहर्तव्याः । तेषामपि इतोनिर्जातैव सर्वज्ञता यदुत प्रज्ञापारमितातः । एवं समन्वाहृत्य तेन बोधिसत्त्वेन महासत्त्वेन पुनरेवं चित्तमुत्पाद- यितव्यम्–अहमप्येतान् धर्माननुप्राप्स्यामि ये तैर्बुद्धैर्भगवद्भिरनुप्राप्ता इति । एवं सुभूते 25 बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता इमे चित्तोत्पादा उत्पादयितव्या अभि- R 473 W 890 निर्हर्तव्या दिवसस्याल्ययेन, अन्तशोऽच्छटासंघातमात्रकमपि । यश्च सुभूते औपलम्भिको बोधिसत्त्वो महासत्त्वो गङ्गानदीवालुकोपमान् कल्पान् दानं दद्यात्, अयमेव तत औपलम्भि- काद्बोधिसत्त्वान्महासत्त्वाद्बहुतरं पुण्यं प्रसवति, योऽयं बोधिसत्त्वो महासत्त्वो दिवसस्या- ल्ययेन इमां प्रज्ञापारमितामभिनिर्हरेत्, अन्तशोऽच्छटासंघातमात्रकमपि । अयं बोधिसत्त्वो 30 महासत्त्वोऽविनिवर्तनीयतायां स्थास्यति । तथागतसमन्वाहृतः स बोधिसत्त्वो महासत्त्वो वेदितव्यः, योऽस्यां प्रज्ञापारमितायां चरन् इमांश्चित्तोत्पादानुत्पादयति दिवसस्याल्ययेन

अन्तशोऽच्छटासंघातमात्रकमपि । कः पुनर्वादो यस्येमे चित्तोत्पादा दिवसमनुवर्तेरन् । तथागतसमन्वाहृतस्य हि सुभूते बोधिसत्त्वस्य महासत्त्वस्य का गतिः प्रतिकाङ्क्षितव्या ? तथागतसमन्वाहृतस्य हि सुभूते बोधिसत्त्वस्य महासत्त्वस्य नान्या गतिः प्रतिकाङ्क्षितव्या अन्यत्रानुत्तरायाः सम्यक्संबोधेः । अभव्यश्चासावपायेषूपपत्तुम् । स्वर्गोपपत्तिरेव तस्य प्रति-
5 काङ्क्षितव्या । तत्रापि तथागतैरविरहितो भविष्यति, तथागताविरहितेषु च बुद्धक्षेत्रेषूपपत्स्यते, सत्त्वांश्च परिपाचयिष्यति । इमेऽपि सुभूते गुणाः, इमेऽप्यनुशंसा बोधिसत्त्वस्य महासत्त्वस्य
R 474 प्रज्ञापारमितायां चरतः, प्रज्ञापारमितामभिनिर्हरतः, इमांश्चित्तोत्पादानुत्पादयतः अन्तशोऽच्छटा-संघातमात्रकमपि । कः पुनर्वादो यस्येमे चित्तोत्पादा दिवसमनुवर्तेरन्, तद्यथापि नाम सुभूते गन्धहस्तिनो बोधिसत्त्वस्य महासत्त्वस्य य एतर्ह्यक्षोभ्यस्य तथागतस्यार्हतः
10 सम्यक्संबुद्धस्यान्तिके ब्रह्मचर्यं चरतीति ॥

W 891 आर्याष्टसाहस्रिकायां प्रज्ञापारमितायामवकीर्णकुसुमपरिवर्तो नामाष्टाविंशतितमः ॥



## २९ अनुगमपरिवर्त एकोनत्रिंशत्तमः।

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन एवं प्रज्ञापारमिता अनुगन्तव्या—सर्वधर्मा- R 475 W 893
सङ्गतः प्रज्ञापारमिता अनुगन्तव्या। सर्वधर्मासंभेदनतः प्रज्ञापारमिता अनुगन्तव्या।
सर्वधर्मासंभवतः प्रज्ञापारमिता अनुगन्तव्या। सर्वधर्मानिर्विकारसमा इति प्रज्ञापारमिता
अनुगन्तव्या। सर्वधर्माणामनात्मविज्ञप्तितः प्रज्ञानुबोधनतः प्रज्ञापारमिता अनुगन्तव्या। 5 W 894
सर्वधर्माश्च नाममात्रेण व्यवहारमात्रेणाभिलप्यन्ते इति प्रज्ञापारमिता अनुगन्तव्या।
व्यवहारश्च न क्वचिन्न कुतश्चिन्न कश्चिद्व्यवहारः। सर्वधर्मा अव्यवहारा अव्याहारा अव्यवहृता
अव्याहृता इति प्रज्ञापारमिता अनुगन्तव्या। सर्वधर्माप्रमाणतः प्रज्ञापारमिता अनुगन्तव्या।
रूपाप्रमाणतः प्रज्ञापारमिता अनुगन्तव्या। एवं वेदनाप्रमाणतः संज्ञाप्रमाणतः संस्कारा-
प्रमाणतः। विज्ञानाप्रमाणतः प्रज्ञापारमिता अनुगन्तव्या। सर्वधर्मानिमित्ततः प्रज्ञापारमिता 10 W 895 R 476
अनुगन्तव्या। सर्वधर्मनिर्वेधतः प्रज्ञापारमिता अनुगन्तव्या। सर्वधर्मप्रकृतिपरिशुद्धितः[1] प्रज्ञा-
पारमिता अनुगन्तव्या। सर्वधर्मावचनतः प्रज्ञापारमिता अनुगन्तव्या। सर्वधर्माणामनिरोधतः W 896
प्रहाणसमतया प्रज्ञापारमिता अनुगन्तव्या। सर्वधर्माणां निर्वाणप्राप्तितस्तथतासमतया
प्रज्ञापारमिता अनुगन्तव्या। सर्वधर्मा नागच्छन्ति, न गच्छन्ति, अजानाना अजाता अत्यन्ता-
जातित इति प्रज्ञापारमिता अनुगन्तव्या। आत्मपरादर्शनतः प्रज्ञापारमिता अनुगन्तव्या।[2] 15
सर्वधर्मा आर्यार्हन्तः प्रकृतिपरिशुद्धा इति प्रज्ञापारमिता अनुगन्तव्या। अपहृतभाराः सर्वधर्मा
भारानारोपणतयेति प्रज्ञापारमिता अनुगन्तव्या। सर्वधर्मादेशाप्रदेशतः प्रज्ञापारमिता अनु- W 897
गन्तव्या। तत्कस्य हेतोः? रूपं हि सुभूते अदेशमप्रदेशं प्रकृतिस्वभावतः। एवं वेदना संज्ञा
संस्काराः। विज्ञानं हि सुभूते अदेशमप्रदेशं प्रकृतिस्वभावतः सर्वधर्मनिरोधप्रह्लादनत्वादिति W 898
प्रज्ञापारमिता अनुगन्तव्या। अरत्यविरतितः प्रज्ञापारमिता अनुगन्तव्या। अरक्ताविरक्ततया 20
प्रज्ञापारमिता अनुगन्तव्या। तत्कस्य हेतोः? रूपं हि सुभूते सतत्त्वेन स्वभावेन न रज्यते
न विरज्यते। एवं वेदना संज्ञा संस्काराः। विज्ञानं हि सुभूते सतत्त्वेन स्वभावेन न रज्यते
न विरज्यते प्रकृतिपरिशुद्धत्वादिति प्रज्ञापारमिता अनुगन्तव्या। सर्वधर्मा असक्ताः सङ्गासङ्ग- W 899 R 477
विगता इति प्रज्ञापारमिता अनुगन्तव्या। बोधिः सर्वधर्मा बुद्धज्ञानावबोधनतयेति प्रज्ञापारमिता
अनुगन्तव्या। सर्वधर्मशून्यानिमित्ताप्रणिहिततया प्रज्ञापारमिता अनुगन्तव्या। सर्वधर्मा 25
भैषज्यमैत्रीपूर्वंगमतयेति प्रज्ञापारमिता अनुगन्तव्या। सर्वधर्मा मैत्रीविहारिणः करुणा-
विहारिणो मुदिताविहारिण उपेक्षाविहारिण इति प्रज्ञापारमिता अनुगन्तव्या। सर्वधर्मा W 900
ब्रह्मभूता दोषानुत्पादनतः सर्वदोषानुत्पादनत इति प्रज्ञापारमिता अनुगन्तव्या। सर्वधर्माणा-
मप्रणिहिततोऽप्रतिहतित इति प्रज्ञापारमिता अनुगन्तव्या। समुद्रापर्यन्ततया प्रज्ञापारमिता-
पर्यन्तता अनुगन्तव्या। गगनापर्यन्ततया प्रज्ञापारमितापर्यन्तता अनुगन्तव्या। मेरुविचित्र- 30 W 901
तया प्रज्ञापारमिताविचित्रता अनुगन्तव्या। रूपापर्यन्ततया प्रज्ञापारमितापर्यन्तता

---

१ R सर्वधर्माप्रकृति°. २ R om. आत्म...गन्तव्या.

अनुगन्तव्या । एवं वेदना संज्ञा संस्काराः । विज्ञानापर्यन्ततया प्रज्ञापारमितापर्यन्तता अनुगन्तव्या । सूर्यरश्मिमण्डलापर्यन्तावभासनतया प्रज्ञापारमितापर्यन्तता अनुगन्तव्या । W 902 सर्वशब्दापर्यन्ततया प्रज्ञापारमितापर्यन्तता अनुगन्तव्या । सर्वबुद्धधर्मसमुदागमापर्यन्ततया W 903 प्रज्ञापारमितापर्यन्तता अनुगन्तव्या । सर्वसत्त्वधातुपुण्यज्ञानसंभारापर्यन्ततया प्रज्ञापारमिता- W 904 5 पर्यन्तता अनुगन्तव्या । पृथिवीधात्वपर्यन्ततया प्रज्ञापारमितापर्यन्तता अनुगन्तव्या । एवमब्धातुतेजोधातुवायुधात्वाकाशधातुविज्ञानधात्वपर्यन्ततया प्रज्ञापारमितापर्यन्तता अनु- R 478 गन्तव्या । कुशलाकुशलधर्मसंचयाप्रमाणतया प्रज्ञापारमिताप्रमाणता अनुगन्तव्या । सर्वधर्म- W 905 संचयाप्रमाणतया प्रज्ञापारमिताप्रमाणता अनुगन्तव्या । सर्वधर्मसमाध्यपर्यन्तताप्रतिलम्भितया प्रज्ञापारमितापर्यन्तता अनुगन्तव्या । सर्वबुद्धधर्मापर्यन्ततया प्रज्ञापारमितापर्यन्तता अनुगन्तव्या । W 906 10 सर्वधर्मापर्यन्ततया प्रज्ञापारमितापर्यन्तता अनुगन्तव्या । शून्यतापर्यन्ततया प्रज्ञापार- मितापर्यन्तता अनुगन्तव्या । चित्तचैतसिकापर्यन्ततया प्रज्ञापारमितापर्यन्तता अनुगन्तव्या । W 907 चित्तचरितापर्यन्ततया प्रज्ञापारमितापर्यन्तता अनुगन्तव्या । कुशलाकुशलधर्मापरिमाणतया W 908 प्रज्ञापारमितापरिमाणता अनुगन्तव्या । सिंहनादनदनतया प्रज्ञापारमितानदनता अनुगन्तव्या । सर्वधर्माकोप्यतया प्रज्ञापारमिताकोप्यता अनुगन्तव्या । तत्कस्य हेतोः ? रूपं हि सुभूते W 911 15 समुद्रसमम् । एवं वेदना संज्ञा संस्काराः । विज्ञानं हि सुभूते समुद्रसमम् । रूपं हि गगनसमम् । एवं वेदना संज्ञा संस्काराः । विज्ञानं गगनसमम् । रूपं विचित्रमेरुसमम् । एवं वेदना संज्ञा संस्काराः । विज्ञानं विचित्रमेरुसमम् । रूपमपर्यन्तसमम् । एवं वेदना संज्ञा संस्काराः । विज्ञानमपर्यन्तसमम् । रूपं सूर्यमण्डलरश्म्युत्पादसमम् । एवं वेदना संज्ञा संस्काराः । विज्ञानं सूर्यमण्डलरश्म्युत्पादसमम् । रूपं सर्वशब्दापर्यन्तसमम् । एवं वेदना संज्ञा संस्काराः । 20 विज्ञानं सर्वशब्दापर्यन्तसमम् । रूपं सर्वसत्त्वधात्वपर्यन्तसमम् । एवं वेदना संज्ञा संस्काराः । विज्ञानं सर्वसत्त्वधात्वपर्यन्तसमम् । रूपं सर्वबुद्धधर्मसमुदागमापर्यन्तसमम् । एवं वेदना संज्ञा संस्काराः । विज्ञानं सर्वबुद्धधर्मसमुदागमापर्यन्तसमम् । रूपं सर्वसत्त्वधातुपुण्यज्ञानसंभारा- W 912 R 479 पर्यन्तसमम् । एवं वेदना संज्ञा संस्काराः । विज्ञानं सर्वसत्त्वधातुपुण्यज्ञानसंभारापर्यन्तसमम् । रूपं पृथिवीसमम् । एवं वेदना संज्ञा संस्काराः । विज्ञानं पृथिवीसमम् । रूपमप्समम् । एवं 25 वेदना संज्ञा संस्काराः । विज्ञानमप्समम् । रूपं तेजःसमम् । एवं वेदना संज्ञा संस्काराः । विज्ञानं तेजःसमम् । रूपं वायुसमम् । एवं वेदना संज्ञा संस्काराः । विज्ञानं वायुसमम् । रूपमाकाशसमम् । एवं वेदना संज्ञा संस्काराः । विज्ञानमाकाशसमम् । रूपं विज्ञानसमम् । एवं वेदना संज्ञा संस्काराः । विज्ञानं विज्ञानसमम् । रूपं कुशलाकुशलधर्मसंचयविगतम् । एवं वेदना संज्ञा संस्काराः । विज्ञानं कुशलाकुशलधर्मसंचयविगतम् । रूपं सर्वधर्मसंचय- 30 विगतम् । एवं वेदना संज्ञा संस्काराः । विज्ञानं सर्वधर्मसंचयविगतम् । रूपं सर्वधर्म- समाध्यपर्यन्ततासमम् । एवं वेदना संज्ञा संस्काराः । विज्ञानं सर्वधर्मसमाध्यपर्यन्ततासमम् । रूपं विगमः, रूपस्वभावो रूपतथता बुद्धधर्माः । एवं वेदना संज्ञा संस्काराः । विज्ञानं विगमः,

विज्ञानस्वभावो विज्ञानतथता बुद्धधर्माः। रूपं सर्वधर्मापर्यन्तधर्मता। एवं वेदना संज्ञा संस्काराः। विज्ञानं सर्वधर्मापर्यन्तधर्मता। रूपं शून्यमपर्यन्तधर्मता। एवं वेदना संज्ञा संस्काराः। विज्ञानं शून्यमपर्यन्तधर्मता। रूपं चित्तचैतसिकापर्यन्तता। एवं वेदना संज्ञा संस्काराः। विज्ञानं चित्तचैतसिकापर्यन्तता। रूपं चित्तचरितोत्पत्तिः। एवं वेदना संज्ञा संस्काराः। विज्ञानं चित्तचरितोत्पत्तिः। रूपं कुशलमकुशलम्, यावदनुपलब्धिः। एवं 5 W 913 वेदना संज्ञा संस्काराः। विज्ञानं कुशलमकुशलम्, यावदनुपलब्धिः। रूपं सिंहनादसमम्। एवं वेदना संज्ञा संस्काराः। विज्ञानं सिंहनादसमम्। रूपमकोप्यम्। एवं वेदना संज्ञा संस्काराः। विज्ञानमकोप्यम्। एवं हि सुभूते बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमिता अनुगन्तव्या॥

यदायं सुभूते बोधिसत्त्वो महासत्त्व एवमेनां प्रज्ञापारमितामनुगमिष्यति, व्यवचार- 10 R 480 यिष्यति अवतरिष्यति अवभोत्स्यते चिन्तयिष्यति तुलयिष्यति उपपरीक्षिष्यते भावयिष्यति सर्वमायाशाठ्यविवर्जितैर्मनसिकारैः, सर्वमन्यनाविवर्जितैर्मनसिकारैः, आत्मोत्कर्षणविवर्जितै-र्मनसिकारैः, सर्वकौसीद्यविवर्जितैर्मनसिकारैः, परपंसनाविवर्जितैर्मनसिकारैः, आत्मसंज्ञा-विवर्जितैर्मनसिकारैः, सत्त्वसंज्ञाविवर्जितैर्मनसिकारैः, लाभसत्कारश्लोकविवर्जितैर्मनसिकारैः, पञ्चनीवरणविवर्जितैर्मनसिकारैः, ईर्ष्यामात्सर्यविवर्जितैर्मनसिकारैः, सर्वेञ्जनाविवर्जितैर्मनसि- 15 कारैः, तदा नास्य दुर्लभा भविष्यति सर्वगुणानां परिपूरिः, बुद्धक्षेत्रस्यानुत्तराणां च बुद्धधर्माणां परिपूरिरिति॥

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायामनुगमपरिवर्तो नामैकोनत्रिंशत्तमः॥ W 926



१ R °साध्य° for °शाठ्य°.

# ३० सदाप्ररुदितपरिवर्तस्त्रिंशत्तमः ।

R 481 W 927 पुनरपरं सुभूते तथेयं प्रज्ञापारमिता पर्येष्टव्या, यथा सदाप्ररुदितेन बोधिसत्त्वेन महासत्त्वेन पर्येषिता, य एतर्हि भीष्मगर्जितनिर्घोषस्वरस्य तथागतस्यार्हतः सम्यक्संबुद्धस्यान्तिके ब्रह्मचर्यं चरति । एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्–कथं भगवन् 5 सदाप्ररुदितेन बोधिसत्त्वेन महासत्त्वेनेयं प्रज्ञापारमिता पर्येषिता? एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्–सदाप्ररुदितेन सुभूते बोधिसत्त्वेन महासत्त्वेन पूर्वं प्रज्ञापारमितां पर्येषमाणेन कायेऽनर्थिकेन जीवितनिरपेक्षेण लाभसत्कारश्लोकेष्वनिश्रितेन पर्येषमाणेन पर्येषिता । तेन प्रज्ञापारमितां पर्येषमाणेन अरण्यगतेन अन्तरीक्षान्निर्घोषः श्रुतोऽभूत्–गच्छ त्वं कुलपुत्र पूर्वस्यां दिशि । ततः प्रज्ञापारमितां श्रोष्यसि । तथा च गच्छ, यथा न 10 कायक्लमथमनसिकारमुत्पादयसि, न स्त्यानमिद्धमनसिकारमुत्पादयसि, न भोजनमनसिकारमुत्पादयसि, न पानीयमनसिकारमुत्पादयसि, न रात्रिमनसिकारमुत्पादयसि, न दिवसमनसिकारमुत्पादयसि, न शीतमनसिकारमुत्पादयसि, नोष्णमनसिकारमुत्पादयसि । मा च क्वचिच्चित्तं प्रणिधाः अध्यात्मं वा बहिर्धा वा । मा च कुलपुत्र वामेनालोकयन् गाः, मा दक्षिणेन, मा पूर्वेण, मा पश्चिमेन, मोत्तरेण, मोर्ध्वम्, माधः, मा च अनुविदिशमवलोकयन् 15 गाः । तथा च कुलपुत्र गच्छ, यथा नात्मतो न सत्कायतश्चलसि । यथा न रूपतश्चलसि, R 482 W 928 यथा न वेदनातो न संज्ञातो न संस्कारतः, यथा न विज्ञानतश्चलसि । यो ह्यतश्चलति, स वितिष्ठते । कुतो वितिष्ठते? बुद्धधर्मेभ्यो वितिष्ठते । यो बुद्धधर्मेभ्यो वितिष्ठते, स संसारे चरति । यः संसारे चरति, स न चरति प्रज्ञापारमितायाम् । स प्रज्ञापारमितां नानुप्राप्नोतीति ॥

W 929 20 एवमुक्ते सदाप्ररुदितो बोधिसत्त्वो महासत्त्वस्तं निर्घोषमेतदवोचत्–एवं वै करिष्यामि । तत्कस्य हेतोः? अहं हि सर्वसत्त्वानामालोकं कर्तुकामो बुद्धधर्मान् समुदानेतुकाम इति । एवमुक्ते स निर्घोषः सदाप्ररुदितं बोधिसत्त्वं महासत्त्वमेतदवोचत्–साधु साधु कुलपुत्र सदाप्ररुदित ॥

अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः पुनरपि शब्दमश्रौषीत् । एवं W 930 25 चाश्रौषीत्–शून्यतानिमित्ताप्रणिहितेषु च त्वया कुलपुत्र सर्वधर्मेष्वधिमुक्तिमुत्पाद्य प्रज्ञापारमिता पर्येष्टव्या । निमित्तपरिवर्जितेन भावपरिवर्जितेन सत्त्वदृष्टिपरिवर्जितेन च त्वया भवितव्यम् । पापमित्राणि च त्वया कुलपुत्र परिवर्जयितव्यानि । कल्याणमित्राणि च त्वया सेवितव्यानि भक्तव्यानि पर्युपासितव्यानि, यानि च शून्यतानिमित्ताप्रणिहितानुत्पादाजातानिरुद्धाभावाः सर्वधर्मा इति धर्मं देशयन्ति । एवं त्वं कुलपुत्र प्रतिपद्यमानो नचिरेण 30 प्रज्ञापारमितां श्रोष्यसि पुस्तकगतां वा धर्मभाणकस्य भिक्षोः कायगताम् । यस्य च त्वं कुलपुत्र R 483 अन्तिकात्प्रज्ञापारमितां शृणुयाः, शास्तृसंज्ञा त्वया तत्रोत्पादयितव्या । कृतज्ञेन च त्वया भवितव्यं कृतवेदिना च–एष मम कल्याणमित्रं यस्येमां प्रज्ञापारमितामन्तिकाच्छृणोमि । यामहं शृण्वन्

क्षिप्रमेव अविनिवर्तनीयो भविष्याम्यनुत्तरायाः सम्यक्संबोधेः, आसन्नश्च भविष्यामि तथागतानामर्हतां सम्यक्संबुद्धानाम्। तथागताविरहितेषु बुद्धक्षेत्रेषूपपत्त्यै। अक्षणांश्च विवर्जयिष्यामि। क्षणसंपदं च आरागयिष्यामीति। इमास्त्वया कुलपुत्र अनुशंसाः परितुलयमानेन धर्मभाणके भिक्षौ शास्तृसंज्ञोत्पादयितव्या। न च त्वया कुलपुत्र लोकामिषप्रतिसंयुक्तया चित्तसंतत्या धर्मभाणको भिक्षुरनुबद्धव्यः। धर्मार्थिकेन च त्वया धर्मगौरवेण धर्मभाणको 5 भिक्षुरनुबद्धव्यः। मारकर्माणि च त्वया अवबोद्धव्यानि। अस्ति हि कुलपुत्र मारः पापीयान् धर्मभाणकस्य बोधिसत्त्वस्य महासत्त्वस्य रूपशब्दगन्धरसस्पर्शानुपसंहरति सेवितुं भक्तुं पर्युपासितुम्। तांश्चासावभिभूय उपायकौशल्येन परिसेवते भजते पर्युपास्ते। तत्र च त्वया कुलपुत्र धर्मभाणके भिक्षौ नाप्रसादचित्तमुत्पादयितव्यम्। अपि त्वेवं चित्तमुत्पादयितव्यम्—नाहं तदुपायकौशल्यं जाने, यदेष उपायकौशल्यं प्रजानाति। एष सत्त्वविनयेन 10 सत्त्वानां कुशलमूलपरिग्रहमुपादाय एनान् धर्मान् प्रतिसेवते भजते पर्युपास्ते। न हि कचिद्बोधिसत्त्वानां महासत्त्वानां सङ्गो वा आरम्बणं वा संविद्यते। तत्क्षणं च त्वया कुलपुत्र धर्माणां भूतनयः प्रत्यवेक्षितव्यः। कतमश्च कुलपुत्र धर्माणां भूतनयः? यदुत सर्वधर्मा असंक्लेशा अव्यवदानाः। तत्कस्य हेतोः? सर्वधर्मा हि स्वभावेन शून्याः। सर्वधर्मा हि निःसत्त्वा निर्जीवा निष्पोषा निष्पुरुषा निष्पुद्गला मायोपमाः स्वप्नोपमाः प्रतिश्रुत्कोपमाः 15 प्रतिभासोपमाः। एवं त्वं कुलपुत्र सर्वधर्माणां भूतनयं प्रत्यवेक्षमाणो धर्मभाणकमनुबध्नन् नचिरेण प्रज्ञापारमितायां निर्यास्यसि। अपरमपि त्वं कुलपुत्र मारकर्म समन्वाहरेः। सचेत्कुलपुत्र धर्मभाणकः प्रज्ञापारमितार्थिकं कुलपुत्रमवसादयति, न समन्वाहरति, तत्र त्वया कुलपुत्र न प्रतिवाणिः कर्तव्या। अपि तु धर्मार्थिकेनैव धर्मगौरवेणैव अनिर्विण्णमानसेन धर्मभाणको भिक्षुरनुबद्धव्यः॥ 20

W 931 R 484

अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वस्तस्य निर्घोषस्यान्तिकादिमामनुशासनीं प्रतिगृह्य येन पूर्वा दिक् तेन प्रतिक्रामति स्म। अचिरप्रक्रान्तस्य चास्यैतदभूत्—न मया स निर्घोषः परिपृष्टः—कियद्दूरं मया गन्तव्यमिति। स तत्रैव पृथिवीप्रदेशे स्थितोऽभूत्। तत्र रुदन् क्रन्दन् शोचन् परिदेवमानः एवं चिन्तयति स्म—अस्मिन्नेव पृथिवीप्रदेशे एकं वा रात्रिंदिवमतिनामयिष्यामि, द्वे वा, त्रीणि वा, चत्वारि वा, पञ्च वा, षड् वा, सप्त वा 25 रात्रिंदिवान्यतिनामयिष्यामि। न कायक्लमथमनसिकारमुत्पादयिष्यामि। न स्त्यानमिद्धमनसिकारमुत्पादयिष्यामि। न भोजनमनसिकारमुत्पादयिष्यामि। न पानीयमनसिकारमुत्पादयिष्यामि। न रात्रिमनसिकारमुत्पादयिष्यामि। न दिवसमनसिकारमुत्पादयिष्यामि। न शीतमनसिकारमुत्पादयिष्यामि। नोष्णमनसिकारमुत्पादयिष्यामि, यावन्न प्रज्ञापारमितां श्रोष्यामीति। तद्यथापि नाम सुभूते कश्चिदेव पुरुषः एकपुत्रके कालगते महता दुःखदौर्मनस्येन समन्वागतोऽभवत्, तस्य पुत्रशोकेन नान्यः कश्चिन्मनसिकारः प्रवर्तते, अपि त्वेकपुत्रकमनसिकार एव प्रवर्तते। एवमेव सुभूते सदाप्ररुदितस्य बोधिसत्त्वस्य महासत्त्वस्य तस्मिन् 30

W 932 R 485

समये नान्यः कश्चिन्मनसिकारः प्रवर्तते स्म, अपि तु कदा नामाहं तां प्रज्ञापारमितां श्रोष्यामीति ॥

अथ खलु सुभूते सदाप्ररुदितस्य बोधिसत्त्वस्य महासत्त्वस्य तथोत्कण्ठितस्य तथागतविग्रहः पुरतः स्थित्वा साधुकारमदात्—साधु साधु कुलपुत्र, यस्त्वमेनां वाचं भाषसे। एवं 5 हि कुलपुत्र पौर्वकैरपि तथागतैरर्हद्भिः सम्यक्संबुद्धैः पूर्वं बोधिसत्त्वचर्यां चरद्भिः प्रज्ञापारमिता पर्येषिता, यथा त्वमेतर्हि पर्येषसे। तेन हि त्वं कुलपुत्र एतेनैव वीर्येण एतेनैवोत्साहेन एतयैवार्थिकतया एतयैव च्छन्दिकतया अनुबध्य पूर्वामेव दिशं गच्छ। अस्ति कुलपुत्र इतः पञ्चभिर्योजनशतैर्गन्धवती नाम नगरी सप्तरत्नमयी, सप्तभिः प्राकारैरनुपरिक्षिप्ता, सप्तभिः परिखाभिः सप्तभिस्तालपङ्क्तिभिरनुपरिक्षिप्ता, द्वादश योजनानि आयामेन, द्वादश योजनानि 10 विस्तारेण, ऋद्धा च स्फीता च क्षेमा च सुभिक्षा च आकीर्णबहुजनमनुष्या च पञ्चभिरन्तरापणवीथिशतैरालेख्यविचित्रसदृशैर्दर्शनीयैर्निर्विद्धा असमसमैरनुत्पीडजनयुग्ययानसंक्रमणस्थानस्थापितैः सुमापिता। समन्ततः प्राकाराश्च तस्या नगर्याः सप्तरत्नमयाः। तेषां च सप्तरत्नमयानां प्राकाराणां जाम्बूनदस्य सुवर्णस्य खोडकशीर्षाणि प्रमाणवन्त्युपोद्गतानि। सर्वस्मिंश्च

R 486 W 933 खोडकशीर्षे सप्तरत्नमयो वृक्षो जातो नानाविचित्रै रत्नमयैः फलैः फलवान्। सर्वतश्च 15 खोडकवृक्षाद्रत्नमयं सूत्रं द्वितीयं खोडकवृक्षान्तरमवसक्तम्। सर्वावती च सा नगरी सौवर्णेन किङ्किणीजालेन प्रतिच्छन्ना। तस्य च किङ्किणीजालस्य वातेनेरितस्य वल्गुर्मनोज्ञो रञ्जनीयः शब्दो निश्चरति। तद्यथापि नाम पञ्चाङ्गिकस्य तूर्यस्य समेत्य संगीत्यां कुशलैर्गन्धर्वैः संप्रवादितस्य वल्गुर्मनोज्ञो रञ्जनीयो निर्घोषो निश्चरति, एवमेव तस्य किङ्किणीजालस्य वातेरितस्य वल्गुर्मनोज्ञो रञ्जनीयो निर्घोषो निश्चरति। तेन च शब्देन ते सत्त्वाः क्रीडन्ति 20 रमन्ते परिचारयन्ति। समन्ताच्च तस्या नगर्याः परिखा वारिपरिपूर्णा अनुसारिवारिवाहिन्यो वारिणो नातिशीतस्य नात्युष्णस्य पूर्णाः। तस्मिंश्च वारिणि नावः सप्तानां रत्नानां विचित्रा दर्शनीयास्तेषामेव सत्त्वानां पूर्वकर्मविपाकेनाभिनिर्वृत्ताः, यासु ते सत्त्वा अभिरुह्य क्रीडन्ति रमन्ते परिचारयन्ति। सर्वं च तद्वारि उत्पलपद्मकुमुदपुण्डरीकसंछादितम्, अन्यैश्च अभिजाताभिजातैः सुगन्धगन्धिभिः पुष्पैः संछादितम्। नास्ति सा काचित्त्रिसाहस्रमहासाहस्रे 25 लोकधातौ पुष्पजातिर्या तत्र नास्ति। समन्ताच्च तस्या नगर्याः पञ्चोद्यानशतानि। सर्वाणि तानि सप्तरत्नमयानि विचित्राणि दर्शनीयानि। एकैकस्मिंश्चोद्याने पञ्च पञ्च पुष्करिणीशतानि।

R 487 क्रोशः क्रोशः प्रमाणं समन्तात्तत्पुष्करिणीनाम्। सर्वासु तासु पुष्करिणीषु सप्तरत्नमयानि विचित्राणि दर्शनीयानि उत्पलपद्मकुमुदपुण्डरीकाणि जातानि, यैस्तदुदकं संछादितम्। सर्वाणि च तान्युत्पलपद्मकुमुदपुण्डरीकाणि शकटचक्रप्रमाणपरिणाहानि सुगन्धानि नीलानि 30 नीलवर्णानि नीलनिदर्शनानि नीलनिर्भासानि, पीतानि पीतवर्णानि पीतनिदर्शनानि पीतनिर्भासानि, लोहितानि लोहितवर्णानि लोहितनिदर्शनानि लोहितनिर्भासानि, अवदातानि अवदातवर्णान्यवदातनिदर्शनान्यवदातनिर्भासानि। सर्वाश्च ताः पुष्करिण्यो हंससारसकार-

ण्डवक्रौञ्चचक्रवाकोपनिकूजिताः। सर्वाणि च तान्युद्यानानि अममान्यपरिग्रहाणि, तेषामेव W 934
सत्त्वानां पूर्वकर्मविपाकेनाभिनिर्वृत्तानि, यथापि नाम दीर्घरात्रं प्रज्ञापारमितायां चरितव्रतां
बुद्धनेत्रीचित्रीकारानुगतसुगतश्रुतचित्तानां सत्त्वानां दीर्घरात्रं गम्भीरेषु धर्मेष्वधिमुक्तानाम्।
तत्र च कुलपुत्र गन्धवत्यां नगर्यां मध्येशृङ्गाटकस्य धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य गृहं
योजनं समन्तात्। सप्तानां रत्नानां चित्रं दर्शनीयम्। सप्तभिः प्राकारैः सप्तभिस्तालपङ्क्तिभिरनु- 5
परिक्षिप्तम्। तस्मिंश्च गृहे चत्वार्युद्यानानि गृहपरिभोगोपभोगपरिभोगाय। नित्यप्रमुदितं च
नामोद्यानम्। अशोकं च नाम शोकविगतं च नाम पुष्पचित्रं च नामोद्यानम्। एकैकस्मिंश्चो-
द्यानेऽष्टावष्टौ पुष्करिण्यो यदुत भद्रा च नाम, भद्रोत्तमा च नाम, नन्दा च नाम, नन्दोत्तमा
च नाम, क्षमा च नाम, क्षमोत्तमा च नाम, नियता च नाम, अविवाहा च नाम। तासां
च खलु पुष्करिणीनामेकं पार्श्वं सौवर्णमयं द्वितीयं पार्श्वं रूप्यमयं तृतीयं पार्श्वं वैदूर्यमयं 10 R 488
चतुर्थं पार्श्वं स्फटिकमयम्। अधोभूमिः कर्केतनमयी, सुवर्णवालुकास्तीर्णा। एकैकस्यां च
पुष्करिण्यामष्टावष्टौ सोपानानि नानाविचित्रै रत्नमयैः सोपानफलकैः प्रतिमण्डितानि।
सर्वस्मिंश्च सोपानफलकविवरान्तरे जाम्बूनदस्य सुवर्णस्य कदलीवृक्षो जातः। सर्वाश्च
ताः पुष्करिण्यो नानोत्पलपद्मकुमुदपुण्डरीकसंछादितसलिला हंससारसकारण्डवक्रौञ्चचक्र-
वाकोपकूजिताः। समन्ताच्च तासां पुष्करिणीनां नानाचित्राः[1] पुष्पवृक्षा जाताः। तेषां 15
पुष्पवृक्षाणां वातेनेरितानि पुष्पाणि पुष्करिणीषु पतन्ति। सर्वासु च तासु पुष्करिणीषु
चन्दनगन्धिकं वारि, वर्णोपेतं रसोपेतं स्पर्शोपेतम्। तत्र च धर्मोद्गतो बोधिसत्त्वो
महासत्त्वः सपरिवारोऽष्टषष्ट्या स्त्रीसहस्रैः सार्धं पञ्चभिः कामगुणैः समर्पितः समन्वङ्गीभूतः W 935
क्रीडति रमते परिचारयति। येऽपि तत्र नगरे अन्ये सत्त्वा वास्तव्याः, स्त्रियश्च
पुरुषाश्च, तेऽपि सर्वे नित्यप्रमुदिता उद्यानेषु पुष्करिणीषु च पञ्चभिः कामगुणैः समर्पिताः 20
समन्वङ्गीभूताः क्रीडन्ति रमन्ते परिचारयन्ति। स खलु पुनर्धर्मोद्गतो बोधिसत्त्वो महासत्त्वः
सार्धं परिवारेण तावत्कालं क्रीडति रमते परिचारयति, ततस्त्रिकालं प्रज्ञापारमितां देशयति।
येऽपि ते सत्त्वास्तत्र गन्धवत्यां नगर्यां वास्तव्याः तेऽपि मध्येनगरशृङ्गाटकस्य धर्मोद्गतस्य
बोधिसत्त्वस्य महासत्त्वस्य आसनं प्रज्ञपयन्ति, सुवर्णपादकं वा रूप्यै[2]पादकं वा
वैदूर्यपादकं वा स्फटिकपादकं वा, तूलिकास्तीर्णं वा, गोणिकास्तीर्णं वा, उपरि 25
गर्भोलिकं वा, काशिकवस्त्रप्रत्यास्तरणं वा अर्धक्रोशमुच्चैस्त्वेन। उपरिष्टाच्चान्तरीक्षे
चैलवितानं मुक्ताविचित्रितं समं सहिता निरताः किमयं संस्थित इति सुसंस्थितविचित्र- R 489
विपाकतया धारयन्ति। समन्ताच्च तं पृथिवीप्रदेशं पञ्चवर्णिकैः कुसुमैरभ्यवकिरन्ति संप्रवि-
किरन्ति। नानागन्धधूपधूपितं च तं पृथिवीप्रदेशं कुर्वन्ति, यथापीदं धर्माशयविशुद्ध्या तस्य
धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य धर्मगौरवेण च। तत्र धर्मोद्गतो बोधिसत्त्वो महासत्त्वो 30
निषण्णः प्रज्ञापारमितां देशयति। एवंरूपेण कुलपुत्र धर्मगौरवेण धर्माणां संनिश्रयतया

---

१ W नानाविचित्राः. २ W om. रूप्यपादकं......स्फटिकपादकं वा.

श्रद्धेयश्रद्दधानतया श्रद्धोत्पादनेन ते सत्त्वा धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्यान्तिका-
त्प्रज्ञापारमितां शृण्वन्ति । तत्र च बहूनि प्राणिशतानि बहूनि प्राणिसहस्राणि बहूनि
प्राणिशतसहस्राणि संनिपतितानि देवमनुष्याणां शृण्वन्ति । ततोऽन्ये केचिदुद्दिशन्ति,
केचित्स्वाध्यायन्ति, केचिल्लिखन्ति, केचिद्योनिशोमनसिकारेणानुगच्छन्ति । सर्वे च ते सत्त्वा
W 936 5 अविनिपातधर्माणोऽविनिवर्तनीया अनुत्तरायाः सम्यक्संबोधेः । तस्य त्वं कुलपुत्र धर्मोद्गतस्य
बोधिसत्त्वस्य महासत्त्वस्यान्तिकं गच्छ । ततः श्रोष्यसि प्रज्ञापारमिताम् । स हि तत्र कुलपुत्र
दीर्घरात्रं कल्याणमित्रं संदर्शकः समादापकः समुत्तेजकः संप्रहर्षकोऽनुत्तरायाः सम्यक्सं-
बोधेः । तेनापि कुलपुत्र पूर्वमेवं प्रज्ञापारमिता पर्येषिता, यथा त्वमेतर्हि पर्येषसे । गच्छ त्वं
कुलपुत्र रात्रिंदिवमधिष्ठितमनसिकारमुत्पादयमानो नचिरेण प्रज्ञापारमितां श्रोष्यसि ॥

10 अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः इदं श्रुत्वा तुष्ट उदग्र आत्तमनस्कः
R 490 प्रमुदितः प्रीतिसौमनस्यजातोऽभूत् । तद्यथापि नाम पुरुषः सविषेण शल्येन विद्धो नान्यं
मनसिकारमुत्पादयति, अपि तु कदा नामाहं शल्यहर्तारं वैद्यं लप्स्ये यो ममेदं शल्यमुद्धरि-
ष्यति, यो मामितो दुःखान्मोचयिष्यतीति । एवमेव सदाप्ररुदितो बोधिसत्त्वो महासत्त्व-
स्तस्मिन् समये नान्यं कंचिद्धर्मं मनसि करोति, अपि तु कदा नामाहं तं कुलपुत्रं द्रक्ष्यामि
15 यो मां प्रज्ञापारमितां श्रावयिष्यति, यन्मम धर्मं श्रुत्वा उपलम्भमनसिकाराः प्रहास्यन्त इति ॥

W 940 अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वस्तस्मिन्नेव पृथिवीप्रदेशे स्थितः तस्य
धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितां देशयतः शृणोति स्म । शृण्वंश्च सर्वधर्मे-
ष्वनिश्रितसंज्ञामुत्पादयति स्म । तस्यानेकानि समाधिमुखान्यामुखीभूतान्यभूवन् । तद्यथा—
सर्वधर्मस्वभावव्यवलोकनो नाम समाधिः । सर्वधर्मस्वभावानुपलब्धिर्नाम समाधिः । सर्वधर्म-
20 स्वभावज्ञाननिर्गमो नाम समाधिः । सर्वधर्मनिर्नानात्वो नाम समाधिः । सर्वधर्मनिर्विकारदर्शी
नाम समाधिः । सर्वधर्मावभासकरो नाम समाधिः । सर्वधर्मतमोपगतो नाम समाधिः । सर्वधर्म-
W 941 ज्ञानविध्वंसनो नाम समाधिः । सर्वधर्मविधूननो नाम समाधिः । सर्वधर्मानुपलब्धिर्नाम समाधिः ।
कुसुमाभिकीर्णो नाम समाधिः । सर्वधर्मात्मभावाभिनिर्हारो नाम समाधिः । मायाविवर्जितो नाम
समाधिः । आदर्शमण्डलप्रतिभासनिर्हारो नाम समाधिः । सर्वसत्त्वरुतनिर्हारो नाम समाधिः ।
25 रजोपगतो नाम समाधिः । सर्वसत्त्वाभिप्रमोदनो नाम समाधिः । सर्वसत्त्वरुतकौशल्यानुगतो
R 491 नाम समाधिः । नानारुतपदव्यञ्जनाभिनिर्हारो नाम समाधिः । अस्तम्भितो नाम समाधिः ।
प्रकृत्यव्यवहारो नाम समाधिः । अनावरणविमोक्षप्राप्तो नाम समाधिः । राजोपगतो नाम
समाधिः । नामनिरुक्तिपदव्यञ्जनो नाम समाधिः । सर्वधर्मविपश्यनो नाम समाधिः । सर्व-
धर्मविषयापगतो नाम समाधिः । सर्वधर्मानावरणकोटिर्नाम समाधिः । गगनकल्पो नाम
30 समाधिः । वज्रोपमो नाम समाधिः । आसन्नरूपराजो नाम समाधिः । असपत्नराजो नाम
समाधिः । जयलब्धो नाम समाधिः । अविवर्त्यचक्षुर्नाम समाधिः । धर्मधातुनियतो नाम
समाधिः । धर्मधातुनिर्गतो नाम समाधिः । आश्वासदाता नाम समाधिः । सिंहाभिगर्जितो

नाम समाधिः। सर्वसत्त्वाभिभवनो नाम समाधिः। विगतरजो नाम समाधिः। असंक्लिष्टो नाम समाधिः। पद्मव्यूहो नाम समाधिः। काङ्क्षोच्छेदनो नाम समाधिः। सर्वसारानुगतो नाम समाधिः। सर्वधर्माभ्युद्गतो नाम समाधिः। अभिज्ञाबलवैशारद्यप्राप्तो नाम समाधिः। सर्वधर्मनिर्वेधको नाम समाधिः। सर्वधर्मविभवमुद्रा नाम समाधिः। सर्वधर्मविभवसमुद्रो नाम समाधिः। सर्वधर्मनिर्विशेषदर्शी नाम समाधिः। सर्वदृष्टिकृतगहनविवर्जितो नाम समाधिः। 5 तमोपगतो नाम समाधिः। सर्वधर्मनिमित्तापगतो नाम समाधिः। सर्वसङ्गविमुक्तो नाम समाधिः। सर्वकौसीद्यापगतो नाम समाधिः। गम्भीरधर्मप्रभाकरो नाम समाधिः। मेरुकल्पो नाम समाधिः। असंहार्यो नाम समाधिः। मारमण्डलविध्वंसनकरो नाम समाधिः। त्रैलोक्यानभिनिविष्टो नाम समाधिः। रश्मिनिर्हारो नाम समाधिः। तथागतदर्शनो नाम समाधिः। सर्वतथागतदर्शी नाम समाधिः। स एषु समाधिषु स्थितः सन् दशदिशि 10 लोके बुद्धान् भगवतः पश्यति स्म अप्रमेयानसंख्येयान् इमामेव प्रज्ञापारमितां प्रकाशयतो बोधिसत्त्वेभ्यो महासत्त्वेभ्यः। ते च तथागताः साधुकारं ददति स्म, स्वासनं चास्य कुर्वन्ति स्म। एवं चावोचन्—अस्माभिरपि कुलपुत्र पूर्वं बोधिसत्त्वचर्यां चरद्भिरेवमेव प्रज्ञापारमिता परिगवेषिता। परिगवेषमाणैश्च एते एव समाधयः प्रतिलब्धाः, ये त्वयैतर्हि प्रतिलब्धाः। एनांश्च समाधीन् प्रतिलभ्य गतिंगताः संवृत्ताः, प्रज्ञापारमितायामविनि- 15 वर्तनीयेषु बुद्धधर्मेषु प्रतिष्ठिताः। ते वयमेतेषामेव समाधीनां प्रकृतिं स्वभावं व्यवलोकयन्तस्तं धर्मं न समनुपश्यामो यः समापद्यते वा व्युत्तिष्ठते वा, यो बोधाय चरेत्, यो वा अनुत्तरां सम्यक्संबोधिमभिसंबुध्येत। इयं सा कुलपुत्र प्रज्ञापारमिता, या न केनचिद्धर्मेण मन्यमानता। अमन्यमानतास्थितैरस्माभिरियमेवंरूपा कायस्य सुवर्णवर्णता प्रतिलब्धा। द्वात्रिंशच्च महापुरुषलक्षणानि। अशीतिश्चानुव्यञ्जनानि। व्यामप्रभता च। अचिन्त्यं च 20 अनुत्तरं बुद्धज्ञानं बुद्धप्रज्ञा, अनुत्तरश्च बुद्धसमाधिः, सर्वबुद्धधर्मगुणपारमिता च अनुप्राप्ता यस्या गुणपारमिताया न शक्यं तथागतैरेव तावत्प्रमाणं ग्रहीतुं पर्यन्तो वा निदर्शयितुम्, किं पुनः श्रावकप्रत्येकबुद्धैः? तस्मात्तर्हि कुलपुत्र एतेष्वेव त्वया धर्मेषु गौरवमुत्पादयितव्यं भूयस्या मात्रया अर्थिकतया छन्दिकतया च। अर्थिकस्य हि कुलपुत्र छन्दिकस्य च न दुर्लभा भवत्यनुत्तरा सम्यक्संबोधिः। कल्याणमित्रेषु च त्वया कुलपुत्र तीव्रं गौरवमुत्पाद- 25 यितव्यम्, प्रेम च करणीयम्, प्रसादश्च करणीयः। कल्याणमित्रपरिगृहीता हि बोधिसत्त्वा महासत्त्वाः क्षिप्रमेव अनुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते॥

R 492 W 942 R 493 W 943

अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वस्तांस्तथागतानेतदवोचत्—कोऽस्माकं कल्याणमित्रमिति? त एनमेतदवोचन्—दीर्घरात्रं त्वं कुलपुत्र धर्मोद्गतेन बोधिसत्त्वेन महा- सत्त्वेन अनुत्तरायां सम्यक्संबोधौ परिपाचितः परिगृहीतश्च। प्रज्ञापारमितायामुपायकौशल्ये 30 बुद्धधर्मेषु च शिक्षापितः। स तव कुलपुत्र परिग्राहकः कल्याणमित्रं च। तत्त्वया कृतज्ञ- तया कृतवेदितया च सत्कृत्य तत्कृतं धारयितव्यम्। सचेत्त्वं कुलपुत्र धर्मोद्गतं बोधिसत्त्वं

महासत्त्वमेकं वा कल्पं द्वौ वा कल्पौ त्रीन् वा कल्पान् कल्पशतं वा कल्पसहस्रं वा कल्पशतसहस्रं वा ततो वा उत्तरे चैलोण्डुकमिव शिरसा परिकर्षेः, सर्वसत्वसुखोपस्थानं R 494 चास्योपस्थापयेः, यावन्तस्त्रिसाहस्रमहासाहस्रे लोकधातौ रूपशब्दगन्धरसस्पर्शाः, तान् सर्वानुपनामयेः। एवमपि त्वया कुलपुत्र तस्य कुलपुत्रस्य नैव कृतस्य प्रतिकृतं भवेत्। 5 तत्कस्य हेतोः? तस्य हि कुलपुत्र कुलपुत्रस्य अनुभावेन तवैषामेवंरूपाणां समाधीनां प्रतिलम्भः संवृत्तः। प्रज्ञापारमितोपायकौशल्यश्रवश्च प्रज्ञापारमिताप्रतिलम्भश्च संवृत्तः॥

अथ खलु ते तथागताः सदाप्ररुदितं बोधिसत्त्वं महासत्त्वं समाश्वास्य अन्तर्हिता अभूवन्। स च कुलपुत्रस्तेभ्यः समाधिभ्यो व्युदस्थात्। व्युत्थितस्य चास्य एतदभूत्—कुतस्ते तथागताः, क्व वा ते तथागता इति। स तांस्तथागतानपश्यन् महतीमुत्कण्ठां W 944 10 परितसनं चापन्नः। तस्यैतदभूत्—आर्यो धर्मोद्गतो बोधिसत्त्वो महासत्त्वो धारणीप्रतिलब्धः पञ्चाभिज्ञः पूर्वजिनकृताधिकारः मम संपरिग्राहकः कल्याणमित्रं च। दीर्घरात्रं च मम तेनार्थः कृतः। यन्न्वहमेतमर्थं धर्मोद्गतं बोधिसत्त्वं महासत्त्वमभिगम्योपसंक्रम्य परिपृच्छेयम्—कुतस्ते तथागता आगताः, क्व वा ते तथागता गता इति॥

अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वो धर्मोद्गते बोधिसत्त्वे महासत्त्वे प्रेम 15 च प्रसादं च चित्रीकारं च गौरवं च उपस्थापयति। उपस्थाप्य एवं प्राचिन्तयत्—कियद्रूपया नु खल्वहं सत्क्रियया तं धर्मोद्गतं बोधिसत्त्वं महासत्त्वमुपसंक्रामेयम्? दरिद्रश्चास्मि। न च मे किंचित्तथारूपं वस्त्रं वा रत्नं वा सुवर्णं वा मणयो वा मुक्ता वा वैडूर्यं वा शङ्खशिला वा प्रवालं वा रजतं वा पुष्पं वा धूपो वा गन्धो वा माल्यं वा विलेपनं वा चूर्णं R 495 वा चीवरं वा छत्रं वा ध्वजं वा घण्टा वा पताका वा संविद्यते। केनाहं धर्मोद्गतं 20 बोधिसत्त्वं महासत्त्वं सत्कुर्यां गुरुकुर्याम्? न च ममैतत्प्रतिरूपं भवेत्, यदहमेवमेव धर्मोद्गतं बोधिसत्त्वं महासत्त्वमुपसंक्रामेयम्। दरिद्रश्चास्मि। न च मे प्रीतिर्वा प्रामोद्यं वोत्पद्यते॥

अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्व एवंरूपैर्गुणैर्गौरवमनसिकारैर्गच्छन् अनुपूर्वेण अन्यतरं नगरमनुप्राप्तोऽभूत्। तत्र तस्यान्तरापणमध्यगतस्य एतदभूत्—यन्न्वह25 मिममात्मभावं विक्रीय तेन मूल्येन धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य सत्कारं कुर्याम्। दीर्घरात्रं हि ममात्मभावसहस्राणि भग्नानि क्षीणानि निरुद्धानि विक्रीतानि। पुनः पुनरपरिमाणे संसारे अपरिमाणानि च निरयदुःखानि मया कामहेतोः कामनिदानमनुभूतानि। न पुनरेवंरूपाणां धर्माणां कृतश एवंरूपाणां वा सत्त्वानां सत्कारायेति। अथ खलु W 945 सदाप्ररुदितो बोधिसत्त्वो महासत्त्वोऽन्तरापणमध्यगतः शब्दमनुश्रावयामास, घोषमुदीरयति 30 स्म—कः पुरुषेणार्थिकः, कः पुरुषेणार्थिकः, कः पुरुषं क्रेतुमिच्छतीति॥

अथ खलु मारस्य पापीयस एतदभूत्—अयं सदाप्ररुदितो बोधिसत्त्वो महासत्त्वो धर्मकामतया यद्यात्मानं विक्रीय धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य सत्कारं करिष्यति,

प्रज्ञापारमितामुपायकौशल्यं च परिप्रक्ष्यति–कथं बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् क्षिप्रमनुत्तरायां सम्यक्संबोधौ परिनिष्पत्स्यते इति, तदा श्रुतसागरतां चानुप्राप्स्यति, अधृष्यश्च भविष्यति मारेण वा मारकायिकाभिर्वा देवताभिः, सर्वगुणपारमितां चानुप्राप्स्यति। R 496
तत्र च बहूनां सत्त्वानामर्थं करिष्यति। तांश्च मम विषयादतिक्रामयिष्यति अन्यांश्च अनुत्तरां सम्यक्संबोधिमभिसंबुध्य। यन्न्वहमस्यान्तरायं कुर्यामिति॥ 5

अथ खलु मारः पापीयांस्तान् ब्राह्मणगृहपतिकांस्तथा प्रत्युत्थापयामास, यथा ते तं घोषं नाश्रौषुः सदाप्ररुदितस्य बोधिसत्त्वस्य महासत्त्वस्य–कः पुरुषेणार्थिकः, कः पुरुषेणार्थिकः, कः पुरुषं क्रेतुमिच्छतीति। अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वो यदा आत्मनः क्रायकं न लभते, तदा एकान्तं गत्वा प्रारोदीत्, अश्रूणि प्रावर्तयत्। एवं चावोचत्–अहो बतास्माकं दुर्लब्धा लाभाः, ये वयमात्मभावस्यापि क्रायकं न लभामहे–यद्वय- 10
मात्मभावं विक्रीय धर्मोद्गतं बोधिसत्त्वं महासत्त्वं सत्कुर्यामेति॥

अथ खलु शक्रस्य देवानामिन्द्रस्यैतदभूत्–यन्न्वहं सदाप्ररुदितं बोधिसत्त्वं महासत्त्वं तुलयेयम्–किं न्वयं सदाप्ररुदितो बोधिसत्त्वो महासत्त्वोऽध्याशयप्रतिपन्न आत्मभावपरित्यागं W 946
प्रति धर्मकामतया, उत नेति। अथ खलु शक्रो देवानामिन्द्रो माणवकवेषमभिनिर्माय येन सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः, तेनोपसंक्रामति स्म। उपसंक्रम्य सदाप्ररुदितं बोधि- 15
सत्त्वं महासत्त्वमेतदवोचत्–किं त्वं कुलपुत्र दीनदीनमना उत्कण्ठितमानसोऽश्रूणि प्रवर्तयमानः स्थितः? सदाप्ररुदितस्तमेवमाह–अहं माणवक आत्मानं विक्रेतुकामः। अस्य चात्म- R 497
भावस्य क्रायकं न लभे। तं माणवकरूपी शक्र आह–कस्य पुनस्त्वं कुलपुत्र अर्थाय आत्मानं विक्रेतुकामः? सदाप्ररुदितस्तमाह–अहं माणवक धर्मकामतया इममात्मानं विक्रीय धर्मपूजां कर्तुकामः, आर्यं धर्मोद्गतं बोधिसत्त्वं महासत्त्वं सत्कर्तुकामः। सोऽहमस्यात्मभावस्य 20
क्रायकं न लभे। तस्य मे एतदभूत्–अहो बताहमल्पपुण्यः, योऽहमस्यात्मभावस्यापि क्रायकं न लभे, येन तं विक्रीय प्रज्ञापारमितायाः पूजां कुर्याम्, आर्यं च धर्मोद्गतं बोधिसत्त्वं महासत्त्वं सत्कुर्यामिति। अथ खलु माणवकः सदाप्ररुदितं बोधिसत्त्वं महासत्त्वमेतदवोचत्–न खलु मम कुलपुत्र पुरुषेण कृत्यम्। अपि तु खलु पुनः पितुर्मे यज्ञो यष्टव्यः। तत्र मे पुरुषस्य हृदयेन कृत्यम्, लोहितेन च अस्थिमज्जया च। तद्दास्यसि त्वं क्रयेण? अथ 25
खलु सदाप्ररुदितस्य बोधिसत्त्वस्य महासत्त्वस्यैतदभूत्–लाभा मे परमसुलब्धाः, परिनिष्पन्नं चात्मभावं जाने प्रज्ञापारमितोपायकौशल्ये बुद्धधर्मेषु च, यन्मयायं माणवकः क्रायको लब्धः हृदयस्य रुधिरस्य च अस्थिमज्जायाश्चेति। स हृष्टचित्तः कल्यचित्तः प्रमुदितचित्तस्तं W 947
माणवकमेतदवोचत्–दास्यामि माणवक येन येनैव ते इत आत्मभावादर्थः। स तमेतदवोचत्–किं ते कुलपुत्र मूल्यं ददामि? स तमेतदवोचत्–यत्ते माणवक परित्यक्तम्, 30
तद्देहीति। अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वस्तीक्ष्णं शस्त्रं गृहीत्वा दक्षिणं बाहुं R 498
विद्ध्वा लोहितं निःस्रावयति स्म। दक्षिणं चोरुं विद्ध्वा निर्मांसं कृत्वा अस्थि भेत्तुं कुड्यमूल-

मुपसंक्रामति स्म । अथ खलु अन्यतरा श्रेष्ठिदारिका उपरिष्टात्प्रासादतलगताभूत् । सा अद्राक्षीत्सदाप्ररुदितं बोधिसत्त्वं महासत्त्वं बाहुं विद्ध्वा रुधिरं निःस्राव्य ऊरुं निर्मांसं कृत्वा अस्थि भेत्तुं कुड्यमूलमुपसंक्रान्तम् । तस्या एतदभूत्–किं नु खल्वयं कुलपुत्र आत्मनैवात्मनः ईदृशीं कारणां कारयति? यन्न्वहमेनं कुलपुत्रमुपसंक्रम्य परिपृच्छेयम् । अथ खलु सा 5 श्रेष्ठिदारिका येन सदाप्ररुदितो बोधिसत्त्वो महासत्त्वस्तेनोपसंक्रान्ता । उपसंक्रम्य सदाप्ररुदितं बोधिसत्त्वं महासत्त्वमेतदवोचत्–किं नु खलु त्वं कुलपुत्र एवंरूपामात्मनः प्राणहारिणीं कारणां कारयसि? किं चानेन रुधिरेण करिष्यसि त्वमस्थिमज्जाभ्यां च? सदाप्ररुदित आह–अस्य दारिके माणवकस्यान्तिके इदं विक्रीय प्रज्ञापारमितां पूजयिष्यामि, आर्यं च धर्मोद्गतं बोधिसत्त्वं महासत्त्वं सत्करिष्यामि ॥

10 अथ खलु सा श्रेष्ठिदारिका सदाप्ररुदितं बोधिसत्त्वं महासत्त्वतदवोचत्–का पुनस्ते कुलपुत्र ततो गुणजातिर्निष्पत्स्यते गुणविशेषो वा, यत्त्वमात्मनो हृदयं रुधिरं चास्थिमज्जानं च विक्रीय तं कुलपुत्रं सत्कर्तुकामः? स तां दारिकामेतदवोचत्–स दारिके कुलपुत्रोऽस्माकं प्रज्ञापारमितामुपायकौशल्यं चोपदेक्ष्यति । तत्र च वयं शिक्षिष्यामहे । तत्र वयं शिक्षमाणाः सर्वसत्त्वानां प्रतिशरणं भविष्यामः । अनुत्तरां सम्यक्संबोधिमभिसंबुध्य सुवर्णवर्णं च कायं 15 प्रतिलप्स्यामहे । द्वात्रिंशच्च महापुरुषलक्षणानि अशीतिं चानुव्यञ्जनानि व्यामप्रभतां च अनन्तरश्मितां च महामैत्रीं च महाकरुणां च महामुदितां च महोपेक्षां च । चत्वारि वैशारद्यानि प्रतिलप्स्यामहे, चतस्रश्च प्रतिसंविदः प्रतिलप्स्यामहे, अष्टादश च आवेणिकबुद्धधर्मान् प्रतिलप्स्यामहे, पञ्च च अभिज्ञाः, अचिन्त्यां च शीलविशुद्धिम्, अचिन्त्यां च समाधिविशुद्धिम्, अचिन्त्यां च प्रज्ञाविशुद्धिम्, दश च तथागतबलानि प्रतिलप्स्यामहे । 20 अनुत्तरं च बुद्धज्ञानमभिसंभोत्स्यामहे । अनुत्तरं च धर्मरत्नं प्रतिलप्स्यामहे, येन च सर्वसत्त्वानां संविभागं करिष्याम इति ॥

W 948 R 499

अथ खलु सा श्रेष्ठिदारिका सदाप्ररुदितं बोधिसत्त्वं महासत्त्वमेतदवोचत्–आश्चर्यं कुलपुत्र यावदुदाराः प्रणीताश्चामी त्वया धर्माः परिकीर्तिताः । एकैकस्यापि तावत्कुलपुत्र एवंरूपस्य धर्मस्यार्थाय गङ्गानदीवालुकोपमानपि कल्पानात्मभावाः परित्यक्तव्या भवेयुः, 25 प्रागेव बहूनामर्थाय एकः । तथोदाराः प्रणीताश्चामी त्वया धर्माः परिकीर्तिताः, यथा ममाप्येते रोचन्ते क्षमन्ते च । अपि नु खलु पुनः कुलपुत्र येन येनैवार्थेन ते कृत्यम्, तत्तत्ते दास्यामि सुवर्णं वा मणीन् वा मुक्तां वा रजतं वा वैडूर्यं वा मुसारगल्वं वा लोहिताकं वा स्फाटिकं वा पुष्पं वा धूपं वा गन्धं वा माल्यं वा विलेपनं वा चूर्णं वा वस्त्रं वा छत्रं वा ध्वजं वा घण्टां वा पताकां वा दीपं वा । तेन त्वं तं धर्मोद्गतं बोधिसत्त्वं महासत्त्वं सत्करिष्यसि । मा 30 च आत्मन इमामेवंरूपां कारणां कार्षीः । वयमपि त्वयैव सार्धं गमिष्यामः, येनार्यो धर्मोद्गतो बोधिसत्त्वो महासत्त्वः । वयमपि त्वयैव सार्धं कुशलमूलान्यवरोपयिष्यामः, यदुत एषामेवंरूपाणां धर्माणां प्रतिलम्भायेति ॥

R 500 W 949

अथ खलु शक्रो देवानामिन्द्रो माणवकवेषमन्तर्धापयित्वा स्वकेनात्मभावेन सदाप्ररुदितस्य बोधिसत्त्वस्य महासत्त्वस्य पुरतोऽस्थात्, इदं चावोचत्–साधु साधु कुलपुत्र, यस्य ते इयमेवंरूपा दृढसमादानता। एवंरूपया च धर्मार्थिकतया पूर्वकैरपि तथागतैरर्हद्भिः सम्यक्संबुद्धैः पूर्वं बोधिसत्त्वचर्यां चरद्भिः प्रज्ञापारमितामुपायकौशल्यं च परिपृच्छद्भिरनुत्तरा च सम्यक्संबोधिरभिसंबुद्धा, धर्मरत्नं च प्रतिलब्धम्। तन्न मम कुलपुत्र हृदयेन कार्यम्, 5 न रुधिरेण, नास्थिमज्जाभ्याम्, अपि तु खलु पुनरहं त्वामेव मीमांसितुकाम इहागतः। वृणीष्व कुलपुत्र वरम्। कियद्रूपं ते वरं दास्यामीति? स तमाह–अनुत्तरान् मे शक्र बुद्धधर्मान् देहीति। देवेन्द्र आह–न ममात्र कुलपुत्र विषये विषयिता। बुद्धानां पुनर्भगवतामत्र विषये विषयिता। अन्यं वरं वृणीष्वेति। सदाप्ररुदित आह–अल्पोत्सुकस्त्वं देवेन्द्र भव अत्र स्थाने ममात्मभावपरिपूरिमुपादाय। स्वयमेवाहमत्र देवेन्द्र सत्याधिष्ठानं 10 करिष्यामि। येनाहं सत्येन अविनिवर्तनीयोऽनुत्तरायाः सम्यक्संबोधेर्व्याकृतस्तथागतैरर्हद्भिः सम्यक्संबुद्धैः, ज्ञातश्चास्म्यशाठ्येनाध्याशयेन, तेन देवेन्द्र सत्येन सत्यवचनेन मम यथापौराणोऽयमात्मभावो भवतु। अथ खलु तत्क्षणं तल्लवं तन्मुहूर्तं सदाप्ररुदितस्य बोधिसत्त्वस्य महासत्त्वस्य बुद्धानुभावेन आशयपरिशुद्ध्या च यथापौराणोऽस्य कायः संस्थितोऽभूत्, अरोगो निरुपद्रवश्च। अथ खलु शक्रो देवानामिन्द्रो मारश्च पापीयान् निष्प्रतिभानः सदाप्ररुदितस्य 15 बोधिसत्त्वस्य महासत्त्वस्योत्तरे प्रतिभानमप्रतिपद्यमानस्तत्रैवान्तर्हितोऽभूत्॥

R 501
W 950

अथ खलु सा श्रेष्ठिदारिका सदाप्ररुदितं बोधिसत्त्वं महासत्त्वमेतदवोचत्–एहि त्वं कुलपुत्र। येनास्माकं निवेशनम्, तेनोपसंक्राम। अहं ते मातापितॄणामन्तिकात्तद्धनं दापयिष्यामि, येन त्वं तां प्रज्ञापारमितां पूजयिष्यसि, तं चार्यं धर्मोद्गतं बोधिसत्त्वं महासत्त्वं सत्करिष्यसि, यदुत धर्मकामतया। अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः 20 सार्धं तया श्रेष्ठदारिकया येनास्याः स्वकं निवेशनं तेनोपसंक्रामति स्म। उपसंक्रम्य द्वारमूलेऽस्थात्॥

अथ खलु सा श्रेष्ठिदारिका स्वकं निवेशनं प्रविश्य स्वां मातरं पितरं चैतदवोचत्–अम्ब तात दद्ध्वं प्रभूतं हिरण्यं सुवर्णं रत्नानि मणीन् वस्त्राणि पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजघण्टापताकाः। नानाविधाश्च दिव्या वाद्यप्रकृतीरुत्सृजत, मामपि सार्ध- 25 मेभिः पञ्चभिर्दारिकाशतैर्या ममोपस्थायिका युष्मभिरेव दत्ताः। गमिष्याम्यहमपि सदाप्ररुदितेन बोधिसत्त्वेन महासत्त्वेन सार्धं धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्यान्तिकं तस्य पूजार्थं च। सोऽस्माकं धर्मं देशयिष्यति। तेन वयं बुद्धधर्मान् प्रतिलप्स्यामहे। अथ खलु तौ तस्या दारिकाया मातापितरौ तां दारिकामेतदवोचताम्–कः पुनरेष दारिके सदाप्ररुदितो नाम बोधिसत्त्वो महासत्त्वः, क्व वा स एतर्हि तिष्ठति? दारिका आह–एष कुलपुत्रोऽस्माकमेव 30 निवेशनद्वारमूलेऽवस्थितः। एष च कुलपुत्रोऽध्याशयेन अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुं संप्रस्थितः, यदुत सर्वसत्त्वानपरिमाणतः संसारदुःखान्मोचयितुकामः, सर्वधर्मकामतयात्मानं

R 502
W 951

विक्रीय प्रज्ञापारमितां पूजयितुकामः, आर्यं च धर्मोद्गतं बोधिसत्त्वं महासत्त्वं सत्कर्तुकामः। तस्य चात्मभावस्य कंचित्क्रायकं न लभते। अलभमानः सन् दुःखितो दुर्मनाः प्रध्यायन् दीनमना अश्रूणि प्रवर्तयमानः स्थितः। स शक्रेण देवानामिन्द्रेण माणवकरूपमभिनिर्मायोक्तः—किं त्वं कुलपुत्र दुःखी दुर्मनाः प्रध्यायन् दीनमानसोऽश्रूणि प्रवर्तयमानः स्थित 5 इति? स तमाह—आत्मानं विक्रेतुकामोऽहम्। तस्य च क्रायकं न लभे। माणवकरूपी शक्रस्तमाह—कस्य पुनस्त्वं कुलपुत्र अर्थायात्मानं विक्रेतुकामः? सदाप्ररुदितेनोक्तः—प्रज्ञापारमितां पूजयिष्यामि, आर्यं च धर्मोद्गतं बोधिसत्त्वं महासत्त्वं सत्करिष्यामि यदुत धर्मकामतया। तत्र प्रतिबद्धाश्च मे बुद्धधर्मा इति। माणवकरूपी शक्रस्तमाह—न मम कुलपुत्र त्वयार्थः। अपि तु खलु पुनः पितुर्मे यज्ञो भविष्यति। तत्र मे पुरुषस्य हृदयेन रुधिरेण 10 अस्थिमज्जाभ्यां च कृत्यमिति। तत एष कुलपुत्रोऽविषण्णमानस आह—दास्यामीति। स तीक्ष्णं शस्त्रं गृहीत्वा आत्मनो बाहुं विद्ध्वा लोहितं निःस्राव्य ऊरुं च निर्मांसं कृत्वा अस्थि भेत्तुं कुड्यमूलमुपसंक्रान्तः एकान्ते स्थित्वा अस्थि भित्त्वा मज्जानं च दास्यामीति। अहं चैनं कुलपुत्रमुपरिष्टात्प्रासादतलगता क्षरद्रुधिरमद्राक्षम्। तस्या ममैतदभूत्—किं नु खल्वयं पुरुष आत्मनैवात्मन एवंरूपां कारणां कारयतीति? तमेनमहमुपसंक्रम्यैवमवोचम्—किमर्थं 15 त्वया कुलपुत्र आत्मनैवात्मन एवं क्षरद्रुधिरं शरीरं विकृतं कृतम्? तत एष मामेवमाह—अस्य दारिके माणवकस्य लोहितं हृदयमस्थि मज्जानं च दास्यामीति। तत्कस्य हेतोः? न ममान्यत्किंचिद्धनं संविद्यते। दरिद्रोऽस्मीति। तमेनमहमेवमवोचम्—किं पुनस्त्वं तेन धनेन करिष्यसीति? स एष मामेतदवोचत्—प्रज्ञापारमितां पूजयिष्यामि, तं चार्यं धर्मोद्गतं बोधिसत्त्वं महासत्त्वं सत्करिष्यामि यदुत धर्मकामतयेति। तमेनमहमेवमवोचम्—का पुनस्ते 20 कुलपुत्र ततो गुणजातिर्भविष्यति गुणविशेषो वेति? ततः सोऽचिन्त्यान् मे बुद्धगुणान् वर्णयति संप्रकाशयति, अप्रमेयांश्च बुद्धधर्मान्—एषामेवंरूपाणां बुद्धधर्माणां मे तत आगमो भविष्यतीति। तस्य मे महत्तरं प्रीतिप्रामोद्यमुत्पन्नं तानचिन्त्यान् बुद्धगुणान् श्रुत्वा। एवं च मेऽभूत्—आश्चर्यं यावद्दुष्करकारकश्चायं कुलपुत्रोऽतीव धर्मकामश्च, योऽयमेवंरूपमात्मनः शरीरस्य पीडास्थानमुत्सहते। अयं हि नाम कुलपुत्रो धर्मकामतया आत्मानं परित्यजति। 25 कस्मादस्माभिर्धर्मो न पूजयितव्यः? एवंरूपेषु च स्थानेषु प्रणिधानं न कर्तव्यं स्यात्, येषामस्माकं प्रभूता विपुलाश्च भोगाः संविद्यन्ते इति। साहमेनं कुलपुत्रमेतदवोचम्—मा मा त्वं कुलपुत्र इमामेवंरूपामात्मनः प्राणहारिणीं कारणां कार्षीः। अहं ते प्रभूतप्रभूतं धनमनुप्रदापयिष्यामि येन तवार्थः। तेन त्वं तमार्यं धर्मोद्गतं बोधिसत्त्वं महासत्त्वं सत्करिष्यसि गुरुकरिष्यसि। अहमपि त्वयैव सार्धं येन धर्मोद्गतो बोधिसत्त्वो महासत्त्वः तेनोपसंक्रमि- 30 ष्यामि। अहमपि तस्य कुलपुत्रस्य पूजां करिष्यामि। वयमप्येवंरूपान् धर्मान्निष्पादयिष्यामो यदुत अनुत्तरान् बुद्धधर्मान् ये त्वया परिकीर्तिता इति। तन्मामम्ब तात अनुजानीत। प्रभूतप्रभूतं च मे धनस्कन्धं दद्ध्वम्, येनाहमेतेनैव कुलपुत्रेण सार्धं गत्वा आर्यं धर्मोद्गतं बोधिसत्त्वं महासत्त्वं पूजयिष्यामि॥

R 503 W 952 R 504 W 953

अथ खलु तौ तस्या दारिकाया मातापितरौ तां दारिकामेतदवोचताम्–आश्चर्यं यावद्दुष्करं च त्वमेतस्य कुलपुत्रस्य स्थानमाचक्षे। एकांशेनैव ते धर्मा अचिन्त्याः, सर्वलोकविशिष्टाः सर्वसत्त्वसुखावहाश्च, येषामेष कृतशः कुलपुत्रो दुष्करं स्थानमेवमुत्सहते। अनुजानीव आवां त्वां दारिके। आवयोरप्यवकाशं कुरु, यदावामपि गच्छावस्त्वयैव सार्धं तं धर्मोद्गतं बोधिसत्त्वं महासत्त्वं द्रष्टुं वन्दितुं पर्युपासितुं पूजयितुं च॥ 5

अथ खलु सा श्रेष्ठिदारिका धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य पूजार्थं सत्कारार्थं च प्रस्थितां स्वां मातरं पितरं च विदित्वा एतदवोचत्–अम्ब तात एवं कुरुत, यथा वदत। नाहं कस्यचित्कुशलपक्षस्यान्तरायं करोमि। इत्युक्त्वा एवं सा श्रेष्ठिदारिका धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य पूजार्थं सत्कारार्थं च प्रस्थिता बभूव॥

अथ खलु सा श्रेष्ठिदारिका पञ्च रथशतान्यलंकारयामास। तानि च पञ्च दारिका- 10 R 505
शतान्यलंकारयामास। अलंकृत्य नानावर्णानि विचित्राणि पुष्पाणि गृहीत्वा नानारङ्गाणि वस्त्राणि पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजघण्टापताकाश्च गृहीत्वा नानारत्नानि च विचित्राणि नानारत्नमयानि च विचित्राणि पुष्पाणि गृहीत्वा प्रभूतप्रभूतं खादनीयं भोजनीयं स्वादनीयं च गृहीत्वा एकं रथं सदाप्ररुदितेन बोधिसत्त्वेन महासत्त्वेन सार्धमभिरुह्य W 954
तैः पञ्चभी रथशतैः पञ्चदारिकाशताभिरूढैः परिवृता पुरस्कृता महता च परिवारेण 15
मातापितृपूर्वंगमा येन पूर्वा दिक् तेन प्रक्रान्ता। अनुपूर्वेण च गच्छन् सदाप्ररुदितो बोधिसत्त्वो महासत्त्वोऽद्राक्षीद्दूरादेव तां गन्धवतीं नगरीं सप्तानां रत्नानां चित्रां दर्शनीयां सप्तभिः प्राकारैः सप्तरत्नमयैरनुपरिक्षिप्तां सप्तभिस्तोरणैः सप्तभिः परिखाभिः सप्तभिस्तालपङ्क्तिभिरनुपरिक्षिप्तां द्वादश योजनानि विस्तारेण द्वादश योजनान्यायामेन ऋद्धां स्फीतां च क्षेमां च सुभिक्षां च आकीर्णबहुजनमनुष्यां च पञ्चभिरन्तरापणवीथीशतैरालेख्यविचित्रचित्रसदृशै- 20
र्दर्शनीयैर्निर्विद्धां समसमैरनुत्पीडजनयुग्ययानसंक्रमणस्थानस्थापितैः सुमापितां च। मध्ये च नगरशृङ्गाटकस्य अद्राक्षीद्धर्मोद्गतं बोधिसत्त्वं महासत्त्वं धर्मासनगतमनेकशतया पर्षदा अनेकसहस्रया अनेकशतसहस्रया पर्षदा परिवृतं पुरस्कृतं धर्मं देशयन्तम्। सहदर्शनेनैव च तस्य एवंरूपं सुखं संप्रतिलभते स्म तद्यथापि नाम प्रथमध्यानसमापन्नो भिक्षुरेकाग्रेण मनसिकारेण। दृष्ट्वा चास्य एतदभूत्–न मम प्रतिरूपमेतद्भवेत्, यदहं रथगत एव 25 R 506
धर्मोद्गतं बोधिसत्त्वं महासत्त्वमुपसंक्रामेयम्। यन्न्वहं रथादवतरेयम्। स ततो रथादवातरत्। तान्यपि पञ्च दारिकाशतानि श्रेष्ठिदारिकया सह रथेभ्योऽवतेरुः। अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः श्रेष्ठिदारिकापूर्वंगमैः पञ्चभिर्दारिकाशतैः परिवृतः पुरस्कृतोऽपरिमाणपूजाव्यूहेन येन धर्मोद्गतो बोधिसत्त्वो महासत्त्वः तेनोपसंक्रामति स्म॥

तेन खलु पुनः समयेन धर्मोद्गतेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायाः कृतशः 30 W 955
सप्तरत्नमयं कूटागारं कारितमभूत् लोहितचन्दनालंकृतं मुक्ताजालपरिक्षिप्तम्। चतुर्षु कूटागारकोणेषु मणिरत्नानि स्थापितानि, यानि प्रदीपकृत्यं कुर्वन्ति स्म। चतस्रश्च धूपघटिका

रूप्यमय्यश्चतुर्दिशमवसक्ताः, यत्र शुद्धं कृष्णागुरु धूप्यते स्म यदुत प्रज्ञापारमितायाः पूजार्थम् । तस्य च कूटागारस्य मध्ये सप्तरत्नमयः पर्यङ्कः प्रज्ञप्तोऽभूत् । चतुर्णां रत्नानां पेडा कृता, यत्र प्रज्ञापारमिता प्रक्षिप्ता सुवर्णपट्टेषु लिखिता विलीनेन वैदूर्येण । तच्च कूटागारं ननाचित्रपट्टदामभिः प्रलम्बमानैरलंकृतमभूत् ॥

5 अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः सार्धं श्रेष्ठिदारिकापूर्वंगमैः पञ्च-दारिकाशतैः तं कूटागारमद्राक्षीदपरिमाणेन पूजाव्यूहेन प्रतिमण्डितम् । अनेकानि च तत्र देवतासहस्राण्यद्राक्षीत्, शक्रं च देवानामिन्द्रं दिव्यैर्मान्दारवपुष्पैर्दिव्यैश्चन्दनचूर्णैर्दिव्यैश्च

R 507 सुवर्णचूर्णैर्दिव्यैश्च रूप्यचूर्णैस्तं कूटागारमवकिरन्तमभ्यवकिरन्तमभिप्रकिरन्तम् । दिव्यानि च वाद्यान्यश्रौषीत् । दृष्ट्वा श्रुत्वा च सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः शक्रं देवाना-

10 मिन्द्रमेतदवोचत्—किमर्थं त्वं देवेन्द्र अनेकैर्देवतासहस्रैः सार्धमिदं रत्नमयं कूटागारं दिव्यै-र्मान्दारवैः पुष्पैर्दिव्यैश्चन्दनचूर्णैर्दिव्यैः सुवर्णचूर्णैर्दिव्यैश्च रूप्यचूर्णैरवकिरसि अभ्यवकिरसि अभिप्रकिरसि ? इमानि च दिव्यानि वाद्यानि देवैरुपर्यन्तरीक्षे प्रवादितानि ? एवमुक्ते शक्रो देवानामिन्द्रः सदाप्ररुदितं बोधिसत्त्वं महासत्त्वमेतदवोचत्—न त्वं कुलपुत्र जानीषे ? एषा हि सा प्रज्ञापारमिता बोधिसत्त्वानां महासत्त्वानां माता परिणायिका, यत्र शिक्षमाणा

W 956 15 बोधिसत्त्वा महासत्त्वाः सर्वगुणपारमितानुगतान् सर्वबुद्धधर्मान् सर्वाकारज्ञतां च क्षिप्रमनु-प्राप्नुवन्तीति । एवमुक्ते सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः शक्रं देवानामिन्द्रमेतदवोचत्—क्वासौ कौशिक प्रज्ञापारमिता, या बोधिसत्त्वानां महासत्त्वानां माता परिणायिका ? शक्र आह—एषा कुलपुत्र अस्य कूटागारस्य मध्ये सुवर्णपट्टेषु विलीनेन वैदूर्येण लिखित्वा आर्येण धर्मोद्गतेन बोधिसत्त्वेन महासत्त्वेन सप्तभिर्मुद्राभिर्मुद्रयित्वा स्थापिता । सा न सुकरा अस्माभिस्तव

20 दर्शयितुम् । अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः सार्धं श्रेष्ठिदारिकाप्रमुखैः पञ्चभिर्दारिकाशतैः समग्रीभूतैः, यान्यनेन पुष्पाणि गृहीतानि माल्यदामानि च वस्त्ररत्नानि च धूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजघण्टापताकाश्च सुवर्णरूप्यमयानि च पुष्पाणि,

R 508 तैः प्रज्ञापारमितायाः पूजामकार्षुः, अन्यतरान्यतरं च ततः प्रत्यंशं स्थापयामासुः यदुत धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य सत्काराय ॥

25 अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वस्तानि च श्रेष्ठिदारिकाप्रमुखानि पञ्च दारिकाशतानि पुष्पधूपमाल्यविलेपनचूर्णचीवरच्छत्रध्वजघण्टापताकाभिः सुवर्णरूप्यमयैश्च पुष्पैर्दिव्यैश्च वाद्यैः प्रज्ञापारमितां पूर्वं पूजयित्वा येन धर्मोद्गतो बोधिसत्त्वो महासत्त्वस्तेनोप-संक्रम्य धर्मोद्गतं बोधिसत्त्वं महासत्त्वं पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजघण्टा-पताकाभिश्चन्दनचूर्णैः सुवर्णरूप्यमयैश्च पुष्पैरवाकिरन् अभ्यवाकिरन् अभिप्राकिरन्, दिव्यानि

30 च वाद्यानि संप्रवादयति स्म धर्मपूजामेवोपादाय ॥

W 957 अथ खलु तानि पुष्पाणि धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्योपरिष्टान्मूर्ध्नि पुष्पकूटागारं प्रातिष्ठन् । तानि च नानावर्णानि पुष्पाणि सुवर्णरूप्यमयानि च पुष्पाणि

विहायसि वितानमिव स्थितानि। तान्यपि चीवराणि वस्त्ररत्नानि च अन्तरीक्षे नानारत्नमयोऽभ्रमण्डप इव संस्थितोऽभूत्। अद्राक्षीत्खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वस्तानि च पञ्च दारिकाशतानि श्रेष्ठिदारिकाप्रमुखानि धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्येदमेवंरूपमृद्धिप्रातिहार्यम्। दृष्ट्वा च पुनरेषामेतदभूत्–आश्चर्यं यावन्महर्द्धिकश्चायं धर्मोद्गतो बोधिसत्त्वो महासत्त्वो यावन्महानुभावो यावन्महौजस्कः। बोधिसत्त्वचर्यामेव तावच्चरतोऽस्य कुलपुत्रस्यैवंरूपा ऋद्धिविकुर्वणा, किं पुनर्यदायमनुत्तरां सम्यक्संबोधिमभिसंबुद्धो भविष्यतीति॥ 5

अथ खलु तानि श्रेष्ठिदारिकापूर्वंगमानि पञ्च दारिकाशतानि धर्मोद्गते बोधिसत्त्वे महासत्त्वे स्पृहामुत्पाद्य सर्वास्ताः समग्रीभूता अध्याशयेन अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयामासुः, एवं चावोचन्–अनेन वयं कुशलमूलेन अनागतेऽध्वनि तथागता अर्हन्तः सम्यक्संबुद्धा भवेम। बोधिसत्त्वचर्यां च वयं चरन्त्य एतेषामेव धर्माणां लाभिन्यो भवेम, 10 येषां धर्माणामयं धर्मोद्गतो बोधिसत्त्वो महासत्त्वो लाभी। एवमेव च प्रज्ञापारमितां सत्कुर्याम गुरुकुर्याम, यथायं धर्मोद्गतो बोधिसत्त्वो महासत्त्वः सत्करोति गुरुकरोति। बहुजनस्य च संप्रकाशयेम यथायं धर्मोद्गतो बोधिसत्त्वो महासत्त्वः संप्रकाशयति। एवमेव च प्रज्ञापारमितया उपायकौशल्येन च समन्वागता भवेम। परिनिष्पद्येमहि च यथायं धर्मोद्गतो बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितया उपायकौशल्येन च समन्वागतः परिनिष्पन्नश्च॥ 15

R 509

अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वस्तानि च श्रेष्ठिदारिकाप्रमुखानि पञ्च दारिकाशतानि प्रज्ञापारमितां पूजयित्वा धर्मोद्गतं च बोधिसत्त्वं महासत्त्वं सत्कृत्य धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य पादौ शिरसाभिवन्द्य एकान्ते सगौरवाः सप्रतीक्षाः प्राञ्जलीन् कृत्वातिष्ठन्। एकान्ते स्थितश्च सदाप्ररुदितो बोधिसत्त्वो महासत्त्वो धर्मोद्गतं बोधिसत्त्वं महासत्त्वमेतदवोचत्–इहाहं कुलपुत्र प्रज्ञापारमितां गवेषमाणोऽरण्यगतो निर्घोषमश्रौषम्– 20 गच्छ कुलपुत्र पूर्वां दिशम्। ततः प्रज्ञापारमितां श्रोष्यसीति। सोऽहं सम्यक् तं निर्घोषं श्रुत्वा येन पूर्वा दिक् तेन संप्रस्थितः। तस्य मे एतदभूत्–सम्यक् च मया निर्घोषः श्रुतः। न च मया स निर्घोषः परिपृष्टः–कियद्दूरं मया गन्तव्यम्, कस्य वा अन्तिकात्प्रज्ञापारमितां श्रोष्यामि लप्स्ये वेति। तस्य मे महद्दौर्मनस्यमभूत्। सोऽहं तेन दौर्मनस्येन महतीमुत्कण्ठां परितपनं चापन्नोऽभूवम्। तस्मिन्नेव पृथिवीप्रदेशे सप्तरात्रिंदिवान्यतिनामयामि उत्कण्ठितः। 25 नाहारसमुदाचारमुत्पादयामि। अपि तु प्रज्ञापारमितामेव मनसि करोमि–कियद्दूरं मया गन्तव्यम्, कुतो वा प्रज्ञापारमितां लप्स्ये श्रवणाय? न च मया स निर्घोषः परिपृष्ट इति। ततो मे तथागतविग्रहः पुरतः प्रादुर्भूतः। स मामेवमाह–गच्छ कुलपुत्र इतः पञ्चभिर्योजनशतैरनुपूर्वेण गन्धवती नाम नगरी। तत्र द्रक्ष्यसि धर्मोद्गतं बोधिसत्त्वं महासत्त्वं प्रज्ञापारमितां देशयन्तं प्रकाशयन्तमिति। ततोऽहं महतोदारेण प्रीतिप्रामोद्येन समन्वागतः। 30 सोऽहं तेनैव महतोदारेण प्रीतिप्रामोद्येन स्फुटस्ततः पृथिवीप्रदेशान्न चलितः, तव च प्रज्ञापारमितां देशयतः शृणोमि। तस्य मे शृण्वतो बहूनि समाधिमुखानि प्रादुर्भूतानि।

W 958

R 510

W 959 तत्र स्थितं मां दशदिग्लोकधातुस्थिता बुद्धा भगवन्तः समाश्वासयन्ति, साधुकारं च ददति–साधु साधु कुलपुत्र, एते समाधयः प्रज्ञापारमितानिर्जाताः, यत्र स्थितैरस्माभिः सर्वबुद्धधर्माः परिनिष्पादिता इति । ते मां तथागताः साधु च सुष्ठु च संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य अन्तर्हिताः । अहं च ततः समाधेर्व्युत्थितः । तस्य मे एतदभूत्–कुतो नु ते 5 तथागता आगताः, क्व वा ते तथागता गता इति ? तस्य च मे एतदभूत्–आर्यो धर्मोद्गतो R 511 बोधिसत्त्वो महासत्त्वो धारणीप्रतिलब्धः पञ्चाभिज्ञः पूर्वजिनाकृताधिकारोऽवरोपितकुशलमूलः, प्रज्ञापारमितायां उपायकौशल्ये च सुशिक्षितः । स मे एनमर्थं यथावद्विचरिष्यति, यतस्ते तथागता आगता यत्र वा ते तथागता गता इति । सोऽहं तस्य तथागतविग्रहस्य निर्घोषं श्रुत्वा यथानुशिष्टं येन पूर्वा दिक् तेन संप्रस्थितः । आगच्छंश्चाहं दूरत एवार्यमद्राक्षं धर्मं 10 देशयन्तम् । सहदर्शनाच्च ममेदृशं सुखं प्रादुरभूत्, तद्यथापि नाम प्रथमध्यानसमापन्नस्य भिक्षोरेकाग्रमनसिकारस्य । सोऽहं त्वां कुलपुत्र पृच्छामि–कुतस्ते तथागता आगताः, कुत्र ते तथागता गता इति ? देशय मे कुलपुत्र तेषां तथागतानामागमनं गमनं च । यथा वयं तेषां तथागतानामागमनं गमनं च जानीम, अविरहिताश्च भवेम तथागतदर्शनेनेति ॥

W 962 आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां सदाप्ररुदितपरिवर्तो नाम त्रिंशत्तमः ॥



# ३१ धर्मोद्गतपरिवर्त एकत्रिंशत्तमः।

एवमुक्ते धर्मोद्गतो बोधिसत्त्वो महासत्त्वः सदाप्ररुदितं बोधिसत्त्व महासत्त्वमेतदवोचत्—न खलु कुलपुत्र तथागताः कुतश्चिदागच्छन्ति वा गच्छन्ति वा। अचलिता हि तथता। या च तथता, स तथागतः। न हि कुलपुत्र अनुत्पाद आगच्छति वा गच्छति वा। यश्च अनुत्पादः, स तथागतः। न हि कुलपुत्र भूतकोट्या आगमनं वा गमनं वा प्रज्ञायते। 5 या च भूतकोटिः, स तथागतः। न हि कुलपुत्र शून्यताया आगमनं वा गमनं वा प्रज्ञायते। या च शून्यता, स तथागतः। न हि कुलपुत्र यथावत्ताया आगमनं वा गमनं वा प्रज्ञायते। या च यथावत्ता, स तथागतः। न हि कुलपुत्र विरागस्यागमनं वा गमनं वा प्रज्ञायते। या च विरागता, स तथागतः। न हि कुलपुत्र निरोधस्यागमनं वा गमनं वा प्रज्ञायते। यश्च निरोधः, स तथागतः। न हि कुलपुत्र आकाशधातोरागमनं वा गमनं वा प्रज्ञायते। यश्च आकाश- 10 धातुः, स तथागतः। न हि कुलपुत्र अन्यत्र एभ्यो धर्मेभ्यस्तथागतः। या च कुलपुत्र एषामेव धर्माणां तथता, या च सर्वधर्मतथता, या च तथागततथता, एकैवैषा तथता। नास्ति कुलपुत्र तथताया द्वैधीकारः। एकैवैषा तथता कुलपुत्र। तथता न द्वे न तिस्रः। गणनाव्यतिवृत्ता कुलपुत्र तथता यदुत असत्त्वात्। तद्यथापि नाम कुलपुत्र पुरुषो ग्रीष्माभितप्तो ग्रीष्माणां पश्चिमे मासेऽभिगते मध्याह्नकालसमये मरीचिकां पश्येत् स्यन्दमानाम्। स तेन 15 तेन प्रधावेत्—अत्रोदकं पास्यामि, अपानीयं पास्यामीति। तत्किं मन्यसे कुलपुत्र कुत एतदुदकमागतं क्व वा तदुदकं गच्छति, पूर्वं वा महासमुद्रं दक्षिणं वा पश्चिमं वा उत्तरं वा? सदाप्ररुदित आह—न हि कुलपुत्र मरीचिकायामुदकं संविद्यते। किं पुनरस्यागमनं वा गमनं वा प्रज्ञायते? स खलु पुनः कुलपुत्र पुरुषो ग्रीष्माभितप्तो बालजातीयो दुष्प्रज्ञजातीयो मरीचिकां दृष्ट्वा अनुदके उदकसंज्ञामुत्पादयति। न पुनस्तत्रोदकं स्वभावतः संविद्यते। 20 धर्मोद्गत आह—एवमेतत्कुलपुत्र, एवमेतत्। एवमेव कुलपुत्र ये केचित्तथागतरूपेण वा घोषेण वा अभिनिविष्टाः, ते तथागतस्यागमनं च गमनं च कल्पयन्ति। ये च तथागतस्यागमनं च गमनं च कल्पयन्ति, सर्वे ते बालजातीया दुष्प्रज्ञजातीया इति वक्तव्याः, तद्यथापि नाम स एव पुरुषो योऽनुदके उदकसंज्ञामुत्पादयति। तत्कस्य हेतोः? न हि तथागतो रूपकायतो द्रष्टव्यः। धर्मकायास्तथागताः। न च कुलपुत्र धर्मता आगच्छति वा गच्छति वा। एवमेव कुलपुत्र नास्ति 25 तथागतानामागमनं वा गमनं वा। तद्यथापि नाम कुलपुत्र मायाकारनिर्मितस्य हस्तिकायस्य वा अश्वकायस्य वा रथकायस्य वा पत्तिकायस्य वा नास्त्यागमनं वा गमनं वा, एवमेव कुलपुत्र नास्ति तथागतानामागमनं वा गमनं वा। तद्यथापि नाम कुलपुत्र पुरुषः सुप्तः स्वप्नान्तरगत एकं वा तथागतं पश्येत्, द्वौ वा त्रीन् वा चतुरो वा पञ्च वा षड्वा सप्त वा अष्टौ वा नव वा दश वा विंशतिं वा त्रिंशद्वा चत्वारिंशद्वा पञ्चाशद्वा शतं वा सहस्रं वा, ततो वा उत्तरे। स प्रतिविबुद्धः 30 सन् एकमपि तथागतं न पश्येत्। तत्किं मन्यसे कुलपुत्र कुतस्ते तथागता आगताः क्व वा ते तथागता गता इति? सदाप्ररुदित आह—न खलु पुनः कुलपुत्र स्वप्ने कस्यचिद्धर्मस्य

R 512 W 963 R 513 W 964 W 965 W 966 R 514

परिनिष्पत्तिः प्रज्ञायते । मृषावादो हि स्वप्नोऽभूत् । धर्मोद्गत आह—एवमेव कुलपुत्र सर्वधर्माः स्वप्नोपमा उक्ता भगवता । ये केचित्कुलपुत्र स्वप्नोपमान् सर्वधर्मांस्तथागतेन निर्देशितान् यथाभूतं न प्रजानन्ति, ते तथागतान् नामकायेन वा रूपकायेन वा अभिनिविश्य तथागतानामागमनं वा गमनं वा कल्पयन्ति । यथापि नाम धर्मतामप्रजानन्तो ये
5 च तथागतानामागमनं वा गमनं वा कल्पयन्ति, सर्वे ते बालजातीयाः पृथग्जनाः । सर्वे ते षड्गतिकं संसारं गताः, गच्छन्ति गमिष्यन्ति च । सर्वे ते प्रज्ञापारमिताया दूरे । सर्वे ते बुद्धधर्माणां दूरे । ये खलु पुनः कुलपुत्र स्वप्नोपमान् सर्वधर्मान् स्वप्नोपमाः सर्वधर्मा इति तथागतेन देशितान् यथाभूतं प्रजानन्ति, न ते कस्यचिद्धर्मस्यागमनं वा गमनं वा कल्पयन्ति, उत्पादं वा निरोधं वा । ये च न कस्यचिद्धर्मस्यागमनं वा गमनं वा कल्पयन्ति,
10 उत्पादं वा निरोधं वा, ते धर्मतया तथागतं प्रजानन्ति । ये च तथागतं धर्मतया प्रजानन्ति, न ते तथागतानामागमनं वा गमनं वा कल्पयन्ति । ये च तथागतस्येदृशीं धर्मतां प्रजानन्ति, ते आसन्ना अनुत्तरायाः सम्यक्संबोधेश्चरन्ति । ते च प्रज्ञापारमितायां चरन्ति । ते च भगवतः श्रावकाः अमोघं राष्ट्रपिण्डं परिभुञ्जते । ते च लोकस्य दक्षिणीयाः । R 515 W 967 तद्यथापि नाम कुलपुत्र महासमुद्रे रत्नानि न पूर्वस्या दिश आगच्छन्ति, न दक्षिणस्याः, न
15 पश्चिमायाः, नोत्तरस्याः, न विदिग्भ्यो नाधस्तान्नोपरिष्टान्न कुतश्चिद्देशेभ्यो दिग्भ्य आगच्छन्ति, अपि तु खलु पुनः सत्त्वानां कुशलमूलान्युपादाय महासमुद्रे रत्नान्युत्पद्यन्ते । न च तान्यहेतुकान्युत्पद्यन्ते । हेतुप्रत्ययकारणाधीनानि प्रतीत्यसमुत्पन्नानि । निरुध्यमानानि च तानि रत्नानि न क्वचिद्दशदिशि लोके संक्रामन्ति । अपि तु खलु पुनर्येषां प्रत्ययानां सतां तानि रत्नानि प्रभाव्यन्ते, तेषां प्रत्ययानामसतां न तेषां रत्नानां प्रभावना भवति ।
20 एवमेव कुलपुत्र तेषां तथागतानां कायपरिनिष्पत्तिर्न कुतश्चिद्दशदिशि लोकादागता, नापि W 968 क्वचिद्दशदिशि लोके गच्छति । न च अहेतुको बुद्धानां भगवतां कायः । पूर्वचर्यापरिनिष्पन्नो हेतुप्रत्ययाधीनः कारणसमुत्पन्नः पूर्वकर्मविपाकादुत्पन्नः । स न क्वचिद्दशदिशि लोकेऽस्ति । अपि तु खलु पुनर्येषां प्रत्ययानां सतां कायाभिनिष्पत्तिर्भवति, तेषां प्रत्ययानामसतां कायाभिनिष्पत्तिर्न प्रज्ञायते । तद्यथापि नाम कुलपुत्र वीणायाः शब्द उत्पद्य-
25 मानो न कुतश्चिदागच्छति, निरुध्यमानोऽपि न क्वचिद्गच्छति, न क्वचित्संक्रामति, प्रतीत्य च हेतुप्रत्ययसामग्रीमुत्पद्यते हेत्वधीनः प्रत्ययाधीनः । तद्यथापि नाम द्रोणीं च W 969 R 516 प्रतीत्य चर्म च प्रतीत्य तन्त्रीश्च प्रतीत्य दण्डं च प्रतीत्य उपधानीश्च प्रतीत्य कोणं च प्रतीत्य पुरुषस्य च तज्जव्यायामं प्रतीत्य एवमयं वीणायाः शब्दो निश्चरति हेत्वधीनः प्रत्ययाधीनः । स च शब्दो न द्रोण्या निश्चरति, न चर्मणो न तन्त्रीभ्यो न दण्डान्नोपधानीभ्यो न
30 कोणान्न पुरुषस्य तज्जव्यायामतः शब्दो निश्चरति, अपि तु खलु पुनः सर्वेषां समायोगाच्छब्दः प्रज्ञप्यते । निरुध्यमानोऽपि शब्दो न क्वचिद्गच्छति । एवमेव कुलपुत्र बुद्धानां भगवतां कायनिष्पत्तिर्हेत्वधीना प्रत्ययाधीना अनेककुशलमूलप्रयोगपरिनिष्पन्ना च । न चैकतो हेतुतो न चैकतः प्रत्ययतो न चैकतः कुशलमूलतो बुद्धकायप्रभावना । न च नैर्हेतुकी ।

बहुहेतुप्रत्ययसामग्र्यां समुत्पन्ना सा न कुतश्चिदागच्छति। हेतुप्रत्ययसामग्र्यामसत्यां न क्वचिद्गच्छति। एवं त्वया कुलपुत्र तेषां तथागतानामागमनं च गमनं च द्रष्टव्यम्। सर्वधर्माणामपि कुलपुत्र त्वया इयमेव धर्मता अनुगन्तव्या। यतः कुलपुत्र त्वमेवं तथागतांश्च सर्वधर्मांश्च अनुत्पन्नाननिरुद्धांश्च संप्रज्ञास्यसि, ततस्त्वं नियतो भविष्यस्यनुत्तरायां सम्यक्संबोधौ। प्रज्ञापारमितायामुपायकौशल्ये च नियतं चरिष्यसि॥ W 976 W 977 5

अस्मिन् खलु पुनस्तथागतानामनागत्यगमननिर्देशे भाष्यमाणे महान् भूमिचालोऽभूत्। सर्वश्च त्रिसाहस्रमहासाहस्रो लोकधातुः षड्विकारमष्टादशमहानिमित्तं कम्पते प्रकम्पते संप्रकम्पते, चलति प्रचलति संप्रचलति, वेधते प्रवेधते संप्रवेधते, रणति प्ररणति संप्ररणति, क्षुभ्यति प्रक्षुभ्यति संप्रक्षुभ्यति, गर्जति प्रगर्जति संप्रगर्जति स्म। सर्वाणि च मारभवनानि संक्षोभितानि जिह्मीभूतानि चाभूवन्। ये केचन त्रिसाहस्रमहासाहस्रे लोकधातौ तृण- 10 गुल्मौषधिवनस्पतयः, ते सर्वे येन धर्मोद्गतो बोधिसत्त्वो महासत्त्वस्तेन प्रणता अभूवन्। अकालपुष्पाणि चोत्सृजन्ति स्म। उपरिष्टाच्च अन्तरीक्षान्महापुष्पवर्षः प्रावर्षत्। शक्रश्च R 517 देवानामिन्द्रश्चत्वारश्च महाराजानो धर्मोद्गतं बोधिसत्त्वं महासत्त्वं दिव्यैश्चन्दनचूर्णैर्दिव्यैश्च पुष्पैरवाकिरन् अभ्यवाकिरन् अभिप्राकिरन्। एवं च वाचमभाषन्त—साधु साधु कुलपुत्र। तव कुलपुत्र अनुभावेन अद्यास्माभिः परमार्थनिर्जाता कथा देश्यमाना श्रुता सर्वलोक- 15 विप्रत्यनीका, यत्राभूमिः सर्वसत्कायदृष्टिप्रतिष्ठितानां सर्वासद्दृष्टयभिविनिविष्टानां सत्त्वानाम्॥ W 978

अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वो धर्मोद्गतं बोधिसत्त्वं महासत्त्वमेतदवोचत्—कः पुनः कुलपुत्र अत्र[1] हेतुः, कः प्रत्ययोऽस्य महतः पृथिवीचालस्य लोके प्रादुर्भावाय? धर्मोद्गतो बोधिसत्त्वो महासत्त्व आह—इमं कुलपुत्र तथागतानामनागत्यगमननिर्देशं तव च पृच्छतो मम च निर्दिशतोऽष्टानां प्राणिसहस्राणामनुत्पत्तिकधर्मक्षान्तिप्रतिलम्भोऽभूत्। 20 अशीतेश्च प्राणिनियुतानामनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पन्नानि, चतुःषष्टेश्च प्राणिसहस्राणां विरजांसि विगतमलानि धर्मेषु धर्मचक्षूंषि विशुद्धानि॥

अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः परमोदारेण प्रीतिप्रामोद्येन समन्वागतोऽभूत्—लाभा मे परमसुलब्धाः, यस्य मे प्रज्ञापारमितामिमं च तथागतानामनागत्यगमननिर्देशं परिपृच्छतः इयतां सत्त्वानामर्थः कृतः। एतदेवास्माकं पर्याप्तं कुशलं भवेदनुत्तरायाः 25 R 518 सम्यक्संबोधेः परिनिष्पत्तये। न च मे भूयो विचिकित्सा प्रवर्ततेऽनुत्तरायाः सम्यक्संबोधेः। निःसंशयमहं तथागतो भविष्याम्यर्हन् सम्यक्संबुद्धः। स तेनैव प्रीतिप्रामोद्येन समन्वागतः सप्ततालं विहायसमभ्युद्गम्य सप्तताले स्थित्वा एवं चिन्तयति स्म—केनाहमेतर्हि अन्तरीक्षे स्थितः धर्मोद्गतं बोधिसत्त्वं महासत्त्वं सत्कुर्यामिति? अथ खलु शक्रो देवानामिन्द्रः सदाप्ररुदितं बोधिसत्त्वं महासत्त्वमभ्युद्गतं दृष्ट्वा चेतसैव चास्य चित्तमाज्ञाय दिव्यानि चास्मै मान्दा- 30 रवाणि पुष्पाण्युपनामयति स्म, एवं चावोचत्—एभिस्त्वं कुलपुत्र दिव्यैः पुष्पैर्धर्मोद्गतं बोधि- W 979

---

१ W om. अत्र.

सत्वं महासत्त्वं सत्कुरु। सत्कर्तव्यो हि कुलपुत्र अस्माभिस्तव परिग्राहकः। तव हि कुलपुत्र अनुभावेन अद्य बहूनां प्राणिसहस्राणामर्थः कृतः। दुर्लभाः कुलपुत्र एवंरूपाः सत्त्वाः, ये सर्वसत्त्वानां कृतशोऽप्रमेयानसंख्येयान् कल्पानुत्सहन्ते महान्तं भारमुद्वोढुं यथा त्वया उत्सोढम्॥

अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः शक्रस्य देवानामिन्द्रस्यान्तिका-
5 न्मान्दारवाणि पुष्पाणि गृहीत्वा धर्मोद्गतं बोधिसत्त्वं महासत्त्वमवाकिरत्, अभ्यवाकिरत्, अभिप्राकिरत्। स्वकेन च कायेन धर्मोद्गतं बोधिसत्त्वं महासत्त्वमभिच्छादयति स्म। एवं च वाचमभाषत–एषोऽहं कुलपुत्र अद्याग्रेण तवात्मानं निर्यातयामि उपस्थानपरिचर्यायै। स आत्मानं निर्यात्य धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य पुरतः प्राञ्जलिं कृत्वास्थात्॥

R 519 अथ खलु सा श्रेष्ठिदारिका तानि च पञ्च दारिकाशतानि सदाप्ररुदितं बोधिसत्त्वं
10 महासत्त्वमेतदवोचत्–एता वयमपि कुलपुत्र तवात्मानं निर्यातयामः, वयमप्यनेन कुशलमूलेन एतेषामेव धर्माणां लाभिन्यो भवेम, त्वयैव च सार्धं पुनः पुनर्बुद्धांश्च भगवतो बोधिसत्त्वांश्च सत्कुर्याम गुरुकुर्याम। आसन्नीभूताश्च तवैव भवेम। अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः श्रेष्ठिदारिकां तानि च पञ्च दारिकाशतान्येतदवोचत्–यदि मे यूयं दारिका अध्याशयमनुवर्तध्वम्, अध्याशयेन च मह्यमात्मानं निर्यातयत, एवमहं युष्मान् प्रतीच्छेयम्।
15 दारिका आहुः–अनुवर्तिष्यामहे तव वयमाशयेनाध्याशयेन च। वयं तवात्मानं निर्यातयामो
W 980 यथेच्छाकरणीयतायै। अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वस्तानि श्रेष्ठिदारिका-प्रमुखानि पञ्च दारिकाशतानि सर्वालंकारभूषितानि कृत्वा तानि च पञ्च रथशतान्यलंकृत्य सर्वाणि च तानि धर्मोद्गताय बोधिसत्त्वाय महासत्त्वाय निर्यातयति स्म उपस्थानपरि-चर्यायै–इमाः कुलपुत्र अहं तवोपस्थायिका निर्यातयामि, इमानि च पञ्च रथशतानि
20 निर्यातयामि परिभोगायेति॥

अथ खलु शक्रो देवानामिन्द्रस्तस्मै कुलपुत्राय साधुकारमदात्–साधु साधु कुलपुत्र। बोधिसत्त्वैर्महासत्त्वैः सर्वस्वपरित्यागिभिर्भवितव्यम्। एवंरूपेण च त्यागचित्तेन बोधिसत्त्वो महासत्त्वः क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबुध्यते। एवं च धर्मभाणकाणां पूजां कृत्वा शक्यं प्रज्ञापारमितामुपायकौशल्यं च श्रोतुम्। तैरपि कुलपुत्र पौर्वकैस्तथागतैरर्हद्भिः
R 520 25 सम्यक्संबुद्धैः पूर्वं बोधिसत्त्वचर्यां चरद्भिरेवंरूप एव त्यागे स्थित्वा अनुत्तरा सम्यक्संबोधिः समुदानीता प्रज्ञापारमितामुपायकौशल्यं च परिप्रश्नयद्भिरिति॥

अथ खलु धर्मोद्गतो बोधिसत्त्वो महासत्त्वस्तानि श्रेष्ठिदारिकाप्रमुखानि पञ्च दारिका-शतानि पञ्च रथशतानि सदाप्ररुदितस्य बोधिसत्त्वस्य महासत्त्वस्य कुशलपरिपूरिमुपादाय प्रतिगृह्णीते स्म। प्रतिगृह्य च सदाप्ररुदितायैव कुलपुत्राय प्रतिनिर्यातयामास। अथ खलु धर्मो-
30 द्गतो बोधिसत्त्वो महासत्त्व उत्थायासनात् स्वकं गृहं प्राविक्षत् सूर्यस्य चास्तंगमनकालोऽभूत्॥

अथ खलु सदाप्ररुदितस्य बोधिसत्त्वस्य महासत्त्वस्यैतदभूत्–नैतन्मम साधु प्रतिरूपं भवेत्, यदहं धर्मकामतया आगत्य निषीदेयम्, शय्यां च परिकल्पयेयम्। यन्न्वहं द्वाभ्या-

मेव ईर्यापथाभ्यां स्थित्वा स्थानेन चंक्रमेण च कालमतिनामयेयम्, यावद्धर्मोद्गतो बोधिसत्त्वो W 981
महासत्त्वः स्वकाद्गृहान्निर्गतो भविष्यति यदुत धर्मसंप्रकाशनायेति ॥

अथ खलु धर्मोद्गतो बोधिसत्त्वो महासत्त्वः सप्त वर्षाण्येकसमाधिसमापन्न एवाभूत्। अप्रमेयैरसंख्येयैर्बोधिसत्त्वसमाधिसहस्रैः प्रज्ञापारमितोपायकौशल्यनिर्जातैर्व्याहार्षीत्। सदाप्ररुदितोऽपि बोधिसत्त्वो महासत्त्वः सप्त वर्षाणि द्वाभ्यामेव ईर्यापथाभ्यां कालमतिनामयन् 5 न स्त्यानमिद्धमवक्रामयामास। सप्त वर्षाणि न कामवितर्कमुत्पादयामास, न व्यापादवितर्कं न विहिंसावितर्कमुत्पादयामास, न रसगृद्धिं न चित्तौद्धिल्यमुत्पादयामास। अपि तु कदा नाम धर्मोद्गतो बोधिसत्त्वो महासत्त्वोऽस्मात्समाधेर्व्युत्थास्यति, यन्नु वयं धर्मोद्गतस्य बोधिसत्त्वस्य R 521 महासत्त्वस्य धर्मासनं प्रज्ञपयिष्यामः, यत्रासौ कुलपुत्रो निषद्य धर्मं देशयिष्यतीति। तं च पृथिवीप्रदेशं सुसिक्तं सुमृष्टं च करिष्यामो नानापुष्पाभिकीर्णम्, यत्र पृथिवीप्रदेशे धर्मोद्गतो 10 बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितामुपायकौशल्यं च संप्रकाशयिष्यतीति चिन्तयामास। तान्यपि श्रेष्ठिदारिकाप्रमुखानि पञ्च दारिकाशतानि सदाप्ररुदितस्य बोधिसत्त्वस्य महासत्त्वस्यानुशिक्षमाणानि द्वाभ्यामेव ईर्यापथाभ्यां कालमतिनामयामासुः सर्वाः क्रियास्तस्यानुवर्तमानाः॥

अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वो दिव्यं निर्घोषमश्रौषीत्—इतः सप्तमे दिवसे धर्मोद्गतो बोधिसत्त्वो महासत्त्वोऽस्मात्समाधेर्व्युत्थास्यति, व्युत्थाय च मध्येनगरस्य 15 निषद्य धर्मं देशयिष्यतीति। अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वस्तं दिव्यं निर्घोषं श्रुत्वा तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातस्तं पृथिवीप्रदेशं शोधयामास सार्धं W 982 श्रेष्ठिदारिकाप्रमुखैः पञ्चदारिकाशतैः, धर्मासनं च प्रज्ञपयामास सप्तरत्नमयम्, स्वकं चोत्तरासङ्गं कायादवतार्य तस्यासनस्योपरि प्रज्ञपयति स्म। अथ खलु ता दारिकाः स्वकस्वकानुत्तरासङ्गान् कायादवतार्य पञ्चोत्तरासङ्गशतानि तत्रासने प्रज्ञपयामासुः अत्रासने धर्मोद्गतो 20 बोधिसत्त्वो महासत्त्वो निषद्य धर्मं देशयिष्यतीति। एवं ताश्च सर्वा दारिका धर्मोद्गतस्य R 522 बोधिसत्त्वस्य महासत्त्वस्य धर्मासनमास्तीर्य तुष्टा उदग्रा आत्तमनसः प्रमुदिताः प्रीतिसौमनस्यजाता अभूवन्॥

अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वस्तं पृथिवीप्रदेशं सेक्तुकामः। न चोदकं समन्तात्पर्येषमाणोऽपि लभते, येन तं पृथिवीप्रदेशं सिञ्चेत्। यथापि नाम मारेण पापीयसा 25 तत्सर्वमुदकमन्तर्धापितमभूत्, अप्येव नाम अस्य सदाप्ररुदितस्य बोधिसत्त्वस्य महासत्त्वस्योदकमलभमानस्य चित्तं खिद्येत, दुःखदौर्मनस्यं च भवेत्, चित्तस्य वा अन्यथात्वं भवेत्, येनास्य कुशलमूलस्यान्तर्धानं भवेत्, न वा पूजा भ्राजेरन्॥

अथ खलु सदाप्ररुदितस्य बोधिसत्त्वस्य महासत्त्वस्यैतदभूत्—यन्न्वहमात्मनः कायं विद्ध्वा इमं पृथिवीप्रदेशं रुधिरेण सिञ्चेयम्। तत्कस्य हेतोः? अयं हि पृथिवीप्रदेश उद्धत- 30 रजस्कः। मा रजोधातुरितो भूप्रदेशाद्धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य काये निपतेत्। किं वा अनेनात्मभावेनावश्यं भेदनधर्मिणा कुर्याम्? वरं खलु पुनर्ममायं काय

एवंरूपया क्रियया विनश्यतु, न तु निःसामर्थ्यक्रियया। अपि च कामहेतोः कामनिदानं बहूनि मे आत्मभावसहस्राणि पुनः पुनः संसारे संसरतो भिन्नानि, न पुनरेवंरूपेषु स्थानेषु सद्धर्मपरिग्रहस्य कृतशः। यदि पुनर्भिद्यन्ते, काममेवंरूपेषु भिद्यन्तामिति। अथ खलु
W 983 सदाप्ररुदितो बोधिसत्त्वो महासत्त्व इति प्रतिसंख्याय तीक्ष्णं शस्त्रं गृहीत्वा स्वकायं समन्ततो
R 523 5 विद्ध्वा तं पृथिवीप्रदेशं स्वरुधिरेण सर्वमसिञ्चत्। तान्यपि श्रेष्ठिदारिकाप्रमुखानि पञ्चदारिकाशतानि सदाप्ररुदितस्य बोधिसत्त्वस्य महासत्त्वस्यानुशिक्षमाणानि सर्वाणि तानि तीक्ष्णानि शस्त्राणि गृहीत्वा स्वकस्वकानि शरीराणि विद्ध्वा तं पृथिवीप्रदेशं स्वकस्वकैर्लोहितैः सर्व-
W 984 मसिञ्चन्। न च सदाप्ररुदितस्य बोधिसत्त्वस्य महासत्त्वस्य तासां वा सर्वासां दारिकाणां चित्तस्यान्यथात्वमभूत्, यत्र स मारः पापीयानवतारं लभेत कुशलमूलान्तरायकरणाय॥

10 अथ खलु शक्रस्य देवानामिन्द्रस्यैतदभूत्—आश्चर्यं यावद्धर्मकामश्चायं सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः, यावद्दृढसमादानश्च यावन्महासंनाहसंनद्धश्च अनपेक्षः काये जीवितेषु भोगेषु च, अनुत्तरायाः सम्यक्संबोधेरधिगमाय अध्याशयसंप्रस्थितः। यदुत सर्वसत्त्वान् मोचयिष्याम्यपरिमाणतः संसारदुःखादनुत्तरां सम्यक्संबोधिमभिसंबुध्येति। अथ खलु शक्रो देवानामिन्द्रस्तत्सर्वं लोहितोदकं दिव्यं चन्दनोदकमभ्यतिष्ठत्, समन्ताच्च तस्य पृथिवीप्रदेशस्य 15 अचिन्त्यं परमोदारं गन्धं यस्य दिव्यस्य चन्दनोदकस्य परिपूर्णम्। योजनशतं गन्धो वाति॥

अथ शक्रो देवानामिन्द्रः सदाप्ररुदितं बोधिसत्त्वं महासत्त्वमेतदवोचत्—साधु साधु कुलपुत्र। साधु ते कुलपुत्र अचिन्त्यं वीर्यम्, साध्वी च ते अनुत्तरा धर्मकामता
R 524 धर्मपरीष्टिश्च। एवंरूपेण कुलपुत्र अध्याशयेन एवंरूपेण वीर्येण एवंरूपया च धर्मकामतया तैः पौर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैरनुत्तरा सम्यक्संबोधिः समुदानीता॥

20 अथ खलु सदाप्ररुदितस्य बोधिसत्त्वस्य महासत्त्वस्यैतदभूत्—प्रज्ञप्तं मया धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य धर्मासनम्। अयं च पृथिवीप्रदेशः सुसिक्तः सुसंमृष्टश्च कृतः[1]। कुतो नु खल्वहं पुष्पाणि लभेयम्, यैरहमिमं पृथिवीप्रदेशं पुष्पाभिकीर्णं कुर्याम्, धर्मोद्गतं च बोधिसत्त्वं महासत्त्वं धर्मं देशयन्तं धर्मासने निषण्णमभ्यवकिरेयम्? अथ खलु शक्रो
W 985 देवानामिन्द्रः सदाप्ररुदितं बोधिसत्त्वं महासत्त्वमेतदवोचत्—इमानि ते कुलपुत्र प्रतिगृहाण 25 दिव्यानि मान्दारवाणि पुष्पाणि। एभिस्त्वमिमं पृथिवीप्रदेशं पुष्पाभिकीर्णं कुरु, धर्मोद्गतं च बोधिसत्त्वं महासत्त्वं धर्मं देशयन्तं धर्मासने निषण्णमभ्यवकिर। स तस्मै दिव्यं खारीसहस्रं दिव्यानां मान्दारवपुष्पाणामुपनामयति स्म। अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वस्तानि पुष्पाणि गृहीत्वा अन्यतरैः पुष्पैस्तं पृथिवीप्रदेशं पुष्पाभिकीर्णमकार्षीत्, अन्यतरैश्च पुष्पैर्धर्मोद्गतं बोधिसत्त्वं महासत्त्वमभ्यवाकिरत्॥

30 अथ खलु धर्मोद्गतो बोधिसत्त्वो महासत्त्वः सप्तानां वर्षाणामत्ययेन ततः समाधेर्व्युत्थाय येन धर्मासनं तेनोपसंक्रम्य प्रज्ञप्त एवासने न्यषीदत्, अनेकशतसहस्रया पर्षदा परिवृतः पुरस्कृतः प्रज्ञापारमितां देशयामास॥

---

१ W om. कृतः.

अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः सहदर्शनेनैव धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य तादृशं सुखं प्रतिलभते स्म, तद्यथापि नाम प्रथमध्यानसमापन्न एकाग्रमनसिकारो भिक्षुः। तत्रेयं धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितादेशना—यदुत सर्वधर्मसमतया प्रज्ञापारमितासमता। सर्वधर्मविविक्ततया प्रज्ञापारमिताविविक्तता। सर्वधर्माचलनतया प्रज्ञापारमिताचलनता। सर्वधर्मामननतया प्रज्ञापारमितामननता। सर्वधर्मास्तम्भिततया प्रज्ञापारमितास्तम्भितता। सर्वधर्मैकरसतया प्रज्ञापारमितैकरसता। सर्वधर्मापर्यन्ततया प्रज्ञापारमितापर्यन्तता। सर्वधर्मानुत्पादतया प्रज्ञापारमितानुत्पादता। सर्वधर्मानिरोधतया प्रज्ञापारमितानिरोधता। गगनापर्यन्ततया प्रज्ञापारमितापर्यन्तता। समुद्रापर्यन्ततया प्रज्ञापारमितापर्यन्तता। मेरुविचित्रतया प्रज्ञापारमिताविचित्रता। गगनाकल्पनतया प्रज्ञापारमिताकल्पनता। रूपापर्यन्ततया प्रज्ञापारमितापर्यन्तता। एवं वेदना संज्ञा संस्काराः। विज्ञानापर्यन्ततया प्रज्ञापारमितापर्यन्तता। पृथिवीधात्वपर्यन्ततया प्रज्ञापारमितापर्यन्तता। एवमब्धातुतेजोधातुवायुधात्वाकाशधात्वपर्यन्ततया प्रज्ञापारमितापर्यन्तता। विज्ञानधात्वपर्यन्ततया प्रज्ञापारमितापर्यन्तता। वज्रोपमधर्मसमतया प्रज्ञापारमितासमता। सर्वधर्मासंभेदनतया प्रज्ञापारमितासंभेदनता। सर्वधर्मानुपलब्धितया प्रज्ञापारमितानुपलब्धिता। सर्वधर्माभिभावनासमतया प्रज्ञापारमिताभिभावनासमता। सर्वधर्मनिश्चेष्टतया प्रज्ञापारमितानिश्चेष्टता। सर्वधर्माचिन्त्यतया प्रज्ञापारमिताचिन्त्यता वेदितव्येति॥

अथ खलु सदाप्ररुदितस्य बोधिसत्त्वस्य महासत्त्वस्य तथानिषण्णस्यैव तस्यां वेलायां सर्वधर्मसमता नाम समाधिराजो जातः। यतः सर्वधर्मविविक्तश्च नाम समाधिः, सर्वधर्माचलनश्च नाम समाधिः, सर्वधर्मामननश्च नाम समाधिः, सर्वधर्मास्तम्भितश्च नाम समाधिः, सर्वधर्मैकरसश्च नाम समाधिः, सर्वधर्मापर्यन्तश्च नाम समाधिः, सर्वधर्मानुत्पादश्च नाम समाधिः, सर्वधर्मानिरोधश्च नाम समाधिः, गगनापर्यतश्च नाम समाधिः, समुद्रापर्यन्तश्च नाम समाधिः, मेरुविचित्रश्च नाम समाधिः, गगनाकल्पश्च नाम समाधिः, रूपापर्यन्तश्च नाम समाधिः। एवं वेदना संज्ञा संस्काराः। विज्ञानापर्यन्तश्च नाम समाधिः, पृथिवीधात्वपर्यन्तश्च नाम समाधिः, एवमब्धातुतेजोधातुवायुधात्वाकाशधात्वपर्यन्तश्च नाम समाधिः, विज्ञानधात्वपर्यन्तश्च नाम समाधिः, वज्रोपमश्च नाम समाधिः, सर्वधर्मासंभेदश्च नाम समाधिः, सर्वधर्मानुपलब्धिश्च नाम समाधिः, सर्वधर्माविभावनासमता च नाम समाधिः, सर्वधर्मनिश्चेष्टश्च नाम समाधिः, सर्वधर्माचिन्त्यश्च नाम समाधिः। एवंप्रमुखानि षष्टिः समाधिमुखशतसहस्राणि सदाप्ररुदितेन बोधिसत्त्वेन महासत्त्वेन प्रतिलब्धान्यभूवन्निति॥

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां धर्मोद्गतपरिवर्तो नामैकत्रिंशत्तमः॥

## ३२ परीन्दनापरिवर्तो द्वात्रिंशत्तमः ।

R 527
W 989

सहप्रतिलब्धानां च सुभूते पष्ट्याः समाधिमुखशतसहस्राणां सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः पूर्वस्यां दिशि, दक्षिणस्यां पश्चिमायामुत्तरस्यां दिशि, विदिक्षु अध ऊर्ध्वं च दिशि दशसु दिक्षु गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु गङ्गानदीवालुकोपमान्
5 बुद्धान् भगवतः पश्यति स्म भिक्षुसंघपरिवृतान् बोधिसत्त्वगुणपुरस्कृतान् एतैरेव नयैरेभिरेव नामभिरेतैरेवाक्षरैरिमामेव प्रज्ञापारमितां भाषमाणान् । तद्यथापि नाम अहमेतर्हि अस्मिन्नेव त्रिसाहस्रमहासाहस्रे लोकधातौ धर्मं देशयामि भिक्षुसंघपरिवृतो बोधिसत्त्वगणपुरस्कृतः, एभिरेव नयैरेभिरेव नामभिरेभिरेवाक्षरैरिमामेव प्रज्ञापारमितां भाषे । सोऽचिन्त्येन बाहुश्रुत्येन श्रुतसागरतया च समन्वागतोऽभूत्, सर्वासु च जातिषु न जातु बुद्धविरहितोऽभूत् । यत्र
10 यत्र बुद्धा भगवन्तः संमुखीभूता भवन्ति, तत्र तत्रोपपद्यते स्म । अविरहितश्च भवति स्म बुद्धैर्भगवद्भिः, अन्ततः स्वप्नान्तरगतोऽपि । सर्वे च अनेन अक्षणा विवर्जिताः, क्षणसंपचारागिता ॥

तत्र खलु पुनर्भगवानायुष्मन्तमानन्दमामन्त्रयते स्म–तदनेनापि ते आनन्द पर्यायेण एवं वेदितव्यम्–इत्यपीयं प्रज्ञापारमिता बोधिसत्त्वानां महासत्त्वानां सर्वज्ञज्ञानस्याहारिकेति ।
15 तस्मात्तर्हि आनन्द बोधिसत्त्वैर्महासत्त्वैः सर्वज्ञज्ञानं प्रतिलब्धुकामैरस्यां प्रज्ञापारमितायां चरितव्यम् । इयं प्रज्ञापारमिता श्रोतव्या उद्ग्रहीतव्या धारयितव्या वाचयितव्या पर्यवाप्तव्या प्रवर्तयितव्या[1] देशयितव्योपदेष्टव्योद्देष्टव्या स्वाध्यातव्या लिखितव्या । तथागताधिष्ठानेन महापुस्तके प्रव्यक्तप्रव्यक्तैरक्षरैः सुलिखितां कृत्वा सत्कर्तव्या गुरुकर्तव्या मानयितव्या पूजयितव्या अर्चयितव्या अपचायितव्या पुष्पैर्धूपैर्गन्धैर्माल्यैर्विलेपनैश्चूर्णैश्चीवरैर्वाद्यैर्वस्त्रैश्छत्रैर्ध्वजैर्घण्टाभिः
20 पताकाभिः, समन्ताच्च दीपमालाभिः, बहुविधाभिश्च पूजाभिः । इयमस्माकमन्तिकादानन्द अनुशासनी । तत्कस्य हेतोः ? अत्र हि प्रज्ञापारमितायां सर्वज्ञज्ञानपरिनिष्पत्तिर्भविष्यति । तत्किं मन्यसे आनन्द शास्ता ते तथागतः ? आनन्द आह–शास्ता मे भगवन्, शास्ता मे सुगत । एवमुक्ते भगवानायुष्मन्तमानन्दमेतदवोचत्–शास्ता ते आनन्द तथागतः । परिचरितोऽस्म्यानन्द त्वया मैत्रेण कायकर्मणा मनआपेन, मैत्रेण वाक्कर्मणा मनआपेन, मैत्रेण
25 मनःकर्मणा मनआपेन । तस्मात्तर्हि आनन्द यथैव त्वया ममैतर्हि तिष्ठतो ध्रियमाणस्य यापयतोऽस्मिन् समुच्छ्रये प्रेम च प्रसादश्च गौरवं च कृतम्, तथैव त्वया आनन्द ममात्ययादस्यां प्रज्ञापारमितायां कर्तव्यम् । द्विरपि त्रिरपि ते आनन्द परीन्दामि अनुपरीन्दामि एनां प्रज्ञापारमिताम्, यथेयं नान्तर्धीयेत, यथा नास्यां त्वमन्यः पुरुषः स्याः । यावदानन्द इयं प्रज्ञापारमिता लोके प्रचरिष्यति, तावत्तथागतस्तिष्ठतीति वेदितव्यम् । तावत्तथागतो धर्मं
30 देशयतीति वेदितव्यम् । अविरहितास्ते आनन्द सत्त्वा बुद्धदर्शनेन धर्मश्रवणेन संघोपस्थानेन च वेदितव्यम् । तथागतान्तिकावचरास्ते आनन्द सत्त्वा वेदितव्याः, य एनां प्रज्ञापारमित

R 528
W 990
R 529

[1] W om. प्रवर्तयितव्या.

श्रोष्यन्त्युद्ग्रहीष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति पर्यवाप्स्यन्ति प्रवर्तयिष्यन्ति देशयिष्यन्त्युपदेक्ष्यन्त्युद्देक्ष्यन्ति स्वाध्यास्यन्ति लिखिष्यन्ति सत्करिष्यन्ति गुरुकरिष्यन्ति मानयिष्यन्ति पूजयिष्यन्त्यर्चयिष्यन्त्यपचायिष्यन्ति पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजघण्टापताकाभिः, समन्ताच्च दीपमालाभिः, बहुविधाभिश्च पूजाभिरिति ॥ W 991

इदमवोचद्भगवान् आत्तमनाः। ते च मैत्रेयप्रमुखा बोधिसत्त्वा महासत्त्वाः आयुष्मांश्च 5 सुभूतिरायुष्मांश्च शारिपुत्रः आयुष्मांश्चानन्दः शक्रश्च देवानामिन्द्रः सदेवमानुषासुरगरुडगन्धर्वश्च लोको भगवतो भाषितमभ्यनन्दन्निति ॥

आर्याष्टसाहस्रिकायां प्रज्ञापारमितायां परीन्दनापरिवर्तो नाम द्वात्रिंशत्तमः ॥ W 993

* * * *

समाप्ता चेयं भगवत्या आर्याष्टसाहस्रिकायाः प्रज्ञापारमिता सर्वतथागतजननी बोधिसत्त्वप्रत्येकजिनश्रावकाणां माता, धर्ममुद्रा धर्मोल्का धर्मनाभिर्धर्मभेरी धर्मनेत्री धर्मरत्न- 10 निधानम् अक्षयो धर्मः अचिन्त्याद्भुतदर्शननक्षत्रमाला सदेवमानुषासुरगन्धर्वलोकवन्दिता R 530 सर्वसुखहेतुरिति ॥ प्रज्ञापारमितां सम्यगुद्गृह्य पर्यवाप्य च धारयित्वा प्रवर्त्य एनां विहरन्तु सदार्थिन इति ॥

ये धर्मा हेतुप्रभावा हेतुस्तेषां तथागतो ह्यवदत्।
तेषां च यो निरोध एवंवादी महाश्रमणः ॥ 15

देयधर्मोऽयं प्रवरमहायानयायिन्याः परमोपासिकसौराज्ञसुतलक्ष्मीधरस्य। यदत्र पुण्यं तद्भवत्वाचार्योपाध्यायमातापितृपूर्वंगमं कृत्वा सकलसत्त्वराशेरनुत्तरज्ञानावाप्तये इति ॥



आचार्यदिग्नागविरचितः

# प्रज्ञापारमितापिण्डार्थः ।

॥ नमः प्रज्ञापारमितायै ॥

प्रज्ञापारमिता ज्ञानमद्वयं सा तथागतः ।
साध्या तादर्थ्ययोगेन ताच्छब्द्यं ग्रन्थमार्गयोः ॥ १ ॥

आश्रयश्चाधिकारश्च कर्म भावनया सह ।
प्रभेदो लिङ्गमापच्च सानुशंसमुदाहृतम् ॥ २ ॥

श्रद्धावतां प्रवृत्त्यङ्गं शास्ता पर्षच्च साक्षिणी ।
देशकालौ च निर्दिष्टौ स्वप्रामाण्यप्रसिद्धये ॥ ३ ॥

संगीतिकर्ता लोके हि देशकालोपलक्षितम् ।
ससाक्षिकं वदन् वक्ता प्रामाण्यमधिगच्छति ॥ ४ ॥

सर्वं चैतन्निपातात्मश्रवणादेः प्रकीर्तनम् ।
प्रासङ्गिकं तु एवार्था मुख्या द्वात्रिंशदेव हि ॥ ५ ॥

प्रभेदः षोडशाकारः शून्यताया यथाक्रमम् ।
निर्दिष्टोऽष्टसहस्र्या स विज्ञेयोऽन्यापदेशतः ॥ ६ ॥

इत्थमष्टसहस्रीयमन्यूनार्थैर्यथोदितैः ।
ग्रन्थसंक्षेप इष्टोऽत्र त एवार्था यथोदिताः ॥ ७ ॥

बोधिसत्त्वं न पश्यामीत्युक्तवांस्तत्त्वतो मुनिः ।
भोक्त्राध्यात्मिकवस्तूनां कथिता तेन शून्यता ॥ ८ ॥

रूपं रूपस्वभावेन शून्यमित्युक्तितः पुनः ।
बाह्यान्यायतनानीह भोग्यानि प्रतिषिद्धवान् ॥ ९ ॥

रूपाद्यभावे तद्देहप्रतिष्ठालक्षणक्षतिः ।
गतार्था येन तद्दृष्टं तदाध्यात्मिकमित्यसत् ॥ १० ॥

आध्यात्मिकानां शून्यत्वे प्रकृतेरपि शून्यता ।
विज्ञानरूपं गोत्रं हि कृपाप्रज्ञात्मकं मतम् ॥ ११ ॥

नोत्पन्नो न निरुद्धो वा सत्त्व इत्यादिना स्फुटम् ।
सत्त्वसंसारयोः कामं दर्शिता तेन शून्यता ॥ १२ ॥

---

G. Tucci : JRAS, 1947, pp. 56–59 : Nanjio No 1309; Tohoku No 3809, where the title given is : प्रज्ञापारमितासंग्रहकारिका, though Cordier rightly calls it °पिण्डार्थ.

बुद्धधर्मांस्तथा बोधिसत्त्वधर्मान्न पश्यति।
इत्यादिना विनिर्दिष्टा शून्या दशबलादयः॥ १३॥
प्रति प्रति यतो धर्माः कल्पिता इति कीर्तितम्।
ततो न परमार्थोऽस्ति धर्माणामिति चोक्तवान्॥ १४॥
आत्मादिदृष्टेरुच्छेदं महत्या प्रकरोति यत्।
ततः पुद्गलनैरात्म्यं भगवान् सर्वथा जगौ॥ १५॥
सर्वधर्मा अनुत्पन्ना इति कीर्तयता तथा।
कथितं धर्मनैरात्म्यं सर्वथा तत्त्ववेदिना॥ १६॥
सावद्यनिरवद्यानामवृद्धिपरिहाणितः।
संस्कृतासंस्कृतानां च कुशलानां निराकृतिः॥ १७॥
कुशलानां च शून्यत्वे तद्गता अक्षता तथा।
कल्पितैवेति भेदानां शून्यतायाः स संग्रहः॥ १८॥
दशभिश्चित्तविक्षेपैश्चित्तं विक्षिप्तमन्यतः।
योग्यं भवति बालानां नाद्वयज्ञानसाधने॥ १९॥
तानपाकर्तुमन्योन्यं विपक्षप्रतिपक्षतः।
प्रज्ञापारमिताग्रन्थस्ते च संपिण्ड्य दर्शिताः॥ २०॥
यदाह बोधिसत्त्वः सन्नित्यभावप्रकल्पना।
विक्षेपं विक्षिपन् शास्ता सांवृतस्कन्धदर्शनात्॥ २१॥
एतेनाष्टसहस्र्यादावादिवाक्यात्प्रभृत्यपि।
आ समाप्तेर्निषेद्धव्या विधिनाभावकल्पना॥ २२॥
हेतुवाक्यानि नैतानि कृत्यमात्रं तु मृग्यते।
ब्रह्मजालादिसूत्रेषु ज्ञेयाः सर्वत्र युक्तयः॥ २३॥
बोधिसत्त्वं न पश्यामि अहमित्यादि विस्तरैः।
निराकरोति भगवान् भावसंकल्पविभ्रमम्॥ २४॥
यन्न पश्यति नामापि गोचरं [न] क्रियां तथा।
स्कन्धांश्च सर्वतस्तेन बोधिसत्त्वं न पश्यति॥ २५॥
कल्पितस्य निषेधोऽयमिति संग्रहदर्शनम्।
सर्वो ज्ञेयतयारूढ आकारः कल्पितो मतौ॥ २६॥
प्रज्ञापारमितायां हि त्रीन् समाश्रित्य देशना।
कल्पितं परतन्त्रं च परिनिष्पन्नमेव च॥ २७॥
नास्तीत्यादिपदैः सर्वं कल्पितं विनिवार्यते।
मायोपमादिदृष्टान्तैः परतन्त्रस्य देशना॥ २८॥

चतुर्धा व्यवदानेन परिनिष्पन्नकीर्तनम् ।
प्रज्ञापारमितायां हि नान्या बुद्धस्य देशना ॥ २९ ॥
दशसंकल्पविक्षेपविपक्षे देशनाक्रमे ।
त्रयाणामिह बोद्धव्यं समस्तव्यस्तकीर्तनम् ॥ ३० ॥
यथादिवाक्ये निष्पन्नपरतन्त्रपरिकल्पितैः ।
अभावकल्पनारूपविक्षेपविनिवारणम् ॥ ३१ ॥
तेन बुद्धं तथा बोधिं न पश्यामीति वाचकैः ।
आ समाप्तेरिह ज्ञेया कल्पितानां निराकृतिः ॥ ३२ ॥
शून्ये रूपे स्वभावेन समारोपः क्व केन वा ।
इत्यन्येष्वपि वाक्येषु बोद्धव्यं तन्निवारणम् ॥ ३३ ॥
न हि शून्यतया शून्यमिति वाक्यं विनिर्दिशन् ।
अपवादविकल्पानां निरासं सर्वथोक्तवान् ॥ ३४ ॥
मायोपमस्तथा बुद्धः स स्वप्नोपम इत्यपि ।
अयमेव क्रमो ज्ञेयो विज्ञैर्वाक्यान्तरेष्वपि ॥ ३५ ॥
सामानाधिकरण्येन प्रोक्तो मायोपमो जिनः ।
मायोपमादिशब्दैश्च परतन्त्रो निगद्यते ॥ ३६ ॥
पृथग्जनानां यज्ज्ञानं प्रकृतिव्यवदानिकम् ।
उक्तं तद्बुद्धशब्देन बोधिसत्त्वो यथा जिनः ॥ ३७ ॥
निजं स्वरूपं प्रच्छाद्य तदविद्यावशीकृतम् ।
मायावदन्यथा भाति फलं स्वप्नं इवोज्झति ॥ ३८ ॥
अद्वयस्यान्यथाख्यातौ फले वाप्यपवादिनाम् ।
अपवादविकल्पानामपवादोऽयमुच्यते ॥ ३९ ॥
न रूपं शून्यता युक्ता परस्परविरोधतः ।
नीरूपा शून्यता नामरूपमाकारसंगतम् ॥ ४० ॥
इत्येकत्वविकल्पस्य बाद्धा( ध्या ? )नानात्वकल्पनम् ( ना ? ) ।
रुणद्धि नान्यत्तद्रूपं शून्यतायाः कथंचन ॥ ४१ ॥
असदेव यतः ख्याति तदविद्याविनिर्मितम् ।
असत्ख्यापनशक्त्यैव साविद्येति निगद्यते ॥ ४२ ॥
इदमेवोच्यते रूपं प्रज्ञापारमितेति च ।
अद्वयं द्वयमेवैतद्विकल्पद्वयबाधनम् ॥ ४३ ॥
युक्तिं चाह विशुद्धत्वात्तथा चानुपलम्भतः ।
भावाभावविरोधाच्च नानात्वमपि पश्यति ॥ ४४ ॥

नाममात्रमिदं रूपं तत्त्वतो ह्यस्वभावकम् ।
तत्स्वभावविकल्पानामवकाशं निरस्यति ॥ ४५ ॥
रूपं रूपस्वभावेन शून्यं यत्प्रथमोदितम् ।
तत्स्वभावसमारोपसंकल्पप्रतिषेधनम् ॥ ४६ ॥
नोत्पादं न निरोधं च धर्माणां पश्यतीति यत् ।
भगवानाह, तद्व्यस्ता तद्विशेषस्य कल्पना ॥ ४७ ॥
कृत्रिमं नाम वाच्याश्च धर्मास्ते कल्पिता यतः ।
शब्दार्थयोर्न संबन्धस्तेन स्वाभाविको मतः ॥ ४८ ॥
[1]बाह्यार्थाभिनिवेशस्तु भ्रान्त्या बालस्य जृम्भते ।
तथैव व्यवहारोऽयं न त्वत्रार्थोऽस्ति कश्चन ॥ ४९ ॥
अत्र तेन यथा नाम कल्प्यते न तथास्ति तत् ।
वाच्यं वस्तु ततो निष्ठा यथानामार्थकल्पना ॥ ५० ॥
प्रज्ञापारमिता बुद्धो बोधिसत्त्वोऽपि वा तथा ।
नाममात्रमिति प्राह व्यसन् सत्यार्थकल्पनम् ॥ ५१ ॥
शब्दार्थप्रतिषेधोऽयं न वस्तु विनिवार्यते ।
एवमन्येष्वपि ज्ञेयो वाक्येष्वर्थविनिश्चयः ॥ ५२ ॥
नैवोपलभते सम्यक् सर्वनामानि तत्त्ववित् ।
यथार्थत्वेन तेनेदं न ध्वनेर्विनिवारणम् ॥ ५३ ॥
सुभूतिस्तु द्वयं व्यसन् शब्दं शब्दार्थमेव च ।
बोधिसत्त्वस्य नो नाम पश्यामीति स उक्तवान् ॥ ५४ ॥
प्रज्ञापारमितावाक्यं नास्ति यन्नेयता गतम् ।
ऊह्यास्तु केवलं तेऽर्था[ स्तदेवं ] सूक्ष्मया धिया ॥ ५५ ॥
प्रक्रान्तार्थतिरस्कारो या चार्थान्तरकल्पना ।
प्रज्ञापारमितायां हि प्रोक्ता सा प्रतिवर्णिका ॥ ५६ ॥
एतावानर्थसंक्षेपः प्रज्ञापारमिताश्रयः ।
आवर्त्य(र्त?)ते स एवार्थः पुनरर्थान्तराश्रितः ॥ ५७ ॥
प्रज्ञापारमितां सम्यक् संगृह्याष्टसहस्रिकाम् ।
यत्पुण्यमाप्तं तेनास्तु प्रज्ञापारमितो जनः ॥ ५८ ॥

प्रज्ञापारमितापिण्डार्थसंग्रहः समाप्तः । कृतिराचार्यदिग्नागपादानाम् ॥

---

१ This stanza is missing is Chinese translation.

आर्यमैत्रेयनाथविरचितम्

## अभिसमयालंकारो नाम

# प्रज्ञापारमितोपदेशशास्त्रम् ।

हरिभद्रविरचितया अष्टसाहस्रिकाया आलोकाख्यटीकया सहितम् ।

ॐ नमः सर्वज्ञाय । 5

## १ सर्वाकारज्ञताचर्यापरिवर्तः प्रथमः ।

अभिसमयालंकारकारिकाः ।

या सर्वज्ञतया नयत्युपशमं शान्तैषिणः श्रावकान् B 1 W 1

या मार्गज्ञतया जगद्धितकृतां लोकार्थसंपादिका ।

सर्वाकारमिदं वदन्ति मुनयो विश्वं यया संगता- 10

स्तस्यै श्रावकबोधिसत्त्वगणिनो बुद्धस्य मात्रे नमः ॥ १ ॥

आलोकः ।

मायारूपसमानभावविदुषां मुक्तिं परां योगिनां

संसारोदरवर्तिदोषनिचये संमूर्च्छितान् देहिनः ।

मैत्रेयेण दयावता भगवता नेतुं स्वयं सर्वथा 15

प्रज्ञापारमितानये स्फुटतरा टीका कृता कारिका ॥ १ ॥

भाष्यं तत्त्वविनिश्चये रचितवान् प्रज्ञावतामग्रणीः

आर्यासङ्ग इति प्रभास्वरयशास्तत्कर्तृसामर्थ्यतः ।

भावाभावविभागपक्षनिपुणज्ञानाभिमानोन्नतः

आचार्यो वसुबन्धुरर्थकथने प्राप्तास्पदः पद्धतौ ॥ २ ॥ 20

योगाभ्यासपदार्थतत्त्वमथनाल्लोकोत्तरज्ञानिनो

जातस्त्वार्यविमुक्तिसेनसुधियो यत्नो महान् वृत्तितः ।

एकान्तोत्थ[1]विपक्षदृष्टिशमनं शास्त्रं दधौ बुद्धिमान्[2]

यो लोके स विमुक्तिसेनवचसा ख्यातोऽपरो वार्तिकः[3] ॥ ३ ॥

वक्तुं तत्र न मद्विधाः क्षतधियोऽपूर्वं कथंचित्क्षमाः 25

संक्षुण्णो हि बुधोत्तमैरहरहः कोशो[4] न वस्तुक्षमः[5] । B 2

ज्ञानावाहकधर्मतत्त्वविषये जाताभिलाषा वयं

व्याख्यां तेन परां सदर्थविषयां कर्तुं समभ्युद्यताः ॥ ४ ॥

---

१ W एकान्तस्थ°. २ B °शमने शास्त्रम्बुधौ बुद्धवान्. ३ B वार्तिके. ४ B कोऽसौ. ५ B वस्तुक्रमः.

W 2 एवमित्यादि । सर्वत्रैव हि अर्थसंशयेन सर्वेषां संबन्धाभिधेयप्रयोजनाव-सायपूर्विका प्रवृत्तिः, इति संबन्धादीनि प्रज्ञापारमितायां वाच्यानि । तथा हि—यदि संबन्धाभिधेयमस्याः न कथ्येत, तदा उन्मत्तादिवाक्यवत् असंबन्धम् अनर्थकं च इत्या-शङ्कया न कश्चित्प्रवर्तेतापि श्रोतुम्, इति संबन्धाभिधेयमस्यामवश्यं वचनीयम् । तथा 5 सत्यपि संबन्धाभिधेये निष्पादितक्रिये कर्मणि अविशेषाभिधायि साधनम् इत्येपि साधन-न्यायमतिपतति, इति न्यायात् सूत्रान्तरासंगृहीतविशिष्टप्रवृत्त्यङ्गप्रयोजनरहितं प्रज्ञापारमिता-सूत्ररत्नं श्रद्धानुसारिणोऽपि श्रोतुमपि नाद्रियन्ते इति आदौ असाधारणं क्रियाफलं सूत्रे प्रवृत्तिकामानां प्रवृत्तये तद्गतमेव प्रयोजनं वाच्यम्, न अन्यगतम्, अन्यथा हि असंगता-भिधानं स्यात् । सूत्रे हि परं प्रवर्तयितुं सूत्रादौ प्रयोजनमभिधीयते, न व्यसनितया । कथं 10 च पुनः प्रयोजनवाक्योपदेशात् सूत्रे प्रवर्तितो भवति यदि तद्गतमेव प्रयोजनमभिधीयते, न अन्यगतम् ? न हि अन्यदीयप्रयोजनाभिधानात् अन्यत्र कस्यचित् प्रवृत्तिर्भवेत् । सूत्रं च विशिष्टार्थप्रतिपादनपरं वचनमुच्यते, न अभिधेयमात्रम्, नापि शब्दमात्रमर्थप्रतिपादन-सामर्थ्यशून्यम्, अतः न अभिधेयादिगतमभिधानीयम् । न तु क्रियारूपं प्रयोजनम् । तथा हि—सर्ववाक्यानां स्वार्थाभिधेयप्रतिपादनलक्षणा क्रिया साधारणी । सा च अतिप्रतीततया 15 प्रयोजनत्वेन न उपादानमर्हति, तस्यां शास्त्रस्य व्यभिचाराभावात् । अनभिधेयत्वाशङ्का-व्युदासार्थमुपदर्शनीया इति चेत्, न, अभिधेयकथनादेव तदाशङ्काया व्युदस्तत्वात् । नापि अभिधेयविशेषप्रतिपिपादयिषया तदुपादानम्, अभिधेयविशेषप्रतिपादनादेव तस्याः प्रति-पादितत्वात् । तस्य च क्रियाफलस्य फलं प्रयोजनमुपदर्शनीयम् । तेन विना क्रियाफलमात्रेण सूत्रे प्रवृत्त्यसंभवात् । तथा हि—अभिमतप्रधानफलार्थी प्रेक्षावान् तदुपाये प्रवर्तेत, कारण- W 3 20 मन्तरेण कार्यस्य अयोगात् । अविकलारोग्यसाधनानुष्ठानेन आरोग्यप्राप्तिवत् उपायो ज्ञातः अभ्यस्यमानः स्वोपेयफलदायकः इति उपायावगमाय सूत्रे प्रवृत्तिः । तस्मात् प्रवृत्त्यङ्ग-प्राधान्येन प्रयोजनप्रयोजनमेव अवश्यं दर्शनीयम् । तच्च उपायभूतसंबन्धादिशून्येन ग्रन्थेन अशक्यं दर्शयितुम्, इति सूत्रस्य प्रयोजनप्रयोजनोपायतासंदर्शनार्थं संबन्धादिकथनम् । तच्च प्रयोजनप्रयोजनम्—

B 3 (margin at line 15)

25 संबन्धानुगुणोपायं पुरुषार्थाभिधायकम् ।
परीक्षाधिकृतं वाक्यमतोऽनधिकृतं परम् ॥

—तत्त्वसंग्रहपञ्जिका—२

इति न्यायात् संबन्धानुगुणोपायमुपदर्शनीयम् । न पुनरशक्यं तत्साधनानुष्ठानम्, अन्यथा ज्वरहरतक्षकचूडारत्नालंकारार्थमिव न प्रवर्तेत कश्चित् ।

---

१ B °प्रयोजनप्रयोजना°. २ W संभावयेत. ३ W प्रवर्ततेऽपि. ४ W अविशेषा वापि. ५ B इत्यादि. ६ प्रवृत्ताङ्ग°. ७ W परः. ८ W च. ९ W नाति°. १० W om. न. ११ W om. विना. १२ W °गमात्. १३ B प्रयोजनमेव. १४ W कथितम्. १५ W उपायानु°.

अनवस्थापि नैवम्[१]। तथा हि–अभिमतार्थपरिसमाप्त्या पुरुषस्य आकाङ्क्षाविच्छेदात्, अतो नापरमूर्ध्वं प्रयोजनं मृग्यम्, इति कोऽस्य संबन्धादिः ? तत्रोच्यते–संबन्धस्तावत् न प्रयोजनात् पृथगुपदर्शनीयः, निष्फलत्वात्। स हि नाम पृथगुपादानमर्हति, यो यस्मिन्नभिहितेऽपि न गम्यते। यथा अभिधेयाद्यन्यतराभिधाने न इतरावगतिर्भवति। न च संभवोऽस्ति प्रयोजने अभिहिते, संबन्धो न अभिहित इति। तथा हि–संप्रदर्श्यमानः[२] शास्त्रप्रयोजनयोः साध्यसाधनभावलक्षणः उपदर्शनीयः[३], नान्यः गुरुपर्वक्रियादिलक्षणः, तस्य अर्थिप्रवृत्तेरनङ्गत्वात्। स च साध्यसाधनभावः प्रयोजनाभिधानादेव दर्शितः। तथा हि–इदमस्य प्रयोजनम् इति दर्शयता दर्शितं भवति इदमस्य साधनमिति। न हि यो[४] यन्न साधयति, तत्तस्य प्रयोजनं भवति[५] अतिप्रसङ्गात्, इति सामर्थ्यलभ्यत्वेन नासौ प्रयोजनाभिधानात् पृथगभिधानीयः। धर्मप्रविचयार्थं सर्ववस्तुसंग्रहः अभिधेयः इत्येकः। विपक्षप्रहाणाय समस्तप्रतिपक्षो निर्देश्यः इत्यपरः। निरवशेषज्ञेयपरिज्ञानाय अशेषाकारः कथनीयः इत्यन्यः। तदेतत् त्रयमसत्। तथा हि–प्रथमे पक्षे समस्तवस्तुसंग्रहे, न हि तदस्ति इह प्रज्ञापारमितायामपूर्वं वस्तुजातं यन्न स्कन्धधात्वायतननिर्देशेन अभिधर्मपिटकादौ संगृहीतम्, इति पुनरुक्ततादोषः। द्वितीये सर्वप्रतिपक्षसंग्रह एव, कस्यचित् विपक्षवस्तुनः असंग्रहात् प्रतिपक्षतया श्रावकमार्गादयो भावयितव्याः इत्यभिधानेऽपि न ज्ञायते कस्य प्रतिपक्षेण इति प्रतिनियतविपक्षप्रतिपक्षप्रतिपत्तेरभावादप्रतिपत्तिदोषः। तृतीयेऽपि अशेषाकारसंग्रहे विकल्पद्वयम्–किं वस्तुनः अव्यतिरिक्त आकारः, उत व्यतिरिक्तः इति। यदि आद्यो विकल्पः, तदा वस्तु एव आकारव्याजेन संगृहीतम् इति वस्तुसंग्रहभावी दोषः समापतति। अथ द्वितीयः, तदा विकल्पनिर्मितनिर्वस्तुकाकारमात्रस्य संग्रहात् पारंपर्येणापि क्वचित् वस्तुनि अप्रवृत्तेः भाव्यमानोऽपि असौ आकारो न पुरुषार्थे युज्यते इति पुरुषार्थोपयुज्यमानार्थाभिधानादकथनदोषः। तस्मात् यथोक्तार्थत्रितयसंग्रहेण प्रत्येकपक्षभाविदोषानुपपत्त्या श्रावकप्रत्येकबुद्धबोधिसत्त्वतथागताधिगमसंगृहीतः अविपरीतः सर्वाकारज्ञताद्यष्टाभिसमयक्रमः अभ्युदयनैःश्रेयसधर्मावाहकः समस्तो मार्गो विविधैः प्रातिहार्यैः सकलजनानुशासकेन भगवता महाकरुणामयेन प्रज्ञापारमितायां देशितः इत्यभिधेयम्[६]। यथोक्तमभिधेयम् आर्यशतसाहस्रिकाप्रज्ञापारमितादिसूत्रार्थं बोधिचित्तावावादादिप्रतिपत्तिरूपम् अष्टावस्थाभेदभिन्नं सर्वे संक्षिप्तरुचयः सत्त्वाः सुखेन संक्षेपतः प्रतिपद्यन्तामिति अष्टसाहस्रिकां भगवतीं भगवान् देशितवान्। अतः प्रतिपाद्यसंतानगतः संक्षेपतः समस्तार्थसुखावबोधः असाधारणम् इति क्रियाफलं प्रयोजनम्। यथोक्तमभिधेयं सर्वाकारज्ञतादिमार्गमनादिभवभाविभावाभिनिवेशविषदूषिताशयैः[७] अनभ्यस्तसमस्तभावनैरात्म्यभावनैः हरिहरहिरण्यगर्भादिभिः अनधिगतं प्रज्ञापारमिताश्रवणात् सुखेन श्रोत्रेण ज्ञानेनाव-

१ W नैव. २ W स प्रज्ञापारमिताप्रद°. ३ W दर्शनीयः. ४ W यत्. ५ W संभवति. ६ B अभिधेयः. ७ W °श्रयैः. ८ W वस्तु°.

धार्य, पटुतरानुभवाहितवासनाप्रभवस्मरणप्रत्यये समारोप्य, चिन्तामयेन निश्चित्य, भावनामयेन भावयन्–

तस्माद्भूतमभूतं वा यद्यदेवाभिभाव्यते।
भावना[1]परिनिष्पत्तौ तत्स्फुटाकल्पधीफलम्॥

5 इति न्यायात् संवृतिपरमार्थसत्याश्रयेण दानादिशुभसंचयवान् स्व[2]परार्थसंपत्संपादनाहित[3]म् इति निर्वेधभागीयाद्यधिगमक्रमेण सर्वप्रकारं साक्षात्कुर्यात् इति अनुगुणोपायं क्रियाफलस्य फलं प्रयोजनम्। तथा चोक्तमभिसमयालंकारे–

B 6 W 5

सर्वाकारज्ञतामार्गः शा[4]सित्रा योऽत्र देशितः।
धीमन्तो वीक्षिषीरंस्तमनालीढं परैरिति॥ २॥
10 स्मृतौ चाधाय सूत्रार्थं धर्मचर्यां दशात्मिकाम्।
सुखेन प्रतिपत्सीरन्नित्यारम्भप्रयोजनम्॥ ३॥ इति।

तथागतगुह्यनिर्देशाधिकारेण सर्वथा भाद्रकल्पिकसर्वतथागतानां रूपकायसद्धर्मकायरक्षायां कृताधिकारत्वात् वज्रपाण्यभिषे[5]कादौ प्रत्यर्पितशासनत्वाच्च अन्येषां विशेषवचनाभावात् अडकवतीनिवासी दशभूमीश्वरो महावज्रधरः सर्वलोकानुग्रहाय प्रज्ञापारमितासूत्ररत्न[6]-
15 संगीतिं प्रत्यधीष्टवन्तमार्यमैत्रेयादिमहाबोधिसत्त्वगणम् "एवम्" इत्याद्याह, इति पूर्वाचार्याः। अन्ये तु अत्रैव परीन्दनापरिवर्ते "यथेयं जम्बुद्वीपे प्रज्ञापारमिता प्रचरिष्यति" इत्यादिना प्रत्यर्पितप्रज्ञापारमित[7]त्वादार्यानन्दः संगीतिकारः इति मन्यन्ते। तत्र एवम् इति निश्चयार्थाभिधायिना स्वानुरूपज्ञानावधारितनिखिलसूत्रार्थस्योपदर्शनपरेण एवमेतदिति अविपरीतत्वमाह। **मया** इति आत्मवचनेन भगवतः सकाशात्साक्षात् श्रवणम्, **श्रुतम्** इति
20 श्रोत्रवि[8]ज्ञानेन अनुभववचसा च। तथागतादृतेऽन्यस्यैवंभूतसमस्तधर्माधिगमसामर्थ्यवैकल्यादधिगमाभा[9]वः। एतच्च पदत्रयं भगवद्वचनादेव सूत्रारम्भे निर्दिष्टम्। तथा हि–भगवति परिनिर्वृते ना[10]नार्थाधिमुक्तिप्रभावितत्वात् दुर[11]नुबोधबुद्धत्वावाहकसौगतवचनप्रसरस्य अर्थाधिगमाभावे कथं कैश्चित्संगीतिः क्रियते, इति विनेयजनसंदेहापनयनकारिभिः तथागताधिष्ठानाधिष्ठितैः श्रावकादिभिः "कथं भगवन् अनागते काले धर्मः संगातव्यः" इति पृष्टेन
25 भगवता कृताविपरीतसाक्षाच्छ्रवणेन अनधिगतार्थेनापि धर्मसंगीतौ क्रियमाणायां न दोषः इत्यभिप्रायेणोक्तं धर्मसंगीतिसूत्रे– "एवं मया श्रुतमिति कृत्वा भिक्षवो मम धर्मः संगातव्यः। तथा संबन्धानुपूर्वी प्रतिपाद्या" इत्यादि। अतोऽपि वचनादेशकालादिवचनम्। तथा "शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत्" इत्यादिवचनं च भगवदनुज्ञयैव संगीतिकर्तृभिः कृतम्, इति न अबुद्धवचनत्वप्रसङ्गः। तथा च बुद्धवचने अबुद्धवचनं प्रक्षिप्तम् इत्ययमपि

B 7 W 6

30 दोषो दूरत एव कृतो[12]नवकाशः। अतश्च यथैव श्रुतं तथैव संगीतमित्युपपन्नम्। एवं च कृत्वा

१ W °बलनिष्पत्तौ. २ B स्वापरा°. ३ W °हितमतिः. ४ W शासिना. ५ W °षेकादेः. ६ Wom. °रत्न°. ७ B °मितात्वात्. ८ W श्रोत्रविज्ञानानुभववचसा. ९ W °भावत्वम्. १० W °नानाधि°. ११ W दुरवबोध°. १२ W कृतानवकाशः.

यत्कैश्चिदेवं मम देशितमिति वक्तव्ये कस्मादेवं मया श्रुतमित्यभिहितम् इति चोद्यं कृत्वा भगवद्देशनानुपपत्तेः इत्यादि युक्त्यन्तरं वर्णितम्, तन्नितरां न राजते इति प्रतिपादितम्। ननु च आर्यानन्देनोक्तं प्रदेशान्तरे "सन्ति भगवता सूत्राणि मत्समक्षं भाषितानि। सन्ति देवलोके भाषितानि। सन्ति परंपराभ्यागतानि, यानि मया एवंश्रुतिकया उद्गृहीतानि" इति। तानि च सर्वाण्यधिकृत्य "ब्रूहि त्वं महाप्रज्ञ, ब्रूहि त्वं सुगतात्मज, धर्मचक्रप्रवर्तनासूत्रं[1] 5 भगवता कुत्र भाषितम्" इति महाकाश्यपवचनावसाने बुद्धगुणानुस्मरणद्रवीकृतचित्तसंतानः साश्रुदुर्दिनवदनो व्यापिना स्वरेण आर्यानन्दः एवं मया श्रुतम् इत्याह। तत्कथं मयेत्यात्मवाचकेन साक्षाच्छ्रवणमिति? नैष दोषः, यतस्तथागताधिष्ठानदेशनायां तद्देशनावत् तत्सामर्थ्येनान्यतः श्रवणेऽपि भगवत एव सकाशाच्छ्रवणम्। अन्यतो वा श्रुत्वा धर्मधराप्रत्वादर्थनिर्णयं प्रति भगवांस्तेन पृष्टः, अतोऽर्थनिर्णयवशाद्भगवत एव सकाशात् श्रुतिरिति[2] कृत्वा 10 मयेत्याह। यत्तूक्तम्[3]—यन्न्वहं सर्वमेवंश्रुतिकया उद्दिशेयमिति, तद्ग्रन्थमधिकृत्य इति न दोषः। एवमुपोद्घातं कृत्वा इदानीं कदा[4] कुतः कुत्र कैः सह एवं सूत्ररत्नं त्वया श्रुतम्, इति प्रश्नात्मप्रामाण्यप्रतिपादनाय विसर्जयन्, देशकालपर्षद्देशिकसामग्री हि देशनायाः कारणमिति निदानमाह। एकस्मिन् समये श्रुतमेकस्मिन् काले इति पूर्वेण संबन्धः। एतेन सर्वकालमेवंविधचिन्तारत्नराजसमसूत्रोपलम्भाभावात् कादाचित्कत्वोपदर्शनेन दुर्लभत्वमस्याख्यातम्। 15 यद्वा—एकस्मिन् काले मयेदं सूत्ररत्नं श्रुतम्, अन्यदा अन्यदिति वक्रोक्त्या स्वगतं बाहुश्रुत्यं सत्त्वार्थं प्रति कारुणिकत्वैश्वराजन्यायेन आह संगीतिकारः। अथवा, एकस्मिन् क्षणे सर्वं श्रुतमित्यर्थः। स्वप्ने देवताद्याधिपत्यादल्पीयसापि कालेन वर्षशताद्युपलम्भवत् भगवदाधिपत्यात् निखिलसूत्रार्थावभासिनः समनन्तरप्रत्ययमनोविज्ञानप्रभवश्रोत्रविज्ञानस्य एकस्मिन् क्षणे समुद्भवात्। अनेनात्मनः प्रमाणपुरुषतामाह—यत्किंचिन्मम श्रोतव्यं तत्सर्वमेकस्मिन् क्षणे 20 मया श्रूयते अचिन्त्यविमोक्षमुखलाभित्वात्, न च विस्मर्यते इति। अत एव संगीतिकारस्य पश्चात् क्रमेण प्रवृत्तायां देशनायामन्यविनेयजनवर्गानुग्रहार्थमन्तरा सदा समाधानासंभवेन कथंचिदव्याकृतस्य विषयान्तरावलम्बिनश्चेतसः संभवेऽपि न अविकले सूत्रे संगीतिरुत्तरकालं विरुध्यते। तथागताधिपत्येन संपूर्णनिर्भासवतः प्रत्ययस्य आदावेव उपजातत्वात्। पुनस्त्वसौ शृणोति अतृप्ततया धर्मश्रवणामृतरसेन। परिशिष्टस्यापि विनेयराशेः किमेवं न भवति इति 25 चेत्, भवत्येव सागरनागराजपरिपृच्छानुसारेण परिशुद्धबोधिसत्त्वगणस्य, न तु सर्वेषाम्, विशिष्टभव्यतावैकल्येन तथाविधधारणाशक्त्यभावात्। कथं पुनरयमेकत्र देशनायां विभागः इति चेत्, देशना हि इयं संवृत्या वर्णपदनिर्भासिज्ञानात्मिकैव। सा यथाबलं सकृत् क्रमेण वा जायते इति न दोषः। अथवा—

देशान्तरविनेयार्थं तत्स्थानां[5] तर्पणाय च।
श्रावकानेकवासार्थमनासक्तिं[6] च दर्शयन्॥ 30

B 8 · W 7 · B 9

[1] W धर्मचक्रवर्तनं सूत्रं. [2] W श्रुतमिति. [3] W यदुक्तं. [4] W om. कदा. [5] W तत्स्थानाश्रयणाय. [6] W अनासक्तेश्च दर्शयन्.

देशानां चैत्यभावार्थं पुण्यार्थं चैव देहिनाम्।
इत्यादिज्ञापनार्थं[1] च बुद्धश्चरति चारिकाम्॥

इति परहितप्रवणमतित्वेन **एकस्मिन् समये गृध्रकूटे विहरति स्म** इत्युत्तरेण पदेन संबध्यते, अन्यदा अन्यत्र विहरणात्।

5 क्लेशकर्म तथा जन्म क्लेशज्ञेयावृती तथा।
येन वैपक्षिका भग्नास्तेनेह भगवान् स्मृतः॥

इत्यार्षोक्त्या नैरुक्तविधानेन क्लेशादिकं भग्नवानिति **भगवान्**।

अथवा,

ऐश्वर्यस्य समग्रस्य रूपस्य यशसः श्रियः।
10 ज्ञानस्याथ प्रयत्नस्य षण्णां भग इति श्रुतिः॥

—बुद्धभूमिशास्त्रम्

W 8 सोऽस्यास्तीति समग्रैश्वर्यादिमान् भगवान् विहरति स्मेति संबन्धः। **राजगृहे** अन्वर्थसंज्ञके प्रसिद्धस्थानविशेषे यस्तथागतः जिनजननींदेशनां प्रति अभिसंबोधिस्थानवत् बोधिसत्त्वादिमहासंनिपातभागेद्वहनासमर्थान्यदेशत्वेन अभिकाङ्क्षितो नानारत्ननिकरो **गृध्र-**
15 **कूटः**। पुण्यकामदेवादीनामष्टम्यादिषु पर्वसु यात्रां तनोति, इति नैरुक्तविधानात् **पर्वतः**।
B 10 तत्र **विहरति स्म**। नानाप्रकारर्द्धिप्रातिहार्येण लोकातिक्रान्ताद्भुतधर्मदेशनात्[2] आवर्ज्यदेशनाप्रातिहार्येण आशयानुशयपरिज्ञानात् परिपाच्य अनुशासनीप्रातिहार्येण यानत्रयवैनेय[3]सत्त्वानां विशेषेण स्मरणादिकारिणा मोचनादभिमतमर्थं कुर्वन् चतुर्भिः ईर्यापथदेशनासमापत्तिप्रतिसंलयनविहारैः कायवाक्कर्मधर्मसत्त्वालम्बनमनःस्वभावैः एवं विहृतवान्। ननु च भूतानद्य-
20 तनपरोक्षे काले लट् [पा० ३. २. ११८] स्मशब्दयोगे विहितः, न चात्र कालः संगीतिकारस्य परोक्षः, तत्कथं विहरति स्मेति प्रयोगः? सत्यम्, किं तु तदनन्तरम् अपरोक्षे च [पा० ३. २. ११९] इत्यनेनास्य साधुत्वम्। यदि वा—पूर्वव्याकरणानुरोधादन्यजनापेक्षया वा परोक्षोपलक्षणत्वाददोषः। तथा आमन्त्रयते स्मेत्यादि वाच्यम्। **महता** इति संख्या[4]गुणमहत्त्वयोगात्। महानुभावेन भिक्षूणां त्रैवाचिकेन कर्मणा ज्ञप्तिचतुर्थेनाघात[5]-
25 पञ्चमेन एहिभिक्षुत्वेन चो[6]पसंपन्नानां भिन्नक्लेशानां समूहेन।

बुद्धो[7] धर्मस्तथा संघो मारकोटिशतैरपि।
W 9 भेत्तुं न शक्यते यस्मात्तस्मात्संघोऽभिधीयते॥

इति **संघेन सार्धं** सहितः परिवृतो विहरति स्मेति संबन्धः। तत्र संख्यामहत्त्वम् **अर्धे** इत्यादिना आह। अभिधेयार्थः सुगमः। संख्यावचनं तु श्रावकपरिवाराणामानन्त्यात्

१ W° शमनार्थं. २ W °दर्शनात्. ३ B विनेय°. ४ B संख्यानु°. ५ W अनाघात°. ६ W वा for च. ७ W बुद्धधर्मौ तथा संघो.

संख्येयावधारणार्थम्। पूर्वं[1] प्रभूतार्थस्य समाससंख्याग्रहणाविस्मरणात् सुखावबोधार्थं बहु-श्रवणग्रहणभीरूणां श्रोत्रावधानार्थम्, अथवा परिमाणज्ञापनार्थमुपात्तम्। गुणमहत्त्वं सर्वैः इत्यादिनाह। सर्वे एवात्र पूजादक्षिणागुणप्रकर्षाद्यर्हतया अर्हन्तः। **क्षीणास्रवा** भवाग्रादासंसारं स्रवन्तीति कामभवाविद्यास्रवा यथायोगं तत्प्रतिपक्षानास्रवशीलादिस्कन्धलाभेन येषां ते क्षीणास्रवाः। निर्गतः क्लेशकर्मजन्मसंक्लेशाख्यः क्लेशो येषां ते **निःक्लेशाः**। यथासंख्यं 5 संप्राप्तशीलसमाधिप्रज्ञाविमुक्तिस्कन्धपरिपूरिभिः[2] दुश्चरिततृष्णादृग्दृष्टिभवबन्धनविमुक्त्या[3] सम्यगीर्यापथाभिज्ञाविक्रीडितदिव्यार्यविहारलाभैः यथाक्रमं स्वयं ते लोकस्य लोकः चित्तं च वशीभूतं येषाम्। स्वयं च सर्वबन्धनविगमस्वातन्त्र्यात् ये वशिनो भूतास्ते **वशीभूताः**। तृष्णाविद्यापक्षसर्वक्लेशोपक्लेशप्रहाणात् समाधिसमापत्तयः चेतोविमुक्तिः अर्हन्मार्गज्ञानं प्रज्ञाविमुक्तिरिति कृत्वा तृष्णाविद्यापक्षाणामभावेन यथाक्रमं रागविरागात् अविद्याविरागात् 10 चेतःप्रज्ञाविमुक्तिः, अतस्तल्लाभात्समापत्तिक्लेशावरणविमुक्त्या सर्वथा उभयभागविमुक्ताः **सुविमुक्तचित्ताः सुविमुक्तप्रज्ञाः**। शोकपरिदेवादिभयानामात्मानुवादपरानुवाददुर्गतिजीविका-[4] दण्डाश्लोकमरणभयानां लाभालाभाद्यष्टलोकधर्मोपलेपभयस्य स्वाधिगमपरिपन्थीभूताज्ञानसंशयमिथ्याज्ञानभयानां चाभावात् यथाक्रमं दुःखभयलोकधर्माज्ञानाशङ्काविगमात् निर्भयत्वेन **आजानेयाः**। त्रैविद्यादित्वविशिष्टधर्माधिगमयोगात् महाप्रधानभावेन **महानागाः**। शील- 15 समाधिप्रज्ञापरिपूर्या कृतमवश्यकर्तव्यं सर्वदुःखप्रमोक्षादिकृत्यम्, कृतं च आनुषङ्गिकं कर्तव्यं स्वेच्छाप्रतिबद्धवृत्तिधुतगुणादिकं करणीयं यैस्ते **कृतकृत्याः कृतकरणीयाः**। दुःखाद्यार्यसत्यचतुष्टयाधिगमाद्यथास्वं परिज्ञेयप्रहातव्यसाक्षात्कर्तव्यभावयितव्यानामभावेन अपहृताः सर्वथा अपनीताः स्कन्धक्लेशप्रतिज्ञोद्योगभारा यैस्ते **अपहृतभाराः**। भगवतः पश्चात् अनुप्राप्तः हिताहितप्राप्तिपरिहारलक्षणो द्विविधः स्वकोऽर्थः विद्याविद्याधिगमप्रहाणाभ्यां यैस्ते **अनुप्राप्तस्वकार्थाः**। परि समन्तात् यथासंभवमार्यमार्गेण क्षीणानि भवेन सह पुरुषसंयोजनात्प्रतिघादिनवसंयोजनानि येषां ते **परिक्षीणभवसंयोजनाः**। सम्यक् अविपरीतम् आ समन्तात् ज्ञानम् आज्ञा तत्त्वावबोधः, तया सुष्ठु विमुक्तं सर्वबन्धनविसंयुक्तं चित्तं येषां ते **सम्यगाज्ञासुविमुक्तचित्ताः**। सर्वत्र चेतसि नवानुपूर्वविहारसमापत्तिलक्षणे स्वातन्त्र्यात् वशिनस्ते च[5] ते परमपारमिं स्वगोत्रप्रकर्षपर्यन्तगतिं प्राप्ताश्चेति **सर्वचेतोवशिपरमपारमिप्राप्ताः**। अतः तैरेवंभूतैर्भिक्षुशतैः इति तृतीयान्तेन सर्वर्थो[6] संबन्धः कार्यः। सर्वे अर्हन्तः, कुतः? 25 क्षीणास्रवत्वात्। क्षीणास्रवाः निःक्लेशत्वात्। एवं यावत् सम्यगाज्ञासुविमुक्तचित्ताः, सर्वचेतोवशिपरमपारमिप्राप्तत्वात्। एवं पूर्वपूर्वस्योत्तरोत्तरं कारणम्। अतः सर्वपुरुषार्थपरिसमाप्तत्वान्नापरं विशेषणं वाच्यम् इत्येके। हतारित्वात् **अर्हन्तः**। प्रहीणक्लेशावरणत्वात् क्षीणास्रवाः। पुनः आस्रवक्षयप्रयासात्मकक्लेशाभावात् निःक्लेशाः। तदेवमेभिः पदैर्दोषा-

B 11 — W 10 — B 12 — 20

---

१ W om. पूर्व. २ W °परिकर्ष°. ३ W बन्धनात्. ४ W दुर्गत्यजीवि°. ५ B चेतः for च ते. ६ W सर्वसंबन्धः.

त्यन्तप्रहाणलक्षणं गुणमभिधाय इदानीं प्रतिपक्षलक्षणं गुणं वशीभूतैरित्यादिना आह। अभिज्ञादिवैशेषिकगुणाभिनिर्हाराभ्यामशैक्षशमथविपश्यनाभ्यां योगात् त्रैलोक्यानुग्रहक्षमत्वेन सत्त्वार्थधुरि नियोक्तुं भगवता वशीभूताः। सर्वप्रकारतृष्णादृष्टिबन्धनविमोक्षात् यथाक्रमं सुविमुक्तचित्ताः सुविमुक्तप्रज्ञाः। अकुटिलम् ऋजुना मार्गेण यावद्गम्यगमनात् B 13 5 आजानेयाः। क्लेशसंग्रामविजयित्वात् महानागाः। पुनर्जेतव्याभावात् कृतकृत्याः। युक्तरूपकार्यसंपादनात् कृतकरणीयाः। पौनर्भविकदुःखानुपार्जनात् अपहृतभाराः। निर्वाणसाक्षात्करणात् अनुप्राप्तस्वकार्थाः। भवहेतुसमुद्घातात् परिक्षीणभवसंयोजनाः। दर्शनभावनामार्गनिष्ठोत्कर्षात् सम्यगाज्ञासुविमुक्तचित्ताः। वैशेषिकाभिज्ञादिगुणवशित्वस्वगोत्रोत्कर्षगमनात् सर्वचेतोवशिपरमपारमिताप्राप्ताः[1] इति तथैव संबन्धः। पूर्वपूर्वस्योत्तरोत्तरं W 11 10 कारणम्। "विशेषणनिष्ठाभिधाने च न पुनर्विशेषणं वाच्यम्, अतो न अपर्यवसानदोषः" इति वार्तिककारः॥

धर्मधराग्रत्वात् यथोक्तसंख्यान्तर्गतोऽपि नैवंगुणयुक्तः इत्याह—एक॰ इत्यादि। नित्यस्य कार्यकारणलक्षणवास्यवासकभावानुपपत्तेः[2] शुभाशुभवासनाभिः पूर्णः अनित्यः तदनुरूपां गतिं लाति गृह्णाति, इति नैरुक्तविधानात् प्रबन्धतया एकः पुद्गलः। यदुतशब्दो 15 निपातः उपदर्शनपरः। आकाङ्क्षितायुर्भवतु इत्यायुष्मान् हितसुखपूजावाचकः। सर्वागमधारणबुद्ध्योपस्थानेन प्राप्तहर्षत्वात् आनन्दः। तदुक्तम्—एष आयुष्मानार्यानन्दो देशनाकाले स्रोतआपन्नत्वेन यथोक्तगुणवैकल्यात् एनमेकं पुद्गलं स्थापयित्वा परित्यज्य इति। परिसमाप्तकार्यत्वेन स्वहितैषितया तथागताधिष्ठानेन सर्वसंपत्तेश्च।

पञ्चादीनववैकल्यारतिरागादिघट्टितः।
20 लाभादितृष्णाप्रियतानुकम्पागुरुगौरवैः॥
कौतूहलाद्विशेषार्थमाप्त्या रत्नकारणात्।
चैत्यादिवन्दनार्थं च भिक्षुश्चरति चारिकाम्॥

B 14 इति पञ्चदशचारिकाकारणवैकल्यात्स्वयं न क्वचित् गच्छन्ति, केवलं कृतज्ञताधर्मगौरवादिभिर्भगवतोऽन्तिके सदा विहरन्ति इति निजत्वात् स्वेयं महाश्रावकपर्षदुक्ता।

25 गम्भीरामितसूत्रान्तरत्नश्रवणतृष्णया।
लोकधातुष्वनन्तेषु भ्रमन्ति कृतिनो यतः॥
तद्यानभाषणादेव बहवस्ते समागताः।
तेनैवागमसूत्रेषु न पैद्यन्ते[3] जिनात्मजाः॥ इत्येके।

पदपरमविस्तररुचिसत्त्वानुग्रहार्थं देशिता आर्यशतसाहस्रिका। सर्वार्थसंग्रहेण मध्य30 रुचिविपञ्चितज्ञसत्त्वानुकम्पया आर्यपञ्चविंशतिसाहस्रिका देशिता। तस्याश्च सर्वार्थोपसंहारेण

---

१ W om. ॰प्राप्ताः. २ W वाच्यवाचक॰. ३ W पठ्यन्ते.

उद्घाटितज्ञसंक्षिप्तरुचिसत्त्वहितोदयेन आर्याष्टसाहस्रिका भाषिता इति । अतः तदनुसारेण　W 12
दृष्टधर्मसंक्षिप्तरुचिः भिक्षुभिक्षुण्युपासकोपासिकापर्षत् । तथा शुद्धाध्याशयिनः साभोगा[१]-
निमित्तविहारिणः अनाभोगा[२]निमित्तविहारिणः नियतचर्याप्रतिपन्नाः सम्यगेकजातिप्रतिबद्धाश्च
इत्येवमप्रमेयमहाबोधिसत्त्वपर्षदपि ज्ञेया इत्यपरे । तथा चाह आचार्यदिग्नागः—

इत्थमष्टसहस्रीयमन्यूनार्थैर्यथोदितैः ।　5
ग्रन्थसंक्षेप इष्टोऽत्र त एवार्था यथोदिताः ॥ इति ॥

प्रज्ञापारमितापिण्डार्थः- ७

तथा तदनुसारेणैव मन्दभाग्यानां परिवाराद्यभावे दौर्मनस्यनिवृत्त्यर्थमल्पेच्छतानुरागार्थं च स्वयं भगवान् धर्मासनं प्रज्ञाप्य समाहितैरेव गम्यै[३]मिदं सूत्ररत्नम् इति दर्शयन् वज्रपर्यङ्केन अतिघटितत्वादिदोषरहितेन उपविश्य, ऋजुना कायेन धर्मचक्रमुद्राबन्धपूर्वकं नासाग्रदृष्टि- 10
न्यादेकाग्राममभिमुखीं स्मृतिं विधाय सर्वसमाधिसंग्रहात् समाधिराजं नाम समाधिं समापद्य　B 15
उत्थितः। ततो मैत्रीकरुणानयनाभ्यामिमं लोकं दुःखार्तमभिसमीक्ष्य मृदुमध्याधिमात्रभेदेन यथा-
भव्यतया च सर्वत्रगा बुद्धत्वपर्यवसानफला देशनेयम् इति विनेयवर्गं बोधयन्, यथायोगमङ्ग-
प्रत्यङ्गेभ्यः सर्वरोमकूपेभ्यः प्रकृतिप्रभायाश्च षष्टिषष्टिरश्मिकोटीनियुतशतसहस्रनिर्माणेन दशसु
दिक्षु गङ्गानदीवालुकोपमान् लोकधातूनवभास्य सर्वसत्त्वांश्च अनुत्तरसम्यक्संबोधौ निय- 15
तान् कृत्वा जिह्वेन्द्रियेण इमं त्रिसाहस्रमहासाहस्रलोकधातुं व्याप्य तस्मात् स्फु[४]रितानेकरश्मिसमू-
हेषु पद्मगर्भतथागताधिष्ठानपूर्वकं षट्पारमिताप्रतिसंयुक्तधर्मदेशनया पूर्ववत् सत्त्वार्थकरणात्तद-
र्थिजनसंनिपाताय मातृदेशनानिमित्तमव्याहतं दर्शितवान् । तदनु तथैव पर्षच्छारद्यादिसर्वभय-
विगमात् सिंहविजृम्भितं नाम समाधिं समापद्य अशुद्धे स्थाने संवृतिपरमार्थसत्यविभागाकुशले
च श्रोतरि [न] कथनीया जिनजननी इति धर्मभाणकानवबोधयन् तादृशमृद्ध्याभिसंस्कार- 20
मभिसंस्कृतवान्, येन अष्टादशमहानिमित्तपूर्वकं तथैव सर्वलोकधातुसंगृहीताष्टाक्षणविनाशात्　W 13
स्थानपरिशोधनेन तत्र[५]सत्त्वा देवमनुष्यसभागतायामुपपद्य जातिस्मराः प्रीतिप्रामोद्येन स्वस्व-
बुद्धक्षेत्रेषु उपसंक्रमणादिपूर्वकं बुद्धान् भगवतो नमन्ति स्म । सर्वे च सत्त्वाः व्यपगतचक्षुरादिवै-
कल्यदोषा दशकुशलकर्मपथसेविनः चतुर्ब्रह्मविहारनिरतास्तृतीयध्यानसमापन्ना इव सुखलाभिनो
जिनजननीश्रवणयोग्या भूत्वा एवंरूपया प्रज्ञया समन्वागता भवन्ति स्म, यदेवमुदानमुदान- 25
यन्ति स्म—साधु[६] दानम्, साधु दमः, साधु शमः, साधु संयमः, साधु चीर्णो ब्रह्मचर्यवासः, साधु
प्राणिभूतेष्वहिंसा इति द्विविधं समाधिप्रातिहार्यम् । तदनु भगवान् प्राप्तसमस्तज्ञेयाधिपत्येन　B 16
इयं प्रज्ञापारमिता देशयितुं शक्यते इति कथयन् विनेयानामादरोत्पादनाय पूर्ववत् सर्वलोक-
धातूनभिभूय प्रभावर्णश्रीतेजोभिर्यथाक्रमं स्था[७]नभासनतपनविरोचनं सर्वपर्वतानभिभूय सुमेरुः
पर्वतराज इव कृतवान् । तथैव ईदृशैरेव इयं बोद्धुं देशयितुं च शक्यते न मादृशैः, इति 30

१ W साभोगनिमित्त°. २ W अनाभोगनिमित्त°. ३ W अवगम्यम्. ४ W स्फारितानेक°.
५ W तत्र ते सत्त्वा. ६ B om. साधु दानम्. ७ W शोभन° for स्थान°.

यत्नं न कुर्युर्विनेयाः, ततो मनुष्या एव सर्वं संपादयितुमलम् इत्युत्साहसंजननार्थमेतल्लोक-
धातुसत्त्वात्मभावसमानमात्मभावं प्राकृतमुपदर्शितवान्। ततो जातप्रसादातिशयैः देवमनुष्यैः
भूतार्थभावनाभ्यासात् कालान्तरेण ईदृशमेव धर्माधिगमं पश्यद्भिः भगवान् पुष्पादिभिः
पूजितः। यथा देयाः परिभुज्यन्ते तथा सुपरिणामितवस्तुपरिभोगात् चित्तप्रसादेन पुण्याभि-
5 वृद्धौ प्रमृष्टकायादितया[1] प्रज्ञासंभारो[2] विनेयानां सुखेनोत्पद्यते इत्यनुग्रहार्थं तानि च पुष्पादीनि
त्रिसाहस्रमहासाहस्रलोकधातुप्रमाणसर्वालंकारशोभनकूटागाररूपेण एतल्लोकधातोरतीव शोभा-
कारेण स्वमूर्ध्नि भगवता अधिष्ठितानि। तथा च तान्यधिष्ठाय अक्षपिताहंमानवासनानामेका-
W 14 भिलक्ष्यधर्मदेशनायां दौर्मनस्यादिना सम्यक्प्रतिपत्तिवैकल्यमिति पूर्ववत् सर्वलोकधातुस्थ-
सत्त्वानां पुरतः सर्वथा उद्ग्रहणाद्यर्थं तथा सर्वसत्त्वसमताप्रवृत्तावपि उत्तरत्र यथाभव्यतया
10 चिरक्षिप्रादिभेदेन केषांचिदधिगमव्याकरणादौ अनुनयाद्यध्यारोपपूर्वकं नास्मासु
चित्तान्यथात्वं कार्यम् इति प्रदर्शनार्थं सर्वाकारधर्मदेशनापरं सममात्मभावं प्रदर्शितवान्
B 17 सुगतराजः। इति द्विविधमृद्धिप्रातिहार्यम्। तदनु संक्लिष्टलोकधातूत्पादात् संभवत्प्रज्ञादि-
प्रकर्षत्वाच्च सर्वबुद्धैर्न समानोऽयं भगवान्, इति सर्वाकारजगदर्थकरणाय मन्दधीजनाशङ्का-
मपाकुर्वन् समानप्रस्थानसंभारपरिपूर्णबोधिसत्त्वानां प्रतिबुद्धक्षेत्रमनुत्तरसम्यक्संबोधिसंभवात्
15 सर्वबुद्धैः सह—

संभारधर्मकायाभ्यां जगतश्चार्थचर्यया।
समता सर्वबुद्धानां नायुर्जातिप्रमाणतः॥

इति आत्मनस्तुल्यतां कथयन् तथा नानालोकधातूत्पन्नकृतप्रणिधानस्वविनेयबोधि-
सत्त्वानामविपरीतसमस्तप्रवचनरत्नसूत्रदेशनया संभारपरिपूरणोपायोपदेशार्थं[3] तथा स्मित-
20 मकरोद्भगवान् येन अन्योन्यं सर्वलोकधातुस्थसत्त्वाः सर्वथोन्मूलितातुल्यत्वसंशयबीजाः सपर्ष-
त्समूहान् इतरेतरलोकधातवीयबुद्धान् भगवतः समुपलभ्य[4] तुल्यतां प्रतिपन्नाः। तथा महा-
वभासादिनिमित्तोपलम्भपूर्वकं गुर्वायत्ततया न सहसा गमनं युक्तमिति तदर्थं दशदिग्लोक-
धातवीयजिनात्मजास्तान् स्वस्वतथागतानुपसंक्रम्य पादाभिवन्दनपुरःसरा एव—भगवन्[5],
कस्यायमनुभावः? इति प्रश्नस्य विसर्जनानन्तरं प्रशंसावाक्यश्रवणेन विदितस्वाधिपतिभद्राशयाः
25 तादृग्विधसपरिवारभगवद्दर्शनाद्यर्थं गमिष्यामो वयं भगवन् इत्यालोच्य गृहीतस्वाधिपतिधर्म-
गौरवप्रेषितपूजार्थनानारत्नपद्मवार्तासंदेशाल्पाबाधतादिपरिपृच्छावचनाः पञ्चकषायोत्सदत्वा-
दस्य लोकधातोः, अप्रमादविहारिणो भविष्यथ इत्यनुशासनीं प्रतिगृह्य अन्तरालवर्तिबुद्धानां
W 15 पूजामभिनिर्वर्तयन्तः अपरिमितपरिवाराः समागम्य अनुष्ठितपादवन्दनापूर्वकपूजाप्रसराः
B 18 स्वस्वस्थानीभूय कथितस्वस्वतथागतवार्तावचनाः पद्मानि निर्यातितवन्तः, इति द्विविधं
30 धर्मावभासनप्रातिहार्यम्। तदनु भगवान् तानि पद्मानि अपरिशुद्धलोकधातूत्पादेऽपि

१ W प्रशुचि° for प्रमृष्ट°. २ W ज्ञान° for प्रज्ञा°. ३ W °पूरणाद्युपदेशनार्थं.
४ W समुपलक्ष्य. ५ B om. भगवन्.

तद्दोषानुपलेपज्ञापनाय सद्धर्मपूजार्थं प्रहितानि इति कृत्वा स्वस्वदिक्षु प्रक्षिप्य तेषु च पद्मेषु तथागताधिष्ठानपूर्वकं जिनजननीदेशनया अनुत्तरसम्यक्संबोधौ सर्वसत्त्वान्नियतीकर्तुं सद्धर्मपूजायामुपनाम्य समागतयथाभव्यमहाबोधिसत्त्वादिसंनिपातमवगम्य आदिमध्यान्तकल्याणत्वादियुक्तां प्रज्ञापारमितां देशितवानिति त्रिनिर्दानं प्रतिपत्तव्यम् । अत्र तु उद्घटितज्ञसंक्षिप्तरुचिसत्त्वानुग्रहदेशनाधिकारात् नोक्तम् । तदुक्तम्—'यदा भगवान् राजगृहे महानगरे 5 गृध्रकूटे पर्वते यथोक्तपर्षदा परिवृतो धर्मं देशयन् विजहार, तदा भगवतः सकाशात्तत्रैव स्थाने तया पर्षदा सार्धम् एवं मया सूत्ररत्नं श्रुतम्' इति सर्वैरप्येतैः लोकव्यवहारानुवर्तनात् संकीर्तितदेशादिभिः संगीतिकारेण आत्मप्रामाण्यप्रतिपादनात् विनेयानां सादरश्रवणचिन्तनादिकमुक्तम् । तथा चाह आचार्यदिग्नागः—

श्रद्धावतां प्रवृत्त्यङ्गं शास्ता पर्षच्च साक्षिणी ।　　10
देशकालौ च निर्दिष्टौ स्वप्रामाण्यप्रसिद्धये ॥
संगीतिकर्त्रा लोके हि देशकालोपलक्षितम् ।
ससाक्षिकं वदन् वक्ता प्रामाण्यमधिगच्छति ॥ इति ॥

—प्रज्ञापारमितापिण्डार्थः—३-४

तत्र　　15

प्रयोजनं सपिण्डार्थं पदार्थः सानुसंधिकः ।
सचोद्यपरिहारश्च वाच्यः सूत्रार्थवादिभिः ॥

इति पञ्चभिराकारैः सूत्रं व्याख्यातव्यमिति व्याख्यायुक्तौ निर्णीतम्, इत्यभिहितमेव प्रयोजनम् । अतः श्रोतृजनसुखप्रतिपत्तये कृतविभागार्थस्य च शास्त्रस्य सुकरं व्याख्यातॄणां　B 19
व्याख्यानमिति समासनिर्देशेन पिण्डार्थस्तावदभिधीयते । तत्र बुद्धत्वार्थिनो बोधिसत्त्वस्य 20　W 16
चित्तोत्पादादिसर्वाकारपरिज्ञानाय आदौ फलनिर्देशेन सर्वाकारज्ञता कथिता । सा न विना श्रावकमार्गादिपरिज्ञानेन इति तदनु मार्गज्ञता । सापि न सर्ववस्तुपरिज्ञानमन्तरेण, इति तदनन्तरं सर्वज्ञता । ततः सर्वथा एवंप्राप्तत्रिसर्वज्ञतावशित्वार्थं पुनः सर्वाकारमार्गवस्तुज्ञानप्रकारसंग्रहेण त्रिसर्वज्ञताभावनया अधिगम्य सर्वाकाराभिसंबोधं विशेषमार्गेण प्रकर्षपर्यन्ताधिगमलाभान्मूर्धाभिसमयमासाद्य व्यस्तसमस्तभेदेन विभावितानर्थान् प्रगुणीकृत्य निश्चयाय 25 साक्षात्करोति इति विदित्वा अनुपूर्वाभिसमयं पुनरपि स्वभ्यस्तीकरणाय विभावितैकक्षणाभिसंबोधानन्तरं द्वितीये क्षणे धर्मकायाभिसंबोधं सम्यगधिगच्छतीति समासतोऽष्टाभिसमयः प्रज्ञापारमितायां पिण्डार्थः ।

तथा चोक्तम्—

**प्रज्ञापारमिताष्टाभिः पदार्थैः समुदीरिता ।**　　30
**सर्वाकारज्ञता मार्गज्ञता सर्वज्ञता ततः ॥ ४ ॥**

---

१ B om. त्रि॰.

**सर्वाकाराभिसंबोधो मूर्धप्राप्तोऽनुपूर्विकः ।**
**एकक्षणाभिसंबोधो धर्मकायश्च तेऽष्टधा ॥ ५ ॥ इति ॥**

समासनिर्दिष्टस्य व्यासतश्चाख्यानात् स्वाख्यातत्वम्, इति पुनरपि व्यासतः पिण्डार्थोऽभिधीयते । तत्र सम्यक्संबोधिमधिगन्तुकामेन आदौ शून्यताकरुणागर्भं बोधिचित्तं 5 प्रणिधिप्रस्थानस्वभावं द्विविधमुत्पाद्य चित्तोत्पादतदाक्षिप्तधर्मनिष्पत्तये संप्राप्तगुणपरिपालनार्थेनाभिवृद्ध्यर्थं प्रतिपत्त्यादिष्ववादग्रहणानन्तरं श्रुतादिप्रकर्षप्राप्तमोक्षभागीयश्रद्धादिलक्षणकुशलमूलादूर्ध्वं चतुःसत्यप्रतिवेधानुकूलं चतुर्विधनिर्वेधभागीयं लौकिक[1]भावनामयं निश्चित्य प्रतिपत्तिमतो यथोक्तनिर्वेधभागीयमन्यदपि दर्शनमार्गादिकम् इति प्रतिपत्तेराधारेण धर्मधातुस्वभावेनैव बोधिसत्त्वेन सर्वधर्मालम्बनपूर्वकं सर्वसत्त्वाग्रताचित्तमहत्त्वं प्रहाण[2]महत्त्वमधिगममहत्त्वं चाधिकृत्य प्रतिपत्तिः प्रवर्तते, इत्यभिलक्ष्यस्थानीयः त्रिविधः समुद्देशो ध्येयः । तदनु तत्प्राप्तये त्रिसर्वज्ञताविषये सामान्येन शुक्लधर्माधिष्ठाना सर्वाकाराभिसंबोधादौ चतुर्विधेऽभिसमये प्रत्यभिसमयं षट्पारमिताधिष्ठाना च क्रियाप्रतिपत्तिरित्येवं यथावत्प्रयोगदर्शनभावनाविशेषमार्गस्वभावानां संनाहादिप्रतिपत्तीनां मध्ये वीर्यरूपतया प्रथमतः संनाहप्रतिपत्त्या संनह्य प्रस्थानप्रतिपत्त्या समस्तमहायानधर्माभिरोहणपूर्वकं संभारप्रतिपत्त्या संभृत15 संभारेण निर्याणप्रतिपत्तिरधिगन्तव्या, इत्येवं बुद्धत्वावाहकधर्माधिगमानुक्रमेण प्रकाशनात्तथागतानामिति प्रथमपरिवर्ते संगृहीता सर्वाकारज्ञता ।

तथा चोक्तम्—

**चित्तोत्पादोऽववादश्च निर्वेधाङ्गं चतुर्विधम् ।**
**आधारः प्रतिपत्तेश्च धर्मधातुस्वभावकः ॥ ६ ॥**
20 **आलम्बनं समुद्देशः संनाहप्रस्थितिक्रिये ।**
**संभाराश्च सनिर्याणाः सर्वाकारज्ञता मुनेः ॥ ७ ॥ इति ॥**

तदनु सर्वाकारज्ञताधिगमो न विना सर्वमार्गाधिगमनम्[3], इति मार्गज्ञतां दर्शयितुं स्वप्रकृतिप्रभाभिः देवादीनां वैपाकिकप्रभाया मलिनीकरणेन लोकपालत्वाद्यभिमाननिराकरणात् वक्रोक्त्या निहतमानसंतान एव पुद्गलः अधिगमेऽस्या भव्यः, इत्याधारकथनानन्तरं 25 स्व[4]विषयप्रतिनियमादिकमभिधाय मार्गज्ञताधिकारे सर्वे मार्गाः परिपूरयितव्याः, इति श्रावकप्रत्येकबुद्धमार्गप्रतिपादनपूर्वकमैहलौकिकादिगुणैरुपेतो महानुशंसो बोधिसत्त्वानां दर्शनमार्गो भगवता अभिहितः । ततोऽनन्तरं भावनामार्गाभिधाने सति स्वल्पवक्तव्यत्वेन फलनिम्नत्वेन च विनेयप्रवृत्तेः, तस्य कारित्रमादौ निर्दिश्य सास्रवानास्रवरूपेण द्विविधो भावनमार्गः, इति अधिमुक्तिपरिणामनानुमोदनामन[5]स्कारभेदेन त्रिविधसास्रवभावनामार्गमध्ये काञ्चनपिण्डमिव 30 धातुभ्यः पुण्यमभिसंस्करोति, इति आदौ अभिमुक्तिमनस्कारमुक्त्वा तद्भावकबोधिसत्त्वो-

१ W लौकिकं. २ B प्रमाण° for प्रहाण°. ३ W सर्वमार्गप्रज्ञानेन. ४ W om. स्व°. ५ B om. °मनस्कार°.

त्साहनाय एवमधिमुक्तैः बुद्धादिभिः स्तुत्यादयः क्रियन्ते इत्युत्तरोत्तराभिनन्दनरूपाः स्तुत-स्तोभितशंसिताः कथिताः। तदनु स सम्यक्संबोधेः तत्पुण्यमुपकरणीकरोति सुवर्णकार इवा-भरणम्, इति परिणामनामनस्कारपूर्वकं स्वपरपुण्यक्रियासमताप्रतिलाभार्थमनुमोदनामनस्कार-मभिधाय प्रयोगविशुद्धिभेदेन द्विविधोऽनास्रवो भावनामार्गः इति प्रथममभिनिर्हारलक्षणं प्रतिपाद्य द्वितीयोऽत्यन्तविशुद्धिलक्षणो देशितः इति द्वितीयपरिवर्तमारभ्य यावदष्टमपरिवर्ते 5 W 18
"य एवमस्य बोधिसत्त्वस्य महासत्त्वस्य[1] भगवन् अवबोधः, इयमस्य प्रज्ञापारमिता। भगवानाह—अत्यन्तविशुद्धत्वात् सुभूते" इत्येतत्पर्यन्तेनोक्ता बोधिसत्त्वानां मार्गज्ञता। B 22

तथा चोक्तम्—

**ध्यामीकरणतादीनि शिष्यखड्गपथौ च यौ।**
**महानुशंसो दृङ्मार्ग ऐहिकामुत्रिकैर्गुणैः॥ ८॥** 10
**कारित्रमधिमुक्तिश्च स्तुतस्तोभितशंसिताः।**
**परिणामेऽनुमोदे च मनस्कारावनुत्तमौ॥ ९॥**
**निर्हारः शुद्धिरत्यन्तमित्ययं भावनापथः।**
**विज्ञानां बोधिसत्त्वानामिति मार्गज्ञतोदिता॥ १०॥ इति॥**

ततः सर्ववस्तुपरिज्ञानं विना न मार्गपरिज्ञानं[2] सम्यक्, इति सर्वज्ञतां दर्शयितुं 15
प्रज्ञया संसारादीनवदर्शनेन कृपया च सत्त्वार्थकरणपारतन्त्र्येण बोधिसत्त्वानां भवशमानव-स्थानात् व्यतिरेकनिर्देशेन नैवं[3] श्रावकप्रत्येकबुद्धानामिति निर्देशपूर्वकं तत्समर्थनार्थमेव अन्वयव्यतिरेकतया निमित्तानिमित्तग्रहणात् जिनजनन्या निर्दिष्टदूरेतरभावेन उपलम्भानुप-लम्भाभ्यां विपक्षप्रतिपक्षौ निर्दिश्य तयोर्विभावनायां पुनरन्वयमुखेनैव बोधिसत्त्वानां प्रयोगकथनात् अनन्तरं तत्समताप्रतिपादनपूर्वको ध्येयो दर्शनमार्गोऽभिहितः इत्यष्टमपरिवर्ते 20
"आयुष्मान् सुभूतिराह" इत्यारभ्य यावन्नवमपरिवर्ते "नापि कस्यचिद्धर्मस्य प्रवर्तनं वा निवर्तनं वा। एवमियं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमिता" इत्येतत्पर्यन्तेनोक्ता श्रावकप्रत्येकबुद्धानां सर्वज्ञता। तथा चोक्तम्—

**प्रज्ञया न भवे स्थानं कृपया न शमे स्थितिः।**
**अनुपायेन दूरत्वमुपायेनाविदूरता॥ ११॥** 25
**विपक्षप्रतिपक्षौ च प्रयोगः समतास्य च।** B 23
**दृङ्मार्गः श्रावकादीनामिति सर्वज्ञतेष्यते॥ १२॥ इति॥**

तदनु परिज्ञातत्रिसर्वज्ञतावशित्वार्थं पुनः सर्वाकारमार्गवस्तुज्ञानप्रकारसंग्रहेण त्रिसर्व-ज्ञतां भावयति, इति सर्वाकाराभिसंबोधं दर्शयितुमाकारविशिष्टप्रयोगैर्भावयितव्या यथासंख्यं W 19
गुणदोषादानत्यागेन लक्षणज्ञानपूर्वकमुत्पन्नमोक्षभागीयकुशलमूलेन इत्याकारादीन् निर्दिश्य 30
विवर्धितमोक्षभागीयस्य उत्साहिनो निर्वेधभागीयाद्यधिगमद्वारेण प्राप्तशैक्षावैवर्तिकबोधिसत्त्व-

१ W om. महासत्त्वस्य. २ B मार्गज्ञता° for मार्ग°. ३ B चैवं for नैवं.

गणधर्मस्य बुद्धत्वनिमित्तसंसारनिर्वाणसमताभावनापूर्वकं निष्पादितस्वबुद्धक्षेत्रविशुद्धौ उपाय-कौशलेन यथाभव्यतया अनाभोगाद्बुद्धकृत्यं प्रवर्तते इति निर्वेधभागीयादयो देशिताः इति नवमपरिवर्ते "एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्—महापारमितेयम्" इत्यारभ्य यावद्विंशतितमपरिवर्ते "ते ते बोधिसत्त्वा महासत्त्वा[1] असंहार्याः सदेवमानुषासुरेण लोकेन"

5 इत्येतत्पर्यन्तेनोक्तो बुद्धादीनां यथासंभवं सर्वाकाराभिसंबोधः।

तथा चोक्तम्—

आकाराः सप्रयोगाश्च गुणा दोषाः सलक्षणाः।
मोक्षनिर्वेधभागीये शैक्षोऽवैवर्तिको गणः॥ १३॥
समताभवशान्त्योश्च क्षेत्रशुद्धिरनुत्तरा।

10 सर्वाकाराभिसंबोध एष सोपायकौशलः॥ १४॥ इति॥

B 24 तदनन्तरं प्राप्तसर्वाकाराभिसंबोधस्य विशेषमार्गेण प्रकर्षपर्यन्तोऽधिगमः इति मूर्धा-भिसमयं दर्शयितुं यथासंख्यम् ऊष्मादिचतुर्विधनिर्वेधभागीयस्वभावलिङ्गविवृद्धिनिरूढिचित्त-संस्थितिप्रतिपादनपूर्वकं प्रवृत्तिनिवृत्तिपक्षाधिष्ठानौ द्रव्यप्रज्ञप्तिसत्पुरुषाधिष्ठानौ च यथाक्रमं द्वौ द्वौ ग्राह्यग्राहकविकल्पौ, इति प्रहेयतया चतुर्विधं विपक्षं तत्प्रहाणावस्थाविशेषं च

15 उपादेयतया चतुर्विधं प्रतिपक्षं प्रत्येकं दर्शनभावनामार्गे निर्दिश्य, बुद्धत्वप्राप्तेरव्यवधानेन आनन्तर्यसमाधिः उभयसत्याश्रितोपायकौशलेन निराकरणीयविप्रतिपत्त्या सह देशितः इति विंशतितमपरिवर्ते "सचेद्बोधिसत्त्वो महासत्त्वः स्वप्नान्तरगतोऽपि" इत्यारभ्य यावदेकोनत्रिंश-त्तमपरिवर्ते "कुशलाकुशलधर्मापरिमाणतया प्रज्ञापारमितापरिमाणता अनुगन्तव्या" इत्येत-त्पर्यन्तेन सकारणेनोक्तो मूर्धाभिसमयः। तथा चोक्तम्—

W 20 20 लिङ्गं तस्य विवृद्धिश्च निरूढिश्चित्तसंस्थितिः।
चतुर्धा च विकल्पस्य प्रतिपक्षश्चतुर्विधः॥ १५॥
प्रत्येकं दर्शनाख्ये च भावनाख्ये च वर्त्मनि।
आनन्तर्यसमाधिश्च सह विप्रतिपत्तिभिः॥ १६॥
मूर्धाभिसमयः इति॥

25 तदनु प्राप्तमूर्धाभिसमयो व्यस्तसमस्तत्वेन अधिगतानर्थाननुपूर्वीकृत्य स्थिरीकरणाय विभावयति, इति सर्वधर्मसंग्राहकदानादित्रयोदशप्रकारतया एकोनत्रिंशत्तमपरिवर्ते "सिंहनाद-नदनतया प्रज्ञापारमितानदनता अनुगन्तव्या" इत्येकेनैव पदेन सकारणेनोक्तः अनुपूर्वा-भिसमयः। तथा चोक्तम्—

त्रेधा दशधा चानुपूर्विकः। इति॥

B 25 30 तदनन्तरं विभावितानुपूर्वाभिसमयस्य स्वभ्यस्तीकरणाय तेषामेवाधिगतानां धर्माणा-मविपाकानास्रवसर्वधर्मैकक्षणलक्षणादिचतुर्विधभेदानामेकेनैव क्षणेनाभिमुखीकरणम् इति

[1] W om. महासत्त्वा.

तत्रैव परिवर्ते "सर्वधर्माकोप्यतया प्रज्ञापारमिताकोप्यता अनुगन्तव्या" इत्येकेनैव पदेन सकारणेन एकक्षणाभिसंबोधो दर्शितः । तथा चोक्तम्—

**एकक्षणाभिसंबोधो लक्षणेन चतुर्विधः ॥ १७ ॥** इति ॥

तदनु विभावितैकक्षणाभिसंबोधस्य द्वितीये क्षणे धर्मकायाभिसंबोधः इति त्रिविधमनन्तराभिसंबोधं बोधिसत्त्वानां निर्दिश्य परिशिष्टकायत्रयं तथ्यसंवृत्या प्रतिभासमानं परमार्थतो धर्मतारूपं यथाधिमोक्षप्रभावितं बुद्धबोधिसत्त्वश्रावकादिगोचरं व्यवस्थापितम् इति कथनाय 5

विविक्ताव्यतिरेकित्वं विवेकस्य यतो मतम् ।

—त्रिरत्नदास

इति न्यायात् तदव्यतिरेकेऽपि, पृथग् लोकोत्तरेण मार्गेण प्राप्यते न तु क्रियते, 10 इत्यकृत्रिमार्थेन [1]मायोपमाद्वयज्ञानसर्वधर्मप्रतिपत्त्या अधिगतः स्वाभाविकः कायः इति तत्कथनपूर्वकमवश्यमेव अभ्युपगन्तव्या योगिसंवृत्या विशिष्टार्थप्रतिभासजननद्वारेण आशयपरावृत्त्या परावृत्ता धर्मदेशनाद्यर्थक्रियाकारिणः अद्वयाः चित्तचैत्ताः । सर्वाकारस्तथागतानामेव गोचरो ज्ञानसंभारजः सव्यापारो धर्मकायः इत्यभिधानानन्तरं नानामृत्ररत्नश्रवणाभिलाषिभिः दशभूमिप्रविष्टैः महाबोधिसत्त्वैः सह परमानवद्यमहायानधर्मसंभोगप्रीतिसुखोपभोगात् 15 अप्रमेयपुण्यसंभारसंभूतलक्षणानुव्यञ्जनविराजितगात्रं सांभोगिककायं प्रतिपाद्य यथाभव्यतया अशेषजगदर्थक्रियाकारी सर्वथा भवाग्रादनुपरतप्रबन्धः शाक्यमुनितथागतादिरूपः निर्माणकायः पुण्यज्ञानसंभारांशज एव श्रावकाद्युपलम्भयोग्यो देशितः इत्येकोनत्रिंशत्तमपरिवर्ते "एवं हि सुभूते बोधिसत्त्वेन महासत्त्वेन" इत्यारभ्य यावत् "अनुत्तराणां च बुद्धधर्माणां परिपूरिः इति परिवर्तपर्यवसानेनोक्तो बुद्धानां भगवतां धर्मकायाभिसंबोधः । 20

W 21　B 26

तथा चोक्तम्—

**स्वाभाविकः ससांभोगो नैर्माणिकोऽपरस्तथा ।**
**धर्मकायः सकारित्रश्चतुर्धा समुदीरितः ॥ १८ ॥** इति ॥

तदनन्तरं सदाप्ररुदितबोधिसत्त्ववत् प्रतिपत्तिः कार्या, इति विनेयजनबोधनाय तत्पूर्वयोगकथामुखेन कल्याणमित्रारागणपूर्वकप्रज्ञापारमितायोगानुशंसां दर्शयितुमुपसंहारद्वारेण 25 मध्यमप्रतिपत्त्या यथोक्ताभिसमयक्रमप्रतिपादनपरमेव परिवर्तत्रयं देशितम् । तत्पुनः सुगमत्वात् अभिसमयालंकारकारिकया न संगृहीतम् । इति अपरप्रकारद्वयेन समुदायार्थस्याभिधास्यमानत्वात् एकस्तावत्समुदायार्थः ॥

इदानीं पदार्थादिव्याख्यानेन सूत्रार्थोऽभिधीयते तत्रेत्यादि । तत्र इति वाक्योपन्यासे । **खलु**शब्दो वाक्यालंकारे । शोभना अरणाविहारिणां मध्ये अग्रा भूतिः चेतसः संपत्तिर्यस्य 30 स **सुभूतिः** । सदेवके लोके पूजादिभिः स्थाविर्यप्राप्तत्वात्**स्थविरः** । इह क्वचित्तथागतानां

[1] B मायोपमविज्ञानमयसर्व°.

कायव्यापारात्मकपाण्याद्यधिष्ठानेन देशना, तद्यथा दशभूमकादेः सूत्रस्य देशना। क्वचिद्वच-
W 22 नाधिष्ठानेन, तद्यथा अजातशत्रुशोकविनोदनसूत्रादेः। क्वचिन्मनोधिष्ठानत्वेन, तद्यथा समन्त-
भद्रचर्यानिर्देशसूत्रादेः। इत्यार्यसुभूत्यधिमुक्तानामनुग्रहपरीन्दनाभ्यां सम्यक्परिग्रहादिक्रमेण
महायाने विनयनात्स्ववंशानुपच्छेदार्थम्, अचिन्त्यो वा तथागतानामुपायकौशल्यप्रभावो
5 यस्मात् सर्वथा अशक्तेनापि देश्यते इति प्रभावसंदर्शनविनेयानामनुग्रहार्थं प्रज्ञापारमिताभाषणं
प्रति वागधिष्ठानद्वारेण आर्यसुभूतिमन्यमनस्कमभिमुखीकरणार्थं **भगवानामन्त्रयते स्म**
आमन्त्रितवान्। कथमित्याह—**प्रतिभातु** इत्यादि। धर्मदेशनाधिकारात् विद्यमानत्वेऽपि हे सुभूते
विशिष्टधर्मार्थनिरुक्तिप्रतिभानं प्रतिसंवित् सर्वथा **ते** तवाभिमुखी भवतु। बोधौ सर्वधर्मा-
सक्ततायां स्वार्थसंपदि सत्त्वमभिप्रायो येषां ते **बोधिसत्त्वाः**। श्रावका अपि स्युरेवम् इत्याह—
10 **महासत्त्वा** इति। महत्यां परार्थसंपदि सत्त्वं येषां ते महासत्त्वाः। महत्त्वं च अन्यथापि
तीर्थिकसाधुजने[1] स्यात् इति बोधिसत्त्वग्रहणम्। अतस्तेषां बोधिसत्त्वानां महासत्त्वानां
**प्रज्ञापारमितामारभ्ये**ति। प्रथमकल्पासंख्येयनिर्यातः अधिमुक्तिचर्यां विवर्धयन् **संभृतपुण्य-**
संभारो बोधिसत्त्वः शुभे देशे पर्यङ्कमाभुज्य बुद्धबोधिसत्त्वालम्बनपूर्वकं प्रज्ञापारमितानयं
सर्वधर्मनैरात्म्यद्योतकं मूलचित्तेन नामतः समालक्ष्य[2] तस्यैव पदप्रभेदं परिवर्तादिभेदादनु-
15 चरचित्तेन निरूपयेत्। तथा[3] अष्टाभिसमयावस्थाभेदेन संख्याग्रहणाद्गणनया, प्रत्यभिसमयं
स्वरूपनिश्चयात्तुलनया, अध्यारोपापवादाभावात् मीमांसया, प्रत्यक्षानुमानप्रमाणोपपन्नत्वात्
प्रत्यवेक्षणतया, इत्येवं प्रज्ञापारमितार्थं चतुर्भिराकारैः, व्यञ्जनानि तु[4] व्यस्तसमस्तानि यथाक्रमं
B 28 निरर्थसार्थतया[5], इत्येवमाकाराभ्यां विचारणाचित्तेन विचारयेत्। तदनु यथाविचारितं
तन्निमित्तमवधारणाचित्तेनावधृत्य यथाविचारितमेवार्थं नामालम्बके मूलचित्ते संकलनचित्तेन
20 प्रक्षिप्य यदर्थं प्रयुक्तो भवति, तच्छन्दसहगतेन आशास्तिचित्तेन भावनां कुर्यात् इत्येवमादि-
श्रुतचिन्ताभावनामयज्ञानोदयक्रमेण सर्वाकारज्ञानाधिगमात् पारं प्रकर्षपर्यन्तम् एति इति
विगृह्य, क्विपि सर्वापहारिलोपे अनित्यमागमशासनमित्यलुकि तत्पुरुषे, कृति बहुलमिति
अलुकि च कर्मविभक्तेः कृते पारमिस्तद्भावः पारमिता। प्रज्ञाया धर्मप्रविचयलक्षणायाः
पारमिता **प्रज्ञापारमिता** मुख्या। बुद्धो भगवान् मायोपमं ज्ञानमद्वयम्। तत्प्राप्त्यनुकूलत्वेन
25 तु पदवाक्यसमूहो ग्रन्थो दर्शनादिलक्षणो मार्गश्च गौणी प्रज्ञापारमिता। तथा **चाह**
आचार्यदिग्नागः—

प्रज्ञापारमिता ज्ञानमद्वयं सा तथागतः।
साध्या तादर्थ्ययोगेन ताच्छब्द्यं ग्रन्थमार्गयोः॥ इति॥

—प्रज्ञापारमितापिण्डार्थः—१

30 अतस्त्रिविधामपि तत्संबन्धिनीं प्रतिवर्णिकोपदेशरहितां प्रज्ञापारमितामेव प्राधान्यादधि-
कृत्य, इत्यवधारणम्, न तु तेषामेवेति बोधित्रये अस्या नान्तरीयकत्वेनाधिकारात्। तथा

---

१ W °जनवत् for °जने. २ W समालम्ब्य. ३ W ततः. ४ W च for तु.
५ B °सदर्थतया.

हि अत्रैव वक्ष्यति–"श्रावकभूमावपि शिक्षितुकामेन इयमेव प्रज्ञापारमिता श्रोतव्या" इत्यादि । सर्वाकारपरमपुरुषार्थोपयुक्ताधिगमक्रमस्य प्रतिपाद्यमानत्वात्तत्र च "बोधचित्तं कुलपुत्र बीजभूतम्, तदेव फलभूतं सारं सर्वबुद्धधर्माणाम्" इत्यार्यगण्डव्यूहादिनिर्देशात् यथा येन परार्थालम्बनसम्यक्संबोधिकामतालक्षणद्वाविंशतिप्रभेदभिन्नबोधिचित्ताधिगमप्रकारेण बोधिसत्त्वा महासत्त्वाः त्रिविधामपि प्रज्ञापारमितां निर्यायुः निश्चित्य प्राप्नुयुः इति स्वालम्बन- 5 B 29 स्वरूपप्रभेदश्चित्तोत्पादः, तत्प्रभेद एव च सूत्रार्थः इति दर्शयितुं स्वयं भगवता आमन्त्रणद्वारेण समासतः प्रज्ञापारमिता देशिता । तदयं संक्षिप्तो वाक्यार्थो यथा सर्वप्रकारबोधिचित्ताधिगमप्रकारेण बोधिसत्त्वा महासत्त्वाः त्रिविधामपि प्रज्ञापारमितां यथासंभवं श्रुतादिज्ञानोदयक्रमेण सम्यक् प्राप्नुयुः, तथा तेषां संबन्धिनीं प्रज्ञापारमितामेवारभ्य व्यासतो भाषणाय चतुर्विधा प्रतिसंवित् ते, तत्र, सुभूते, संमुखीभवतु इत्येवमार्यसुभूतिं स्थविरं भगवा- 10 नामन्त्रितवानिति । विस्तरस्तु—

तत्रादौ गोत्रसामर्थ्यात्कृपाबीजप्रबोधतः । W 24
प्रयोगाशयसंपत्त्या बोधिचित्तपरिग्रहः ॥

इति न्यायात् गोत्रादिसामर्थ्येन बोधिसत्त्वसंवरसमादानादिना शून्यताकरुणागर्भं बोधिचित्तमुत्पाद्य सम्यक्संबुद्धो भूत्वा यथाभव्यतया परार्थं प्रति त्रियानधर्मदेशनादिभिर्यत्नं 15 कुर्याम्, इति प्रणिधानं कृत्वा प्रतिपत्त्या संपादयेदिति परार्थालम्बनः सहेतुफलः सम्यक्संबोध्यधिगमकामतालक्षणः—

गन्तुकामस्य गन्तुश्च यथा भेदः प्रतीयते ।
तथा भेदोऽनयोर्ज्ञेयो यथासंख्येन पण्डितैः ॥

—बोधिचर्यावतार–१–१६ 20

इति प्रणिधिप्रस्थानस्वभावेन[1] द्विविधो बोधिचित्तोत्पादः[2] । ननु

महोत्साहा महारम्भा महार्थार्थमहोदया[3] ।
चेतना बोधिसत्त्वानां द्वयार्था चित्तसंभवः ॥

सूत्रालंकार–४–१

इति वचनात् चेतनासंप्रयुक्तं चित्तं विशिष्टविषयप्रतिभासमुत्पद्यमानं चित्तोत्पादः । 25 B 30 सम्यक्संबोधिकामता च तत्प्रार्थना कुशलो धर्मच्छन्दश्चैतसिकः, इति कथं स चित्तोत्पादो भवेत्? सत्यमेतत्[4] । किं तु दुःखार्णवनिमग्नं जगदत्राणमभिसमीक्ष्य तदुद्धरणाभिप्रायः कुशलधर्मच्छन्दलक्षणायां प्रार्थनायां सत्यां बुद्धत्वाय चित्तमुत्पादयति, इति कारणेनात्र कार्यं निर्दिष्टम् । एवं छन्दप्रार्थनस्य बोधिसत्त्वस्य सर्वे कुशला धर्मा वृद्धिं यान्ति इति ज्ञापनाय उपचारः समाश्रितः इत्यदोषः । प्रणिधानं वा प्रार्थना सम्यक्संबोधिकामता[5] । 30 तत्सहचरितश्चित्तोत्पादः प्रार्थनया अतिदिश्यते, प्रार्थनाप्रधाना हि चित्तोत्पादावस्था इति कृत्वा । एवं च प्रणिधानसहगतं तच्चित्तमुत्पद्यते बोधिसत्त्वानामित्युपपन्नं भवति ॥

---

१ W °स्वभावो. २ W om. °बोधि°. ३ B महार्थोऽथ महोदया. ४ W सत्यमेवैतत्. ५ B संबुद्ध°.

अथ केयं सम्यक्संबोधिः? कश्च परार्थो यत्कामतात्मको यदर्थश्चित्तोत्पादः? इति चेत्, उच्यते–यथा आर्यपञ्चविंशतिसाहस्रिकासूत्रम्। तत्र सम्यक्संबोधेः समासनिर्देशः।
W 25 यदाह–"सर्वाकारं शारिपुत्र सर्वधर्मानभिसंबोद्धुकामेन बोधिसत्त्वेन प्रज्ञापारमितायां योगः करणीयः" इति। तत्रायं तस्या व्यासनिर्देशः। यदाह–"इह शारिपुत्र बोधिसत्त्वेन
5 अस्थानयोगेन प्रज्ञापारमितायां स्थित्वा दानपारमिता परिपूरयितव्या देयदायकप्रतिग्राहकानुपलब्धिमुपादाय" इत्यादि। तत्रायं परार्थस्य समासनिर्देशः। यदाह–"दशसु दिक्षु प्रत्येकं गङ्गानदीवालुकोपमेषु लोकधातुषु ये सत्त्वास्तान् सर्वाननुपधिशेषे निर्वाणधातौ परिनिर्वापयितुकामेन प्रज्ञापारमितायां शिक्षितव्यम्" इति। तत्रायं तस्य व्यासनिर्देशः।
B 33 यदाह–मत्सरिणः सत्त्वान् दाने, दुःशीलान् शीले, व्यापादबहुलान् क्षान्तौ प्रतिष्ठापयितु-
10 कामेन बोधिसत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्" इत्यादि। तथा चोक्तम्—

**चित्तोत्पादः परार्थाय सम्यक्संबोधिकामता।**
**समासव्यासतः सा च यथासूत्रं स चोच्यते** ॥ १९ ॥ इति ॥

तत्रायं तस्य प्रभेदः। तत्र प्रथमश्चित्तोत्पादः छन्दसहगतः बोधिसत्त्वानां पृथिवीसमः, सर्वाकारसर्वधर्माभिसंबोधस्य संभारप्रसवप्रतिष्ठाभूतत्वात्। द्वितीयः आशयसहगतः कल्याण-
15 सुवर्णोपमः, षट्पारमितासंगृहीतस्य हितसुखाशयस्य आयतितदात्वयोर्विकारभजनात् आ सम्यक्संबोधि शयः आशयः इति कृत्वा। तृतीयः अध्याशयसहगतः शुक्लपक्षनवचन्द्रोपमः, सर्वशुक्लपक्षधर्मोत्तरविवृद्धिगमनेन अधिकः आशयोऽध्याशयः इति कृत्वा। एते च त्रयो मृदुमध्याधिमात्रतया आदिकर्मिकसंभारभूमिसंगृहीताः। चतुर्थः प्रयोगसहगतो ज्वलनोपमः, त्रिसर्वज्ञताप्रयोगस्य इन्धनान्तरविशेषेणेव अग्नेः उत्तरोत्तरविशेषगमनात् प्रकृष्टो योगः प्रयोगः
20 इति कृत्वा। अयं च प्रथमभूमिप्रवेशप्रयोगमार्गसंगृहीतः अधिमुक्तिचर्याभूमिप्रतिबद्धः। पञ्चमो दानपारमितासहगतो महानिधानोपमः, सर्वथा आमिषसंभोगेन अप्रमेयसत्त्व-संतर्पणेऽपि अपर्यादानात्। षष्ठः शीलपारमितासहगतो रत्नाकरोपमः, सर्वगुणरत्नानामाश्रयभावेन ततः प्रसवनात्। सप्तमः क्षान्तिपारमितासहगतो महार्णवोपमः, सर्वानिष्टोपनिपातैः अक्षोभ्य-
B 31 त्वात्। अष्टमो वीर्यपारमितासहगतो वज्रोपमः, संप्रत्ययदार्ढ्येन अभेद्यत्वात्। नवमो
25 ध्यानपारमितासहगतः पर्वतोपमः, सर्वथा आलम्बनविक्षेपेण निष्कम्प्यत्वात्। दशमः
W 26 प्रज्ञापारमितासहगतो महाभैषज्योपमः, सर्वक्लेशज्ञेयावरणव्याधिप्रशमनात्। एकादशः उपाय-कौशलपारमितासहगतः कल्याणमित्रोपमः, सर्वावस्थासु सत्त्वार्थापरित्यागात्। द्वादशः प्रणिधानपारमितासहगतः चिन्तामणिसदृशः, यथाप्रणिधानं फलसमृद्धेः। त्रयोदशः बलपार-मितासहगतः आदित्योपमः, विनेयसस्यपरिपाचनात्[१]। चतुर्दशः ज्ञानपारमितासहगतः
30 मधुरसंगीतिघोषोपमः, विनेयावर्जनकरधर्मदेशकत्वात्। एते च दश यथाक्रमं प्रमुदितादि-दशभूमिसंगृहीता दर्शनभावनामार्गगोचराः। पञ्चदशः अभिज्ञासहगतो महाराजोपमः,

---

१ B विनेयजनस्य for विनेयसस्य°.

अव्याहतप्रभावत्वेन परार्थानुष्ठानात्। षोडशः पुण्यज्ञानसंभारसहगतः कोष्ठागारोपमः, बहुपुण्यज्ञानसंभारकोशस्थानत्वात्। सप्तदशः बोधिपक्षधर्मसहगतो महामार्गोपमः, सर्वार्यपुद्गल-यानानुयातत्वात्[1]। अष्टादशः शमथविपश्यनासहगतो यानोपमः, युगनद्धवाहित्वात्संसार-निर्वाणान्यतरापातेन सुखसंवहनात्। एकोनविंशतितमो धारणीप्रतिभानसहगतः प्रस्रवणोपमः, सर्वथा उदकधारणाक्षयोद्भेदसाधर्म्येण श्रुताश्रुतधर्मधारणात् अपर्यन्तदेशनोद्भेदत्वात्[2]। एते च पञ्च बोधिसत्त्वभूमिषु विशेषमार्गसंगृहीताः। विंशतितमो धर्मो दानसहगतः आनन्द-शब्दोपमः, मोक्षकामानां विनेयानां प्रियश्रावणात्। अयं च बुद्धभूमिप्रवेशप्रयोगमार्गसंगृहीतो बोधिसत्त्वभूमिप्रतिबद्धः। एकविंशतितमः एकायनमार्गसहगतो नदीस्रोतःसदृशः, ज्ञानज्ञेययोः समताधिगमेन उरुकरुणाप्रज्ञोपायतया असंभिन्नपरकार्यक्रियात्वात्। अयं च बुद्धभूमिसंगृहीतो मौलावस्थाप्राप्तः। द्वाविंशतितमो धर्मकायसहगतो महामेघोपमः, तुषितभवनवासादिसत्त्वार्थ[3]-संदर्शनेन निर्माणकायतया सर्वसत्त्वार्थक्रियाणां तदधीनत्वात्। अयमपि निर्विकल्पकतथा-गताधिपत्यप्रवृत्तनिर्माणाद्युपलब्धेः विनेयपरिकल्पितशुद्धलौकिकज्ञान[4]पृष्ठावस्थाप्राप्तो बुद्धभूमि-संगृहीतः। इति आदिकर्मिकभूमिमारभ्य यावद्बुद्धभूमिः संगृहीता इत्यतः अर्थाधिगमानुक्रमेण यथोक्तानुपूर्व्या इयानेव प्रभेदो न न्यूनो नाधिकः, नाप्यन्यथानुपूर्व्या प्रतिपादनीयः, इति प्रतिपादितं भवति। एवं क्रमेण द्वाविंशतिभेदभिन्नबोधिचित्ताधिगमद्वारेण "यथा बोधिसत्त्वा महासत्त्वास्त्रिविधामपि" इत्यादिना पूर्ववत्संबन्धः इति। तथा चोक्तम्—

**भूहेमचन्द्रज्वलनैर्निधिरत्नाकरार्णवैः।**
**वज्राचलौषधीमित्रैश्चिन्तामण्यर्कगीतिभिः॥ २०॥**
**नृपगञ्जमहामार्गयानप्रस्रवणोदकैः।**
**आनन्दोक्तिनदीमेघैर्द्वाविंशतिविधः स च॥ २१॥ इति॥**

अयमवश्यं पृथग्जनबोधिसत्त्वतथागतभूमिभेदेन हेतुफलात्मकः प्रभेदो ज्ञेयः। तथा हि सूत्रालंकारे—

चित्तोत्पादोऽधिमोक्षोऽसौ शुद्धाध्याशयिकोऽपरः।
वैपाक्यो भूमिषु मतस्तथावरणवर्जितः॥
करुणामूल इष्टोऽसौ सदा सत्त्वहिताशयः।

—सूत्रालंकार—४.२

इति वचनाद्धेतुफलालम्बनात्मक एव चित्तोत्पादः उत्पाद्यः कथितः। तस्य प्रभेदोऽपि क्रियमाणस्तथा कर्तव्यः। अन्यथा हेतुमात्रप्रभेदात् न तस्य सर्वथा प्रभेदः इति अपरिपूर्ण एव प्रभेदः स्यादित्येके। अन्ये तु महाराजोपमादय एवाष्टौ चित्तोत्पादा बोधिसत्त्वभूमिषु विशेषमार्गसंगृहीता इति वर्णयन्ति। सर्वप्रकारबोधिचित्तोत्पादप्रभेदप्रतिपादको ग्रन्थः पञ्चविंशतिसाहस्रिकातः। ज्ञापकत्वेन इह प्राचुर्यभयान्न लिख्यते। अत्र तु उद्घटितज्ञसंक्षिप्त-

१ B °यातानु°. २ W °अपर्यात्त°. ३ B om. °सत्त्वार्थ°. ४ W om. °ज्ञान°.

रुचिसत्त्वानुग्रहेण प्रवृत्तत्त्वाद्देशनायाः, इति कृत्वा नोक्तः। यथोक्त[1]सत्त्वार्थप्रभेदः अवश्यमेव प्रतिपत्तव्यः। यतः पञ्चविंशतिसाहस्रिकार्थोपसंहारेण प्रवृत्तमिदं सूत्ररत्नमिति प्रागेव प्रतिपादितम्। तथा चाह आचार्यदिग्नागः—

इत्थमष्टसहस्रीयमन्यूनार्थैर्यथोदितैः।
5 ग्रन्थसंक्षेप इष्टोऽत्र त एवार्था यथोदिताः॥ इति॥

—प्रज्ञापारमितापिण्डार्थः-७

W 28 सर्वाकारतथागतज्ञानगम्यत्वेन गम्भीरायां प्रज्ञापारमितायामात्मनोऽशक्तिवत् अप्रहीणज्ञेयावरणत्वेन आर्यसुभूतेरपि अशक्तिं संभावयन् आर्यशारिपुत्रः अध्येषणामात्रावगमादविदिततत्सामर्थ्याधिष्ठानः **अथ** इत्यादिना वितर्कयति। **एतदिति** वक्ष्यमाणं वितर्कजातम्। तदेव 10 **किम्** इत्यादिना आह। किंशब्दो वितर्के। **आत्मीयेन** स्वप्रतिबद्धवृत्तिना। तद्विषये तु[2] न परकृतेन तस्यात्मीयेन, अपि तु **स्वकेन** स्वकृतेन। **प्रज्ञा** धर्मप्रविचयः। **प्रतिभानं** युक्तमुक्ताभिधानम्। तयोर्**बलस्य** अव्याहतसामर्थ्यस्य **आधानेन** अपूर्वकरणेन। प्रकारान्तरेणाB 35 प्याह—स्वकेन इति। अत्रापि आत्मीयेनेति द्रष्टव्यम्। **प्रज्ञाप्रतिभानबलस्य** व्यवस्थितस्याधिष्ठानेन विशेषकरणेन **उपदेक्ष्यति**। उताहोशब्दः पक्षान्तरद्योतकः। अथ **बुद्धानुभावेन** 15 इति। एवं मन्यते—अचिन्त्यत्वादुपायविशेषस्य कदाचिदनेन अपूर्वज्ञानमधिगतम्, व्यवस्थितस्योत्कर्षो वा कृतः, तथागताधिष्ठानं वा प्राप्तम्, अन्यथा अहमिव आर्यसुभूतिरशक्तः। न च अरणाविहारिणामग्रत्वेन विशेषसद्भावात् भाषते इत्यपि शक्यते वक्तुम्। ममापि प्रज्ञावतामग्रत्वविशेषसद्भावात् भाषणप्राप्तेः। न च अरणासमाधेर्देशनायां व्यापारः इत्यार्यशारिपुत्रस्य भावः। मृद्विन्द्रियतया न सहसा अपूर्वज्ञानादिकं कर्तुं शक्यते। अचिन्त्यो-W 29 20 पायसद्भावेऽपि इति पाश्चात्यमेव विकल्पं दर्शयन्नाह—अथ इत्यादि। श्रावकाणां समन्वाहृत्य परचित्तज्ञानं नान्यथा, इति बुद्धानुभाववचनेन असमन्वाहारज्ञानमुक्तम्। **इमम्** अनन्तरोक्तम्। **एवंरूपं** यथोक्तविकल्पत्रयस्वभावम्। चेतनां वा निश्रित्य प्रज्ञां वा पर्येषको मनोजल्पः। सा च चित्तस्यौदारिकता इति **वितर्कं चेतसा** संवृत्या तद्रूपानुकारिणा ज्ञात्वा वक्ष्यमाणकम् **एतद्** उक्तवान्। तदेवाह—**यत्किंचित्** इति।

25 सूत्रं गेयं व्याकरणं गाथोदानावदानकम्।
इतिवृत्तकं निदानं वैपुल्यं च सजातकम्॥
उपदेशाद्भुतौ धर्मौ द्वादशाङ्गमिदं वचः।

—सारोत्तमा

तत्र **भाषन्ते** श्रुतमयज्ञानोत्पादात्। बोधिबीजावरोपणार्थं यतो ग्रन्थम् **उदीरयन्ति**। **देश-** 30 **यन्ति** चिन्तामयज्ञानोत्पादात्। परिपाचनार्थं यतोऽर्थं **प्रकाशयन्ति**। **उपदिशन्ति** भावनामयज्ञानोत्पादात्। परिमोचनार्थं यतो ग्रन्थार्थनिश्चयोत्पादनतः **संप्रकाशयन्ति**। तदेवम् "उदीरB 36 यन्ति" इत्यादिपदत्रयं भाषन्ते इत्यादेर्यथाक्रमं व्याख्यानम्। **पुरुषकारः** अधिष्ठानं तद्धेतुत्वात्स

१ W यथोक्तार्थ°. २ W अत्र for तु.

सर्वो भाषणादिरुपचारात् पुरुषकारशब्देनोक्तः। ननु श्रावकैरपि स्वाधिगमधर्मता साक्षात्कृता। तत्कस्मान्न स्वशक्त्यैव सर्वं भाषणादि क्रियते इत्याशङ्क्य, **तत्कस्माद्धेतोः** इति स्वयमेव प्रश्नः कृतः। परैः क्रियमाणे नीरसिकत्वादिदोषोदयादित्येके। तदनन्तरं कथाविच्छेददोषपरिहारार्थं शारद्येन प्रष्टुमशक्नुवतामनुग्रहार्थमेकाग्रीकृतचेतसां वचनेन ईर्यापथभेदाद्विक्षेपदोषपरिहार्थं चेत्यपरे। **यो हि** इत्याद्युत्तरम्। तत्र धर्मेऽभिधेये निर्वेधभागीयोऽधिगमद्वारेण **धर्मदेशनायां** 5 सत्यां **शिक्षमाणा** दर्शनमार्गाधिगमेन तामधिगमधर्मतां **साक्षात्कुर्वन्ति**। भावनामार्गाधिगमेन **धारयन्ति। सर्वं तत्** अधिगतार्थविषयं देशनाधर्मसूत्रादि**धर्मतया** अधिगमेनाविरुद्धम्, तदविरुद्धप्रकाशनात्। तस्मात्तथागतधर्मदेशनाया एव उपचारनिर्दिष्टपुरुषकारस्वभावायाः **एष** सदृशः स्यन्दो **निष्यन्दः**, तदनुरूपं फलं **यत् सूत्रादि** ते **श्रावकाः उपदिशन्तस्ताम्** आगमधर्मतामधिगम**धर्मतया न विरोधयन्ति। उपदिशन्ते** इति च उपलक्षणात् भाषमाणा 10 **देशयन्ते** इत्यपि ग्राह्यं तथा प्रकृतत्वात्। अनेनैतदाह—नित्यसमाधानोपायकौशलवैकल्यात् अधिगतार्थविषयमपि धर्मं स्वाधिगमाविरुद्धं भाषितुमसमर्थाः प्रागेव अनधिगतार्थविषयम्, अतो बुद्धानुभाव एव द्रष्टव्यः। तथा—

> कियद्वा शक्यामुन्नेतुं स्वतर्कमनुधावता।
> परोक्षोपेयतद्धेतोस्तदाख्यानं हि दुष्करम्॥

इति न्यायान्नाप्यभ्यूह्य देशयितुं शक्यते इति प्रसङ्गागत निर्वर्त्य इदानीमुत्पादितप्रथमादि- 15 B 37
बोधिचित्तो यथाकालं बोधिसत्त्वोऽपि[४] दानादिकुशलधर्माभ्यासेन पुण्यसंभारमुपार्जयन् W 31

> ध्यानेऽभिज्ञाभिनिर्हाराल्लोकधातून् स गच्छति।
> पूजार्थमप्रमेयानां बुद्धानां श्रवणाय च॥
> अप्रमेयानुपास्यासौ बुद्धान् कल्पैरमेयगैः।
> कर्मण्यतां परामेति चेतसस्तदुपासनात्॥ 20

—सूत्रालंकार—१४.१७

इति चित्तकर्मण्यताबलेन स्थितः समाधौ,

> धर्मस्रोतसि बुद्धेभ्योऽववादं लभते तदा।
> विपुलं शमथज्ञानवैपुल्यगमनाय सः॥

—सूत्रालंकार—१४.३ 25

इति न्यायादेवंप्रवृत्तबोधिसत्त्वस्य संबन्धनार्थं भगवदुक्तवचनपूर्वकमववादमार्य-**सुभूतिर्बोधिसत्त्व** इत्यादिना आह—**बोधिसत्त्वो बोधिसत्त्वः** इति। अस्मिन्नर्थे प्रज्ञाबलेन बोध्यालम्बनात् बोधिश्चासौ महाकृपाशयेन सत्त्वालम्बनात् सत्त्वश्चेति बोधिसत्त्व इत्युक्तः। यथा अशुभालम्बनसमाधिरशुभेति। प्रदेशान्तराभिहितस्यापि बोधिसत्त्वस्य 30 ग्रहणार्थं वीप्सया अभिधानम्। **कतमस्य** कल्पितादिरूपस्य **अधिवचनम्** आभिमुख्येन व्यपदेशः परमार्थतः, अपि तु न कस्यचिदित्यर्थः। तदेवाह—**नाहं भगवंस्तं धर्मम्** इति

W 30 (margin, line 4)

१ W सर्वो भाषणादि. २ W °भानीयात्भाधि°. ३ W तस्याः. ४ W अर्थो for अपि.

B 38 कल्पितादिरूपम्। तत्त्वतोऽववदनीयस्यानुपलम्भात्। अववादविषयस्तर्ह्यस्तीत्याह—**तमपि** इत्यादि। **प्रज्ञापारमिता** प्रतिपत्त्यादिदशप्रकारधर्मस्वभावा। तथा हि—अववाद-
W 32 विषयमधिकृत्य पञ्चविंशतिसाहस्रिकायामुक्तम्—"कथं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञा-पारमितायां चरितव्यम्? भगवानाह—इह शारिपुत्र बोधिसत्त्वो बोधिसत्त्वं तन्नाम च न
5 समनुपश्यति" इत्यादि। **बोधिसत्त्वधर्मं वा** इति यस्य धर्मस्य "बोधिसत्त्व" इत्यधिवचनम्, तं **धर्ममविन्दन्** श्रुत्या, **अनुपलभमानः** चिन्तया। **असमनुपश्यन्** भावनया। अथवा—प्रतिनियतार्थेन सह प्रत्यासत्तिनिबन्धनाभावात् निराकारेण ज्ञानेन अविन्दन्। वस्तु-भावमन्तरेणापि स्वप्नादौ भावात् साकारेण अनुपलभमानः। अत एव उभाभ्याम् **असमनुपश्यन् कतमस्यां प्रज्ञापारमितायां** प्रतिपत्त्यादिदशप्रकारायां प्रथमं
10 संप्राप्तगुणपरिपाचनार्थेन अपरिहाणिमुपादाय शिक्षणेन **अववदिष्यामि**। ततः पश्चाद-प्राप्तगुणप्राप्तिमुपादाय **अनुशासिष्यामि**। सर्वथा तत्त्वतो नैव, किं तु उद्भावनासंवृत्या अववादः इत्यर्थादाक्षिप्तं भवति। तथा च अत्रैवानन्तरं वक्ष्यति—"एषोऽववादः" इत्यादि।

स पुनर्विषयभेदात् दशधा ज्ञेयः। तत्र यथोक्तप्रभेदबोधिचित्तप्रतिपत्तौ संवृतिपरमार्थसत्या-नतिक्रमेण श्रावकाद्यसाधारणतया अनुपलम्भयोगेन वर्तनम् इति शिक्षणं **प्रतिपत्त्यववादः**।
15 दुःखे फलभूतरूपादिशून्यताप्रज्ञापारमितयोस्तथतारूपत्वादैकात्म्यमिति। समुदये शून्यता-हेतुभूतरूपाद्योरव्यतिरिक्तत्वेन रूपादिः [न] समुदयनिरोधसंक्लेशव्यवदानधर्मी इति। निरोधे शून्यतायामुत्पादनिरोधसंक्लेशव्यवदानहानिवृद्ध्यादिरहितायां न रूपं यावन्न विद्योत्पादो
B 39 नाविद्यानिरोधो न बुद्धो न बोधिरिति। मार्गे दानादिपारमिताभिः आत्मनोऽध्यात्मशून्यतादीनां [वा] बहिर्धाशून्यतादिभिः [सह] पूर्वान्तापरान्तयोश्च परस्परं न युक्तायुक्तत्वेन प्रतिपत्तिः
20 इत्युपदेशः सत्यावरादः। बुद्धे बुद्धबोध्योरेकलक्षणत्वेन बुद्धकारकधर्मलक्षणसर्वाकारज्ञताया अनुपलम्भे रूपाद्ययोजनेन आलम्ब्य आलम्बकसमताज्ञानमिति। धर्मे त्रिसर्वज्ञतासंगृहीतसमस्त-वस्तुप्रतिपक्षाकारसंग्रहैः सर्वधर्माणां संगृहीतानां निःस्वभावतेति। संघे बुद्धरत्नान्तर्गतत्वेन अर्हद्वर्ज्येषु फलस्थप्रतिपन्नकभेदेन सप्तसु महापुरुषेषु प्रत्येकबुद्धेन सह अष्टसु मृद्विन्द्रियादि-भेदेन विंशतिसंख्यावच्छिन्नेषु आर्यावैवर्तिकबोधिसत्त्वशैक्षेषु अनुत्पादतया प्रवृत्तिरित्युपदेशो
W 32 25 रत्नत्रयाववादः। आरब्धवीर्यतया यथोक्तार्थानुष्ठानं प्रति कायादिसुखल्लिकत्वेन कस्यचिदभि-निवेशः स्यात्, इत्यसक्तौ कायादीनामस्वभावतया देशनाववादः। चिरतरकालाभ्यासेनापि समीहितार्थानिष्पत्तौ उत्रसनजातीयस्य परिखेदः स्यात् इत्यपरिश्रान्तौ रूपादेर्यावत् सम्यक्संबोधेः अमननतया देशनाववादः। दशदिगवस्थितबुद्धादिभ्यः प्रत्यर्थं मार्गोपदेशे गृह्यमाणे चित्तावलीनता स्यात् इति प्रतिपत्संपरिग्रहे धर्माणां प्रकृत्यजातत्वेन शिक्षणमववादः।
30 मांसवैपाकिकदिव्यप्रज्ञाधर्मबुद्धचक्षुषां यथासंख्यं प्रतिनियतवस्तुसर्वसत्त्वच्युत्युपपत्तिसर्वधर्मा-विकल्पनसर्वार्यपुद्गलाधिगमसर्वाकारसर्वधर्माभिसंबोधविषयाणां तथतया एकत्वेन प्रतिपत्तिरिति शिक्षणं पञ्चचक्षुरववादः। ऋद्धिदिव्यश्रोत्रपरचित्तज्ञानपूर्वनिवासानुस्मृत्यभिसंस्कारिकदिव्य-चक्षुरास्रवक्षयज्ञानाभिज्ञानां पृथिवीकम्पनादिसर्वलोकधातुस्थसूक्ष्मतरशब्दश्रवणसरागादिपर-

चित्त [परि] ज्ञानस्वपरपूर्वानेकजात्यनुस्मरणसर्वरूपदर्शनक्लेशज्ञेयावरणप्रहाणकारित्राणामादि- B 40
शान्तत्वेनावबोध इति देशनाभिज्ञाववादः। चतुःसत्यसंगृहीतषोडशक्षणस्वभावं दर्शनमार्गं
धर्मान्वयज्ञानक्षान्तिज्ञानात्मकं सर्वधर्मनिःस्वभावबोधेन मायाकार इव सर्वत्रानभिनिविष्टमूर्तिः
तत्प्रहातव्यवस्तुप्रतिपक्षत्वेन योगी विभावयतीति देशना दर्शनमार्गाववादः। संस्कृता-
संस्कृतयोरेकरूपत्वेन परस्परमशक्यव्यतिरेकप्रज्ञप्तिवत् यथोक्तदर्शनमार्गसंमुखीकृतवस्त्वव्यति- 5
रेकालम्बनात् दर्शनभावनयोरपृथग्भावः इति न लाक्षणिकं भावनामार्गव्यवस्थानम्। अथ
च स तत्प्रहातव्यवस्तुप्रतिपक्षत्वेन विभाव्यते प्रतीत्यसमुत्पादधर्मतया इति देशना भावना-
मार्गाववादः। इत्येवं दशविधोऽववादो ग्रन्थसंक्षेपस्यात्रेष्टत्वात् प्रज्ञापारमिताशब्देनोक्तः।
तथा हि—पञ्चविंशतिसाहस्रिकायां प्रत्यववादं स्पष्ट एव ग्रन्थो निर्दिष्टः, ज्ञापकत्वेन च W 34
विस्तरभयान्न लिख्यते। तदेवमववादेन किंभूतो बोधिसत्त्वोऽववादनीय इत्याह—**अपि तु** 10
**खलु पुनः** इत्यादि। **सचेत्** इति निपातो यद्यर्थे। **एवम्** इति बोधिसत्त्वप्रज्ञापारमितानुप-
लम्भेन अववादविषये दशप्रकारे भाष्यमाणे **चित्तं नावलीयते** न संकोचायते यतो **न**
**विषीदति** न मुह्यति। अत एव श्राद्धत्वेन धर्मभजनात् आदौ **नोत्रस्यति** अस्थानत्रासेन।
**देश्यमाने न संलीयते** नालस्यायते। यतो **न विषादमापद्यते** न कातरभावं याति। अत
एव प्राज्ञत्वेन तत्त्ववेदिनां मध्ये **न संत्रस्यति** संततित्रासेन। उपदिश्यमाने **नास्य विपृष्ठी-** 15
**भवति** न विप्रतिसारीभवति मन एव **मानसम्**। यतो **न भग्नपृष्ठीभवति** न पृष्ठे चित्तं भग्नं B 41
भवति, अत एव श्रद्धाप्रज्ञाभ्यां योगात् पर्यवसाने **न संत्रासमापद्यते** सर्वथा अनिश्चयत्रासेन।
अथवा भाषणादिकाले यथाक्रमं ग्रन्थार्थोभयावधारणात् **नावलीयते न संलीयते न विषीदति**।
कुतः? यस्मात् प्रत्यक्षानुमानागमप्रमाणैरविरुद्धस्वविषयार्थपरिच्छेदात् **न विषादमापद्यते,**
**नास्य विपृष्ठीभवति मानसम्, न भग्नपृष्ठीभवति**। अत एव आदिमध्यपर्यवसाने "नोत्रस्यति 20
न संत्रस्यति न संत्रासमापद्यते" इति योज्यम्। **एष एव** इति। यो बोधिसत्त्वः संवृति-
परमार्थविभागकौशल्यात् यथोक्तावावादे चित्तावलीनत्वादिरहितः, स एवेत्यर्थः। "एष एव"
इति लक्षणमनुक्त्वा कथं प्रज्ञापारमिता प्रत्यवमृश्यते इति चेत्, उच्यते। यस्यार्थस्य
भाषणादौ चित्तावलीनत्वादि न करोति, सोऽर्थः **प्रज्ञापारमिता** प्रतिपत्त्यादिदशप्रकारा
कथितैव इत्यर्थाक्षिप्तपरामर्शनाददोषः इति। उपसंहरन्नाह—**सचेत्** इत्यादि। स बोधिसत्त्वो 25
यद्यनन्तरोक्तावावादेन यथोक्तविषये स्थितिमान् भवति, तदा अस्य **बोधिसत्त्वस्य एषैव**
प्रार्थितार्थप्राप्तिकर्तव्यतोपदेशः **अववादानुशासनी** वेदितव्या। तदेवं कृत्वा बोधिचित्ततदा- W 35
क्षिप्तधर्मस्वभावप्रज्ञापारमितायां या प्रतिपत्तिरनुपलम्भाकारा, तस्या[2] यदालम्बनं चत्वारि आर्य-
सत्यानि, यश्चाश्रयस्त्रीणि शरणानि, यो विशेषगमनहेतुरसक्तिः, योऽव्यावृत्तिगमनहेतुरपरि-
श्रान्तिः, योऽनन्ययानगमनहेतुः प्रतिपत्संपरिग्रहः, योऽपरप्रत्ययगामित्वहेतुः पञ्च चक्षूंषि, 30
यः सर्वाकारज्ञतापरिपूरिहेतुः षडभिज्ञाः, यौ निष्ठागमनहेतू दर्शनभावनामार्गौ, तत्सर्वमववाद-

१ W om. °स्व°. २ W om. तस्या.

B 42 प्रकरणे निर्दिष्टम्। एतावतैव सर्वोऽर्थः संपन्न इति यथोक्तानुपूर्वीनिर्दिष्टो दशविधोऽववादः।

तथा चोक्तम्—

**प्रतिपत्तौ च सत्येषु बुद्धरत्नादिषु त्रिषु।**
**असक्तावपरिश्रान्तौ प्रतिपत्संपरिग्रहे॥ २२॥**
5 **चक्षुःषु पञ्चसु ज्ञेयः षट्स्वभिज्ञागुणेषु च।**
**दृङ्मार्गे भावनाख्ये चेत्यववादो दशात्मकः॥ २३॥ इति॥**

किं तु संघरत्ने मृद्विन्द्रियादिबोधिसत्त्वानामयं प्रभेदो ग्राह्यः। वक्ष्यमाणमार्गज्ञता-संगृहीतषोडशक्षणदर्शनमार्गमाश्रित्य पञ्चदशसु दर्शनमार्गचित्तक्षणेषु श्रद्धाधर्मानुसारिभेदेन प्रथमफलप्रतिपन्नको द्विविधः। ततो यः कामावीतरागः, स षोडशे दर्शनमार्गचित्तक्षणे 10 स्रोतआपन्नः। ततो भावनामार्गे यावच्चतुर्थक्लेशप्रकारप्रहाणात् देवमनुष्यकुलंकुलत्वेन स एवान्यो द्विविधः। ततः कामावचरपञ्चप्रकारक्लेशप्रहाणेन द्वितीयफलप्रतिपन्नकः मृदुतीक्ष्णे-न्द्रियः एव एकः श्रद्धादृष्टिप्राप्तः। ततः कामावचरषट्प्रकारक्लेशप्रहाणात् सकृदागामी। ततः स एव एकजन्मावशेषत्वात् देवेषु एकवीचिकोऽपरः। ततः कामावचरसप्ताष्टक्लेश-प्रकारप्रहाणात्तृतीयफलप्रतिपन्नकः पूर्ववच्छ्रद्धादृष्टिप्राप्तः। ततो यः कामावचरनवमक्लेश-15 प्रकारप्रहाणादनागामीत्युच्यते, स पञ्चधा वेदितव्यः। तत्रोपपत्तिसंयोजनाप्रहाणात् अभि-निर्वृत्तिसंयोजनाप्रहाणादन्तराभवमभिनिर्वर्तयन्नेव अभिनिर्वृत्ते चान्तराभवे मार्गसंमुखीभावेन दुःखान्तप्राप्तौ अन्तरापरिनिर्वायी। उभयसंयोजनाप्रहाणाद्रूपधातौ उपपद्य दुःखान्तप्राप्तौ उपपद्यपरिनिर्वायी। तत्रैवोपपन्नोऽभिसंस्कारेण मार्गसंमुखीभावलाभात् दुःखान्तप्राप्तौ अभि-संस्कारपरिनिर्वायी। तद्विपर्ययादनभिसंस्कारपरिनिर्वायी। ऊर्ध्वस्रोताश्च पञ्चमः। स पुनरक-B 43 W 36 20 निष्ठपरमो भवाग्रपरमश्च। तत्र अकनिष्ठपरमः प्लुतार्धप्लुतसर्वस्थानच्युतत्वेन अकनिष्ठप्रवेश-स्त्रिविधः। भवाग्रपरमस्तु रूपवीतरागो दृष्टधर्मशमः कायसाक्षीति द्विविधः। ततो भावाग्रिकाष्टम-क्लेशप्रकाराणां प्रहाणात् अर्हत्त्वफलप्रतिपन्नकः। ततः श्रावकपिटकमेवावलम्ब्य स्वमार्गसंमुखी-करणात् अबुद्धोत्पादे प्रत्येकबुद्धः इति विंशतिः। तथा च पञ्चविंशतिसाहस्रिकायामयमर्थो विस्तरेणोक्तः। अवैवर्तिकचक्रसूत्रे तु बोधिसत्त्वं श्रद्धानुसारिणमारभ्य यावद्बोधिसत्त्वप्रत्येकबुद्ध 25 इति पुद्गलव्यवस्थानं स्पष्टतरार्थं भगवतोक्तमिति तत्रैवावलोकनीयम्, अत्रास्माभिर्विस्तरेण नोपन्यस्तम् किं पिष्टं पिष्येति। तथा च प्रथमद्वितीयफलस्थं चतुर्थफलप्रतिपन्नकं च पुद्गलं सुगमत्वेनासंगृह्योक्तम्—

**मृदुतीक्ष्णेन्द्रियौ श्रद्धादृष्टिप्राप्तौ कुलंकुलौ।**
**एकवीच्यन्तरोत्पद्य काराकाराकनिष्ठगाः॥ २४॥**
30 **प्लुतास्त्रयो भवस्याग्रपरमो रूपरागहा।**
**दृष्टधर्मशमः कायसाक्षी खड्गश्च विंशतिः॥ २५॥ इति॥**

---

१ B तथैव. २ W °भावात् for °भावलाभात्.

लब्धाववादस्य, एवमादिकर्मिकस्य—

संपूर्णपुण्यसंभारस्ततो धीमान् दृढाशयः ।
श्रद्धाद्यैः कुशलैर्धर्मैः परिभावितसंततिः ॥
ज्ञानसंभारसिद्ध्यर्थं कल्पासंख्येयनिर्गमात् ।
स्थिराभिज्ञोऽववादेन चर्याभूमौ प्रवर्तते ॥ 5

इति कृत्वा अधिमुक्तिचर्याभूमिपरिशोधनार्थं श्रुतादिप्रकर्षप्राप्तमोक्षभागीयश्रद्धादिलक्षण-कुशलमूलादूर्ध्वं चतुःसत्यप्रतिवेधानुकूलानि चतुर्निर्वेधभागीयानि लौकिकभावनामयानि वक्तव्यानि । श्रावकाद्युष्मादिभ्यश्चैषामनित्यादिलक्षणवस्त्वालम्बनविशेषात्, धर्मदर्शन-प्रतिपक्षत्वेन अनभिनिवेशाद्याकारविशेषात्, यानत्रयाधिगमहेतुत्वविशेषात्, उपाय-कौशलकल्याणमित्रलक्षणसंपरिग्रहविशेषात् विशेषो वक्तव्यः । तथा संक्लेशवस्त्वधिष्ठानः 10 प्रतिपक्षवस्त्वधिष्ठानश्चेति द्विविधो ग्राह्यविकल्पः । द्रव्यसत्पुरुषाधिष्ठानः प्रज्ञप्तिसत्पुरुषाधि-ष्ठानश्चेति द्विविधो ग्राहकविकल्पः । इति वक्ष्यमाणमूर्धाभिसमयसंगृहीतदर्शनभावनामार्गप्रहा-तव्यैश्चतुर्भिर्विकल्पैः यथासंख्यं संक्लेशभाञ्जि एतानि निर्वेधभागीयानीति वक्तव्यम् । तथा यथोक्तविकल्पसंयोगं च भजतां सतां प्रत्येकमेषां मृदुमध्याधिमात्रभेदेन विशिष्टता च वक्त-व्येति पञ्चविधो विशेषः । श्रावकादीनामुष्मादिचतुर्विधकुशलमूलं रूपणादिलक्षणवस्त्वा- 15 त्मकचतुःसत्यालम्बनम् आत्मदर्शनप्रतिपक्षत्वेन अनित्यादिभिराकारैः स्वयानाधिगमनहेतुभूतं संपरिग्रहरहितम् । स्वबोधिपरिपन्थिभूतश्चतुर्विधो विकल्पो न भवतीति कृत्वा तेन संसृष्ट-मप्यसंसृष्टमुत्पद्यते इति व्यवस्थाप्यते यतः, तथा चोक्तम्—

**आलम्बनत आकाराद्धेतुत्वात्संपरिग्रहात् ।**
**चतुर्विकल्पसंयोगं यथास्वं भजतां सताम् ॥ २६ ॥** 20
**श्रावकेभ्यः सखड्गेभ्यो बोधिसत्त्वस्य तायिनः ।**
**मृदुमध्याधिमात्राणामूष्मादीनां विशिष्टता ॥ २७ ॥** इति ॥

तत्र मृदुन ऊष्मगतकुशलमूलस्यालम्बनार्थमाह—**पुनः** इत्यादि । पुनरपरम् इति प्रकारान्तरेण प्रज्ञापारमितोपदेशसूचनम् । **प्रज्ञापारमितायाम्** इति सामान्यश्रुतावपि अनित्य-तादिवस्त्वालम्बनलक्षणायामित्यर्थः । तथा हि प्रदेशान्तरे भगवता अभिहितम्—सूत्रं भिक्षवः 25 सूत्रान्तरानुसारेण व्याख्यातव्यमिति । पञ्चविंशतिसाहस्रिकायां च मृदूष्मालम्बनमधिकृत्य उक्तम्—"इहायुष्मन् शारिपुत्र बोधिसत्त्वो रूपमनित्यमिति, रूपं दुःखमिति, रूपं शून्यमिति, रूपमनात्मा" इत्यादि । एतावांस्त्वत्र विशेषो यदुत संक्षेपनिर्देशः । तत्र पुनः प्रत्येकं सत्यमधिकृत्य विस्तरनिर्देशः इति न संदेहः कार्यः[1] । **चरता** इत्यसमाहितेन ज्ञानेन । **भावयता** इति समाहितेन । एतदुक्तम्—अनित्यादिषोडशाकारं दुःखादिचतुःसत्याधारं 30 वस्त्वालम्बनमिति । तत्केनाकारेण आलम्बनीयमित्याह—**एवम्** इत्यादि । एवमिति[2] वक्ष्यमाण-

B 44 W 37 B 45

१ W om. कार्यः. २ W om. एवमिति.

W 38 क्रमेण । **तेनापि** इत्यादि न केवलं ज्ञेयस्यात्यन्तपरोक्षत्वादालम्बनं[1] **न मन्येत** येनाप्याकारेण अभिनिवेशादेर्निषेधात्मकेन[2] बोध्याबाहकज्ञानरूपेणालम्बेत, **तेनापि न मन्येत** अभिनिवेशं न कुर्यादित्यर्थः । धर्मतामुखेन अनभिनिवेशाद्याकारेण इति यावत् । इदमुक्तं भवति– श्रावको रूपणादिलक्षणं वस्त्वालम्बते । तस्यानित्यतादयः आकाराः भवन्ति आत्मदर्शन-
5 प्रतिपक्षत्वात् । बोधिसत्त्वः पुनरनित्यतादिलक्षणं वस्त्वालम्बते । तस्य अनभिनिवेशादय आकारा भवन्ति धर्मदर्शनप्रतिपक्षत्वादिति । ननु यद्यभिनिवेशाभावोऽनभिनिवेशः, एवं सति अभावत्वात् प्रतिपक्षो न युज्यते । अथ यन्नाभिनिवेशः, तदा चक्षुरादिष्वपि प्रसङ्ग इति चेत्, उच्यते । यथा विपक्षस्तथा अभिनिवेशः । यथा प्रतिपक्षस्तथा अनभिनिवेशः ।
B 46 कथं च विपक्षः ? यथा असत्यपरिकल्पनासमुत्थितौ[3] अस्तिनास्तिग्राहौ । कथं च प्रतिपक्षः ?
10 यथा तयोरभावः । कथं च तयोरभावः ? यदि तौ तत्त्वतो न स्त इति ज्ञातौ भवतः । तथा च अनन्तरं वक्ष्यति "सचेदायुष्मन् शारिपुत्र तत्राचित्ततायाम्" इत्यादि । ननु प्रमाणोपपन्नेऽनभिनिवेशाद्याकारे कथं प्रेक्षावतो नाभिनिवेशः इत्याह–**तत्कस्य हेतोः** इति । तत्कस्माद्धेतोः ? अथवा यदेतदभिनिवेशाकरणं तत्कस्यार्थस्य हेतोः प्रयोजनादित्यर्थः । उत्तरार्थमाह–**तथा हि** इत्यादि । यस्मादेकानेकस्वभाववैधुर्यात् **चित्तस्य प्रकृतिः** स्वभावः
15 अनुत्पादता **प्रभास्वरा** विधमितसर्वासत्संकल्पान्धकारा[4], अतोऽनभिनिवेशाद्याकाराव्यतिरिक्तं **चित्तं** तत्त्वतः **अचित्तम्** । एवं मन्यते–चित्तस्य नैःस्वाभाव्यात् तदव्यतिरिक्तः अनभि-
W 39 निवेशाद्याकारः कथं तत्त्वतोऽभिनिवेशस्थानीयः इति । पर्युदासेऽथ प्रसज्ये वा "अचित्तम्" इति नञः प्रयोगेऽपि सदसन्मात्रमननानुबन्धेन विपर्यासाविनिवृत्तिं पश्यन्नाह–**अस्ति तच्चित्तं यच्चित्तमचित्तमिति** । यच्चित्तम् अनभिनिवेशाद्याकाराव्यतिरिक्तं तच्चित्तं तत्त्वतः अचित्तम्
20 इति यदुच्यते, तत्किम् अचित्तमस्ति इति संबन्धनीयम् । न्यायेन वस्तुनोऽसत्त्वान्न पर्युदासे नञः प्रयोगः, अपि तु प्रसज्ये । तत्रापि सदसन्मात्रप्रज्ञप्तिरपि नास्तीत्यभिप्रायवान् **सुभूतिः** तेनैव परिहारं प्रतिपादयितुकामः प्रतिप्रश्नक्रियया शारिपुत्रमाह–**किं पुनः** इत्यादिना । चित्ताभावमात्रमचित्तं तद्भावो **या अचित्तता, तत्राचित्ततायां किमस्तिता वा विद्यते** वा अनुपलब्धिलक्षणप्राप्ता । अथ **उपलभ्यते** वा उपलब्धिलक्षणप्राप्ता ?
25 एवं नास्तिता वा इति योज्यम् । पूर्वो वाशब्दः उत्तरापेक्षया, उत्तरश्च पूर्वापेक्षयेति ज्ञेयम् ।

B 47 अजातस्य स्वभावेन शाश्वतोच्छेदता कुतः ।
स्वभावे हि विकल्प्यन्ते धर्मभेदविकल्पनाः ॥
पत्रलेखादिविन्यासः केनचिद्व्योम्नि शक्यते ।
30 कर्तुं नैव तथाजाते धर्मभेदे विकल्पना ॥

---

१ W आलम्ब्येन. २ W अभिनिवेशनिषेधाद्यात्मकेन. ३ W असत्परिकल्पना°.
४ W सर्वासत्कल्पनान्धकारा.

इत्यभिप्रायवानाह—**न ह्येतत्** इत्यनन्तरोक्तमुभयम् । इदानीं तद्वचनमेव परिहारे योजयन्नाह—**सचेत्** इत्यादि । **अपिनु**शब्दः क्षेपे । नैवेत्यर्थः । **पर्यनुयोगः** चोद्यम्, तमेवाह—**यदायुष्मान्** इत्यादिना । एवं मन्यते—यदि "अचित्ततायामस्तिता वा नास्तिता वा न विद्यते नोपलभ्यते वा," तत्कथं तत्र "एष पर्यनुयोगः—अस्ति तच्चित्तं यच्चित्तमचित्तमिति" ? तत्रापि ह्यचित्तमिति चित्ताभावमात्रमेवाभिप्रेतम् । अतः सदसद्रूपेण अस्तित्वसमारोपो नैव घटते इति । चित्तस्य धर्मिणोऽसत्त्वे निर्विषयस्य नञः अप्रयोगादचित्ततापि नास्तीत्याह—**का पुनरेषा** इत्यादि । न हि संवृतिसोपानमन्तरेण तत्त्वप्रासादशिखरारोहणं विपश्चितः इति योगिसंवृत्या प्रतिविधातुमाह-**अविकारः** इत्यादि । पारंपर्येणैव अचित्तता अभ्यस्यमाना बुद्धभूमावविकारपरिनिष्पत्तिं प्रति हेतुत्वात् **अविकारा** । अविपर्यासपरिनिष्पत्तिहेतुत्वाच्च **अविकल्पा** । एवं च अधिगमाविरुद्धमुक्तमित्याह—**अथ** इत्यादि **साधु साधु** इति संभ्रमाद्भिरभिधानम् । **यथा** येन प्रकारेण । **अपिनाम**शब्दः पूजावाचकः । **अरणा** इति यस्य समाधेः प्रभावात् परेषां संताने स्वपरव्यवधानार्थेन रणयन्तीति रणाः क्लेशा न जायन्ते, सः **अरणासमाधिः**, **तद्विहारिणां** मध्ये **अग्रतायां निर्दिष्टः** सन् निर्दिष्टस्य अचित्ततामिति विभक्तिविपरिणामेन योज्यम् । ननु च बुद्धाधिष्ठानात् सोपायकौशलामपि प्रज्ञापारमितां निर्दिशतः कोऽतिशयः, यतः तद्विदुषोऽपि शारिपुत्रस्य सुभूतिं प्रति साधुकारः साधुः स्यात् ? न कश्चित्, किं तु तयोर्विनेयानामनुग्रहाय माहात्म्यद्योतनादनागतविनेयसंदेहापनयनाय, तथागताधिष्ठानादेव वा अविवादपूर्वकः साधुकारः इत्यदोषः । माहात्म्यमेव अचित्ततायाः दर्शयन् कश्चिदनियतगोत्रकोऽपि तीक्ष्णेन्द्रियतया निर्वेधभागीयावस्थायामपि अचिन्त्योपायविशेषादवैवर्तिकत्वे नियतः इत्याह—**अतश्च** इत्यादि । यतस्तेनापि बोधिचित्तेन न मन्यते अतोऽनभिनिवेशाद्याकारात् । चकारादनित्यतादिलक्षणवस्त्वालम्बनात् । **उपपरीक्षितव्यः** निश्चेतव्यः । अष्टम्यां तु भूमौ सर्वेषामेव नियतत्वेन अवैवर्तिकत्वव्यवस्थानमित्यदोषः । **अविरहितश्च** अपरिहाणियोगात् प्रज्ञापारमितायाः निर्वेधभागीयरूपायाः **वेदितव्यः** । न केवलम् **अविनिवर्तनीयः** **उपपरीक्षितव्यः** इति चकारः । एवमालम्बनाकारावभिधाय मृदूष्मणोर्हेतुत्वविशेषार्थमाह—**श्रावकभूमावपि** इत्यादि । विशिष्टावस्थाप्राप्तमेव ज्ञानं **भूमिः** तत्र **शिक्षितुकामेन** प्रतिपत्तिं कर्तुकामेन **इयमेव** इति निर्वेधभागीयप्रतिपादनपरा मुख्यतः श्रोत्रविज्ञानेन तदाकृष्टेन च मनोविज्ञानेन ग्रन्थार्थयोः परिच्छेदात् **श्रोतव्या** । चिन्तामयेन मनसिकरणात् **उद्ग्रहीतव्या**, भावनामयेन प्रतिपत्त्या संपादनात् **धारयितव्या**, समादानेन पुस्तकवाचनात् **वाचयितव्या**, आगमाधिगमलाभात् **पर्यवाप्तव्या**, व्याख्यानादिना अन्येभ्यः प्रकाशनात् **प्रवर्तयितव्या** । सर्वत्र च श्रवणादौ सम्यक्प्रयोगपृष्ठचित्तसंपादनात् **शिक्षितव्या** । मौलचित्तेन तु समाधानकारणात् **योगमापत्तव्यम्** । लिङ्गस्य लोकाश्रयत्वाद्योगशब्दो नपुंसकलिङ्गत्वेनोक्तः । **उपायकौशल्यसमन्वागतेन** इति

पूरये बुद्धधर्माणां सत्वानां परिपाचने ।
क्षिप्रप्राप्तौ क्रियासिद्धौ वर्त्मोच्छेदे च कौशलम् ॥
उपायो बोधिसत्त्वानामसमः सर्वभूमिषु ।
यत्कौशल्यं समाश्रित्य सर्वार्थान् साधयन्ति ते ॥

5 —सूत्रालंकार—१८.६९

इति वचनाद्यथोक्तार्थाशुपरिप्रापकः संवृतिपरमार्थाश्रितः चेतोविशेषः एव उपायकौशलम् । तेन समन्वागतेन युक्तेन **सर्वबोधिसत्त्वधर्मसमुदागमाय** इति सर्वेषां बोधिसत्त्वानामेव धर्माः श्रावकाद्यसाधारणाः मार्गज्ञतालक्षणाः, तेषां समुदागमाय प्रतिलाभाय **योगः** समाधिः **करणीयः** । क्वचित्तु सर्वबुद्धधर्मसमुदागमायेति पाठः, स चायुक्तः । यतः[1] अनन्तरमेव 10 वक्ष्यति—"सर्वे बोधिसत्त्वधर्माः" इत्यादि । ननु श्रावकयानेऽपि बोधिसत्त्वधर्माः दानादयो निर्दिष्टा एव, इत्याशङ्क्याह—**तत्कस्य हेतोः** इति । **इहैव हि** इत्याद्युत्तरम् । हिशब्दो यस्मादर्थः । **यत्र** इति येषु बोधिसत्त्वधर्मेषु । एवं मन्यते—श्रावकधर्मास्तत्पिटके विस्तरेणाभिहिताः । बोधिसत्त्वधर्मास्तु प्रसङ्गात् । इह पुनर्बोधिसत्त्वधर्मा एव विस्तरेण निर्दिष्टाः, श्रावकधर्माः प्रसङ्गादिति । **अनुत्तरायां सम्यक्संबोधौ** इति । नास्त्युत्तरं प्रधानं यस्याः सा अनुत्तरा 15 सम्यगविपरीता सर्वाकाराभिसंबोधिः सम्यक्संबोधिः । बुद्धभूमिरिति यावत् । **सर्वबुद्धधर्मसमुदागमाय** इति सर्वेषां बुद्धधर्माणां सर्वाकारज्ञतालक्षणानामधिगमाय । श्रावकयानेऽपि बुद्धधर्मा निर्दिष्टा इत्याशङ्क्याह—**तत्कस्य हेतोः** इति । तथैवोत्तरार्थमाह—**इहैव हि** इत्यादि । **श्रावकभूमावपि** इत्यारभ्य यावदन्तेन **योगमापत्तव्यम्** इत्यनेन एतदुक्तम्—यानत्रयाधिगमप्राप्तये मृदूष्मगतं कुशलं हेतुरिति । अयं च हेतुभावः सर्वेषामेवोष्मादीनां 20 वेदितव्यः । मध्यस्यालम्बनार्थमाह—**योऽहं भगवन्** इत्यादि । **बोधिसत्त्वनामधेयम्** इति । पूर्वं यस्यार्थस्य बोधिसत्त्व इति नाम, तस्यानुपलम्भः "नाहं भगवंस्तं धर्मं समनुपश्यामि" इत्यादिनोक्तः । सांप्रतम्—

W 43

B 50

W 44

नाममात्रमिदं सर्वं संज्ञामात्रे प्रतिष्ठितम् ।
नाभिधानात्पृथग्भूतमभिधेयं प्रकल्प्यते ॥

25 —प्रज्ञापारमितापिण्डार्थः—५०

इति कृत्वा यत् **एतद्बोधिसत्त्व** इति नामस्वरूपमववदनीयम्, तस्यानुपलम्भो देशित इति शेषः । **न वेद्मि** इत्यादि व्याख्यातम् । अथवा, अतीतं **न वेद्मि**, वर्तमानं **नोपलभे**, अनागतं **न समनुपश्यामि**, त्र्यध्वशून्यत्वात् सर्वधर्माणामिति योज्यम् । अववादविषयं नाम तर्ह्यस्तीत्याह—**प्रज्ञापारमितामपि** इति । नाममात्रमित्यभिप्रायः । **बोधिसत्त्वम्** इति 30 नामस्वरूपम्[2], नामधेयस्य प्रकृतत्वात् । **कौकृत्यम्** इति । संवेदननिष्ठत्वाद्विषयस्थितेरनुपलम्भात् एतत्कौकृत्यं चेतसो विप्रतिसारिता । तदेवाह—**योऽहम** इत्यादिना । **आयव्ययम्** इति । विधिरायः, व्ययो निषेधः ।

---

१ B om. यतः. २ W °स्वभावम् for °स्वरूपम्.

विधानं प्रतिषेधं च मुक्त्वा शब्दोऽस्ति नापरः।

व्यवहारः

इति कृत्वा पदद्वयेनैव सर्वसंग्रहादेतावन्मात्रकमुक्तम्। एतदुक्तम्—तत्त्वेनायव्यय-विनिर्मुक्तत्वविशिष्टं रूपाद्यालम्बनमिति। तत्केनाकारेणालम्बनीयमित्याह—**अपि तु** इत्यादि। **तदपि नामधेयम्** आलम्बनं **न स्थितं** प्रबन्धरूपेण। B 51 W 45 5

निषेध्याभावतः स्पष्टं न निषेधोऽस्ति तत्त्वतः।
न च निर्विषयः साधुप्रयोगो विद्यते नञः॥
विकल्पापाश्रयत्वे वा सांवृतः स्यान्न तात्त्विकः।

इति न्यायात् **नास्थितम्**। **न विष्ठितं** प्रबन्धविसदृशत्वेन। तथैव **नाविष्ठितम्**। संवृत्या प्रतिभासमाननामधेयस्य कथं प्रबन्धतद्वैसादृश्यानुपपत्तिरिति **तत्कस्य हेतोः** इत्याशङ्क्याह— 10 **अविद्यमानत्वेन** इत्यादि। तत्त्वतः इति शेषः। संवृत्या न दोष इत्यभिप्रायः। उपसंहरन्नाह—**एवं तत्** इत्यादि। एतदुक्तम्—धर्मतामुखेन प्रबन्धतद्वैसादृश्यापगततत्त्वम् आकार इति। अधिमात्रस्यालम्बनार्थमाह—**सचेत्** इत्यादि। **एवं गम्भीरायाम्** इति नाममात्रत्वेन प्रज्ञप्ति-मात्रस्वभावायाम् अन्यतीर्थ्यैः स्वैश्च अनिश्चयभीरुभिरलब्धगाधायाम्। एतदुक्तम्—प्रज्ञप्तिमात्रत्व-विशिष्टं दुःखादिसत्यमालम्बनमिति। तत्केनाकारेणालम्बनीयमित्याह—**अधिमुच्यते** इत्यादि। 15 सा प्रज्ञप्तिर्न केनचिद्धर्मेण कुशलादिना वाच्या इति अधिमुच्यते अध्यालम्ब्यते। W 46

आयतो विपुलो हृष्ट उपकारपरो महान्।
कल्याणश्चैवमाधिक्यादाशयोऽध्याशयः सताम्॥

इति **अध्याशयेनाविरहितः** युक्तः स **बोधिसत्त्वः** प्रज्ञापारमितया अधिमात्रोष्म-स्वभावया मुच्यतः। अन्यत्रापि एवं प्रकरणबलात् प्रज्ञापारमितार्थो वेदितव्यः। **स्थितः** 20 प्राप्तापरिहाण्या **अविनीवर्तनीयायाम्** अष्टम्यां **बोधिसत्त्वभूमौ** तत्कार्यावैवर्तिकत्वलाभात्। **सुस्थितः** तदुपादानयोग्यत्वेन उत्तरोत्तरविशेषाधिगमलाभात् अप्राप्तापरिहाण्या। एतच्च द्वयमनभिनिवेशयोगेन इत्याह—**अस्थानयोगेन** इति। एतदुक्तम्—धर्मतामुखेनाकारोऽवाच्यतेति। पञ्चविंशतिसाहस्रिकायां च अधिमात्रोष्मालम्बनाकारमधिकृत्योक्तम्—"यापि इयं भगवन् धर्म-सांकेतिकी प्रज्ञप्तिर्यदुत बोधिसत्त्वः इति "विस्तरेण यावद्बुद्ध इति। सापि न केनचिद्धर्मेण 25 वचनीया कुशलेन वा अकुशलेन वा यावत् भावेन वा अभावेन वा। तद्यथापि नाम स्वप्नः" इत्यादि। तस्मान्न संदेहः कार्यः इत्यालम्बनाकारवन्निर्विकल्पकज्ञानाग्नेः पूर्वरूपत्वात् ऊष्मगतमिव ऊष्मगतं त्रिविधम्। दर्शनमार्गासन्नतरत्वमसत्यन्तराये भवतीति मोक्षभागीयादस्य विशेषो वेदितव्यः। तथा चोक्तम्— B 52

**आलम्बनमनित्यादि सत्याधारं तदाकृतिः।** 30
**निषेधोऽभिनिवेशादेर्हेतुर्यानत्रयाप्तये॥ २८॥**
**रूपाद्यायव्ययौ विष्ठास्थिती प्रज्ञप्त्यवाच्यते।** इति॥ W 47

ऊष्मानन्तरमिदानीं मृदुनो मूर्धगतकुशलस्यालम्बनार्थमाह—**पुनरपरम्** इत्यादि। **प्रज्ञापारमितायां** मुख्यतो मूर्धस्वभावायां **चरता भावयता** इति व्याख्यातम्। अथवा प्रयोगपृष्ठचित्तेन चरता, मौलचित्तेन भावयतेति योज्यम्।

**न रूपे स्थातव्यम्** इत्यादि। तत्र रूपणालक्षणं रूपम्। अनुभवलक्षणा वेदना। B 53 5 निमित्तोद्ग्रहणात्मिका संज्ञा। चित्ताभिसंस्कारलक्षणाः संस्काराः। अवबोधनलक्षणं विज्ञानम्। तत्पुनस्त्रिविधं रूपम्। कल्पितं रूपं ग्राह्यग्राहकरूपेण कल्पितत्वात्। विकल्पितं रूपम् असद्भूतपरिकल्पेन ज्ञानमेव तथा प्रतिभासते इति विकल्पितत्वात्। धर्मतारूपं तत्त्वतोऽरूपमेव शून्यतारूपेण परिनिष्पन्नत्वात्। एवं वेदनादयोऽपि वाच्याः।

यथौदारिकसंक्लेशभाजनाद्यर्थधातुतः।
10 रूपादीनामियानेव

अनुक्रमः। तत्र रूपादौ तत्त्वतोऽसत्त्वेन वस्तूपलम्भयोगान्न स्थातव्यम्, चेतसः प्रतिष्ठानं न कार्यमिति यावत्। एतदुक्तम्—यस्मात्स्वभावशून्यतया रूपादीनां रूपादिस्वभावेन अपगतस्वभावता, तस्मादस्थानार्हत्वविशिष्टं रूपाद्यालम्बनमिति। कस्मादेवमालम्बनमिति **तत्कस्य हेतोः** इत्याशङ्क्य आकारं व्यतिरेकमुखेनाह—**सचेद्रूपे** इत्यादिना। W 48 15 एवं मन्यते—आलम्बनग्रहणप्रकार एवाकारः, संविन्निष्ठा च विषयस्थितिः, इत्याकारानुरूपमेवाल्म्बनं ग्राह्यम्। अतो यदि रूपेऽनित्यादिभिराकारैस्तिष्ठति, तदा रूपाभिसंस्कारे रूपाभोगविकल्पे चरति। एवं च **न चरति प्रज्ञापारमितायां** मुख्यतो मृदुमूर्धस्वभावायाम्। एवं वेदनादिष्वपि योज्यम्। एतदुक्तम्—धर्मतामुखेनाकार एवंविधो ग्राह्यः, यत् परमार्थेन रूपादिसर्वधर्मशून्यतयोः परस्परमेकं रूपमिति। तत्र शून्यतायामनित्यत्वादीना-20 मभावेन रूपादौ न नित्यानित्यादिभिराकारैः स्थानं विधेयमिति। तथा हि—मृदुमूर्धाकारमधिकृत्य पञ्चविंशतिसाहस्रिकायां व्याख्यातम्—"रूपमेव शून्यता, शून्यतैव रूपम्, एवं यावत् या च भगवन् अनित्यतायाः शून्यता, न सा अनित्यता" इत्यादि। अभिसंस्कारमन्तरेण भावनानुत्पत्तेः, कथं पुनरभिसंस्कारे चरन्न चरतीति तत्कस्य हेतोः इत्याशङ्क्याह—**न हि** B 54 इत्यादि। एवं मन्यते—विकल्पोऽभिसंस्कारः, प्रज्ञापारमिता च निर्विकल्पा। तत्कथं 25 विकल्पे तत्त्वाभिनिवेशेन चरन् प्रज्ञापारमितायां चरति? केवलं मायापुरुषेणेव चरितव्यमिति। **न परिगृह्णाति नापि योगमापद्यते नापि परिपूरयते** इति पदत्रयं यथासंख्यं प्रयोगमौलपृष्ठावस्थासु द्रष्टव्यम्। प्रज्ञापारमितामिति मुख्यतो मृदुमूर्धस्वभावाम्। **न निर्यास्यति** इत्यादि। **अपरिगृहीतम्** अग्रहणार्हमभिसंस्कारं **परिगृह्णन्** स्वीकुर्वाणो न निर्यास्यति सर्वाकारज्ञतायामिति योज्यम्। W 49 सर्वाकारज्ञता च अत्र त्रिसर्वज्ञतासामान्यात् सर्वज्ञताशब्देनोक्ता, यथासंभवमेवमन्यत्रापि। 30 कथमग्रहणार्होऽभिसंस्कारः इति चेत्, तत्कस्य हेतोः इत्याशङ्क्याह—**रूपं हि** इत्यादि। एवं मन्यते—अभिसंस्कारविषयस्वभावा रूपादयो न्यायतोऽसत्त्वेन **अपरिगृहीताः प्रज्ञापारमिता-**

---

१ W सर्वज्ञतायां.

याम् अतस्तद्विषयोऽभिसंस्कारो वितथप्रतिभासित्वान्न ग्राह्य इति । तदेव दर्शयन्नाह–**यश्च रूपस्यापरिग्रहो न तद्रूपम्** इत्यादि । विधिप्रतिषेधयोर्भिन्नविषयत्वादिति भावः । प्रज्ञापारमितायामपि तत्त्वाभिनिवेशो न कार्यः, विपर्यासप्रसङ्गादित्याह–**सापि** इत्यादि । उपसंहरन्नाह–**एवं हि** इत्यादि । हिशब्दोऽवधारणे, एवमेवेत्यर्थः । एवमालम्बनाकारनिर्यातं मृदुमूर्धगतं समाधिमाह–**अयम्** इत्यादिना । **सर्वधर्मैः** रूपादिभिः **अपरिगृहीतो** यः 5 **समाधिः** अन्वर्थसंज्ञकः स तथोक्तः । **विपुलो** धर्मधातुवैपुल्येन, **पुरस्कृतो** यथोक्तालम्बनाकारविशेषाभ्यां चेतसः पुरतो वर्तनात् इत्यार्यविमुक्तिसेनः । अत एव क्वचिदपुरस्कृत इति पाठो न ग्राह्यः । **अप्रमाणनियतः** सर्वाकारज्ञताप्रतिनियमात् उरुकरुणाप्रज्ञायोगेन वा अप्रमाणसत्त्वार्थकरणे नियतत्वादप्रमाणनियतः । **असाधारणः** अगम्योऽन्येषां यथोक्तालम्बनादिपञ्चविधवैशिष्ट्यात् । मध्यस्यालम्बनार्थमाह–**सापि सर्वज्ञता** इति । अपिशब्दादनित्यतादि- 10 शून्यतानां परिग्रहः । **अपरिगृहीता** । **कुतः** इत्यादि । **न हि** इत्यादि । निमित्तमसाधारणं रूपं तत्त्वेनान्योन्यमेकरूपत्वात् नास्ति, अतोऽग्रहणमिति यावत् । एतदुक्तम्–धर्मधातुरूपतया अनित्यतादिसर्वाकारज्ञताशून्यतानां स्वस्वभावेन निःस्वभावत्वात् परस्परमेषामैकात्म्येन अनिमित्तत्वविशिष्टं रूपाद्यालम्बनमिति । निमित्तग्रहे को दोष इत्याह–**सचेत्** इत्यादि । यदि **निमित्ततो ग्रहीतव्या** भवेत्, तदा स्वशासने निमित्तग्रहेण दीर्घकालं मुक्तिमपश्यन् 15 निर्विण्णः सन् नैव इह शासने श्रेणिकसंज्ञः परिव्राजकस्तपस्वी श्रद्धामनिमित्तयोगेन अभिसंप्रत्ययं प्रतिलभते । निमित्तग्रहस्य तुल्यत्वादिति भावः । तदेव कथयन्नाह–**अत्र हि** इत्यादि । अत्र अनिमित्ते तथागतत्वाग्राहकत्वेन **सर्वज्ञज्ञाने** तन्निमित्तम् **अधिमुच्य** अधिमोक्षमनस्कारं कृत्वा मृद्विन्द्रियत्वेन श्रद्धया मार्गानुसरणात् **श्रद्धानुसारी प्रादेशिकेन** पुद्गलनैरात्म्य**ज्ञानेन** अवतीर्णः **सोऽवतीर्य** उत्तरकालं न रूपादि निमित्ततो मनसि करोति । **नापि तत्र** अनिमित्तभाव- 20 नायामुत्पन्नेन **प्रीतिसुखेन** तद्भावकं **ज्ञानं** निमित्ततः **समनुपश्यति** । तत्र प्रीतिः सौमनस्यं चैतसिकम्, सुखं प्रस्रब्धिः कायिकी । स हि लौकिकवीतरागः प्रथमद्वितीयध्यानान्यतरसंनिश्रयेणावतीर्णः इति भदन्तविमुक्तिसेनः । केनाकारेणालम्बनीयमित्याह–**नाध्यात्मम्** इत्यादि । **अध्यात्मं रूपस्य** उपात्तभूतभौतिकस्य आध्यात्मिकायतनस्य तद्भावकं **ज्ञानम्** अध्यात्मशून्यतया **न समनुपश्यति** । निमित्तत इति शेषः । **बहिर्धा रूपस्य** अनुपात्तभूतभौति- 25 कस्य बाह्यायतनस्य बहिर्धाशून्यतया । **अध्यात्मबहिर्धारूपस्य** तदुभयस्य शरीरस्योभयशून्यतया । रूपादन्यत्र तर्हि पश्यतीत्याह–**नाप्यन्यत्र** इत्यादि । एवं धर्मभावनाभिनिविष्टः कथमसौ वक्तव्य इत्याह–**अत्र** इत्यादि । **अत्र** अस्मिन् **पदपर्याये** योगस्थानविशेषे अधिमुक्तिचर्याभूमौ स्थितः **श्रेणिकोऽधिमुक्तः** इति वक्तव्यो[1] नाधिगत इति । यतः श्रेणिकः **अत्र सर्वत्र अनिमित्ते सर्वज्ञज्ञाने** तत्त्वानधिगमनेन **श्रद्धानुसारी** इत्युच्यते । तीक्ष्णेन्द्रियत्वेन 30 तत्त्वाधिगमे तु धर्मानुसारी भवतीत्यभिप्रायः । कथं पुनर्मृद्विन्द्रियोऽप्येवमधिमुक्त इत्याह–

W 50 B 55 W 51 B 56 W 52

१ W वेदितव्यो.

**धर्मताम्** इत्यादि। पूर्वविधबलात् प्रज्ञापारमिताधर्मतामविसंवादेन **प्रमाणीकृत्य** एवमनिमित्तत्वेन **अधिमुक्त** इति। तस्मात् **तेन न कश्चिद्धर्मः अध्यारोपतः परिगृहीतो नापि** विद्यमानत्वेनोपलब्धः, यं धर्ममुपादेयत्वेन स **गृह्णीयात्**, स्वीकुर्यात्। **मुञ्चेद्वा** हेयत्वेन। आस्तां तावदन्यत्। **निर्वाणमपि न स मन्यते**, तत्त्वतो न बुध्यते। एतदुक्तम्—स्वभावप्रति- 5 षेधेनास्वीकारो रूपादीनां धर्मतामुखेनाकार इति। तत्र श्रेणिकोदाहरणम्। तस्य तीर्थिकसंबन्धेन समाधिव्युत्थितस्य अधिमोक्षबलेनैव तदर्थप्रत्यक्षसाक्षित्वज्ञापनार्थम्। अधिमात्रस्यालम्बनार्थमाह—**इयमपि** इत्यादि। इयमिति वक्ष्यमाणा, न केवलं पूर्वोक्ता इत्यपिशब्दः। B 57 तदेव दर्शयन्नाह—**यद्रूपम्** इत्यादि। यदिति यस्मादर्थे निपातः। रूपादीनां निमित्तासमीक्षणादिति भावः। श्रावकवत्तर्ह्यनुपलम्भेन सर्वनिरोधे बोधिसत्त्वो निर्वायादित्याह—**न च** 10 इत्यादि। चशब्दोऽवधारणे।

असंलीनेन कायेन वेदनामधिवासयन्।
प्रद्योतस्येव निर्वाणं विमोक्षस्तस्य चेतसः॥ इति।

निर्वाणस्य महायाने प्रतिषिद्धत्वात्। सद्धर्मपुण्डरीकसूत्रप्रामाण्येन तावत्कालं सत्त्वार्थं प्रतिप्रस्रब्धिमुपादाय नैव **अन्तरा** मध्ये श्रावकवदनिमित्तत्वसाक्षात्करणेन महोपायकौशल्य- W 53 15 बलात् **परिनिर्वाति**। निर्वेधभागीयावस्थायां श्रावकपरिनिर्वाणस्यासद्भावात्। **क्रमेणेति** शेषः। **अपरिपूर्णैः** इति कियन्मात्रेणाप्यन्येषां भावात् सर्वाकारानिष्पन्नैर्यावद् **बुद्धधर्मैः** इति योज्यम्। **तथागतबलादयो** वक्ष्यन्ते। **तस्मात्** इत्याद्युपसंहारः। एतदुक्तम्—स्वभावाभावतयैव नीलादिनिमित्तादर्शनविशिष्टं तत्त्वतो रूपाद्यालम्बनमिति। केनाकारेणालम्बनीयमित्याह— **पुनरपरम्** इत्यादि। **एवम्** इति वक्ष्यमाणक्रमेण। **उपपरीक्षितव्यं** भावनाकाले यथाव- 20 धृतार्थप्रत्यवेक्षणात्। **उपनिध्यातव्यं** श्रुतचिन्ताकाले युक्त्यागमाभ्यां निरूपणात्। **कतमैषा** इति रूपादिस्कन्धानां मध्ये कतमा। अथवा किं द्रव्यं गुणः कर्म सामान्यं समवायो विशेषो वेत्यर्थः। **कस्य चैषा** इति किमात्मनो धर्मस्य वा संबन्धिनी। अपि तु रूपादीनामनुत्पन्नत्वान्न काचिन्नापि कस्यचिदित्यर्थः। यद्येवम्, अभावस्तर्हीत्याह— **किं यो धर्मः** B 58 इत्यादि। निर्विषयस्य नञोऽप्रयोगात् अभावस्तत्त्वतः **प्रज्ञापारमिता**। न भवतीति भावः। W 54 25 **सचेत्** इत्याद्युपसंहारः। **प्रज्ञापारमितया** अधिमात्रमूर्धस्वभावया अधिगमात् **अविरहितो वेदितव्यः**। एतदुक्तम्—सम्यग्धर्मप्रविचयत्वेन प्रज्ञायाः सर्ववस्तुनोऽनुपलम्भतया निरूपणादविद्यमानप्रज्ञापारमितास्वभावत्वं धर्मतामुखेनाकारः इत्यालम्बनाकारवत् चलकुशलमूलमूर्धत्वात् मूर्धगतं त्रिविधम्। तथा चोक्तम्—

**रूपादावस्थितिस्तेषां तद्भावेनास्वभावता ॥ २९ ॥**
30 **तयोर्मिथःस्वभावत्वं तदनित्याद्यसंस्थितिः।**
**तासां तद्भावशून्यत्वं मिथः स्वाभाव्यमेतयोः ॥ ३० ॥**
**अनुद्ग्रहो यो धर्माणां तन्निमित्तासमीक्षणम्।**
**परीक्षणं च प्रज्ञायाः सर्वस्यानुपलम्भतः ॥ ३१ ॥** इति ॥

मूर्धानन्तरमिदानीं मृदुनः क्षान्तिगतकुशलस्यालम्बनार्थं प्रश्नपूर्वकमाह- **किं कारणम्** इत्यादि । **रूपस्वभावेन** इति, आलम्ब्यते इति शेषः । एतदुक्तम्-यदा रूपादिकं विरहितं रूपादिस्वभावेनालम्ब्यते तदा **किं कारणं प्रज्ञापारमितया** मुच्यतो मृदुक्षान्तिस्वभावया अधिगमाद[1]विरहितो वेदितव्यः इति । प्रतीत्यसमुत्पादधर्मतेयं यदुत अस्मिन् सति इदं भवति इत्यभिप्रायेण **रूपमेव** इत्युत्तरमावेदयन्नाह । अन्यथा यदा रूपमेव विरहितं रूपस्वभा- 5 वेन इति प्रश्ने रूपमेव विरहितं रूपस्वभावेन इत्युत्तरं न युक्तं स्यात् । कथं पुनः स्वभावेन विरहितं रूपादि इत्याशङ्क्य प्रज्ञापारमितायाः स्वभावविरहितत्वप्रतिपादनेनैव अन्येषां स्वभावविरहितत्वं प्रतिपादितमिति तदर्थमाह-**प्रज्ञापारमितालक्षणेन** सामान्यरूपेण **विरहिता प्रज्ञापारमिता** । विशेषरूपेणापि लक्षणेन इत्यपिशब्दः । विपर्यासविनिवृत्तिफलत्वा- देशनाया लक्ष्यलक्षणं तर्ह्यस्तीत्याह-**लक्षणस्वभावेन** इत्यादि । लक्षणं सामान्यम्, लक्ष्यो 10 विशेषः । तयोस्तर्हि स्वभावोऽस्तीत्याह-**स्वभावलक्षणेन** इति ।

> लक्ष्यलक्षणनिर्मुक्तं वागुदाहारवर्जितम् ।
> तत्त्वं प्राज्ञप्तिकी युक्ता लक्ष्यलक्षणसंस्थितिः ॥

इति भावः । एतदुक्तम्-शून्यतया तल्लक्ष्यलक्षणयोरेकत्वेनास्वभावत्वविशिष्टं रूपाद्यालम्बनम् इति । केनाकारेणालम्बनीयमिति प्रश्नपूर्वकमाकारार्थमाह-**किं पुनः** इत्यादि । 15 **अत्र** अस्मिन्नालम्बने संवृत्या यः **शिक्षिष्यते, स किं निर्यास्यति सर्वज्ञतायाम्** ? तन्निमित्त- मृदुक्षान्तिगतकुशललाभेनेति भावः । धर्मताविरुद्धः एवोक्त इत्यभ्युपगमार्थमाह-**एवमेतत्** इत्यादि । **निर्यास्यति** इति रूपादीनामभाव एव स्वभावता संवृतिपरमार्थमुखेनाकारः, तस्य भावनयेति यावत् । कथं पुनर्मृदुक्षान्तिगतकुशले शिक्षमाणः सर्वाकारज्ञतायां गमिष्यतीति तत्कस्य हेतोः इत्याशङ्क्य मध्यस्यालम्बनार्थमाह-**अजाता हि** इत्यादि । उत्तरोत्तरालम्बन- 20 विशेषादिभिरधिगमविशेषे नियमेन यास्यतीति भावः । आद्यो हिशब्दोऽवधारणे । अजाता एवेत्यर्थः । कुतः, यस्मात् क्षणिकानित्यतया जातिधर्मनिरोधेन अनिर्याता न निर्वाणं गताः सर्वधर्माः इति । प्रकृत्यस्वभावत्वेन अनुत्पादानिरोधविशिष्टं रूपाद्यालम्बनमिति यावत् । केनाकारेणालम्बनीयमित्याह-**एवं चरतः** इत्यादि । एवमनन्तरोक्तेन न्यायेन चरतो भावयतः सर्वे गत्यर्था अवबोधार्था इति कृत्वा । **आसन्नीभवति** इति शीघ्रागमप्राप्तेर्निकटवर्तिनी 25 स्यात् । **सत्त्वपरिपाचनाय** इति कुशलधर्मनियोजनात् सत्त्वपरिपाकाय । **काय** इत्यादि । सर्वधर्मस्वरूपावबोधेन कायादीनां सर्वाकारविशुद्धिः, इति विशुद्धिहेतुत्वात् विशुद्ध्याकारेण हेतुमुखेनाभ्यसनात्कायपरिशुद्धिर्भवति । परिशुद्धं त्रिविधं कायकर्म । **चित्तपरिशुद्धिः** परिशुद्धं त्रिविधं मनस्कर्म । स्थानस्थोत्तमपूर्णत्वेन निष्पत्तेः द्वात्रिंशन्महापुरुष**लक्षणपरिशुद्धिः** । सत्त्वभाजनयोः परिशुद्धता **बुद्धक्षेत्रपरिशुद्धिः** । निर्वेधभागीयावस्थायां सर्वथा असंभवात् 30 कियन्मात्रेणेति भावः । **एवम्** इत्याद्युपसंहारः । अधिमात्रस्यालम्बनार्थमाह-**सचेद्रूपे** इत्या-

W 55 · B 59 · W 56 · B 60 · W 57 · W 58

१ B om. अधिगमाद्.

दिना। एवं मन्यते—यावदभिनिवेशयोगेन निमित्तग्रहाच्चरति, तावन्निमित्तक्लेशा बोधिसत्त्वा इति वचनादुपलम्भमूले संसारक्लेशे पततीति। तत्र **रूपं** कार्यभूतम्। **रूपनिमित्तं** सहकारिकारणम्। **रूपं निमित्तम्** उपादानकारणम्। **उत्पादो** जन्म। **निरोधः** क्षणिकानित्यतया। **विनाशः** प्रबन्धानित्यतया। **शून्यम्** उभयोरभावः। **अनुपायकुशलः** विपर्यास-

W 59 5 प्रवृत्तत्वात् **वेदितव्यः**। व्यतिरेकमुखेन निर्दिश्य अन्वयमुखेनाह—**कथम्** इत्यादि। **एवं चरन्** इत्याद्युपसंहारः। स्वसामान्यलक्षणानुपपत्त्या सर्वधर्माणामनिमित्तत्वविशिष्टं रूपा-

B 61 द्यालम्बनमिति। **एवं चरन् बोधिसत्त्वश्चरति प्रज्ञापारमितायाम्** अधिमात्रक्षान्तिस्वभावायाम्। केनाकारेणालम्बनीयमित्याह—**स हि चरन्** इत्यादि।

विधानं प्रतिषेधं च तावेव सहितौ पुनः।
10 प्रतिषेधं तयोरेव सर्वथा नावगच्छति॥

इति भावः। कथं पुनरनवगमे भावनेति **तत्कस्य हेतोर्नोपैति** इत्याशङ्क्याह—**सर्वधर्मा हि** इत्यादि। यस्मात् प्रकृत्यैव रूपादिनिमित्तानामाश्रयरहितत्वेन अधिमोक्षमनस्कारानधिमोक्षतत्त्वमनस्कारापरिज्ञानम्, इति धर्मतामुखेनाकारेणालम्बनात् अधिमोक्षेणास्वीकृतत्वात् **अनुपगताः**, तत्त्वमनस्कारेण चागृहीतत्वात् **अनुपात्ताः**, इत्यालम्बनाकारवदपायाभावेनाधि-

15 मात्रधर्मक्षमणात् क्षान्तिगतं त्रिविधम्। तथा चोक्तम्—

**रूपादेरस्वभावत्वं तदभावस्वभावता।**
**तदजातिरनिर्याणं शुद्धिस्तदनिमित्तता॥ ३२॥**
**तन्निमित्तानधिष्ठानानधिमुक्तिरसंज्ञता।** इति॥

W 60 अत एव "क्षान्तिलाभ्यनपायगः" इति वचनाद्बोधिसत्त्वाः क्षान्तिं नोत्पादयन्ति,

20 इति यदुक्तमाचार्यपादैस्तच्चिन्त्यम्। बोधिसत्त्वानां क्षान्त्यधिगमवचनात्, कर्मायत्ततयेत्यभिप्रायात् क्षान्तिलाभी नापायं गच्छति, इत्यपि सूत्रं न विरुध्यते। अवश्यं चैतद्विज्ञेयम्। तथा हि—भगवदादेशेन शारिपुत्रादयोऽपि सुन्दरनन्दं गृहीत्वा नरकचारिकां गता इति प्रदेशान्तरे पठ्यते। क्षान्त्यनन्तरमिदानीं मृदुनः अग्रधर्मगतकुशलमूलस्यालम्बनार्थमाह—

B 62 **अयम्** इत्यादि। सर्वधर्मा नोपादीयन्ते येन समाधिना स **सर्वधर्मानुपादानो नाम समाधिः**।

25 तत्त्वतः समाधिस्वरूपं रूपाद्यालम्बनम्। अयं **विपुल** इत्यादिभिः **उच्यते** इति संबन्धः। केनाकारेणालम्बनीयमित्याह—**अनेनैव** इत्यादि। स्वप्रणिधिपुण्यज्ञानधर्मधातुबलेन अनाभोगात् सर्वलोकधातुषु यथाभव्यतया समाधेर्व्यापारः प्रवर्तते, इति कार्यमुखेनाकारेणालम्बनात् **क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबुध्यते**। मध्यस्यालम्बनार्थमाह—**बुद्धानुभावेन** इत्यादि। बुद्धानुभावप्रक्रमेऽपि पुनस्तद्वचनं प्रतिभानविशेषाभिद्योतनार्थम्। अथवा विनेयानां

W 61 30 तत्स्मरणदृढीभावार्थम्। **व्याकृतोऽयम्** इति। धर्मतैषा सम्यक्प्रतिपन्नसमाधेर्योगिनो बुद्धैर्व्याकरणं क्रियते, इति व्याकरणहेतुत्वविशिष्टरूपाद्यालम्बनात्। **तथागतैः** इत्यादि। सर्वाकाराविपरीतधर्मदैशिकत्वेन परार्थसंपदा **तथागताः**। सवासनक्लेशज्ञेयावरणप्रहाणयोगात्

स्वार्थसंपदा **अर्हन्तः** । सम्यक्संपद्द्वयावाहकमार्गाधिगमात् **सम्यक्संबुद्धाः** । **अनेन** इति मध्याग्रधर्मगतेन । केनाकारेणालम्बनीयमित्याह—**स तमपि** इत्यादि । **न समनुपश्यति** निर्विकल्पेन चेतसा । **न च तेन मन्यते** सविकल्पेन तत्त्वतोऽसत्त्वात् । **अहं समाहितः** इति लब्धसमाधिकः **समापत्स्ये** इत्यादयः प्रयोगमौलपृष्ठभाविनो विकल्पाः, कालत्रयभाविनो वा । **सर्वेण** इत्यादि । "द्वे इमे सर्वते वस्तुसर्वता आकारसर्वता च" इति वचनात् । **सर्वेण** 5 अतीतादिवस्तुभेदेन । **सर्वं** स्कन्धादिविषयं विकल्पजातं वस्तु । **सर्वथा** मृदुमृदुनापि प्रकारेण । **सर्वं** सवासनसर्वप्रकारम् । **न संविद्यते** सर्वविकल्पानुपपत्त्या विदितसमाधिस्वरूपस्य बोधिसत्त्वस्य **अहं समाहितः** इत्यादिज्ञानानुत्पत्त्या धर्मतामुखेनाकारेणाभ्यसनात् न संभवति । अधिमात्रस्यालम्बनार्थमाह—**येनायुष्मन् सुभूते समाधिना** इत्यादि । अधिमात्राग्रधर्मगतेन । **शक्यः स समाधिर्दर्शयितुम्** इति । किं बोधिसत्त्वादीनां विवेकरूपेणेति 10 भावः । क्वचित् कतमेनेति पाठः । तत्र शक्यः स समाधिर्दर्शयितुम्, इति तस्यैव प्रश्नयितुर्वचनमसंगतमिति चिन्त्यम् । **नो हीदम्** इत्याद्युत्तरम् । धर्मतया समाधिबोधिसत्त्वप्रज्ञापारमितार्थत्रयस्य परस्परमेकं रूपमित्यशक्यपृथगुपदर्शनविशिष्टरूपाद्यालम्बनात् नैवेत्यर्थः । कथं पुनर्भाव्यमानोऽपि दर्शयितुमशक्य इति तत्कस्य हेतोः इत्याशङ्क्य आकारप्रतिपादनेनोत्तरमाह—**तमपि** इत्यादिना । सर्वधर्माविद्यमानत्वेन समाधेरविकल्पनं परमोपायः इति धर्मतामुखे- 15 नाकारेणलम्बनात् तं **समाधिं न जानाति** निराकारेण चेतसा । प्रत्यासत्तिनिबन्धनाभावात् । **न संजानीते** साकारेण । वस्तुभावमन्तरेण स्वप्नादौ भावात् । न केवलमाकारमित्यपिशब्दः । इदंतया दर्शनस्य विकल्पाधीनत्वादिति भावः । सर्वानुपलम्भे भाव्यभावकभावनानुपपत्तिरित्यभिप्रायेण **शारिपुत्रो न जानाति** इत्याद्याह । संवृत्या न दोष इति मत्वा सुभूतिराह—**न जानाति** इत्यादि । तमेवाभिप्रायं तत्कस्य हेतोः इत्याशङ्क्याह-**अविद्यमानत्वेन** इति । 20 तत्त्वत इति शेषः । प्रयोगादयस्तु मायापुरुषस्येव पूर्वावेशादित्यादि व्याकृतम् । धर्मताविरुद्धकथनात् साधुकारार्थमाह—**साधु** इत्यादि । **प्रतिभाति ते** तव तन्निर्भासिज्ञानोदयेन । **उपदिशसि** परेषां तदालम्बनकथनात् । **एवं चात्र** इत्याद्युपसंहारः । चशब्दोऽवधारणे । एवमेवात्र निर्वेधभागीये इत्यर्थः । कथं पुनरनेन क्रमेण शिक्षितव्यमिति तत्कस्य हेतोः इत्याशङ्क्याह—**एवं हि** इत्यादि । **प्रज्ञापारमितायां** निर्वेधभागीयस्वभावायाम्, इत्यालम्बना- 25 कारवल्लौकिकसर्वधर्माग्रत्वादग्रधर्माख्यं त्रिविधम् । तथा चोक्तम्—

**समाधिस्तस्य कारित्रं व्याकृतिर्मननाक्षयः ॥ ३३ ॥**
**मिथस्त्रिकस्य स्वाभाव्यं समाधेरविकल्पना ।**
**इति निर्वेधभागीयं मृदुमध्याधिमात्रतः ॥ ३४ ॥** इति ॥

एतदुक्तम्—एवं कृतधर्मप्रविचयः समाहितचित्तश्च सर्वधर्मनैरात्म्यं भावयन् क्रमेण 30 यदा पृथग्भूतार्थाभिनिवेशाभावात् ईषत्स्पष्टज्ञानालोकेन मनोमात्रमेव पश्यति, तदा अस्योष्मगतावस्था । स एव अत्र आलोकलब्धो नाम समाधिरुच्यते महायाने । यदा तस्यैव धर्मालोकस्य

B 63 W 62 W 63 B 64

W 64 वृद्धयर्थं नैरात्म्यभावनायां वीर्यारम्भेण मध्यस्पष्टो ज्ञानालोको भवति, तदा मूर्धावस्था। स एव वृद्धालोको नाम समाधिः। यदा तु चित्तमात्रावस्थानेन स्पष्टतरो बाह्यार्थाभिनिवेशाभावो ज्ञानालोको जायते, तदा क्षान्त्यवस्था। ग्राह्याकाराभावानुप्रवेशात्तत्त्वार्थैकदेशप्रविष्टो नाम समाधिः। यदा पुनरर्थग्राहकविक्षेपानाभासो ज्ञानालोको निष्पद्यते, तदा लौकिकाग्र-
5 धर्मावस्था। स एव आनन्तर्यो नाम समाधिः। सर्वाश्चैता अवस्थाः दृढाधिमुक्तितोऽधिमुक्ति-चर्याभूमिरुच्यते। अस्यां च भूमौ वर्तमानो बोधिसत्त्वः पृथग्जनोऽपि सर्वबालविपत्तिं समति-
B 65 क्रान्तोऽसंख्येयसमाधिधारणीविमोक्षाभिज्ञादिगुणान्वितो रत्नमेघे पठ्यते। इति निर्वेधभागीयानामालम्बनाकारहेतुत्वविशेषान् निर्दिश्य चतुर्विकल्पसंयोगार्थं[1] सर्ववस्त्वधिष्ठानं प्रथमं ग्राह्यविकल्पमाह—**एवं शिक्षमाणः** इत्यादिना। किमिति भावः। उद्भावनासंवृत्या शिक्षते
10 इत्यभिप्रायेणाह—**एवं शिक्षमाणः** इत्यादि। अविदितभगवदभिप्रायः **शारिपुत्रः** पृच्छति—
W 65 तत्त्वेन **कतमस्मिन् धर्मे शिक्षते** इति। तत्र वस्तुमात्राधिष्ठानविकल्पेन विपर्यासानुषङ्गात् परमार्थतो न क्वचिदित्याह भगवान्—**न कस्मिंश्चिद्धर्मे शिक्षते** इति। शिक्षमाणोऽपि कथं न शिक्षते इति तत्कस्य हेतोः इत्याशङ्क्याह **न हि** इत्यादि। सांक्लेशिकधर्मयोगाद् **बालाः**, वैयवदानिकधर्मविरहात् **पृथग्जनाः**। त एव चैवंविधधर्माधिमुक्तिबाहुश्रुत्यविगमात्
15 **अश्रुतवन्तः**। एवं मन्यते—यथा अविद्याविकल्पबलात् विद्यमानत्वेनोपलम्भात् **अभिनिविष्टास्तथा न संविद्यन्ते,** अतः संवृत्या शिक्षमाणास्तत्त्वतो न शिक्षन्ते इति। यदि तथा न संविद्यन्ते, अर्थात्तर्हि अन्यथा विद्यन्ते। तथा च भावग्रहादोषः इत्यभिप्रायेणाह—**कथं तर्हि** इत्यादि। प्रवृत्ति[2]विपर्यासनिराकरणाद्यथा अभिनिविष्टास्तथा न संविद्यन्ते इति। यदि नामैवमुक्तम्, तथापि तत्त्वतो न सन्तीत्याह—**यथा** इत्यादि। यथा न्यायतो **न संविद्यते तथा** अविचारैकरम्यत्वेन
20 संवृत्या **विद्यन्ते,** अविद्यमानतैव विद्यमानतेति यावत्। **एवम्** इत्याद्युपसंहारः। एवमविद्यमाना यतस्तेन कारणेन नैरुक्तविधानात् संवृत्या विपरीतज्ञानमज्ञानम्—**अविद्येत्युच्यते,** इत्यनेन
B 66
W 66 अविद्याविकल्पोऽभिहितः। रूपादिस्कन्धविकल्पार्थमाह—**तान्** इत्यादि। वस्तुमात्राधिष्ठानेन सर्वेऽपि तत्प्रतिबद्धा विकल्पाः संबद्धा इति ज्ञापयितुं पूर्वेण संबन्धः कथितः। एवमुत्तरत्रापि ज्ञेयम्। कथमभिनिविष्टा इत्याह—**तैः** इत्यादि। तत्त्वेन **असंविद्यमानाः सर्वधर्माः** रूपादि-
25 स्कन्धाः। तद्विकल्पनया अभूतपरिकल्पादध्यारोपिताः **कल्पिताः**। नामरूपाभिनिवेशविकल्पार्थमाह—**ते तान् कल्पयित्वा** इत्यादि। शाश्वतोच्छेदयोः **अन्तयोः** अभिनिविष्टाः **तान्** नामरूपादीन् **धर्मान्** तदभिनिवेशविकल्पात् नित्यस्यार्थक्रियाविरहात् संवृत्या अनित्या एवेति लौकिकेन श्रुतादिमयेन ज्ञानेन **न जानन्ति**।

अज्ञानात्कल्पितं पूर्वं पश्चात्तत्त्वार्थनिर्णये[3]।
30 यदा न लभते भावमेवाभावं तदा कुतः॥

—रत्नावली

१ W °संयोगार्थात्. २ W प्रवृत्त°. ३ W °निश्चये.

इति भावनया **न पश्यन्ति** लोकोत्तरेण । **तस्मात्** तत्त्वेन **असंविद्यमानान्** नामरूपादीन् **सर्वधर्मान्** तदभिनिवेशबलात् **कल्पयन्ति** । अन्तद्वयसक्तिविकल्पार्थमाह—**कल्पयित्वा द्वौ अन्तौ अभिनिविशन्ते** इति । तत्सक्तिविकल्पादिति भावः । संक्लेशव्यवदानाज्ञाना- W 67
विकल्पार्थमाह—**अभिनिविश्य** इत्यादि । अभिनिवेशहेतुं **तत्** निमित्तम् **उपलम्भं निश्रित्य** निमित्तीकृत्य सांक्लेशिकवैयवदानिकधर्मस्वरूपाज्ञानविकल्पबलेन **अतीतान्** यावत् 5
**प्रत्युत्पन्नान् धर्मान्** कल्पयन्ति । आर्यमार्गाप्रतिष्ठानविकल्पार्थमाह—**ते कल्पयित्वा नामरूपेऽभिनिविष्टाः** इति । दर्शनादिमार्गास्थित्यभिनिवेशादिति भावः । तत्र **नाम** वेदनादयोऽरूपिणः स्कन्धाः, **रूपं** रूपस्कन्धः । उपलम्भविकल्पार्थमाह—**तैरसंविद्यमानाः** B 67
**सर्वधर्माः कल्पिताः** इति । तदुपलम्भाभिनिवेशादिति भावः । आत्मादिविकल्पार्थमाह—
**ते तानसंविद्यमानान्** इत्यादि । 10

> आत्मनि सति परसंज्ञा, स्वपरविभागात्परिग्रहद्वेषौ ।
> अनयोः संप्रतिबद्धाः सर्वे क्लेशाः प्रजायन्ते ॥
>
> —सुगतकीर्ति

इत्यात्माद्यभिनिवेशादविपरीतं धर्मपुद्गलनैरात्म्यलक्षणं **यथाभूतं मार्गं** दर्शनादिकं पूर्ववत् **न जानन्ति, न पश्यन्ति** । विशुद्ध्युत्पादादिविकल्पार्थमाह—**यथाभूतं मार्गमजानन्तः** 15
इति । **न निर्यान्ति** न निर्गच्छन्ति **त्रैधातुकात्** संसारात् । यतो **न बुध्यन्ते** इत्यादिना[1] । विशुद्ध्युत्पादाद्यभिनिवेशात् **भूतकोटिम्** अप्रार्थेन तत्त्वम् । **तेन** कारणेन **बाला इति** व्यपदेशं **संख्यां गच्छन्ति** प्रतिलभन्ते । प्रतिपक्षवस्त्वधिष्ठानं द्वितीयं ग्राह्यविकल्पमाह—**ते सत्यं धर्मं** W 68
**न श्रद्दधति** इत्यादिना । अविपरीतार्थेन सत्यं धर्मं प्रतिपक्षलक्षणं तदभिनिवेशविकल्पयोगेन विपरीतप्रतिपत्त्या स्वरूपाननुभवात् न श्रद्दधति नाधिमुञ्चेयुः । व्यतिरेकमुखेन विपरीत- 20
प्रतिपत्तिमेवाह—**न खलु पुनः** इत्यादिना । **कंचिद्धर्मं** वैयवदानिकम् । ग्राह्यविकल्पेनेति शेषः । स चैवं विषयभेदान्नवप्रकारो भवति । तद्यथा—राश्यर्थविकल्पः, आयद्वारार्थविकल्पः, गोत्रार्थविकल्पः, उत्पादार्थविकल्पः, शून्यतार्थविकल्पः, पारमितार्थविकल्पः, दर्शनमार्गविकल्पः, भावनामार्गविकल्पः, अशैक्षमार्गविकल्पः इति । तथा चोक्तम्—

> **द्वैविध्यं ग्राह्यकल्पस्य वस्तुतत्प्रतिपक्षतः ।** 25
> **मोहराश्यादिभेदेन प्रत्येकं नवधा तु सः** ॥ ३५ ॥ इति ॥

तत्र सर्ववस्तुक एव प्रथमो ग्राह्यविकल्पः, व्यवदानवस्तुक एव द्वितीयः इत्यनयोर्ग्राह्यविकल्पयोर्विशेषः । एवं च कृत्वोच्यते—यः प्रथमो ग्राह्यविकल्पो द्वितीयोऽपि स इति B 68
पूर्वपादकः । यस्तावत्प्रथमो द्वितीयोऽपि सः । तद्यथा—सर्ववस्तुकः प्रथमो ग्राह्यविकल्पः स्यात् द्वितीय एव न प्रथमः, तद्यथा व्यवदानमात्राधिष्ठानो द्वितीयो ग्राह्यविकल्पः इत्येके । 30
प्रथमः संक्लेशवस्त्वधिष्ठानो द्वितीयो व्यवदानवस्त्वधिष्ठानः । अन्योन्यव्यवच्छेदरूपत्वादनयो-

---

1 W om. इत्यादिना.

W 69 भेदः इत्यपरः। पुद्गलद्रव्याधिष्ठानं प्रथमं ग्राहकविकल्पमाह—**एवम्** इत्यादिना। एवमनन्तरोक्तक्रमेण ग्राह्यविकल्पद्वयमकृत्वा **शिक्षते**। किं प्रथमग्राहकविकल्पनेनेति[1] भावः। विकल्पावरणस्य तुल्यत्वादिति **भगवानाह**। **न शिक्षते** इति। तत्त्वेनेति शेषः। संवृत्या तु आदिकर्मिकस्यैवं शिक्षान्यथानुपपत्तेरित्याह—**एवं शिक्षमाणः** इत्यादि। **सर्वज्ञतायां शिक्षते**
5 इत्यादिपदत्रयं यथाक्रमं प्रयोगाद्यवस्थासु वेदितव्यम्। स चैवं विषयभेदात् नवप्रकारो भवति। तद्यथा—स्वतन्त्रात्मविकल्पः, एकात्मविकल्पः, कारणात्मविकल्पः, द्रष्ट्राद्यात्मविकल्पः, संक्लेशाधारात्मविकल्पः, वैराग्याधारात्मविकल्पः, दर्शनमार्गाधारात्मविकल्पः भावनामार्गाधारात्मविकल्पः, कृतार्थाधारात्मविकल्पः इति। प्राज्ञप्तिकपुरुषाधिष्ठानं द्वितीयं ग्राहकविकल्पम्। तस्मिन् विकल्पे कुचोद्यपरिहारद्वारेणाह[2]—**यो भगवन्** इत्यादिना। प्राज्ञप्तिक
10 एव पुरुषो ग्राहकः इत्यभिनिवेशे वितथप्रख्यातिरूपत्वात् मायास्वभावः पुरुषो **मायापुरुषः**
W 70 प्राज्ञप्तिक एवेति तस्यापि शिक्षा प्राप्ता। न चैवमचेतनत्वादपरिज्ञानेऽपि शिक्षायां सर्वेषां
B 69 शिक्षाप्राप्तेः मुक्तिरयत्नसिद्धेत्यभिप्रायेण **यः** इत्यादि वदतः **तस्य कथं निर्देष्टव्यम्** उत्तरं भवेदित्यर्थः। वितथप्रख्यातिरूपं समानं रूपादीनाम्। अतो गत्यन्तराभावात् मायापुरुषेणैव शिक्षितव्यम्। न चायत्नसिद्धा मुक्तिरित्यभिप्रायवान् भगवानाह—**तेन हि** इत्यादि। यस्मात्त्वमेवं
15 पृच्छसि, तस्मात् **त्वामेवात्र प्रश्ने प्रतिप्रक्ष्यामि** प्रतिप्रश्नं करिष्यामि। **साधु** इत्यादि। **साधु** एवं **भगवन्** इत्यभ्युपगमं कृत्वा, इति एवं **भगवतः** सकाशाद् **अश्रौषीत्** श्रुतवान्।
W 71 कथमेवं श्रुतवानित्याह—**भगवान्** इत्यादि। विसर्जयन्नाह—**न हि** इत्यादि। नैव तदन्यत्वं **भगवन्** यस्मात् **नान्या सा माया**। **नान्यत्तद्रूपादि**। **रूपाद्येव माया, मायैव रूपादि**। एकानेकस्वभाववैधुर्यात्तत्त्वतोऽनयोर्निःस्वभावत्वे वितथप्रख्यातिरूपं समानमिति भावः।
20 मायारूपाद्योरेकत्वप्रतिपादने सति मायापुरुषेणैव शिक्षितव्यमिति प्रतिपादनायाह—**तत्किं मन्यसे** इत्यादि। अत्रैषा पञ्चसूपादानस्कन्धेषु **मायोपमेषु बोधिसत्त्व इति संज्ञा** निमित्तोद्ग्रहणम्। वस्तुसमेतमहमिति ज्ञानं **समज्ञा**। ज्ञेयज्ञानयोर्ग्राह्यग्राहकप्रकाराभिनिवेशविज्ञानं **प्रज्ञप्तिः**। विविधपरोपात्तानुपात्तवस्तुसंबन्धव्यवहरणं व्यवहारः इत्यार्यविमुक्तिसेनः। **गोत्रावस्थायां बोधिसत्त्व इति संज्ञा** संज्ञैव केवला। चित्तोत्पादावस्थायां जानातीति ज्ञं
25 समं ज्ञं चित्तं प्रवृत्तिनिमित्तं यस्या बोधिसत्त्व इति संज्ञायाः सेयं **समज्ञा**, सर्वसत्त्वसमज्ञाननिमित्ता। सप्तसु प्रयोगभूमिषु सर्वधर्मप्रज्ञप्तिमात्रताप्रतिवेधात् **प्रज्ञप्तिः**। अष्टम्यादौ निर्निमित्तानाभोगमार्गलाभात् व्यवहारमात्रेणाभिलाप्यात् व्यवहारः इति भदन्तविमुक्तिसेनः।
B 70 W 72 रूपादिव्यतिरिक्तबोधिसत्त्वानुपपत्त्या अभ्युपगमार्थमाह—**एवमेतत्** इत्यादि। संभ्रमे द्विरभिधानम्। **तेन हि** इत्याद्युपसंहारः। यस्मादेवं तेन कारणेन गत्यन्तराभावात्
30 यथा कर्ममायाजनितः संसारस्तथा लोकोत्तरा अपि धर्माः ज्ञानमायाजनिताः, इत्यनभिनिवेशयोगात् **मायापुरुषेणैव अनुत्तरायां सम्यक्संबोधौ शिक्षितव्यम्**

---

१ B om. °ग्राहक°. २ B चोद्य° for कुचोद्य°.

इत्युपपन्नम्। न चायत्नसिद्धा मुक्तिः, यतो ज्ञातमेव तत्त्वं मोक्षावाहकं न अविज्ञातमिति भावः। मायापुरुषत्वे संक्लेशव्यवदानव्यवस्था कथमिति तत्कस्य हेतोः इत्याशङ्कयाह–**स एव हि** इत्यादि। **पञ्चोपादानस्कन्धाः**। सास्रवा रूपादयः। अनास्रवपञ्चस्कन्धपरिग्रहाय पञ्चस्कन्धाश्चेत्यध्याहार्यम्। यथादर्शनमेव संक्लेशव्यवदानव्यवस्था, मायापुरुषत्वेऽपि इति भावः। कथं पुनर्मायोपमत्वमिति तत्कस्य हेतोः इत्याशङ्कयाह–**तथा हि** 5 इत्यादि। उक्तोऽप्यर्थः प्रकारान्तरेणाशङ्कयमानो न पुनरुक्तम्, इति पुनरुक्ततादोषो नोद्भावनीयः। सर्वत्रैवं ज्ञेयम्। **उक्तं भगवता** इति। अत्र पञ्चोपादानस्कन्धेषु बोधिसत्त्व इति संज्ञादिवचनादनन्तरमेव मायोपमं रूपादिकमुक्तं भगवता। **षडिन्द्रियं** चक्षुरादि। सविज्ञानविषयमिति शेषः। यतोऽनन्तरं वक्ष्यति "ते पञ्च स्कन्धाः" इति। **यद्विज्ञानं तत् षडिन्द्रियम्**। ज्ञानस्यैव तदाकारेण प्रतिभासनात्। षडिन्द्रियं च पूर्ववत् ग्राह्यमिति प्राज्ञ- 10 W 73 प्तिकपुरुषाधिष्ठानग्राहकविकल्पः प्रतिपादितः। स चैवं विषयभेदात् नवप्रकारो भवति। तद्यथा–स्कन्धप्रज्ञप्तिविकल्पः, आयतनप्रज्ञप्तिविकल्पः, धातुप्रज्ञप्तिविकल्पः, प्रतीत्यसमुत्पाद- B 71 प्रज्ञप्तिविकल्पः, व्यवदानप्रज्ञप्तिविकल्पः दर्शनमार्गप्रज्ञप्तिविकल्पः, भावनामार्गप्रज्ञप्तिविकल्पः, विशेषमार्गप्रज्ञप्तिविकल्पः, अशैक्षमार्गप्रज्ञप्तिविकल्पः इति। तथा चोक्तम्—

**द्रव्यप्रज्ञप्त्यधिष्ठानो द्विविधो ग्राहको मतः।** 15
**स्वतन्त्रात्मादिरूपेण स्कन्धाद्याश्रयतस्तथा॥ ३६॥** इति॥

चतुर्विकल्पसंयोगं निर्दिश्य इदानीमुपायकौशलकल्याणमित्रस्वभावं सपरिग्रहमावेदयन्नाह–**मा भगवन्** इत्यादि। **नवयानसंप्रस्थिताः** इति प्रत्यग्रं महायाने प्रवृत्ताः। **इमम्** इति गाम्भीर्यौदार्यालम्बनादिविशेषेण विशिष्टम्। **उत्त्रसिषुः** इत्यादि। तत्रास्थानत्रास उत्त्रासः, उन्मार्गवत्। संतत्या त्रासः संत्रासः उत्पन्नभयस्याप्रतिविनोदनात्। संत्रासनिश्चयगमनं 20 संत्रासापत्तिः। **अवलीयन्ते** संलीयन्ते विप्रतिसारिणो भवन्ति। **पापमित्रहस्तगताः** इति। संवृतिपरमार्थविभागमकृत्वा निरवधिकालाभ्यस्तोपलम्भानिराकरणेन सहसैवानुत्पादादिदेशको नरकादिफलसद्धर्मप्रतिक्षेपपापस्य हेतुत्वात् पापमित्रम्, तस्य हस्तगताः ग्रहणयोग्यतां गता W 74 इत्यर्थः। व्यतिरेकमुखेन कथितोऽर्थोऽन्वयमुखेन कथ्यमानः सुदृढो भवतीत्याह–**कल्याणमित्रहस्तगताः** इति। चित्तानवलीनत्वानुत्त्रासादिना उपायकौशल्येन यथाशयं क्षितीशेष्टराज्ञी- 25 मरणनिवेदनन्यायेन मात्सर्यादिधर्मवियुक्तः समस्तवस्तुनैरात्म्यादिदेशकः सुगतिफलादिप्रापकत्वेन कल्याणमित्रम्, तस्य हस्तगता इति पूर्ववत्। **कानि** इत्यादिना कल्याणमित्रस्वरूपः प्रश्नः। उत्तरमाह–**य एनम्** इत्यादि। ये पुद्गलाः देवदत्तादिकमेनं पुद्गलं दानादिपारमितासु संवृतिपरमार्थसत्यानतिक्रमेण हितप्राप्त्या पूर्ववत् **अववदन्ति अनुशासति**। **ये चास्मै** B 72 देवदत्तादिकायाहितपरिहारेण **मारकर्माण्युपदिशन्ति**। कथमित्याह–**एवम्** इत्यादि। 30 **एवं मारदोषा** मारस्यान्तरायाः। बुद्धवेषेणोपसंक्रम्य किं तेऽनुत्तरया बोध्या, इत्यनागतार्थविवेचनता। **इमे मारदोषाः** तथैव किं ते प्रज्ञापारमितायां लिखनाद्यनुष्ठानेनेति वर्तमानार्थ-

विवेचनता। तद्विच्छन्दनाबलेन यथाक्रमं स्वीकृतत्यागकर्मार्थमाह--**एवं मारकर्माणि** इत्यादि। बुद्ध्वा च यत्कार्यं तदाह--**तानि त्वया** इत्यादिना। **इमानि** इत्याद्युपसंहारः। **महासंनाह-संनद्धस्य** इति संनाहप्रतिपत्त्या वक्ष्यमाणया युक्तस्य। **महायानसंप्रस्थितस्य** इति प्रस्थान-
W 75 प्रतिपत्त्या तथैवान्वितस्य। **महायानसमारूढस्य** इति तयैव महायानमुत्कलितस्य। तथा
5 हि--आदौ तया संप्रस्थितः पश्चादारूढ इष्यते। तथा चोक्तम्--

**चित्तानवलीनत्वादि नैःस्वाभाव्यादिदेशक.।**
**तद्विपक्षपरित्यागः सर्वथा संपरिग्रहः॥ ३७॥** इति॥

"सूत्रं सूत्रान्तरानुसारेण व्याख्यातव्यम्" इति भगवद्वचनादेव **पञ्चविंशतिसाहस्रिका-**नुसारेण पूर्वाचार्यवसुबन्धुप्रभृतिव्याख्याक्रममाश्रित्य अभिसमयालंकारकारिकानुरोधेन च
10 भावाध्याहारादिपदं कृत्वा, तथा सामान्यशब्दस्यापि प्रकरणादिबलेन विशेषे वर्तनात् विवक्षापरतन्त्रत्वेन यथोक्तार्थे प्रवचनाविरुद्धे शब्दानां वर्तनात् तत्प्रतिषेधे वचनाभावेन च कारणेन ग्रन्थानुगतमेव व्याख्यातमिदम्। अतः कथमग्रन्थानुगतमेवं व्याख्यानमिति न
B 73 मन्तव्यम्। अन्यथा, यद्ययं न्यायो नाश्रीयते, तदा प्रवचनव्याख्यैव न स्यात्। शब्दानां सामयिकत्वेनानेकार्थवृत्तौ प्रतिनियतार्थपरिग्रहे संदेहात्। किं च आर्यासङ्गप्रभृतीनामेवेदं
15 व्याख्यानं लिख्यते इति प्रमाणीकर्तव्यम्। तथा हि श्रूयते--विदितसमस्तप्रवचनार्थो लब्धाधिगमोऽप्यार्यासङ्गः पुनरुक्तबाहुल्येन अपुनरुक्तप्रदेशेऽपि प्रत्येकपदव्यवच्छेदादर्शनेन गाम्भीर्याच्च प्रज्ञापारमितार्थमुन्नेतुमशक्तो दौर्मनस्यमनुप्राप्तः। ततस्तमुद्दिश्य मैत्रेयेण भगवता प्रज्ञापारमितासूत्रं व्याख्यातम्, अभिसमयालंकारकारिकाशास्त्रं च कृतम्। तच्छ्रुत्वा पुन-
W 76 रार्यासङ्गेन आचार्यवसुबन्धुप्रभृतिभिश्च[1] व्याख्यातमित्यलं प्रसङ्गेन। निर्वेधभागीयानन्तरं
20 प्रतिपत्तिमतो यथोक्तनिर्वेधभागीयमन्यदपि दर्शनमार्गादिकमिति प्रतिपत्तेराधारं धर्मधातु-स्वभावकमावेदयन्नाह--**यद्भगवानेवम्** इत्यादि। एतदुक्तम्--**यद्भगवानेवमाह--बोधिसत्त्वस्य महासत्त्वस्य** इत्यादि। **यच्च** सूत्रान्तरेषु **बोधिसत्त्वो महासत्त्वः** इत्युच्यते, **तत्र** पूर्वके वाक्ये तेषु च सूत्रान्तरेषु धर्मधातुस्वभावत्वे बुद्धधर्माणां **कः** प्रतिष्ठार्थः **पदार्थो बोधिसत्त्व** इति। उत्तरं वक्तुमाह--**अपदार्थः** इत्यादि। **बोधिसत्त्वो** बुद्धधर्माणां **पदार्थो**
25 **बोधिसत्त्वपदार्थो** यः, स तत्त्वतः **अपदार्थः** अप्रतिष्ठार्थः। अगोत्रमिति यावत्। अधिगममन्तरेण मुक्त्यनुपपत्तेः, अधिगच्छन् बुद्धधर्मान् कथमपदार्थो बोधिसत्त्वः
B 74 इति तत्कस्य हेतोः इत्याशङ्क्याह--**सर्वधर्माणां हि** इत्यादि। यस्मात्सर्वधर्माणां वस्तुतन्नि-मित्ताभिनिवेशाभावेन **असक्ततायां** सत्याम्, अन्यथाधिगमानुपपत्त्या बुद्धधर्माधिगमाय माया-पुरुष इव **शिक्षते,** तस्मात्कथं तत्त्वतः प्रतिष्ठार्थः इति भावः। संवृत्या पुनः प्रतिपत्तिधर्मस्य
30 अवस्थान्तरभेदेन धर्मधातुस्वभाव एव बुद्धधर्माधारो बोधिसत्त्वस्त्रयोदशविधो गोत्रमिति निर्दि-श्यते। तत्रादौ तावच्चतुर्विधलौकिकनिर्वेधभागीयानामुत्पादाधारः। ततो लोकोत्तरदर्शन-

---

१ W °प्रभृतिभिः.

भावनामार्गयोः । ततस्तदुत्पत्तिबलेन चौरनिष्कासनकपाटपिधानवत् समकालं समस्तप्रति-पक्षोत्पादविपक्षनिरोधयोः । ततस्तदनुपलब्ध्या तयोर्विपक्षप्रतिपक्षयोर्निरोधोत्पादयुक्तविकल्पा-पगमस्य । ततः पूर्वप्रणिधानदानाद्युपायकौशल्यबलेन संसारनिर्वाणाप्रतिष्ठानलक्षणयोः प्रज्ञाकरुणयोः । ततस्तदुत्पत्त्या श्रावकाद्यसाधारणधर्मस्य । ततो यथाशयमवतारणाद्यभि-संधिद्वारेण यानत्रयप्रतिष्ठापनलक्षणपरार्थानुक्रमस्य । ततो यावदासंसारं निर्निमित्ता-नाभोगपरकार्यज्ञानस्य चाधारः । ततश्चैवमधिगमानुक्रमादियमानुपूर्वी । अनया च सर्वाधिगम-धर्मसंग्रहादियानेव निर्देशः, न न्यूनो नाप्यधिकः । तथा संवृत्त्याधारभावस्य आक्षिप्तत्वादयं सर्वोऽर्थोऽत्र प्रज्ञापारमितायामाक्षिप्त एवेत्यवगन्तव्यम् । पञ्चविंशतिसाहस्रिकायां च प्रत्यर्थ-माधारमधिकृत्य निर्दिष्टो ग्रन्थो नेह ज्ञापकत्वेन प्राचुर्यभयाल्लिख्यते । तथा चोक्तम्—

**षोढाधिगमधर्मस्य प्रतिपक्षप्रहाणयोः**
**तयोः पर्युपयोगस्य प्रज्ञायाः कृपया सह** ॥ ३८ ॥
**शिष्यासाधारणत्वस्य परार्थानुक्रमस्य च ।**
**ज्ञानस्यायत्नवृत्तेश्च प्रतिष्ठा गोत्रमुच्यते** ॥ ३९ ॥ इति ॥

यदि धर्मधातोरेव आर्यधर्माधिगमाय हेतुत्वात्तदात्मको बोधिसत्त्वः प्रकृतिस्थमनुत्तर-बुद्धधर्माणां गोत्रं धर्मतासंज्ञकम्, तदा धर्मधातोः सामान्यवर्तित्वादिदं प्रकृतिस्थं गोत्रमनादि-कालायातं धर्मताप्रतिलब्धम्, इदं समुदानीतं पूर्वकुशलमूलाभ्यासप्रतिलब्धम्, इदं श्रावकप्रत्येकबुद्धतथागतगोत्रं महद्भिरपि प्रत्ययैरहार्यत्वात्, इदमनियतं श्रावकादिगोत्रं प्रत्ययैर्हार्यत्वादिति गोत्रभेदो न युज्यते । यथा श्रावकयानाद्यधिक्रमेण आलम्बेत, तथा आर्यधर्माधिगमाय धर्मधातोर्हेतुभावेन व्यवस्थापनाद्गोत्रत्वेन व्यपदेशः इति समाधिः । अथवा, यथा एकमृद्द्रव्याभिनिर्वृत्तैकतेजःपरिपक्वाधारघटादेः आधेयक्षौद्रशर्करादिभाजनत्वेन भेदः, तद्वत् यानत्रयसंगृहीताधिगन्तव्याधेयधर्मनानात्वेन आधारनानात्वं निर्दिष्टमिति न दोषः । तथा चोक्तम्—

**धर्मधातोरसंभेदाद्गोत्रभेदो न युज्यते ।**
**आधेयधर्मभेदात्तु तद्भेदः परिगीयते** ॥ ४० ॥ इति ॥

निरुक्तं तु गुणोत्तरणार्थेन धर्मधातुर्गोत्रम् । तस्माद्धि ते गुणा रोहन्ति प्रभवन्तीत्यर्थः । एवं च कृत्वोच्यते—असंस्कृतप्रभाविताः सर्वार्यपुद्गला इति । ननु च आदावेव गोत्रं वक्तव्यम्, तत्पूर्वकत्वाच्चित्तोत्पादस्य मोक्षनिर्वेधभागीयानां चेति कथमेवमुक्तम्? सत्यम्, अर्थानुपूर्वी एषा । इयं तु प्रतिपादनानुपूर्वी यत् कार्यं प्रतिपाद्य पश्चात्कारणं निर्दिश्यते इत्यदोषः । आधारानन्तरं यथोक्तप्रतिपत्त्याधारस्य बोधिसत्त्वस्य किमालम्बनमित्यालम्बनार्थमाह—यस्मात् **सर्वधर्माणाम्** एव आलम्बनस्थानीयानाम् **अनुबोधार्थेन** सम्यगुभयसत्यानतिक्रमालम्बनेन या असक्तता, तस्यां सत्यामालम्बनविशुद्धिगमनेन **अनुत्तरां सम्यक्संबोधिमभिसंबुध्यते** नान्यथा । अतो बोध्यालम्बनप्रयोजनेन सर्वप्रकारस्वार्थसंपादनात् **बोधिसत्त्व इत्युच्यते** । तत्रादौ तावत्

**सामान्येन सर्वधर्मान्** कुशलाकुशलाव्याकृतान् यथाक्रमं श्रामण्यताप्राणातिपाताद्यव्याकृतकाय-कर्मादयः इति त्रिधा विभिद्य उपादेयपरित्यागोपेक्षास्थानीयत्वेन विभावयति। ततः पुनरुपा-देयानादाय लौकिकमार्गसंगृहीताः पञ्चोपादानस्कन्धादयो लौकिकाः। सम्यगार्यमार्गेण संगृही-ताश्चतुर्ध्यानादयो लोकोत्तराः इति चिन्तयति। तत्र आत्मग्रहाप्रतिपक्षत्वेन लौकिकाः पञ्चो-
5 पादानस्कन्धादयः सास्रवाः। लोकोत्तरास्त्वात्मदर्शनप्रतिपक्षत्वेन स्मृत्युपस्थानादयोऽनास्रवाः, इति हेयोपादेयतया निरूपयति। ततोऽनास्रवानादाय हेतुप्रत्ययाधीनकामादिधातुसंगृहीता बोधिपक्षादयः संस्कृताः संवृत्या। कारणानपेक्षधातुत्रयापर्यापन्नतथतादयोऽसंस्कृताः परमार्थतः, इति द्विधा ध्यायति। ततोऽसंस्कृतप्रभाविताः सर्वार्यजनसंतानप्रभवचतुर्ध्यानादयः साधारणा
W 79 धर्माः। सम्यक्संबुद्धसंतानोदयधर्मिदशबलादयोऽसाधारणा धर्माः इति द्विधा भावयति,
10 इत्येवमधिगमानुक्रमेण सर्वधर्मा मायोपमतया यथावदियन्त एवालम्ब्यन्ते इत्यालम्बनमेकादश-विधं ज्ञेयम्। यथोक्तालम्बनक्रमप्रतिपादनग्रन्थः पञ्चविंशतिसाहस्रिकायां स्पष्ट एवेति न विप्रतिपत्तिः कार्या। तथा चोक्तम्—

**आलम्बनं सर्वधर्मास्ते पुनः कुशलादयः।**
**लौकिकाधिगमाख्याश्च ये च लोकोत्तरा मताः॥ ४१॥**
B 77 15 **सास्रवानास्रवा धर्माः संस्कृतासंस्कृताश्च ये।**
**शिष्यसाधारणा धर्मा ये चासाधारणा मुनेः॥ ४२॥** इति॥

ये तु धर्मधातुमेव सदा विशुद्धमद्वयं ज्ञानमालम्बनं मन्यन्ते, तैः सदाविशुद्धत्वा-दुत्तरोत्तरविशुद्धिविशेषगमनं कथमिति वक्तव्यम्।

अब्धातुकनकाकाशशुद्धिवच्छुद्धिरिष्यते।

20 इति चेत्, एवं तर्हि शुद्धं तात्त्विकं ज्ञानमिति प्रतिपक्षाभिनिवेशादर्थाक्षिप्तो विपक्षाभिनिवेशः। अतो विपक्षप्रतिपक्षविकल्पप्रहाणाभावात् प्रादेशिकशुद्धिप्रसङ्गः। ननु च त्वत्पक्षे सर्वाकारज्ञतायाः सुभूते अभाव आलम्बनमित्यालम्बननिष्ठा कथमिति चेत्, अदोषः। "यतो न्यायानुयायी भावो नास्तीत्यभावस्तथ्यसंवृतिरुच्यते। तस्याश्च प्रच्छादित-तत्त्वरूपायाः क्रमेण मायोपमत्वप्रतीतिरेव शुद्धिः। एवं च कृत्वा प्रकृतिप्रधानं गोत्रम्।
25 विकृतिप्रधानमालम्बनम्। उभयं तु उभयत्राप्रतिषिद्धमित्याधारालम्बनयोर्लक्षणभेदः। बहुवक्तव्यं चालम्बनव्यवस्थानमित्यलं प्रसङ्गेन" इत्यार्यविमुक्तिसेनः। आलम्बनानन्तरमेवा-लम्बनप्रतिपत्तेर्बोधिसत्त्वस्य कः समुद्देशः, इति समुद्देशार्थमाह—**यत्पुनः** इत्यादि। **केन**
W 80 **कारणेन** केन प्रयोजनेन। **बोधिसत्त्वः सन् महासत्त्व इत्युच्यते**। उत्तरमभिधातुमाह—**महतः** इत्यादि। महतः **सत्त्वराशेः** इत्यपरिमितस्य सत्त्वसमूहस्य सामान्येनाभिधानम्।
30 एकोऽप्यनादिसंसारप्रवृत्तिमहत्त्वेन महान् भवेदिति राशिग्रहणम्। **सत्त्वनिकायस्य** इति
B 78 प्रतिपन्नकफलस्थनिकायादिभेदेन विजातीयव्यावृत्त्या सत्त्वसामान्यात् सत्त्वसभागसंगृहीतस्य

---

१ B om. उपादेयानादाय. २ B तथा for तथ्य°.

विशेषेणाभिधानम् । **अग्रतां कारयिष्यति** इति सर्वसत्त्वाग्रताचित्तमहत्त्वं तदुद्देशेन प्रवृत्तत्वादधिगम्य पश्चात्तत्प्राप्तुकामानां सत्त्वानामग्रतां धर्मदेशनादिना निष्पादयिष्यति । **तेनार्थेन** इति तेन कारणेन । **बोधिसत्त्वो** महत् सत्त्वं चित्तमस्येति **महासत्त्व** इति । चित्तमहत्त्वे सति प्रहाणं महदिति प्रहाणमहत्त्वप्रतिपादनाय गुर्वायत्ततया अनुज्ञामार्गणं प्रत्याह शारिपुत्रः । **ममापि** इत्यादि । सोऽर्थो **मम भगवन् प्रतिभासते,** येनार्थेन बोधिसत्त्वः सन् 5 महासत्त्व इत्युच्यते इति वाक्यार्थः । न केवलं भगवतः इत्यपिशब्दः । अनुज्ञातार्थमाह— **प्रतिभातु** इत्यादि । **यस्य** अर्थस्य कथनाय **इदानीं** सांप्रतमवसरं **कालं मन्यसे,** सोऽर्थः　W 81
**प्रतिभातु** सम्यगभिमुखीभवतु । लब्धानुज्ञो **महत्या** इत्याद्याह । तत्राहंकाराधारार्थेन **आत्मा,** आहितः अहंकारः एतस्मिन्निति कृत्वा । सीदनात्मकत्वात् **सत्त्वः** । जीवितेन्द्रियवशेन आ निकायसभागपरिसमाप्तेः वर्तते इति **जीवः** । पुनः पुनर्गतिषु लीयते इति **पुद्गलः** । 10 आविर्भवतीति **भवः** । तिरोभवतीति **विभवः** । नास्तीदानीम्, अभूत् पूर्वम्, इति **उच्छेदः** । अस्ति यत्स्वभावेन न तन्नास्तीति **शाश्वतः** । आत्मात्मीयाकारेण पञ्चस्कन्धदर्शनं **सत्कायः** । **एवमाद्यानां दृष्टीनाम्** इति यथोक्तदृष्टिप्रमुखानां मिथ्याशीलव्रतपरामर्शादिदृष्टीनामात्मादिधर्मसंतीरणाकाराभिनिवेशस्वभावानां प्रहाणाय सत्रासनपरित्यागाय **धर्मं देशयिष्यति** । प्रहाणाधिगममहत्त्वं प्राप्येति भावः । अन्यथा　15　B 79

परोक्षोपेयतत्त्वस्य तदाख्यानं हि दुष्करम् । इति ।

**तेनार्थेन** तस्मादर्थे । रागाद्यशेषदोषप्रहाणे विशिष्टोऽधिगमः इति अधिगममहत्त्वं तथैवाह—**बोधिसत्त्वो महासत्त्व इति भगवन्नुच्यते** । **यदपि** इत्यादिना । न केवलमन्यदित्यपिशब्दः । **बोधिचित्तम्** इति बोध्यर्थं चित्तम् । प्रणिधिप्रस्थानात्मकं　W 82
चित्तमिति यावत् । सर्वज्ञताप्रवणं चित्तं **सर्वज्ञताचित्तम्** आधिमोक्षिकमधिमुक्तिचर्याभूमि- 20 संगृहीतम् । निर्विकल्पकलोकोत्तरज्ञानप्रतिवेधात् **अनास्रवं चित्तं** शुद्धाध्याशयिकं सप्तसु प्रयोगभूमिषु निर्निमित्तानाभोगवाहित्वेन । **असमं चित्तं** वैपाकिकमष्टम्यादौ । **असमैर्बुद्धैः** समं तुल्यं चित्तम्, **असमसमं चित्तं** सर्वावरणवर्जितं बुद्धभूमिगतम् । अथवा, अनुत्पादरूपबोधिसत्त्वस्वभावीभूतं चित्तं **बोधिचित्तम्** । तदेव च योगिसंवृत्या आदर्शादिज्ञानसंबन्धेन कथंचित् व्यावृत्त्या **सर्वज्ञताचित्तम्** इत्यादि चतुर्धा व्यपदिश्यते । सर्वमप्ये- 25 तत् **असाधारणम् अगम्यं सर्वश्रावकप्रत्येकबुद्धानाम्** । **तत्रापि** एवंविधे **चित्ते** महार्थत्वात् पक्षपातार्हे **असक्तः** अनभिनिविष्टः **अपर्यापन्नः** अस्थितः इत्यनेन अधिगममहत्त्वमावेदितम् । सुतरामन्यत्रेत्यपिशब्दः । अनभिनिविश्य अस्थित्वा च भावनानुपपत्तेः कथं द्वयमेतदिति तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि** इत्यादि । यस्मादनन्तरोक्तं सर्वज्ञताचित्तं पूर्वोक्तसर्वचित्तोपलक्षणपरं सक्तिप्रतिपक्षभूतम्, **अनास्रवं** स्थितिप्रतिपक्षभूतम्, **अपर्यापन्नम्,** तस्मा- 30 न्मायापुरुषस्येव भावनेति भावः । **तद्यदपि** इत्यादि निगमनम् । अनास्रवत्वेऽपि वस्तु-　W 83 B 80
सद्भावादनभिनिवेशादिरयुक्त इत्याह—**केन कारणेन** इत्यादि । उत्तरार्थमाह—**अचित्तत्वात्**

इति तत्त्वेनानुत्पन्नत्वात्। **शारिपुत्र आह** इत्यारभ्य यावत् **अग्रतायां निर्दिष्टो निर्दिशसि** इति व्याख्यातम्। अर्थान्तरप्रसङ्गेनागतत्वात् पुनरुक्तिदोषो न भवति। तथा चाह आचार्यदिग्नागः—

आवर्तते स एवार्थः पुनरर्थान्तराश्रितः। इति।

5 —प्रज्ञापारमितापिण्डार्थ—५७

"तदेवमजितजयोद्देशसाधर्म्येण त्रिविधः प्रतिपत्त्युद्देशो बोधिसत्त्वस्य निर्दिष्टो वेदितव्यः। आलम्बनादुद्देशस्य को विशेषः? तादात्विकमालम्बनं समीपवर्ति, आमुत्रिकविप्रकृष्टस्तूद्देशः। शरसंधानलक्ष्यवेधसाधर्म्येण" इत्यार्यविमुक्तिसेनः। तथा चोक्तम्— W 84

**सर्वसत्त्वाग्रता चित्तप्रहाणाधिगमत्रये।**

10 **त्रिभिर्महत्त्वैरुद्देशो विज्ञेयोऽयं स्वयंभुवाम्** ॥ ४३ ॥ इति ॥

उद्देशानन्तरमिदानीं तन्निष्पत्तये प्रतिपत्तिर्वक्तव्या। सा च त्रिसर्वज्ञताविषये सामान्येन शुक्लधर्माधिष्ठाना। सर्वाकाराभिसंबोधादौ चतुर्विधेऽभिसमये प्रत्यभिसमयं षट्पारमिताधिष्ठाना च क्रिया प्रतिपत्तिः न धर्मकायाभिसमये, फलत्वेन तत्र क्रियासंभवात्। तत्र "संनाहप्रस्थानप्रतिपत्ती यथासंख्यं पारंपर्येण साक्षात्प्रयोगस्वभावे संभाराधिमुक्तिचर्याभूमि-15 संगृहीते। संभारप्रतिपत्तिर्दयामारभ्य धारणीपर्यन्तेन साक्षात्प्रयोगमार्गस्वभावाधिमात्राग्रधर्मसंगृहीता, प्रथमप्रमुदिताभूमिस्वभावा संभारप्रतिपत्तिर्दर्शनमार्गात्मिका। द्वितीयादिभूमिस्वरूपा भावनामार्गस्वभावा। प्रतिपक्षात्मिका च संभारप्रतिपत्तिरुभयमार्गगोचरा। निर्याणप्रतिपत्तिर्भावनामार्गाधिष्ठाना" इत्यार्यासङ्गः। एवं प्रयोगदर्शनभावना[1]विशेषमार्गस्वभावानां प्रतिपत्तिलक्षणानां संनाहप्रस्थानसंभारनिर्याणानां मध्ये वीर्यरूपतया संनाह-20 प्रतिपत्तिं प्रथमां दर्शयितुमाह—**अथ खल्वायुष्मान्** इत्यादि। **पूर्णो मैत्रायणीपुत्र** इति पूर्णस्यैव मैत्रायणीपुत्र इति संज्ञान्तरम्। अथवा मैत्रायण्याः स्वमातुः पुत्रो मैत्रायणीपुत्रः। **यदिदम्** इति। अनन्तरमिदं यद्वस्तु। **महासंनाहसंनद्धः** इति संनाहप्रतिपत्त्या युक्तः। सा चेयमर्थाक्षिप्ता संनाहप्रतिपत्तिः। यदुत दानपारमितायां चरतो बोधिसत्त्वस्य धर्मदानादिदानात् दानपारमितासंनाहः। तस्यैव श्रावकादिमनस्कारपरिवर्जनात् शीलपारमिता-25 संनाहः। तस्यैव सर्वाकारज्ञताधर्माणां क्षमणरोचनव्युपपरीक्षणसर्वजनाप्रियवादित्वसहनात् क्षान्तिपारमितासंनाहः। तस्यैवोत्तरोत्तरकुशलमूलाभिवृद्ध्यर्थं छन्दादिजननात् वीर्यपारमितासंनाहः। तस्यैव यानान्तराव्यवकीर्णचित्तैकाग्रतया तत्कुशलमूलानुत्तरसम्यक्संबोधिपरिणामालम्बनात् ध्यानपारमितासंनाहः। तस्यैव मायाकारसंज्ञोपस्थानेन देयदायकप्रतिग्राहकानुपलम्भात् प्रज्ञापारमितासंनाहः। इत्येवमिदं प्रथमं संनाहप्रतिपत्तेर्दानपारमिताषट्कम्। 30 एवं तस्यैव शीलपारमितायां चरतो द्वितीयम्, क्षान्तिपारमितायां तृतीयम्, वीर्यपारमितायां चतुर्थम्, ध्यानपारमितायां पञ्चमम्, तस्यैव प्रज्ञापारमितायां चरतः षष्ठमिति। एवमेते

W 85

B 81

[1] B om. °विशेष°.

षट् षट्का भवन्ति । संनाहानां षट्साधर्म्यात् दानादिसाधर्म्याच्च षट् संनाहप्रतिपत्तयो-ऽभिधीयन्ते । पञ्चविंशतिसाहस्रिकायां च संनाहप्रतिपत्तिप्रतिपादने दानादयः षट् षट्काः स्पष्टमुपलभ्यन्ते एव इति न विप्रतिपत्तिः कार्या । तत्रादौ भोगनैरपेक्ष्यात् शीलसमादानं करोति । शीलानुरक्षी क्षमो भवति खेदसहिष्णुरारब्धवीर्यः । कौसीद्यविगमात् ध्यानं निष्पादयति । संपन्नध्यानो लोकोत्तरां प्रज्ञां प्रतिलभते । इत्येवं दानादीनामधिगमानु-सारेण निर्देशोऽतिप्रतीतः । इति अयमेव क्रमः । तथा चोक्तम्—

**दानादौ षड्विध तेषां प्रत्येकं संग्रहेण या ।**
**संनाहप्रतिपत्तिः सा षड्भिः षट्कैर्यथोदिता ॥ ४४ ॥** इति ॥

कृतसंनाहस्यैवं प्रस्थानमिति प्रस्थानप्रतिपत्तिं द्वितीयां कथयन्नाह—**महायान-संप्रस्थितो महायानसमारूढश्चेति** । यानशब्दस्य कर्मकरणसाधनत्वात् आदौ प्रस्थान-प्रतिपत्त्या **महायाने** हेतुफलात्मके धर्मे **संप्रस्थितः** । पश्चादुत्तरोत्तरविशेषाधिगमात् **महा-याने समारूढः** इति पदद्वयम् । सा चेयमर्थाक्षिप्ता प्रस्थानप्रतिपत्तिः । यदुत आदौ चित्त-स्थिरीकरणात् स्वाकारलिङ्गनिमित्तैर्ध्यानारूप्यसमापत्तिव्युत्थानप्रस्थानं[1] भवति । ततः स्थिरीभूतचित्तस्य पुण्यज्ञानाभ्यास इति देयदायकप्रतिग्राहकादित्रिमण्डलविशुद्धया षट्पार-मिताप्रस्थानम् । ततः संभृतपुण्यज्ञानस्य तत्त्वाधिमोक्षः, इति दर्शनभावनाशैक्षविशेषमार्ग-स्वभावार्यमार्गप्रस्थानम् । ततो धर्मताप्रवणस्य यथाशयं परार्थः, इति मैत्र्यादिचतुरप्रमाण-प्रस्थानम् । ततः परार्थप्रवृत्तस्योपलम्भो बन्धनम्, इत्यनुपलम्भयोगप्रस्थानम् । ततो निःस्वभावयोगवतः कथं प्रवृत्तिरिति कर्मकर्तृक्रियानुपलम्भेन मायापुरुषस्येव सर्वत्र त्रिमण्डलविशुद्धिप्रस्थानम् । तत एवं परिशुद्धचारिणः स्वसाध्ये यत्नः, इति सर्वसत्त्वाग्रता-चित्तमहत्त्वादित्रिविधोद्देशप्रस्थानम् । ततः कृतोद्देशप्रयत्नस्य परचित्तपरिज्ञानादौ वीर्यम्, इति दिव्यचक्षुरादिषडभिज्ञाप्रस्थानम् । ततः प्राप्ताभिज्ञस्य बुद्धत्वोत्साहः, इति सर्वाकार-ज्ञताप्रस्थानं भवति । एवमधिगमानुक्रमेण नवधैव सम्यग्व्यवस्थितिलक्षणा समस्तमहायान-धर्माक्रमणस्वभावा प्रस्थानप्रतिपत्तिः । पञ्चविंशतिसाहस्रिकायां च यथोक्तप्रतिपत्तिप्रतिपादको ग्रन्थो ग्रन्थप्राचुर्यान्नेह ज्ञापकत्वेन लिख्यते । तथा चोक्तम् —

**ध्यानारूप्येषु दानादौ मार्गे मैत्र्यादिकेषु च ।**
**गतोपलम्भयोगे च त्रिमण्डलविशुद्धिषु ॥ ४५ ॥**
**उद्देशे षट्स्वभिज्ञासु सर्वाकारज्ञतानये ।**
**प्रस्थानप्रतिपज्ज्ञेया महायानाधिरोहिणी ॥ ४६ ॥** इति ॥

**तस्मात्** इति संनाहप्रस्थानप्रतिपत्तिभ्यां युक्तत्वात् । **संख्याम्** इति व्यपदेशम् । एतदुक्तम्—यस्मात् संनाहप्रस्थानप्रतिपत्तिभ्यां युक्तः **तस्मात् महासत्त्वव्यपदेश** इति ॥

---

१ B °व्यवस्थानं for °व्युत्थान.

कृतप्रस्थानस्यैवं संभार इति संभारप्रतिपत्तिस्तृतीया सप्तदशप्रकारा वक्तव्या। तथा चोक्तम्—

W 47 **दया दानादिकं षट्कं शमथः सविदर्शनः।**
**युगनद्धश्च यो मार्ग उपाये यच्च कौशलम्॥ ४७॥**
5 **ज्ञानं पुण्यं च मार्गश्च धारणी भूमयो दश।**
**प्रतिपक्षश्च विज्ञेयः संभारप्रतिपत्क्रमः॥ ४८॥** इति॥

अतस्तां प्रतिपादयितुं प्रश्नयन्नाह—**महासंनाहसंनद्ध** इत्यादि। **कियता** इति कियत्संख्याव्यवच्छिन्नेनार्थान्तरेण धर्मेण युक्तः इत्यध्याहार्यम्। यतः संनाहप्रतिपत्त्या करुणादिसंभारेण च युक्तो महासंनाहसंनद्ध इति पञ्चविंशतिसाहस्रिकायां भगवता व्याख्यातम्।
10 तत्र अर्थाक्षिप्तसंनाहप्रतिपत्त्या युक्तो महासंनाहसंनद्ध इत्यनन्तरमावेदितम्, अधुना करुणादिसंभारेणेत्यदोषः। अध्याहारपदस्यार्थं विसर्जयन्नाह—**इह** इत्यादि। इह इति वाक्योपन्यासे। **एवं भवति** इति, एवं चित्तमुत्पद्यते। तदेवाह—**अप्रमेयाः** इत्यादिना। प्रत्यक्षादिप्रमाणेन प्रमातुमशक्यत्वादप्रमेयाः। यथाशयं यानत्रयनिर्वाणप्रापणात् **परिनिर्वापयितव्याः। असंख्येयाः** इत्येकत्वादिसंख्यारहिताः। एतदुक्तम्—कृपया विहीनस्यानुपायवतः
15 परेषां क्वचिदप्रतिष्ठापनेन निर्वापणासंभवादिदमर्थाक्षिप्तं भवति। करुणया पीड्यमानस्य दानादिभिः षड्भिः पारमिताभिरुपायभूताभिरनुगृह्य दानपारमितया तदात्वसुखोपसंहारेण
B 85 शीलपारमितया आयतिसुखोपसंहारेण सहिष्णोरुत्साहिनः एकाग्रचित्तस्यैकान्तिकफलप्राप्तिमुपादाय क्षान्तिवीर्यध्यानपारमिताभिरैकान्तिकसुखोपसंहारेण प्रज्ञापारमितया आत्यन्तिकसुखोपसंहारेण च आत्मनः षट्पारमितास्ववस्थानवत् तत्र समादापननिवेशनप्रतिष्ठापनै-
20 रविक्षेपात् प्रतिष्ठापयितव्या मया इति। एवं च सप्त संभारा निर्दिष्टा भवन्ति—यदुत
W 88 करुणासंभारो दानसंभारः शीलसंभारः क्षान्तिसंभारो वीर्यसंभारो ध्यानसंभारः प्रज्ञासंभार इति। तत्रापि समाधिलाभात् कर्तृकर्मोपलम्भो नास्तीत्याह—**न च ते सन्ति** इत्यादि। एवं तर्ह्यनुपलम्भ इत्याह—**स तान्** इत्यादि। स करुणादिसंभारेण युक्तो बोधिसत्त्वोऽप्रमेयान् **तावतः असंख्येयान् तान् सत्त्वान् परिनिर्वापयति** संवृत्या। यद्येवमुपलम्भस्तर्हि प्राप्त
25 इत्याह—**न च** इत्यादि। परमार्थतोऽनुपलम्भादिति भावः। कथं पुनरेकस्योपलम्भानुपलम्भौ इति तत्कस्य हेतोः इत्याशङ्क्याह—**धर्मतैषा** इत्यादि। यथा **मायाधर्मता** यथादर्शनं सत्या, न्यायेनासंघटनादसत्या, अतस्तां तर्कविस्पन्दासंदूषितां सार्वलौकिकीमाभासमात्रगमनतां दृष्टान्तत्वेनोपादाय गृहीत्वा तथा **धर्माणां** रूपादीनाम् **एषा धर्मता**। भिन्नविषयव्यावृत्त्यपेक्षाप्रकल्पितत्वेनोपलम्भानुपलम्भस्वभावा अविरुद्धा **स्याद्** भवेत्। एकविषयव्यावृत्त्यपेक्षोभयधर्म-
30 कल्पनायां दोषः इति भावः। एतच्च द्वयमन्योन्यविपर्यासनिराकरणाय अभिहितम्, न तत्त्वतः। यथोक्तं प्रागित्यनेन शमथसंभारो निर्दिष्टः। प्राप्तशमथस्य विदर्शनेति विदर्शनासंभारमाह—
W 89 B 86 **यथापि** इत्यादिना। **दक्षो** निपुणः। **मायाकारान्तेवासी** तच्छिष्यः। मुख्यतो मायानिर्माणस्थानत्वात् **चतुर्महापथ**ग्रहणम्। **जनकायं** सत्त्वसमूहम्। **अभिनिर्मिमीते** निर्माणं करोति। **अन्तर्धानम्** इत्युपसंहारम्। **तद्** अनन्तरोक्तमर्थजातम्। तत् **किं मन्यसे किं**

बुध्यसे इति सामान्येन प्रश्नं कृत्वा, अथैवं मन्यसे इत्याह–**अपि नु** इत्यादि । अपिशब्दः
संभावनायाम्, एवमित्यर्थे नुशब्दः । तत्र तस्मिन् जनकायमध्ये **केनचित्** मायाकारादिना
**कश्चित्** देवदत्तादिः । हतः आयुषो दुर्बलप्रयोगात् । **मृतः** सर्वथोच्छेदात् । **नाशितः**
कायस्यापचयप्रयोगात् । **अन्तर्हितः** अदृश्यत्वापादनादिति मन्यसे । तत्त्वतो धर्मिणोऽसत्त्वात्
एतत् सर्वं न संभवति । यथादर्शनं तु भवत्येवेति भावः । विदिताभिप्रायत्वेनाह–**नो हीदम्** 5
इति । तत्त्वतः इति शेषः । प्रसाधितदृष्टान्तार्थमभिमतार्थे योजयन्नाह–**एवम्** इत्यादि ।
विस्तरेण निर्दिश्य एवमुपसंहरन्नाह–**सचेत्** इत्यादि । **इमम्** इत्यनन्तरम् । **एवम्** इति W 90
संवृतिपरमार्थसत्यानतिक्रमेण । यदुक्तं **कियता** इति, तस्य परिहारात् **इयता** इति वचः ।
एतदुक्तम्–इयता करुणादिसंभारेणापि योगात् महासंनाहसंनद्धव्यपदेश इति । विदर्शनया
शून्यतालम्बनेन श्रावकादिबोधौ पातात् अतोऽनन्तरं युगनद्धसंभारमाह–**यथा अहम्** 10
इत्यादिना । **भगवतो भाषितस्य** इति । **धर्मतैषा सुभूते धर्माणाम्** इत्यादि । बतशब्दो-
ऽवधारणे । एवं मन्यते–येन प्रकारेण मायाधर्मस्य व्याप्तित्वेन भगवतो भाषितस्य
धर्मतैषेत्यादेः **अर्थमाजानामि**, तेन प्रकारेण मायाधर्मतानभिनिर्वृत्तेः **असंनाहसंनद्धः एवायं
बोधिसत्त्व** इति । अविपरीतत्वेनाभ्युपगमादाह–**एवमेतत्** इत्यादि । ननु विदर्शनया B 87
सर्वाकारज्ञतया गगनगञ्जादिसमाधिभिश्च सत्त्वार्थं प्रति संनद्धोऽपि कथमसंनद्ध इति तत्कस्य 15
हेतोः इत्याशङ्क्याह–**अकृता हि** इत्यादि । न्यायेन कारकहेतोरभावादकृता । विनाशहेतो-
रसत्त्वेन **अविकृता** । उभयसहकारिप्रत्ययानुपपत्तेः **अनभिसंस्कृता** । अभूतप्रादुर्भावं तद्वि- W 91
शेषगमनं फलप्राप्तिसंमुखीकरणं चाधिकृत्य यथाक्रमं वा त्रीणि पदानि । युक्त्युपेतत्वेनाभ्यु-
पगमादाह–**एवमेतत्** इत्यादि । ननु बन्धमोक्षसद्भावे कथमेवमेतदकृतादिकमिति तत्कस्य
हेतोः इति कस्यचिच्चोद्यमाशङ्क्याह–**तथा हि** इत्यादि । अन्यथा अभ्युपगम्य विचारायोगा- 20
दसंगतमेतत्स्यात् । एवमन्यत्रापि वक्तव्यम् । अध्यारोपिताकारप्रवृत्तत्रैधातुकचित्तचैत्तकल्प-
नया बन्धाभावात् **अबद्धं रूपम्** । यथोक्तकल्पनाविवेकेन मोक्षाभावाच्च **अमुक्तम्**, तत्त्वतो
रूपादीनामसत्त्वात् । धर्मस्य तर्हि बन्धमोक्षौ भवतः इत्याह–**रूपतथतापि** इत्यादि ।
धर्म्यभावे धर्मानुपपत्तेः रूपादिशून्यता **न बद्धा न मुक्ता** । यथादर्शनं तु रूपादि-
तत्तथतयोर्बन्धमोक्षौ भवतः इति भावः । सुभूत्यभिप्रायानवगमात् चोद्यद्वारेणाह–**रूपम्** 25 W 92
इत्यादि । पृच्छतोऽयमभिप्रायः–रूपादितत्तथता **अबद्धा अमुक्ता** इति वदसि । **नैवं**
वक्तव्यम् । सामान्येन प्रत्यक्षादिबाधोपनिपातादिति । अथ विशेषेण, स तर्हि वक्तव्य
इत्याह–**अथ कतमत्तत्** इत्यादि । विचारविमर्दासहिष्णुत्वेन बुद्धबोधिसत्त्वादिरेव मायापुरुष
इत्यभिप्रायवान् सामान्येनाह–**यदायुष्मन् पूर्ण मायापुरुषस्य** इत्यादि । कथमेवं प्रत्यक्षादि- B 88
बाधोपनिपातो न भवतीति तत्कस्य हेतोः इत्याशङ्क्याह–**असद्भूतत्वात्** इत्यादि । न्यायेन 30 W 93
कल्पितस्य रूपादेरसद्भूतत्वात् अलीकत्वात् विकल्पितस्य **विविक्तत्वात्** स्वरूपविरहात्
धर्मतास्वभावस्य **अनुत्पन्नत्वात्** अजातत्वात् **अबद्धा अमुक्ता** इत्येके । प्रत्यक्षानुमानागम-
प्रमाणैरप्रतिभासमानतत्त्वोत्पत्त्यादिनिराकरणादसद्भूतत्वादिपदत्रयमित्यपरः ।

निर्भासते हि यद्रूपं नैव तत्प्रतिषिध्यते ।
वेद्यमानस्य नो युक्तं कस्यचित्प्रतिषेधनम् ॥

इति न्यायाद्यथादर्शनं बन्धमोक्षस्य व्यवस्थापनात् कुतः प्रत्यक्षादिबाधेति भावः। **अयम्** इत्याद्युपसंहारः । **महासंनाहोऽसंनाह** इति यथाक्रमं कृपाप्रज्ञाबलात् । संवृतिपर-
5 मार्थयोरिति शेषः । निरुत्तरस्तूष्णीं स्थित इत्याह—**एवम्** इत्यादि । ननु शमथविदर्शनयो-
र्विरुद्धत्वात्कथमेकत्र संभव इति चेत्, नैवम्। तथा हि–यदा शमथेनालम्बने चित्तं स्थिरीकृतं भवति, तदा प्रज्ञया विचारयतः सम्यग्ज्ञानालोकोत्पादादन्धकारमिवालोकोदये सति आवरणमपहीयते । अत एव अनयोश्चक्षुरालोकवत् सम्यग्ज्ञानोत्पादं प्रति अन्योन्यानुगुण्येनावस्थितत्वात् न आलोकान्धकारवत् परस्परं विरोधः। न हि समाधिरन्धकारस्वभावः,
W 94 10 किं तर्हि चित्तैकाग्रतालक्षणः। स च "**समाहितो यथाभूतं प्रजानाति**" इति वचनादेकान्तेन प्रज्ञानुकूलत्वादविरुद्धः। इति **युगनद्धमार्गसंभारान्वितस्योपायकौशलादिकमित्युपायकौशलादि**-संभारप्रतिपादनाय प्रश्नं कर्तुमुपोद्घातयन्नाह—**एवं भगवन्** इत्यादि। एवं प्रागुक्तक्रमेण
B 89 महासंनाहसंनद्धः सन् महायानसंप्रस्थितो भवति इति यदुच्यते, तत्र महायानं न ज्ञायते इति प्रज्ञाकरुणाप्रयोगं तयोरन्यतराव्यतिरेकं विपक्षातिक्रममवस्थाननिश्चयं प्रतिपक्षप्रयोग-
15 प्रश्रब्धिमधिगन्तारं च अधिकृत्य यद्यथा यतो येन यत्र यो **निर्यास्यति** इति **कतमत्** इत्यादिव्यपदेशेन षट् प्रश्नाः इत्यार्यविमुक्तिसेनः । तत्र उपायकौशलादिसंभारान् प्रतिपादयितुं प्रथमं प्रश्नं विसर्जयन्नाह—**महायानम्** इत्यादि ।

पञ्च धर्माः स्वभावश्च विज्ञानान्यष्ट एव च ।
द्वे नैरात्म्ये भवेत्कृत्स्नो महायानपरिग्रहः ॥

20 —लङ्का०—६.५; १०.६३८

इत्यार्यलङ्कावतारवचनेऽपि संभारप्रकरणबलात् अप्रमेयताया उपायकौशलादि-
W 95 संभारात्मिकाया **महायानम्** इति **एतदधिवचनं** मुख्यतो व्यपदेशः। कथं पुनरुपायकौशलादिसंभारोऽप्रमेय इत्याह—**अप्रमेयम्** इत्यादि। प्रत्यक्षादिप्रमाणापरिच्छेदेन यथोक्तमेव वस्त्वप्रमेयम्। एतदुक्तम्- युगनद्धमार्गसंभारवतः सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः सत्त्वार्थ-
25 करणादुपायकौशलसंभारः । विदितोपायकौशलस्य ज्ञानाभ्यास इति ज्ञानसंभारः । स पुनरध्यात्मादिशून्यताभेदेन विंशतिविधो वेदितव्यः। तत्रेयं विंशतिविधा शून्यता यदुत— आध्यात्मिकानां चक्षुरादीनामकूटस्थाविनाशितां प्रकृतिमुपादाय अध्यात्मशून्यता ॥ १ ॥ बाह्यानां रूपादीनां तथाप्रकृतिमुपादाय बहिर्धाशून्यता ॥ २ ॥ आध्यात्मिकबाह्यानामायतनानां तथाप्रकृतिमुपादाय अध्यात्मबहिर्धाशून्यता ॥ ३॥ तत्र आध्यात्मिकमायतनं यदिन्द्रिय-
B 90 30 रूपसंगृहीतम्, बाह्यं यद्विषयरूपसंगृहीतम्, आध्यात्मिकबाह्यं यदिन्द्रियाधिष्ठानसंगृहीतम्, तद्धि आध्यात्मिकं च चित्तेनोपात्तत्वात्, बाह्यं च अनिन्द्रियसंगृहीतत्वात्। एतच्च शून्यतात्रयमधिमुक्तिचर्याभूमौ। सर्वधर्मशून्यतया शून्यताया अध्यात्मादिशून्यतालम्बनज्ञान-

स्वभावाया अपि शून्यत्वेन शून्यताशून्यता सर्वधर्मशून्यताज्ञानमात्रे सर्वधर्मशून्यता, तेन च शून्यताशून्यता। तस्य ग्राहकविकल्पप्रहाणादियं प्रयोगमार्गे ॥ ४ ॥ दशानां दिशां दिग्भिः शून्यत्वेन महाशून्यता। तासां महासंनिवेशत्वादियं सर्वत्रगार्थेन प्रथमायां भूमौ ॥ ५ ॥ परमस्य निर्वाणस्य निर्वाणार्थरूपशून्यत्वेन परमार्थशून्यता। तस्य त्रिसंयोग-मात्रत्वात्। इयमग्रार्थेन द्वितीयायाम् ॥ ६ ॥ संस्कृतस्य त्रैधातुकस्य कामादिधातुशून्यत्वेन संस्कृतशून्यता। तस्यापरिनिष्पन्नस्वभावत्वेन शक्यप्रतिपक्षत्वात्। इयं निष्यन्दाग्रार्थेन तृतीयायाम् ॥ ७ ॥ असंस्कृतस्यानुत्पादानिरोधानन्यथात्वस्य तेन शून्यत्वादसंस्कृतशून्यता। अनुत्पादादीनामुत्पादादिप्रतियोगिप्रज्ञप्तिनिमित्ताभावात्। इयं निष्परिग्रहार्थेन चतुर्थ्याम्। ॥ ८ ॥ अन्तस्यान्तेन शून्यत्वादतीतान्तत्वेन अत्यन्तशून्यता। अन्तो भागः तत्रोच्छेद-शाश्वतान्तयोर्मध्ये न तदस्ति किंचिद्येन तयोर्भागव्यवच्छेदनिमित्तत्वेन स्वभावो व्यवस्थाप्येत। इयं संतानाभेदार्थेन पञ्चम्याम् ॥ ९ ॥ आदिमध्यपर्यवसानानां तैः शून्यत्वेन अनवराग्र-शून्यता। आद्यादीनां धर्मतानुस्यूतत्वेन आत्यन्तिकत्वात्। इयं निःसंक्लेशविशुद्ध्यर्थेन षष्ठ्याम्। ॥ १० ॥ अवकिरणच्छोरणोत्सर्गलक्षणस्य अवकारस्य विपर्ययेण अनवकारः, तस्य तेन शून्यत्वादनवकारशून्यता। अवकिरणादेरक्रियारूपत्वेन अनुत्सर्गप्रज्ञप्तिनिमित्तत्वायोगात्। इयमनानात्वार्थेन सप्तम्याम् ॥ ११ ॥ सर्वार्यैरकृता प्रकृतिस्तस्यास्तया शून्यत्वात् प्रकृति-शून्यता। तस्याः संस्कृतासंस्कृतविकाराविकारानापत्तेः ॥ १२ ॥ धर्मस्य धर्मेण शून्यत्वात् सर्वधर्मशून्यता। सर्वधर्माणां संस्कृतासंस्कृतराश्योरितरेतरापेक्षत्वेन स्वभावापरिनिष्पन्नत्वात् ॥ १३ ॥ एतच्च शून्यताद्वयमहीनानधिकार्थेन निर्विकल्पक्षेत्रपरिशुद्धिवशिताद्वयाश्रयत्वेन चर्याफलभूमित्वात् प्रतिवेधपरिकर्मभेदेनाष्टम्याम्। रूपणादिलक्षणस्य रूपादेस्तल्लक्षण-शून्यत्वाल्लक्षणशून्यता। लक्षणव्यवस्थानस्य सामान्यविशेषप्रज्ञप्तिमात्रत्वात् ॥ १४ ॥ अतीतादीनां धर्माणामतीतादिष्वध्वसु इतरेतरविपर्ययानुपलभ्यत्वेन अनुपलम्भशून्यता, अध्वनां भावप्रज्ञप्तिमात्रत्वात् ॥ १५ ॥ एतच्च शून्यताद्वयं ज्ञानवशिताश्रयत्वेन तथैव नवम्याम्, नास्ति सांयोगिकस्य धर्मस्य स्वभावः, प्रतीत्यसमुत्पन्नत्वात्, इति संयोगस्य तेन शून्यत्वादभावस्वभावशून्यता सामग्रीमात्रं भावः इति कृत्वा ॥ १६ ॥ भावस्योपादानस्कन्ध-लक्षणस्य तेन शून्यत्वाद्भावशून्यता। राश्यर्थो हि स्कन्धार्थः। राशिश्च अपदार्थत्वा-न्नोपादानलक्षणस्य भावस्य निमित्तं भवितुमर्हतीति कृत्वा ॥ १७ ॥ एतच्च शून्यताद्वयं कर्मवशिताश्रयत्वेन पूर्ववद्दशम्याम्। अभावस्यासंस्कृतस्य आकाशादेस्तेन[1] शून्यत्वादभाव-शून्यता वस्तुधर्मानावरणादिना[2] तत्प्रज्ञप्तेः ॥ १८ ॥ स्वभावस्य शून्यताख्यस्य आर्याणां ज्ञानेन दर्शनेन च अकृतकत्वात् स्वभावशून्यता, ज्ञानदर्शनस्य यथाभूतार्थद्योतकत्वात् ॥ १९ ॥ "उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषा धर्माणां धर्मता" इति परेण कर्त्रा शून्यत्वात् परभावशून्यता। शून्यताधिष्ठानो हि पुरुषव्यापारः केवलं विघातायेति

१ B शून्यतादेः. २ B वस्तुधर्मेणावर°.

कृत्वा ॥ २० ॥ एतच्च शून्यतात्रयं यथाक्रमं सवासनक्लेशावरणप्रहाणाश्रयत्वेन सवासन-
W 97 ज्ञेयावरणप्रहाणाश्रयत्वेन स्वयंभूत्वार्थेन च बुद्धभूमौ वेदितव्यम् । अनया तु दिशा प्रकरणानामानुपूर्वीविकलानां[1] प्रकरणार्थो वाच्यः। "ये हि परप्रतिषेधमुखेन शून्यतामेव केवलं वर्णयन्ति न त्वेषामभिसमयानुपूर्वी काचिदस्तीति, तेषां प्रकरणार्थ एव वाच्यो न
5 मुख्यः शास्त्रार्थः, इत्यनेन शून्यतां[2]प्रभेदानां गतगन्तव्यानुपूर्वीवैकल्यादुद्देशभ्रंशसंभवः" इत्यार्यविमुक्तिसेनः। किं पुनरिदं निर्विकल्पकं ज्ञानमालम्बते? अशून्यतामित्येके। सर्वधर्माणां स्वभावशून्यतालम्बनं तदित्यपरे। एतदेव च न्याय्यम्[3]। यद्यत् ज्ञानं तत्तत् सर्वधर्मस्वभावशून्यतालम्बनं तत्त्वेन। तद्यथा—स्वप्नेऽश्वादीनां स्वभावशून्यतालम्बनं ज्ञानम्। ज्ञानं चेदं निर्विकल्पकं विवादपदमारूढं मनः, इति स्वभावहेतुः।

10 अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति।

इति नासिद्धो हेतुः। सपक्षे भावान्न विरुद्धः। सर्वधर्माणां तात्त्विकस्वभावस्य पश्चान्निराकरिष्यमाणत्वान्नाप्यनैकान्तिकः। ननु च यदालम्ब्यते तन्नास्ति, तद्यथा द्विचन्द्रादि। सर्वधर्मस्वभावशून्यतापि चेयमालम्ब्यमाना तथैव नास्तीति सर्वधर्मास्तित्व-मापद्यते इति चेत्, अदोष एषः। यस्मान्न देवदत्तप्रत्ययस्याभावस्यापवादान्तस्य हन्तरि
B 93 15 यज्ञदत्तप्रत्यये स्वभावे समारोपान्ते तच्छून्यतया हते पुनः प्रादुर्भाव इति। किं च आलम्बनं तत्त्वतोऽसिद्धम्। "संवृत्या संविन्निष्ठा हि विषयस्थितिः" इति विरुद्धम्, इत्येवमादिदोषो-ऽवाच्यः। शून्यतालम्बनपक्षे तु निःस्वभावगोचरं ज्ञानम्, शून्यतायाश्च संस्कृतत्वं प्रसज्यते। यथाक्रमं ज्ञानतच्छून्यतयोर्भावाभावत्वेन परस्परव्यतिरेकाव्यतिरेकविकल्पात्। आदर्शादिज्ञान-भेदेन तु पुनर्बहु वक्तव्यम्। ज्ञानसंभारव्यवस्थानामेषा दिक् प्रभेदश्च प्रसङ्गादभिहितः। न
20 त्विदानीमेव समस्तज्ञानसंभाराधिगमः, परिशिष्टाभिसमयक्रमनिर्देशात्। एवमन्यत्रापीति वेदितव्यम्। ज्ञानाभ्यासवतः प्रज्ञापरिशुद्ध्या सम्यक्समाध्यादिभिः सत्त्वार्थकरणात् पुण्यमिति पुण्यसंभारः। कृतपुण्यज्ञानाभ्यासस्य वस्तुपरीक्षामार्गादौ यत्नः, इति मार्गसंभारः। मार्गा-
W 98 न्वितस्य आकारो मुखं सर्वधर्माणामाद्यनुत्पन्नत्वादित्यादिना तेन तेनाक्षरविचित्रीकारेण अनल्पकल्पधर्मदेशनाहेतोः स्मृतेरपर्युपयोगात्। स्मृतिर्हि ग्रन्थार्थधारणेन धारयतीति कृत्वा
25 धारणीसंभार इति। एतच्चोपायकौशलसंभारादिपञ्चकं पञ्चविंशतिसाहस्रिकायामपि महायान-शब्देन विस्तरतो निर्दिष्टमिति न संदेहः कार्यः। प्राप्तधारणीकस्य उत्तरोत्तराधिगमप्रतिष्ठा-योगेन तज्जगुणाधारयोगेन च अधिगमावस्थाविशेषा भूमय इति भूमिसंभारं प्रतिपादयितुम् **यदपि सुभूते एवं वदसि—कथं वा तत्संप्रस्थितो वेदितव्यः** इत्यादि चोद्यवचनं संबन्धार्थ-मुच्चार्योत्तरार्थमाह—**पारमिताभिः संप्रस्थितः** इति। दशभूमिसंगृहीताभिर्दशभिरतिरिक्ततरा-
B 94 30 भिर्दानादिपारमिताभिः क्रमेण सम्यक् प्रस्थित इति फलनिर्देशाद्भूमिसंभारः कथितः। एत-दुक्तम्—तत्र यदा निरात्मानः सर्वधर्मा इति भावनया निरंशत्वात् सर्वात्मना धर्मधातोः

१ B °प्रकरणानां. २ W शून्यतां. ३ W न्यायान्.

प्रतिवेधेऽपि निश्चयोत्पादनापेक्षया सर्वत्रगार्थेन प्रतिवेधात् सर्वधर्मनिःस्वभावतासाक्षात्कारि स्फुटतरं ज्ञानमुत्पद्यते। तदा बोधिसत्त्वः सम्यक्त्वन्यामावक्रान्तितो दर्शनमार्गं प्रतिलभते। अत्र च रागप्रतिघमानाविद्याविचिकित्साः सत्कायान्तग्राहमिथ्यादृष्टिदृष्टिपरामर्शशीलव्रतपरा-मर्शाश्च कामधातौ चतुःसत्यभेदेन चत्वारिंशद्भवन्ति। एवं रूपारूप्यधातौ त एव चतुः-सत्यदर्शनप्रहातव्याष्टप्रकारप्रतिघवर्जिता द्वासप्ततिः। समुदायेन द्वादशोत्तरं क्लेशशतं दर्शन- 5 हेयं प्रहीयते। सत्यानामेकाभिसमयात्। अतः प्रमुदिताया भूमेः प्रथमः क्षणो दर्शनमार्गः। W 99 ततोऽन्ये द्वितीयादयः क्षणा यावद्वज्रोपमाख्यः आनन्तर्यमार्गो यस्मादनन्तरं समन्तप्रभा बुद्धभूमिरवाप्यते। सर्वोऽसावग्रार्थेनेत्यादिना धर्मधातोः प्रतिवेधाद्भावनामार्गोऽभिधीयते। तत्र च षोडश क्लेशा यथासंभवं क्रमेण प्रहीयन्ते। तद्यथा रागो द्वेषो मानोऽविद्या सत्काय-दृष्टिरन्तग्राहदृष्टिश्चेति कामावचराः षट्। रूपारूप्यावचरास्त एव दश द्वेषवर्जिताः इति। 10 दर्शनभावनामार्गे परिकर्मधर्मभेदेन प्रमुदितादिदशभूमिव्यवस्थानम्। तत्र च यद्भूमेर्ये परि-कर्मभूता धर्मा यावन्न परिपूर्यन्ते, तावत्तद्भूमिः। परिपूरौ तु भूम्यन्तरं वेदितव्यम्। तत्रेमे परिकर्मभूता धर्माः पञ्चविंशतिसाहस्रिकायां निर्दिष्टाः। तद्यथा—सर्वकुशलमूलसमुदानयनम्, सत्त्वार्थे महायानधर्मपरिग्रहः, चतुरप्रमाणाभिनिर्हरणम्, निर्विकल्पप्रयोगेन सर्वस्वपरित्यागः, कल्याणमित्राराधनम्, श्रावकयानादिनिरपेक्षतया अशेषसद्धर्मालम्बनपर्येष्टिः, सदा गृहवासा- 15 B 95 नभिरतिः, सर्वथा अनुत्तरबुद्धकायमनसिकाराविरहः, यथावत्सूत्रादिधर्मप्रकाशनम्, प्रति-ज्ञातार्थनिष्पत्तिश्च। इत्येभिर्दशभिर्धर्मैः सर्वथोत्पाद्यमानत्वात् परिकर्मभिः कारणविशेषैः स्वभावानुपलम्भतया कृतविशेषलक्षणपरिकर्मभिरेव प्रथमा अपूर्वधर्मतत्त्वाधिगमेन प्रमोद-लाभात् प्रमुदिता भूमिः प्राप्यते। तथा चोक्तम्—

**लभ्यते प्रथमा भूमिर्दशधा परिकर्मणा।** 20
**आशयो हितवस्तुत्वं सत्त्वेषु समचित्तता॥ ४९॥**
**त्यागः सेवा च मित्राणां सद्धर्मालम्बनैषणा।**
**सदा नैष्क्रम्यचित्तत्वं बुद्धकायगता स्पृहा॥ ५०॥**
**धर्मस्य देशना सत्यं दशमं वाक्यमिष्यते।**
**ज्ञेयं च परिकर्मैषां स्वभावानुपलम्भतः॥ ५१॥** इति॥ 25

सर्वथा परिशुद्धं श्रावकप्रत्येकबुद्धमनस्कारपरिवर्जितं कुशलधर्मसंग्राहकं सत्त्वार्थ-क्रियासंवरशीलम्, परकृतोपकारस्याविप्रणाशनम्, सत्त्वानामन्तिकेऽव्यापादादिचित्तता, W 100 सत्त्वपरिपाचनादावविप्रतिसारः, एकसत्त्वस्यापि कृतशो दीर्घकालं नरकादिवासोत्साहः, सर्वजननम्रता, गुरूणामन्तिके तद्वचनानुष्ठानेन शास्तृसंज्ञा, अनन्यकर्मणो दानादिपार-मितासूद्योगपर्येष्टिश्च इत्येवं परिकर्मणा पूर्ववत् कृतपरिकर्मविशेषेणाष्टप्रकारधर्मेण द्वितीया 30 सर्वदौःशील्यमलापगमाद्विमला भूमिरधिगम्यते। तथा चोक्तम्—

शीलं कृतज्ञता क्षान्तिः प्रामोद्यं महती कृपा ।
गौरवं गुरुशुश्रूषा वीर्यं दानादिकेऽष्टमम् ॥ ५२ ॥ इति ॥

B 96 सर्वबुद्धभाषितधर्मधारणाभिप्रायः, कुशल[1]मूलादिनिरपेक्षतया सद्धर्मप्रकाशनम्, बुद्धक्षेत्रपरिशोधनकरधर्माणां तत्रैव परिणामना, सत्त्वार्थकरणाय न जातुचित् खेदापत्तिः, 5 श्रावकप्रत्येकबुद्धमनस्कारादिभिः स्वपरापेक्षया लज्जा च इत्येवं पञ्चधा परिकर्मणा पूर्ववत् कृतानवबुध्यमानस्वभावपरिकर्मणा तृतीया लोकोत्तरज्ञानावभासकरणात् प्रभाकरी भूमिरवबुध्यते । तथा चोक्तम्—

अतृप्तता श्रुते दानं धर्मस्य च निरामिषम् ।
बुद्धक्षेत्रस्य संशुद्धिः संसारापरिखेदिना ॥ ५३ ॥
10 ह्रीरपत्राप्यमित्येतत् पञ्चधा मननात्मकम् । इति ॥

श्रावकादिमनस्कारविवेकः, उपलम्भयोगेन प्राप्तबोधेरप्यनिच्छा, प्राप्तेनापि प्रणीतवस्तुना अमननता, गम्भीरधर्मक्षान्तिनिध्यानाद्यपरित्यागः, सर्वशिक्षाणामपरित्यजनम्, कामचित्तस्यानुत्पादः, सर्वधर्माणामनभिसंस्कारः, स्वशरीराद्यग्रहणता, कुशलधर्मालम्बनचित्तासंकोचः, सर्ववस्त्वमनसिकारश्च इत्येवं परिकर्मणा पूर्ववत् दशप्रकारेण चतुर्थी सकल-15 क्लेशेन्धनदहनज्वालयोपेतत्वादर्चिष्मती भूमिरभिरुह्यते । तथा चोक्तम्—

वनाशाल्पेच्छता तुष्टिर्धूतसंलेखसेवनम् ॥ ५४ ॥
शिक्षाया अपरित्यागः कामानां विजुगुप्सनम् ।
W 101 निर्वित्सर्वास्तिसंत्यागोऽनवलीनानपेक्षते ॥ ५५ ॥ इति ॥

B 97 लाभाद्यर्थं गृहिप्रव्रजितैः संवासः, श्राद्धकुलानुपदर्शनम्, जनाकीर्णगमनादि, 20 स्वप्रशंसनपरनिन्दने, दश अकुशलकर्मपथाः, श्रुताद्यभिमानः, पराप्रणमनम्, कुशलाकुशलविपरीताभिनिवेशः, सत्कायदृष्ट्यादिमतिः, सर्वरागादिक्लेशाभिमुखीकरणं च इत्येवंलक्षणान् दश धर्मान् बोधिविबन्धकत्वेन विवर्जयन् अर्थादाक्षिप्तविपर्ययधर्मेण दशप्रकारपरिकर्मणा पूर्ववत् पञ्चमी सुष्ठु दुःखेन जीयते इति सुदुर्जया भूमिराक्रम्यते। तथा चोक्तम्—

संस्तवं कुलमात्सर्यं स्थानं संगणिकावहम् ।
25 आत्मोत्कर्षपरावज्ञे कर्ममार्गान् दशाशुभान् ॥ ५६ ॥
मानं स्तम्भं विपर्यासं विमतिं क्लेशमर्षणम् ।
विवर्जयन् समाप्नोति दशैतान् पञ्चमीं भुवम् ॥ ५७ ॥ इति ॥

दानादिषट्पारमितापरिपूरणेन श्रावकप्रत्येकबुद्धाभिलाषस्य स्वभावानुपलम्भोत्रासचित्तस्य च याचकजनप्रार्थनासंकोचचित्तस्य स्वरसप्रवृत्तसर्वार्थत्यागदौर्मनस्यस्य दारिद्र्यादर्थि-30 जनप्रतिक्षेपचित्तस्य वर्जनेन इत्येवं द्वादशभिः परिकर्मभिः पूर्ववत् षष्ठी सर्वबुद्धधर्माभिमुख्यादभिमुखी भूमिराज्ञायते । तथा चोक्तम्—

१ W लाभादिनिरपेक्षतया.

दानशीलक्षमावीर्यध्यानप्रज्ञाप्रपूरणात् ।
शिष्यखड्गस्पृहात्रासचेतसां परिवर्जकः ॥ ५८ ॥
याचितोऽनवलीनश्च सर्वत्यागेऽप्यदुर्मनाः ।
कृशोऽपि नार्थिनां क्षेप्ता षष्ठीं भूमिं समश्नुते ॥ ५९ ॥ इति ॥

शून्यतानिमित्ताप्रणिहितत्रिविमोक्षमुखज्ञानात् यथाक्रममात्मसत्त्वजीवग्रहाभावः, त्रिमण्डलविशुद्धदशकुशलकर्मपथपरिपूर्यविमोक्षादेकपुद्गलग्रहवर्जनम्, दुःखार्तसर्वजनालम्बनकृपाप्रतिवेधादुच्छेदग्रहायोगः, बुद्धक्षेत्रपरिपूरिमुपादाय सर्ववस्त्वनुपलम्भात् शाश्वतग्रहविनिवृत्तिः, सर्वधर्मसमतावगमात् निमित्तग्रहानुपपत्तिः, महायानत्वेनैकयानावबोधात् हेतुग्रहत्यागः, नामरूपाद्यनुत्पादपरिज्ञानात् स्कन्धग्रहवियोगः, गम्भीरधर्मनिध्यानक्षान्त्यवगमात् धातुग्रहोच्छेदः, सर्वधर्माणां महायानोपायमुखेन प्रकाशनादायतनग्रहविश्लेषः, सर्वकल्पनोच्छेदात् त्रैधातुकप्रतिष्ठानग्रहविच्छेदः, निमित्तोद्ग्रहणसत्कायादिदृष्टिरागादिक्लेशवर्जनात् सक्तिग्रहविरहः, शमथभावनाबलादालीनचित्तग्रहविवेकः, प्रज्ञाकौशल्यात् बुद्धदृष्टिनिश्रयारूपता, धर्मनैरात्म्यभावनानिमित्तोपशमाद्धर्मदृष्टिनिश्रयास्वभावता, उभयसत्याश्रितरूपाद्यप्रतिघातज्ञानोदयात् संघदृष्टिनिश्रयानुदयः, अभिनिवेशास्थानज्ञानलाभात् शीलदृष्टिनिश्रयाभवनम्, सम्यग्धर्मप्रविचयार्थं यथेष्टसमकालसर्वबुद्धक्षेत्रगमनात् शून्यताविवादग्रहाप्रसवः, उपलम्भाभिनिविष्टसत्त्वधातूत्तारणाय यथानुरूपं सर्वत्र स्वात्मभावदर्शनात् शून्यताविरोधोद्भावनाग्रहोत्सृष्टिश्च इत्येवं विंशतिप्रकारेण परिकर्मधर्मेण पूर्ववत् कृतविशेषलक्षणपरिकर्मणा अधिगतेन यथोक्तविंशतिप्रकारधर्मकलङ्कापगमात् सप्तमी सम्यगनाभोगमार्गोपश्लेषात्[1] सुष्ठु दूरंगतत्वात् दूरंगमा भूमिः समीयते । तथा च हेयमधिकृत्योक्तम्—

आत्मसत्त्वग्रहो जीवपुद्गलोच्छेदशाश्वतः ।
निमित्तहेत्वोः स्कन्धेषु धातुष्वायतनेषु च ॥ ६० ॥
त्रैधातुके प्रतिष्ठानं सक्तिरालीनचित्तता ।
रत्नत्रितयशीलेषु तद्दृष्ट्यभिनिवेशिता ॥ ६१ ॥
शून्यतायां विवादश्च तद्विरोधश्च विंशतिः ।
कलङ्का यस्य विच्छिन्नाः सप्तमीमेत्यसौ भुवम् ॥ ६२ ॥ इति ॥

तथा चोपादेयमधिकृत्योक्तम्—

त्रिविमोक्षमुखज्ञानं त्रिमण्डलविशुद्धता ।
करुणामनना धर्मसमतैकनयज्ञता ॥ ६३ ॥
अनुत्पादक्षमाज्ञानं धर्माणामेकधेरणा ।
कल्पनायाः समुद्घातः संज्ञादृक्क्लेशवर्जनम् ॥ ६४ ॥

१ B °मार्गोपसर्गात्.

शमथस्य च निष्पत्तिः कौशलं च विदर्शने।
चित्तस्य दान्तता ज्ञानं सर्वत्राप्रतिघाति च ॥ ६५ ॥
सक्तेरभूमिर्यत्रेच्छं क्षेत्रान्तरगतिः समम्।
सर्वत्र स्वात्मभावस्य दर्शनं चेति विंशतिः ॥ ६६ ॥ इति ॥

5 यथावत् सर्वसत्त्वचित्तचरितज्ञानम्, नानालोकधातौ सत्त्वार्थं प्रति अभिज्ञाभिः क्रीडनम्, आधारबुद्धक्षेत्रसुवर्णादिभावपरिणामः, सर्वाकारधर्मपरीक्षणार्थं तथागतारागणम्, दिव्यचक्षुषो निष्पत्तिः, आधेयबुद्धक्षेत्रसत्त्वपरिशोधनम्, सर्वत्र मायोपमतावस्थानम्, सत्त्वार्थदर्शनात् बुद्धिपूर्वकजन्मग्रहणं च इत्येवमष्टप्रकारधर्मेण परिकर्मणा पूर्ववदष्टमी निमित्ताभोगाप्रकम्प्यत्वादचला भूमिरनुभूयते। तथा चोक्तम्—

10 सर्वसत्त्वमनोज्ञानमभिज्ञाक्रीडनं शुभा।
बुद्धक्षेत्रस्य निष्पत्तिर्बुद्धसेवापरीक्षणे ॥ ६७ ॥
अक्षज्ञानं जिनक्षेत्रशुद्धिर्मायोपमा स्थितिः।
संचिन्त्य च भवादानमिदं कर्माष्टधोदितम् ॥ ६८ ॥ इति ॥

B 100 अनन्तप्रणिधानम्, देवादिसर्वसत्त्वरुतज्ञानम्, नद्युपमिताक्षयप्रतिभानम्, सर्वजन-15 प्रशस्तगर्भावक्रमणम्, राजादिस्थानम्, आदित्याद्यन्वयः, मात्रादिसंबन्धज्ञातिः, स्वविधेय-परिवारः, शक्राद्यभिनन्दितोत्पादः, बुद्धादिसंचोदननिष्क्रमणम्, चिन्तामणिसदृशाश्वत्थ-वृक्षादिः, सर्वबुद्धधर्मस्वभावगुणपरिपूरणं च इत्येवं संपत्तिलक्षणैर्द्वादशभिः परिकर्मभिः पूर्ववत्कृतपरिकर्मविशेषैर्नवमी धर्मदेशनाकौशलतोऽनवद्यत्वात् साधुमती भूमिः साक्षात्क्रियते। तथा चोक्तम्—

20 प्रणिधानान्यनन्तानि देवादीनां रुतज्ञता।
नदीव प्रतिभानानां गर्भावक्रान्तिरुत्तमा ॥ ६९ ॥
W 104 कुलजात्योश्च गोत्रस्य परिवारस्य जन्मनः।
नैष्क्रम्यबोधिवृक्षाणां गुणपूरेश्च संपदः ॥ ७० ॥ इति ॥

गोत्रभूमिः श्रावकादिगोत्रस्याष्टमकभूमिः प्रथमफलप्रतिपन्नकस्य। दर्शनभूमिः 25 स्रोतआपन्नस्य। तनुभूमिः सकृदागामिनः। वीतरागभूमिरनागामिनः। कृताविकल्पभूमि-रर्हतः। विशेषवचनाभावेन श्रावकभूमिः प्रतिपन्नकत्रयस्य। प्रत्येकबुद्धभूमिः प्रत्येक-बुद्धानाम्। बोधिसत्त्वभूमिश्च यथोक्ता बोधिसत्त्वानां नवविधा। इत्येवं नव भूमीरतिक्रम्य दशम्यां पुनर्भूमौ बोधिसत्त्वो बुद्ध एव वक्तव्यो न तु सम्यक्संबुद्ध इति पञ्चविंशतिसाहस्रिकायां वचनाद्यत्र बुद्धभूमौ येन कर्मवशिताश्रयत्वादिना ज्ञानेनावतिष्ठते, सा तेन प्राप्या दशमी 30 धर्ममेघाम्बुप्रवर्षणाद्धर्ममेघा बोधिसत्त्वभूमिः। तथा चोक्तम्—

नव भूमीरतिक्रम्य बुद्धभूमौ प्रतिष्ठते।
येन ज्ञानेन सा ज्ञेया दशमी बोधिसत्त्वभूः ॥ ७१ ॥ इति ॥

विस्तरेण तु निर्दिष्टो भूमिसंभारः पञ्चविंशतिसाहस्रिकायां ग्राह्यः, ग्रन्थविस्तर-प्राचुर्यान्मयेह न विस्तारित इत्यलं प्रसङ्गेन ।

दर्शनभावनामार्गात्मक एव भूमिसंभारः इति तदनन्तरं तस्य विपक्षप्रहाणावस्थाभेदेन प्रतिपक्षसंभारत्वं प्रतिपादयितुं तृतीयादिप्रश्नपरिहारद्वारेणाह--**त्रैधातुकात्** इत्यादि । तत्रादौ वस्तुमात्रप्रतिपक्षाधिष्ठानग्राह्यविकल्पद्वयस्य द्रव्यपुद्गलप्रज्ञप्तिपुरुषाधिष्ठानग्राहकविकल्पद्वयस्य 5 च दर्शनमार्गे प्रहाणात् विपक्षभेदेन तत्प्रतिपक्षावस्थाधिगमात् यथाक्रमं चतुर्विधप्रतिपक्ष-संभारप्रतिपादनपरं **त्रैधातुकान्निर्यास्यति** इत्यादि वाक्यचतुष्टयं संवृतिसत्याश्रयेण योज्यम् । तदनु भावनामार्गे वस्तुमात्रप्रतिपक्षाकाराधिष्ठानद्विविधग्राह्यविकल्पस्य द्रव्यपुद्गलप्रज्ञप्तिपुरुषा- W 105 धिष्ठानद्विविधग्राहकविकल्पस्य च प्रहाणाद्विपक्षभेदेन तत्प्रतिपक्षावस्थाधिगमादपरं चतुर्विध-प्रतिपक्षसंभारं यथासंख्यं परमार्थसत्याश्रयेणोक्तक्रियाप्रतिषेधात्प्रतिपादयन्नाह—**अपि तु** इत्यादि । 10 स्थानप्रतिषेधमेव स्पष्टयति—**अपि तु स्थास्यति सर्वज्ञतायामस्थानयोगेन** इति । तत्र स्थानं वस्तूपलम्भः । करुणादिभिः[1] प्रतिष्ठानं चेतसः । तत्प्रतिषेधादस्थानम् । अत्र विचार्यते—यदि तावत् स्थानाभावोऽस्थानम्, एवं सति अभावत्वात् प्रतिपक्षो न युज्यते । अथ यन्न स्थानं तथा चक्षुरादिष्वप्यतिप्रसङ्गः इति यथा अनभिनिवेशो व्याख्यातः, तथा इदानीमपि[2] नयो द्रष्टव्य इति न प्रतन्यते । त्रैकालिकवस्तुप्रतिषेधात् **न निर्यातः** इत्याद्यभिधानम् । 15 भूतार्थाभ्यासेन निर्याणात् कथमेवमिति तत्कस्य हेतोः इत्याशङ्क्याह—**यश्च** इत्यादि । **उभौ** B 102 इति । यो बोधिसत्त्वो येन च मार्गेण निर्यायात् तौ एतौ । तत्त्वेनोपसंहरन्नाह—**एवम्** इत्यादि । संवृत्या त्वस्तीति भावः । तथा चोक्तम्—

> **प्रतिपक्षोऽष्टधा ज्ञेयो दर्शनाभ्यासमार्गयोः ।** W 106
> **ग्राह्यग्राहकविकल्पानामष्टानामुपशान्तये**[3] ॥ ७२ ॥ इति ॥ 20

यथोक्तानुपूर्व्या संवृतिपरमार्थसत्यानतिक्रमेण समस्तमहायानानुष्ठानेन संभ्रियते समुदा-गमभावेन महाबोधिरेभिः करुणादिभिरिति करुणादयः संभारा इति सप्तदशप्रकारा संभारप्रति-पत्तिः । संभृतसंभारस्यैवमजितजयप्राप्त्या निर्याणमिति निर्याणप्रतिपत्तिश्चतुर्धा[4] वक्तव्या । सा पुनर्विषयभेदेनाष्टधा इति आदौ प्राधान्यादुद्देशनिर्याणम् । तत्पुनः सर्वसत्त्वाग्रताचित्तमहत्त्व-निर्याणम्, प्रहाणमहत्त्वनिर्याणम्, अधिगममहत्त्वनिर्याणं चेति त्रिविधम् । अतस्त्रिविधो- 25 द्देशनिर्याणमधिकृत्याह—**महायानम्** इत्यादि ।

> आलम्बनमहत्त्वं च प्रतिपत्त्योर्द्वयोस्तथा ।
> ज्ञानस्य वीर्यारम्भस्य उपायकौशलस्य च ॥
> उदागममहत्त्वं च महत्त्वं बुद्धकर्मणः ।
> एतन्महत्त्वयोगाद्धि महायानं निरुच्यते ॥ इति ॥ 30

सूत्रालंकार—१९.५९

---

१ W om. करुणादिभिः. २ W इहापि for इदानीमपि. ३ W ग्राह्यग्राहविकल्पानाम्. ४ W चतुर्थी.

सप्तविधमहत्त्वयोगात् महायानं सफलो बोधिसत्त्वमार्गः लोकप्रसिद्धमात्रस्यैव अयथा-

B 103 र्थाभिसंबोधफलं महायानम्, तस्यैव बन्धनत्वात्। इतरथा हि महायानस्य प्रतिपक्षभावनावैयर्थ्यं स्यात्। अतोऽभूतपरिकल्पमात्रत्वात् वितथप्रख्यातिरूपं **सदेवमानुषासुरं लोकं** तत्प्रतिपक्षत्वेन असत्यार्थतया स्वरूपपरिज्ञानात् **अभिभवन्** यस्मान्निश्चयेन गन्तव्यं स्थानं सर्वसत्त्वाग्रतादि-

5 महत्त्वं **यास्यति** इति। **तस्मात् महायानमुच्यते** इति वाक्यार्थः। समताधिगममन्तरेणोद्देश-निर्याणासंभवः इति तदनन्तरं समतानिर्याणं दर्शयितुमाह—**आकाश** इत्यादि। आकाशमिव

W 107 **समतया** शून्यतया सकलज्ञेयमण्डलव्यापिनिर्मलज्ञानत्वात् **महत् तद्यानम्**। सत्त्वार्थमन्तरेण पुण्योपचयाभावान्न समतावगमनं सम्यगिति तदनु सत्त्वार्थनिर्याणमाह—**यथा** इत्यादिना। महा-याने "सत्त्वानामवकाशः" इति वचनात्तेन महायानेन तेषामर्थो निर्यातव्य इत्यावेदितम्। अन्यथा

10 अर्थक्रियाशून्यत्वेनावकाशानुपपत्तेः। **अनेन** इत्याद्युपसंहारः। **पर्यायेण** अर्थान्तरेण अनेन। आभोगे सति अविकलः सत्त्वार्थो न निष्पद्यते इत्यतोऽनन्तरमनाभोगनिर्याणं वक्तुमाह—**नैवास्य** इत्यादि। **आगमः** अतीते, **निर्गमः** अनागते, **स्थानं** वर्तमाने। आगमाद्यभावाद-यत्नसिद्धं निर्याणमिति भावः। शाश्वतोच्छेदरहितावस्थाधिगमं विना अनाभोगनिर्याणं न भवतीत्यतोऽनन्तरमत्यन्तनिर्याणं दर्शयितुमाह—**एवमस्य** इत्यादि। एवमिति वक्ष्यमाणक्रमेण।

15 **पूर्वान्तः** शाश्वतः। उच्छेदः **अपरान्तः**। तद्विनिर्मुक्तोऽन्योऽपि नास्तीत्याह—**नापि मध्यः**

W 108 इति। **एवम्** इति यदुक्तं तत्कथयन्नाह—**अथ** इत्यादि। यस्मात्प्रकृतिपरिनिर्वृतत्वेन सर्व-धर्माणां त्र्यध्वशून्यं **तद्यानं** तस्मान्महायानत्वेन पूर्वान्तत्वाद्यभाव इति वाक्यार्थः। धर्मता-

B 104 विरुद्धार्थकथनात् साधुकारमावेदयन्नाह—**साधु** इत्यादि। उपसंहरन्नाह—**एवम्** इत्यादि। अत्यन्तनिर्याणमपि यानत्रयप्रतिविशिष्टावस्थाप्राप्तिं विना न संपद्यते इत्यतोऽनन्तरं प्राप्ति-

20 निर्याणमाह—**अत्र शिक्षित्वा** इत्यादि। अत्रेति महायाने, **सर्वज्ञता** यानत्रयात्मिका। सर्वार्यपुद्गलाधिगमहेतुत्वज्ञापनार्थम् **अनुप्राप्त** इत्यभिधानम्। शब्दान्यथात्वजनितविभ्रमादार्य-

W 109 **पूर्णोऽयम्** इत्याद्याह। **प्रज्ञापारमितायाः कृतशः** प्रयोजनेन **प्रतिभातु ते** इत्यादिना प्रारम्भ एव **अधीष्टः**। नित्यसमन्वाहारमन्तरेण ज्ञानदर्शनासंभवादन्यथापि स्यादित्यार्य-सुभूतिराह—**नाहं भगवन्** इत्यादि। **व्यतिक्रम्य** इति उल्लङ्घ्य। तथागताधिष्ठितस्य विपरीत-

25 देशनानुपपत्त्या **नो हीदम्** इत्याद्याह। **अनुलोम** इति अनुकूलम्। प्रज्ञापारमितार्थस्य महायान-स्वभावत्वादिति भावः। सर्वाकारगम्भीरधर्मदेशनाशक्तिमात्मनोऽपश्यन्नाह—**बुद्धानुभावाद्भगवन्** इति। तच्च प्राप्तिनिर्याणं प्राप्यप्रापकतदुभयसंबन्धप्रतिषेधलक्षणम्। अतः प्राप्यप्रतिषेध-मधिकृत्याह—**अपि तु** इत्यादि। अपितुशब्दः क्रमार्थः। अद्यादित्वेन सप्तम्यन्तात्तसिः **पूर्वान्ततः** इत्यादौ ज्ञेयः। **नोपैति** इति। बोधिसत्त्वं कंचित् प्राप्यं रूपादिस्वभावमिति

30 शेषः। तस्यैव प्राप्यस्य बोधिसत्त्वस्याविद्यमानत्वादिति भावः। ननु रूपादिप्रतिभासो बोधि-

W 110 सत्त्वः कथमविद्यमान इति, तत्कस्य हेतोः इत्याशङ्क्याह—**रूपापर्यन्ततया** इत्यादि।

धर्मधातुविनिर्मुक्तो यस्माद्धर्मो न विद्यते।

—सूत्रालंकार १३.११

इति न्यायाद्धर्मधातुवत्तत्स्वभावीभूतानां यस्माद्रूपादीनाम् अपर्यन्ततया **बोधिसत्त्वापर्यन्तता,** तस्माद् बोधिसत्त्वं नोपैति इति भावः । प्रापकप्रतिषेधमधिकृत्याह–**रूपम्** इत्यादि । रूपादीनां न्यायेनासत्त्वात्तदात्मकप्रापकबोधिसत्त्वोपलम्भाभाव इति भावः । यद्येवम्, अनुपलम्भस्तर्हि तत्त्वमित्याह–**इदम्** इत्यादि । इदमपि नोपैतीति **अपि न विद्यते** निर्विषयस्य नञोऽप्रयोगात्, अतो वस्तुनोऽसत्त्वान्नोपलभ्यते । सामान्येन निर्दिश्यैवमात्मान- 5 मधिकृत्याह–**एवं भगवन्** इत्यादि । एवमिति प्राप्यप्रापकप्रतिषेधेन । "द्वे ह्यमू सर्वते, वस्तुसर्वता आकारसर्वता च" इति न्यायात् । तत्र सर्वेणेति स्कन्धादिवस्तुरूपेण । सर्वमिति बाह्याध्यात्मिकवस्तुस्वभावम् । सर्वथेति अध्यात्मशून्यतादिभिराकारप्रकारैः । पुनः सर्वमिति व्यस्तसमस्तप्रकारम् । **बोधिसत्त्वधर्मम्** इति बोधिसत्त्व एव प्राप्यप्रापकलक्षणो धर्मो रूपादिस्वभावः, **तमनुपलभमानः** सन् । तदुभयसंबन्धप्रतिषेधमाह–**प्रज्ञा** इत्यादिना । 10 साकारनिराकारज्ञानाभ्यां यथासंख्यं **न समनुपश्यामि** नोपलभे, प्रत्यक्षानुमानाभ्यां वा । तत्प्रतिपादनार्थमेवाह **सर्वज्ञताम्** इति । उपसंहरन्नाह–**सोऽहम्** इत्यादि । **कतमं** प्रापकं बोधिसत्त्वं **कतमेन** प्राप्योपायमुखेन **कतमस्मिन्** संबन्धे सर्वाकारज्ञतालक्षणे । किंशब्दस्य क्षेपाभिधायित्वात् नैव कंचित् केनचित् क्वचिदित्यर्थः । कुतः? यस्मात् **बुद्ध** इत्यादि । प्राप्योऽत्र बुद्धशब्देनोक्तः । प्रापकसंबन्धस्योत्तरपदद्वयेनाभिधानात् । यतो यदेव प्रक्रान्तं तदेवोप- 15 संह्रियते । यथावस्तुशब्दप्रयोगेण संज्ञामात्रसद्भावात् सत्यं वस्तु स्यादित्याह–**तच्च** इत्यादि ।

> नार्थशब्दविशेषस्य वाच्यवाचकतेष्यते ।
> तस्य पूर्वमदृष्टत्वात् सामान्यं तूपदेक्ष्यते ॥
>
> –तत्त्व. पञ्जिका–३०६

इति न्यायात् यथावस्तु **तन्नामधेयमनभिनिर्वृत्तत्वात्** नोत्पन्नम् । किमिवेत्याह–**यथा** 20 **आत्मा** इति । तदेव कथयति, आत्मेत्यादिना । अर्थक्रियासमर्थत्वात् खरविषाणवत्तथ्यसंवृत्यापि **अनभिनिर्वृत्तत्वेन** अत्यन्ततया नास्त्यात्मा । अथ चात्मेति व्यपदेशः । यद्येवं न्यायेन **अस्वभावत्वे सर्वधर्माणां कतम** तद्रूपम् इत्याशङ्क्याह–**यद्** इत्यादि । यस्मादनभिनिर्वृत्तं तस्माद्ग्राह्यग्राहकभावविगतं तत्त्वेन तदविचारैकमनोहरं संवृत्या रूपम् । एवं ग्राह्यग्राहकभावेनानभिनिर्वृत्तिस्तर्हि पारमार्थिको धर्म इत्याह–**एवम्** इत्यादि । न्यायेन **एषां** 25 **सर्वधर्माणामस्वभावता या सैवानभिनिर्वृत्तिः, या चानभिनिर्वृत्तिः** स्वरूपधारणवैकल्यात्, **न ते धर्माः** । प्रसाधितमर्थं निगमयन्नाह–**तद्** इत्यादि । तत् तस्मात् । किंशब्दस्य क्षेपाभिधायित्वान्नैवेत्यर्थः । अभिनिर्वृत्तिस्तर्हि धर्म इत्याह–**न चान्यत्र** इत्यादि । सर्ववस्तुनोऽभिनिर्वृत्तेः प्रतिषिद्धत्वात् **अनभिनिर्वृत्तितोऽन्यत्र** अभिनिर्वृत्तौ धर्मो नैवोपलभ्यते । सर्वधर्माः प्रज्ञापारमितामार्गस्वभावाः । बुद्धधर्माः प्राप्यलक्षणाः । बोधिसत्त्वधर्माः प्रापकबोधि- 30 सत्त्वप्रज्ञप्तिनिबन्धना रूपादयः । यो वा अन्यः कश्चित् सामान्यधर्मो बोध्यर्थं चरेत्, स **नैवोपलभ्यते** इति विभक्तिविपरिणामेन संबन्धः । कः पुनरेवं प्रज्ञापारमितायामभियुक्त इत्याह–**सचेत्** इत्यादि । **चरति** असमाहितज्ञानेन । **भावयति** समाहितेन । **उपपरीक्षते** युक्त्या व्यवस्था-

B 105 W 111 B 106 W 112 W 113

पयति। स्मरणप्रत्ययेऽवस्थापनात् उपनिध्यायति। ननु रूपाद्युपलम्भेन कथं प्रज्ञापारमितामुप-
B 107 परीक्षते इति तत्कस्य हेतोः इत्याशङ्क्याह—**यस्मिन्** इत्यादि। यस्मात् यस्मिन् काले रूपादीन्
W 114 **इमान् धर्मान् प्रज्ञापारमितायां** तन्निमित्तं व्युपपरीक्षते नैःस्वभाव्याकारेण। तस्मात् तस्मिन्
काले **न रूपमुपैति** न प्रतिपद्यते। अतो **नोपगच्छति** न स्वीकरोति, यतो **नोत्पादं न निरोधं वा**
5 **समनुपश्यति**। उत्पादव्ययनिर्मुक्तस्यान्यस्यासत्त्वादिति भावः। नन्वैकात्म्येऽनुत्पादानिरोधो-
पलम्भ एव रूपोपलम्भः, अतः कथं न रूपमुपैतीति तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि**
इत्यादि। यस्माद्यौ **अनुत्पादाव्ययौ** न तौ **रूपं** संवृत्या रूपस्यैव प्रतिभासनात्[३]। तत्र भाव
एव क्षणस्थितिधर्मा, नाशो व्ययः, तत्प्रतिषेधात् **अव्ययः**। यतः संवृत्या नानात्वमिति।
तस्मादनुत्पादाव्ययौ रूपं च परमार्थतोऽनुत्पादाव्ययस्यैव स्थितेरद्वयमनुत्पादाद्येकरूपमेतत्।
10 यतः **अद्वैधीकारम्** अपगतद्विधाभावकारकप्रमाणम्। यद्येवं कथं पुना रूपव्यपदेश इत्याह—
W 115 **यत्पुनः** इत्यादि। अद्वयस्य न्यायेनानुत्पादादिरूपस्यैषा रूपमित्युद्भावना संवृत्या **गणना**
संज्ञा **कृता** संकेतिता। सर्वाकारज्ञताधिगमेन विना न प्राप्तिनिर्याणमिति[१] तदनु सर्वाकार-
ज्ञतानिर्याणं दर्शयितुमाह—**एवं भगवन्** इत्यादि। एवं सर्वाकारमिति संबन्धः। प्रज्ञापार-
मितायां सर्वाकारज्ञतायां निर्यातुमिति शेषः। सर्वाकारं नैःस्वभाव्याद्याकारम्, क्रियाविशेषण-
15 मेतत्। सर्वधर्मान् रूपादीन् व्युपपरीक्षमाणस्तस्मिन् समयेऽभिसमयकाले **न रूपमुपैति**
B 108 इत्यादि प्रसङ्गान्तरेण पुनरावर्तितमिति न पुनरुक्ततादोषः। एवं सति सत्त्वार्थदुष्करचर्याद्यनुप-
पत्तिरित्यभिप्रायवानाह—**तेन हि** इत्यादि। यतो रूपाद्यनुत्पादाव्यययोरद्वयत्वं तस्मात्कारणात्।
**यथाभाषितस्य न रूपमुपैति** इत्यादिवचनस्यार्थमाजानामि **तथा बोधिसत्त्वोऽप्यनुत्पादः**
तस्यापि रूपादिस्वभावत्वात्। भवत्वेवमित्यभ्युपगमे दोषार्थमाह—**यदि च** इत्यादि। किंशब्दः
20 क्षेपे, अनुत्पादविरुद्धत्वान्नैव चरतीत्यर्थः। यानि दुःखानि सत्त्वानां कृतशः प्रयोजनेन प्रत्यनु-
भवितुमुत्सहते, किमर्थं वा तानि, नैवेत्यर्थः। सत्त्वाद्यभावादिति भावः। **नाहम्** इत्यादिनो-
त्तरमाह। एवं मन्यते—यदि बोधिसत्त्वोऽनुत्पादः परमार्थतो नैव दुष्करचर्यां चरतीत्यापद्यते,
तदा तत्त्वेन चर्यानुपपत्तेः सिद्धसाध्यता। अथ संवृत्या, तदा नानुत्पादस्तर्हि बोधिसत्त्वः,
तस्योत्पादप्रतिपादनात्। तत्कथं चर्या विरुद्धेति संवृत्यापि दुष्करचर्या कथं चर्यते इत्यपि न
25 मन्तव्यमित्याह—**नापि** इत्यादि। दुष्करसंज्ञया चरतीत्यत्र दुष्करचर्यामिति शेषः। ननु
शिरोदानादिदुष्करचर्यां बोधिसत्त्वा एव कुर्वन्तीति कथं न दुष्करसंज्ञेति तत्कस्य
W 117 हेतोरित्याशङ्क्याह—**न हि** इत्यादि। यस्माद्दुष्करसंज्ञां जनयित्वा न शक्यः सत्त्वानामर्थः
कर्तुम्, सम्यक्चर्यानिष्पत्तेः। अतो यो दुष्करसंज्ञां दानादिचर्यासु करोति, स सत्त्वार्था-
करणेन बोधिसत्त्वो न भवतीति भावः। कथं तर्हि शक्यते इत्याह—**अपि तु** इत्यादि।
30 दानादिषु मात्सर्याद्यभावेन सुकरसंज्ञां सुखसंज्ञां तथा सत्त्वानामन्तिके सामान्येन मात्रादि-
संज्ञाविशेषेण वा स्त्रीपुरुषेषु वयसा वृद्धन्यूनप्रमाणेषु यथासंभवं मात्रादिसंज्ञां कृत्वा यदि

---

१ W °ज्ञतानिर्याणमिति. २ B °दुःख°. ३ W °प्रतिभासनात्.

बोधिसत्त्वश्चर्यां चरति, तदा अर्थः शक्यते कर्तुमिति भावः । तदेवोपसंहरन्नाह—**तस्मात्** इत्यादि । यावदित्यनेन समानवयःप्रमाणेषु स्त्रीपुरुषेषु भ्रातृभगिनीसंज्ञापरिग्रहः । कथमात्मसंज्ञोत्पादयितव्येत्याह—**यथा** इत्यादि । आहिताहंमानत्वेन स्वसंतान एवात्मा । सर्वदुःखेभ्यः संस्कारादिदुःखेभ्यो मोचयितव्यः अपनेतव्यः । प्रकारान्तरमप्याह—**एवं च** इत्यादि । न परित्यक्तव्या महाकरुणाशयप्रयोगेण परिमोचयितव्याः, तथाभूतकार्यसंपादनतः । 5 चित्तप्रदोषो द्वेषो नोत्पादयितव्यः । कदेत्याह—**अन्तशः** इत्यादि । अन्तशः पर्यवसाने शतशोऽपि स्वकायेन[1] छिद्यमानेन । तैरेवेत्यध्याहार्यम् । अन्यथा कोऽतिशयः स्यात् ? तदेव निगमयन्नाह—**एवं हि** इत्यादि । **एवंचित्तः** अनन्तरोक्तचित्तः । **चरिष्यति** दानादिचर्याम् । **विहरिष्यति** चतुषु ईर्यापथेषु । एवं संवृतिसत्याश्रयेण चर्याया या न दुष्करसंज्ञा इति प्रतिपाद्य परमार्थसत्याश्रयेण प्रतिपादयन्नाह—**पुनरपरम्** इत्यादि । सर्वेण प्रत्यक्षादिप्रमाणेन 10 सर्वं व्यापि इतरद्वा रूपम् । सर्वथा सत्त्वजीवादिप्रसिद्धप्रकारैः, पुनः सर्वमिति कर्तृत्वादिरूपम् । एकानेकस्वभाववैधुर्यात् **यथा आत्मा न विद्यते**, अत एव **नोपलभ्यते, तथा सर्वधर्माः** । तदेव कथयन्नाह—**एवम्** इत्यादि । धर्मेषु तु सर्वेण स्वलक्षणादिरूपेण सर्वं वाक्यादिकं[2] सर्वथा क्लिष्टत्वादिप्रकारेण सर्वं सर्वप्रकारम् । अतो गत्यन्तराभावान्मायापुरुषेणेव चरितव्यम् । तत्र च कथं दुष्करचर्येति भावः । एवमनुत्पादेऽतिप्रसङ्गं 15 परिहृत्याभ्युपगममाह—**यदपि** इत्यादिना । **एवमेवैतत्** परमार्थेन इति भावः । बोधिसत्त्वोऽनुत्पादः इति वचनात् प्रादेशिकी शून्यतेत्याह—**किं पुनः** इत्यादि । बोधिसत्त्वकरका धर्मा मार्गज्ञतादिस्वभावा बोधिसत्त्वधर्मा अप्यनुत्पादः, न्यायस्य तुल्यत्वात् । तदेवाह—**बोधिसत्त्व** इत्यादिना । यदेव पृष्टं तदेव परिहर्तव्यम्, अन्यथा अश्रोतृसंस्कारकं वाक्यम् । अतः प्रादेशिकशून्यत्वपरिहारार्थम् **उताहो सर्वज्ञतापि** इत्यादिनोत्तरोत्तरप्रश्नपरिहारेण शून्यतायाः 20 सर्वविषयत्वमाह । तत्र **सर्वज्ञता** बुद्धत्वम् । बुद्धकरका धर्माः सर्वाकारज्ञतालक्षणाः सर्वज्ञताधर्माः[3] । अनुत्पन्नार्यमार्गो बालः पृथग्जनः । तन्निबन्धना रागादयो धर्माः पृथग्जनधर्माः । क्रमेणैवं सर्वधर्मानुत्पादाभ्युपगमं कारयित्वा दोषमापादयन्नाह—**यद्यायुष्मन्** इत्यादि । ननुशब्दोऽक्षमायाम् । अनुप्राप्तैव सर्वज्ञता । अयत्नेनेति शेषः । क्वचिदयत्नेनेति पाठः स्पष्ट एव । एतदुक्तम्—सत्कृत्य निरन्तरदीर्घकालभावनया अनुत्पादाधिगमेन बुद्धत्व- 25 मनुप्राप्तव्यम् । यदि पुनः सर्व एव धर्मोऽनुत्पन्नः, तदा अयत्नेन सर्वाकारज्ञता अनुप्राप्तैव । ततश्च मुक्ताः स्युः सर्वदेहिनः इति । यद्यनुत्पादे प्राप्यप्रापकधर्मा विद्यन्ते, तदा अयत्नेन प्राप्तिरिति प्रसज्यते । यावता नैवमित्यभिप्रायेणाह—**नाहम्** इत्यादिना । न्यायेनानुत्पन्नस्य धर्मस्य प्राप्यप्रापकस्य न प्राप्तिं ग्रहणं प्रयोगावस्थायामिच्छामि । नाप्यभिसमयमधिगमं मौलावस्थायाम् । तदेवाह— **नापि** इत्यादिना । नैवानुत्पन्नेन 30 प्रापकेण धर्मेण अनुत्पन्ना प्राप्तिः प्राप्यतालक्षणा प्राप्यते उभयोरेव नीरूपत्वात् ।

B 109 W 118 W 119 B 110 W 120 W 121

---

१ W मया for स्वकायेन. २ W बाह्यादिकं. ३ B om. सर्वज्ञता°.

B 111 अन्यतरानुत्पादेन तर्हि प्राप्तिः प्राप्यतामित्याह–**किं पुनः** इत्यादि। उताहोशब्दः पक्षान्तरद्योतकः। प्रतिप्रश्नेन परिहारार्थमाह–**किं पुनरायुष्मन् शारिपुत्र** इत्यादि। उत्पादस्यासत्त्वात् किमनुत्पन्नो धर्म उत्पन्न इत्यभिधीयते? एवमिति चेत्, अभिधीयताम्। न हि नामान्तरकरणाद्वस्तुनोऽन्यथात्वम्। अतः कथमुत्पन्नेन धर्मेण अनुत्पन्ना प्राप्तिः
5 प्राप्यते? अथ अनुत्पन्न एव धर्मोऽनुत्पन्न इत्यभिधीयते त्वया, तथापि दोष एव। यो ह्यनुत्पन्नो धर्मः, सोऽनुत्पन्न एव अविद्यमानः। अतः कथमनुत्पन्नेन धर्मेण अनुत्पन्ना प्राप्तिः प्राप्यते? एतदुक्तम् तत्त्वेन प्राप्यप्रापकयोरसत्त्वात् कुतोऽयत्नेन प्राप्तिः? संवृत्यापि
W 122 निरन्तरं दीर्घकालभावनया अष्टम्यादिभूमौ अनाभोगवाहिज्ञानलाभात् कथमयत्नेन प्राप्तिः, येन मुक्ताः स्युः सर्वदेहिनः इति। ननु संवृतिपरमार्थसत्याश्रयेणोत्पादानुत्पादव्यवस्थायां
10 तत्राप्येष पर्यनुयोगः इत्यभिप्रायेणाह–**उत्पाद एव धर्मोऽनुत्पादः, उताहोऽनुत्पादो धर्म उत्पादः** इति। उद्भावनासंवृत्यापि वागुदाहारवर्जितं तत्त्वमिति मत्वा आह–**उत्पादः** इत्यादि। द्वयोरलीकत्वान्न तत्त्वतो जल्पितुं प्रतिभातीति भावः। अनुत्पादस्य परमार्थत्वादित्यभिप्रायेणाह–**अनुत्पादोऽपि** इत्यादि। परमार्थानुकूलत्वात्परमार्थोऽयमुच्यते अनुत्पादः इत्याह–**अनुत्पाद एवायुष्मन् शारिपुत्र जल्प** इति। अनुत्पादोऽपि जल्प्यते इति। जल्पः प्रपञ्चो
15 विकल्प इति यावत्। अभिसमयकाले तर्हि किं प्रतिभासते इत्याह–**अनुत्पाद एव** इत्यादि। सर्वविकल्पविनिर्मुक्तः अग्राह्य एवानुत्पादो ग्राह्यः प्रतिभाति। अग्राहकमेव च ग्राहकं प्रतिभानम्।
B 112 कथं पुनरतद्रूपोऽपि तद्रूपत्वेन प्रतिभातीत्याह–**एवमेव** इत्यादि। एवमेव यथादर्शनमशक्यापह्नवत्वात् संवृत्या अस्तु यथा तथा। अथवा, एवमेवाविचारितेन रूपेण अलीकमेव प्रतिभाति।
W 123 अत्यन्तं प्रतिभातीत्यपगतशाश्वतोच्छेदरूपं प्रतिभासते। सम्यग्धर्मतत्त्वकथनात्स्तुत्यर्थमाह–
20 **धार्मकथिकानाम्** इत्यादि। **स्थापयितव्यो** धारयितव्यः। ननु धर्ममेघाभूम्यधिगमाभावे श्रावकोऽपि कथमेवमिति तत्कस्य हेतोः इत्याशङ्क्याह–**तथा हि** इत्यादि। **यतो यत** इति। अद्यादित्वेन सप्तम्यन्तात्तसिः, तथा **ततस्तत** इत्यपि। यत्र यत्र परिप्रश्नीक्रियते, तत्र तत्र परिहारदानेन निःसरति। धर्मतायाः स्वाधिगमलक्षणाया व्यवस्थापनान्न चलति। तां च धर्मतामागमरूपामधिगमेन न विरोधयति। नित्यं समाहितज्ञानाभावेऽपीति शेषः। तथा-
25 गताधिष्ठानमादर्शयन्नाह–**धर्मतैषा** इत्यादि। **अनिश्रितधर्माणाम्** अनभिनिविष्टधर्माणां तथागतश्रावकाणाम्। धर्मतैषा प्रतीत्यसमुत्पादनियामता। कासौ धर्मतेत्याह–**ते** इति।
W 124 रूपादिलक्षणवस्तूपलम्भसद्भावेऽपि कथं पुनरनिश्रितधर्माणः श्रावकाः इति तत्कस्य हेतोः इत्याशङ्क्याह–**यथापि** इत्यादि। एकानेकस्वभाववैधुर्येण अनिश्रितत्वादनिश्रयार्हत्वात् सर्वधर्माणामनिश्रितधर्माणः श्रावकाः प्रज्ञापारमिताभाषणं प्रति अधीष्टा एव, अन्यथा सम्यग्देशा-
30 नानुपपत्तेः। पुद्गलनैरात्म्यमात्रप्रभावितत्वेन एवंविधधर्माधिमोक्षवैकल्यात् तथागताधिष्ठानेनेति
B 113 शेषः। तदपि सर्वाकारज्ञतानिर्याणं विशेषमार्गादिना विना न भवतीत्यतोऽनन्तरं मार्गनिर्याणं दर्शयन्नाह–**साधु** इत्यादि सुभाषितत्वार्थत्वे। **साधु साधु सुभूते, किं तु कत-**

**मैषा सर्वधर्मानिश्रितपारमिता** यया बोध्यधिगमः? स्वरूपमावेदयन्नाह—**प्रज्ञा** इत्यादि। यानत्रयसंगृहीता **सार्वयानिकी** सर्वभूमिपारमिता। बोधिपक्षधर्मस्वभावेन मार्गलक्षणा प्रज्ञापारमिता सर्वधर्मेष्वनिश्रिततया सर्वधर्मानिश्रितपारमितेत्युच्यते। एवंविधप्रज्ञापारमितायां मार्गात्मिकायां को निर्यातीत्याह—**इति हि** इत्यादि। इत्येवमनन्तरोक्तेन क्रमेण चित्तावलीनत्वं W 125
चित्तसंकोचः। तदेवाह—**काङ्क्षा** इत्यादिना। काङ्क्षायितत्वं संशयज्ञानं किमयमन्यो वेति 5
मार्गान्तरकाङ्क्षणात्। **धन्धायितत्वम्** अज्ञानम्, तत्स्वरूपाप्रतिपत्तिः, **चित्तस्यान्यथात्वं** मिथ्याज्ञानं विपरीतार्थप्रतिपत्तिः। एतच्च सर्वमविद्यैवेति भावनाप्रहेयं दर्शयति। विहरत्यनेन मार्गस्वभावेन प्रज्ञापारमिताविहारेण चतुर्भिरीर्यापथैश्चित्तकर्मण्यतापादनात्। **अविरहितश्चानेन मनसिकारेण** मार्गात्मकेन प्रतिसंलीनावस्थायाम्। ननु मनस्कारश्चेतस आभोगः आलम्बने चित्तधारणकर्मकः। प्रज्ञापारमिताविहारश्च तद्विपरीतस्वभावः, इति कुतोऽनयोः सहा- 10
वस्थानमित्यभिप्रायेणाह—**कथम्** इत्यादि। यो मनसिकारेणाविरहितः, स कथं प्रज्ञापारमिताविहारेण विहरेत्? परस्परविरोधान्नैवेत्यर्थः। तदेव कथयन्नाह—**यदि हि** इत्यादि। यदि मनस्कारेणाविरहितस्तदा प्रज्ञापारमिताविहारेण विरहितः। अथ प्रज्ञापारमिताविहारेणात्रि- B 114
रहितस्तदा मनस्कारेण विरहितः। अथ विरुद्धयोरप्येकत्र सहावस्थानमिष्यते, तदा W 126
अतिप्रसङ्ग इत्याह—**यदि च** इत्यादि। यदि च मनसिकारेणाविरहितः, तदा मनसिकारेणावि- 15
रहितोऽपि प्रज्ञापारमिताविहारेणाविरहित इष्यते मार्गनिर्याणावस्थायाम्, तदैवं सति प्रज्ञापारमिताविहारेणाविरहिताः सर्वसत्त्वाः इति प्राप्तम्, तेषां मनस्कारसद्भावात्। ननु प्रज्ञापारमिताविहारोऽनेकयत्नसाध्यः, अतः कथं तेनाविरहिताः सर्वसत्त्वा इति तत्कस्य हेतोः इत्याशङ्क्याह—**सर्वसत्त्वा अपि हि** इत्यादि। मनसिकारेणेत्यत्र अविरुद्धेनेति शेषः। एवं मन्यते—सन्नपि प्रज्ञापारमिताविहारस्तद्विरुद्धविपर्यासप्रवृत्तमनस्कारसद्भावात् सर्वसत्त्वानां 20
न व्यवस्थाप्यते। यदा पुनस्त्वया मार्गनिर्याणावस्थायामुभयोः सहावस्थानेन विरोधो नाभ्युपगतः, तदा कादाचित्कविरोधानुपपत्तेः यस्मादविरुद्धेन मनस्कारेण सर्वसत्त्वा विहरन्ति, तस्मात् प्रज्ञापारमिताविहारेण अविरहितत्वप्रसङ्ग इति मनस्कारस्य यथारुतत्वे स्यादयं दोष इत्याह—**साधु** इत्यादि। किं त्वमनस्कार एव मनस्कारोऽभिप्रेतः, तत्र च शब्दप्रवृत्तिमात्रेण यद्युपालम्भः क्रियते, तदाह—**अपि तूपालप्स्ये त्वा** इत्यादि। यतो मनस्कारलक्षण 25
**एवार्थो भूतपदाभिधानेन** यथारुताभिधानेन **आयुष्मता शारिपुत्रेण परिगृहीतः**, तस्मात् W 127
त्वामप्येवंजातीयकेषु उत्तरत्रवाक्येषु परिप्रश्नयिष्यामि। यथारुतशब्दार्थग्रहणे तुल्यो दोष इत्यनेनादर्शयति। कथं पुनरमनस्कार एव मनस्कारो न तु यथारुत इति तत्कस्य हेतोः इत्याशङ्क्याह—**सत्त्वास्वभावतया** इत्यादि। सत्त्वस्य प्राणिनो मायोपमता सत्त्वास्वभावता। तया हेतुभूतया तदव्यतिरेकात् मनस्कारास्वभावता। सत्त्वस्यासती एव भावता 30 B 115
सत्त्वासद्भावता। सत्त्वस्य तत्त्वोत्पत्त्यादिभिर्विविक्तता सत्त्वविविक्तता। सत्त्वस्य चिन्तातिक्रान्तत्वमचिन्त्यता सत्त्वाचिन्त्यता। सत्त्वस्याप्रतिपत्तिरनभिसंबोधनता सत्त्वानभिसंबोधनता।

सत्त्वोऽयथाभूतार्थोऽलीकः इत्यभिसंबोधनता सत्त्वायथाभूतार्थाभिसंबोधनता। एतच्च पदषट्कं यथासंख्यं चतुर्विधनिर्वेधभागीयदर्शनभावनामार्गावस्थासु ग्राह्यम्। एवं न्यायतोऽमनस्कार एव मनस्कार इत्यभिधायोपसंहरन्नाह—अनेन इत्यादि। एवंरूपेणानन्तरोक्तस्वभावेनानेन W 128 मनसिकारेणाविपर्यासप्रवृत्तत्वादिच्छामि विहरन्तं बोधिसत्त्वमनेन च प्रज्ञापारमितात्मकेन 5 विहारेण मार्गनिर्याणलक्षणेनेत्येवं निर्यातव्यवस्तुषु प्रतिविशिष्टान्यधर्माभावेन सर्वधर्मानुपलम्भतया निर्याणात्, एवमेभिरष्टाभिर्निर्याणैर्निर्याणप्रतिपत्तिर्वेदितव्या। तथा चोक्तम्—

> **उद्देशे समतायां च सत्त्वार्थे यत्नवर्जने।**
> **अत्यन्ताय च निर्याणं निर्याणं प्राप्तिलक्षणम्॥ ७३॥**
> **सर्वाकारज्ञतायां च निर्याणं मार्गगोचरम्।**
> 10 **निर्याणप्रतिपज्ज्ञेया सेयमष्टविधात्मिका॥ ७४॥** इति।

सर्वाकारज्ञतैवानुष्ठीयमानत्वेन चर्याचित्तोत्पादादिरूपेण हेतुफलात्मकेन निःशेषाकारतया समस्तवस्तुपरिज्ञानात्तथागतानां संबन्धिनी पुनः पुनः परिवर्ततेऽत्र, इत्यसौ ग्रन्थपरिच्छेदः सर्वाकारज्ञताचर्यापरिवर्तः॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां
15 सर्वाकारज्ञताचर्यापरिवर्तो नाम प्रथमः॥



## २ शक्रपरिवर्तो द्वितीयः ।

सर्वाकारज्ञताधिगमो न विना मार्गज्ञतापरिज्ञानेन, इति मार्गज्ञतां वक्तुमाह—**तेन** इत्यादि । तेन समयेन मार्गज्ञताकथनकाले **पुनः** भूयोऽपि **शक्रः संनिषण्णः** इति संबन्धः । किंभूतः इत्याह—**देवानामिन्द्रः** प्रभुः । **तस्यामेव** यथोपवर्णितायां **पर्षदि संनिपतितः** । कृत-कायादिसामग्रीको विहितसम्यक्प्रणामो वा स्वासने संनिषण्णः समुपविष्टः । कुबेरधृतराष्ट्र-5 विरूपाक्षविरूढकाश्चत्वारो लोकपालाः । सहे लोकधातौ आ समन्तात् पतिः सहापतिर्नायको देवपुत्रः, ब्रह्मापि चतुर्थध्यानप्रभवः । B 116 W 129

संवर्तन्यः पुनस्तिस्रो भवन्त्यग्न्यम्बुवायुभिः ।

—अभिधर्मकोश—३.१००

इति न्यायाद्यथाक्रमं प्रथमादिध्यानत्रयस्य विनाशेन तस्यैव चिरस्थायितया पतित्वाभि-मानादित्येके । अपरे तु अन्यथा अन्यतरसत्त्वस्य आभास्वरदेवनिकायाच्च्युत्वा एकाकिनः 10 शून्ये ब्राह्मे विमाने समुत्पन्नस्य, अहो बत अन्येऽपि सत्त्वा इहोपपद्येरन्निति प्रणिधानानन्तरं पुण्यादिक्षयात् अपरेषां काकतालीयन्यायेन तत्र समुत्पादे अहमेषामीश्वर इत्याद्यभिमानात्प्रथम-ध्यानतृतीयभूमिको ब्रह्मा सहापतिरिति वर्णयन्ति । तत्रैवं पर्षत्संनिपाते मार्गज्ञतोत्पत्तिं प्रति योग्यतापादनाय देवादीनां स्वकर्मजप्रभायास्तथागतप्रकृतिप्रभाभिर्मलिनीकरणता निहतमान-संतानेऽधिगम उत्पद्यते इति ज्ञापनाय कृता । अतो वक्रोक्त्या आधारः कथित इत्याह—**योऽपि** 15 **च** इत्यादि । स्वकर्मविपाकजः स्वशुभकर्मवासनानिर्जातः अवभासः रश्म्यालोकः । चशब्दा-त्कायादिरपि । **अनुभावेन** शक्तिविशेषेण । **तेजसा** प्रभारूपेण । **अधिष्ठानेन** सांनिध्येने-त्येके । कायवाङ्मनोव्यापाररश्मिभेदाद्वा अनुभावादिपदत्रयमित्यपरे । **अभिभूतो** ध्यामीकृतोऽ-भूत् । **अथ** इत्यादि । एवं मलिनीकरणेन लोकपालत्वाद्यभिमाननिरासानन्तरमिति अथशब्दः आनन्तर्ये । **इमानि** इति प्रत्यक्षरूपाणि । **अन्तिकात्** इति सकाशात् । **प्रज्ञापार-** 20 **मिताम्** इति मार्गज्ञतात्मिकाम् । **श्रोतुकामानि** इति श्रौत्रेण ज्ञानेन अवधारयितुकामानीति । केषां संबन्धिनीमित्याह—**बोधिसत्त्वानां महासत्त्वानाम्** इति । **उपदेशम्** इत्यादि । श्रवणा-वस्थायां ग्रन्थधारणाय शिक्षणमुपदेशः । चिन्तावस्थायां **गृहीतार्थाविस्मरणाय अववादः** । भावनावस्थायामपूर्वोपार्जना **अनुशासनी** । एतत् सर्वं बोधिसत्त्वानाम् । कथं श्रोतुकामानी-त्याह—**तत्कथम्** इत्यादि । **स्थातव्यम्** इत्यादि पदत्रयं यथाक्रमं श्रवणाद्यवस्थासु वेदितव्यम् । 25 एवमभ्यर्थितः सुभूतिर्विगताभिमान एव उत्पादितबोधिचित्तो मार्गज्ञताधिगमे भव्य इति विषयप्रतिनियमद्वारेणाह—**तेन हि** इत्यादि । यस्मादेव श्रोतुकामानि, तेन कारणेनोपदेक्ष्यामि कथयिष्यामि । **चित्तम्** इति । शून्यताकरुणगर्भमिति भावः । त्रियानव्यवस्थानमाभिप्रायिकं न लाक्षणिकमिति न्यायादनुत्तरसम्यक्संबोधिपर्यवसान एव सर्वो जनः इत्यतो वीतरागेतर-योगिनापि बुद्धत्वप्राप्तये मार्गज्ञता भावनीया इति व्याप्तिमादर्शयितुं श्रावकयानादिप्रतिपन्ना- 30 नामनुत्तरसम्यक्संबोध्यभाजनत्वेन अनियतगोत्राणां प्रथमतो महाबोधौ आकर्षणार्थमन्येषां च प्रवृत्तानां संधारणार्थमित्याभिप्रायिकं वचनमाह—**ये त्ववक्रान्ता** इत्यादि । तु शब्दोऽव- W 130 B 117 W 131

B 118 धारणे। य एव अवक्रान्ताः सर्वथा अधिगताः सम्यक्त्वनियामं स्वश्रावकादिदर्शनादिमार्गं न ते भव्या योग्याः।

बुद्धो भवेयं जगतो हिताय।

इत्यनुत्तरसम्यक्संबोधिनिमित्तं चित्तमुत्पादयितुम्। यत्र बालोऽपि जनः शक्तस्तत्र कथं 5 विदितार्यमार्गाः श्रावका न शक्ता इति तत्कस्य हेतोः इत्याशङ्क्याह- **बद्धसीमानः** इत्यादि। W 132 स्वमार्गनिर्दग्धनिःशेषत्रैधातुकोत्पत्तिक्लेशावरणतया यस्मात्ते महाश्रावकाः संसारस्रोतसो जन्मप्रवाहाद्बद्धसीमानोऽनुत्पत्तिधर्मतया कृतमर्यादाः ततोऽभव्या एव ते पुनः पुनरभीक्ष्णं संसरणाय जन्मग्रहणाय। ततश्च **अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयितुमभव्याः** इति संबन्धः। एतदुक्तम्—

10 यावत्संसारवासस्था भवन्ति वरसूरयः।
तावत्सत्त्वार्थमतुलं शक्ताः कर्तुमनिर्वृताः॥

इति वचनात् पुनर्जन्मग्रहणे सति दानादिना सत्त्वार्थक्रियायामभ्यासाद्बोधिचित्तं सुविशुद्धं तथागतपदप्रापकमुपजायते। अतो महाश्रावकाः समुच्छिन्नक्लेशतया पुनर्जन्माख्यमूलकारण-निवृत्त्या तादृग्विधं चित्तरत्नं कार्यात्मकं नोत्पादयितुं शक्ताः, निर्हेतुकत्वप्रसङ्गात्। बालाः 15 पुनर्यथोक्ताविकलकारणसद्भावेन शक्नुवन्त्येवेति। युक्तरूपमेवैतद्वचनम्, कथमाभिप्रायिक-मित्याह—**अपि तु** इत्यादि। अपितुशब्दो निपातः प्रस्तावेऽथशब्दार्थे वर्तते। **तेषाम्** इति महाश्रावकाणां वक्ष्यमाणानुमोदनामनस्कारेणानुमोदे अनुमोदयामि। किमनुमोदसे B 119 इत्याह—**सचेत्** इत्यादि। यदि ते महाश्रावका बोधिचित्तान्युत्पादयेयुस्तान्यनुमोदेऽहमिति संबन्धः। कथं प्रतिक्षिप्यानुमोदसे इत्याह—**नाहम्** इत्यादि। यदि नाम विनेयविशेषापेक्षया 20 आभिप्रायिकं वचनं प्रागुक्तवानहम्, तथापि न पुनः कुशलमूलस्य बोधिचित्तप्रभवबुद्धत्व-स्यान्तरायमसंभवत्वेन विच्छेदं महाश्रावकाणां करोमि? कथं न करोमीत्याह—**विशिष्टेभ्यः** W 133 इत्यादि। यस्माद्विशिष्टेभ्यः कल्याणमित्रादिभ्यो विशिष्टतमा एव बोधिचित्तादयो धर्मा अध्यालम्बितव्याः प्रतिकाङ्क्षितव्याः। दग्धपुनर्भवक्लेशानामपि च श्रावकप्रत्येकजिनानां कथं तासु तासु गतिषु जन्म न विरुध्यत इति न वक्तव्यम्। यस्माद्योऽनन्यसत्त्वनेयस्य 25 जन्तोरभिरतिपूर्वको हीनस्थानपरिग्रहः, स सम्यगात्मस्नेहवतो दुःखसुखत्यागाप्तिवाञ्छा-पूर्वकः। तद्यथा कामिनां स्त्रीगुणपरिग्रहः। तथा च ईश्वराद्यनधिष्ठितस्य जन्तोरभिरतिपूर्वको ग्रहोऽयं गर्भस्थानपरिग्रहः। इत्येवं स्वभावहेतुना क्लेशानां त्रैधातुकोत्पत्तिं प्रति सामर्थ्यं न प्रतिपाद्यते। महाश्रावकास्तु सोपधिनिरुपधिसंज्ञकं बोधिद्वयं लब्ध्वा भवादुरुकरुणाप्रज्ञा-वैकल्येनोत्त्रस्तमानसाः पूर्वविधाक्षिप्तायुःसंस्कारपरिक्षयान्निर्वाणासंभवेऽपि प्रदीपनिर्वाण-30 प्रख्यनिर्वाणसंज्ञिनो व्यतिवृत्तत्रैधातुकजन्मानश्च्युतिचित्तानन्तरं परिशुद्धेषु बुद्धक्षेत्रेषु अनास्रवे धातौ समाहिता एव पद्मपुटेषु जायन्ते। ततस्तेऽमिताभादिसंबुद्धभास्करकरै-रक्लिष्टतमोहानये प्रबोधिताः बोधिचित्तमुत्पाद्य मुक्त्यवस्थायां नरकादिचारिकामिव गतिं

गच्छन्तः क्रमेण बोधिसंभारं संभृत्य लोकगुरवो भवन्ति, इत्यागमात् निश्चितमिति । B 120
पुनर्भवक्लेशकारणनिवृत्त्या त्रैधातुकोत्पत्तिकार्यं निवर्तते, न त्वनास्रवधातूत्पत्तिरिति कथं विरोधः? तस्मात्, सर्वस्मिन् याने सर्वथैकमहायानसमवसरणदेशनैव न्याय्या लक्ष्यते। एवं च आर्यसद्धर्मपुण्डरीकसत्यकसत्यकीपरिवर्तादिषु पाठः सुनीतो भवति। "**भविष्यसि त्वं शारिपुत्र अनागतेऽध्वनि सम्यक्संबुद्धः**"। तथा "**एकं हि यानं द्वितीयं न विद्यते**" इत्यादि । पुन- 5
रुत्रासपरिवर्जनार्थं केषांचित् दशधर्मकरत्नमेघादिषु एकयानदेशनार्थो नीतार्थ इति भगवतैव W 134
स्पष्टीकृतः । लङ्कावतारे चोक्तम्—"नास्ति महामते श्रावकयानिकानां श्रावकयानेन मोक्षः, अपि तु महायानपर्यवसानिका एव ते" इत्यादि । तथा आर्यनागार्जुनपादास्तन्मतानुसारिणश्चैकयाननयवादिन आहुः—

> लब्ध्वा बोधिद्वयं ह्येते भवादुत्रस्तमानसाः । 10
> भवन्त्यायुःक्षयात्तुष्टाः प्राप्तनिर्वाणसंज्ञिनः ॥
> न तेषामस्ति निर्वाणं किं तु जन्म भवत्रये ।
> धातौ न विद्यते तेषां तेऽपि तिष्ठन्त्यनास्रवे ॥
> अक्लिष्टाज्ञानहानाय पश्चाद्बुद्धैः प्रबोधिताः ।
> संभृत्य बोधिसंभारांस्तेऽपि स्युर्लोकनायकाः ॥ इति ॥ 15

तदेवं सर्वाकाररमणीयतत्त्वनिर्देशादार्यसुभूतौ समुपजातबहुमानानां प्रसादोपबृंहणाय भगवानाह—**साधु** इत्यादि । अगोचरोऽप्येवमर्थो विस्पष्टवाग्भिः प्रत्यक्षेणेव प्रकाश्यते इति विस्मये साधु साध्विति द्विरभिधानम् । यदि वा स्वविवक्षितस्य व्यक्तं द्योतनात् प्रहर्षे पुनः साधुरिति वचनम्—शोभनमेवैतद्यद्वदसीति । खलुशब्दोऽवधारणे । यःशब्दो निपातो यस्मादर्थे वर्तते । क्वचित्पुस्तके यदिति पाठः । यस्मात्त्वमेकयानदेशनया बोधिसत्त्वानां 20 B 121
स्वपक्षस्थिरीकरणेनोत्साहं ददासि । नानानयवादिनस्त्वार्यासङ्गपादास्तदनुसारिणश्चान्यथा व्याचक्षते । "ये त्ववक्रान्ताः" इत्यादि वाक्यं नीतार्थम्, **अपि तु खलु** इत्यादिवचनं नेयार्थम् । अतो व्याख्यर्थो बुद्धगोत्रकानधिकृत्येति । तथा—

> आकर्षणार्थमेकेषामन्यसंधारणाय च ।
> देशितानियतानां हि संबुद्धैरेकयानता ॥ 25

—सूत्रालंकार—११.५४

W 135
इत्यादिना च सूत्रान्तरविरोधं परिहरन्ति । पूर्वस्मिन्नेकयानदेशनापक्षे ये श्रावकादिबोध्यधिगमपूर्विकां महाबोधिमधिगच्छन्ति, ते तावत्कालं व्यपदेशेन श्रावकादिगोत्रका व्यपदिष्टाः । प्रथमतस्तु प्रमुदितादिभूम्यधिगमानुक्रमेण अनुत्तरबोधिभाजो महायानगोत्रकाः इति गोत्रभेदो न विरुध्यते इत्यलं प्रसङ्गेन ॥ 30

इदानीं मार्गज्ञतायाः स्वभावं कारित्रं च कथयन्नाह—**कृतज्ञैः** इत्यादि । निष्पादितोपकारस्मरणदक्षाः कृतज्ञाः । ननु विशेषमार्गादिना अपरिसमाप्तकार्यत्वात् क्रियमाणोपकाराः

कथमेवं वदन्तीति तत्कस्य हेतोः इत्याशङ्क्याह—**पौर्वकाणां हि** इत्यादि । पूर्वका एव पौर्वकाः। प्रज्ञादेराकृतिगणत्वेन स्वार्थे तद्धितविधानात् । **अस्मदर्थे** अस्माकं प्रयोजनेन कृतेनेत्यर्थः। श्रावकयानपुरःसरस्य धर्मचक्रस्य प्रवर्तनादिति मतिः। यथेत्यस्मदर्थ इति संबन्धः। यदि वा, यथा अववदित इति । ब्रह्मचर्यमब्रह्मचर्याद्विरतिः ।

5 वृत्तस्थः श्रुतचिन्तावान् भावनायां प्रयुज्यते ।

B 122 इत्यनेन यथासंभवं पञ्चशिक्षापदादिकत्वं कथयति । **बोधाय** अनुत्तरबोधिनिमित्तम् । **चरन्** इत्यासंसारं सत्त्वार्थकरणप्रवृत्तत्वेनोत्पादितबोधिचित्तस्य सर्वथा मार्गज्ञतया क्लेशप्रहाणम्,
W 136 इत्यस्याः स्वभावेन क्लेशवशितामासाद्य दीर्घकालं प्रतिपद्यमानः **सन्** इत्यनेन प्रतिपाद्यमान-स्वभावः कथितः। अन्यथा अपरिपूर्णैव बोधिचर्या स्यादिति मतिः। **अववदितो** यथाववादेन
10 दानादिषु **पारमितासु**। अववादः कृतः अववादितः, अववादकं दत्वा अववादकः कृतः इति व्युत्पत्तिः। क्वचिदववादित[1] इति पाठः सुगमः। **अनुशिष्टः** अनुशासन्या । **तत्र** इति तेषु श्रावकेषु। क्वचिदवस्थायां **चरता** इति। यथोक्तस्वभावस्य भूतकोटेरसाक्षात्करणेन प्रज्ञोपायकौशलेन च दानादिभिरपरिगृहीतासमादापितापरिमोचितसत्त्वपरिग्रहणसमादापन-परिमोचनादिकर्म कुर्वता संभृतसंभारेणेति कारित्रमावेदितम् । अन्यथाधिगमानुपपत्त्या
15 अनुत्तरं ताथागतं ज्ञानमुत्पादितमधिगतम् । एवं दृष्टान्तमावेद्य दार्ष्टान्तिकमर्थमाह—**एवम्** इत्यादि । एवमिति तथेत्यर्थः। अपिशब्दान्न केवलं भगवता, अस्माभिरपि महाश्रावकैरव-वादानुशासनीभ्यामेव अनुग्रहपरीन्दनान्यायेन **अनुपरिग्रहीतव्या** अनुपरिवारयितव्याश्च। तथा उत्तरोत्तरपरिपाकार्थं **संपरिग्रहीतव्याः संपरिवारयितव्याश्च** इति। चशब्दोऽवधारणार्थः। कोऽत्र प्रतिबन्धो यथा भगवान् पूर्वं बोधिसत्त्वावस्थायां श्रावकैरनुपरिगृहीतः। भवद्भिरपि
20 श्रावकैरन्ये बोधिसत्त्वास्तथा अनुपरिग्रहीतव्या इति तत्कस्य हेतोः इत्याशङ्क्याह—
B 123 W 137 **अस्माभिरपि** इत्यादि। अयमाशयः—यथा पूर्वश्रावकैः स्वबुद्धानां बोधिसत्त्वावस्थायामस्मदर्थे ब्रह्मचर्यचरणं जातमिति पूर्वकृतोपकारावबोधकारणेन तेषां प्रत्युपकारचिकीर्षया तदन्तिकेऽस्मदर्थं ब्रह्मचर्यं चरन् भगवान् बोधिसत्त्वावस्थायां प्रियतमः शाक्यमुनिरनुपरिगृहीतः, तथा अस्माभिरपि श्रावकैः शाक्याधिराजस्य बोधिसत्त्वावस्थायामस्मदर्थे ब्रह्मचर्यचरणं
25 जातमिति पूर्वकृतोपकारावबोधकारणेन भगवतः प्रत्युपकाराभिप्रायाद्युष्मदन्तिकेऽनागतसत्त्वार्थं ब्रह्मचर्यं बोधिसत्त्वाः प्रियतमाश्चरन्तोऽनुपरिग्रहीतव्याः। एवं हि वयं भगवतः कृतज्ञा इति। एवमनुपरिग्रहे किं भवतीत्याह—**क्षिप्रम्** इत्यादि। **अभिसंभोत्स्यन्ते** अधिगमिष्यन्ति। क्वचित् अभिसंबुध्यन्ते इति पाठः । अत्र न हि तदानीमेवाभिसंबुध्यन्तेऽनुपरिगृहीता इति चिन्त्यमित्येके। अविकलकारणसंपत्त्या कार्योदयविवक्षायां वर्तमाननिर्देश इत्यपरे। यथोक्त-
30 मेव ध्यामीकरणादिकं प्रतिपत्तव्यम्। तथा चोक्तम्—

---

१ W अवबोधित इति पाठः सुबोधः.

ध्यामीकरणता भाभिर्देवानां योग्यतां प्रति ।
विषयो नियतो व्याप्तिः स्वभावस्तस्य कर्म च ॥ १ ॥ इति ॥

आचारादिकमेवमभिधाय श्रावकमार्गाधिगमार्थमाह—**अथ खल्वायुष्मान्** इत्यादि । **तेन हि** इति । यस्मात् मार्गज्ञताधिकारे स्वमार्गपर्यन्तगतिमासाद्य यानान्तरविनेयसत्त्वार्थं प्रति असाक्षात्करणेन सहेतुकमार्गोपदेशपरिचयकौशल्यात् सर्वमार्गाः परिपूरयितव्या बोधि- 5 सत्त्वेन, तस्मात् कारणात् श्रावकमार्गं **भाषिष्येऽहं ते कौशिक, शृणु** इति संबन्धः । यथा देवे वर्षत्यपि अवाङ्मुखे घटे न किंचिदप्युदकं प्रविशति, तद्वत्त्वमवाङ्मुखो भूत्वा अप्रति- पत्त्या मा शृण्वित्याह । **साधु च** इति । यथा उत्ताने अशुचिघटे यदुदकं प्रविशति तत् सर्वमशुचि भवत्यकार्योपगतम्, तद्वत् त्वं विपरीतप्रतिपत्त्या श्रुतमशुचीकुर्वन् मा शृणु इत्याह—**सुष्ठु च** इति । यथोत्तानशुचिच्छिद्रघटं प्रविशत्युदकं न तु तिष्ठति, तद्वत् त्वमस्थिर- 10 प्रतिपत्त्या मा शृणु । किं तु तथा शृणु यथा पटुतरानुभवद्वारेण चेतसि स्थिरीभवतीत्याह— **मनसि कुरु** इति । एवं हि श्रवणं सफलमित्याचार्यवसुबन्धुः । मध्यस्थोऽर्थी च भूत्वा शृण्विति यथाक्रममाह—**साधु च सुष्ठु** च इति । तथैव विचारको भूत्वा निरूपयेत्याह— **मनसि कुरु** इति । अनेन श्रोतृलक्षणमावेदितमित्यार्यदेवः । **भाषिष्येऽहं ते** इति तवानु- ग्रहाय प्रकाशयिष्यामि । कथं भाषिष्ये इत्याह—**यथा** इत्यादि । यथा येन प्रकारेण 15 प्रज्ञापारमितायां श्रावकमार्गस्वभावायां स्थातव्यं प्रतिपत्तव्यम् । एवमभ्युपगम्य इदानीमाह— **शून्यतायाम्** इत्यादि । दुःखादिचतुरार्यसत्यसंबन्धिनामाकाराणामनुपलम्भे सामान्योक्तावपि विशेषप्रतिपत्तिः पूर्वाचार्यसंप्रदायाद्यनुसारेण भवतीति नात्र संदेहः । तदयं संक्षेपार्थः— तत्रोदयव्ययधर्मित्वेन अनित्यतः । सास्रवस्य वस्तुनः प्रतिकूलत्वेन दुःखतः । एवं कृत्वा अनित्योऽप्यार्यमार्गोऽनास्रवत्वेन आर्याणामप्रतिकूल इति नास्य दुःखत्वप्रसङ्गः । परेणात्मना शून्यत्वादनात्मतः । स्वयमनात्मत्वेन शान्ततः । इति दुःखसत्याकाराः । फलस्येव बीजं 20 मूलहेतुत्वेन रोगतः । दुःखसमुदयत्वेन गण्डतः । दुःखप्रत्ययत्वेन शल्यतः । दुःखपरंपरा- प्रभवत्वेनात्यर्थघातादघत इति समुदयसत्याकाराः । प्रत्यर्थिकभूतत्वेन परतः । प्रत्यर्थिक- भावस्य प्रलोपधर्मत्वात् प्रलोपधर्मतः, इति तयोरेव दुःखसमुदययोः प्रत्येकं निर्विदाकारौ । स्वरूपानवस्थितत्वेन चलतः । हेत्वनपेक्षस्य प्रकृत्यैव भङ्गुरत्वेन प्रभङ्गुरतः, इति तयोरेव 25 प्रत्येकं विरागाकारौ । ऐहिकामुत्रिकातङ्कस्थानत्वेन भयतः । रक्षःप्रभृतीनामुपक्रमगम्यत्वेन उपसर्गतः । महाभूतसंक्षोभाशनिपाताद्युपक्रमास्पदत्वेनोपद्रवतश्चेति तयोरेव प्रत्येकं निरोधाकाराः । एवं च कृत्वा आर्यश्रावको निर्विदे विरागाय निरोधाय च प्रतिपन्नो भवतीत्यागमार्थः कथितः स्यात् । क्लेशविसंयोगत्वेन निरात्मतः । दुःखप्रशमार्थेन शान्ततः । सुखशुचिवस्तुत्वेन विविक्ततः । नित्यहितवस्तुत्वेन शून्यानिमित्ताप्रणिहितानभिसंस्कारत 30 इति निरोधसत्याकाराः । निर्वाणपुरपरिप्रापणार्थेन मार्गतः । निःशेषदोष[1]प्रतिपक्षराशिभावेन

B 124 W 138 B 125 W 139

१ B °क्लेश°.

न्यायतः। चित्तस्याविपर्यासप्रतिपादनार्थेन प्रतिपत्तितः। निरभिनिवेशनित्यस्थानगमनेन नैर्याणिकत इति मार्गसत्याकाराः। तथा च सति अमुना क्रमेण महायाने केचिदाकाराः पर्यायतः केचिच्च स्वरूपतो निर्दिष्टाः इति नाश्रावकमार्गत्वप्रसङ्गः। ततश्चैषां चतुरार्यसत्यसंगतानां स्वभावानुपलम्भभावनया मार्गज्ञताधिकारे श्रावकाणां मार्गो बोधिसत्त्वेन परिज्ञेय 5 इति। अस्य चार्थसंक्षेपस्य पञ्चविंशतिसाहस्रिकायां स्पष्टमुपलभ्यमानत्वान्न विप्रतिपत्तिः कार्या। तथा चोक्तम्—

**चतुर्णामार्यसत्यानामाकारानुपलम्भतः।**
**श्रावकाणामयं मार्गो ज्ञेयो मार्गज्ञतानये॥ २॥** इति॥

B 126 **श्रावकमार्गमभिधायैवमुष्मार्थमाह—तेन हि** इत्यादि। यस्मात् निर्वेधभागीयाधिगम- 10 पूर्वकं चतुःसत्यपरिज्ञानम्, तस्माद्बोधिसत्त्वेनोष्माधिगमार्थं रूपं रूपस्वभावेन शून्यम्। एवं वेदनादयः। या च रूपस्य शून्यता या च वेदनादीनाम्, अद्वयमेतदद्वैधीकारमित्यभेदतो भावनीयम्। अयं चार्थो **महासंनाहसंनद्धेन भवितव्यम्** इत्यनेन कथितः। तथा हि मध्यमायां जिनजनन्यामुक्तम्—"कियता बोधिसत्त्वो महासंनाहसंनद्धो भवति? इह सुभूते बोधिसत्त्वः शून्यतया सर्वधर्मानभेदतः प्रत्यवेक्षते" इत्यादि। तथा चोक्तम्—

W 140 15 **रूपादिस्कन्धशून्यत्वाच्छून्यतानामभेदतः।**
**उष्माणः** इति॥

W 141 मूर्धार्थमाह—**न रूपे स्थातव्यम्** इत्यादि। उपलम्भयोगेनेति भावः। एषामेव पञ्चस्कन्धानां **न चक्षुपि** इत्यादिना **न स्मृत्युपस्थानेषु** इत्यादिना **न स्रोतआपत्तिफले** इत्यादिना च यथाक्रमं सास्रवोभयानास्रवत्वेन प्रभेदं दर्शयतीति हारकार्थः। धात्वादीनां च स्वरूप- 20 लक्षणमतिप्रतीतमिति न लिखितम्। **यावन्न मनोविज्ञाने** इत्यत्र यावद्ग्रहणेन घ्राणादिविज्ञानातिदेशं करोति। **न बुद्धत्वे स्थातव्यम्** इत्यनुत्तरसम्यक्संबुद्धत्वे। यद्याधारात्मके रूपादौ न स्थातव्यम्, एवं तर्हि व्यावृत्तिफलत्वात्सर्ववाक्यानां रूपादिकमिति तादात्म्येनावस्थानं प्राप्तमिति कस्यचिदाशङ्कानिषेधार्थमाह—**इति हि रूपम** इत्यादि। इतिशब्दस्तस्मादर्थे। हिशब्दः पूर्ववत्। तदयं वाक्यार्थः—यस्मान्न्यायतोऽनुपलम्भभावनया रूपादेरसत्त्वादाधारभावना- B 127 25 नुपपत्तिः, तस्मादेव च कारणात् स्वरूपविरहे तादात्म्येनान्यथा चोपगमो न युक्तरूपः। संनिहितविनेयजनविपर्यासनिराचिकीर्षया तु कथंचिदाधारभावेन निर्देशान्न व्यावृत्तिफलमास्थेयम्। अतो मूर्धाधिगमार्थं सर्वथानुपलम्भभावना रूपादीनां विधेयेति। तथा चोक्तम्—

**अनुपलम्भेन तेषां मूर्धगतं मतम्॥ ३॥** इति॥

W 142 **यावन्मनःसंस्पर्शजा** इति। अत्र यावद्वचनेन चक्षुर्विज्ञानादिसंग्रहः। **यावद्विज्ञान- 30 धातुः** इत्यत्र यावदुपादानेन अध्यात्मादिपरिग्रहः। क्षान्त्यर्थमाह—**रूपं नित्यमनित्यम्** इत्यादि। अनित्यादिपदं व्याख्यातम्। तद्विपर्ययेण नित्यादिपदं वाच्यम्। विपक्षप्रतिपक्ष-

भेदेन दुःखसत्याकारोपादानं प्रधानत्वात् सर्वाभिनिवेशनिवृत्तये कृतम् । **शुभमशुभम्** इति शुभं प्रशस्तमशुभमप्रशस्तम् । एतच्च परिशिष्टसत्याकारसूचनपरम् । यद्येवं सर्वाकारविगमे स्वभावशून्यमेव तर्हि प्राप्तमित्याशङ्कावारणार्थमाह—**रूपं शून्यम्** इत्यादि । अशून्यवस्तुप्रतिषेधेन शून्यमित्युच्यते । अतो यथोदितविधिना वस्त्वभावान्न निर्विषयप्रतिषेधो युक्त इति मतिः । एतदुक्तम्—क्षान्त्यधिगमाय रूपादौ नित्यमनित्यमित्यादिभिराकारैरुपलम्भयोगेन सर्वथावस्थानं न विधेयमित्येवं भावनीयम् इति । तथा चोक्तम्—

**क्षान्तयस्तेषु नित्यादियोगस्थाननिषेधतः** । इति ॥

[1]अग्रधर्मार्थमाह—**स्रोतआपत्तिफलम्** इत्यादि । **असंस्कृतप्रभावितम्** इति तत्त्वतोऽनुत्पादस्वभावत्वान्मार्गस्यासंस्कृतनिर्जातं फलं कार्यम् । सामान्येनाभिनिवेशनिषेधार्थमेवं निर्दिश्य विशेषेणाह—**स्रोतआपन्नो दक्षिणीय** इत्यादि । विशिष्टपुण्यक्षेत्रत्वेन मुख्यतो दक्षिणार्हत्वाद्दक्षिणीयः । **सप्तकृत्वो भवपरम** इति कर्तव्यशेषतया परेण प्रकर्षेण यावत् सप्त वारान् संसारवासनिम्नः । **अपरिनिष्ठितत्वात्** इत्यादि । अपरिसमाप्तकार्यत्वात् । **सकृत्** एकवारम् । **इमं** मनुष्यलोकम् **आगम्य** संप्राप्य **दुःखस्य** रागादिक्लेशगणस्य **अन्तं** विनाशं **करिष्यति** । तत्रैव अन्तराभवावस्थायाम् । **इहैव** इति यस्मिन्नेव जन्मनि अर्हन् जातस्तस्मिन्नेवेत्यर्थः । **अनुपधिशेषनिर्वाणधातौ** इति । न विद्यन्ते उपधयः स्कन्धाः सर्वरागादिप्रहाणावशेषीभूतत्वेन शेषा यस्मिन्निर्वाणे तत्तथोक्तम् । निर्वान्त्यस्मिन् सर्वे विकल्पाः इति निर्वाणं तथता । तदेव धातुस्तदालम्बनभावेन आर्याणां निष्पत्तेर्हेतुः, अतस्तस्मिन्निति योजनीयम् । **स्रोतआपन्नः** इत्यादि । चतुर्विधफलस्योपादानेन नान्तरीयकतया प्रतिपन्नकावस्थाश्चतस्रोऽपि ग्राह्याः । तेन श्रावकभूमिरष्टप्रकारा भवति । यस्य च पुद्गलस्य यावन्मात्रक्लेशप्रकारप्रहाणेन प्रतिपन्नकत्वादिव्यवस्थानम्, तत्प्रागेवोक्तमिति न पुनरुपन्यस्यते । प्रत्येकबुद्धः इत्याद्युद्देशपदं निर्दिशन्नाह—**प्रत्येकबुद्धोऽतिक्रम्य** इत्यादि । आत्मानमेकं प्रति निमित्तभूतत्वात् स्वबोधिं बुद्धवान् स्वयमिति प्रत्येकबुद्धः । नैवं श्रावकेऽपि प्रसङ्गः, तस्य परोपदेशसापेक्षत्वात् । न च सम्यक्संबुद्धेऽपि प्रसङ्गः, तस्य सर्वाकारज्ञतायाः सर्वसत्त्वार्थोद्देशेन विशिष्टत्वात् । अनेन च नवमी प्रत्येकबुद्धभूमिरुक्ता । ग्राह्यार्थविकल्पप्रहाणेन श्रावकभूमिमतिक्रम्य उल्लङ्घ्य । ग्राहकार्थविकल्पाप्रहाणेन अनुत्तरबुद्धभूमिमप्राप्य अनधिगम्य । **तथैव बुद्धो दक्षिणीयः इति न स्थातव्यम्** इति पदं विवृण्वन्नाह—**बुद्ध** इत्यादि । **पृथग्जनभूमिम्** इति अधिमुक्तिचर्याभूमिम् । **अप्रमेयाणाम्** इत्यादि । प्रत्यक्षादिप्रमाणेन प्रमातुमशक्यत्वादप्रमेयाणाम् । एकत्वादिसंख्यारहितत्वेन असंख्येयानाम् । एतेन यत्र क्वचिद्विनयादौ सुभद्रान्तप्रतिनियतसत्त्वार्थकरणमुक्तम्, तदाभिप्रायिकमित्युपपन्नम् । यद्वा—अत्र लोकधातौ अर्थक्रियामधिकृत्य तदुक्तम्, अन्यत्र तु निर्माणमेघैः सर्वलोकधातुषु सत्त्वार्थकरणादप्रमेयादिवचनमविरुद्धम् । अथवा, अन्यदेवेदं प्रतिविशिष्टं महायानसंज्ञितं यानान्तरं गाम्भीर्यादियुक्तम् ।

१ W अग्रार्थम्.

अतोऽत्र विलक्षणैव देशनेति न यानान्तरेण सह विरोधो वाच्यः। तथा अन्यत्राप्येवंजातीयकेषु अर्थेषु अयमेव परिहारो ग्राह्यः। **सत्त्वानामर्थं कृत्वा** इति केषांचिद्दानादिभिरभ्युदयधर्मं निष्पाद्य। **परिनिर्वाप्य** इति श्रावकादिनिर्वाणे कांश्चिन्निःश्रेयसधर्मे प्रतिष्ठाप्य। **श्रावकप्रत्येकबुद्धसम्यक्संबुद्धत्वनियतान्** इति यस्य कुशलनिर्वेधभागीयादे-
5 रधिगमान्नियमेनाभ्युदयनिःश्रेयसधर्मः प्राप्यते तत्र हेतौ स्थापनात्। अन्यान् **नियतान्**
W 145 नियतगोत्रस्थानिति यावत्। **बुद्धभूमौ** इत्यनेन समन्तप्रभा दशमी बुद्धभूमिः
B 130 कथिता। **बुद्धकृत्यम्** इति धर्मचक्रप्रवर्तनम्। **बुद्धपरिनिर्वाणेन** इति श्रावकाद्यसाधारणपरिनिर्वाणेन। एतच्च परिनिर्वाणमिष्टं निर्माणकायेन। कुत एतत्? आगमात् युक्तितश्च। तथा हि—ये समग्रस्थितिहेतवः, ते नित्यमुपरतस्थितिधर्माणो न भवन्ति, यथा संपूर्ण-
10 दहनेन्धनादिसमर्थस्थितिकारणा धूमादयः। सम्यक् आसंसारमविकलस्थितिहेतवश्च बुद्धा भगवन्त इति स्थितिविच्छेदव्यापकेनासमग्रस्थितिहेतुत्वेन विरुद्धस्य समग्रस्थितिहेतुत्वस्येह विधानात् व्यापकविरुद्धोपलब्धिः। कथं हेतुसिद्धिरिति चेत्, उच्यते। स्थितिहेतुवैकल्यं सत्त्वार्थसंपादनशक्तिपरिक्षयान्महाकरुणाव्यपगमादायुःसंस्कारावस्थापनवशिताभ्रंशाज्जीवितेन्द्रियविपाककर्मपर्यादानाद्बुद्धविनेयसत्त्वाभावतो वा भवेत्। तत्र शास्तुरव्याहतशक्तिज्ञान-
15 प्रतिज्ञानात् न प्रथमो विकल्पः। को हि तस्यान्यथा खड्गादेर्विशेषः स्यात्? दीर्घकालाभ्यासेन श्रोत्रियजोटिङ्गनैर्घृण्यवत्सात्मीकृतत्वान्महाकृपायाः न यत्नेन विना हानिः, यत्नस्तु नादोषदर्शनाद्विवृद्धतद्रसास्वादलम्पटस्य तस्यामेव बुद्धेः पक्षपातादिति नापि द्वितीयो विकल्पः संभवति। ऋद्धिपादाभ्यासकाष्ठावसानगमनात् न विकल्पस्तृतीयोऽपि युक्तिसंगतः। तथा ह्युक्तम्—"यस्य कस्यचिदानन्द चत्वार ऋद्धिपादा आसेविता भाविता बहुलीकृताः, आकाङ्क्षन्
20 स कल्पं वा तिष्ठेत् कल्पावशेषं वा। तथागतस्य आनन्द चत्वार ऋद्धिपादा आसेविता भाविता बहुलीकृताः। आकाङ्क्षन् स तथागतः कल्पं वा तिष्ठेत् कल्पावशेषं वा" इति। जीवितफलकर्मसंक्षयोऽपि न अनल्पकल्पोपचितप्राणातिपातप्रतिविरतेरभ्यस्तानन्तोपायदानपार-
W 146 मितस्य गुरोः संभाव्यते। अयं हि हेतुफलयोर्धर्मो यत्प्रकृष्टाद्धेतोः प्रकृष्टं फलमप्रकृष्टाच्चा-
B 131 प्रकृष्टमिति। अन्यथा कारणप्रकर्षाप्रकर्षाभ्यां कार्ये तदसंभवात् नोपकार्योपकारकभावो
25 भवेत्, तद्गतभेदानपेक्षणात्। अस्ति च शास्तुरमितजीवितकारणमनवद्यामितपरवधविरत्यादीति कथमब्दशतमप्यनवस्थानम्? सर्वस्यैवास्य सर्वज्ञताफलमिति चेत्, न, आभिमुख्येन दीर्घकालजीवितफलसंवर्णनात्। प्राणातिपातविरतिदानपारमितयोर्हि अन्वयव्यतिरेकाभ्यामनल्पमायुः फलमुपवर्णितम्। यश्च यस्याभिमुख्येन हेतुर्वर्ण्यते, स परिपुष्टप्रत्ययसमवधानेन। तदुत्पादयन्नेव अन्यस्यापि यदि निमित्ततां प्रतिपद्यते, तदा न दोषः।
30 न त्वसकृत् विनिश्चितं फलमपहाय अन्यदुत्पादयति, सकृदप्येतज्जनकत्वप्रसङ्गात्। किं च धर्मतत्त्वाभ्यासवशादेव सर्वाकारज्ञतोपजायते। पुण्यसंभारस्तु तस्य विशिष्टाश्रयोत्पादनादानुगुण्यमापद्यते। तस्मात्साहसमात्रं पुण्यपरिक्षयाद्भगवतो मरणवर्णनम्। स्यान्मतिः—तथा-

गतविनेयसत्त्वासंभवात् परिनिर्वाणमिति । तदत्र चिन्त्यम् । किं बुद्धरूपविनेया एव सत्त्वा विद्यन्ते, किं वा रूपान्तरविनेया अपीति? यदि पूर्वः पक्षः, तदा शक्रादिरूपसंदर्शन-विनेयजनसंभवात्ताद्रूप्येण किं नावतिष्ठन्ते? आश्रयन्ते हि दयाविधेयचेतसो वेषान्तरमपि जनहितसंपादनाय, यथा भगवतैव चक्रवर्तिरूपमास्थितम् । न च शक्रादिरूपविनेयाभावोऽपि, ज्ञापकाभावात्, शक्रादीनां परोपकाराभावप्रसङ्गाच्च । अपि च, एकत्र लोकधातौ बुद्धरूप- 5 विनेयजनाभावेऽपि लोकधात्वन्तरेष्वपरिमितेषु तद्भावात् किमस्य परिनिर्वाणम्? धात्वन्तरेऽपि ते न संभवन्तीति चेत्, तदिदमज्ञापकम् । न हीदं पठ्यते क्वचित् सर्वेष्वेव लोकधातुषु B 132 बुद्धरूपदर्शनविनेयाः सत्त्वा न सन्तीति । अथ मतम्, नियमतो न सन्ति । सत्त्वे हि परार्थवृत्तेः किं परिनिर्वाणमिति? नन्विदमेव न सिद्धं परिनिर्वृत इति । यस्मादेकत्र धातौ W 147 बुद्धरूपसंदर्शनविनेयासत्त्वे निर्वाणोपदर्शनविनेयजनानुग्रहविधानायोपदर्शितनिर्वृतिरपि अन्य- 10 त्राविकलं जातिबोधिधर्मचक्रप्रवर्तनाद्युपदर्शयतीत्ययं समयः । यथोक्तम्—

न बुद्धः परिनिर्वाति धर्मोऽन्तर्हीयते न च ।
सत्त्वानां परिपाकाय निर्वाणं तूपदर्शयेत् ॥ इति ।

अन्यच्च, अन्येऽपि तावत् साधवो (बोधि)भवभाविनः कृपादारिद्र्ये ह्रीसत्यधन-पालनाय प्रतिज्ञातार्थनिर्वहणमवश्यंतया सर्वशक्तिपरिक्षयेणापि संपादयन्तो दृश्यन्ते । तथा- 15 गतास्तु सकलसाधुजनचूडामणयः समुत्तीर्णभवभयाः सात्मीकृतह्रीसत्यकृपाधर्माणोऽप्रति-हतज्ञानशक्तयो न संपादयन्तीति कः पुनः सचेतनः श्रद्दध्यात्? प्रतिज्ञातं च तैः सत्त्वाना-मत्यन्तदुःखनिर्मोक्षणम् । तथा हि भगवता पूर्वं प्रणिहितम्—

अनेन पुण्येन तु सर्वदर्शिता-
मवाप्य निर्जित्य च दोषविद्विषः । 20
जरारुजामृत्युमहोर्मिसंकुलात्
समुद्धरेयं भवसागराज्जगत् ॥ इति ।

न च जगच्छब्देन कतिपयसत्त्वग्रहणं न्याय्यम् । मा भूत् सर्वसत्त्वालम्बनाभावो B 133 महाकरुणाया इति । अतश्च यावदेकोऽपि सत्त्व आस्ते, न तावन्निर्वाणं कृपाशयस्य युक्तम् । न संभवत्यपर्यन्तत्वात्सर्वसत्त्वानां संसारादभ्युद्धरणमिति चेत्, अत एव दयामयस्य तदाशय- 25 स्यापर्यन्तमेवावस्थानम्, अन्यथा न प्रतिज्ञानुरूपमनुष्ठानं भवेत् । न च महाकरुणानुरूपम् । तथा हि—इयं महाकरुणा सर्वसत्त्वदुःखपरित्राणेच्छाकारा । तदस्याः सुभावितायाः कुतो-ऽकाण्ड एव विच्छेदः? स्यान्मतिः—न विच्छेदः, किं तु ये तत्कालभाविनो बुद्धविनेयाः सुभद्रान्ताः, ते सर्वे विनीताः । ये चान्ये कालान्तरेण परिपक्वसंततयो भविष्यन्ति, तदर्थकरणाय अन्ये एव तथागताः क्रमेणोत्पत्स्यन्ते । ततस्तद्धितसंपादनाय अन्यमेव 30

१ B चेष्टान्तरम्. २ W om. च.

W 148 कंचिद्बोधिसत्त्वमभिषिच्य परिनिर्वाति। अन्यथा अन्तराले परार्थवृत्तेर्निरर्थकमवस्थानं भवेदिति। तदयुक्तम्, बुद्धविनेयसत्त्वाभावस्यासिद्धत्वात्, सर्वलोकधातुषु क्रियान्तरविनेयजनभावाच्च। यथोक्तं प्राक्। न च अनर्थकमवस्थानम्, तदर्थकरणायैवावस्थानात्। यथा शाक्याधिराजस्यैव सुभद्रप्रतीक्षया कतिपयक्षणावस्थानमभूत्। स्वल्पतरः स
5 कालः, इत्यपि न सम्यक्। येन अभिप्रेतफलाहितचेतसो न कालस्य दैर्घ्यमदैर्घ्यं वा गणयन्ति। कालान्तरेण परिपक्वसंततिष्पर[1] एव समर्थो भविष्यतीत्यनुत्तरम्। यस्मादेवं बोधिचित्तोत्पादनेऽपि न यत्नः प्राप्नोति, बहूनां लोकाभ्युद्धरणाशयानां व्यापारदर्शनादेतैरेव व्यापृताः, किमत्र मया कर्तव्यमित्याशयात्। कारुणिकत्वादिमां गणनामकृत्वा वृत्तिश्चेत्,
B 134 अत्यन्तावस्थाने कस्माद्गणनां नारभन्ते? युक्ता हि तस्यामवस्थायामगणना सात्मीकृतत्वाद्वृत्ति-
10 हेतोः करुणायाः। तस्मात्—

अनल्पकल्पासंख्येयभावनापरिवर्धिताः।
तिष्ठन्त्येव पराधीना येषां तु महती कृपा॥

गुणमयमूर्तेस्तु भगवतोऽत्यन्तोच्छेदलक्षणायां परिनिर्वृतौ इष्यमाणायां तच्छरणार्थोऽपि नेदानींतनानामुपपद्यते। तथा हि त्राणार्थः शरणार्थो वर्ण्यते। यश्च बुद्धं भगवन्तं शरणं
15 गच्छति, सोऽशैक्षान् बुद्धकरकान् धर्मान् शरणं गच्छति। प्रदीपप्रबन्धस्येव बुद्धकरकाशैक्षधर्मात्मकजिनात्यन्तप्रत्यस्तमये कुतस्तेषां त्रातुं सामर्थ्यम्? सामर्थ्यसंभवेऽनिर्वृतिप्रसङ्गः, सामर्थ्यलक्षणत्वाद्वस्तुनः। अतीतार्थस्थितस्य न शक्तिर्व्याहन्यते इति चेत्, न, अतीतस्य ताद्रूप्येणास्तित्वे वर्तमानताप्राप्तेः। तथा च सैव अप्रतिष्ठितनिर्वाणसिद्धिः समस्तरूपप्रत्यस्तमये वा किमवशिष्यते? अथ मतम्—तदुपदिष्टस्य प्रवचनरत्नस्य त्रातुमद्यापि सामर्थ्यमस्तीति,
20 तस्यापि सामर्थ्यमुच्यते इति यद्येवं न मुख्यं तर्हि तच्छरणं स्यात्। न हि तत्कार्यस्य
W 149 सामर्थ्यं तस्य भवति, स्वभावभेदात्। तस्य चाधुना सामर्थ्यमेकान्तेन न प्रच्युतमिष्यते इति न अनुपचरितस्तच्छरणार्थोऽस्ति। को वा अयमागमधराणामस्थाननिर्बन्धः, यदमी निष्कारणवैरिणो युक्त्यागमान्तरोपेतमप्याभिप्रायिकमागमार्थमुल्लङ्घ्य भगवन्निर्वृतिप्रतिपादनाय सोत्साहाः[2] संतिष्ठन्ते। भगवतः परिनिर्वाणाभावे कथं धातवो दृश्यन्ते इति चेत्, नापि
25 धातूनामयोगः, भगवदाधिपत्यादेव तद्विनेयानां प्रसादायतने धातुप्रतिभासनात्। परमार्थतस्तु
B 135 धातवो नेष्यन्ते एव। मायोपमज्ञानमयकायत्वात् मुनीनामकलुषधियामासंसारावस्थानाच्च। यथोक्तं सुवर्णप्रभासोत्तमसूत्रे (२.१४–१५)—

यदा शशविषाणेन निश्रेणी सुकृता भवेत्।
स्वर्गस्यारोहणार्थाय तदा धातुर्भविष्यति॥
30 अनस्थिरुधिरे काये कुतो धातुर्भविष्यति। इति।

१ W परः for अपरः. २ W सोत्साहं.

एवं नासिद्धो हेतुः । सपक्षे भावान्न विरुद्धः । अविकले कारणे सति कार्यासंभवायोगो बाधक इति विपर्यये बाधकप्रमाणान्न अनैकान्तिकः । अथ मतम्—आसंसारावस्थितौ महामुनेरव्याहतज्ञानशक्तिकस्य अपरतथागतोत्पादो व्यर्थ इत्यदोषः, यस्मादव्याहतज्ञान-शक्तित्वेऽपि यौगपद्येनापि बहुबुद्धरूपविनेयसत्त्वार्थेषु भगवन्तस्तथागतास्तुल्यकारणवृत्तित्वात् शिलावष्टब्धमण्डूकोद्धरणेन पृथग्जनभूमिस्थिता इव दयालवः प्रवर्तन्ते । नाप्यपरतथा- 5 गतोत्पादे पूर्वतथागतज्ञानशक्तिर्व्याहतेति वक्तव्यम् । एकत्र संनिपत्यापि तद्रूपसंनिपात-विनेयजनसंभवे सत्त्वार्थकरणात् । तथा हि—एकस्य अव्याहतज्ञानशक्तिसद्भावे नापरेण तत्तुल्यहेतुना तथा न भवितव्यमिति न्याय्यम् । न ह्येकः सूरिर्भूत इत्यपरैस्तत्समाननिमित्तैर्न भवितव्यम् । स्यान्मतिः—एकतथागताविनेयत्वे सर्वेषामविनेय इति, नैवम् । यस्मादेकस्य भगवतोऽविनेयत्वेन तुल्यसंभारतया बहूनामपि तथागतानां प्रत्येकमेकैकरूपेण अविनेयोऽपि 10 सन् अनिर्मितबहुबुद्धरूपविनेयः[1] स्यामिति तथाविध[2]प्रणिधानादिकारणसमाक्षिप्तत्वेन युग-पत्सर्वेषामेव विनेयो भवति । अत एव स्वपरिपाचितसत्त्वविनेयासंभवान्नापि श्रावकैर्वा समानत्वमवसेयम् । अत एव तद्रूपसंनिपातविनेयजनासंभवान्नैकस्मिन् समवधानम्, अत एव च नैकलोकधातौ युगपद्बहुतथागतोत्पत्तिः । तत्संभवेऽपि न विरोधोऽपगतमात्सर्येर्ष्यादि-मलानाम् । तथा हि तैरित्थं प्रणिहितम्— 15

> यथा यथार्थसंपत्तिर्भव्यानामुपपत्स्यते ।
> तथा तथावभासोऽपि भूयादस्मत्समाश्रयात् ॥

इत्यलमतिप्रसङ्गेन । न्यायोपपन्नतथागतनिर्माणकायपरिनिर्वाणेऽप्यस्थाने[3] सर्वथा स्थानानुपपत्तिरित्यभिप्रायवान् यदि इत्याद्यनुवादपूर्वकमाह—**तत्कथं पुनः** इत्यादि । यद्येवं न स्थातव्यम्, तदा अनेन बोधिसत्त्वेन कथं केन पुनः प्रकारेण **स्थातव्यम्** प्रतिपत्तव्यम् । 20 **शिक्षितव्यम्**, प्रतिपत्त्या संपादयितव्यम् । किंशब्दस्य क्षेपाभिधायित्वान्नैव केनचित् प्रकारेणेत्यर्थः । तद्वचनेनैव परिहारं दापयितुमाह **तत्किं मन्यसे** इत्यादि । यत्तथागतस्थानं तत्किं त्वं मन्यसे बुध्यसे । यदि स कथय इत्याह—**क** इत्यादि । अपि तु "उपालप्स्ये त्वा" इत्यादि प्रथमपरिवर्ते यदुक्तं तदनेन प्रतिपादितमिति ग्राह्यम् । स्थानशब्दस्य यथारुतत्वेन दोष इत्यभिप्रायात् प्रतिवचनमाह—**न क्वचित्** इत्यादि । ननु गृध्रकूटादौ स्थितोऽपि भगवान् 25 कथं न क्वचित्स्थित इति तत्कस्य हेतोः इत्याशङ्क्याह—**अप्रतिष्ठितमानसः** इत्यादि । यस्माद्बोधिमभिसंबुध्य तत्त्वतो धर्माणामनिदर्शनादप्रतिष्ठितं मन एव मानसमस्य इत्यप्रतिष्ठित-मानसः **तथागतः** । तस्मान्न क्वचिदुपलम्भयोगेन स्थित इति पूर्वेण संबन्धः । तदेव कथयन्नाह—**स नैव** इत्यादि । **संस्कृतः** इति कामादिके । **असंस्कृतः** इति तथतादिके । तत्र न स्थितस्तत्त्वतो वस्त्वनुपलम्भात् । **न च ततो व्युत्थितः** इति नैव तत्रास्थितः । 30 निर्विषयस्य नञोऽप्रयोगात् संवृत्या स्थानमस्थानं वा प्रज्ञप्तं भगवत इति मतिः ।

W 150 | B 136 | W 151 | B 137 | W 152

---

१ W om. °रूप°.　२ W एवंविध°.　३ B om. अस्थाने सर्वथा.

एवमस्माभिरपि पारमार्थिकाभिनिवेशनिषेधेन संवृत्या सर्वत्रावस्थानादिकं[१] विधीयते, यथा त्वयोक्तम्। अतो न सर्वथा अवस्थानानुपपत्तिरिति तद्वचनेनैव परिहरन्नाह—**एवमेव** इत्यादि। एवमेवेत्यनन्तरोक्तक्रमेणैवेत्यर्थः। तदेव विभाजयन्नाह—**यथा** इत्यादिना। **न स्थितः** क्षणिकानित्यवस्त्वभावात्। **नास्थितो** निर्विषयप्रतिषेधासंभवात्। **न विष्ठितः** प्रबन्धानित्यवस्तुनोऽसत्त्वान्न विसदृशीं स्थितिमनुप्राप्तः। **नाविष्ठितः** तथैव प्रतिषेधासंभवात्। **एवमनेन शिक्षितव्यम्** इति प्रयोगावस्थायाम्। **तथा स्थास्यामीति**। तथा **शिक्षिष्ये** इति मौलावस्थायाम्। एवमनेन शिक्षितव्यमिति पूर्वेण संबन्धः। **सुस्थितोऽस्थानयोगेन** इति विशेषाधिगमलाभेन सुष्टु स्थितो मायापुरुषस्येव अनभिनिवेशयोगेन पृष्ठावस्थायामेवमनेन शिक्षितव्यमित्यत्रापि संबन्धः। विस्तरेण प्रतिपत्तिमेवं निर्दिश्योपसंहरन्नाह—**एवमत्र** इत्यादि। [W 153] ततः किं भवतीत्याह—**एवं हि** इत्यादि। एवं भावनाधिगताग्रधर्मात्मकेन प्रज्ञापारमिताविहारेण विहरति, अत एव च अविरहितोऽनेन मनसिकारेण भवति। इतिशब्दः प्रकरणसमाप्त्यर्थः। तदयं वाक्यार्थः—यस्मात्तथागतेन बोधिमभिसंबुध्य तत्त्वतो न केचिद्धर्माः समुपलब्धाः, तस्मान्मायास्वभावा एवामी भावाः प्रतिभान्तीति [B 138] प्रमाणपुरुषादर्शनकारणोपपन्नानुपलम्भभावनया अग्रधर्माधिगमार्थं विस्तरेण स्रोतआपत्तिफलप्रतिपन्नकत्वादिदशभूमिष्वभिनिवेशयोगान्न स्थातव्यमित्येवं भावनीयमिति। तथा चोक्तम्—

> **दश भूमीः समारभ्य विस्तरास्थानदेशनात्॥ ४॥**
> **अग्रधर्मगतं प्रोक्तमार्यश्रावकवर्त्मनि।**
> **तत्कस्य हेतोर्बुद्धेन बुद्ध्वा धर्मासमीक्षणात्॥ ५॥** इति॥

श्रावकमार्गानन्तरं प्रत्येकबुद्धानां मार्गाभिधाने न्यायप्राप्तेऽपि श्रावकेभ्यः कथं प्रतिविशिष्टास्ते येन तेषां मार्गभेदः इत्याशङ्क्य वैशिष्ट्यप्रतिपादनार्थं तावदाह—**अथ खलु तत्र पर्षदि** इत्यादि। **यानि तानि** इति निपातसमुदायत्वेन यानि कानिचित् पूर्वोपश्रुतानीत्यर्थः। **यक्षरुतानि** इति। तेषां यक्षाणां स्वसंकेतप्रतीतये रुतानि। **पदानि** रुतसमुदायाः। **मन्त्रितानि** यावदाविवक्षितार्थपरिसमाप्तिः। महावाक्यानीत्यर्थः। **प्रव्याहृतानि** तत्र तत्र कथामार्गे प्रश्नप्रतिवचनानि। **तानि विज्ञायन्ते जल्प्यमानानि** इति संकेतवशादुच्चार्यमाणानि तानि [W 154] सार्थकान्यवबुध्यन्ते[२]। **न पुनरिदम्** इत्यादि। श्रावकाः परोपदेशसापेक्षाः स्वबोधिं बुध्यन्ते इत्यागमः। प्रत्येकबुद्धाः पुनः स्वयं पूर्वश्रुताद्यभिसंस्कारेण परोपदेशं प्रत्यनपेक्षाः स्वबोधिमधिगच्छन्ति, अतस्तेषां बुद्धाद्युपदेशनैरर्थक्यमित्येकं वैशिष्ट्यम्। यतस्तस्मात्कारणात् प्रत्येक[B 139]बुद्धानधिकृत्य यद्भाषणादि न तत्सार्थकं विज्ञायते, इति वाक्यार्थः। **भाषते** इत्यादि व्याख्यातम्। अथवा, अधीष्टदेशना भाषणम्। पृष्टप्रतिवचनं प्रव्याहारः। एतदेवोभयं संमूढानधिकृत्य देशना, प्रमत्तानधिकृत्य अभ्युपेत्य देशना उपदेशः। अयं च वितर्को देवपुत्राणां तथागतानुभावादुत्पन्नोऽवसेयः। अन्यथा, न प्रत्येकबुद्धानारभ्य आर्यसुभूतिना

---

१ W अवस्थानं for °स्थानादिकं. २ W अवगम्यन्ते.

किंचिदुक्तमिति तेषां कथमयं विकल्पः स्यात्? योनिशोवितर्क इत्यनुमत्यर्थमाह—**न विज्ञायते** इत्यादि । न विज्ञायते इति यदुक्तं तत् साधूक्तमिति शेषः । द्विरभिधानं तु—

विस्मये च विवादे च कोपे दैन्येऽवधारणे ।
प्रसादने प्रहर्षे च वाक्यमेकं द्विरुच्यते ॥

इति वचनाद्यथासंभवं विस्मयावधारणादौ ग्राह्यम् । कथं साधूक्तमित्याह-**तथा हि** 5 इत्यादि । यस्मादश्रोतृसंस्कारकं वाक्यं ब्रुवाणः कथं नोन्मत्तः स्यादिति न्यायेन स्वयंबोधात् स्वयंभुवां बोधाय न किंचिदत्र भाषणादि श्रूयते । तस्मात्तदर्थाय यद्भाषणादि, तन्न विज्ञायते इति साधूक्तम् । सालापधर्मदेशनया परान् कुशले श्रावकाः प्रवर्तयन्ति, इति शब्दोच्चारणधर्मदेशनया श्रोतृभिः क्रियते वक्तृज्ञानसामर्थ्यावबोधः । प्रत्येकबुद्धाः पुनर्ज्ञेयावरणैकदेशग्राह्यविकल्पप्रहाणादशब्दोच्चारधर्मदेशनया स्वाधिगतज्ञानादिसामर्थ्येन परान् 10 दशकुशलादौ प्रवर्तयन्ति । अतस्तेषां ज्ञानस्य परानवबोधतया गाम्भीर्यं द्वितीयं वैशिष्ट्यम् । इति कृत्वा वचनात्मकमपि कार्यलिङ्गभाषणादि न किंचिदत्र तज्ज्ञानस्वरूपप्रतिपादनाय सूच्यते ।

अतद्रूपपरावृत्तवस्तुमात्रप्रसाधनात् ।

निर्दिश्यते । यतस्तस्मादपि कारणान्न विज्ञायते इति साधूक्तम् । प्रत्येकबुद्धानां स्वयं बोधात् 15 परोपदेशनैरर्थक्यमित्येवंरूपं वितर्कं परिहारद्वारेण परिहरिष्यत्येव अयमार्यसुभूतिरित्यस्माकं चेतो जातम् । यावत्तमपरिहृत्य अन्यदेव ज्ञानगाम्भीर्यं कथयतीत्याहुर्देवपुत्राः । **उत्तानि** इत्यादि । **बत**शब्दोऽवधारणे । पुद्गलनैरात्म्यनिर्जातत्वेन तीर्थिकानामगोचरत्वात् श्रावकज्ञानं **दूरम्** । तस्मात् **दूरतरं** मृद्विन्द्रियत्वेन श्रावकाणामविषयत्वात् प्रत्येकबुद्धज्ञानम् । क्लेशावरणप्रहाणफलत्वेन श्रावकज्ञानं **सूक्ष्मम्** । तस्मादपि ज्ञेयावरणैकदेशग्राह्यविकल्पप्रहाणेन 20 **सूक्ष्मतरं** प्रत्येकबुद्धज्ञानम् । परोपदेशषोडशाकारप्रभावितत्वेन श्रावकज्ञानं **गम्भीरम्** । तस्माच्च **गम्भीरतरं** स्वयंबोधादिदंप्रत्ययतामात्रप्रभवत्वेन प्रत्येकबुद्धज्ञानम् । सूत्रान्तरेऽप्युक्तम् —"एत एव दश कुशलाः कर्मपथाः स्वयमभिसंबोधतया गम्भीरा इदंप्रत्ययानुबोधेन च प्रत्येकबुद्धज्ञानं निर्वर्तयन्ति" इति । **प्रविशति** तत्पक्षसमाश्रयणात् । तदेवाह—**देशयति भाषते** इति । तथा चोक्तम्— 25

**परोपदेशवैयर्थ्यं स्वयंबोधात् स्वयंभुवाम् ।**
**गम्भीरता च ज्ञानस्य खड्गानामभिधीयते ॥ ६ ॥** इति ॥

कथं धर्मदेशना च नाम अप्रव्याहारा च, येन वचनकार्यलिङ्गाभावेन ज्ञानगाम्भीर्यं सिध्यतीत्यपि न वक्तव्यम् । यतो नावितर्क्य नाविचार्य वाचं भाषते इत्यालापो विक्षेपः । अतो धर्मदेशना आलापमयी महते विक्षेपाय संवर्तते । विक्षेपश्च संतानक्षोभं गाढमादधातीति 30 मत्वा यथा बुद्धेन भगवता प्राग्बोधिसत्त्वभूतेनैवं प्रणिधानं प्रवर्तितम्—"प्राप्तबुद्धत्वोऽहं

W 155 B 140 W 156

B 141 चिन्तामणिरिव आलापमन्तरेणापि सत्त्वार्थक्रियासमर्थो भूयासम्" इति। तथा बुद्धत्वसाम्यात् प्रत्येकबुद्धैः। अतस्तेषामपि स्वबोध्यधिगमावस्थायां पूर्वप्रणिधानादिसामर्थ्येन यस्मिन्नर्थे येन प्रकारेण यस्य श्रवणेच्छा, तस्य विज्ञाने तेनैव प्रकारेण अशब्दोऽपि सोऽर्थः प्रतिभाति इति अशब्दधर्मदेशनोच्यते। सूत्रान्तरेऽप्युक्तम्—"प्रत्येकबुद्धानां कायिकी धर्मदेशना। तथा—
5 मनसा शक्राय गाथा विसर्जिता" इत्यादि। तथा चोक्तम्—

**शुश्रूषा यस्य यस्यार्थे यत्र यत्र यथा यथा।**
**स सोऽर्थः ख्यात्यशब्दोऽपि तस्य तस्य तथा तथा॥ ७॥** इति॥

W 157 वैशिष्ट्यमेवमभिधाय विशिष्टानां विशिष्ट एव मार्गः, अन्यथा कारणविशेषाभावे कार्यविशेषानुपपत्तेः, इति प्रत्येकबुद्धमार्गं प्रकृतमाह—**तेन हि** इत्यादिना। यस्माद्भवद्भिरेव
10 देवपुत्रैरुक्तम्—**दूराद्दूरतरं प्रविशति** इत्यादि, तस्मादेव कारणादिदमवगम्यतामिति शेषः। एवं तर्हि नितरां दूराद्दूरतरादिकं प्रविशामीति मतिः। साक्षात्कर्तुकामः **प्राप्तुकामः**। **स्थातुकामः** निश्चलीभवितुकामः। **स नेमां क्षान्तिमनागम्य** इति इमां मार्गज्ञतां धर्मनिध्यानक्षमणविषयामप्राप्य स पुद्गलो न संभवति, अन्यथाधिगमाभावादिति। अनेन च मार्गज्ञतां सर्वमार्गविषयिणीमाह। व्याप्त्यर्थप्रतिपादनेन प्रत्येकबुद्धमार्गाधिकारादिदमुक्तम्। **न केवलं**
15 **ग्राह्यविकल्पस्यैव प्रहाणतः**। प्रत्येकबुद्धानां योऽसौ विशिष्टो मार्गस्तत्स्वभावा मार्गज्ञता। किं तर्हि श्रावकादिमार्गस्वभावापीति। **पेयालं** इति। स नेमां क्षान्तिमनागम्येति पदं सकृदागामिफलमित्यादिपदत्रयेऽतिदेशनीयमित्यर्थः। ग्राह्यविकल्पस्यैव प्रहाणमिति वचनाद्ग्राहकविकल्पाप्रहाणं प्रतिपादितम्। तच्च—

B 142 ग्राह्याभावे तदग्रहः।

20 इति न्यायादयुक्तमिति वितर्कयन्त आहुः—**किम्** इत्यादि। किंशब्दो वितर्के। **किंरूपाः** किंस्वभावाः। कीदृग्विधग्राहकविकल्पोपेताः प्रत्येकबुद्धयानधर्मभाजो धार्मश्रवणिकाः
W 158 प्रत्येकबुद्धा ग्रहीतव्या इति यावत्। परिहारार्थमाह—**माया** इत्यादि। अयमभिप्रायः—वस्तुधर्मो ह्येषः यत् स्वलक्षणे वस्तुनि सति तद्ग्राहकं निर्विकल्पकं ज्ञानं स्वलक्षणमुत्पद्यते। तदभावात् तन्नेति। ग्राहकविकल्पस्य पुनरनादिकालीननिरुध्यमानरूपादिग्राहकविकल्पज्ञान-
25 समाक्षिप्तस्वसंतानवासनाप्रबोधजन्मत्वान्नायं नियमः—ग्राह्यविकल्पे सत्येव समुदय इति। तस्मान्मायास्वभावनिर्मितपदार्थसमाना एव ते वितथप्रख्यातिरूपग्राहकविकल्पेन संगतत्वात् प्रत्येकबुद्धा ग्राहकत्वेनैवेष्टव्या इति। ननु च एवंविधविकल्पेन ग्राह्यविषयं गृह्णन्तोऽपि कथमलीका इति तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि** इत्यादि। समाहितासमाहितावस्थायां ते प्रत्येकबुद्धा यथाक्रमं **नैव श्रोष्यन्ति न साक्षात्करिष्यन्ति**, ग्राहकविकल्पाकारेणेति शेषः।

30 विकल्पोऽवस्तुनिर्भासाद्विसंवादादुपप्लवः।

इति मतिः। अमुना च न्यायेन ग्राहकविकल्पाप्रहाणतोऽपि प्रत्येकबुद्धानां मार्गस्वरूपं कथितम्। **मायानिर्मितसदृशा** इति केनचिदाकारेणेति सादृश्यवचनात् सत्त्वानां

मायास्वभावता निराकृतेति प्रसङ्गागतविकल्पार्थमाह–**किं पुनः** इत्यादि । **मायोपमास्ते सत्त्वाः** । किं न ते माया वितथरूपाः । ततश्च तात्त्विकं सत्त्वास्तिकपरिदीपनं न सम्यक् निर्देश इति मतिः । **मायोपमास्ते** इत्यादिना परिहारमाह । एवं मन्यते–यथा गजादे रूपेण माया मृच्छकलादिभ्यो विवेकेनानुपलभ्यमानत्वान्नान्या, नाप्यनन्या, तथैव मन्त्राद्यनुपप्लुतलोचनैर्मृच्छकलादीनां दर्शनात् । अतस्तत्त्वान्यत्वाभ्याममनिर्वचनीयत्वेन वस्तु- 5 धर्मसमतिक्रमात् पुद्गलदिवत्तत्त्वतोऽस्तीति न शक्यते वक्तुम् । आबालजनप्रत्यक्षसिद्धत्वेन अनुभवपथमनुप्राप्तत्वाद्विकल्पादिवत् संवृत्या च नास्तीति न शक्यतेऽध्यवसातुम् । ततश्च ये ये प्रतीत्यसमुत्पन्नाः, ते परमार्थतोऽस्तिनास्तित्वव्यवहारपथातिक्रान्तमूर्तयः यथा माया । तथा चामी सत्त्वादयो भावाः, इति स्वभावहेतुना कस्यचित्प्रसिद्धेनार्थेन अप्रसिद्धोऽर्थः साध्यते इति मायात्वेनोपमिताः । न्यायतस्तु पुनस्तेऽपि सत्त्वा मायात्मका एव । अतो न किंचित्तात्त्विक- 10 सत्त्वास्तित्वं परिदीपितमिति । **मायोपमाः स्वप्नोपमाः** इति पदद्वयं प्रबुद्धाप्रबुद्धावस्थाविषय- भेदेनोक्तम् । **अद्वयम्** इत्येकस्वभावम् । तदेव कुत इत्याह–**अद्वैधीकारम्** इति । न विद्यते द्वैधीकारो नानात्वं यस्य तत्तथोक्तम् । सर्वोपसंहारेण व्याप्तेः प्रवर्तनादिति मतिः । तदयं वाक्यार्थः–यस्मादलीकरूपतया मायोपमास्ते सत्त्वाः, तस्मात् माया च सत्त्वाश्चाद्वयमेतद- द्वैधीकारम् । तथा यस्मात्स्वप्नोपमाः, तस्मात्स्वप्नश्च सत्त्वाश्च अद्वयमेतदद्वैधीकारमिति । तामेव 15 व्याप्तिमादर्शयन्नाह–**सर्वधर्मा अपि** इत्यादि । एतद्ग्रहणकवाक्यं विवृण्वन्नाह–**स्रोतआपन्नोऽपि** इत्यादि । व्याप्तावेवं प्रतिपादितायां कथं मायोपमो भगवान् सर्वाकारगुणसंपदो हेतुरित्याह– **सम्यक्संबुद्धोऽप्यार्यसुभूते** इत्यादि । सम्यक्संबुद्धो रूपकायस्तथागतः । परिहरन्नाह– **निर्वाणमपि** इत्यादि । यत्र हि नाम निर्वाणमपि प्रतिविशिष्टं धर्मकायमद्वयज्ञानस्वभावं मायास्वप्नसमानं वदामि । तत्र **किं पुनरन्यं धर्मं** रूपकायं न वदामि ? अपि तु वदाम्येव 20 इत्यर्थः । प्रतिषेधद्वयस्य प्रकृतार्थप्रतिपादकत्वात् । यस्माद्यथोक्तस्वभाव एव भगवानभि- मुखीक्रियमाणः सर्वगुणसंपदो हेतुः प्रमाणाबाधितस्वरूपत्वेन, अन्यथा विपर्यास इति भावः । पुनरपि बहुलतरभावाभिनिवेशात् सत्यधर्माप्रतिपत्तिरित्याह–**निर्वाणमपि** इत्यादि । अन्यथा तीर्थिकानामिव प्रादेशिकशून्यतासद्भावेन भावाभ्युपगमतो मुक्त्यनुपपत्तिरित्यभिप्रायवान् परिहरन्नाह–**तद्यदि** इत्यादि । तच्छब्दो वाक्योपन्यासे । यदीत्यभ्युपगमे । तदुक्तम्– 25 निर्वाणादन्यः कश्चित् प्रतिविशिष्टो धर्मो न संभवति । तथाप्यभ्युपगम्योच्यते । **यदि निर्वाणादपि कश्चिदन्यो विशिष्टतरो धर्मः** संभवेत्, तदा **तमपि धर्मं मायादिसदृशं वदेयमिति** । तथा च आचार्यनागार्जुनपादैरुक्तम्—

रागद्वेषोद्भवस्तीव्रदुष्टदृष्टिपरिग्रहः ।
विवादास्तत्समुत्थाश्च भावाभ्युपगमे सति ॥ 30

B 143 W 159 W 160 B 144 W 161

१ W °अनुपहत°. २ W °कष्ट°.

स हेतुः सर्वदृष्टीनां क्लेशोत्पत्तिर्न तं विना ।
तस्मात्तस्मिन् परिज्ञाते दृष्टिक्लेशपरिक्षयः ॥
परिज्ञातस्य केनेति प्रतीत्योत्पाददर्शनात् ।
प्रतीत्य जातं चाजातमाह तत्त्वविदां वरः ॥ इति ॥

5 —रत्नावली ?

B 145 **इति हि** इत्याद्युपसंहारो गतार्थत्वान्न लिखितः । प्रसङ्गागतं निर्दिश्य इदानीमाधारतोऽपि प्रत्येकबुद्धानां विशिष्टो मार्ग इति कथनाय प्रश्नयन्नाह—**केऽस्याः** इत्यादि । ग्राह्यग्राहकविकल्पयोर्यथाक्रमं प्रहाणाप्रहाणमित्येवंरूपेण अस्याः प्रत्येकबुद्धमार्गात्मकायाः प्रज्ञापारमितायाः कथ्यमानायाः कीदृग्विधगोत्रकाः पुद्गलाः प्रत्येपका ग्राहका भविष्यन्ति ? तथागता-
W 162 10 नुभावेन विदितार्थत्वादार्यानन्दः कथयन्नाह **ते खलु** इत्यादि । **अविनिवर्तनीयाः** इति निर्वेधभागीयाधिगमेन अवैवर्तिकाः प्रत्येकबोधौ, त एव स्वबोध्यभिलापाद्बोधिसत्त्वाः । कायिक्या धर्मदेशनया अबुद्धकबुद्धक्षेत्रे सत्त्वार्थकरणाभिप्रायात् महासत्त्वाः । **दृष्टिसंपन्ना वा** इति मध्यप्रज्ञादृष्टिसमुपेताः । **अर्हन्तो वा क्षीणास्रवा** इति प्रहीणस्वदर्शनमार्गावरणत्वेन पूजार्हाः । अनेन च पदत्रयेण प्रत्येकबोधौ यथाक्रमं समुदानीतगोत्रका धर्मताप्रतिलब्धगोत्र-
15 कास्त एव नियतगोत्रकाः पुद्गला इत्याख्यातम् । सर्वत्र च वाशब्दः परस्परविकल्पापेक्षया द्रष्टव्यः । पुनरप्यार्यसुभूतिरन्यथा प्रतिपादयन्नाह—**नास्याः** इत्यादि । ननु स्वमार्गोपदेशपूर्वकं प्रत्येकबोधिमधिगच्छन्तोऽपि प्रत्येकबुद्धाः कथं न केचित् प्रत्येपका इति तकस्य हेतोः इत्याशङ्क्याह—**तथा हि** इत्यादि । अत्रेति प्रत्येकबुद्धमार्गाधिगमकाले परोपदेशनैरर्थक्यात् स्वयंबोधेन प्रत्येकबुद्धानामिति भावः । संक्षेपकथनेन विस्तरार्थसूचनात् न
B 146 20 कश्चिदर्थः सूच्यते । विस्तरकथनेन संक्षिप्तार्थपरिदीपनान्न परिदीप्यते । यथावस्थितस्वरूपनिर्देशान्न प्रज्ञप्यते । उपसंहारार्थमाह—**तद्यथैव** इत्यादि । तस्माद्येनैव कारणेन
W 163 नैरर्थक्येन सूचनादि न क्रियते, तेनैव कारणेन कश्चित्प्रत्येपको न भविष्यति । निर्दिश्यमानाया एवाभावादिति भावः । यथा अविद्यमानस्वभावमपि निर्मितपुष्पं प्रतिनियतदेशादिरूपेण अविचारैकरमणीयतया प्रतिभासते, तद्वद्वस्तुभूताधारमन्तरेणापि प्रतिनियताधि-
25 गमधर्मप्राप्तिरिति सूचनाय आधाराधिकारे निर्मितपुष्पप्रकारोपन्यासार्थमाह—**अथ खलु शक्रस्य** इत्यादि । **अस्य धर्मपर्यायस्य** इति । प्रत्येकबुद्धमार्गस्यास्य दशकुशलादिकर्मस्वभावस्य धर्मपर्यायस्य । यन्नुशब्दोऽवधारणे । पूजार्थमेवेत्यर्थः । **अभिनिर्माय** इति भावनाबलादुत्पाद्य । चित्तोत्पादानन्तरं तथैव कृतवानित्याह—**अथ खलु शक्रः** इत्यादि । **अभ्यवाकिरत्** इति आभिमुख्येन समन्तात् क्षिप्तवान् । **इन्द्रमनु व्याहरणाय** इति । अनुशब्दो लक्षणार्थे ।
W 164 30 तद्योगेन चेन्द्रशब्दात् कर्मविभक्तिः । एतदुक्तम्—इन्द्रवचनादुत्तरकालं निर्मितपुष्पतत्त्वकथनव्याजेन आधारस्वरूपस्य प्रतिपादनाय एतद्वक्ष्यमाणार्थानुकारि[1] चित्तमभूत् इति ।

---

१ B कृष्यमाणा° for एतद्वक्ष्यमाणा°.

**इमानि** इति संप्रत्यनुभूयमानानि। त्रयस्त्रिंशग्रहणं निजावासत्वात्, तच्च स्वोपलम्भयोग्य-देशोपलक्षणम्। **दृष्टपूर्वाणि** इति अनुभूतपूर्वाणि। किमिमानि अथ सर्वाण्येव पुष्पाण्यदृष्टपूर्वाणि? नेत्याह—**यानि** इत्यादि। यद्येवं किंस्वभावानि तर्हि तानीत्याह—**निर्मितान्येतानि पुष्पाणि** इति। एतदुक्तम्—न मदुपलम्भयोग्यदेशेषु प्रचरन्ति सन्ति दृष्टपूर्वाणि, नाप्यस्मद्दर्शनपथाति- B 147
क्रान्तदेशादानीतानि, तथाविधशक्तिवैकल्यात्, तस्मात् मनोमयानि निर्मितान्येतानि 5
पुष्पाणि इति। तदेव कथयन्नाह—**नैतानि** इत्यादि। तत्र वृक्षाः पुष्पफलोपगाः। मल्लिकाद्या गुल्माः। अतिमुक्तकादयो लताः। बुद्धानुभावेन विदितवितर्कत्वात् परिहरन्नाह—**अनि-र्जातानि** इत्यादि। मनसः सकाशात् प्रतिभासमानान्यपि कथमनिर्जातानीति तत्कस्य W 165
हेतोरित्याशङ्क्याह—**न हि** इत्यादि। यस्मान्न मनोनिर्जातानि तत्त्वतः कानिचित्पुष्पाणि, ग्राह्यग्राहकभावस्यालीकत्वादिति शेषः। नापि वृक्षादिनिर्जातानि भवन्तेत्र निषिद्धत्वात्। 10
**अनिर्जातान्येतानि पुष्पाणि** इति वचनेन पुष्पाणां स्वरूपमप्रतिपिद्धम्। जन्मनिषेधात्तर्हि नित्यत्वमभ्युपगतम्, तच्चायुक्तमित्याह—**यत्त्वम्** इत्यादि। लतानिर्जातानीत्यपि न वक्तव्य-मिति शेषः। कुत इत्याह—**यत्कौशिक** इत्यादि। यस्मात् यदनिर्जातं न तत्पुष्पम्। नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरहेण स्वरूपासंभवत्वादिति मतिः। तत्र ग्राह्यविकल्प-प्रहाणेन प्रत्येकबुद्धाधिगमं श्रावकेभ्यो विशिनष्टि, ग्राहकविकल्पप्रहाणाभावेन च प्रत्येक- 15
बुद्धेभ्योऽनुत्तरबुद्धाधिगमम्। आधारेण च अधिगमस्यासाधारण्यमिति विशिष्टः प्रत्येकबुद्धानां मार्गो यथोक्तश्रावकचतुःसत्याकारानुपलम्भभावनया यथावस्तु प्रतीत्यसमुत्पादानुगतया बोधिसत्त्वेन परिज्ञेयः। तथा चोक्तम्—

> **ग्राह्यार्थकल्पनाहानाद्ग्राहकस्याप्रहाणतः।**
> **आधारतश्च विज्ञेयः खड्गमार्गस्य संग्रहः॥ ८॥** इति॥ 20

निर्वेधभागीयाधिगमे सति यथोक्तप्रत्येकबुद्धमार्ग इति निर्वेधभागीयार्थमाह—**गम्भीर-प्रज्ञो बतायम्** इत्यादि। आधारतत्त्वार्थकथनेनैवोष्मार्थप्रतिपादनाद्गम्भीरप्रज्ञः। नामपदप्रज्ञप्तिं विज्ञानादिस्कन्धप्रज्ञप्तिम्। श्रुतमयज्ञानार्थं ग्रन्थार्थकथनान्निर्दिशति। संवृत्या अभ्युपगमस्य अविरोधाद्धर्मतया न विरोधयति। चिन्तामयज्ञानार्थं युक्त्या स्थिरीकरणादुत्तानीकरोति। भावनामयज्ञानार्थं ध्यानक्रमोपदेशादुपदिशति। एतदुक्तम्—रूपादिकसांकेतिकधर्मप्रज्ञप्ते- 25
रविरोधेन धर्मतायाः प्रतिपादनम् इत्येवं सर्वधर्मालम्बने सति उष्मगतमुत्पद्यते इति निर्मित-पुष्पस्वरूपाख्यानेनैव प्रतिपादनाद्गम्भीरप्रज्ञ इति। तथा चोक्तम्—

B 148
W 166

> **प्रज्ञप्तेरविरोधेन धर्मतासूचनाकृतिः।**
> **उष्मगम्** इति॥

**युक्तरूपमिति निश्चित्य स्वयमेवात्मविकल्पस्य स्वहस्तमाह—एवमेतत्** इत्यादिना। एवं 30
च अत्रेति निर्मिताजातपुष्पवत् प्रत्येकबुद्धमार्गे शिक्षितव्यम्। साधूक्तत्वेनानुमत्यर्थमाह—

W 167 **एवमेतत् कौशिक** इत्यादि। ततः किं भवतीत्याह—**एवं शिक्षमाणः** इत्यादि। न क्वचिदुपलम्भयोगेन शिक्षते इति समुदायार्थः। **आसु भूमिषु** इति अष्टमकादिभूमिषु। क्लेशज्ञेयावरणप्रहाणभेदेन **बुद्धत्वे सर्वज्ञत्वे वा** इति द्वयमुक्तम्। तत्र शिक्षनेऽविपर्याससशिक्षया

B 149 नियमेन तथागतत्वप्रापणात्। बुद्धत्वादिशिक्षा च सर्वधर्मपरिज्ञानपूर्विकेत्याह—**यो बुद्धत्वे**

5 इत्यादि। प्रसङ्गागतं निर्दिश्योष्मानन्तरं मूर्धार्थं शिक्षते इत्याह—**योऽप्रमेयेषु** इत्यादि। विवृद्धिरुपचयः, परिहाणमपचयः। एतदुक्तम्—रूपादेः परमार्थतो न हानिवृद्ध्याद्यर्थं शिक्षणम् इत्येवं सर्वधर्मालम्बने मूर्धगतमुत्पद्यते इति। तथा चोक्तम्—

**मूर्धगं रूपाद्यहानादिप्रभावितम्** ॥ ९ ॥ इति ॥

W 168 मूर्धानन्तरं क्षान्त्यर्थं शिक्षते इत्याह—**यो न रूपस्य** इत्यादि। परिग्रहः स्वीकारः,

10 त्यजनम् उत्सर्गः। तदर्थमध्यात्मादिशून्यताबलेन न शिक्षते इत्यर्थः। पञ्चविंशतिसाहस्रिकायां चोक्तम्—"रूपस्य यावत्सर्वाकारज्ञताया अध्यात्मशून्यतां यावदभावस्वभावशून्यतामुपादाय अपरिग्रहत्वेन" इति। एतदुक्तम्—रूपादेरध्यात्मबहिर्धादिशून्यतामुपादायापरिग्रहणादिकम इत्येवं सर्वधर्मालम्बने क्षान्तिरुत्पद्यते इति। तथा चोक्तम्—

**अध्यात्मशून्यताद्याभी रूपादेरपरिग्रहात्।**

15 **क्षान्तिः** इति ॥

क्षान्त्यनन्तरमग्रधर्मार्थं शिक्षते इत्याह—**नापि कस्यचित्** इत्यादि। **परिग्रहाय** इति। परिगृह्यतेऽनेनेति परिग्रहः। विधानं प्रतिषेधश्च। तदेव दर्शयन्नाह—**नोत्पादाय नान्तर्धानाय** इति। **कस्यचिद्धर्मस्य** इति सामान्याभिधाने सत्यपि हेयरूपस्यैव ग्रहणमिति जडजनाशङ्कावारणार्थमाह—**यो न कस्यचिद्धर्मस्य** इत्यादि। **सर्वज्ञताया अपि** इति बुद्धभूमेरपि। सर्व-

20 त्रैवाभिनिवेशो बन्धनमिति भावः। यथोक्तशिक्षायां को गुण इत्याह—**एवम्** इत्यादि।

B 150 एतदुक्तम्—रूपादेरनुत्पादानिरोधाद्याकारैः शिक्षणम् इत्येवं सर्वधर्मालम्बनेऽग्रधर्मता भवतीति। तथा चोक्तम्—

W 169 **रूपाद्यनुत्पादाद्याकारैरग्रधर्मता** ॥ १० ॥ इति ॥

सर्वधर्मानुपलम्भतत्त्वैकरसत्वाद्बोधिसत्त्वस्य का सर्वज्ञतेति काक्वा प्रश्नयन्नाह—

25 **य आयुष्मन् सुभूते** इत्यादि। वाक्यावसाने कथं दानादिपारमितां विनेति शेषः।

तथ्यसंवृतिसोपानमन्तरेण विपश्चितः।
तत्त्वप्रासादशिखरारोहणं न हि युज्यते ॥

इति न्यायाद्दानादिसपरिवारा रत्नचूडोक्ता सर्वधर्मशून्यता अभ्यसनीयेत्यभिप्रायवान् परिहारार्थमाह—**एवमेतदायुष्मन् शारिपुत्र** इत्यादि। प्रत्येकबुद्धदर्शनमार्गानन्तरमैहिकामु-

30 त्रिकैर्गुणैर्युक्तो बोधिसत्त्वानां [1]दर्शनमार्गो वक्तव्य इत्याह—**प्रज्ञापारमिता आर्ये शारिपुत्र**

---

[1] B om. दर्शन°.

इत्यादि । प्रज्ञापारमिता बोधिसत्त्वानां दर्शनमार्ग इत्यर्थः । स च समासतो लौकिकस्याग्र-　W 170
धर्मस्य समनन्तरमनुपलम्भः समाधिः । प्रज्ञा चात्र ससंप्रयोगा वेदितव्या । प्रभेदतः पुन-
स्तथैव दुःखे धर्मज्ञानक्षान्तिर्धर्मज्ञानम्, अन्वयज्ञानक्षान्तिरन्वयज्ञानम् । एवं समुदये निरोधे
मार्गे च प्रतिपत्तव्यमित्येते षोडश चित्तक्षणा दर्शनमार्गः । चित्तक्षणः पुनर्ज्ञेयज्ञानोत्पत्ति-
परिसमाप्तितो ग्राह्यः । केचित्—　5

अदृष्टदृष्टेर्दृङ्मार्गस्तत्र पञ्चदश क्षणाः ।

इति वर्णयन्ति । तदयुक्तम् । तथा हि—प्रयोगमार्गे दुःखसत्याधिपतेयस्य धर्मस्य
पूर्वविचारणामधिपतिं कृत्वा प्रत्यात्मं दुःखसत्यानुभाविज्ञानमनास्रवम्, येन दुःखदर्शन-　B 151
प्रहातव्यं क्लेशं प्रजहाति । तदुच्यते दुःखे धर्मज्ञानक्षान्तिः । येन ज्ञानेन क्षान्त्यनन्तरं
विमुक्तिं साक्षात्करोति तदुच्यते दुःखे धर्मज्ञानम् । दुःखे धर्मज्ञानस्यानन्तरं दुःखे धर्मज्ञान-　10
क्षान्तौ दुःखे धर्मज्ञाने च अन्वय एव आर्यधर्माणामिति प्रत्यात्मं यत्प्रत्यक्षानुभाविज्ञान-
मनास्रवं तदुच्यते दुःखे अन्वयज्ञानक्षान्तिः । येन ज्ञानेन तामन्वयज्ञानक्षान्तिमवधारयति
तदुच्यते दुःखेऽन्वयज्ञानम् । एवमवशिष्टेष्वपि सत्येषु यथायोगं क्षान्तयो ज्ञानानि च
वेदितव्यानीति षोडशक्षणिक एव दर्शनमार्गो युक्तः । पञ्चदशक्षणिकत्वे तु मार्गेऽन्वयज्ञान-
क्षान्तेरवधारणं न स्यात् । अदृष्टदर्शनाभावेनान्त्यो मार्गोऽन्वयज्ञानक्षणो न दर्शनमार्ग इति　15
चेत्, यद्येवं दुःखादिसत्यत्रयेऽप्यपूर्वदर्शनवैकल्यादन्वयज्ञानक्षणो न दर्शनमार्ग इति द्वादश-
क्षणिक एव स्यात् । न चैतदभ्युपगतमिति यत्किंचिदेतत् । तथा चोक्तम्—

**क्षान्तिज्ञानक्षणैः सत्यसत्यं प्रति चतुर्विधैः ।**
**मार्गज्ञतायां दृङ्मार्गः सानुशंसोऽयमुच्यते ॥ ११ ॥** इति ॥

तत्र धर्मज्ञानक्षान्त्या धर्मज्ञानेन च ग्राह्यावबोधः । अन्वयज्ञानक्षान्त्या अन्वयज्ञानेन च　20
ग्राहकावबोधः । सर्वेष्वेव क्षान्तिज्ञानेष्वनिमित्तविहारी योगी वेदितव्यः । अविकलकारणस्य　W 171
प्रहातुमशक्यत्वाद्दुःखदर्शनप्रहातव्यकाले समुदयः प्रहीणः । अत एव निरोधः साक्षात्कृतः,
तस्य चान्यथानुपपत्त्या मार्गो भावितः । समुदयादिष्वप्येवम् । इत्येककार्याभिसमयादेक-
क्षणाभिसमयो महायाने दर्शनमार्गो द्रष्टव्यः । प्रतिसत्यं पुनर्विपर्यासनिराकरणेन प्रति-　B 152
वेधाभिसमयतः षोडशभिरेव क्षणैरभिसमीयते । अतः प्रतिपन्नकत्वादिव्यवस्था सुव्यवस्थे-　25
त्येके । तात्त्विकभावाभ्युपगमविपर्याससमुत्थः सत्कायादिदृष्टिगणो रागादिक्लेशसमूहश्च ।
मुक्तिस्त्वनुपलम्भदृष्टेस्तत्परिकर्मभूतत्वेन तदर्थैव परिशिष्टाकारा भावनेति यथोदितविधिना
निःस्वभावा निरात्मानः शून्या इति वा सर्वधर्मान् भावयतो भावनाबलनिष्पत्तौ

**एकस्यानंशरूपस्य प्रत्यक्षस्य सतः स्वयम् ।**
**कोऽन्यो न दृष्टो भागः स्याद्यः प्रमाणैः परीक्ष्यते ॥**　30

इति न्यायात् सर्वाकारस्वरूपप्रतिवेधकारिज्ञानमनास्रवं सर्वधर्मविषयमुत्पद्यते । अतः
प्रतिवेधाभिसमयादेक एकक्षणाभिसमयो दर्शनमार्ग इत्यपरे । ननु एकस्मिन्नेव क्षणे सर्वाकारस्य

प्रतिविद्धत्वादाकारान्तरेण दर्शनमार्गे भावनान्तरानुपपत्तेः प्रतिपन्नकत्वादिव्यवस्था कथमिति श्रेयोनिर्याणमार्गानुसारिणां मतिः । स्यादेतत्,

नो चेद्भ्रान्तिनिमित्तेन संयोज्येत गुणान्तरम् ।
शुक्तौ वा रजताकारो रूपसाधर्म्यदर्शनात् ॥

5 यावता केनचिद्भ्रान्तनिमित्तेन समारोपितमाकारान्तरं विद्यते इति तद्विपर्यासप्रभवक्लेशसहायमुन्मूलयितुमाकारान्तरेण भावनान्तरसंभवादष्टमकादिव्यवस्था सुस्थिता । अनेनैव च अभिप्रायेण न्यायबलादेकक्षणाभिसमयोऽपि दर्शनमार्गः षोडशक्षणाभिसमयत्वेनोक्तः । ततश्च सर्वाकारस्वरूपग्राहित्वेऽपि विज्ञानस्य यस्मिन्नंशे अभ्यासपाटवादिना समारोपिताकारनिराकरणे सामर्थ्यम्, तत्रैव तस्य तत्प्रतिबद्धावरणप्रहाणात् प्रामाण्यं नान्यत्र, क्षणिकत्वा- B 153
10 दिवत् । एवमार्याणां पृथग्जनेभ्यः को विशेषः इत्यपि न वक्तव्यम् । यावन्मात्राकारनिराकरणेन तेषां ज्ञानं गतभ्रान्तिनिमित्तम्, तावन्मात्रेणैतेषां विशेषादित्यलमतिप्रसङ्गेन । W 172 **कुतो गवेषितव्या** इति कस्य निर्देशात्प्रतिपत्तव्या । भावयितव्येत्यर्थः । प्रसङ्गागतवचनाच्च[1] निरूपणादिद्वारेण तथागतानुभावादेवान्यः कश्चित् क्वचिन्निर्दिशति । मुख्यतः पुनर्भगवता प्रज्ञापारमितोपदेशे सुभूतिरेवाधिष्ठित इत्यभिप्रायवानाह—**प्रज्ञापारमिता कौशिक** इत्यादि ।
15 **परिवर्तात्** इति निर्देशात् । विस्मृततथागताधिष्ठानत्वेनाह—**कस्यैष** इत्यादि । आर्यसुभूतेरन्यथा पूर्ववत्सामर्थ्यमपश्यन्नाह—**तथागतस्य** इत्यादि । तथागतगौरवेणात्मनो निरभिमानतां प्रकटयन्नाह—**यत् कौशिक** इत्यादि ।

W 173 इदानीमाकारकथनेन दर्शनमार्गं प्रतिपादयितुमाह—**यदपि** इत्यादि ।

प्रज्ञापारमिता ज्ञानमद्वयं सा तथागतः ।
20 —प्रज्ञापारमितापिण्डार्थः—१

इति वचनात्प्रज्ञापारमिता अत्र तथागतः ।

यः प्रतीत्यसमुत्पादः शून्यता सैव ते मता ।
—चतुःस्तव, लोका०—२०

इति न्यायेन रूपादितथता रूपादिशब्देनोक्ता । आधारभावोऽपि विवक्षापरतन्त्रतया
25 अवधिभावेनेति । अतोऽयमर्थो भवति—रूपादितथतायामाधारभूतायामाधेयभावात् न तथागतः पर्येषितव्यः । **नाप्यन्यत्र** इति । अस्योपलक्षणार्थत्वादिदमपि ज्ञेयम्—न तथागते B 154 रूपादितथता नाप्यन्यत्रेति । इदं च पञ्चविंशतिसाहस्रिकायां स्पष्टमेवोक्तम्—"न कौशिक रूपतथतायां तथागत उपलभ्यते । न तथागते रूपतथता । न चान्यत्र रूपतथतायास्तथागतो विद्यते । न च तथागतादन्यत्र रूपतथता" इत्यादि । तदुभय-
30 व्यतिरिक्तापरधर्माभावात् कथं रूपादावन्यत्र च प्रज्ञापारमिता न गवेषितव्येति तत्कस्य W 174 हेतोः इत्याशङ्क्याह—**तथा हि** इत्यादि । अयमत्र वाक्यार्थः—रूपादि तात्त्विकाधारभूतं न प्रज्ञापारमिताविशुद्धता, विपर्यस्तत्वात् । अतो रूपाद्यविशुद्धमाधारात्मकं विशिष्टं कारणं

१ W °वचनार्थं.

सुविशुद्धस्य तथागतस्य न भवतीति न रूपादौ प्रज्ञापारमिता गवेषितव्या । तद्व्यतिरिक्तान्य-
धर्मस्य तात्त्विकत्वे तथैव विपर्यासः, इति नाप्यन्यत्र, किं तु रूपादीनामयथार्थताप्रतिपत्तित
एवेति । ततश्चेदमुक्तं भवति–परमार्थतयैकत्वेन रूपादितथताबुद्धयोराधाराधेयभावो न विद्यते
इति । अतस्तयोः पर्यायेणावस्थितेरननुज्ञानमित्येवं सर्वधर्मालम्बने दुःखे धर्मज्ञानक्षान्ति-
रुत्पद्यते इति । एकाकारश्रवणे सति उद्घटितज्ञतया दुःखे धर्मज्ञानादिक्षणचतुष्टयस्याकारान् 5
कथयन्नाह–**महापारमितेयम्** इत्यादि । सम्यङ् निर्देशेनानुमत्यर्थमाह–**एवमेतत्कौशिक** इत्यादि ।

तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः । W 175

इति न्यायाद्रूपादिकारणमहत्त्वाद्यनुपपत्तौ तदालम्बननिर्जातायाः कथं प्रज्ञापारमिताया
महत्त्वादिकमिति तत्कस्य हेतोः इत्याशङ्क्याह–**रूपमहत्तया हि** इत्यादि । उत्पादस्थिति-
विनाशानां तत्त्वेनासत्त्वाद्रूपादीनां महत्ता । विकृतिलक्षणरूपादीनामविद्यमानत्वेन 10
परिच्छेदकप्रमाणानुपलम्भादप्रमाणता । रूपिणामापरमाणुगतं संस्थानं परिमाणम् । अरूपिणां B 155
तल्लक्षणं परिमाणम् । तस्याकाशवद्रूपादीनां नैःस्वाभाव्येनानुपलम्भादपरिमाणता । मायो-
पमत्वेन रूपादीनां पूर्वान्तापरान्ताभावादनन्तता । कारणमहत्त्वादिना कार्यमहत्त्वादिकमावेद्य
तत्राभिनिवेशो बन्धनमित्याह–**एवं महा** इत्यादिना । **नाभिनिविशते** इति सर्वत्र संबन्धः । W 176
ततः किं भवतीत्याह–**तस्मात्** इत्यादि । एतदुक्तम्–रूपादीनां धर्मधातुस्वभावतया महत्ता । 15
तथैव तेषामप्रमाणता । पूर्ववदाकाशापरिमाणतया तेषामपरिमाणता । रूपादेर्निःस्वभावत्वेन
शाश्वतोच्छेदाद्यन्ताभावादनन्तता । इत्येवं सर्वधर्मालम्बने यथाक्रमं दुःखे धर्मज्ञानम्, दुःखेऽ-
न्वयज्ञानक्षान्तिः, दुःखेऽन्वयज्ञानम्, समुदये धर्मज्ञानक्षान्तिरुत्पद्यते इति । अनन्ततार्थमेव
समुदये चतुराकारप्रतिषेधमुखेन निर्दिशन्नाह–**आरम्बणानन्ततया** इत्यादि । एतद्ग्रहणवाक्यं
विवृण्वन्नाह–**कथं पुनः** इत्यादि । **अन्तः** पूर्वान्तो हेतुः । सत्ताकालो **मध्यम्** । पर्यवसानम् 20
अपरान्तो **विनाशः** । **ततः** इति पूर्वान्ताद्यभावात् । उपसंहरन्नाह–**अनेन कौशिक** इत्यादि । W 177
**पर्यायो** निर्देशः । एवं प्रथमारम्बणानन्ततया हेत्वाकारं प्रतिषिध्य समुदयाकारप्रतिषेधार्थं
द्वितीयारम्बणानन्ततां कथयन्नाह–**पुनरपरम्** इत्यादि । पूर्वान्तापरान्तरहितत्वेनानन्ताः ।
सत्ताकालः परि समन्तात् अन्तद्वयभावेन क्षिप्तत्वात् पर्यन्तः, तदभावादपर्यन्ताः । तदेवाह–
**न तेषाम्** इत्यादिना । ननु यदन्वयव्यतिरेकानुविधायि यत्कार्यं तत्तस्य हेतुरिति पूर्वान्तो 25 B 156
दृश्यते । अन्तक्षणदर्शिनां निश्चयादपरान्तोऽपि । प्रतीयमानसत्ताकं तु मध्यं नितरामेवेति ।
तत्कथमादिमध्यपर्यवसानानि नोपलभ्यन्ते इति तत्कस्य हेतोः इत्याशङ्क्याह–**नोपलभ्यते ।
रूपस्य हि** इत्यादि । साकारनिराकारज्ञानाभ्याम् । न्यायत इति शेषः । **अनेनापि** इति न
केवलं पूर्वोक्तपर्यायेणेत्यर्थः । आरम्बणानन्ततामेवं द्विधा निर्दिश्य सत्त्वानन्ततां वक्तुमाह–
**सत्त्वोऽनन्तोऽपर्यन्तः** इति । तथैव तत्कस्य हेतोः इत्याशङ्क्याह– **न हि** इत्यादि । पूर्वव- 30 W 178
**दत्राप्यध्याहारः । प्रथमसत्त्वानन्ततया प्रभवाकारप्रतिषेधः** कृतः । अनादिकालाभिसंवर्धित-
भावाभिनिवेशेन यथोक्तसत्त्वानन्ततामनवगच्छन् द्वितीयसत्त्वानन्ततां प्रतिपादयितुमाह–**कथम्**

इत्यादि। **कथमिति** क्षेपे। नैव पूर्वान्ताद्यभावेन सत्त्वानन्ततया **अनन्तपारमिता**। किं तर्हि संख्यादिसंबन्धादिति मतिः। विदिताभिप्रायत्वेनाह-**न हि कौशिक** इत्यादि। **गणनायोगेन वा** इति। एकत्वादिसंख्या गणना, तया सह अयोगोऽसंबन्ध इत्यकारप्रश्लेषो द्रष्टव्यः। संख्यातीतत्वेनेत्यर्थः। **गणनाबहुत्वेन वा** इति। यथा षष्टिस्थानगता संख्या 5 असंख्योच्यते, तद्वदनन्तसंख्यायोगेन गणनाप्राचुर्येणेति यावत्। यद्युचितरूपेणापि प्रकार-द्वयेन सत्त्वानन्तता न भवति, केन पुनस्तर्हि प्रकारेणेत्याह-**कथं तर्हि** इत्यादि। तद्वचनेन प्रतिपादयितुमाह-**तत् किं मन्यसे** इत्यादि। तथागतानुभावेन विदितधर्मतत्त्वस्वरूपत्वादाह-**नैतत्** इत्यादि। स्वरूपधारणाद्धर्मस्य न सत्त्व इत्यधिवचनम्। तत्त्वतो हेतुमद्धर्मस्यासत्त्वात्। निर्विषयस्य प्रतिषेधासंभवान्नाधर्मस्यापि। कथं तर्हि सत्त्व इति व्यवहारोऽतिप्रतीत इत्याह-10 **आगन्तुकमेतत्** इत्यादि। हेतुसमुदयप्रभवप्रत्ययाकारनिषेधादागन्तुकमित्यादि पदचतुष्टयम्। **प्रक्षिप्तम्** अध्यारोपितम्। संवृतिमात्रमिति यावत्। एवं हेत्वादिनिषेधे अहेतुकसत्त्वास्तित्वं कदाचित् प्रतिपद्यते इति पृच्छन्नाह-**तत् किं मन्यसे** इत्यादि।

B 157

W 179

नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्।
अपेक्षातो हि भावानां कादाचित्कत्वसंभवः॥

15 इति न्यायेन अनित्यवस्तुप्रतिभासादाह-**नो हीदमार्यसुभूते** इति। तद्वचनमिदानी-मनन्ततार्थे योजयन्नाह-**यत्र** इत्यादि। यत्र संवृतिमात्रे न काचित्तात्त्विकी सत्त्वपरिदीपना कृता, तत्र का सत्त्वानन्तता? गणनादिसंबन्धात्। नैव काचित्, गण्यमानस्यैवासत्त्वादिति मतिः। तदेव कथयन्नाह-**सचेत् कौशिक** इत्यादि। **अनन्तविज्ञप्तिघोषेण** इति अनन्त-सत्त्वधातुविज्ञापनशब्देन। **गम्भीरनिर्घोषेण**-इति दीर्घकालानुबन्धिना। एतच्च पदद्वयं 20 स्वरेणेत्यस्य विशेषणम्। स्वरश्च ताल्वादिव्यापारो ग्राह्यः। **कल्पानपि** इति। अपिशब्दान्न केवलं स्वल्पकालम्। तत्रेति संवृतिमात्रे। अथवा वाचि सत्यामिति भावः।

W 180

विवक्षापरतन्त्रत्वान्न शब्दाः सन्ति कुत्र वा।
तद्भावादर्थसिद्धौ तु सर्वं सर्वस्य सिध्यति॥

B 158

इत्यभिप्रायवानाह-**नो हीदमार्यसुभूते** इति। ननु यथावस्तुशब्दप्रयोगाद्विवक्षा-25 परतन्त्रत्वासिद्धेः कथं नैवेदमिति तत्कस्य हेतोः इत्याशङ्कयाह-**आदिशुद्धत्वात्** इत्यादि। प्रथमत एव कारणानुविधानादिदोषैरदुष्टत्वादादिशुद्धत्वम्। निर्हेतुकस्वरूपधारणदोषवैकल्या-दादिपरिशुद्धत्वम्। एतदुक्तम्-सहेतुकनिर्हेतुकसत्त्वस्यासत्त्वे कथं यथावस्तुशब्दप्रयोगो येन विवक्षापरतन्त्रत्वासिद्धिः इति। अन्ये त्वन्यथा व्याचक्षते-व्यवहारार्थं समयः क्रियते न व्यसनि-तया। व्यवहारश्च सामान्यलक्षणस्यावस्तुत्वात् स्वलक्षणेनाध्यवसायाद्भवति। अतो यत्र स्वलक्षणे 30 संकेतः कृतः, न तेन व्यवहारः, तस्य तत्कालाननुपायित्वात्, इति शब्दवाच्यकल्पनाकलङ्का-नङ्कितरूपत्वादादिविशुद्धत्वम्। येन च व्यवहारः, न तत्र संकेतः कृतः, तस्य प्राग्दृष्टत्वादिति

तथैव दोषाननुलिप्तत्वादादिपरिशुद्धत्वम्। तस्माद्व्यवहारार्थं यथावस्तुशब्दप्रयोगासंभवान्न विवक्षापरतन्त्रत्वासिद्धिरिति। एवं हि तत्त्वतो वाच्यत्वं निराकृतं न तु वस्तुरूपम्। ततश्चोद्भावनासंवृत्या गणनायोगादिना सत्त्वानन्तता परिदीपितेति शक्राभिप्राय एवं व्याख्यात इत्यपरेणानुमन्यते। **अनेनापि** इति। न केवलं पूर्वोक्तसत्त्वानन्तताप्रकारेणेत्यर्थः। प्रकारान्तरासंभवेनावधारयन्नुपसंहारार्थमाह—**एवं च पुनः** इत्यादि। चशब्दोऽवधारणे। द्वितीयसत्त्वानन्ततया 5 प्रत्ययाकारनिषेधः कृतः। न भगवतां धर्मदेशना विकलेत्याह—**अथ खलु सेन्द्रका** इत्यादि। ब्रह्मा सहालोकधातुनायकः। प्रजापतयो लोकपालाः। ऋषयो विश्वामित्रप्रभृतयः। कियन्मात्रेण यथोक्तदेशनया ग्राह्यग्राहकनैरात्म्यं प्रतिविध्य उपेत्य दानमुदानम् अधिगमहर्षवचनम्, **उदानयन्ति स्म** उदीरितवन्तः, तदेवाह—**अहो धर्मः** इत्यादिना। कल्याणमित्रतया आर्यसुभूतिं शक्रादयः स्तुतवन्त इत्याह—**यस्तथागतस्य** इत्यादि। प्रादुर्भवत्यनेन अस्मादिति वा 10 प्रादुर्भावो दर्शनमार्गः। सुभाषितेनेहेति निर्दोषकथनपरेण संबन्धतः सूच्यते। स्वलक्षणतो देश्यते। सामान्यलक्षणतः प्रकाश्यते। तदुभयतः प्रभाव्यते। तथागतानुभावादेव समुदये द्वितीयक्षणाकारं च भावितवन्त इत्याह—**तथागतं तम्** इत्यादि। नियमेन तथागतपदप्राप्तेरिति मतिः। **अद्याग्रेण** इति अद्यारभ्येत्यर्थः। **अनया** इति दर्शनमार्गात्मिकया। **अविरहितः** प्राप्तापरिहाणितः। **विहरिष्यति** अनधिगतार्थाधिगमयोगतः। एतदुक्तम्—प्रज्ञापारमितायां स्थितस्य 15 वस्तुनो धर्मधातुस्वभावतया रूपादीनां तथागतत्वावधारणमित्येवं सर्वधर्मालम्बने समुदये धर्मज्ञानमुत्पद्यते इति। बोधिसत्त्वावस्थायामस्यार्थस्यानुभूतपूर्वत्वेन स्वहस्तयन्नाह—**एवमेतत्** इत्यादि। तदेवानुभूतपूर्वत्वमाह—**यदा** इत्यादिना। राज्ञो नगरी राजधानी। अन्तरापणमापणकवीथी। 'माणव' इति कुलपुत्रवत्सामान्यामन्त्रणाभिधानम्। तदानीमेवं वा भगवतः संज्ञा। अनागतः कालः अनागतोऽध्वा। असंख्येयैः कल्पैरिति षष्टिस्थानगता संख्या 20 असंख्योच्यते। तत्संख्यावच्छिन्नैः कल्पैरित्यर्थः। शास्तृत्वसंपदा विशेषयन्नाह—**शाक्यमुनिः** इत्यादि। शाक्यकुले जन्मग्रहणात्। सर्वाकारकुशलेभ्यः संयमितात्मभावत्वेन कायवाङ्मनोमौनेययोगाच्च शाक्यमुनिः। मौनेययोगेन शास्तृत्वसंपदो विबन्धकदेवपुत्रमारभङ्गं दर्शयति। तद्भङ्गेन प्रथमतः शास्तृत्वसंपदो लाभात्। **तथागतोऽर्हन् सम्यक्संबुद्धः** इत्येभिस्त्रिभिः पदैः शास्तृत्वसंपदं दर्शयति। सा च शास्तृत्वसंपत् द्विधा—वक्तृत्वलक्षणा प्रतिपत्तृत्वलक्षणा 25 च। तत्र यथैव ते धर्मा व्यवस्थितास्तथैव गदनात्तथा गत इत्यनेन अविपरीतधर्मदैशिकत्वात् वक्तृत्वसंपदुक्ता। प्रतिपत्तृत्वलक्षणा च ज्ञानप्रहाणसंपद्भेदेन द्विविधा। तत्र अरीन् हतवानर्हन् इत्यनेन प्रहाणसंपदुक्ता। अरयश्च रागादयः क्लेशाः सर्वकुशलधर्मोपघातार्थेन। इयं च प्रहाणसंपत्पूर्वमुक्ता, तत्पूर्वकत्वाज्ज्ञानसंपदः। सम्यक् अविपरीतं समन्ताद्धर्मावबोधात् सम्यक्संबुद्धः इत्यनेन ज्ञानसंपदुक्ता अविपरीतसर्वज्ञज्ञानाधिगमयोगात्। तदेवमविपरीतधर्म- 30 दैशिकत्वेन सर्वक्लेशप्रहाणेन सर्वाकारधर्मावबोधेन च शास्तृत्वसंपदसाधारणा परिपूर्णा च भगवतः कथिता। तथा हि—न बाह्यानामविपरीतधर्मदैशिकत्वप्राप्तिः, सर्वक्लेशाप्रहाणात्।

W 181 B 159 W 182 W 183 B 160

१ W °कत्वमस्ति.

तस्मादेते न भूतशास्तारः। श्रावकप्रत्येकबुद्धास्तु यद्यपि भूतशास्तारः सर्वक्लेशप्रहाणात्, न तु सर्वाकारसर्वधर्मशास्तारः सर्वाकारसर्वधर्मानवबोधात्। भगवान् पुनर्यथोक्तन्यायेन भूतशास्ता सर्वाकारशास्ता चेति प्रतिपादितम्। येन सा शास्तृत्वसंपल्लभ्यते तद्दर्शयति—**विद्याचरणसंपन्नः** इति। अनेन शास्तृत्वसंपदः प्राप्तिहेतुं दर्शयति। तत्र विद्या सम्यग्दृष्टिः।
B 161 5 सम्यक्संकल्पादीनि शेषाण्यङ्गानि चरणम्। यतः सम्यग्दृष्ट्या तत्त्वं दृष्ट्वा सम्यक्संकल्पादिभिश्चरणभूतैर्गच्छति। अन्यथा अपश्यन्नचरणो गन्तुमसमर्थ इति भावः। ताभ्यां संपन्नो युक्तः। अधिप्रज्ञं वा शिक्षा विद्या। अधिचित्तमधिशीलं च शिक्षा चरणम्। प्रज्ञायाः पूर्वपरिकर्मभूतत्वेन
W 184 पुरश्चरणं चरणमिति कृत्वा। विद्यायास्तु पूर्वग्रहणं तत्परिशुद्ध्या शीलसमाध्योः परिशुद्धिनः। तथा हि प्रज्ञया चक्षुषेव पश्यंस्ताभ्यां च शीलसमाधिभ्यां चरणाभ्यामिव गच्छन्
10 गन्तव्यमनुप्राप्नोतीति विद्याचरणशब्देन तिस्रः शिक्षा निर्दिश्यन्ते। सा च तादृशी द्विविधापि शास्तृत्वसंपत्। तां **सुगतः** इत्यनेन आचष्टे। तथा हि—लोकोत्तरेण मार्गेण शोभनं ज्ञानप्रहाणसंपदं गतः सुगतः सुरूपवत्। अपुनरावृत्त्या वा सुष्ठु गतः सुगतः सुनष्टज्वरवत्। निःशेषं वा गतः सुगतः सुपरिपूर्णघटवत्। अर्थत्रयं चैतद्बाह्यवीतरागशैक्षाशैक्षेभ्यो विशेषणार्थम्। तथा हि—आत्मविपर्यासेन बाह्यवीतरागा न शोभनं गताः। शैक्षास्तु संसारे
15 पुनर्जन्मग्रहणान्न सुष्ठु गताः। अशैक्षाः पुनः सर्वज्ञेयेषु ज्ञानविबन्धान्न निःशेषं गताः। अस्याश्च शास्तृत्वसंपदो द्विविधं कर्मेति प्रथमं भव्याभव्यलोकावलोकनं कर्म दर्शयति—**लोकविद्** इति। भव्याभव्यलोकपरिज्ञानादसौ लोकविदित्युच्यते। तथा हि—भगवान् त्रिःकृत्वो रात्रेस्त्रिःकृत्वो दिवसस्य सम्यग् बुद्धचक्षुषा लोकं व्यवलोकयति—को हीयते को वर्धते इत्यादिभिराकारैः द्वितीयं कर्म दर्शयति—**अनुत्तरः पुरुषदम्यसारथिः** इति।
20 भव्याभव्यांल्लोकान् व्यवलोक्य भगवान् ये पुरुषा एव दम्या दमनार्हा दमयितुं वा शक्या
B 162 भव्यास्तान् विनयति। तेषां सारथिभावगमनात्। विनयनं हि सारथिभावः, असन्मार्गादपनीय सन्मार्गे प्रतिष्ठापकत्वात् गुणविशेषाधायकत्वाच्च, अश्वादिसारथिवत्। अनुत्तरग्रहणं सारथिभावविशेषणार्थम्। दुर्दमानामपि केषांचित् पुरुषदम्यानां तीव्ररागद्वेषमोहमानानामार्यसुन्दरानन्दाङ्गुलीमालोरुबिल्वाकाश्यपमहाराजकप्फिणप्रभृतीनां विनायक[2] इति प्रदर्श-
25 नार्थम्। तच्च भव्यविनयनं कर्म यत्र स्थितं तद्दर्शयति—**शास्ता देवानां च मनुष्याणां च** इति। यद्यपि भगवान् न विशेषेण सर्वसत्त्वानां स्वर्गापवर्गमार्गोपदेशेन शास्ता, तथापि यत्र त्वार्यसत्यदर्शनं श्रामण्यफलप्राप्तिश्च प्रज्ञायते, तत्र मुख्यतो यथार्थानुशासनं भगवतः शास्तृकर्मस्थितिः। तस्य च देवमनुष्या भाजनम्। अतः शास्ता देवानां च मनुष्याणां चेत्युच्यते। यत्रैतद्गुणमाहात्म्यं स **बुद्धो भगवान्** इति स्वरूपकथनम्। तत्र सकलपदार्थाव-
W 185 30 बोधेन प्रकृष्टा बुद्धिरस्येति बुद्धः। अकारप्रत्ययोऽत्र अर्शआदेराकृतिगणत्वेन कार्यः। प्रकृष्टा च बुद्धिर्नवभिराकारैः—सर्वज्ञज्ञानेन, अयत्नज्ञानेन, अनुपदिष्टज्ञानेन, सवासनक्लेशा-

---

१ B om. सर्वधर्म°. २ W दमक.

वरणप्रहाणज्ञानेन, निखिलज्ञेयावरणप्रहाणज्ञानेन, सर्वाकारसर्वसत्त्वार्थकरणशक्त्या, करुणा-संपत्त्या, अक्षयतासंपत्त्या, अतुलतासंपत्त्या च । समग्रैश्वर्यादियोगेन भगवान् । पुनरपि ते देवपुत्रास्तथागतानुभावेन समुदये तृतीयक्षणाकारं प्रतिपादितवन्त इत्याह—**आश्चर्यम्** इत्यादि । तत्त्वेनानुत्पादरूपापि संवृत्या प्रज्ञापारमिता सर्वज्ञतायाः समुत्पादिकेति सर्वबालजना-तिक्रान्तत्वादाश्चर्यम् । श्रावकादिभ्यो विशेषतः **परमाश्चर्यम्** । यावद्वचनेन दुःखे धर्म- 5 B 163 ज्ञानक्षान्त्यादेरुपादानम् । **सर्वज्ञताया** इति समुदयेऽन्वयज्ञानक्षान्तेः । **आहारिका** इति अनुद्ग्रहानुत्सर्गयोगेनोत्पादिका । **अनुपरिग्राहिका** इति सर्वान्तरायकरधर्मानवकाशयोगेनो-पस्तम्भकारिका । तथा च मध्यमायां जिनजनन्यामुक्तम्—"आश्चर्यं भगवन् यावत् प्रज्ञापारमिता सर्वाकारज्ञताया आहारिका अनुपरिग्राहिका, अनुद्ग्रहानुत्सर्गयोगेन" इत्यादि । एतदुक्तम्—धर्मधातुस्वभावतया प्रज्ञापारमितायां स्थितस्य बोधिसत्त्वस्य सर्वधर्माणां नोद्ग्रह- 10 त्यागभावनादिकमिति सर्वधर्मालम्बने समुदयेऽन्वयज्ञानक्षान्तिरुत्पद्यते इति ॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां

शक्रपरिवर्तो नाम द्वितीयः ॥



## ३ अप्रमेयगुणधारणपरिवर्तस्तृतीयः ।

B 164 W 187 समुदये चतुर्थक्षणाकारं प्रतिपादयितुं प्रत्यात्मवेद्यत्वेन कांश्चित्कामावचरादीन् देवपुत्रान् साक्षिणः कृत्वा कांश्चिदामन्त्रितवानित्याह—**यो हि** इत्यादि । कुलपुत्रः कुलदुहितेति शब्दः पूजावचनः । स्त्रीपुरुषयोरुपादानं पण्डोद्धृतमुष्कादीनामधिगमनिरासज्ञापनार्थम् ।
5 वर्णविशेषानङ्गीकरणं चातुर्वर्ण्यविशुद्धिज्ञापनार्थम् । पुत्रदुहित्रभिधानं[1] प्रव्रजितजनप्रतिरूपा-
W 188 लापज्ञापनार्थम् । कुलग्रहणमन्वयसंपन्नस्य सद्धर्मेऽधिकारज्ञापनार्थम् । पुनर्वाग्रहणमुपपद्यापर-पर्यायवेदनीयभागधेयापराधादकुलीनस्यापि भव्यस्य अत्राधिकारज्ञापनार्थमित्यार्यविमुक्तिसेनः । इमामिति समुदयेऽन्वयज्ञानात्मिकाम् । तत्र मारो देवपुत्रमारः कामदेवः । तत्साक्षिका देवपुत्रा मारकायिका देवताः । समुत्पन्नावतारदर्शनात् **अवतारप्रेक्षिण्यः** । अनागतावतार-
10 पर्येषणात् **अवतारगवेषिण्यः** । अवतारो दोषः, छिद्रमिति यावत् । **नापि** इति । अपिशब्दः पूर्वापेक्षया समुच्चये । मनुष्यगतिसंगृहीताः सत्त्वा मनुष्याः । यक्षादयोऽमनुष्याः । विद्यमाने-ऽप्यायुषि कथंचित्प्रत्ययसांनिध्यान्मरणं विषमापरिहारेण कालक्रिया । सर्वं चैतन्न भवति । मैत्र्यादिभिः सुपरिभावितचित्तसंततित्वादिति मतिः । तथा हि मध्यमायां जिनजनन्यामुक्तम्—"मैत्रीकरुणामुदितोपेक्षाणामनुपलम्भयोगेन भावितत्वान्मनुष्यामनुष्याद्यनवतारलाभेन" इत्यादि ।
15 एतदुक्तम्—नित्यस्वभावाधिमोक्षपूर्वकं चतुरप्रमाणं विभावनीयम्[2], इत्येवं सर्वधर्मालम्बने
B 165 समुदयेऽन्वयज्ञानमुत्पद्यते इति । अत एवोक्तमार्यविमुक्तिसेनेन—अष्टमे हि दर्शनमार्गक्षणे प्रयोजनं बोधिसत्त्वस्याप्रमाणैः, इतरथा हि नवमे क्षणे सत्त्वधातुनिरपेक्षो निरोधे प्रपतेत्[3] इति ।
W 189 निरोधे प्रथमक्षणाकारार्थमाह—**पुनरपरम्** इत्यादि । संप्रस्थिताः प्रणिधानाद्याशयेन प्रवृत्ताः । इयमिति दर्शनमार्गप्रतिपादिका । तं कुलपुत्रमिति अधिगतनवमक्षणदर्शनमार्गम् । श्रवणाद्यर्थं
20 समीपीभवनमुपसंक्रमितव्यम् । **मंस्यन्ते** ज्ञास्यन्ति । स एव सुपरिभावितत्वात् सर्वशून्यताना-मधिगतार्थत्वेन परीत्तोपदेशेन शक्त इति मतिः । **उद्गृह्णतः** इत्यादि । उत्तरोत्तरविशेषाधिगम-हेतुभूतं विशिष्टमुद्ग्रहणादि कुर्वतः इत्यर्थः । **श्रोष्यन्तीमां प्रज्ञापारमिताम्** इति पूर्वेण संबन्धः । श्रवणं च निरोधसत्याभिसमयाधिपत्यात्संवृतिदेशनाश्रवणाकारप्रतिभासनम् । तदभिसमया-हितशक्तिकस्य वा व्युत्थितस्यान्तिकादिति वेदितव्यम् । एकानुशंसाकथनेन निरोधाकारं
25 निर्दिश्य अपरानुशंसाकथनेन तमेवाकारं द्रढयन्नाह—**न च खलु** इत्यादि । चशब्दः समुच्चये,
W 190 न केवलं पूर्वोक्तोऽनुशंसः, अयमपर इत्यर्थः । ग्रामाद्धनुःपञ्चशतातिक्रान्तं स्थानमरण्यं गतः संप्राप्तः । एकवृक्ष एव यक्षाद्यधिष्ठितत्वेन भयहेतुः । अतस्तन्मूलं **वृक्षमूलम्** । मनुष्यादिरहितं गृहं शून्यागारम् । अच्छन्नमभ्यवकाशम् । महाजनो येन गतः स पन्थाः । उत्पथो यथोक्त-विपरीतो मार्गः । अरण्यादूर्ध्वमटवी । तत्र तत्र अरण्यादावुपसंक्रामतो गच्छतः । तदेव
30 चतुर्भिरीर्यापथैः कथयन्नाह—**चंक्रम्यमाणस्य** इत्यादि । निपन्नः शयितः । अनिष्टोपनि-

---

१ W reads this sentence after the next. २ W विभावितोऽयम्. ३ B यतेत् for प्रपतेत्.

पाताशङ्का भयम् । तत्प्रतीकाराप्रतिपत्तिः स्तम्भितत्वम् । अभूत्वा भावात् भविष्यति । B 166
प्रबन्धप्रवृत्त्या उत्पत्स्यते । नेति पूर्वेण संबन्धः । सर्वशून्यतानां सुपरिभावितत्वादिति
मतिः । अन्यत्राप्युक्तम्—"शून्यतापरिगतो बोधिसत्त्वः सर्वभयविगतो भवति" इत्यादि ।
एतदुक्तम्—रूपादेर्निजरूपा प्रकृत्येव शून्यतेत्येवं सर्वधर्मालम्बने निरोधे धर्मज्ञानक्षान्ति-
रुत्पद्यते इति । निरोधे द्वितीयक्षणार्थमाह—**अथ खलु चत्वारः** इत्यादि । महाराजानो 5
विरूढकाद्याः । तात्त्विकयानत्रयसत्त्वोपलम्भमन्तरेणापि संवृत्या श्रावकादियानत्रये सत्त्वान्
विनयतीत्याश्चर्यम् । अनेन च सत्यद्वयसमाश्रयेण सर्वाकारसत्त्वार्थप्रतिपादनेन समर्थकारण-
निर्देशेन प्रज्ञापारमितोद्ग्रहणादीनां बुद्धत्वमेव फलमात्रेदितमिति ग्राह्यम् । ततश्चैतदुक्तम्—
धर्मधातुपरिणामितकुशलमूलानां फलं तथागतत्वस्य प्रापणमित्येवं सर्वधर्मालम्बने निरोधे
धर्मज्ञानमुत्पद्यते इति । **वयम्** इत्यादि । एतच्च प्रज्ञापारमिताया माहात्म्यज्ञापनाय, आत्मनः 10 W 191
शासनोपकारकत्वज्ञापनाय भगवति कृतज्ञत्वज्ञापनाय चोक्तम्—दृष्टधर्मवेदनीयमुपपद्यवेदनीय-
मपरपर्यायवेदनीयं च त्रिविधमशुभं कर्म इति तत्कृतोपद्रवप्रतीकारेण **रक्षावरणगुप्तयो** यथाक्रम-
मुक्ताः। अथवा दैवी विपत् यत्राशुभस्यैव व्यापारोऽवगम्यते, नापरस्य। यथा मरकदुर्भिक्षवज्रा-
शन्यादिपातः। मानुषी विपत् यत्र प्राणिनां व्यापारः प्रतीयते, विद्यमानोऽपि दैवस्य नावगम्यते B 167
यतो न कर्मणा विना किंचिदप्यस्ति फलम् । यथा निष्पन्नेऽपि सस्यादौ परचक्रोपद्रवकृतो 15
दुर्भिक्षादिः । दैवमानुषी विपत् यत्रोभयस्य व्यापारः प्रतीयते । एतावच्च कर्म दैवं मानुषं
च । यथोक्तम्—दैवमानुषं हि कर्म लोकं यापयति इति । तत्प्रतीकारेण रक्षावरणगुप्तयो
यथाक्रममुक्ताः । **संविधास्यामः** इति करिष्यामः । निरोधे तृतीयक्षणार्थं संबन्धमारचयन्नाह— W 192
**आश्चर्यं भगवन्**[1] इत्यादि । इमाननन्तरोक्तान् इयतो रक्षावरणगुप्तिसंख्यावच्छिन्नान् दृष्ट-
धार्मिकान् प्रत्युत्पन्नजन्मसंगृहीतान् गुणाननुशंसान् प्रतिलभते प्रयोगावस्थायाम् । परिगृह्णाति 20
पृष्ठावस्थायाम् । एवं संबन्धमावेद्य आकारार्थं प्रश्नयन्नाह—**किं पुनः** इत्यादिना । किं पुनः
प्रज्ञापारमितायामुद्गृहीतायां दानाद्याः पञ्च पारमिताः संगृहीता भवन्तीति वक्तव्ये षट्पार-
मितावचनं मुख्यया प्रज्ञापारमितया गौणस्वभावाया अपि प्रज्ञापारमितायाः संग्रहादित्यभि-
प्रायेणोक्तम् । सर्वधर्माविपरीतावबोधे हि मुख्या प्रज्ञापारमिता जायते । अतस्तयैव सर्व-
व्यवदानधर्माणां संग्रहादित्यभिप्रायवान् भगवानाह—**एवमेतत्** इत्यादि । एतदुक्तम्—प्रज्ञा- 25
पारमितया सर्वाकारप्रतिपक्षाणां संग्रहः इत्येवं सर्वधर्मालम्बने निरोधेऽन्वयज्ञानक्षान्तिरुत्पद्यते
इति । निरोधे चतुर्थक्षणाकारं निर्दिशन्नाह—**पुनरपरम्** इत्यादि । **शृणु** इत्यादि व्याख्यातम्।
अथवा, यस्मादादित एव भक्तिहेतुतया तावत्कल्याणं तस्मात् साधु शृणु । यतश्च मध्ये
पुष्टिहेतुत्वात् कल्याणं ततः सुष्ठु शृणु। येन च पर्यवसाने मुक्तिहेतुतया कल्याणं तेन योनिशो B 168
मनसिकुरु। अथवा, मृदुमध्याधिमात्राणां दोषाणां प्रतिपक्षत्वात् यथाक्रमं साध्वादिवचनम् । 30 W 193
यदि वा व्यञ्जनार्थोभयावधारणात् यथासंख्यं साध्वादिवचनम्। **धर्मम्** इत्यादि । सूत्रादिधर्मं

---

१ W om. भगवान्.

विरुद्धं ग्रहीतव्यं विग्रहीतव्यं मनसा । ततो वचसा विरुद्धं वदितव्यं विवदितव्यम् । एवं प्रकारद्वयेन विरोधयितव्यं विघटयितव्यम् । यदि वा व्यञ्जनार्थोभयविघटघटनात् विग्रहीतव्यमित्यादिपदत्रयं मंस्यन्ते इत्यस्यानन्तरं जिनजननीभावनाभिरतं बोधिसत्त्वमारभ्ये-त्यध्याहार्यम् । यतस्तस्यैवानुशंसाकथनमधिकृतम् । अनन्तरं[1] च वक्ष्यति–"तस्य तान्युत्पन्नो-
5 त्पन्नान्यधिकरणान्यन्तर्धास्यन्ति" इत्यादि । अन्तर्धास्यन्ति अदृश्या भविष्यन्ति । यतो न स्थास्यन्ति, युक्त्या स्थितिं न प्रतिलप्स्यन्ते । अत एव तेषामभिप्राया मनोरथा न परिपूर्तिं
W 194 निष्पत्तिं गमिष्यन्ति। ननु उत्पन्नो वितर्कः प्रतिसमाधानमन्तरेण कथमन्तर्धास्यतीति तत्कस्य हेतोः इत्याशङ्क्याह–**एवं ह्येतत्** इत्यादि। अनेनैतदुक्तम्–धर्मतैषा यदुत प्रज्ञापारमिताभावक-पुद्गलाधिष्ठानात् स्वत एव तेषां प्रतिसमाधानमुत्पद्यते इति। **उद्ग्रहीष्यति** इत्यादि व्याख्यातम्।
10 अथवा संग्रहश्रवणात् **उद्ग्रहीष्यति** । मनसिकरणात् **धारयिष्यति** । पुस्तकपठनात् **वाचयिष्यति** । ग्रन्थार्थग्रहणात् **पर्यवाप्स्यति** । प्रत्यक्षानुमानागमाविरुद्धार्थकथनाद्यथाक्रमं **प्रवर्तयिष्यति देशयिष्यति उपदेक्ष्यति** । कल्पितादित्रिविधपदार्थानुत्पाददेशकत्वेन वा । पाठमात्रोपदेशात् **उद्देक्ष्यति** । पूर्वरात्रादिकरणात् **स्वाध्यास्यति** । बोधिपरिणामनाद्याशयभेदात्
B 169 एतान्युद्ग्रहणादीनि सम्यग्विधेयानि । **अधिकरणानि** इति विवादस्थानानि । उपसंहरन्नाह–
15 **इममपि** इत्यादि । न केवलं वक्ष्यमाणं गुणम् इत्यपिशब्दः । एवं प्रज्ञापारमितायाः सर्वोप-
W 195 द्रवप्रशमनतेजोबलत्वं प्रतिपाद्य दृष्टान्तेनापि समर्थयन्नाह–**तद्यथापि नाम** इत्यादि । क्वचित्पाठः परिकल्पमुपादायेति संभवत्कारणविशेषात् कार्यविशेषमधिकृत्य । अनेन दुर्लभत्व-माख्यातम् । स्थावरादिविषापनयनात् सर्वविषप्रशमनीति स्वरूपं कथितम् । **आशीविषेण जन्तुना** इति दंष्ट्राविषेण प्राणकेन । **बुभुक्षितेन** इत्यादि । बुभुक्षितः क्षुधापरिपीडितोऽपि
20 कश्चिद्देवताराधनप्रवृत्तत्वन्नाहारप्रयोजनः इति तद्व्यवच्छेदार्थमाह–**आहारार्थी** इति वचनम् तथाविधोऽपि धैर्यमालम्ब्य आहारं न पर्येषत इति तद्व्युदासेनोक्तम्–**आहारगवेषी** इति ॥ **प्राणकजातो जन्तुः** इति सत्त्वसंख्यातो मण्डूकादिरित्यर्थः । **गन्धेन** इति तद्गतामिषादि-गन्धेन । **अनुबध्नीयात्** इति बुद्ध्या भक्ष्यत्वेन स्वीकुर्यात् । **अनुगच्छेत्** इति पश्चात्पृष्ठतो यायात् । **प्रत्युदावर्तेत** इति निवृत्तिं कुर्यात् । ननु यत्र प्राणकगन्धेन न निवर्तेत तत्र
25 कथमोषध्या गन्धेन प्रत्युदावर्तेतेति तत्कस्य हेतोः इत्याशङ्क्याह–**तथा हि** इत्यादि । अयं वाक्यार्थः–सांवृतेऽपि कार्यकारणभावे तस्या एवौषध्याः स तादृशो भैषज्यगुणो यस्तस्याशी-विषस्य तद्विषमभिभवति नान्यस्येति । एवं बलवती हि सा ओषधी ।

भेदेऽपि नियताः केचित्स्वभावेनेन्द्रियादिवत् । इति ॥

एतदुक्तम्–प्रज्ञापारमितयैव बाह्याभ्यन्तरोपद्रवप्रशमनमित्येवं सर्वधर्मोलम्बने निरोधेऽ-
W 196 R 170 30 न्वयज्ञानमुत्पद्यते इति । मार्गे प्रथमक्षणाकारं वक्तुमाह–**एवमेव** इत्यादि । **यानि तानि** इति निपातसमुदायो यानि कानिचिदित्यर्थे वर्तते । **तेजसा** इत्यादि । **प्रज्ञापारमितायाः**

---

[1] W उत्तरं.

सामर्थ्यमेव तेजोबलस्थामबलाधानानि यथाक्रमं प्रयोगदर्शनभावनाविशेषमार्गनिर्दिष्टानि । **तत एव** इति यत्रैवोत्पत्स्यन्ते तत्रैवेत्यर्थः । **उपरंस्यन्ति उपशमिष्यन्ति** । **न विवर्धिष्यन्ते** इति यथाक्रमं श्रुतचिन्ताभावनाकाले वेदितव्यम् । प्रयोगाद्यवस्थासु वा ग्राह्यम् । तदेव कथयन्नाह—**यतः** इत्यादि । यतो यतः इति यत्र यत्रैवाधिकरणस्थाने इत्यर्थः । **निरोत्स्यन्ते, अन्तर्धास्यन्ति, न स्थास्यन्ति** इति पदत्रयमुपरंस्यन्तीत्यादिपदत्रयार्थम्[1] । ननु उत्पन्नो वितर्कः परप्रतिसमाधान- 5
मन्तरेण कथं भवतीति तत्कस्य हेतोः इत्याशङ्क्य पूर्ववत्परिहारार्थमाह—**प्रज्ञापारमिता हि** इत्यादि । रागादीनामिति आदिशब्दात् द्वेषादीनाम् । यावदित्येन स्मृत्युपस्थानाभिनिवेशादेः परिग्रहः । **निर्वाणग्राहस्य** इति सोपधिनिरुपधिनिर्वाणाभिनिवेशस्य । समुदाचरन्निर्वाणाभिनिवेशादेरुन्मूलनात् **उपशमयित्री** । अथवा रागादिवासनासमुद्घातान्न विवर्धिका । एतदुक्तम्—
प्रज्ञापारमिताभावनयैव रागादिनिर्वाणाभिनिवेशस्य शान्तिरित्येवं सर्वधर्मालम्बने मार्गे 10
धर्मज्ञानक्षान्तिरुत्पद्यते इति । मार्गे द्वितीयक्षणार्थमाह—**चत्वारश्च** इत्यादि । रक्षावरणगुप्तयो व्याख्याताः । यदि वा—आधिदैविकमाधिभौतिकमाध्यात्मिकं च अन्तरायमधिकृत्य यथाक्रमं रक्षावरणगुप्तयो ज्ञेयाः । आपद्वा त्रिधा—स्वप्रत्ययजा अपरसत्त्वसंख्यातप्रत्ययजा परसत्त्वसंख्यातप्रत्ययजा च । तस्याः प्रतीकारेण रक्षावरणगुप्तयो यथाक्रममवसेयाः । एतदुक्तम्—
प्रज्ञापारमितोद्ग्रहणादिप्रवृत्तस्य तथागतादिभ्यः सर्वथा सर्वरक्षावरणगुप्तयो भवन्तीत्येवं 15
प्रज्ञापारमितया सर्वधर्मालम्बने मार्गे धर्मज्ञानमुत्पद्यते इति । मार्गे तृतीयक्षणार्थमाह—**पुनरपरं कौशिक** इत्यादि । **आदेयवचनश्च** इति कृपया स्वयं प्राणातिपातादिविरतिपूर्वकं सर्वाकारज्ञतायां स्थित्वा अन्येषां तत्र प्रतिष्ठापनात् । स्वयंप्रतिष्ठितानां च वर्णवादतत्समनुज्ञत्वात् आदेयवाक्यः इत्ययमर्थोऽवसेयः, अन्यथोपादेयवचनत्वासंभवात् । पञ्चविंशतिसाहस्रिकाया-
मप्युक्तम्—"आत्मना च प्राणातिपातात्प्रतिविरतो भविष्यतीत्यारभ्य, यावत्—परेषां वर्णवादी 20
तत्समनुज्ञो भविष्यति" । इत्येवं स आदेयवाक्यो भविष्यतीत्यादि । श्रोत्रसुखकारित्वात् **मृदुवचनः** । यावतैवार्थो भवति तावन्मात्राभिधानात् **मितवचनः** । संक्षेपोक्तिकुशलत्वात् **अप्रकीर्णवचनः** । **न च क्रोधाभिभूतो न च मानाभिभूत** इति । प्रत्युपस्थितेऽपकारनिमित्ते प्रतिघांशिकश्चेतस आघातः क्रोधः । सत्कायदृष्टिसंनिश्रयेण चित्तस्योन्नतिर्मानः । ननु
प्रतिपक्षं विना दोषापगमाभावे कथं तस्यैवं गुणोदय इति तत्कस्य हेतोः इत्याशङ्क्याह— 25
**तथा हि** इत्यादि । प्रज्ञापारमितैव सर्वदोषाणां प्रतिपक्षः । स च तेन भावितः इति मतिः । प्राणातिपातविरत्यादौ प्रतिष्ठापनात् परिदमयति । मितवचनादिना सर्वसत्त्वविषये प्रह्वीकरणात् परिणमयति । **उपनाहम्** इति वैरानुशयस्यानुत्सर्गः प्रतिघांशिक एवोपनाहः । **व्यापादम्** इति । सत्त्वेषु दुःखेषु दुःखस्थानीयेषु च धर्मेष्वाघातो व्यापादः ।
**अनुशयम्** इति द्वेषांशिको वैरप्रबन्धोऽनुशयः । एतदुक्तम्—प्रज्ञापारमितापरिग्रहबलादेव 30
बुद्धत्वाभिलाषिणा स्वयं प्राणातिपातविरत्यादिपूर्वकं सर्वाकारज्ञतायां स्थित्वा तत्रैव परेषां

W 197 B 171 W 198 B 172

[1] W इत्यादिनाद्वयार्थम्. [2] W यथान्यायं.

स्थापनं कार्यमित्येवं सर्वधर्मालम्बने मार्गेऽन्वयज्ञानक्षान्तिरुत्पद्यते इति। मार्गे चतुर्थक्षणाकारं वक्तुमाह—**एवं चरतः** इत्यादि। एवं चरतो मार्गेऽन्वयज्ञानक्षान्त्या विहरतः। संस्तुते वस्तुनि चेतसोऽसंप्रमोषः स्मृतिः। अद्वेषः सर्वसत्त्वेष्वेकपुत्रप्रेमाकारता मैत्री। आभ्यां दानादिसर्वकुशलमूलस्यानुपलम्भयोगेन सर्वसत्त्वसाधारणतया अनुत्तरायां सम्यक्संबोधौ

W 199 5 परिणामनात् द्वयमुक्तम्। मैत्र्या व्यापारमेवाह—**तस्यैवं भवति** इत्यादिना। **परिभेत्स्यन्ते** इति व्यापादसमुदाचारेण चक्षुरादीनां विक्रियापादनात्। **धक्ष्यते** स्वरूपप्रच्युत्या दग्धो भविष्यति। **वशम्** इति तदायत्तताम्। एतदुक्तम्—दानादीनामक्षयं कर्तुमिच्छता सम्यक्संबोधौ परिणामनं स्मृत्यादिबलेन कार्यमित्येवं सर्वधर्मालम्बने मार्गेऽन्वयज्ञानमुत्पद्यते इति। यथोक्तैरेवाकारैरन्यापदेशनिर्दिष्टैः षोडश क्षणाः समुत्पद्यन्ते इति नात्र विप्रतिपत्तिः।

10 तथा चोक्तम्—

> **आधाराधेयताभावात्तथताबुद्धयोर्मिथः।**
> **पर्यायेणाननुज्ञानं महत्ता साप्रमाणता ॥ १२ ॥**
>
> **परिमाणान्तताभावो रूपादेरवधारणम्।**
> **तस्यां स्थितस्य बुद्धत्वेऽनुग्रहात्यागतादयः ॥ १३ ॥**
>
> 15 **मैत्र्यादि शून्यता प्राप्तिर्बुद्धत्वस्य परिग्रहः।**
> **सर्वस्य व्यवदानस्य सर्वाधिव्याधिशातनम् ॥ १४ ॥**
>
> B 173 **निर्वाणग्राहशान्तत्वं बुद्धेभ्यो रक्षणादिकम्।**
> **अप्राणिवधमारभ्य सर्वाकारज्ञतानये ॥ १५ ॥**
>
> **स्वयं स्थितस्य सत्त्वानां स्थापनं परिणामनम्।**
> 20 **दानादीनां च संबोधाविति मार्गज्ञताक्षणाः ॥ १६ ॥** इति ॥

अस्यापि दर्शनमार्गस्य सर्वाकारज्ञतायामुक्तं निर्वेधभागीयं ग्राह्यम्। यद्येवं तत्रापि प्रमुदितादिभूम्यभिधानेन बोधिसत्त्वानां दर्शनादिमार्गस्य प्रतिपादितत्वात् किमर्थं पुनरुपा-

W 200 दानमिति चेत्, उच्यते। निःशेषहेतुफलाधिगमापेक्षया तथागतानां सर्वाकारज्ञतेत्यभिधानात् जिनपुत्राणां तदुक्तो मार्गो न भवतीत्याशङ्कावारणार्थम्। तत एव हेतुमात्रमपकृष्य

25 पृथग्जिनात्मजानां दर्शनादिमार्गात्मिका मार्गज्ञता व्यवस्थाप्यते। एवं तु विद्वद्भिर्निरूपयितव्यम्—किं कारिकानुसारेण आकारा ग्रन्थार्थानुगमेन योजिता न वेति। तत्रार्यविमुक्तिसेनादिव्याख्यामालोक्य स्वशक्त्या प्रतिपादिता एव। केचिदर्थान्तराभिसंधिना यथोक्तेन ग्रन्थप्रबन्धेन आकारार्थमनुक्त्वा दर्शनमार्गषोडशक्षणोपलक्षणमेव केवलमत्र कृतमिति वर्णयन्ति। एवमुक्तानुक्तनिर्वेधभागीयाद्यर्थप्रतिपादनपरेषु ग्रन्थेषु द्रष्टव्यमिति। तैर्भावनानुक्रमाद्यनिर्देशा-

30 त्काचिदभिसमयानुपूर्वी न प्रतिपादिता। अभिसमयालंकारकारिकार्थश्च कथं व्याख्येयः इत्यपरे। भावाभिनिवेशमूलो हि रागादिक्लेशगणः, तद्विरुद्धश्च नैरात्म्याभ्यासः, इत्यतः तं

विना कथं दुःखधर्मज्ञानक्षान्त्यादिरिति चेत्, नैवम्। यस्माद्यथोदितविधिना नैरात्म्यसंसूचनपराः सर्वे एवामी षोडशाकाराः संनिहितविनेयजनहिताधानचिकीर्षया एवं यथाभिहितनानाप्रकाररूपेण निर्दिष्टाः सन्तोऽपि समभ्यस्यमानाः प्रतीत्यसमुत्पादधर्मतया दर्शनमार्गोत्पादका भवन्तीत्यवसेयम्। एवमन्यत्रापीति ॥ B 174

दर्शनमार्गानन्तरं भावनामार्गाभिधाने सति स्वल्पवक्तव्यत्वेन फलनिम्नत्वेन च 5 विनेयप्रवृत्तेः, भावनामार्गस्य कारित्रं तावत्कथयन्नाह—**आश्चर्यं भगवन्** इत्यादि। प्रज्ञापारमितेति वक्ष्यमाणो भावनामार्गः। **परिदमनाय प्रत्युपस्थिता** इति सर्वप्रकारक्लेशस्वविधेयीकरणात्सर्वतो दमनार्थेन परिदमननिमित्तमभिमुखीभूतेति प्रथमं दमनकारित्रम्। **अननुमाय** W 201 इति। दमनानन्तरं विशिष्टे कियन्मात्रेणाधिगमेऽहंमानप्रतिषेधेन आत्मोत्कर्षनिषेधात्सर्वतो नमनार्थेन परिणमनायेति द्वितीयं नमनकारित्रम्। ततोऽनन्तरं सर्वप्रकारक्लेशाभिभव इति 10 तृतीयक्लेशनिर्जयकारित्रार्थमाह—**पुनरपरं कौशिक** इत्यादि। **एवमुद्गृह्णन्** इति वक्ष्यमाणभावनामार्गक्रमेण। **संग्रामे** इत्यादि। भावनाप्रहातव्यैः क्लेशैः सह विग्रहे वर्तमाने सति। अधिमात्राधिमात्रादिप्रथमत्रिकविपक्षस्य मृदुमृद्वादिप्रथमप्रकारप्रतिपक्षाधिगमेन संग्रामशिरस्युत्कलितः समारूढो भवति। **अवतरतः** इत्यादि पदत्रयं यथासंख्यं मध्याधिमात्रादिद्वितीयत्रिकविपक्षस्य मध्यमृद्वादिद्वितीयप्रकारप्रतिपक्षाधिगमयोगतो वाच्यम्। **संग्राममध्यगतस्य** इति 15 मृद्वधिमात्रविपक्षस्य अधिमात्रमृदुप्रतिपक्षलाभेन। **तिष्ठतः** इति मृदुमध्यविपक्षस्य अधिमात्रमध्यप्रतिपक्षाभिसमयात् संग्रामे स्थितस्य। **निषण्णस्य** इति मृदुमृदुविपक्षस्य अधिमात्राधिमात्रप्रतिपक्षसंबन्धागमात् संग्रामे समुपविष्टस्य। सर्वेण चैतेन नवप्रकारविपक्षप्रतिपक्षहानोपादानेन भावनामार्गस्यापुनःकर्तव्यतामाह। **अस्थानम्** इत्यसंभवः। तदेव कथयति—**अनवकाशः** W 202 B 175 इति। पर्यायवचनं किमर्थमिति चेत्, उच्यते। तदा च आयत्यां च कस्यचित्कथंचिदर्थावबोधा- 20 र्थम्। तेनैव चार्थाभिधाने पूर्वश्रुतानामेवावगीतता स्यादिति तद्दोषपरिहारेण पूर्वकालविक्षिप्तानां पश्चादागतानां च तदर्थश्रवणार्थम्। दुर्मेधसां पुनः पुनस्तदर्थलक्षणार्थम्। एकशब्दानेकार्थतया अर्थान्तरकल्पनाव्युदासार्थम्। अन्यत्र निर्घण्टवत् ताभिः संज्ञाभिस्तदर्थसंप्रतिपत्त्यर्थम्। धार्मकथिकानामर्थोपनिबन्धनप्रापणयोः कौशलोपसंहारार्थम्। आत्मनो धर्मप्रतिसंविदुद्भावनार्थम्। परेषां च तद्बीजाधानार्थम्, इति पर्यायदेशनानामष्टौ प्रयोजनानि। एवं सर्वत्र 25 वाच्यम्। **यत्तस्य** इति। यदिति निपातो य इत्यर्थे वर्तते। यो जीवितान्तरायः सोऽनवकाश इति वाक्यार्थः। **जीवितान्तरायः** इति विज्ञानप्रबन्धोच्छित्तिः। आध्यात्मिकोपद्रवविगमानन्तरं बाह्योपद्रवोपशम इति परोपक्रमाविषह्यत्वं चतुर्थं कारित्रमाह—**परोपक्रमेण** इत्यादिना। परो मनुष्यादिः, तस्योपक्रमः खड्गादिप्रहारदानम्। एतदुद्देशपदं निर्देशेन विभजन्नाह—**सचेत् पुनः** इत्यादि। उद्देशवचनानां निर्देशात् पृथगभिधेयार्थो नास्तीति किमर्थमुद्देशवचनमिति 30 चेत्, उच्यते। समासेन विस्तरार्थावधारणार्थं सूत्रेण वृत्त्यर्थावधारणवत्। उद्घटितज्ञानां W 203 विनेयानामनुग्रहार्थम्। अन्येषामायत्यामुद्घटितज्ञताहेतूपचयार्थम्। आत्मनः समासव्यास-

B 176 निर्देशवशितासंदर्शनार्थम्। अन्येषां तथाभ्यासेन तद्बीजावरोपणार्थं चेत्याचार्यवसुबन्धुः। संक्षिप्तमात्रे समाहितं चित्तं योगिनाम्। तद्विस्तरार्थे सर्वत्र कथं समाहितं स्यादित्येतदर्थं निर्देशदेशना। तथा विस्तरमात्रे समाहितं चित्तं योगिनाम्, तत्संक्षिप्तार्थे सर्वत्र कथं समाहितं स्यादित्येतदर्थमुद्देशदेशनेत्यागमः। एवं सर्वत्र प्रतिपत्तव्यम्। शस्त्रं चक्रादिकम्। पाषाणादिक-
5 मन्यत्। ननु तद्देशक्षेपणसामर्थ्यवता पुरुषेण क्षिप्तं शस्त्रादिकमन्तरा विरोधोपनिपाताभावे कथं न शरीरे निपतेदिति तत्कस्य हेतोः इत्याशङ्क्याह–**महाविद्येयम्** इत्यादि। अयमभिप्रायः–मातुरभ्यस्यमानायाः एवं महाविद्यादिस्वभावायाः सामर्थ्येन अन्तरा गुरुत्वधर्मविरोधोपनिपातान्न तद्देहमनुप्राप्नोति शरादिकमिति। महत्त्वादिगुणयोगान्महाविद्येत्यादिपदत्रयं प्रयोगाद्यवस्थासु। अधिमुक्त्यादिमनस्कारैरधिकाभावात् **अनुत्तरा** निर्हारतया समाभावात्
10 **असमा**। अत्यन्तविशुद्ध्या संतानान्तरेणासमेन समत्वात् **असमसमा**। महाविद्यादित्वमेवास्याः कथमिति तत्कस्य हेतोः इत्याशङ्क्याह–**अत्र हि कौशिक** इत्यादि। एतदुक्तम्–यस्मात्प्रज्ञापार-
W 204 मितायां मैत्र्यादिपूर्वकं शिक्षमाणो न कस्यचिद्व्यापादाद्यर्थं शिक्षते, अतो हिंसादिकस्याल्पायुष्कत्वादिहेतोरपनयनान्महाविद्यादिस्वभावा इति। **नात्मव्याबाधाय चेतयते** इति मारणादिनिमित्तमात्मनो न यतते॥

15 सर्वोपद्रवविगमानन्तरं सम्यक्संबोधिकारित्रं पञ्चममाह–**अत्र हि** इत्यादिना। **सम्यक्संबोधिमभिसंभोत्स्यते** इति तत्त्वाधिगमं साक्षात्करिष्यति। **सर्वज्ञज्ञानं च प्रति-**
B 177 **लप्स्यते** इति तत्त्वाधिगमादुत्तरकालं सर्वधर्मविषयज्ञानमधिगमिष्यति। तदेव कथयन्नाह–**तेन सोऽनुत्तराम्** इत्यादि। चित्तानीत्युपलक्षणात्सर्वधर्मपरिग्रहः। **व्यवलोकयिष्यति** इति ज्ञास्यति। ननु सर्वमेव योगिज्ञानमनालम्बनमिष्यते। तत्कथं सर्वधर्मान् विज्ञास्यतीति
20 तत्कस्य हेतोः इत्याशङ्क्याह–**अत्र हि कौशिक** इत्यादि। प्राप्तमानन्तर्यमार्गेण सवासनावरणद्वयप्रहाणात्। ज्ञातं विमुक्तिमार्गेण सर्वाकारज्ञताधिगमयोगात्। साक्षात्कृतं शुद्धलौकिक-
W 205 ज्ञानेन निश्चयात्। एतदुक्तम्–यथा हि सत्यस्वप्नदर्शिनो ज्ञानं परमार्थतोऽविषयमपि प्रतिनियतविषयाकारं लिङ्गागमानपेक्षं च आश्रयविशेषवशादुत्पद्यमानमुपदर्शितार्थप्रापकत्वेन अविसंवादि भवति, तथा योगिज्ञानं प्रज्ञापारमितायोगाभ्यासबलेन। यथैव तदभूत् भवति
25 भविष्यति वा अतीतं वर्तमानमनागतं वस्तु परेण परिकल्पितम्, तथैवोपदर्शितविविधाकारप्रकारप्रभेदप्रपञ्चं बहिरिव परिस्फुरद्रूपं स्फुटप्रतिभासं लिङ्गागमानपेक्षमविसंवादितयोत्पन्नं प्रत्यक्षं प्रमाणमिष्यते। अतश्चैवं भगवतः सर्वत्र साक्षाद्दर्शित्वाभ्युपगमात् "यन्न प्राप्तं न विज्ञातं साक्षात्कृतम्, तत्" अभावेन सर्वज्ञज्ञानमुच्यते। यतो भ्रान्तिनिवृत्तावप्याकारनिवृत्तेः प्रतिबन्धाभावेनासंभवः इति मध्यमकनयानुसारेण आर्यनागार्जुनपादप्रभृतयः॥

30 श्रद्धातिशययोगेन पुण्यमहत्त्वात् यत्र स्थाने तथागतादीनामधिगमो जातः तत्पूज्यमिति बोधिकारित्रानन्तरं प्रज्ञापारमिताधारदेशपूज्यताकारित्रं षष्ठं वक्तुमाह–**पुनरपरं कौशिक**
B 178
W 206 **यत्रेयम** इत्यादि। अन्तश इति अगत्या। **पूर्वकर्मविपाकमिति** प्रतिपक्षाभ्यासं विना नियतवेदनीयं कर्मविपाकम्।[1] इदमेवार्थतत्त्वं दृष्टान्तेन द्रढयन्नाह–**तद्यथापि नाम** इत्यादि। **बोधेर्मण्डः**

१ W om. °विपाकम्.

सारोऽत्रेति भूप्रदेशः । पर्यङ्काक्रान्तो बोधिमण्डः तं गताः तत्पर्यन्तमाश्रिताः । बोधिमण्ड-
परिसामन्तो विदिक्स्थितवज्रकीलचतुष्टयान्तर्गतो भूमिभागः । बोधिमण्डो व्याख्यातः । तदभ्य-
न्तरं तन्मध्यस्थानम् । भूमिप्रविष्टस्य मूलस्य परिसामन्तग्रहणेनोपादानात्तद्विनिर्गतो
वृक्षभागो वृक्षमूलम् । न ते शक्याः इति । न ते योग्या विषया इत्यर्थः । विहेठयितुं
विभेत्तुम् । व्यापादयितुं विद्वेषयितुम् । आवेशयितुं भूतग्रहादि प्रवेशयितुम् । ननु विहेठा- 5
द्युत्पत्तिप्रतिघाते स्थानस्य व्यापाराभावात् कथं तत्र विहेठादि कर्तुं न शक्यते इति तत्कस्य
हेतोः इत्याशङ्क्याह—तत्र हि इत्यादि । अयं वाक्यार्थः—ये सर्वसत्त्वानामर्थाय मृदुमध्याधि-
मात्रव्यापादप्रतिपक्षेण मैत्रीप्रभेदमभयमवैरमनुत्रासं स्वयं सत्कृत्य निरन्तरं दीर्घकालं
भावयन्ति, परांश्चाधिकृत्य प्रकाशयन्ति, तेषां त्रैकालिकबुद्धानां तत्रोत्पादेन तत्स्थानं
विशिष्टमेव जातम् । अतोऽचिन्त्यत्वात् हेतुप्रत्ययसामग्र्या भूभागमाहात्म्यात्कारणविगुणो- 10
त्पत्त्या विहेठादिकार्यं न शक्यते तत्र कर्तुं प्रतीत्यसमुत्पादधर्मताबलादिति । एवं दृष्टान्त-  W 207
मावेद्य दार्ष्टान्तिकमर्थमावेदयन्नाह—एवमेव इत्यादि । पूर्ववदभिप्रायेण तत्कस्य हेतोः
इत्याशङ्क्य तथैव स्थानमाहात्म्यप्रतिपादनद्वारेण परिहरन्नाह—अनयैव हि इत्यादि । चैत्यभूतो
वन्दनादिना पुण्योपचयहेतुत्वात् । पितेव पितृभूत इत्युपमावाचकभूतशब्दस्योपादानादन्य-  B 179
चैत्यसमानत्वेन चैत्यभूतः स पृथिवीप्रदेश इत्येके । यत्र हि नाम पुद्गलनैरात्म्यद्योतिकया 15
"ये धर्मा हेतुप्रभवा" इत्यादिगाथया अधिष्ठितो भूभागः स्तूपो मतः, तत्र समस्तवस्तुनैःस्वा-
भाव्यप्रकाशिकाया मातुरुद्ग्रहणादिनोपेतः स्तूपो नितरामेव, इत्यतः साक्ष्येव साक्षिभूत
इति तत्स्वभावत्वे चैत्यमेव चैत्यभूत इति चन्द्रगोमी । वन्दनीयो नमस्करणात् । माननीयो
गुणानुस्मरणेन बहुमानात् । मृदुमध्याधिमात्रपूजाभिर्यथाक्रमं पूजनीयोऽर्चनीयोऽपचाय-
नीयः । श्रीपट्टबन्धादिना विशेषपदस्थापनात् सत्करणीयः । सर्वथा अनुल्लङ्घनीयत्वेन 20  W 208
गुरुकरणीयः । त्राणं सर्वोपद्रवनिवारणतया । शरणं तदाश्रयप्रयोगावन्ध्यदुर्धर्षपदस्थान-
तया । लयनम् अनवद्यरतिवस्तुतया । परायणं परमार्यत्वगमनपदस्थानतया । यथोक्तनीत्या
षड्विधमेव कारित्रमवगन्तव्यम् । तथा चोक्तम्—

सर्वतो दमनं नाम सर्वतः क्लेशनिर्जयः ।
उपमक्राविषह्यत्वं बोधिराधारपूज्यता ॥ १७ ॥ इति ॥  25

कारित्रानन्तरं भावनामार्गो वक्तव्यः । स च सास्रवानास्रवभेदेन द्विविधः । तत्र
सास्रवोऽधिमुक्तिपरिणामनानुमोदनामनस्कारलक्षणस्त्रिविधः । अनास्रवः पुनरभिनिर्हारः अत्यन्त-
विशुद्धिस्वभावो द्विविधः । अतो यथाविमोक्षं दृष्टकुशलधर्माधिष्ठाना भावनामार्गाधिकारा-
दादौ असाक्षात्क्रियारूपा अधिमुक्तिर्वक्तव्या । सापि स्वार्था स्वपरार्था परार्था चेति मूलभेदेन
त्रिविधा सती मृदुमध्याधिमात्रभेदेन प्रत्येकं भेदात् त्रिकात्रिभिर्नवधा भवति । तद्यथा—मृद्वी 30  B 180
मध्याधिमात्रा च स्वार्थाधिमुक्तिः, एवं स्वपरार्थाधिमुक्तिः परार्थाधिमुक्तिश्च । एवमेषापि
नवप्रकारा मृदुमृद्वादिप्रकारभेदेन प्रत्येकं विभिद्यमाना नवभिस्त्रिभिरधिमुक्तिः सप्तविंशतिप्रकारा

भवति। तद्यथा—मृदुमृदुः, मृदुमध्यः, मृद्वधिमात्रः; मध्यमृदुः, मध्यमध्यः, मध्याधिमात्रः; अधिमात्रमृदुः, अधिमात्रमध्यः, अधिमात्राधिमात्रः इति स्वार्थाधिमुक्तेर्नव प्रकाराः। तथा

W 209 स्वपरार्थाधिमुक्तेः परार्थाधिमुक्तेश्च वेदितव्याः। तत्र स्वार्थाधिमुक्तेः प्रथमं मृदुमृदुप्रकारमधिकृत्याह—**एवमुक्ते शक्र** इत्यादि। **दिव्याभिः** इति मनोनुकूलाभिः। मुक्तकुसुमं **पुष्पम्**।

5 **धूपः** सहजसांयोजिकादिः। **गन्धो** मलयादिजः। सर्वर्तुपुष्पै रचिता माला **माल्यम्**। शरीरोद्वर्तनप्रकारो **विलेपनम्**। सुवर्णादिवालुका **चूर्णम्**। वस्त्रं **चीवरम्**। सितातपत्रादि **छत्रम्**। गरुडाद्यङ्कितो ध्वजः। वज्राद्यङ्किता **घण्टा**। चिह्नरहिता **पताका**। **बहुविधाभिः** इति अनेकप्रकारखाद्यभोज्यादिभिः। **शरीराणि** रूपकाया इत्येके। धातव इत्यपरे। **प्रतिष्ठापयेत्** विन्यसेत्। **परिगृह्णीयात्** इति ममत्वेन स्वीकुर्यात्। **धारयेत्** इति

10 चिरस्थितीकुर्यात्। **तांश्च** इति स्तूपान्। न केवलं चशब्दाच्छरीराणि, तद्वचनेनैव मातुः पूजायामधिकं पुण्यमिति प्रतिपादयितुं शक्रं प्रतिप्रश्नयन्नाह—**तेन हि** इत्यादि। **सर्वज्ञतात्मभावोऽभिनिर्वर्तितः** इति सर्वज्ञज्ञानाधिगमयोग्यशरीरस्वभावो निष्पादितः। **कतमस्यां**

W 210 **प्रतिपदि** इति। कतमस्मिन् मार्गे इत्यर्थः। प्रज्ञापारमितां विना विपर्यासाविनिवृत्त्या

B 181 मुक्त्यनुपपत्तिरित्यभिप्रायवानाह—**इहैव भगवन्** इत्यादि। वज्रोपमेषु अग्रजप्राप्त्या योग्यता-

15 स्वभावया प्रतिलब्धा, ततोऽनन्तरमभिसंबुद्धा। अथवा अनुत्तरा सम्यक्संबोधिरभिसंबुद्धा, ततः सर्वज्ञता प्रतिलब्धेति योज्यम्। तत्रानुत्तरा बोधिः स्वार्थसंपत्, सर्वज्ञता परार्थसंपत्। तद्वचनेनैवेदानीं परिहरन्नाह—**तस्मात्तर्हि** इत्यादि। आत्मभाव एव शरीरम्, तस्य वा शरीरं शिलापुत्रकस्येव शरीरमिति न्यायात्। तदेव प्रतिलभ्यते इति प्रतिलम्भः, तेन तथागत इति न संख्यां गच्छति। सर्वेषां तथागतत्वप्राप्तेरिति मतिः। कथं तर्हि तथागतः

20 इत्याह—**सर्वज्ञतायाम्** इत्यादि। अपरमपि गुणमाह—**येयं कौशिक** इत्यादि। **सर्वज्ञाना-**

W 211 **श्रयभूत** इति अन्येषां सर्वज्ञज्ञाननिष्पत्तिं प्रति हेतुभूतः। तदेव कथयन्नाह—**एनम्** इत्यादि। एनम् आत्मभावशरीरप्रतिलम्भम्। **प्रभावेण** इति प्रकाशना। बुद्धो रूपकायादिस्वभावः। सूत्राद्यात्मको धर्मः। आर्यावैवर्तिकादिबोधिसत्त्वसमूहः संघः। **परिनिर्वृतस्यापीति** अपिशब्दात्तिष्ठतः। विस्तरेण निर्दिश्यैवमुपसंहरन्नाह—**तस्मात्तर्हि कौशिक** इति।

25 ननु सर्वप्रतिविशिष्टत्वे तथागतस्य कथं कारणत्वेऽपि मातुः पूजायामधिकं पुण्यमिति तत्कस्य हेतोः इत्याशङ्क्याह—**सर्वज्ञज्ञानस्य हि** इत्यादि। अयं वाक्यार्थः—

प्रज्ञापारमिता ज्ञानमद्वयं सा तथागतः।

—प्रज्ञापारमितापिण्डार्थः—१

W 212 इति न्यायात् मुख्यतो धर्मकायस्तथागत एव प्रज्ञापारमिता। अतस्तद्द्योतिकाया मातुः पूजया सर्वज्ञज्ञानस्य धर्मकायस्य पूजनाद्बहुतरं पुण्यं प्रसवति। रूपकायप्रतिबिम्ब-

B 182 30 तथागतपूजायां तु प्रतिविशिष्टधर्मकायासंग्रहान्नाधिकं पुण्यमिति। **लिखित्वा पूजयतो बहुतरं पुण्यं** निर्दिश्य लिख्यमानायामपि तथैव प्रतिपादयन्नाह—**यः कुलपुत्रो** वा इत्यादि। पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्य तथैव परिहरन्नाह—**सर्वज्ञज्ञानस्य हि** इत्यादि। द्वितीयं

मृदुमध्यप्रकारं प्रतिपादयितुं प्रश्नयन्नाह—**य इमे भगवन्** इत्यादि। **न ज्ञास्यन्ति** इति पुण्यसंभारानवगमात्। **महार्थिका** इति महानर्थः पुण्यसंभारः तन्निष्पादनात्तदर्थिका। **न वेत्स्यन्ति** ज्ञानसंभारानवबोधात्। ज्ञानसंभारो महानुशंसस्तद्धेतुत्वेन **महानुशंसा**। **महाफला महाविपाका** इति पुण्यज्ञानसंभारयोर्यथाक्रमं विपाकनिष्यन्दफले। रूपकायधर्मकायौ तन्निष्पादनादेवमुक्तम्। **न च वेदयिष्यन्ति** इति पुण्यज्ञानफलाप्रतिपत्तेः। **न च पुनः श्रद्धास्यन्ति** इति कर्मफलादौ संप्रतिपत्तिविगमात्। तद्वचनेनैव प्रश्नं परिहृत्य मृदुमध्यप्रकारप्रतिपादनार्थं प्रतिप्रश्नयन्नाह—**तत्किं मन्यसे कौशिक कियन्तः** इत्यादि। **अवेत्य प्रसादेन** इति अवगम्य गुणसंभावनापूर्वकः प्रसादः अवेत्य प्रसादो विचिकित्साप्रहाणादित्येके। दृष्टतत्त्वस्य श्रद्धा त्रिषु रत्नेषु आर्यकान्तं च शीलं चतुर्थमवेत्य प्रसाद इत्यन्ये। उत्तरोत्तरपुण्यमहत्त्वादिकार्यं विशिष्टवीर्यातिशयादियोगादिति मत्वा साधूक्तत्वेनानुमतिमाह—**एवमेतत्कौशिक** इत्यादिना। अनेन अयमर्थः कथितः—यथा वीर्यातिशयादिवैकल्यादवेत्यप्रसादलाभिनोऽधिगममहत्त्वावबोधेऽप्यल्पकाः, तथा प्रज्ञापारमितापूजादिकारिणोऽल्पका इति तद्वचनेन प्रतिपादितमिति ग्राह्यम्, अन्यथा शक्रप्रश्नवचनेन न किंचिदुक्तं भवेदिति। अल्पतरतमादिप्रतिपादनेनान्तरार्थं विस्तारयन्नाह—**तेभ्यः कौशिक अल्पेभ्यः** इत्यादि। **चित्तोत्पादं बृंहयति** इति—

> सहोदयाच्चित्तवरस्य धीमतः
> सुसंवृतं चित्तमनन्तदुष्कृतात्।
> क्लेशाच्च दुःखाच्च बिभेति नासौ
> संपत्तिकालेऽपि विपत्तिकाले॥

इत्यादिगुणमनुस्मृत्य प्रतिपत्त्योपस्तम्भयन्ति। **उपबृंहयित्वा** इति क्त्वान्तप्रयोगः। **आरब्धवीर्याः** इति उत्तप्तवीर्याः। **योगम्** इति ध्यानबलाच्चित्तैकाग्रताम्। **चरन्ति** इति तत्त्वावबोधेनानुतिष्ठन्ति। **अविनिवर्तनीयायाम्** इति अचलायाम्। **अध्याशयसंपन्नानाम्** इति।

> आयतो विपुलो हृष्ट उपकारपरो महान्।
> कल्याणश्चैवमाधिक्याच्छ्यो ह्यध्याशयः सताम्॥

इति विशिष्टेनाध्याशयेन युक्तानाम्। **ते च** इति श्रोतारः। पुनरप्यत्यन्ताल्पत्वं प्रतिपादयन्नाह—**सन्ति खलु पुनः** इत्यादि। ननु समानाभिप्रायेण सर्वेषां प्रवृत्तौ कथमेको द्वौ वा अवतिष्ठेयातामिति तत्कस्य हेतोः इत्याशङ्क्याह—**दुरभिसंभवा हि** इत्यादि। दुरभिसंभवा दुरधिगम्या। चतुर्विधनिर्वेधभागीयेषु दर्शनभावनाविशेषमार्गेषु च वीर्यातिशयवैकल्यात् हीनवीर्यैरित्यादिपदसप्तकार्थो यथाक्रमं वाच्यः। एतदुक्तम्—वीर्यातिशयासंभवात् प्रथमतस्तुल्याभिप्रायेण प्रवृत्तावपि न सर्वेऽनुत्तरसम्यक्संबोधिभाजनाः इति॥

तृतीयं मृद्वधिमात्रप्रकारं कथयन्नाह—**तस्मात्तर्हि** इत्यादि। क्षिप्रमित्याशु। सुखमित्यनायासम्। **अभीक्ष्णम्** इति पुनः पुनः। ननु तथागतत्वार्थिना बोधिसत्त्वचर्यायां शिक्षितव्यम्। तत्कथं प्रज्ञापारमितायां शिक्षा अस्याभिधीयते इति तत्कस्य हेतोः इत्याशङ्क्याह—

**तथा हि स एवम्** इत्यादि। अयं हि वाक्यार्थः—यस्मात्पूर्वं भगवान् बोधिसत्त्वचर्यां चरन्
W 217 प्रज्ञापारमितायां शिक्षितोऽनुपलम्भयोगेन चर्यानिष्पादनार्थम्, तथा मया सर्वबुद्धगुणावाप्ति-
हेतुत्वेन प्रज्ञापारमिता प्रतिसर्तव्या। अन्यथोपलम्भाद्बोधिसत्त्वचर्याणामनिष्पत्तेर्न बोध्यधिगम
इति स बोधिसत्त्वो ज्ञास्यतीति॥

W 218 5 चतुर्थं मध्यमृदुप्रकारमावेदयन्नाह—**तस्मात्तर्हि कौशिक** इत्यादि। **कोटिशः** इति।
कोटिं कोटिं कोटिशः। **सप्तरत्नमयान्** इति

मुसारगल्ववैदूर्यरूप्यस्फटिकहाटकम्।
सह लोहितमुक्ताभिरश्मगर्भैश्च वर्ण्यते॥
रत्नं सप्तविधं सर्वं प्राधान्यादथवापरे।
10 तद्भेदा मणयः सर्वे वर्णसंस्थानलेशतः॥

इति वचनादेतानि सप्त रत्नानि। तन्मयास्तत्स्वभावाः। **तथागतधातुगर्भान्** इति तथागत-
धातुमध्यान्। **तन्निदानम्** इति तद्धेतुकम्। क्वचित्ततो निदानमिति पाठः। तत्रायमर्थः—
धातुगर्भस्तूपपूजातः तस्याः सकाशान्निदानं बुद्धत्वप्राप्तेः कारणम्। **बहु पुण्यं प्रसवेत्**
B 185 इति। बहु पुण्यमिति यदि नाम अभिधर्मसमुच्चये नामभेदः कृतः "कामप्रतिसंयुक्तं कुशलं
15 पुण्यम्। रूपारूप्यप्रतिसंयुक्तमानिञ्ज्यम्" इति, तथाप्यत्र सामान्येन कुशलं पुण्यं ज्ञेयं
रूपधातावप्यस्यार्थस्य संभवात्। **बहु भगवन्, बहु सुगत** इति।

पुनर्बह्विति निर्दिष्टमतिवैपुल्यसिद्धये।
सुगतेति तु विज्ञेयं संभ्रमादिविशेषतः॥

**अभिश्रद्दधत्** इति अभिसंप्रत्ययं कुर्वाणः। **अवकल्पयन्** इति मनस्यध्यारोपयन्।
20 **अधिमुच्य** इति अधिमुक्तिमनस्कारेणालम्ब्य। **प्रसन्नचित्तः** इति भद्रतादर्शनादभिमुख-
चित्तः। **बोधाय चित्तमुत्पाद्य** इति अनुत्तरसम्यक्संबोधिनिमित्तं बोधिसत्त्वसंवरग्रहणाद्विशिष्टं
चित्तं कृत्वा। **अर्थमस्या विवृणुयात्** इति अर्थमेवोद्धृत्य केवलं कथयेत्। **मनसा
अन्ववेक्षेत** इति परस्पराव्याहतं निरूपयेत्। **यथाधिकया** इत्यादि। येन मध्यमृद्वादिना
प्रकारेण अधिकया अधिमुक्त्या संप्रयुक्ता या प्रज्ञा, सापि यथाधिकतया अत्र प्रज्ञापार-
25 मितायां **परिमीमांसां** परीक्षाम् **आपद्येत** कुर्यात्। **सद्धर्मचिरस्थितिहेतोः** तन्निमित्तम्।
तदेवाह—**मा बुद्धनेत्री** इत्यादि। बुद्धानां नेत्री नायिका माता प्रज्ञापारमितैव। **अस्याः**
पुस्तकवैकल्येन पाठस्वाध्यायाद्यसंभवात् समुच्छेदो मा भूत्। तथा मातरं विना सद्धर्माधि-
W 219 गमस्यान्तर्धानं मा भूत्। बोधिसत्त्वानां च जननीपुस्तकसद्भावेन अनुग्रहोपसंहारः श्रवणा-
दिलक्षणः कृतो भविष्यति नेत्र्यवैकल्येन। यत इति शेषः। **इति** तस्मात्। स्थापयेदिति
30 पूर्वेण संबन्धः। न केवलं स्थापयेत्, अपि तु यथोक्तेनैवाशयेन सत्कारादिकं कुर्यादित्याह
**तां चैनाम्** इत्यादि। सर्वेण चैतेन श्रवणादिना दशधा धर्मचरितमुक्तम्॥

पूजना लेखना दानं श्रवणं वाचनोद्ग्रहः।
B 186 प्रकाशनाथ स्वाध्यायश्चिन्तना भावना च तत्॥

अमेयपुण्यस्कन्धं हि चरितं तद्दशात्मकम् ।
विशेषादक्षयत्वाच्च परानुग्रहतोऽसमात् ॥

इति वेदितव्यम् ॥

पञ्चमं मध्यमध्यप्रकारमधिकृत्याह—**तिष्ठन्तु खलु पुनः कौशिक कोटिशः** इत्यादि । W 220
**जम्बुद्वीपम्** इति 5

जम्बूद्वीपो द्विसाहस्रस्त्रिपार्श्वः शकटाकृतिः ।
सार्धं त्रियोजनं त्वेकम् ॥

—अभिधर्मकोश—३.५३

षष्ठं मध्यमध्याधिमात्रं वक्तुमाह—**तिष्ठतु खलु पुनः कौशिक अयं जम्बूद्वीपः** इत्यादि । W 221
**चातुर्महाद्वीपके लोकधातौ** इत्यादि । 10 W 222

लक्षषोडशकोद्वेधमसंख्यं वायुमण्डलम् ।
अपामेकादशोद्वेधं सहस्राणि च विंशतिः ।
अष्टलक्षोच्छ्रयं पश्चाच्छेषं भवति काञ्चनम् ॥

—अभिधर्मकोश—३.४५-४६

तत्र मेरुश्चतूरत्नः सप्त हैमास्तु पर्वताः । 15
प्रथमतो युगंधर ईषाधारः खदिरकः ।
सुदर्शनोऽश्वकर्णश्च विनतको निमिंधरः ॥
ततो द्वीपाश्च चत्वारो दक्षिणादिदिगाश्रिताः ।
जम्बूद्वीपो द्विसाहस्रस्त्रिपार्श्वः शकटाकृतिः ।
सार्धं त्रियोजनं त्वेकं प्राग्विदेहोऽर्धचन्द्रवत् ॥ 20
पार्श्वत्रयं तथास्यैकं सार्धत्रिशतयोजनम् ।
गोदानीयः सहस्राणि सप्त सार्धानि मण्डलः ॥
योजनाष्टसहस्राणि चतुरस्रः कुरुः समः । B 187
द्वीपानामन्तरालेषु यथासंख्यं मता इमे ॥
देहा विदेहाः कुरवः कौरवाश्चामरावराः । 25
अष्टौ तदन्तरद्वीपाः शाठा उत्तरमन्त्रिणः ॥
चतुर्द्वीपकरन्ध्रार्थ[1]श्चक्रवालस्ततः पुनः ।
सीमाबन्धवदायसो जातः स कृष्णपर्वतः ॥
सर्वे चैते सह द्वीपा जलेऽशीतिसहस्रके ।
मग्ना ऊर्ध्वं जलान्मेरुर्भूयोऽशीतिसहस्रकः ॥ 30
अर्धार्धहानिसंयुक्ताः समोच्छ्रायघनाश्च ते ।
सीताः समान्तरा तेषामाद्याशीतिसहस्रिका ॥

१ W चतुर्द्वीपकचक्रार्थ.

अभ्यन्तरः समुद्रोऽसौ त्रिगुणः स तु पार्श्वतः।
अर्धार्धेनापराः सीताः शेषं बाह्यो महोदधिः।
मेरोरूर्ध्वे विमानानीति चतुर्द्वीपकः स्मृतः॥

चतुर्द्वीपक एव लोकधातुश्चातुर्द्वीपकः॥

W 223 5 सप्तममधिमात्रमृदुमाह–**तिष्ठन्तु खलु पुनः कौशिक चातुर्महाद्वीपक** इत्यादिना।

W 224 **साहस्रे चूलिके लोकधातौ** इति–

चातुर्द्वीपकचन्द्रार्कमेरुकामदिवौकसाम्।
ब्रह्मलोकसहस्रं च साहस्रश्चूलिको मतः॥
–अभिधर्मकोश–३.७३-७४

W 225 10 अष्टममधिमात्रमध्यं वक्तुमाह–**तिष्ठन्तु खलु पुनः कौशिक साहस्रे चूलिके** इत्यादि। **द्विसाहस्रे मध्यमे लोकधातौ** इति–

तत्सहस्रं द्विसाहस्रो लोकधातुस्तु मध्यमः।
–अभिधर्मकोश–३.७४

B 188 W 226 नवममधिमात्राधिमात्रं निर्दिशन्नाह–**तिष्ठन्तु खलु पुनः कौशिक द्विसाहस्र** इत्यादि।
15 **त्रिसाहस्रमहासाहस्रे** इति–

तत्सहस्रं त्रिसाहस्रो लोकधातुरनुत्तरः।
महाचक्रपरिक्षिप्तः समसंवर्तसंभवः॥
–अभिधर्मकोश–३.७४

W 227 अक्षपिताहंमानवासनत्वेन[1] प्रथमतः स्वार्थाधिमुक्तेर्नव प्रकारान् निर्दिश्य, इदानीं
W 228 20 स्वपरार्थाधिमुक्तेः प्रथमं मृदुमृदुप्रकारार्थमाह–**तिष्ठन्तु खलु पुनः कौशिक त्रिसाहस्र** इत्यादि। **अपूर्वाचरमम्** इति न पूर्वं न पश्चात्। युगपदित्यर्थः। **एतयैवंरूपया पुण्यक्रियया** इति अनन्तरोक्तया सप्तरत्नमयतथागतधातुगर्भस्तूपसत्कारादिस्वभावया पुण्यचेतनया।

धर्मतो बुद्धा द्रष्टव्या धर्मकाया हि नायकाः।

इति वचनाद्धर्मतास्वभावप्रज्ञापारमितापूजायां सर्वबुद्धपूजनाद्बहुतरं पुण्यमिति मत्वा केषां-
25 चिदर्थकरणाय स्वावबोधमाह–**एवमेतद्भगवन्, एवमेतत्सुगत** इति। एतदेव कथयन्नाह–**प्रज्ञापारमितां हि** इत्यादि। प्रकारान्तरेण यथोक्तमेव मृदुमृदुभेदमुदीरयन्नाह–**तिष्ठन्तु खलु**
W 229 **पुनर्भगवन्** इत्यादि। **पर्यायेण** इति निर्देशेन। **सर्ववाद्यैः** इति वीणावंशादिदशवाद्यसहस्रैः। **सर्वगीतैः** इति संस्कृतप्राकृतादिगीतिकाभिः। **सर्वनृत्यैः** इति शृङ्गारवीरबीभत्सादिभिः। **सर्वतूर्यतालावचरैः** इति। शङ्खादिध्वनयः सर्वतूर्याः। करतालवाद्यविशेषास्तालावचराः।
B 189 W 230 30 साधूकृत्वेनानुमत्यर्थमाह–**एवमेतत्कौशिक** इत्यादि। **बहुतरम्** इत्यादिपदत्रयं प्रयोगावस्थासु। धर्मसंभोगनिर्माणकायनिष्पादनाच्च अचिन्त्यमित्यादिपदत्रयार्थो यथाक्रमं वाच्यः।
W 231 **ननु तथागतस्य सर्वप्रतिविशिष्टत्वे कथं मातुः पूजायामधिकं पुण्यमिति तत्कस्य हेतोः**

[1] B अक्षेपताहं°.

इत्याशङ्क्याह—**प्रज्ञापारमितानिर्जाता हि** इत्यादि । नन्वस्यार्थस्य पूर्वोक्तत्वेनापूर्वमत्र वाच्यं न किंचित् । तत्किमर्थमस्योपन्यास इति चेत्, उच्यते । यद्यप्येवम्, तथापि येन प्रकारेण श्रोतृजनान्तरस्य चित्तं साशङ्कमुत्पद्यते, तस्य पूर्वोक्तेनापि क्रमेण निषेधनं क्रियते एव । यतो नास्त्ययं नियमः—अन्यत्रोक्तमुत्तरं चोद्यं चैकस्य, अपरस्य तदेव चोद्यमुत्तरं च न भवतीति । तस्मात्पुनरुक्तत्वं नाशङ्कनीयम् । एवमन्यत्रापि वाच्यम् । **कलां नोपैति** इति 5 अवस्थाभागं न प्रतिपद्यते । **संख्याम्** इति यथानिर्दिष्टसंख्याव्यतिरेकेण न्यूनसंख्याम् । **कलामपि** इति पुनः कलां सूक्ष्मप्रभागम् । **गणनाम्** इति जातिं विवक्षां वा । **उपमाम्** इति सदृशावस्थाम् । **औपम्यम्** इति यस्य गुणस्य हि भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलाविति वचनात् उपमागुणमौपम्यम् । **उपनिसाम्** इति अतिकृशताम् । **उपनिषदम्** इति हेतुभावम् । **न क्षमते** इति न प्रतिपद्यते । एतेन च कलादिरूपाप्रतिपत्तिवचनेन प्रज्ञापार- 10 मितातथागतधातुगर्भस्तूपपूजापुण्ययोर्दूरान्तरत्वमावेदितम् । अवयव्यणुरूपादीनामेककला- दित्वव्यवस्थापनादिति ग्राह्यम् ॥

द्वितीयं मृदुमध्यप्रकारार्थमाह—**उद्गृह्णीष्व मार्ष प्रज्ञापारमिताम्** इति । महानुभावत्वेन क्षमादिसंपन्नः शक्रः इति तस्यामन्त्रणं मार्ष इति । देवपुत्राणां साधूक्तत्वेन तदेव भगवानाह— **उद्गृहाण त्वम्** इत्यादिना । ननु सांदृष्टिकप्रयोजनमन्तरेण किमर्थं प्रज्ञापारमिता गृह्यते इति 15 कस्यचिद्वितर्के इति तत्कस्य हेतोः इत्याशङ्क्याह—**यदा हि** इत्यादि । एवंरूपाः समुदा- चाराः इति वक्ष्यमाणा वितर्काः । **योधयिष्यामः** इति । एतदेव कथयति—**संग्रामयिष्यामः** इति । **समन्वाहरेरिति** मनसा । **स्वाध्यायेरिति** वचसा । सांदृष्टिकानुशंससंदर्शनाज्जातप्रसाद- त्वेन स्तुत्यर्थमाह—**महाविद्येयम्** इत्यादि । साधूक्तत्वेनानुवादार्थमाह—**एवमेतत्** इत्यादि । ननु महाविद्यादित्वं भगवत्याः कुत इति तत्कस्य हेतोः इत्याशङ्क्याह—**इमां हि कौशिक** 20 इत्यादि । इदमत्र समासतोऽर्थतत्त्वम्—सर्वावरणविषप्रशमनेन अतीततथागतार्थकरणात् महा- विद्या । अनागताप्रमाणतथागताभिसंबोधहेतुत्वादप्रमाणा । अपरिमाणकार्यकरणसमर्थप्रत्यु- त्पन्नसर्वतथागताभिसंबोधनिमित्तत्वादपरिमाणा । पञ्चकषायोच्छेदकाले क्लिष्टे च लोकधातौ शाक्याधिराजस्य तत्त्वाधिगमहेतुत्वात्संसारोत्तारणार्थेन निरुत्तरा । दशाकुशलादेरचिन्त्य- ज्ञानपर्यन्तस्य लोके प्रभावनां प्रति सर्वप्रतिविशिष्टहेतुत्वेनानुत्तरा । मातुर्निष्यन्ददेशनाधर्म- 25 सामर्थ्येन बोधिसत्त्वास्तथागतानुत्पादेऽपि प्रज्ञोपायकौशल्येन दशकुशलादिकं लोके प्रभाव- यन्ति इति कृत्वा समाभावादसमा । तथागतसद्धर्मान्तर्धाने जिनजननीप्रभावेण लोके धर्मचर्यादिप्रवर्तनादसमैस्तथागतैः सह समत्वादसमसमेति । यथोक्तमेव व्याख्यानं युक्तरूपम् । अन्यथा महाविद्यादित्वं यद्भगवत्याः तत्कस्य हेतोः इत्याशङ्क्य **इमां हि** इत्यादिग्रन्थेन परिहारप्रतिपादनान्न किंचिदुक्तं स्यात् । ततश्च यैर्महासुरादिपराजय- 30 महार्थसिद्धिफलप्रदत्वात् **महाविद्येयं भगवन् यदुत प्रज्ञापारमिता** इत्यादिग्रन्थः प्रथमतो व्याख्यातः, तैः प्रकरणार्थो न लक्षितः इति लक्ष्यते । महाविद्यादित्वमन्यत्र

B 190 W 232 W 233 W 235 B 191

अन्यथा व्याख्यातम्। अतो यथोक्तव्याख्यानं ग्रन्थानुगतमपि न संगतमिति न मन्तव्यम्, सामयिकत्वाच्छब्दानामित्यलं प्रसङ्गेन। प्रकृतमेव पदव्याख्यानमभिधीयते। **विद्यामागम्य** इति प्रज्ञापारमितां प्राप्य। **एतर्हि** इत्यादि सांप्रतम्। इदानीमित्यर्थः। **दश कुशलाः कर्मपथाः** इति। प्राणातिपातादत्तादानकाममिथ्याचारमृषावादपैशुन्यपारुष्य-
5 संभिन्नप्रलापाभिध्याव्यापादमिथ्यादृष्टिविरतयो दश कुशलाः कर्मपथाः। **चत्वारि ध्यानानि**
W 236 इति समापत्तिजानि रूपधातुस्वभावानि चत्वारि ध्यानानि। तत्र प्रथमध्यानं वितर्को विचारः प्रीतिः सुखं चित्तैकाग्रता चेति पञ्चाङ्गम्। द्वितीयमध्यात्मसंप्रसादः प्रीतिः सुखं चित्तैकाग्रता चेति चतुरङ्गम्। तृतीयमुपेक्षा स्मृतिः संप्रजन्यं सुखं चित्तैकाग्रता चेति पञ्चाङ्गम्। चतुर्थं ध्यानमुपेक्षापरिशुद्धिः स्मृतिपरिशुद्धिः अदुःखासुखा वेदना
10 चित्तैकाग्रता चेति चतुरङ्गम्। **बोध्यङ्गसंप्रयुक्तानि** इति अनास्रवाणि। प्राधान्यादित्येके। प्रज्ञोपायपरिग्रहबलात् सास्रवाण्येव बोधेरङ्गानि कारणानि संप्रयुक्तानि तुल्यं प्रवृत्तानीत्यपरे
B 192 वर्णयन्ति। **प्रभाव्यन्ते** इति प्रज्ञायन्ते। **चत्वार्यप्रमाणानि** इति। मैत्रीकरुणे सर्वथा अद्वेषस्वभावे सत्त्वेषु यथाक्रमं सुखदुःखसंयोगवियोगेच्छे। मुदिता सम्यक्संप्रतिपत्तिषु सत्त्वेषु सौमनस्यलक्षणं प्रामोद्यम्। उपेक्षा तु मित्रामित्रेष्वनुनयप्रतिघविरहः इत्येतान्यप्रमाणसत्त्वाल-
15 म्बनत्वादप्रमाणानि। **चतस्र आरूप्यसमापत्तयः** इति। अनन्तमाकाशमिति, अनन्तं विज्ञानमिति, नास्ति किंचनेति, संज्ञा गण्डः, शल्यम्। आसंज्ञिकं मोहः। एतच्छान्त-मेतत्प्रणीतं यदुत नैवसंज्ञानासंज्ञायतनमित्येवं मनसिकारैर्यथाक्रममाकाशविज्ञानाकिंचन्यनैव-संज्ञानासंज्ञायतनाख्यानि। विभावितरूपसंज्ञात्वेन रूपाभावादरूपा एव आरूप्याः काय-चित्तसमतापादनाच्चतस्रः समापत्तयः। **षडभिज्ञाः** इति ऋद्धिर्दिव्यचक्षुर्दिव्यश्रोत्रं परचित्तज्ञानं
20 पूर्वनिवासानुस्मृतिः आस्रवक्षयज्ञानमिति षडभिज्ञाः। बोधिपक्षा धर्मा वक्ष्यन्ते। **संक्षेपेण** इत्यादि। समासेन चतुरशीते रागादिचरितानामेकैकचरितप्रतिपक्षो यावता ग्रन्थेन परि-समाप्यते, तावान् ग्रन्थराशिर्धर्मस्कन्धः इति चतुरशीति धर्मस्कन्धसहस्राणि। **बुद्धज्ञानम्** इत्यादि। सर्वज्ञेयावबोधेनातिशयबुद्धिसद्भावात् बुद्धाः, परोपदेशमन्तरेण स्वयंबोधात् स्वयंभुवः, तेषां ज्ञानमिति तथोक्तम्। तच्च सर्वचिन्ताविषयातिक्रान्तशक्तिरूपत्वादचिन्त्यज्ञानम्। **पूर्वश्रुतेन**
25 इत्यादि। सर्वोऽयं देशनाधर्मो धर्मधातुनिष्यन्दः प्रज्ञापारमितानिष्यन्दः प्राग्बुद्धोत्पादकाले श्रुतः। **अनुकम्पाम्** इति कृपाम्। **इमम्** इति सहाख्यं लोकधातुम्। अबुद्धकबुद्धक्षेत्रोपलक्षणं
B 193
W 237 चेदम्। **बोध्यङ्गविप्रयुक्तानि** इति तथागतानुत्पादे तत्रत्यानां बोध्यधिगमाभव्यत्वादित्येके। प्रज्ञोपायविकलत्वेनेत्यपरः। आस्रवक्षयज्ञानस्य तदानीमसंभवात् पञ्चाभिज्ञाग्रहणमत्र कृतम्। दृष्टान्तेनापि मातुर्माहात्म्यं दर्शयन्नाह—**तद्यथापि** इत्यादि। **ओषधी तारा** इति। ओषध्यश्च
30 व्रीह्यादयः, ताराश्च शुक्रबृहस्पतिप्रभृतयः इति तथोक्ताः। ओषध्य एव वा काश्चित् निशि तारा इव अवभासमानास्तथोच्यन्ते। तासां चन्द्ररश्मिभिराप्यायनात् कायपरिपुष्टिः प्रभावाति-शयश्चोत्पद्यते इति यथाक्रममाह—**यथाबलं यथास्थामम्** इति। अकारान्तोऽप्यौणादिकः

स्थामशब्दो ग्राह्यः । **अवभासयन्ति** इति स्वभावं दर्शयन्ति । **नक्षत्राणि च** इति पुष्यादयः । दार्ष्टान्तिकमर्थमाह–**एवमेव** इत्यादिना । **अत्ययेन** इति परिनिर्वाणेन । **धर्मचर्या** इत्यादि । सूत्रादिधर्मलिखनाद्यभियोगो धर्मचर्या । स्वपरात्मसमताभ्यासः समचर्या । रागाद्युपप्लवहानये प्रतिपक्षभावना असमचर्या । चतुःसंग्रहवस्त्वादिसेवनं कुशलचर्या । **प्रज्ञायते** इति प्रवर्त्यते । **प्रभाव्यते** इत्यभ्यस्यते । प्रयोगाद्यवस्थाभेदेन बोधिसत्त्वनिर्जातेत्यादि पदत्रयम् । उपाय- 5
**कौशल्यम्** इति व्याख्यातम् । अथवा शून्यतोरुकरुणे तज्जे च कर्मणि नैपुण्यम् । प्रकारान्तरेणापि मातुर्माहात्म्यमाह–**पुनरपरम्** इत्यादिना । **मनसि कुर्वताम्** इति संक्षेपेण समुदायरूपालम्बनात् । **समन्वाहरताम्** इति विस्तरेण प्रत्येकावयवाभिमुखीकरणात् ।  W 238

आवर्तते स एवार्थः पुनरर्थान्तराश्रितः ।  W 239

–प्रज्ञापारमितापिण्डार्थः–५७  10  B 194

इति वचनात् न ते विषमापरिहारेण **कालं करिष्यन्ति** इत्यादि वचनं न पुनरुक्तमाशङ्कनीयम् । तथा हि–पूर्वं दर्शनमार्गाधिकारेणोक्तम्, अधुना तु भावनामार्गाधिकारेणेति विशेषः । **राजमहामन्त्रितो** वा इति । सम्यग्नीतिमार्गोपदेष्टा महामन्त्री । **राजमहामात्रः** इति हस्तिशिक्षकनायको महामात्रः । **उपसंक्रामेयुः** इति समीपीभवेयुः । **यथापि नाम** इति निपातो यस्मादर्थे वर्तते । "को हि नाम धातूपसर्गनिपातानां नियतमर्थं 15
निर्देष्टुं क्षमः" इति वचनात् । एतदुक्तम्–यस्मात् प्रज्ञापारमितापरिगृहीतः, तस्मात्तया परिगृहीतत्वान्न तेऽवतारं प्रतिलप्स्यन्ते इति । **आलपितुकामता** इति आयातमात्रतावचनेन आमन्त्रयितुकामता । **अभिभाषितुकामता** इति उत्तरोत्तरकथाप्रबन्धेन वक्तुकामता । **प्रतिसंमोदितव्यं च ते मंस्यन्ते** इति । राजादयः चीवरपिण्डपाताद्युपस्तम्भेन तं जिनजनन्यभियुक्तं मुदितं कर्तव्यं मंस्यन्ते । ननु अक्षपिताहंमानवासनानामालपितुकामतादेः किं निमित्तमिति 20
तत्कस्य हेतोः इत्याशङ्क्याह–**इयं हि** इत्यादि । प्रज्ञापारमितेति तद्भावको बोधिसत्त्वः प्रज्ञापारमिताशब्देनोक्तः, तस्यैवानुशंसानिर्देशाधिकारात् । **मैत्रोपसंहारेण** इति । मित्रस्येदं कार्यं मैत्रं तस्य ढौकनमुपसंहारः । स च मायादिनापि स्यादित्याह–**मैत्रचित्ततया** इति । हितचित्ततयेति यावत् । **करुणोपसंहारेण** इति । करुणाकार्यमत्रोपचारात्करुणा, तत्प्रत्यर्पणं करुणोपसंहारः । स च अन्यथापीत्याह–**करुणाचित्ततया** इति दुःखापनयनचित्ततया । 25
एतदुक्तमार्यरत्नचूडे–"महाकरुणादिपरिवारा प्रज्ञापारमिता भावनीया" इति वचनात् तद्भावको मैत्र्यादिभावनापर एव, अतो मैत्र्यादिसामर्थ्यादालपितुकामतादि राजादीनामिति । तथा चोक्तमन्यत्र–"मैत्र्याद्यभियुक्तस्य हि बोधिसत्त्वस्य सर्वे देवमनुष्याः सुप्रसन्ना भवन्ति" इत्यादि । **तस्मात्तर्हि** इति । तर्हिशब्दोऽवधारणे । यस्माद्बह्वनुशंसा प्रज्ञापारमिता, तस्मादेव कारणादित्यर्थः । **व्याल** इत्यादि । व्यालाः क्रूरग्रहा यक्षादयः, सरीसृपाः सर्पाः, तत्प्रधानं 30
कान्तारं दुर्गस्थानम्, तन्मध्यं गताः प्राप्ताः । **स्थापयित्वा पूर्वकर्मविपाकेन** इति असंभवत्प्रतिपक्षनियतवेदनीयकर्मविपाकेनावतारं स्थापयित्वा त्यक्त्वा इति पूर्वेण संबन्धः । काला-  B 195  W 240

१ B om. °नियत°.

न्तरानुशंसादेशनायां संदेहवतामिदानीं संप्रत्ययोत्पादनार्थमाह—**अथ खल्वन्यतीर्थ्यानाम्** इत्यादि। तीर्थिकप्रव्रज्यया प्रव्रजिताः परिव्राजकाः। **उपारम्भाभिप्रायाणाम्** इति विहेठाभि-

W 241 प्रायाणाम्। **तस्यां वेलायाम्** इति तस्मिन् काले इत्यर्थः। **तेषां चित्तानि व्यवलोक्य** इति भगवदनुज्ञयैव तेषां विहेठनाचित्तानि ज्ञात्वा निवर्तनार्थं प्रज्ञापरमितां शक्रः प्रवर्तितवानिति

5 ज्ञेयम्। तथा चानन्तरमेव वक्ष्यति—"मया च शक्रस्य देवानामिन्द्रस्याभ्यनुज्ञातम्" इति। **यावन्मात्रः** इति प्रदेशः। **उद्गृहीतः** इति संबन्धः। **तेनैव द्वारेण** इत्यादि। येनैव द्वारेण काष्ठा-दिसंस्कृतेन मार्गेण च विशिष्टभूप्रदेशेन आगताः, तेनैव गता इत्यर्थः। अविदितभगवदधि-

W 242 ष्ठानत्वेनाह—**किमत्र कारणम्** इत्यादि। नास्ति बुद्धानां भगवतामज्ञातमित्याह—**अथ खलु**

B 196 **भगवानायुष्मतः** इत्यादि। **निवर्तनार्थम्** इति प्रतिनिवृत्त्यर्थम्। नित्यसमाधानवैकल्यात्

10 कथमीदृशं स्मरणं शक्रस्य इत्याशङ्कायामाह—**मया च** इत्यादि। एषां प्रतिनिवृत्त्यर्थं प्रज्ञापार-मितां प्रवर्तय इत्यभ्यनुज्ञातमभ्यनुज्ञानं शक्रस्य कृतम्। ननु महाकरुणोऽपि भगवान् कथं प्रतिहतचित्तान् नानुगृह्णातीति तत्कस्य हेतोः इत्याशङ्क्याह—**नाहम्** इत्यादि। **शुक्लं धर्मम्** इति। तेषां मध्येऽन्यतमस्यैकस्यापि सद्धर्मश्रवणसंवर्तनीयं शुभं कर्म न समनुपश्यामि, अतो

W 243 नानुग्रहं करोमि। न तु प्रतिघवशादिति मतिः। **प्रतिहतचित्ता** इति विद्विष्टचित्ताः।

15 पुनरपि प्रत्ययोत्पादनार्थमाह—**अथ खलु मारस्य** इत्यादि। तत्र मारो देवपुत्रमारः। **चतस्रः पर्षदः** इति भिक्षुभिक्षुण्युपासकोपासिकाः। **नियतमत्र** इति अवश्यमस्यां पर्षदि। **विचक्षुः-करणाय** इति विघ्नकरणाय। **चतुरङ्गबलकायम्** इति। अश्वः सह चतुर्भिः पदरक्षकैरय-मेकाङ्गो बलकायः। हस्ती सहाष्टाभिरयं पूर्वकेण सह द्व्यङ्गः। रथः षोडशभिः सह पूर्वकाभ्यां च अयं त्र्यङ्गः। षोडश पदातयः पूर्वकैः सह अयं चतुरङ्गो बलकायः सर्वन्यूनः।

W 244 20 तस्य पुनर्मारस्य एवंक्रमेण महान् बलकायोऽवसातव्यः। **व्यूह** इति समूहः। **दीर्घरात्रम्**

W 245 इति दीर्घकालम्। लब्धसंप्रत्ययाः पूजादिकं कृतवन्तः इत्याह—**अथ खलु त्रायस्त्रिंश** इत्यादि। **विहायसा** इति आकाशेन। **चिरस्य** इति चिरेणेत्यर्थः। **उपावृत्ता** इति उपागता।

B 197 **अवरकेण** इति स्वल्पेन। तावन्मात्रेणेत्यर्थः। **पूर्वजिनकृताधिकाराः** इति पूर्वबुद्धेषु कृतोऽधिकारः पारमिताव्यापारः श्रवणादिलक्षणः यैस्तथोक्ताः, पूर्वबुद्धैर्वा कृतो दत्तोऽधिकारो नियोगः

25 श्रवणादिस्वभावो येषां ते तथा। **कः पुनर्वादः** इति कः पुनः संदेहः। श्रोत्रावभासगमन-प्रतिविशिष्टत्वादुद्ग्रहणादेरिति मतिः। **तथत्वाय शिक्षिष्यन्ते** इत्यादि। तथाभावस्तथत्वम्, अनन्यथार्थेन। अत एव निर्देशात् ह्रस्वत्वम्। तन्निमित्तम् शिक्षिष्यन्ते इत्यादि पदत्रयं प्रयोगाद्यवस्थासु वाच्यम्। **तथागतपर्युपासिताः** इति तथागताः परिवारप्रदानेन तदुक्त-श्रवणेन च पूजादिभिश्च पर्युपासिता यैस्ते तथोक्ताः। "निष्ठान्तं पूर्वं निपततीति" व्यभिचार-

30 लक्षणत्वात् पर्युपासितशब्दस्य न पूर्वनिपातः। ननु तथागतपर्युपासनादिना मातुः श्रवणादे-रगृहीतसंबन्धत्वात् कथं तेन तस्यानुमानमिति तत्कस्य हेतोः इत्याशङ्क्याह—**अतो हि** इत्यादि। प्रज्ञापारमितातः सर्वज्ञता बुद्धत्वं प्रभाव्यते समुत्पाद्यते। अत एव ततो गवेषितव्या

कारणमन्तरेण कार्यासंभवात् । तदेव दृष्टान्तेन कथयन्नाह—**तद्यथापि नाम** इत्यादि । एतदुक्तम्—कारणं विना कार्यायोगेन प्रज्ञापारमितातः तत्प्रभवत्वेन यस्मात्तथागतत्वं गवेषितव्यम्, तस्मात् मातुः श्रवणादिकं नियमेन वासनापरिपुष्टिबीजाधानतया तथागतपदप्रापकं भवति । तच्चेदमीदृशं श्रवणादिकं क्वचित् कादाचित्कतया विशिष्टकारणायत्तजन्मकं स्वकारणं विशिष्टमेव तथागतपर्युपासनादिकमनुमापयति ।　5　W 246

> कार्यकारणयोर्यस्मादयं धर्मो व्यवस्थितः ।
> तदतद्रूपहेतुत्वात्तदतद्रूपहेतुजः[1] ॥ इति ॥

अधिपतित्वेन साधूक्तमिति शक्रमनुवदन्नाह—**एवमेतत् कौशिक** इत्यादि ॥　B 198

तृतीयं मृद्वधिमात्रं कथयन्नाह—**न भगवन् दानपारमितायाः** इत्यादि । **वर्णम्** इत्यनुशंसम् । समासव्यासभेदात् भाषते, नेति संबन्धः । **न परिकीर्तयति** इति नाममात्रोच्चारणा-　10 दिति ज्ञेयम् । **नामधेयं च परिकीर्तयति** इति बहुधा नामोच्चारणात् । "बोधिचित्ताश्रयत्वादाश्रयपरमतया । सकलवस्तुसमुदाचाराद्वस्तुपरमतया । सर्वसत्त्वहितसुखाधिकारत्वादधिकारपरमतया । निर्विकल्पज्ञानपरिग्रहादुपायकौशल्यपरमतया । अनुत्तरसम्यक्संबोधिपरिणतत्वात् परिणामपरमतया । क्लेशज्ञेयावरणनिवारणसमुदागमात् विशुद्धिपरमतया च प्रत्येकं दानादिपारमितानां लक्षणम्" इत्यार्यासङ्गः । अभ्युपगमार्थमाह—**एवमेतत् आनन्द** इत्यादि । 15　W 247 षडेव पारमिता बुद्धत्वे कारणम्, तत् कथमेकस्याः प्राधान्यनिर्देश इति तत्कस्य हेतोः इत्याशङ्क्याह—**प्रज्ञापारमिता हि** इत्यादि । यस्मात् त्रिमण्डलविशुद्ध्या दानादीनां सर्वज्ञतायां परिणामेनादौ प्रवृत्तत्वात् पूर्वंगमा, तस्मात् तद्वर्णं भाषे, नामधेयं च कीर्तयामि, इति पूर्वेण संबन्धः । तद्वचनेन यथोक्तमर्थं प्रतिपादयितुमाह—**तत्किं मन्यसे** इत्यादि । **अपरिणामितं दानं सर्वज्ञतायाम्** इति । अनुपलम्भयोगेन सर्वसत्त्वार्थं बुद्धत्वाय अनिर्यातितम् । प्रज्ञापारमित- 20 येति शेषः । तथाभूतप्रदानस्य फलोपभोगेन क्षयात् न प्रकर्षगमनमिति प्रश्नादेव गृहीतार्थः शास्तृभावानुकारिधीः प्राह—**नो हीदम्** इति । शीलादिष्वतिदिशन्नाह—**तत्किं मन्यसे**　W 248 इत्यादि । व्यतिरेकमुखेनैवं प्रज्ञापरिग्रहबलाद्दानादीनां पारमितारूपतां निर्दिश्य प्रज्ञायाः　B 199 पारमितास्वभावं प्रतिपादयितुमाह—**तत्किं मन्यसे त्वमानन्द अचिन्त्या सा** इत्यादि । वस्तुनोऽनुपलम्भेन अचिन्त्यफलत्वादाह—**एवमेतद्भगवन्** इत्यादि । औपलम्भिकपृथग्जनै- 25 श्चिन्तयितुमशक्यत्वादचिन्त्या, श्रावकाद्यविषयत्वात् परमाचिन्त्या । मातुः पारमितार्थमुपसंहरन्नाह—**तस्मात्तर्हि आनन्द परमत्वात्** इत्यादि । पूर्वंगमार्थं निगमयन्नाह—**तस्मात्तर्हि आनन्द**　W 249 **सर्वज्ञतापरिणामितकुशलमूलत्वात्** इत्यादि । दानादीनां बुद्धत्वे नयनात् **नायिका** । सर्वोपद्रवनिराकरणात् **परिणायिका** । **अनेन योगेन** इत्यादि । यथोक्तन्यायेन दानादीनामन्तर्गमात् प्रज्ञापारमितायां तस्यां परिकीर्तितायां षट्पारमिताकीर्तनात् नैकस्या एव जिनजनन्या 30

---

[1] W तदनुरूपहेतुत्वात्स एतद्रूपहेतुजः.

निर्देश इत्यर्थः। यत्तु प्रागुक्तम्—"प्रज्ञापारमिताया एवाहम्" इत्यादि, तत् प्राधान्यादित्यदोषः। एतदेव दृष्टान्तेन स्पष्टयन्नाह—**तद्यथापि नाम आनन्द महापृथिव्याम्** इत्यादि। **विरोहन्ति** इति वृद्धिं गच्छन्ति। दार्ष्टान्तिकमर्थमाह—**एवमेवानन्द** इत्यादिना॥

W 250 चतुर्थं मध्यमृदुमधिकृत्याह—**न तावदिमे भगवन्** इत्यादि। प्रज्ञापारमितायाः सर्वे 5 गुणा इति समस्ताया मातुरमी सर्वे गुणा न भवन्ति। तस्या गुणात्यन्तप्राचुर्यादिति मतिः। कस्यास्तर्ह्यमी गुणा इत्याह—**अथ हि मया** इत्यादि। भगवतोऽन्तिकादस्या यः प्रदेशो मयोद्गृहीतः, स चानन्तरमेवान्यतीर्थ्यादिनिराकृतौ प्रवर्तितः, तस्या अमी गुणा इत्यर्थः। B 200 सम्यक्कथनात् साधुकारमाह—**साधु साधु कौशिक** इति। किं तु तावन्मात्रप्रदेशात्मिकामपि प्रज्ञापारमितां यः केवलमुद्ग्रहीष्यत्येव यावत् केवलं स्वाध्यास्यत्येव, न तस्यैव केवलममी W 251 10 गुणा भविष्यन्ति, अपि तु योऽपि लिखित्वा पूजापूर्वकं पुस्तकमात्रं धारयेत्, तस्याप्यनन्तगुणान् वदामीत्याह—**न खलु पुनः कौशिक केवलम्** इत्यादि। अनुशंसश्रवणेन जातबहुमानत्वादाह—**अहमपि भगवन् तस्य** इत्यादि। **कः पुनर्वाद** इति। लिखित्वा विशिष्टोद्ग्रहणादिकारिणः कः संदेहो यदहं रक्षादिकं न करिष्यामीत्यर्थः॥

W 252 तथैव "साधु साधु कौशिक" इति साधुकारं दत्वा पञ्चमं मध्यमध्यं वक्तुमाह—**तस्य** 15 **खलु पुनः कौशिक** इत्यादि। प्रतिभानमुपसंहर्तव्यमिति युक्तमुक्ताभिधानमुत्पादयितव्यम्। **छन्द** इति वक्तुकामता। प्रकारान्तरेणाप्यनुशंसार्थमाह—**पुनरपरं कौशिक** इत्यादि। **नावलीनचित्तता** न स्तम्भितचित्तता। **मा खलु** इत्यादि। मा कश्चित् मां विहठेनाभिप्रायः **पर्यनुयुञ्जीत**, चोद्यं कुर्वीत, इत्येवमवलीनचित्तता न भविष्यति। ननु संभवत्प्रज्ञादिप्रकर्षत्वे W 253 पुंसां चेतोगुणापरिज्ञाने कथमेवं न भवतीति तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि तस्य** 20 इत्यादि। एतदुक्तम्—वस्तूपलम्भजनितं पर्षच्छारद्यादिभयं तस्य प्रज्ञापारमितापरिग्रहबलादेव कर्मकर्तृक्रियोपलम्भाभावात् न भवति इति॥

षष्ठं मध्याधिमात्रं वक्तुमाह—**प्रियो भविष्यति** इत्यादि। तत्र हितसुखकारि **मित्रम्**। B 201 **अमात्यो** मन्त्रिमुख्यः। मातापितृपरंपरया संबद्धो जनो **ज्ञातिः**। एकमातापितृजनितो भ्रात्रादिः **सालोहितः**। **शाक्यपुत्रीयाः श्रमणाः**॥

W 254 25 सप्तममधिमात्रमृदुं निर्दिशन्नाह—**प्रतिबलश्च** इत्यादि। बाहुश्रुत्यादियोगात् **प्रतिबलः**। प्रज्ञासंपदा समन्वागमात् **शक्तः**। **सह धर्मेण निग्रहाय** तेषां वचनेन तिरस्करणायेत्येकः। तदुक्तसाधनधर्मदूषणात् साध्यधर्मेण सह तेषां निराकरणायेत्यपरः। **प्रत्यनुयोगः चोद्यम्**, तस्य **व्याकरणं** सम्यक्परिहरणम्। तत्र समर्थो योग्य इत्यर्थः॥

W 257 अष्टममधिमात्रमध्यं प्रतिपादयन्नाह—**यत्र खलु पुनः** इत्यादि। तत्र दूराद्दर्शनेन 30 **प्रेक्षिष्यन्ते**। अञ्जलिकरणात् **वदिष्यन्ते**। समीपमागत्य पञ्चमण्डलकेन प्रणामात् **नमस्करिष्यन्ति**। प्रतिनियतोपादानादियन्त एवेति कदाचिद्बुद्धिः स्यादित्याह—**मा तेऽत्र कौशिक**

इत्यादि । **पेयालमिति** अनुत्तरायां सम्यक्संबोधौ ये संप्रस्थिताः, तेऽपि तत्रागन्तव्यं मंस्यन्ते इत्यादिपदमतिदेशनीयमित्यर्थः । तत्र ब्रह्मकायिकादयस्त्रयः प्रथमध्यानसंगृहीताः । परीत्ताभादयस्त्रयोऽपि द्वितीयध्यानजाः । परीत्तशुभादयस्त्रिविधाः पुनस्तृतीयध्यानस्थाः । अनभ्रकादयोऽष्टौ चतुर्थध्यानभूमिकाः । असंज्ञिसत्त्वास्तु बृहत्फलैकदेशिनः । अधिकपुण्यप्रसवार्थमुपायकौशलं शिक्षयन्नाह–**एवं च कौशिक तेन कुलपुत्रेण** इत्यादि । **इतः** इति अस्मा- 5 दित्यर्थः । तथैव कस्यचिन्मन्दमतेराशङ्कामाशङ्क्याह–**मा तेऽत्र कौशिक एवं भूत्** इति । तदेव हारकपर्यवसाने कथयति–**न ते कौशिक एवं द्रष्टव्यम्** इति । तत्र अप्रहीणकामरागानुशयाः कामधातुजाः कामावचराः । प्रहीणकामरागानुशया रूपरागाभिनिविष्टा रूपधातुजा रूपावचराः ॥

W 258

नवममधिमात्राधिमात्रार्थमाह–**तस्य खलु पुनः कुलपुत्रस्य वा** इत्यादि । तत्रेतर- 10 जनावासो गृहम् । भिक्षूणां वासस्थानं लयनम् । इष्टकादिघटितं विशिष्टसंस्थानमीश्वरगृहं प्रासादः । मनुष्याद्युपद्रवाभावात्सुरक्षितः । कस्माद्गृहादि सुरक्षितमित्याशङ्क्याह–**यत्र हि** इत्यादि । नामशब्दः प्रसिद्धवचनः । **महोजस्का** महानुभावाः । तदुक्तम्–"यस्मादेवं प्रसिद्धा महोजस्का यत्र गृहादावागन्तव्यं मंस्यन्ते, तस्मात् तद्गृहादि तेषामनुभावेन सुरक्षितं भविष्यति" इति । दुष्कुहकसत्त्वधातोरभिसंप्रत्ययार्थं पृच्छन्नाह–**कथं भगवन्** इत्यादि । 15 यथाभव्यतया निमित्तमाह–**सचेत् कौशिक** इत्यादिना । **तत्र उदारमवभासं संजानीते** इति । महान्तं रश्म्यालोकं तत्र गृहादाववगच्छति । पश्यतीति यावत् । **निष्ठा** इति निश्चयः । **आगतः** इत्युपचारप्राप्त्या । **उपसंक्रान्तः** इति गृहाद्यन्तःप्रवेशात् । **अमानुषं गन्धं घ्रास्यति** इति मनुष्यलोकातिक्रान्तं विशिष्टं गन्धं घ्राणविज्ञानेनानुभविष्यति । **अनाघ्रातपूर्वम्** इति अननुभूतपूर्वम् । सर्वपापाकरणादध्यात्मशुद्ध्या **चौक्षसमुदाचारः** । विविक्तवस्त्राद्युपभोगेन 20 बाह्यपरिशुद्ध्या **शुचिसमुदाचारः** । **आत्तमनस्काः** इत्यादि मृदुमध्याधिमात्रसौमनस्ययोगाद्वेदितव्यम् । प्रीतिरेव सौमनस्यं तज्जातं येषामिति ते तथोक्ताः । **अध्युषिताः** इति पूर्वस्थिताः । **अपक्रमितव्यम्** इति गन्तव्यम् । कथं पूर्वस्थितानां यत्नमन्तरेणापसरणमिति तत्कस्य हेतोः इत्याशङ्क्याह–**तेषामेव हि** इत्यादि । **श्रियश्च** इत्यादिपदत्रयं मृदुमध्याधिमात्रमहानुभावत्वख्यापनार्थम् । एतदुक्तम्–महौजस्कानामेव सामर्थ्येन अपसरणात् न यत्नापेक्षा इति । 25 **अभीक्ष्णम्** इति पुनः पुनः । **प्रसादबहुलः** इति अभिसंप्रत्ययदर्शनादभिवर्धमानश्रद्धः । पूर्वं सामान्येन सर्वत्र शुचिचौक्षसमुदाचारतां निर्दिश्य विशेषेण तात्पर्यार्थमाह–**तेन खलु पुनः** इत्यादि । **परिसामन्तकः** इति परिसमन्तादित्यर्थः । **न कायक्लमथः** इति देशान्तरगमनादिना न कायखेदः । **न चित्तक्लमथः** इति पिण्डपातादिवैकल्यात् न चित्तखेदः । तापाद्युपद्रववैकल्यात् स सुखमेव शय्यां कल्पयिष्यति । चंक्रमणादिकाले कण्टकादिभि- 30 रनुपद्रवात् सुखं च प्रतिक्रमिष्यति । **संगायमानान्** इति परस्परं ग्रन्थार्थनिर्णयात् । **एवं सर्वज्ञता** इति सर्वधर्मानुपलम्भेन बुद्धत्वम् । **एवं बुद्धक्षेत्रम्** इति अपगतक्षुत्पिपासा-

B 202
W 259
W 260
W 261
B 203
W 262

पाषाणकण्टकादित्वेन यथाक्रमं सत्त्वभाजनभेदाद्विविधम्। **ओजःप्रक्षिप्तं च कायसुखम्** इति। काये यद्बलम्, वाचि यत्तेजः, मतौ या अतितीक्ष्णता, तदेतत् त्रयमोजःप्रक्षिप्तं यस्मिन्निति तत्तथोच्यते। या तु कायश्रुतिः, सा मुख्ये काये कायाश्रिते च वचसि मतौ च गुणकल्पनया वेदितव्या। **लघु लघ्वेव च** इति। अपगतगुरुकं च कायसुखमिति 5 पूर्वेण संबन्धः। **आहारगृद्ध्या** इति आहाराकाङ्क्षया। युक्तेति शेषः। **योगाचारस्य** इति समाधिविशेषानुष्ठानपरस्य। **मनसिकारपरिस्पन्दितेन** इति मैत्र्यादिभावनोपबृंहितेन। ननु B 204 योगाचारस्य ध्यानाहारत्वात् न कवलीकाराहारे बलवती गृद्धिः, अस्य तु लिखित्वा मातरं पूजापूर्वकं स्थापयतः कथमिति तत्कस्य हेतोः इत्याशङ्क्याह—**एवं ह्येतत् कौशिक** इत्यादि। **यथापि नाम** इति निपातो यस्मादर्थे वर्तते। तदुक्तम्—"प्रज्ञापारमिताध्यानपरि-10 निष्पत्तये लिखनादिष्वनुयुक्तत्वेन तस्य काये अमनुष्या ओज उपसंहर्तव्यं मंस्यन्ते" इति। यस्माद्धर्मतैषा, तस्मादोजःप्रक्षिप्तत्वेन कृताहारकृत्यत्वात् **मृदुका चास्य आहारगृद्धिर्भवि-ष्यतीति**॥

स्वपरसमतया स्वपरार्थाधिमुक्तेर्नव प्रकारान्निर्दिश्य परार्थाधिमुक्तेः प्रथमं मृदुमृदु-W 264 प्रकारार्थमाह—**इमां प्रज्ञापारमितां लिखित्वा पुस्तकगतां कृत्वा पूजापूर्वंगमं स्थापयेत्** W 265 15 **पूजयेत् नोद्गृह्णीयात्** इत्यादि। **अयमेव ततः स कौशिक** इति। वक्ष्यमाणो यः पुद्गलः सोऽयमेव, ततोऽनन्तरोक्तादनुद्ग्रहादिकारिणः सकाशादित्यर्थः। उपसंहरन् पुनराह—**अयमेव ततः स कौशिक** इत्यादि। **बोधाय चित्तमुत्पाद्य** इत्यादि। अस्य प्रज्ञापारमिताधिकारे कः प्रसङ्गः इति न वक्तव्यम्। यतः शून्यताकरुणागर्भमेव बोधिचित्तं मुख्यतः प्रज्ञापार-मिता। **सत्कृत्याध्याशयेन श्रोतव्या** इति अपनीतावगुण्ठनिकादिना नीचासनस्थेन 20 विक्षेपदोषं परिहृत्य मोक्षकामाशयेन सद्धर्मः श्रोतव्यः। **अन्तशः पुस्तकगतामपि कृत्वा स्थापयितव्या** इति। अस्यार्थस्य प्रथमत एव स्वार्थाधिमुक्तिहारकप्रारम्भे कथितत्वात् किमर्थमुपादानमिति न मन्तव्यम्। यतस्तत्र स्वार्थपरस्य स्थापनमुक्तम्, अत्र तु परार्थ-परस्येति विशेषः। तथा चानन्तरं वक्ष्यति—"सद्धर्मचिरस्थितिहेतोः" इत्यादि॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायामप्रमेयगुणधारण-
25 पारमितास्तूपसत्कारपरिवर्तो नाम तृतीयः॥



# ४ गुणपरिकीर्तनपरिवर्तश्चतुर्थः ।

द्वितीयं मृदुमध्यमधिकृत्याह—**'सचेत् कौशिक अयं ते जम्बुद्वीपः'** इत्यादि । सर्व- B 205 W 267
भूभागव्यापनात् परिपूर्णः, शिखापर्यन्तकरणाच्चूलिकाबद्धः । **तथागतशरीराणाम्** इति कर्तरि
षष्ठी, तैरित्यर्थः । **प्रवार्यमाणः** इति यमिच्छसि तं भागं गृहाणेत्यभिधीयमानः । कस्माद्विशिष्टं
रूपकायं तथागतं परित्यज्य प्रज्ञापारमितापरिग्रह इति तत्कस्य हेतोः इत्याशङ्क्याह—**यथापि** 5
**नाम** इत्यादि । यस्मात्तथागतनेत्र्यां प्रज्ञापारमितायां **चित्रीकारो** भक्तिविशेषो विद्यते,
तेन इमामेव परिगृह्णीयामिति पूर्वेण संबन्धः । चित्रीकार एवास्यां कुत इत्याह—**एतद्धि** इत्यादि । W 268
यस्मादेतद्भूतार्थिकं पारमार्थिकं शरीरं धर्मकायः, तस्य मुख्यतो द्योतनात् प्रज्ञापारमिता
तथोक्ता, तस्मादत्रैव चित्रीकार इति मतिः । भूतार्थिकत्वमेव धर्मकायस्य कुतः, यस्य द्योत-
नात् प्रज्ञापारमितायां चित्रीकार इति तत्कस्य हेतोः इत्याशङ्क्याह—**उक्तं ह्येतद्भगवता** 10
इत्यादि । यस्मादुक्तं प्रदेशान्तरे भगवता "धर्मकाया मायोपमाद्वयज्ञानस्वभावाः प्रज्ञापारमिता-
त्मका बुद्धा भगवन्तः" इति । अनेन दृष्टान्तो निर्दिष्टः । अथ मतम्—स्वसंवेदनतः पूर्वक्षण-
भाविज्ञानमात्मानं परिच्छिनत्ति, एवमुत्तरक्षणभाव्यपि । तदिदमस्मादनन्तरमित्यवेत्य कारणम्,
इदं कार्यमित्यवगच्छति । अन्यथा आनन्तर्यनियमो न घटते, घटमानो वा अतिप्रसङ्गदोषं
विदध्यात् । अतः कार्यकारणभावरूपेण निश्चितत्वात् कथं मायोपमाद्वयज्ञानात्मका बुद्धा 15
भगवन्तः इति तदयुक्तम् । इदमस्मादनन्तरमिति यतो न स्वसंवेदनात् सिध्यति, तस्या-
विकल्पितविषयत्वात् । नापि ज्ञानान्तरेण सिद्धिकल्पना युक्ता । निराकारेण साकारेण वा B 206
परिच्छेदायोगात् । परिच्छेदे वा अर्थान्तरं ज्ञानस्य विषयः प्राप्नोति । स च नेष्टो
भवद्भिः, ग्राह्यत्वानुपपत्तेः । न च तेनैव ज्ञानद्वयेन आनन्तर्यनियमः परिच्छिद्यते,
द्वयोरपि तयोर्निरुद्धत्वात् । स्यादेतत्—स्वसंवेदनादेव पूर्वके ज्ञाने गृह्यमाणे कार्यं प्रति आन- 20
न्तर्यं कारणात्मकं गृहीतम्, तथा उत्तरस्मिन्नपि[1] ज्ञाने गृह्यमाणे कार्यात्मकं गृहीतमेवा-
नन्तर्यम्, कार्यकारणात्मकस्यानन्तर्यस्य तदभिन्नस्वभावत्वादिति । नैतदेवम्, यस्माज्जन्य-
जनकभावसंबन्धोल्लेखेन वस्तुद्वयग्रहणात्कार्यकारणभावो विनिश्चितः, न त्वानन्तर्यमात्रग्रह- W 269
णात् । इतरथा हि, घटग्रहणानन्तरं पटग्रहणे सति तद्गतानन्तर्यमात्रपरिच्छेदात् कार्य-
कारणभावः स्यात् । न च स्वसंवेदनस्याविकल्पकत्वेन पूर्वापरीभूतवस्तुसंबन्धोल्लेखेन ग्रहण- 25
मस्ति । तस्मादिदमस्मादनन्तरं भवतीति परिच्छेदाभावे कार्यकारणभावो निश्चितो न युक्तः,
अतिप्रसङ्गात् । अत एव अस्मादनन्तरमिदं भवतीति विकल्पोऽपि नोपपद्यते, अनुभवनिश्चया-
भावात् क्षणिकत्वादिविकल्पवदिति । **मा खलु पुनरिमं** लक्षणव्यञ्जनोज्ज्वलं शोभनं
**कायं** सत्कायं **हे भिक्षवः** परमाणुसंचयस्वभावं **मन्यध्वमिति** साध्यधर्मः कथितः । धर्मकाय-
**परिनिष्पत्तितो** मायोपमाद्वयज्ञानसाक्षात्क्रियानिष्पत्त्या निष्पन्नं मां द्रक्ष्यथ इत्यनेन हेतुरुक्तः । 30
**एष च तथागतकायो** भूतकायो **भूतकोटिप्रभावितो** धर्मकायपरिनिष्पत्त्या निष्पन्नो यदुत

१ W अन्तरस्मिन्.

प्रज्ञापारमिता तत्स्वभावः इत्यनेन पक्षधर्मोपसंहारः कृतः। एतदुक्तम्—यो मायोपमाद्वयज्ञान-
B 207 भावनापरिनिष्पत्त्या निष्पन्नः, स धर्मकायः, तद्यथा पूर्वबुद्धा भगवन्तः। यथोक्तज्ञानभावना-
परिनिष्पत्त्या निष्पन्नश्चैष तथागतकायः इति स्वभावहेतुः। अर्थस्य अत्यन्तपरोक्षत्वेन
साकारज्ञानादिभिश्च ग्रहीतुमशक्यत्वादद्वयं ज्ञानं स्वसंवेदनप्रत्यक्षसिद्धं स्वप्नादिप्रत्ययवदर्था-
5 कारोपरक्तं भावनीयमिति स्थितम्। तस्याप्युदितविधिना एकानेकस्वभावविरहात् तत्त्वतो
निःस्वभावत्वेन मायोपमत्वं निश्चितम्। अतोऽस्य मनसो भावनाबलात् स्फुटप्रतिभासित्वं
यत् तदेव तथागतत्वमिति नासिद्धो हेतुः। सपक्षे भावान्न विरुद्ध इत्यभ्युपगतपूर्वबुद्धधर्म-
कायं प्रत्येष दृष्टान्तः। अन्यस्य पुनर्धर्मकायत्वाभावे प्रमाणाबाधितयथोक्तज्ञानभावनापरि-
निष्पत्त्या निष्पन्नत्वविरहाच्चक्रवर्त्यादिवत् विपर्यासप्रसङ्गः। अविपर्यस्तश्चेष्यते तथागत इति
10 विपर्यये बाधकं प्रमाणम्। परमाणूनामयोगात् नानैकान्तिकता च हेतोः। तस्माल्लक्षण-
W 270 व्यञ्जनोज्ज्वलो योऽयं रूपकायस्तथागतो भव्यसत्त्वैः समीक्ष्यते, नासौ तात्त्विको धर्मकायः
शास्ता, किं तु परमविमलानन्तगुणराशिधर्मकायाधिपत्यादेव तेषां स्वज्ञानं तथाभूतरूप-
कायाकारेण प्रतिभासते, येन तेऽविदितस्वज्ञानतथागतप्रतिभासरूपा बाह्योऽयं भगवानिति
शास्तृबुद्ध्या विकल्पयन्तो दर्शनवन्दनादिभिरभ्युदयनिःश्रेयसभाजो भवन्ति। क्रमेण मिथ्या-
15 प्रतिभासिनोऽपि हि विकल्पस्य पारंपर्येण हितहेतुत्वं दृष्टमेव, अनित्यत्वादिविकल्पवद्वस्तु-
संबन्धात्, न तु क्षिप्रम्। यस्माद्यावद्भावाभिनिवेशेन ज्ञेये विज्ञानं समुपजायते तावदतस्मिं-
स्तद्ग्रहात् भ्रान्तमेव तद्विज्ञानं तत्त्वदर्शनाद्दूरीभवति। तस्मात् यथा मायाकारो भावव-
त्प्रतिभासमानेष्वपि हस्त्यादिषु स्वनिर्मितेषु भावेषु भावरूपतया सत्या एते इति नाभिनि-
B 208 विशते, तथा बहुशो बहुधोपायं कालेन बहुना अनभ्यस्तमहायानस्वरूपेणाप्यादिकर्मिकेण
20 सता क्षिप्रं ताथागतीमवस्थामवाप्तुमिच्छता तथागताधिपत्यभाविनि स्वज्ञानप्रतिबिम्बके रूप-
कायतथागते जगद्गुरावभिनिवेशयोगेन प्रतिपत्तिसारा श्रद्धा विधेया इति। तदेव कथय-
न्नाह—**न खलु पुनर्मे भगवन्** इत्यादि॥

तृतीयं मृद्वधिमात्रमधिकृत्याह—**अपि तु खलु पुनर्भगवन्नितः** इत्यादि। अपितुशब्दो
निपातो यस्मादर्थे वर्तते। ननु भेदे सति कथं मातुः पूजया तथागतपूजेति तत्कस्य हेतोः
W 271 25 इत्याशङ्क्याह—**प्रज्ञापारमितानिर्जातत्वात् तथागतशरीराणाम्** इति। इदमत्रार्थतत्त्वम्—
यस्मादीदृशाः सर्वलोकाभ्युद्गतमूर्तयो बुद्धा भगवन्तः प्रज्ञापारमितातो निष्पद्यन्ते, तस्मात्
महानुभावतया पूज्येयमिति तथागतोत्पत्तिसंबन्धेनास्याः पूजाया भेदेऽपि तथागताः पूजिता
इति। यदाश्रयेण यत् पूज्यं भवति, तत्पूजायां तदेव पूजितं भवति इत्येतदेव दृष्टान्तपूर्वकं
स्पष्टयन्नाह—**तद्यथापि नाम भगवन् सुधर्मायाम्** इत्यादि। सुधर्मा नाम देवसभा, सुमेरु-
30 स्थितसुदर्शननगरस्य बहिरेव दक्षिणपश्चिमे स्थिता, यस्यां निषद्य देवाः कृत्याकृत्यं
चिन्तयन्ति। कथं पुनरन्यस्य गौरवेणान्यत्र नमस्कारादिकमिति तत्कस्य हेतोः इत्याशङ्क्याह—
**इह हि किलासने** इत्यादि। किलशब्दोऽनुस्मरणे। तत्संबन्धादासनपूजायां शक्रोऽपि पूजित

इति मतिः । **महेशाख्यहेतुप्रत्ययभूता** इति । महेशाख्या चासौ महानुभावसंज्ञकत्वेन हेतुप्रत्ययभूता च यथाक्रममुपादानसहकारिकारणभेदादिति तथोक्ता । **आहारिका** इति उत्पादिका । स्थितिहेतुत्वेन तथागतशरीरमेव बुद्धत्वोत्पादकमिति कस्यचिदाशङ्कायामाह–**सर्वज्ञतायाश्च** इत्यादि । इदमुक्तं भवति–सर्वज्ञतापरिग्रहादेव तथागतशरीराणीत्युच्यन्ते । अतो न तान्यपूर्वसर्वज्ञतोत्पत्तिं प्रति हेतुप्रत्ययभूतानि, किं तु निष्पत्तेरुत्तरकालं स्थिति- 5 हेतुत्वेनाश्रयभूतानीति । **सर्वज्ञज्ञानहेतुका** इति तथागतज्ञानहेतुका । प्रज्ञापारमिता पूज्येति शेषः । उपसंहारार्थमाह–**तस्मात्तर्हि भगवन् अनयोः** इत्यादि ॥

B 209 W 272

चतुर्थं मध्यमृदुं वक्तुमाह–**तिष्ठन्तु खलु पुनर्भगवन् जम्बूद्वीपे** इत्यादि । **अपि तु खलु पुनः** इत्यादि कारणवचनं गतार्थमपि प्रसङ्गान्तरेणोक्तत्वात् न पुनरुक्तम् । प्रज्ञापार-मिताप्रभावितत्वमेवाह–**तथागतशरीराणि हि** इत्यादिना । **तस्मात्तर्हि** इत्याद्युपसंहारः ॥ 10

W 273

पञ्चमं मध्यमध्यार्थमाह–**अपि तु खलु पुनर्भगवन् इतः** इत्यादि । इतो विपर्यासरहितायाः प्रज्ञापारमितायाः श्रवणादिक्रमेणोत्पादात् पूजार्हाणि शरीराणीत्यर्थः । तदुत्पत्यापि कस्मात्पूजां लभन्ते इत्याह–**यदुत प्रज्ञापारमितापरिभावितत्वात्** इति । सुविशुद्धात् कारणात् समुत्पन्नं फलं सुविशुद्धमेवोपजायते इति कृत्वा यस्मात् प्रज्ञापारमितया 15 महानुभावत्वोत्पादनेन परिभाविताास्तथागताः सर्वथा वासिताः, तस्मात्तदुत्पत्त्या पूजां लभन्ते इति । एतदेव दृष्टान्तेन स्फुटीकुर्वन्नाह–**तद्यापि नाम भगवन् अनर्घम्** इत्यादि । तत्रानर्घं प्रणीतत्वेनामूल्यार्हम् । **एभिरेवंरूपैः** इति वक्ष्यमाणैः एवंस्वभावैः । **धम्यमाने** इत्यापूर्यमाणे । **निगृह्णीयात्** इति मन्दतामापादयेत् । **न विवर्धयेत्** इति वृद्धिं न कुर्यात् । **उपशमयेत्** इति समूलमपनयेत् । **दह्यमाने** इति तप्यमाने । **परिवृद्धे** इति व्याप्ते । **बाध्यमाने** इति पीड्यमाने । **अन्धकारतमिस्रायाम्** इति अन्धकारगह्वरायाम् । **धारयेत्** इति अन्तरीक्षधारणात् । 20 **स्थापितम्** इति भूमिस्थापनात् । मन्दतापादनात् **प्रतिहन्येत** । सर्वथा अपनयनात् **विगच्छेत्** । **एभिश्चान्यैश्च** इत्यादि । एतैरनन्तरोक्तैरन्यैरेवं वक्ष्यमाणैर्युक्तमित्यर्थः । अभिवर्धमानं पिटकमर्बुदम् । उपघातस्तिमिरम् । शूलाद्यक्षिरोगः । घनता पटलम् । समुदाचरद्रूपबीजावस्था-विगमाद्यथाक्रमं निर्घातं प्रशमं गच्छेयुरिति योज्यम् । कस्तस्य स्वको वर्ण इत्याह–**सचेत् पाण्डरेण** इत्यादि । **अन्येषाम्** इति हरितशबलादीनाम् । समस्तं वस्त्रेण **परिवेष्टयित्वा** तदेक- 25 देशेन वा । बद्धेति ज्ञेयम् । परिवेष्टयित्वेत्यस्य क्त्वान्तप्रयोगेण नापशब्दता । रजोबहुलता **कलुषभावः, तमपि प्रसादयेत्** अधो नयेत् । जम्बूद्वीपे महेशाख्यशुद्धोदनस्यापि ईदृश-**रत्नासंभवात्** सा दृष्टान्तासिद्धिः इति कस्यचिदभिप्रायनिराकरणायाह–**किं पुनः कौशिक** इत्यादि । प्रतिविशिष्टपुण्यत्वादाह–**देवेषु** इत्यादि । संख्याप्रभावाभ्यां यथाक्रममल्पानि परी-त्तानीति द्वयमुक्तम् । **तैर्मणिरत्नगुणैरित्यत्र** परिभावितत्वादिति शेषः । **परिनिर्वृतस्यापि** इति 30 अपिशब्दात्तिष्ठतः । प्रकारान्तरेणापि प्रज्ञापारमिताहेतुत्वेन पूजां दर्शयन्नाह–**यथा च भगवन्** इत्यादि । **बुद्धानां धर्मदेशना** इति । यस्माद्विकल्पस्य स्वाकारं बाह्यरूपेणाध्यारोप्य प्रवर्तना-

W 274 W 275 B 210 W 276 W 277 B 211

दतस्मिंस्तद्ग्रहेण स्वयमविद्यास्वभावस्य सद्भावे अशेषावरणप्रहाणं न संभवति, तस्मान्नित्य-
समाहितानामेव बुद्धानां भगवतां प्रज्ञापारमिताज्ञानप्रभावतो यथाधिमुक्ति भव्यानामसंकीर्ण-
देशनानिर्भासाः स्वज्ञानप्रत्ययाः समुपजायन्ते इत्येवंविधप्रत्ययानुसारेण तेषां देशना भगवतां
व्यवस्थापिता। अतः शुद्धलौकिकज्ञानसंमुखीभावो मुनिनैवं प्रकाशितः इत्यादि विनेयजन-
5 हिताध्यवसायेन क्वचित्संगीतिकर्तृभिरुक्तः। तस्मात् विनेयशब्दज्ञाननिर्भासरूपत्वे श्रोतृजन-
संबन्धिन्यपि देशना। यथा प्रज्ञापारमिताज्ञानाधिपत्यनिर्जातत्वाद्बुद्धानां धर्मदेशनेति कृत्वा
पूज्या, तथा इदानींतनानामपि धर्मभाणकानां देशना भगवतः परंपराबलायातत्वेन प्रज्ञा-
पारमिताज्ञानाधिपत्यनिर्जातत्वात् पूज्येत्यर्थः॥

W 278 षष्ठं मध्याधिमात्रं निर्दिशन्नाह—**यथा च भगवन् राजपुरुषः** इत्यादि। **अकुतोभयः**
10 इति न कुतश्चिद्भयमस्यास्तीति तथोक्तः। **धर्मकायानुभावात्** इति धर्मधातुनिष्यन्दप्रज्ञापार-
मितानुभावादित्यर्थः॥

सप्तममधिमात्रमृदुं वक्तुमाह—**तिष्ठतु त्रिसाहस्रमहासाहस्रो लोकधातुः** इत्यादि॥

W 279 अष्टममधिमात्रमध्यं निर्दिशन्नाह—**पुनरपरं भगवन् येऽप्रमेयेषु** इत्यादि। स्वपरोभ-
यार्थसंपद्भेदात् यथाक्रमं तिष्ठन्तीत्यादिपदत्रयं वाच्यम्। अथवा धर्मकायेन आसंसारमवस्थाना-
B 212 15 त्तिष्ठन्ति, संभोगकायेन बोधिसत्त्वार्थसंधारणात् ध्रियन्ते, निर्माणकायेन कतिपयदिनावस्थानात्
यापयन्ति। **प्रज्ञापारमितायां चरितव्यम्** इत्यादि प्रयोगाद्यवस्थाभेदादुक्तम्। पूर्ववत् स्वहस्तम्
**एवमेतत् कौशिक एवमेतत्** इति दत्वा मातुर्माहात्म्यमावेदयन्नाह—**येऽपि ते कौशिक** इत्यादि॥

W 280 नवममधिमात्राधिमात्रं कथयन्नाह—**महापारमितेयं भगवन्** इत्यादि। महत्तामेव
समर्थयन्नाह—**सर्वसत्त्वानां हि** इत्यादि। एतदुक्तम्—यस्मात् मातुः प्रभावेण भगवान्
20 प्रयोगावस्थायां सर्वसत्त्वानां चित्तानुष्ठानानि प्रजानाति, पृष्ठावस्थायां संपश्यति, तस्मात्
महत्त्वमस्याः इति। एतदेव समर्थयन्नाह—**तथा हि कौशिक** इत्यादि। **दीर्घरात्रम्** इति
दीर्घकालम्। **प्रज्ञापारमितायां चरति** इति वचनादन्यव्यवच्छेदः इत्यभिप्रायवानाह—**किं
भगवन्** इत्यादि। **नान्यासु** इति दानाद्यात्मिकासु। सर्वत्रैवेत्याह—**सर्वासु** इत्यादि।

दानं निष्प्रतिकाङ्क्षस्य निस्पृहस्य पुनर्भवे।
25 शीलं क्षान्तिश्च सर्वत्र वीर्यं सर्वशुभोदये॥
विनारूप्यं तथा ध्यानं प्रज्ञा चोपायसंज्ञिता।
सम्यक्प्रयोगो धीराणां षट्सु पारमितासु हि॥

—सूत्रालंकार—१९.१८—१९

W 281 इति वचनादनेन सम्यक्प्रयोगेण सर्वास्वेव बोधिसत्त्वश्चरतीत्यर्थः। प्रज्ञापारमितावचनं
30 किमर्थमित्याह—**अपि तु खलु** इत्यादि। यथा च पूर्वंगमा भवति तथा प्रागावेदितम्।
B 213 एतदेव कथयन्नाह—**बोधिसत्त्वस्य महासत्त्वस्य दानं ददतः** इत्यादि। **विपश्यतः** इति
भावयतः। उपचयार्थमाह—**न च कौशिक आसाम्** इत्यादि। **प्रज्ञापारमितापरिणामितानाम्**

इति त्रिमण्डलविशुद्ध्या परिभावितानाम् । **सर्वज्ञतापरिणामितानाम्** इति तथागतत्वे निर्यातितानाम् । अपारमिताव्यवच्छेदात् पारमितारूपेण विशेषो न चेति पूर्वेण संबन्धः । पारमिताशब्दवाच्यतया न च नानाकरणम् । नीलपीतादिभेदात् **नानावर्णाः** । समविषमरूपेण **नानासंस्थानाः । नानारोहपरिणाहसंपन्नाः** इति । आरोहो दैर्घ्यम् । परिणाहः पारिमाण्डल्यम् । अतद्रूपपरावृत्त्या न च च्छायाविशेषः, तथैवैकशब्दवाच्यत्वान्न च नानाकरणम् । 5
तदेवाह—**अपि तु** छाया छाया इत्यादि । **संख्याम्** इति व्यपदेशम् ॥

एवं त्रिविधाधिमुक्तिमनस्काराणां प्रत्येकं मृदुमृद्वादिनवप्रकारान् प्रतिपाद्योपसंहरन्नाह—**महागुणा** इत्यादि । बह्वनुशंसस्वार्थाधिमुक्तेर्निष्पादनात् महागुणसमन्वागता । संख्याप्रमाणाविषयस्वपरार्थाधिमुक्तियोगादप्रमेयगुणसमन्वागता । अपर्यन्तसत्त्वधातूद्देशपरार्थाधिमुक्तिसद्भावादपर्यन्तगुणसमन्वागता । एतावत्येव स्वपरोभयार्थभेदेन प्रत्येकं नवप्रकारत्वे- 10
नाधिमुक्तिः सप्तविंशतिप्रकारैवेति न विप्रतिपत्तिः कार्या । तथा चोक्तम्—

> **अधिमुक्तिस्त्रिधा ज्ञेया स्वार्था च स्वपरार्थिका ।**
> **परार्थिकैवेत्येषा च प्रत्येकं त्रिविधेष्यते ॥ १८ ॥**
> **मृद्वी मध्याधिमात्रा च मृदुमृद्वादिभेदतः ।**  B 214
> **सा पुनस्त्रिविधेत्येवं सप्तविंशतिधा मता ॥ १९ ॥** इति ॥  15

यथोक्तेन च ग्रन्थप्रतानेन क्रमादुत्तरोत्तराधिकानुशंसाप्रतिपादनपरेण अन्यापदेशेन सर्व एवायमधिमुक्तिमनस्कारः परिदीपितः । सर्वत्रैव स्वार्थाद्यधिमुक्तिप्रकारे मृदुमृद्वादौ प्रतिपक्षात्मकेऽधिमात्राधिमात्रादिर्विपक्षोऽर्थान्निर्दिष्टः । स्वार्थाधिमुक्तावुद्दिष्टः परार्थो भवति । द्वितीयायां सान्तरः प्रयोगः, तृतीयायां निरन्तरोऽवगन्तव्यः । अन्यथा, अनुशंसकथन-  W 283
मात्रेऽभ्युपगम्यमाने यावाननुशंसः संभवति, तावतः सकृदेवाभिधानाद्ग्रन्थप्रतानस्य निरर्थकता 20
स्यादिति पूर्वाचार्याः ॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां
गुणपरिकीर्तनपरिवर्तो नाम चतुर्थः ॥



## ५ पुण्यपर्यायपरिवर्तः पञ्चमः ।

B 215
W 286

यथाधिमोक्षदृष्टधर्मलक्षणां प्रज्ञापारमितां प्रति प्रवृत्तस्य अधिमोक्षमनस्कारस्य प्रथम-द्वित्रिनवावस्थानां भावकबोधिसत्त्वस्य यथाक्रममुत्साहनाय प्रत्येकं नवभिः प्रकारैरुत्तरोत्तराभिनन्दनं स्तुतिः स्तोभः प्रशंसा च बुद्धादिभिः क्रियते इति अधिमोक्षमनस्कारानन्तरं 5 प्रथमां स्तुतिमात्रां निर्दिशन्नाह—**अथ खलु शक्रः** इत्यादि । त्यक्तमुक्ताशयेनाप्रत्याख्यानादपरित्यजनीया । बाह्योदकाद्युपद्रवनिराकरणाद्रक्षितव्या । आध्यात्मिकाक्षरादिभ्रंशदोषापनयनाद्गोपायितव्या । **अधिमुञ्चेत्** इत्यपरित्यागबुद्ध्या स्वीकुर्यात् । **अर्थिकाय** इति प्रयोगतः । **छन्दिकाय** इति आशयतः । दद्यादिति ग्रन्थार्थस्वभावायाः फलेन सह सर्वस्वदानात् ।

W 287

एतदेव प्रयोगमौलपृष्ठावस्थाभेदेन यथाक्रमं दर्शयन्नाह—**उपनामयेत्, निर्यातयेत्, परित्यजेत्** 10 इति । देयदायकप्रतिग्राहकानुपलब्धिभेदाद्वा पदत्रयमुक्तम् । तद्वचनेन प्रतिपादयितुमाह—**तेन हि** इत्यादि । शरीरमिति प्रतिमादिकम् । तावत्कालिकत्वेन दानात् संविभजेत् । **अयमेव तयोः** इति कृपापूर्वं दानाशयस्याधिक्येन तयोर्मध्ये सत्कारादिपुरःसरं तथागतशरीरं

W 288

यो दद्यात् सोऽयमेवेत्यर्थः । तद्वचनेनेदानीं परिहरन्नाह—**एवमेव कौशिक** इत्यादि ॥

द्वितीयामाह—**पुनरपरं कौशिक यः कुलपुत्रो वा कुलदुहिता वा यत्र यत्र** इत्या-15 दिना । पटुतरश्रद्धेन्द्रियादियोगेन पात्रीभूतत्वात् भाजनीभूता यत्र मगधादौ देशे स्थिताः । तत इत्यगत्वा दातुः पूर्वोक्तात्पुद्गलादित्यर्थः ॥

B 216
W 289

तृतीयामाह—**पुनरपरं कौशिक यः कुलपुत्रो वा कुलदुहिता वा ये जम्बूद्वीपे** इत्यादिना । ग्रहणाय यत्नकरणात् समादापयेत् । गृहीतानां स्थिरीकरणात्प्रतिष्ठापयेत् । **अतः** इति अस्मादनन्तरार्थकारिणः पुद्गलात् । **अक्लिासितया** इत्यनालस्येन स्वयं प्रति-20 पत्त्यनुष्ठानात् संपादयेत् । कृतोत्साहत्वादुद्युक्तः, अमुमित्युत्पादितबोधिचित्तम् । समासतो ग्रन्थार्थशिक्षणाद्ग्राहयेदिमां प्रज्ञापारमितामिति पूर्वेण संबन्धः । अज्ञानसंशयमिथ्याज्ञानयोगेन मूढं प्रति सम्यगर्थकथनात् संदर्शयेत् । कौसीद्याच्छन्दिकताव्यासङ्गयोगात् प्रमत्तं कुशलार्थं प्रवर्तनात् समादापयेत् । हीनाधिमुक्त्यशक्यात्मसंभावनाकौकृत्यबहुकृत्यभीरुतायोगात् संलीनं विशिष्टवीर्यानुशंसकथनात् समुत्तेजयेत् । अविपरीतसमाध्यसंतुष्टिवीर्यप्रतिपत्तियोगात् 25 सम्यक् प्रतिपन्नं भूतगुणाभिनन्दनात् संप्रहर्षयेत् । विधेयतापादनादेवं वाचानुशासन्या **नेष्यति** प्रज्ञापारमितां प्रापयिष्यति । तत्र च संप्रजन्येन सम्यगुपलक्षणतया लयौद्धत्यदोषापनयनाद्यथाक्रमं **विनेष्यति अनुनेष्यति** । **अर्थम्** इति फलम्, अनुशंसम् । **एवं च** इत्यनन्तरोक्तक्रमेण । अज्ञानमिथ्याज्ञानविगमाच्चित्तं विशोधयिष्यति । संशयज्ञाननिराकरणात् निर्विचिकित्सं करिष्यति । **एहि त्वम्** इति आगच्छ त्वम् । **बोधिसत्त्वमार्गे** इति प्रज्ञापार-

B 217
W 290

30 मितायाम् । संनाहप्रयोगानिवर्तनवीर्यभेदात् यथाक्रमं **शिक्षमाणश्चरन् व्यायच्छमानः** इति पदत्रयमुक्तम् । **उपधिसंक्षये** इति । समलस्कन्धाभावे धर्मकाय इत्यर्थः । **तिष्ठन्तु खलु पुनः कौशिक जम्बूद्वीपे सर्वसत्त्वाः** । तथा **चातुर्महाद्वीपके** । **साहस्रे चूलिके** । **द्विसाहस्रे मध्यमे**

इति हारकचतुष्टयेन यथासंख्यं चतुर्थी पञ्चमी षष्ठी सप्तमी च स्तुतिमात्रा निर्दिष्टा । किं तु सर्वत्र समादापयेत् प्रतिष्ठापयेदितिपर्यन्तनिर्दिष्टपदानन्तरं पूर्वोक्तहारकात् **तत् किं मन्यसे** इत्यादि यावत् **बहुतरं पुण्यं प्रसवेत्** इत्यनुवर्तनीयम् ॥

अष्टमीं स्तुतिमात्रामाह–**तिष्ठन्तु खलु पुनः कौशिक त्रिसाहस्रमहासाहस्र** इत्यादिना । **अतः खलु पुनः** इति दशकुशले समादापयितुः प्रतिष्ठापयितुश्च सकाशादित्यर्थः ॥ 5 W 291

नवमीं स्तुतिमात्रामाह–**पुनरपरं कौशिक** इत्यादिना यावत् गङ्गानदीवालुकोपमत्रिसाहस्रमहासाहस्रलोकधातुसत्त्वानां चतुर्ध्यानेषु प्रतिष्ठापयितुरधिकपुण्यप्रतिपादनेन ॥ W 294

प्रथमां स्तोभमात्रामाह–**पुनरपरं कौशिक यावन्तो जम्बूद्वीपे** इत्यादिना । चातुर्महाद्वीपके साहस्रे द्विसाहस्रे त्रिसाहस्रे च लोकधातौ सर्वसत्त्वान् ध्यानाप्रमाणारूप्यसमापत्त्यभिज्ञासु प्रतिष्ठापयेदिति हारकचतुष्टयेन यथाक्रमं द्वितीया तृतीया चतुर्थी पञ्चमी च 10 स्तोभमात्रा निर्दिष्टा । सर्वत्र च हारकचतुष्टये प्रतिष्ठापयेदिति पदानन्तरं पूर्वोक्तहारकात् "तत् किं मन्यसे" इत्यारभ्य यावत् "भूतकोटिप्रभावनतायाम्" इत्येतत्पर्यन्तमनुवर्तनीयम् ॥ W 295 W 296

षष्ठीं स्तोभमात्रामाह–**तिष्ठन्तु खलु पुनः कौशिक त्रिसाहस्रमहासाहस्रे लोकधातौ** इत्यादिना ॥ W 297

सप्तमीं स्तोभमात्रामाह–**पुनरपरं कौशिक यः** इत्यादिना ॥ 15

अष्टमीं स्तोभमात्रामाह–**पुनरपरम्** इत्यादिना । अर्थविबोधनिपुणत्वादर्थकुशलः । B 218

> यः प्रतीत्यसमुत्पादः शून्यता सैव ते मता ।
>
> –चतुःस्तव–२०
>
> धर्मधातुविनिर्मुक्तो यस्माद्धर्मो न विद्यते ।
>
> –सूत्रालंकार–१३.११ 20

इति वचनात् प्रतीयमानपदार्थ एव हि प्रज्ञापारमिता कस्मादुपदिश्यते इत्यभिप्रायवानाह–**इयमपि भगवन् प्रज्ञापारमितोपदेष्टव्या** इति । पदार्थस्वभावशून्यतानभिज्ञस्य देश्यते इत्याह–**इयमपि** इत्यादि । ननु पदार्थप्रतिपत्तौ तत्स्वभावशून्यताप्रतिपत्तिः कथमिति तत्कस्य हेतोः इत्याशङ्क्याह–**उत्पत्स्यते हि** इत्यादि । एतदुक्तम्–यस्मादनागते काले सादृश्यार्थेन प्रज्ञापारमिताप्रतिवर्णिका उत्पत्स्यते, अतस्तां श्रुत्वा मिथ्याशास्त्राभ्यासेन 25 प्रच्छादितप्रतीयमानपदार्थे मायोपमस्वभावावबोधादनुत्तरबोध्यर्थी बोधिसत्त्वस्तां सम्यक्प्रज्ञापारमितामनवबुध्यमानोऽभिमतार्थभ्रंशात् मा विनष्टो भविष्यति । तस्माद्देश्यते इति । किंहेतुका किंस्वरूपा च सा, येन तद्धेतुस्वभावपरित्यागात् परिह्रियते इत्याह–**कथम्** इत्यादि । **प्रज्ञापारमिताप्रतिवर्णिका** इति– W 298

> प्रक्रान्तार्थतिरस्कारो या चार्थान्तरकल्पना । 30
>
> प्रज्ञापारमितायां हि प्रोक्ता सा प्रतिवर्णिका ॥
>
> –प्रज्ञापारमितापिण्डार्थः–५६

इत्याचार्यदिग्नागः । **एके भिक्षवः** इति महायानिका एव । विज्ञानवादिन इत्यर्थः । एकानेकस्वभावविरहान्निःस्वभावत्वेन अनभ्यस्तसविषयषड्विज्ञानकायस्वभावत्वेन **अभावित-** W 299

B 219 **कायाः** । तदेव कथयन्नाह—**अभावितशीलाः** इत्यादि । एतच्च पदत्रयमधिशीलाधिचित्ताधि-प्रज्ञाशिक्षात्रयवैकल्यात् यथाक्रममुक्तम् । एतत्समर्थनार्थमाह—**दुःप्रज्ञाः** इत्यादि । यस्मा-दज्ञानयोगेन दुःप्रज्ञाः । संशयज्ञानादेडमूकजातीयाः । मिथ्याज्ञानात् प्रज्ञापरिहीणाः । **रूप-विनाशो रूपानित्यता** इति । रूपस्य कल्पितस्याभावो विनाशो रूपानित्यता । विकल्पितस्य
5 रूपस्य क्षणादूर्ध्वमनवस्थानं विनाशो रूपानित्यता । धर्मतात्मकस्य च रूपस्य कल्पितरूप-रहितता विनाशो रूपानित्यता प्रज्ञापारमिता इत्युपदेक्ष्यन्ति । अर्थत्रयं चैतदावृत्तिन्यायेन
W 300 द्रष्टव्यम् । मिथ्याज्ञानोपहतत्वेन आत्मानमुत्कर्षयन्तीत्याह—**एवं चोपदेक्ष्यन्ति—य एवं गवेषयिष्यति स प्रज्ञापारमितायां चरिष्यति** इति । यथोक्तेन च निर्देशेन धर्मधर्मिणो-रनिराकरणे विपर्यस्तभावाभिनिवेशान्न मुक्तिरित्यभिप्रायवानाह—**न खलु पुनः कौशिक**
10 **रूपविनाशो रूपानित्यता द्रष्टव्या** इत्यादि । अपि तु रूपादीनां मायोपमस्वभावतैव प्रज्ञापार-मिता । भावाभावादिविपर्यासाभिनिवेशमूलस्य सवासनसकलक्लेशज्ञेयावरणस्य सम्यक्प्रहाण-हेतुत्वेन तथागतत्वपदप्रापणात् प्रतिपत्तव्येति मतिः ॥

W 302 नवमीं स्तोभमात्रामाह—**पुनरपरं कौशिक यावन्तः** इत्यारभ्य यावत् **गङ्गानदी-**वालुकोपमलोकधातुप्रतिष्ठितसत्त्वधातुस्रोतआपत्तिफलप्रतिष्ठापनकारिणः सकाशाद्बहुतरपुण्य-
B 220 W 303 15 प्रसवत्वप्रतिपादनेन । ननु स्रोतआपत्तिफले प्रतिष्ठापनमनास्रवे धातौ व्यवस्थापनम् । श्रद्धादिपूर्वकं प्रज्ञापारमितापुस्तकदानं तत्संदर्शनादिकं च सास्रवम्, तत् कथं पूर्वकार्थ-कारिणः सकाशादुत्तरार्थकारिणो बहुतरं पुण्यमिति तत्कस्य हेतोः इत्याशङ्क्याह—**अतो हि कौशिक स्रोतआपत्तिफलम्** इत्यादि । एतदुक्तम्—यस्माद्विपुलविमलानन्तगुणराशितथागत-त्वादिसर्वार्यधर्माणां जिनजनन्या हेतुत्वेन सुतरामेव स्रोतआपत्तिफलम्, अतः प्रज्ञापार-
20 मितातः संभवति, तस्मादस्याः पुस्तकदानादिना अविकलकारणस्वभावत्वात् स्रोतआपत्ति-फलस्यान्यस्य च प्रतिविशिष्टस्वभावस्य बुद्धत्वादेर्दानाद्बहुतरं पुण्यं प्रसवति ॥

W 305 W 306 प्रथमां प्रशंसामात्रामाह—**पुनरपरं कौशिक यो हि कश्चिदेव कुलपुत्रो वा कुलदुहिता वा यावन्तो जम्बूद्वीपे सत्त्वास्तान् सर्वान् सकृदागामिफले प्रतिष्ठापयेत्** इत्यादिना पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्य तथैव परिहरन्नाह—**अतो हि कौशिक**
25 **सकृदागामि** इत्यादि ॥

W 308 द्वितीयामाह—**पुनरपरं कौशिक यो हि कश्चिदेव कुलपुत्रो वा कुलदुहिता वा यावन्तो जम्बूद्वीपे सत्त्वास्तान् सर्वाननागामिफले प्रतिष्ठापयेत्** इत्यादिना । पूर्वोक्ताभि-प्रायेण तत्कस्य हेतोः इत्याशङ्क्य तथैव परिहरन्नाह—**अतो हि कौशिक अनागामि** इत्यादि ॥

W 311 B 221 W 312 तृतीयामाह—**पुनरपरं कौशिक यः कश्चिदेव कुलपुत्रो वा कुलदुहिता वा यावन्तो**
30 **जम्बूद्वीपे सत्त्वास्तान् सर्वानर्हत्त्वे प्रतिष्ठापयेत्** इत्यादिना । यथाविहितप्रकारेण तत्कस्य हेतोः इत्याशङ्क्य पूर्ववदाह—**अतो हि कौशिक अर्हत्त्वम्** इत्यादि ॥

चतुर्थीमाह–**पुनरपरं कौशिक यावन्तो जम्बूद्वीपे सत्त्वास्तान् सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा प्रत्येकबुद्धत्वे प्रतिष्ठापयेत्** इत्यादिना। यथोदितविधिना तत्कस्य हेतोः इत्याशङ्क्य तथैवाह–**अतो हि कौशिक प्रत्येकबुद्धत्वम्** इत्यादि ॥  W 315

पञ्चमीमाह–**पुनरपरं कौशिक यावन्तो जम्बूद्वीपे सत्त्वास्तेषां सर्वेषाम्** इत्यादिना। **उपनामयेत्** इति दद्यात्। केनाशयेनेत्याह–**अत्रैव प्रज्ञापारमितायाम्** इत्यादि। प्रयोग- 5  W 316 मार्गेण प्रज्ञापारमितां भावयन् दर्शनमार्गेण वृद्धिं भावनामार्गेण विरूढिं बोधिसत्त्वविशेष-मार्गेण विपुलतां गतस्तथागतभूमौ **परिपूरयिष्यति** बुद्धधर्मानित्यर्थभेदो वाच्यः। **तस्मात्पौर्व-कात्** इति। यः कश्चिद्बोधौ चित्तमुत्पादयेत्, यश्चान्यो बोधिचित्तमुत्पाद्य पुस्तकं दद्यात्, ततः पुद्गलद्वयादित्यर्थः। ननु बोधिचित्तोत्पादनपूर्वकं पुस्तकदातुरधिकार्थकारिणः सकाशात् केवलपुस्तकमात्रदातुः कथं पुण्यमहत्त्वमिति तत्कस्य हेतोः इत्याशङ्क्याह–**नियतमेषः** इत्यादि। 10 नियतमवश्यमेषोऽविनिवर्तनीयः इत्यर्थः। एतदुक्तम्–यस्मादवैवर्तिको बोधिसत्त्वो नियत-मभिसंबुध्य सत्त्वानां दुःखान्तकारित्वेन विशिष्टं पुण्यक्षेत्रम्, अतस्तस्मै पुस्तकदातुर्बहुतरं पुण्यं न तु बोधिचित्तोत्पादनपूर्वकमनियतगोत्रपुद्गलाय पुस्तकदातुः इति ॥

षष्ठीमाह–**तिष्ठतु खलु पुनः कौशिक जम्बूद्वीपकानाम्** इत्यादिना। एतद्वारकान्ते  B 222  W 317 "अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयेत्" इत्यनन्तरं "यश्चान्यः कश्चित् कौशिक कुल- 15 पुत्रो वा कुलदुहिता" इत्यादिग्रन्थः पूर्वोक्त एवानुवर्तनीयः ॥

सप्तमीमाह–**तिष्ठतु खलु पुनः कौशिक चातुर्महाद्वीपके लोकधातौ** इत्यादिना। तथैवात्र द्वारकान्ते ग्रन्थोऽनुवर्तनीयः ॥

अष्टमीमाह–**तिष्ठतु खलु पुनः कौशिक साहस्रे चूलिकायां लोकधातौ** इत्यादिना। 20  W 318 **भूयस्या मात्रया** अधिकेन प्रकारेणेत्यर्थः। तत्कस्य हेतोः इत्यत्रापि प्रश्नपरिहारार्थः पूर्ववत् वाच्यः ॥

नवमीं प्रशंसामात्रामाह–**पुनरपरं कौशिक यावन्तो जम्बूद्वीपे सत्त्वास्ते सर्वे** इत्या-  W 321 दिना। न केवलमभिसंबुध्यान्येषामर्थकरणात् क्षिप्राभिज्ञं बोधिसत्त्वमववदतोऽनुशासतश्च बहुतरं पुण्यम्, किं तर्हि अनभिसंबुध्यापीति प्रतिपादयन्नाह–**यथा यथा भगवन्** इत्यादि। 25 तत्र चीवरं वस्त्रम्। पिण्डपातो मण्डकादि। शयनं तूलिकादि। आसनं दण्डासनादि। व्याधिभिरुपहतं ग्लानं प्रति एति गच्छति युक्तरूपं भैषज्यं हरीतक्यादि। परिष्कारः खल्लकादि, तान् कारान् कृतानिति चीवरादीन् दत्तानित्यर्थः। संदृष्टफलदानसामर्थ्यात् **महाफलान्** करोति। जन्मान्तरे फलदानात् **महानुशंसान्** करोतीति पूर्वेण संबन्धः। तथागतानां बोधिसत्त्वानां च परमदक्षिणीयत्वेन निर्विशिष्टत्वादिति भावः। कुत एतदिति चेत्, यस्माच्चुन्दस्य 30  W 322  B 223 कर्मकारपुत्रस्य पिण्डपातं परिभुज्य परिनिर्वाणकालसमये भगवतैवोक्तमागमे–"मा हैतन्निमित्तं चुन्दस्य कर्मकारपुत्रस्य विप्रतिसारो भूत्। स त्वया आनन्द चुन्दस्य कर्मकारपुत्रस्य प्रतिविनोद-

यितव्यः। एवं च स वक्तव्यः—यं च पिण्डपातं परिभुज्य तथागतोऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धः, यं च पिण्डपातं परिभुज्य निरुपधिशेषे निर्वाणधातौ परिनिर्वृतः, द्वाविमौ पिण्डपातावसमसमफलौ[1] असमसमविपाकौ" इति। तुल्यफलप्रतिपादनात्तयोः समदक्षिणीयत्वमावेदितमिति। ननु भावनाभ्यासादासन्नीभावे सति कथमववादानुशासनीभ्यामासन्नीभावो 5 निर्दिश्यते इति तत्कस्य हेतोः इत्याशङ्क्याह—**एवं ह्येतद्भगवन्** इत्यादि। एवं मन्यते—प्रतीत्यसमुत्पादधर्मतैषा यस्मादववादानुशासनीभ्यां विशिष्टचित्तक्षणोत्पादादासन्नीभावो भवति। भावनाबलात्तु नितरामेवेति। बोधिसत्त्वोत्साहदातॄणां साधु साध्विति साधुकारदानेन स्तुतस्तोभितप्रशंसार्थमुपसंहरति इत्यार्यविमुक्तिसेनः। क्षिप्रतरासन्नीभावकथनादुत्साहं ददासि। अववादमुखेनानुगृह्णीषे। अनुशासनीद्वारेणानुपरिवारयसि। कथमन्यस्योत्साहवर्धनेनान्यस्यानु-10 ग्रहः इति तत्कस्य हेतोः इत्याशङ्क्याह—**अतःप्रसूता हि** इत्यादि। एतदुक्तम्—यस्मादनुत्तरसम्यक्संबोधिचित्तोत्साहवर्धनेन निष्पद्यते बोधिसत्त्वानां महासत्त्वानां जगदर्थकारिका अनुत्तरसम्यक्संबोधिः, तस्मादेषामुत्साहवर्धनात् सत्त्वानामनुग्रहः इति। एतदेव व्यतिरेकमुखेन कथयन्नाह—**यदि हि** इत्यादि। नाभिसंबुध्येरन्। अतो न सत्त्वार्थं कुर्युरिति शेषः। अन्वयमुखेन चाह—**यस्मात्तर्हि** इत्यादिना। अभिसंबुध्यन्ते। तस्माज्जगदर्थकारिणः इति मतिः। त एते 15 स्तुत्यादयः उत्तरोत्तरपुण्यमहत्त्वस्य प्रतिपादनात् तत्स्वभावत्वेन निर्दिष्टा यथाभूतार्थाधिगममात्रलक्षणा नार्थवादादिरूपा यथोक्तप्रभेदा एव प्रतिपत्तव्याः। तथा चोक्तम्—

W 323 B 224 W 324

**स्तुतिः स्तोभः प्रशंसा च प्रज्ञापारमितां प्रति।**
**अधिमोक्षस्य मात्राणां नवकैस्त्रिभिरिष्यते॥ २०॥** इति॥

एवं च कृत्वा तत्र तत्र सूत्रान्तरे निदानेषु यदुक्तं सर्वबोधिसत्त्वैर्महासत्त्वैः 20 सर्वबुद्धस्तुतस्तोभितप्रशस्तैः सार्धं भगवान् विहरतीति, तदुपपन्नं भवति॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां
पुण्यपर्यायपरिवर्तो नाम पञ्चमः॥



१ W om. असमसमफलौ.

## ६ अनुमोदनापरिणामनापरिवर्तः षष्ठः ।

सर्वबुद्धस्तुतस्तोभितप्रशस्तस्य अधिमुक्तिमनस्कारस्य अनुत्तरसम्यक्संबोधौ परिणामनं विधेयम्, इत्यतोऽनन्तरं परिणामनामनस्कारो वक्तव्यः । स च व्यावृत्तिविषयभेदादनेकविधः इति, आदौ विशेषपरिणामनामनस्कारं निर्दिशन्नाह—**अथ खलु मैत्रेय** इत्यादि । तत्र मैत्रेयो नाम समाधिः, तल्लाभात्कस्यचित् समाधेर्मैत्रेयत्वं फलम् । तदधिगमात् पूर्वप्रणिहित-मैत्रीफलाभिसमयादीदृशा वा गुणाः । तेन मैत्रीविमोक्षमुखप्रभावितत्वादर्जिता येनासौ मैत्रेयो जातः इति मैत्रेयः । सम्यक्प्रज्ञायोगात् बोधिसत्त्वः । सर्वाकारोपायसंबन्धात् महासत्त्वः । बोधिसत्त्वमहासत्त्वशब्दयोः प्रज्ञोपायाभिधायितया अमोघपाशसूत्रे पाठादिति ॥

B 225 W 325 5

**अनुमोदनापरिणामनासहगतम्** इति । अनुमोदनापूर्विका परिणामना तथागतानुत्तर-सम्यक्संबोध्यनुपलम्भालम्बनेन मनस्कारेण परिणामनाद्विशेषः परिणामनामनस्कारस्तया च सहगतमिति समासः । तथा हि—परकीयं दानमयादिपुण्यक्रियावस्तु वक्ष्यमाणानुमोदनामनस्कारेणानुमोद्य बोधौ परिणामयितव्यमित्ययमपि प्रकारः संभवति । तथा चानन्तरमेव वक्ष्यति—"एवमनुमोद्य अनुमोदनासहगतं पुण्यक्रियावस्त्वनुत्तरायां सम्यक्संबोधौ परिणामयामीति वाचं भाषेत" इति । तत इति सर्वसत्त्वानां दानमयादिपुण्यक्रियावस्तुनः सकाशादित्यर्थः । **अग्रमाख्यायते** द्विविधाग्रतायोगात् । द्विविधाग्रता श्रेष्ठाग्रता चोत्तमतया, ज्येष्ठाग्रता चाद्वितीयतयेत्याह—**श्रेष्ठमाख्यायते ज्येष्ठमाख्यायते** इति । श्रेष्ठाग्रतापि द्विविधा वरतया च उपायकौशलेन प्रवरतया च प्रज्ञापारमितयेत्याह—**वरमाख्यायते, प्रवरमाख्यायते** इति । उभाभ्यां नान्यत् प्रणीतमिति कथनायोक्तम्—**प्रणीतमाख्यायते** इति । ज्येष्ठाग्रतापि द्विविधा । उत्तमतया च समाभावात्, अनुत्तमतया चाधिकाभावादिति दर्शनायोक्तम्—**उत्तममाख्यायते, अनुत्तममाख्यायते** इति । आभ्यां नान्यन्निरुत्तममित्याह—**निरुत्तममाख्यायते** इति । यथोक्तेन च विधिना श्रावकाद्यसाधारणत्वेन **असममाख्यायते** । असमैर्बुद्धैः समतां प्राप्तुं हेतुत्वात् **असमसममाख्यायते** । अनुपलम्भाकारपरिणामनामनस्कारं निर्दिदिक्षुराह—**एवमुक्ते आयुष्मान् सुभूतिः** इत्यादि । **दशदिशि लोके सर्वतः सर्वत्रगतया** इति दशसु दिक्षु लोकधातौ सर्वस्मिन् पूर्वादिदिग्व्याप्त्या इत्यर्थः । पूर्वपश्चिमदक्षिणोत्तरासु दिक्षु यथाक्रम-मप्रमेयासंख्येयापरिमाणाचिन्त्यासु स्थिता लोकधातवो यथासंख्यमप्रमेयाप्रमेयेष्वित्यादिना निर्दिष्टाः । तथा ऊर्ध्वाधो दिशि स्थिता अनन्तापर्यन्तेष्वित्यर्थभेदो वाच्यः । **अप्रमेयाप्रमेयाणाम्** इत्यादि । लौकिकवीतरागाणां शैक्षाणां अशैक्षाणां[1] प्रत्येकबुद्धानां बोधिसत्त्वानां च यथाक्रम-मप्रमेयासंख्येयापरिमाणाचिन्त्यापर्यन्तानाम् । ज्ञानपथातीतत्वेनाप्रमेयादयो वेदितव्याः । **छिन्नवर्त्मनाम्** इत्यादि । हतारित्वेन क्षीणास्रवत्वेन च छिन्नवर्त्मानः निःक्लेशत्वेन वशीभूतत्वेन च छिन्नवर्त्मनयः । सुविमुक्तचित्तसुविमुक्तप्रज्ञत्वेन **छिन्नप्रपञ्चभवनेत्रीकाः** । आजानेयमहानागत्वेन **पर्यात्तबाष्पाः** । कृतकृत्यत्वेन कृतकरणीयत्वेन च **मर्दितकण्टकाः** । **स्वपहृतभाराणाम्**

W 326 10 15 B 226 20 W 329 25 30

---

१ B om. अशैक्षाणां.

B 227 इत्यादि व्याख्यातम् । अथवा, सर्वाकारज्ञता मार्गज्ञता सर्वज्ञता सर्वाकाराभिसंबोधो मूर्धाभिसंबोधः इति पञ्चभिरभिसमयैः प्रहातव्यवस्तुप्रहाणात् यथाक्रमं छिन्नवर्त्मनामित्यादि पञ्च पदानि । तैरेव पञ्चभिरभिसमयैः प्राप्तव्यधर्माधिगमयोगात् यथासंख्यं स्वपहृतभाराणामित्यादि पञ्च पदानि वाच्यानि । **एतस्मिन्नन्तरे** इति मध्ये । अनास्रवं शीलं समाधिः प्रज्ञा 5 च **शीलस्कन्धः समाधिस्कन्धः प्रज्ञास्कन्धः** । सर्वावरणप्रहाणं **विमुक्तिस्कन्धः** । विशिष्ट-W 330 ज्ञानसाक्षात्करणं **विमुक्तिज्ञानदर्शनस्कन्धः** । सर्वश्चैष श्रावकादिभिः साधारण इत्यसाधारणार्थमाह—**यानि च** इत्यादि । तत्र द्रव्यतः षट् पारमिताः । नामतस्तु दश भवन्ति, प्रज्ञापारमिताप्रभेदत्वाच्चतसृणां पारमितानाम् । तथा हि लोकोत्तरं निर्विकल्पकं ज्ञानं क्रमेण सर्वावरणप्रहाणकारि प्रज्ञापारमिता लोकोत्तरमार्गपृष्ठलब्धज्ञानसंगृहीताः पुनरुपायप्रणिधान-10 बलज्ञानपारमिताः स्युरिति । प्राधान्यात् आदौ षट् पारमिताः निर्दिश्य परिशिष्टपारमितोपादानार्थमाह—**बुद्धगुणसंपत्** इत्यादि । बुद्धगुणसंपदुपायपारमिता । **बलपारमिता** इति सुगमम् । **अभिज्ञापारमिता** इति बौद्धी सर्वाभिज्ञा । षष्ठी वा ग्राह्या । **परिज्ञापारमिता** इति ज्ञानपारमिता । कथं प्रकृष्टापि सती ज्ञानपारमिता न निर्विकल्पा इति चेत्, उच्यते । यस्माज्ज्ञानपारमिता निर्विकल्पज्ञानपृष्ठलब्धं ज्ञानं येन ज्ञानेनाधिगमं परिच्छिद्य स्वयं च 15 धर्मसंभोगं प्रत्यनुभवति परांश्च परिपाचयति । तच्चैतन्निर्विकल्पज्ञाने द्वयमपि नास्तीत्यतो न निर्विकल्पा ज्ञानपारमिता । **प्रणिधानपारमिता** इति ज्ञायते एव । **सर्वज्ञज्ञानसंपत्** इति B 228 प्रमुदितादिभूमयः । या च **हितैषिता** इति मुदितोपेक्षे । **बुद्धगुणाः** इति अष्टादशावेणिकबुद्धधर्मादयः । **सम्यक्संबोधिसुखम्** इति क्लेशज्ञेयावरणवासनानुसंधिप्रहाणफलम् । **सर्वधर्मैश्वर्यपारमिता** इति सर्वाकारजगदर्थसंपादनशक्तता । **अनभिभूतः सर्वाभिभूः** इति 20 मारतीर्थिकादिभिरतिरस्कृतः, तेषां च कृताभिभवनः । **ऋद्ध्यभिसंस्कारः** इति ऋद्धिप्रातिहार्यमावर्जनपूर्वकबोधिबीजारोपणहेतुः । **यच्चानावरणम्** इत्यादि । क्लेशज्ञेयावरणप्रहाणाद्यथाक्रममनावरणमसङ्गमत एवाप्रतिहतम् । समाभावादसमम् । समेनासमेनैव समत्वादसमसमम् । सर्वान्योपमातिक्रान्तत्वादनुपमम् । अनन्तज्ञानपरिच्छेदायोग्यत्वादपरिमेयम् । एवं विशेषणविशिष्टं किं तदित्याह—**तथागतयथाभूतज्ञानबलम्** इति । आदेशनादिप्रातिहार्यकरणसमर्थमेव 25 ज्ञानमव्याहतत्वात् बलमुक्तम् । **यद्बुद्धज्ञानबलं बलानाम्** इति आस्रवक्षयज्ञानमेव बलं बलानां मध्ये प्रकृष्टतरम् । **यद्बुद्धज्ञानदर्शनम्** इति

ज्ञानं सत्यादिसंबोधिरभिज्ञाः पञ्चदर्शनम् ।

W 331 **दशबलपारमिता** इति स्थानास्थानज्ञानबलादीनि दश । **चतुर्वैशारद्य** इति सम्यक्संबुद्धोऽहमित्यादिप्रतिज्ञाने पर्यनुयोक्तुरभावेन निर्भयताकाराश्चत्वारस्तैश्चतुर्भिर्वैशारद्यैः । परम-30 सुखपरिपूर्णोऽयमधिगमः सांवृतः, तात्त्विकस्त्वन्य इत्याह—**यश्च** इत्यादि । **परमार्थाभिनिर्हारेण** इति मायोपमताभिमुखीकरणेन । **धर्मचक्रप्रवर्तनम्** इति धर्मस्य स्वाधिगमस्य

१ B om. °दर्शन°.

द्योतिकया प्रज्ञापारमितादेशनया चक्रवत्पुनः पुनरामुखीकरणार्थेन प्रवर्तनं विनेयसंताने विस्तारीकरणम्। तदेव तमोपनयनात् **धर्मोल्काप्रग्रहणम्**। सम्यक् प्रतिबोधनात् **धर्मभेरीसंप्रताडनम्**। विनेयमनःप्रपूरणाद्धर्म**शङ्खप्रपूरणम्**। पौरीत्वेन **धर्मशङ्खप्रव्याहरणम्**। दृढसर्वावरणप्रहरणात् **धर्मखड्गप्रहरणम्**। तर्पणत्वेन **धर्मवृष्टिप्रवर्षणम्**। विस्पष्टत्वेन विज्ञेयत्वेन च **धर्मयज्ञयजनम्**। मनोज्ञत्वेन **सर्वसत्त्वसंतर्पणम्**। श्रवणीयत्वेन यथासुखीकरणात् 5 **संप्रवारणम्**। **ये च तत्र** इत्यादि। बुद्धधर्मेषु विनयनाद्विनीताः, प्रत्येकबुद्धधर्मेषु शिक्षणात् शिक्षिताः, श्रावकधर्मेष्वधिमोक्षादधिमुक्ताः इति योज्यम्। स्वबोध्यधिगमं प्रति नियतगोत्रत्वलाभात् नियताः, तत एव संबोधिपरायणाः। **शैक्षाणि** इति प्रथमफलप्रतिपन्नकादीनां संबन्धीनि। **अशैक्षाणि** इत्यर्हताम्। तत्र त्रैवाचिकादिकर्मणोपसंपन्नो भिक्षुः। एवं भिक्षुणी। त्रिशरणपरिग्रहात् पञ्चशिक्षापदपरिग्रहाच्चोपासकः तथोपासिकेति द्विधा 10 भेदः। त्रिशरणपरिगृहीतमुपासकं मे आचार्यो धारयतु। तथा त्रिशरणगतं पञ्चशिक्षापदपरिगृहीतमुपासकं मे आचार्यो धारयत्विति विनये द्विधा पाठात्। **मनोभावनीयान्** इति एकद्वि-त्रि-पुद्गलान्मनःप्रसादकारिणः। **निरवशेषमनवशेषम्** इति अनन्तहेतुत्वादप्रमेयफलप्रदत्वाच्च यथाक्रमं वाच्यम्। **ऐकध्यम्** इत्यादि। अतीततथागतसंबन्धेन निर्दिष्टत्वादैकध्यमेकप्रकारत्वमभिसंक्षिप्य चेतस्यध्यारोप्य अप्रमेयत्वादिरूपेण पिण्डयित्वा गणयित्वा बोधिसत्त्वादियावत्तिर्य- 15 ग्योनिसंबन्धेन तुलयित्वा प्रमाणीकृत्य वक्ष्यमाणलक्षणया अग्रया अनुमोदनया अनुमोदेत। कर्तुराशयातिशयश्रद्धातिहर्षं स्वयं तत् सर्वसंपादनाशयातिशयं कुर्यादिति यावत्। अग्रार्थमेव कथयन्नाह—**श्रेष्ठया** इत्यादि। व्याख्यातमेतत्। **वाचं भाषेत** इति सर्वतथागतशीलादिस्कन्धस्यानुपलम्भालम्बनेन मनस्कारेणानुमोदनासहगतं पुण्यं सर्वसत्त्वार्थमनुत्तरबोधौ परिणामयामीति वचनमुच्चारयेदित्यर्थः। **आहारकम्** इति उत्पादकम्। मम सर्वसत्त्वानां 20 चेति शेषः। अनुपलम्भपरिणामनामनस्कारं निर्दिश्य, इदानीं तत्र कुचोद्यपरिहारार्थं प्रश्नयन्नाह—**तत्र बोधिसत्त्वयानिकः** इत्यादि। **यैर्वस्तुभिः परिणामयति** इति यैस्तथागतत्वादिगोत्रहेतुभिर्निर्यातयतीत्यर्थः। क्वचिदनुमोदेत इति पाठः। तत्रापि परिणामनामनस्कारस्य प्रक्रान्तत्वात् परिणामयतीत्यर्थो ग्राह्यः। तथा चानन्तरमेव वक्ष्यति—"कतमैर्वस्तुभिः परिणामयति", **यैरारम्बणैर्यैराकारैः** इति। आरम्बणानि शीलादिस्कन्धाः सर्वधर्माः, तद्ग्रहण- 25 प्रकारा एव आकाराः। **तच्चित्तम्** इति ग्राहकविकल्पम्। **अपि नु** इति। अपि नु शब्दो निपातः किंशब्दार्थे वर्तते। **तथोपलभ्येरन् यथा निमित्तीकरोति** इति वस्त्वादीन्यनिमित्तीकृत्य परिणामयितुमशक्यत्वात्तान्यतीततया अविद्यमानान्येव अध्यारोप्य यथोद्भावनासंवृत्या विषयीक्रियन्ते। किं तत्त्वतस्तथैव समुपलभ्यन्ते इत्यर्थः। यद्यप्युपलभ्यन्ते इति मतम्, तथा च सति 30

प्रमाणव्याहतत्वेन विपर्यासो हि वस्तुनः।
उपलम्भो मरीच्यादिज्ञानवत् परिनिश्चितः॥

B 229 W 332 B 230

W 333 तस्मात्तद्बलतो वृत्तः परिणामविधिर्मतः ।
आत्मात्मीयविपर्यासप्रवृत्त इव दुर्बलः ॥

B 231 इति मतिः। विकल्पविषयस्यारोपितत्वेनालीकत्वात् प्रत्ययाधीनतया वीतवृत्तित्वाच्च स्वप्न-मायामरीचिवन्नैवोपलभ्यन्ते तत्त्वतः इत्याह—**न तानि भदन्त** इत्यादि। एवमपि विपर्यस्त-
5 परिणामप्रसङ्ग इत्याह—**यदि सोऽसंविद्यमानम्** इत्यादि। स्वलक्षणविषयीकरणात् **आरम्बणी-कुर्यात्**, सामान्यरूपपरिच्छेदात् **निमित्तीकुर्यात्**। संज्ञाया निमित्तोद्ग्रहणात्मिकायाः स्वविषया-भावेन विपर्यासः, अतस्मिंस्तद्ग्रहाद्भ्रान्तिः संज्ञाविपर्यासः। चित्तस्यालम्बनग्राहकविज्ञानस्य तथैव विपर्यासः **चित्तविपर्यासः**। दृष्टेरेवाकारपरिच्छेदरूपायाः संतीरणात्मिकायाः प्रज्ञायाः पूर्ववद्विपर्यासो **दृष्टिविपर्यासः**। **न भवेत्** इति कथं तस्येति पूर्वेण संबन्धात्। अपि तु
10 भवेदित्यर्थः। तथा चानुपलम्भपरिणामनामनस्कारः संज्ञाविपर्यासादिरूपः इति शेषः। तस्मा-
W 334 दन्यथा संज्ञादीनां विपर्यासत्वप्रतिपादनेन प्रकृतार्थाविरोधान्न किंचिदुक्तं स्यात्। ननु अन्यस्य स्वविषयाभावेन संज्ञादेर्विपर्यासत्वे अतत्स्वभावस्य अन्यस्य कथं संज्ञाविपर्यासादिरूपतेति तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि** इत्यादि। **रागोऽपि** इति। अपिशब्देन द्वेषादिपरिग्रहः। **विकल्प्येति** अध्यारोप्य। **संकल्प्येति** पुनः पुनरालम्ब्य। विपर्यस्तसंज्ञादिप्रभवत्वाद्रागोऽपि
15 संज्ञाविपर्यासः इति योज्यम्। एतदुक्तम्—यस्मादविद्यमानं नित्यत्वादिकमनित्यत्वादिधर्म-युक्ते वस्तुन्यध्यारोप्य तदेव पुनः पुनरालम्ब्य उत्पद्यमानो रागादिर्विपर्यस्तसंज्ञादिहेतुकत्वेन संज्ञाविपर्यासादिरूपः समुत्पद्यते। तस्मादनुपलम्भपरिणामनामनस्कारस्तथैवोत्पद्यते इति।
B 232 पक्षान्तरार्थमाह—**अथापि** इत्यादि। अथापि यथावस्तु यथारम्बणं यथाकारोऽसंविद्यमानः इति शेषः। तथा बोधिस्तथा चित्तम्। किमसंविद्यमानमित्यध्याहार्यम्। एवमित्यभ्युपगमे
20 सत्याह—**एवम्** इत्यादि। ग्राह्यग्राहकाश्च सर्वधर्मास्तद्वासनाः सर्वधातवोऽसंविद्यमानाः
W 335 प्राप्ताः इति मतिः। भवत्वेवम्, को दोषः इति चेत्, आह—**यदि च** इत्यादि। एवं मन्यते—यदि यथा वस्त्वादिकमसंविद्यमानं तथा बोधिचित्तादिकम्। तदा कतमैर्वस्त्वादिभिः कतमं चित्तादिकं क्व बोधौ परिणामयति? यावता नैव केनचित् किंचित् क्वचित् परिणामयति। अतः सर्वथा परिणामानुपपत्तौ परिणामविपर्यासः इति। तत्त्वेन विपर्यस्तो-
25 ऽप्यनित्यादिविकल्पवत् पारंपर्येण भूतार्थप्रापकः संवृत्या वस्त्वादेर्विद्यमानत्वेन परिणामना-मनस्कार इष्यते एव। अतो न किंचिदधिकं त्वयोक्तमित्यभिप्रायेणाह—**नेदमार्यसुभूते** इत्यादि। अथवा तस्मिन् वस्त्वारम्बणादौ पारमार्थिकाभिनिवेशविगमेन संवृत्या माया-पुरुषस्येव परिणामनात् न विपर्यस्तपरिणामः इत्यभिप्रायवानाह—नेदमार्यसुभूते इत्यादि। युक्तियुक्तमपि कथमादिकर्मिकस्य न वक्तव्यमिति तत्कस्य हेतोः इत्याशङ्क्याह—**यदपि हि**
30 **स्यात्** इत्यादि। अधिगमसंप्रत्ययवैकल्याददृढत्वेन श्रद्धामात्रकम्। तदेव मृदुमध्याधिमात्र-भेदादुक्तम्—**प्रेममात्रकम्** इत्यादिपदत्रयेण। अथवा, श्रद्धामात्रकमस्तित्वगुणवत्त्वशक्तत्वेषु यथाक्रममभिसंप्रत्ययः प्रसादोऽभिलाषः इत्येवं प्रेममात्रकमित्यादि त्रिधा निर्दिष्टम्। **अन्त-**

**धीयेत** इति विनश्येत् । संवृतिपरमार्थविभागाकुशलत्वादिति भावः । न वक्तव्यमेव तर्हि प्राप्त- B 233
मित्याह—**अविनिवर्तनीयस्य** इत्यादि । यो वा कल्याणमित्रोपस्तब्ध इति पृथग्जनस्यापि W 336
कल्याणमित्राधिष्ठितत्वेनोभयसत्यस्वरूपपरिज्ञानादिति भावः । उपसंहारार्थमाह—**एवं च**
इत्यादि । एवमिति संवृतिसत्यानतिक्रमेण । पुनरपि संवृतिपक्षाश्रयेण चोद्यार्थमाह—**येन**
इत्यादि । यत् इति अनुमोदनासहगतं कुशलमूलम् । तच्चित्तमित्यनुमोदकं परिणामनाकाले, 5
क्षीणमुपचयविनाशात् निरुद्धं प्रबन्धविनाशेन, विगतं प्रकृतिविनाशात्, विपरिणतं विकार-
विनाशेन । तत्तस्मात्कतमत्तच्चित्तमनुमोदकं परिणामनाकाले येनानुमोदकचित्तेन परिणाम-
यति ? नैव केनचिदित्यर्थः । एवं मन्यते—एवं चात्र बोधिसत्त्वेन महासत्त्वेनानुमोदनासहगतं W 337
पुण्यक्रियावस्तु सर्वज्ञतायां परिणामयितव्यमिति वचनेन पौर्वापर्यप्रतिपादनात् नैकस्मिन्
क्षणे द्वावनुमोदनापरिणामनामनस्कारौ भवतः इति प्रतिपादितम् । तस्मात् समानकर्तृत्वे 10
क्त्वाप्रत्ययविधानादेकमेव चित्तं पूर्वमनुमोद्य पश्चात् परिणामयतीत्युक्तम् । तच्चायुक्तम्, यतो
नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् क्षणिकत्वेनानुमोदकं चित्तं परिणामनाक्षणे
नास्ति, अतस्तेन कथं परिणामयतीति ? एवमनुमोद्येति पदमसंगतमिति निर्दिश्य, इदानी-
मनुमोदनासहगतं पुण्यक्रियावस्त्विति पदमयुक्तमित्यावेदयन्नाह—**कतमद्वा** इत्यादि । एतदुक्तम्
अनुमोदनाकारेणोत्पादादनुमोदकमेव चित्तमनुमोदनासहगतं पुण्यक्रियावस्तूच्यते यतः, 15
तस्मात् कतमद्वा तच्चित्तं व्यतिरिक्तम् अनुमोदनासहगतं पुण्यक्रियावस्तु यच्चित्तं कर्मभूतमनु-
मोदकं चित्तं कर्तृभूतं परिणामयति ? न च तेनैव चित्तेन तस्यैव परिणामना युक्ता, स्वात्मनि B 234
कारित्रविरोधादिति मतिः । अथ मतम्—अनुमोदनाचित्तानन्तरं विशिष्टचित्तक्षणोत्पादादनुमो-
दनासहगतं पुण्यक्रियावस्तु यच्चित्तं प्राप्तम्, तत्पश्चात् परिणामनाचित्तेन परिणामयितव्यमित्ययं
तस्य वाक्यार्थ इति, तथापि परिणामयितव्यमिति पदं नोपपन्नमित्याह—**कथं वा शक्यम्** इत्यादि । 20
एवं वाक्यार्थो योजनीयः—प्रथमक्षणभाविनो विज्ञानस्य क्षणिकत्वेन द्वितीये क्षणेऽभावः । तथा
द्वितीयक्षणभाविनोऽपि कारणवैकल्यादनुत्पादेन प्रथमक्षणेऽभावः इत्येवं यदा द्वयोः परिणामनी- W 338
यपरिणामकयोः प्रथमद्वितीयक्षणभाविनोश्चित्तयोः समवधानसंभवो नास्ति, तत्कथं द्वितीयक्षण-
भाविना परिणामनाचित्तेन प्रथमक्षणभाविचित्तमनुमोदनासहगतं पुण्यक्रियावस्तु परिणाम-
यितुं शक्यमिति । पूर्वचित्तानुत्पादता तर्हि विद्यमाना परिणाम्यते इति चेत्, आह—**न च** 25
**तच्चित्तस्वभावता शक्या परिणामयितुम्** इति । नीरूपत्वादिति भावः । भगवदार्यमैत्रेयाधि-
ष्ठानेन शक्रः परिहरन्नाह—**मा खलु** इत्यादि । अयमभिप्रायः—संवृत्या अभ्युपगतभावानामर्थ-
क्रियाकारित्वेन क्षणिकत्वे सति विशिष्टोत्पत्तिक्रियासमावेशं मुक्त्वा न वै कश्चित् क्रियान्तर-
समावेशः संभवति । अतो योगिनां विशिष्टानुमोदकचित्तानन्तरं विशिष्टतरमनुमोदनासहगतं
पुण्यक्रियावस्तुचित्तमुत्पद्यते । ततोऽप्यनन्तरं तत्कुशलमूलवासनावासितं विशिष्टतमं चित्तं 30
परिणामनाकारेणोदयमासादयति प्रतीत्यसमुत्पादधर्मताबलात् इति स्थितमेतद्वस्तुतत्त्वम् ।
क्षणेन व्यवहारायोगाद्बालजनानुरोधेन संतानापेक्षणात् सामयिकत्वेन च शब्दवृत्तेरेवं चात्र B 235

बोधिसत्त्वेन महासत्त्वेनानुमोद्य अनुमोदनासहगतं पुण्यक्रियावस्तु सर्वज्ञतायां परिणामयितव्य-मित्यनेन वाक्येनोक्तमार्यमैत्रेयेण कर्मकर्तृक्रियादिरूपतया। तत्र च वस्तुभागं परित्यज्य
W 339 शब्दमात्रमेव गृहीत्वा बालजनोत्रासकरो विकल्पो न कार्यः इति। किं च–एवमनुमोद्य अनुमोदनासहगतं पुण्यक्रियावस्तु **अनुत्तरायां सम्यक्संबोधौ परिणामयामि इति वाचं भाषेत**
5 इति प्राक् स्ववचनादार्यसुभूतिनापि संवृतिपक्षे यथोक्त एवाभिप्रायोऽभ्युपगन्तव्यः इत्यभि-प्रायेणाह–**कथं चार्यसुभूते** इत्यादि। यदि यथोक्ताभिप्रायो न गृह्यते, तदा गत्यन्तराभावात् कथं परिणामयितव्यम्? नैव कथंचित्, तस्माद्यथोक्त एवाभिप्रायो ग्राह्यः इत्यर्थः। तदेव कथयन्नाह–**कथं चानुमोदनासहगतम्** इत्यादि। परिगृह्णता सुपरिगृहीतं परिणामयता सुपरिणामितं कथं भवतीति योज्यम्। अविपर्यासलक्षणपरिणामनामनस्कारार्थमाह–**अथ**
W 340 10 **खल्वायुष्मान् सुभूतिः** इत्यादि। **आरभ्य** इति विकल्पकेन विज्ञानेन आमुखीकृत्य।
W 341 अधिष्ठानं कृत्वेति अग्रतो विषयभावेनावस्थाप्य परिणामयामीति वाचा परिणामनाद्विकल्पेन परिणामः कृतः, तस्मात् सर्वस्यैव विकल्पस्य प्रकृत्या स्वभावप्रतिभासेऽनर्थे अर्थाध्यवसायेन प्रवृत्तेर्भ्रान्तत्वमित्यभिप्रायेणाह–**कथं न संज्ञाविपर्यासः** इत्यादि। परिहारार्थमाह–**सचेदार्य-सुभूते** इत्यादि। **तस्मिंश्चित्ते न चित्तसंज्ञी भवति** इति परिणामकचित्ते तस्मिन्
15 परमार्थतो न चित्ताभिनिवेशी भवति। एवं को गुणो भवतीत्याह–**एवं बोधिसत्त्वेन**
B 236 इत्यादि। उपसंहरन्नाह–**यथा तच्चित्तम्** इत्यादि। इदं तद्वर्तमानं परिणामकं चित्तमित्यभि-निवेशेन। तत्त्वतो यथा तच्चित्तं न संजानीते न प्रतिपद्यते तथा यदि परिणामयति, तदैव सम्यगनुपलम्भहेतुप्रवृत्तत्वान्न संज्ञाविपर्यास इत्यादि योज्यम्। एतदुक्तम्–यदि तस्य
W 342 विकल्पस्याविषयस्य विषयवत्तां गृह्णीयात्, तदा भ्रान्तो भवेत्। यावता मायाकारवदसौ
20 तज्ज्ञानमविषयमविषयतयैवावगम्य विकल्पेन परिणामनेऽपि स्वरूपपरिज्ञानात् कथं भ्रान्तो भवति इति सामर्थ्यकथितमप्यर्थं स्पष्टयन्नाह–**अथ येन चित्तेन** इत्यादि।

मायाकारो यथा कश्चिन्निर्मिताश्वादिगोचरम्।
चेतो निर्विषयं वेत्ति तेन भ्रान्तो न जायते॥

इति न्यायेन परिणाम्यमानचित्तादावपि मायापुरुषस्येव वर्तनात् न विपर्यास इत्याह–
25 **सचेत् पुनः** इत्यादि। यच्चित्तमिति परिणाम्यमानम्। **एवं संजानीते** इति वक्ष्यमाण-क्षीणत्वादिना प्रयोगपृष्ठावस्थायां प्रतिपद्यते। **एवं समन्वाहरति** इति मौलावस्थायाम्। **तस्यापि चित्तस्य सैव धर्मता** इति परिणामकचित्तस्य स्वभावविरहात् सैव क्षीणत्वादिधर्मता।
W 343 **यैरपि धर्मैः** इति वस्त्वादिभिः। **येष्वपि धर्मेषु** इति सर्वज्ञतादिषु। अमुमेवार्थमनागतादि-
W 348 हारकत्रयभेदेन दर्शयन्नाह–**यथा अतीतानामेवमनागतानाम्** इत्यादि। स एव धर्मोऽक्षय
B 237 30 इति धर्मतारूपेण क्षयाभावादक्षयो बुद्धत्वम्। **न धर्मो धर्मं परिणामयति** इति धर्मः परिणामनामनस्कारः पुण्यक्रियावस्तुधर्मः। ननु परिणामयामीति शब्दोल्लेखेन परिणामनात् विकल्पः समाक्षिप्तः, तस्य च प्रकृत्या स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तेर्भ्रान्तत्वात्

कथं न संज्ञादिविपर्यासः इति तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि स ताम्** इत्यादि। W 349
एतदुक्तम्—यदारोपितस्य तात्त्विकस्य च रूपस्य विभागं न जानीयात्, तदा दृश्यविकल्प्या-
वर्थौ एकीकृत्य स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवर्तनाद्भ्रान्तो भवेत्, यावता विकल्पविषय-
मारोपितमारोपितात्मना अलीकरूपेण निश्चिन्वन् संवृत्या स्वलक्षणं च वस्तु निर्विकल्पक-
ज्ञानगोचरं पृथगेव मायोपमात्मकं मायोपमात्मना अवितथरूपेण पश्यन् यदा परिणामनां 5
नाभिनिविशते, न च परिणाम्यमानं चित्तं परिणामकं चित्तं जानातीत्यपि प्रतिपद्यते।
**न च धर्मो धर्मं परिणामयति इत्यवगच्छति, तदा कथं विपर्यस्तो नाम** इति। यथोक्त-
मेवार्थं व्यतिरेकमुखेन स्पष्टयन्नाह—**सचेत् पुनः** इत्यादि। नन्ववबोधमन्तरेण प्रवृत्त्यसंभवात्
कथं जानानो न परिणामयतीति तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि स तां परिणामना-
मभिनिविशते** इति। प्रमाणबाधितभावरूपाम्। तत्त्वेनेति शेषः। विविक्तपरिणामनामन- 10 W 350
स्कारमाह—**सचेत् पुनरस्यैवं भवति सोऽपि पुण्याभिसंस्कारः** इति। पुण्यं कुशलमूलान्य-
लोभादीनि। तस्याभिसंस्कारः तत्समुत्थापिका क्रियाचेतना। आत्मादिसंबन्धदोषरहितत्वा-
द्विविक्तः। मायोपमतया सर्वोपद्रवप्रशमहेतुत्वेन शान्तः। शान्तत्वादिरूपेणाप्यभिनिवेशो
विपर्यास इत्याह—**सचेदेवम्** इत्यादि। यदि शान्ता इत्याद्येवंरूपेण भावतो न संजानीते, B 238
तदा सम्यक् प्रवृत्तत्वादेवमियं तस्य प्रज्ञापारमितेति योज्यम्। बुद्धकुशलमूलस्वभावानुस्मृति- 15
परिणामनामनस्कारं निर्दिशन्नाह—**यदपि तत्तेषां बुद्धानाम्** इत्यादि। **यादृश एव स
परिणामः** इति मायोपमः। तदपीति परिणामकं चित्तम्। संवृत्या अविचारैकरम्यपूर्वपूर्व-
स्वकारणमाश्रित्य कुशलमूलस्यैवोत्पादात् तज्जातिकम्। स्वसामान्यलक्षणरूपेण यथाक्रममर्थ-
क्रियासु योग्यत्वादयोग्यत्वाच्च तल्लक्षणं तन्निकायम्, धर्मधातुस्वभावत्वात् तत्स्वभावम्।
**सचेदेवं संजानीते** इति। निमित्ततः इति शेषः। बुद्धिपूर्वकत्वात् व्यापाराणां कथं प्रति- 20 W 351
पद्यमानो न परिणामयतीति तत् कस्य हेतोः इत्याशङ्क्याह—**न हि बुद्धाः** इत्यादि। निषेध्या-
भावे निषेधानुपपत्तौ तत्र शून्यत्वादौ तत्त्वाभिनिवेशो विपर्यासः इत्यभिप्रायः। प्रकारान्तर-
मप्याह—**यच्चातीतम्** इत्यादि। असंप्राप्तमिति वर्तमानकालतां न प्रतिपन्नम्। स्वभाव-
वैधुर्येणावस्थानानुपपत्तेः स्थितिर्नोपलभ्यते। सहकारिकारणतया **नैव निमित्तम्**।
उपादानकारणतया **न विषयः**। यथोक्तरूपेणालम्बनात्। सचेदेवं निमित्तीकरोति, तथैव 25
निषेधाभिनिवेशेन वस्तुतत्त्वापरिज्ञानात्[1] न समन्वाहरति। ततो विपर्यस्तत्वात् न परिणाम-
यतीति। अनिमित्तीकारेण तर्हि परिणामनायां काष्ठादेरपि प्राप्नोतीत्याशङ्क्याह—**अथ
स्मृतिवैकल्येन** इत्यादि। स्मृत्यभावेन शून्यादिकं काष्ठादिभावो न निमित्तीकरोति। तथापि
वस्तुतत्त्वापरिज्ञानात् न समन्वाहरति। एवं स्मृतिवैकल्यादनवबोधाद्वा देवदत्तादिर्न
मनसिकरोति किंचित्, तथापि पूर्ववत् न समन्वाहरति। ततश्च तथैव विपर्यस्तत्वात् न 30
परिणामयतीति वाक्यार्थः। यदि निमित्तीकारेणानिमित्तीकारेण च न परिणामः, तदा कथं

१ W °परीक्षणात्.

W 352 तर्हि क्रियतामित्याह–**अथ तन्निमित्तम्** इत्यादि। एतदुक्तम्–निमीलिताक्षजात्यन्धादीनामिव प्रत्ययवैकल्येन अमनसिकारमात्रात् न भावादिविपर्यासवासना प्रहीयते, असंज्ञिसमापत्त्यादिव्युत्थितस्येव योगिनः पुनरपि भावाद्यभिनिवेशमूलस्य रागादिक्लेशगणस्योत्पत्तेः। न चापि विना विपर्यासप्रहाणेन पूर्वोपलब्धेषु रूपादिषु पटुतरतदनुभवाहितमनसिकारपरिवर्जनं कर्तुं 5 शक्यम्, अग्न्यपरिवर्जने दाहापरिवर्जनवत्। तथा हि–अमी रूपादिमिथ्याविकल्पा न कण्टकादिवदुत्कील्य चेतसोऽपनेतव्याः, किं तर्हि भावादिषु अस्तित्वविपर्यासबीजापगमात्। अतस्तदविनिवृत्तावप्रहीणतिमिरदोषस्येव पुंसोऽलीकरूपाद्यभिनिवेशः प्रवर्तमानः केन वार्येत? तच्च विपर्यासबीजं योगिनः प्रज्ञाचक्षुषा निरूपयतः सर्वधर्माणां सम्यग्ज्ञानालोकेनादर्शनात् न भवति। एवं सति उत्खातमूला इव तरवो निर्मूलतया दुर्विकल्पाश्चेतसि 10 तत्त्वतो न पुनर्विरोहन्ति, इत्येवं तन्निमित्तं तथागतकुशलमूलं परिणामकं च चित्तं मायोपमतया समन्वाहरति। तद्रूपेणैव तत्त्वतोऽनभिनिवेशात् न च निमित्तीकरोति इति।

W 353 B 240 उपायकौशलपरिणामनामनस्कारं कथयन्नाह–**एवमत्र बोधिसत्त्वेन** इत्यादि। उपायकौशलमिति दानादीनामनुष्ठानेऽप्यनुपलम्भः। ननु भिन्नत्वादुपायकौशलशिक्षाया मातुः श्रवणादिना कः संबन्ध इति तत्कस्य हेतोः इत्याशङ्क्याह–**न हि प्रज्ञापारमिताम्** इत्यादि। 15 एतदुक्तम्–दानादीनामनुपलम्भेन या प्रज्ञापारमितायाः परिणामनाक्रिया, सैव यस्मादुपायकौशलशिक्षा, तस्मान्मातुः श्रवणादिकं विना न भवति इति। एतदेव स्पष्टयन्नाह–**तत्र य एवं वदेत्** इत्यादि। **स्याद्वचनीयः** इति वक्तव्यो भवेदित्यर्थः। ननु भिन्नत्वात् परिणामस्य प्रज्ञापारमितया सह कः संबन्ध इति तत्कस्य हेतोः इत्याशङ्क्याह–**निरुद्धा हि** इत्यादि। पूर्वकुशलमूलोपार्जकचित्तचैतसिकधर्माणां तद्वासनानां च तत्त्वतोऽनुत्पादात् निरुद्धा हि ते 20 आत्मभावाः, निरुद्धा हि ते संस्कारा इति द्वयमुक्तम्। प्रयोगमौलपृष्ठावस्थायामुपलम्भाभावेन त एव यथाक्रमं शान्ता विविक्ता विरहिता उपलब्धिन इति योज्यम्। अथवा, तदाकारेण निराकारेण अन्याकारेण च ज्ञानेन ग्रहीतुमशक्यत्वाद्यथाक्रमं वाच्यम्। अयमभिप्रायः–परि- W 354 णाम्यमानधर्माणां तद्वासनानां च तत्त्वतोऽनुत्पादात् परिणामकज्ञानपथातीतत्वेन यस्मात् परिणामानुपपत्तिः, तस्माद्विकल्पेनाध्यारोप्य प्रज्ञापारमिताबलेन मायोपमधर्मताधिमोक्षादविप- 25 र्यस्तः सम्यगुपायकौशलपरिणामः शक्यते कर्तुमिति। अनिमित्तपरिणामनामनस्कारं वक्तुमाह–**अपि तु खलु पुनः स पुद्गलः** इत्यादि। शून्यताद्येकरूपेण ग्रहणात् निमित्तीकृत्य पुनः पुनर्मनसिकरणाद्विकल्प्य च यथाभूतमपगतभावाभावादिरूपं तत्त्वं पश्चात् स्वविकल्पप्रतिभासेऽनर्थे B 241 अयथाभूते अर्थाध्यवसायेन यथाभूतसंज्ञी पारमार्थिकसंज्ञी सन् विकल्पप्रतिभासितमर्थमुपलम्भमनुपलम्भे बुद्धत्वे परिणामयेदिति वाक्यार्थः। नन्वर्थोपलम्भाभावात् कथमेवं परिणामितं 30 नाभ्यनुजानन्तीति तत्कस्य हेतोः इत्याशङ्क्याह–**एष एव हि तस्य** इत्यादि। एतदुक्तम्–**यस्मात्पुद्गलः** शून्यताद्याकारतया परिनिर्वाणमनुत्तरां बोधिनिमित्तीकरोति विकल्पयति च, स्वविकल्पप्रतिभासेनाकारेण तथैव चोपलभते, तस्मादध्यारोपितार्थरूपेण ग्रहणादविचिकि-

त्स्यत्वेन तस्यैवं महानुपलम्भः इति । ननूपलम्भस्य मनःप्रसादादिकारित्वात् कथं तत्संज्ञिनः W 355
परिणामना न महार्थकरीति तत्कस्य हेतोः इत्याशङ्क्याह-**सविषः** इत्यादि । अभिमतधर्म-
तत्त्वाधिगमभ्रंशार्थेन मरणहेतुत्वात् सविषः । सर्वसंसारदुरुद्धरदुःखहेतुत्वेन सशल्यः ।
आदिकर्मिकाणां मनःप्रसादादिकारित्वेऽपि प्रमाणव्याहतत्वादिति शेषः । एतदेव स्पष्टय-
न्नाह-**तद्यथापि नाम** इत्यादि । तत्र परिज्ञातविषदोषरूपत्वात् पण्डिताः । विषस्वरूपा- 5 W 356
ज्ञानात् बालाः । स्वरूपावगमेऽप्यनवधारितमारणशक्तित्वात् दुःप्रज्ञाः । सुखोत्पादकत्वात्
सुखकरम् । पर्यवसाने दुःखफलत्वात् दुःखविपाकम् । **एकः** इत्युपलम्भसंज्ञिनः श्रुतचिन्ता-
भावनावस्थासु मिथ्यावधारणात् यथाक्रमं दुर्गृहीतेनेत्यादि पदत्रयम् । मायोपमार्थस्य सर्व-
विपर्यासविनिवृत्तिप्रयोजनानवगमात् सुभाषितस्यार्थमजानानाः मायोपमपदार्थस्वरूपावधारण-
शक्तिवैकल्यात् यथाभूतमर्थमनवबुध्यमानाः । नन्वादिकर्मिकस्य मनःप्रसादादिकारित्वात् 10
कथमुपलम्भः सदोषो येन तत्संज्ञिनः परिणामो नास्तीति तत्कस्य हेतोः इत्याशङ्क्याह-
**सविषत्वादुपलम्भस्य** इति । प्रमाणव्याहतत्वेनेति मतिः । **नैवं शिक्षितव्यम्** इत्युपलम्भ- B 242
योगेन शिक्षा न कार्या । बुद्धानुज्ञातपरिणामनामनस्कारं निर्दिशन्नाह-**कथं पुनरनेन** W 357
**शिक्षितव्यम्** इत्यादि । **अनभ्याख्यातुकामेन** इति तथागतनिर्दिष्टार्थानुष्ठानेन फलप्राप्ति-
दर्शनादतिरस्कर्तुकामेन । बुद्धज्ञानेन प्रज्ञाचक्षुषा सर्वधर्माविकल्पनविषयेण जानन्ति । 15
बुद्धचक्षुषा सर्वाकारसर्वधर्माभिसंबोधविषयेण पश्यन्तीति योज्यम् । **यया धर्मतया** इति
मायोपमतया । **अभ्यनुजानन्ति** इति यथा सर्वमार्गानुपलम्भालम्बनेन मनस्कारेण W358
परिणाम्यमानस्य स्वहस्तं प्रयच्छन्ति । **अनपराधः** इति निर्दोषत्वादकृतापराधः । अपगतोप-
लम्भविषयत्वात् निर्विषः परिणामः, रूपकायधर्मकायप्राप्तिहेतुत्वात् यथाक्रमं महापरिणामो
धर्मधातुपरिणामः । प्रयोगपृष्ठावस्थापुष्टत्वात् परिपूर्णः । मौलावस्थायां सम्यक् परिपूर्णत्वात् 20
सुपरिपूर्णः । त्रैधातुकापर्यापन्नपरिणामनामनस्कारं प्रतिपादयन्नाह-**पुनरपरं बोधिसत्त्व-**
**यानिकेन** इत्यादि । अपर्यापन्नमिति कामादिधातुत्रयस्यानुपलम्भादप्रतिष्ठितम् । तत्र-

नरकप्रेततिर्यञ्चो मनुष्याः षड् दिवौकसः ।
कामधातुः स नरकद्वीपभेदेन विंशतिः ॥
ऊर्ध्वं सप्तदशस्थानो रूपधातुः पृथक् पृथक् । 25
ध्यानं त्रिभूमिकं तत्र चतुर्थं त्वष्टभूमिकम् ॥
आरूप्यधातुरस्थान उपपत्त्या चतुर्विधः ।
ध्यानादूर्ध्वं ससंस्थानो रूपे सद्भावतोऽथ वा[1] ॥

-अभिधर्मकोश-३.१-३

अतीतादिकालत्रयेऽप्रतिष्ठितत्वादाह-**नाप्यतीतम्** इत्यादि । ननु कामादिधातावती- 30 B 243
तादिकाले चावस्थितस्य चित्तक्षणस्य परिणामनात् कथं तत्र न प्रतिष्ठित इति तत्कस्य W 359
हेतोः इत्याशङ्क्याह-**त्र्यध्वत्रैधातुक** इत्यादि । एतदुक्तम्-त्र्यध्वत्रैधातुकस्य तत्त्वेनानुत्पादा-

१ W [अ]रूपे सद्भावना मताः.
अष्ट. ५०

दपर्यापन्नत्वे कथं तत्र स्थितः **परिणामः** इति। यत्रापि धर्म इति बुद्धत्वे। धर्मधातुवत् क्षयाभावादविनष्टः परिणामः। **अपर्यापन्नः** इत्यभिनिवेशो बन्धनमित्याह। **अथ तम्** इत्यादि। उपसंहरन्नाह–**तत्र योऽयम्** इत्यादि। प्रश्नमुखेन सम्यगुपदेशकत्वात् आर्यसुभूतेः साधु साधु इति साधुकारः। अन्यथा, आर्यमैत्रेयेणोपदिष्टत्वात् कथमन्यं प्रति साधुकारः साधुः

W 360 5 स्यात्? नन्वविपर्यस्तधर्मदेशनाभावे कथं शास्तृकृत्यमिति तत्कस्य हेतोः इत्याशङ्क्याह–**यो ह्ययम्** इत्यादि। एतदुक्तम्–यस्मान्मायोपमतया सर्वोऽयं परिणामो धर्मधातुपरिणामः, तस्मादविपर्यस्तदेशनया बुद्धकृत्यं करोषीति॥

W 361 अतोऽनन्तरं महापुण्योदयपरिणामनामनस्कारो वक्तव्यः। स च मृदुमध्याधिमात्रभेदेन त्रिविधः इति मृदुमधिकृत्याह–**अस्यामेव धर्मतायाम्** इत्यादि यावत् "पञ्चाना-

10 मभिज्ञानां लाभिनो भवेयुः" इति। एतदुक्तम्–दशकुशलकर्मपथसेविनः सत्त्वानारभ्य यावत् पञ्चाभिज्ञानां पुण्याभिसंस्कारात् मृदुभूतात्तदनुपलम्भालम्बनमनस्कारेणानुमोदनापूर्वकपरि-

B 244 णामस्याधिकपुण्यत्वेन मृदूपाधिभेदात् मृदुमहापुण्योदयपरिणामनामनस्कारः इति। मध्यमावेदयन्नाह–**तिष्ठतु खलु पुनः** इत्यादि, यावत् "सर्वे प्रत्येकबुद्धा भवेयुः" इति। एतदुक्तम्–

W 362 प्रथमफलस्थमारभ्य यावत् प्रत्येकबुद्धानां पुण्याभिसंस्कारात् मध्यभूतात्तदनुपलम्भालम्बन-

15 मनस्कारेणानुमोदनापूर्वकपरिणामस्याधिकपुण्यत्वात् मध्योपाधिभेदेन मध्यमहापुण्योदयपरि-

W 363 णामनामनस्कारः इति। अधिमात्रं वक्तुमाह–**तिष्ठतु खलु पुनः** इत्यारभ्य यावत् "सर्वेऽप्युपलम्भसंज्ञिनोः दानं दद्युः" इति। गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सम्यक्संबोधिप्रस्थितसर्वसत्त्वानां तावद्भिरधिकैर्वा सोपलम्भैः सर्वैश्चीवरपिण्डपातादिभिस्तावतः कल्पानुपस्थानकरणपुण्यादधिमात्रभूतात्तदनुपलम्भालम्बनमनस्कारेणानुमोदनापूर्वकपरिणाम-

20 स्याधिकपुण्यत्वेन अधिमात्रोपाधिभेदादधिमात्रमहापुण्योदयपरिणामनामनस्कार इति समुदायार्थः। अवयवार्थस्तूच्यते–**संप्रस्थिताः** इति प्रणिधिप्रस्थानचित्ताभ्यां प्रवृत्ता इत्यर्थः। **ते सर्वे** इति। **दद्युः**। **एतेन पर्यायेण** इति वक्ष्यमाणेन संबन्धः। तमेव कथयन्नाह–**अन्येषु** इत्यादि। **अन्येषु** इति अपरापरेषु। **उपतिष्ठेत्** इति सकृदुपस्थानं कुर्यात्। **सर्वसुखोपधानैः** इति स्नानोद्वर्तनादिभिः। **सर्वैः सुखसंस्पर्शविहारैः** इति यथेच्छं

W 364 25 चंक्रमणादिविहारैः। उपतिष्ठेदिति पूर्वेण संबन्धः। **एतेन पर्यायेण** इति। ते सर्वे सम्यक्संबोधिसंप्रस्थिताः सत्त्वा यथोक्तापरापरलोकधातुस्थितसर्वसत्त्वानामेतेन पर्यायेण एकैकसत्त्व-

B 245 क्रमेणोपस्थानात् तच्च दानमुपलम्भसंज्ञिनो दद्युरिति यावत्। **तान् सर्वसत्त्वान्** इत्यादि। तानन्यान् यथोक्तलोकधातुस्थितान् सर्वसत्त्वानेकैकं परिकल्प्य कृत्वा पुनस्तानेव सर्वबोधिसत्त्वानेकैको बोधिसत्त्वस्तावतः कल्पानुपतिष्ठेदिति वाक्यार्थः। **क्रमेण** इत्यभिप्रायात्

30 पूर्वहारकादस्य विशेषः। **अनेन पर्यायेण दानं दद्यात्** इति। यथा गङ्गानदीवालुकोपमान् कल्पानेकं बोधिसत्त्वमेको बोधिसत्त्वः समुपतिष्ठेत्, एवं स एवैको बोधिसत्त्वोऽनेन गङ्गानदीवालुकोपमकल्पोपस्थानक्रमेण तेषामपरापरनिर्दिष्टलोकधातुसंगृहीतानां सर्वेषां बोधिसत्त्वानां

सुखोपधानार्थं दानं दद्यात् । एवमनन्तरोक्तक्रमेण सर्वेऽपि ते सम्यक्संबोधिसंप्रस्थिता दानं दद्युः । **रूपी भवेत्** इति परमाणुस्वभावरूपस्कन्धः स्यात् । **न मायेत** इति प्राचुर्यात् न तिष्ठेत् । ननूपलम्भसंज्ञिनां दानमयः पुण्याभिसंस्कारोऽप्रमेयोऽपि कथं **यावदुपनिषदमपि न क्षमते** इति तत्कस्य हेतोः इत्याशङ्क्याह–**तथा हि** इत्यादि । एतदुक्तम्–यस्मात्तेषां सुप्रभूतं दानं दत्तं सत् एकत्वादिसंख्यादिरहितमप्यप्रमेयादिसंख्यायोगादप्रमेयं सुबह्वित्यादि- 5 परिसंख्यातं भवति, तस्मात्तद्धेतुकपुण्याभिसंस्कारः परिणामनापुण्यस्कन्धस्याप्रमेयादि- संख्यादिरहितस्य यावदुपनिषदमपि न क्षमते इति । भगवदधिष्ठानेन कृतादरा देवपुत्राः कारित्रमाहुः–**महा** इत्यादिना । यानत्रयविनेयसत्त्वमार्गोपदेशहेतुभावव्यापारयुक्तत्वेन जगदर्थ- करणात् महापरिणामः । कथमेवमित्यादिशङ्कायामाह–**यत्र हि नाम** इत्यादि । यस्मिन्नुपाय- कौशले सति यस्मात्तावन्तमप्रमेयादिसंख्यावत् तत् नाम प्रसिद्धं पुण्यस्कन्धमभिभवति, 10 तस्मान्महापरिणाम इति वाक्यार्थः । सम्यग्देशनया संजातप्रसादातिशयत्वेन पूजापूर्वकं प्रशंसार्थमाह–**अथ खलु त्रायस्त्रिंशानाम्** इत्यादि । पुरतः समन्ताच्च यथाक्रमं प्रकर- क्षेपादभ्यवाकिरन्नभिप्राकिरन्नित्यर्थभेदः । **एवमन्येभ्यः** इति यामादिभ्यः । **एवमेव** इति त्रायस्त्रिंशकायिकानामिव महापरिणामोऽयमित्यादिशब्दमुदीरयन्ति । पुनः पुनरुच्चारणा- द्घोषमुदीरयन्ति । **एवमेव पेयालेन कर्तव्यम्** इति । एवमेव शब्दमुदीरयन्ति, घोषमनु- 15 श्रावयन्तीति पदद्वयं सर्वत्र महापरिणामोऽयमित्यादिहारकान्तेऽतिदेशनीयमित्यर्थः । **चिररात्र- संचितम्** इति दीर्घकालोपार्जितम् । **महाविस्तरसमुदानीतम्** इति अनेकप्रयोगयत्नसाधितम् । पुनरपि परिणामस्य माहात्म्यार्थमाह–**अथ खलु भगवांस्तान्** इत्यादि । ननु प्रयोगादिमहत्त्वे- ऽपि कथं दानमयः पुण्याभिसंस्कारः स्वल्पप्रयोगादिजनितपरिणामपुण्यक्रियावस्तुनो यावदुपनिषदमपि न क्षमते इति तत्कस्य हेतोः इत्याशङ्क्याह–**तथा हि ते बोधिसत्त्वाः** 20 इत्यादि । प्रमाणव्याहतत्वेनोपलम्भस्य विपर्यस्तत्वादिति मतिः । अनुमोदनापूर्वकमपि सर्वमेवाधिमुक्तिमनस्कारेणोपार्जितं कुशलमूलं सर्वधर्मानुपलम्भभावनया सर्वसत्त्वार्थमनुत्तर- बोधौ मायापुरुषेणेव परिणामयितव्यम्, इति, एक एव सर्वसत्त्वानां त्रियाननिर्याणमार्गोप- देशहेतुभावव्यापारयुक्तः परिणामनामनस्कारः । कस्यचित्तु क्वचिदभिनिवेश इति तत्प्रति- पक्षार्थं यथोक्तन्यायेन मन्दबुद्धिजनानुग्रहाय द्वादशप्रकारः प्रभेदः कृतः । तीक्ष्णप्रज्ञाना- 25 मवज्ञाविनिवृत्त्यर्थं नातिप्रभेदः । तथा चोक्तम्–

W 365 B 246 W 367 W 368 W 369 B 247

**विशेषः परिणामस्तु तस्य कारित्रमुत्तमम् ।**
**नोपलम्भाकृतिश्चासावविपर्यासलक्षणः ॥ २१ ॥**
**विविक्तो बुद्धपुण्यौघस्वभावस्मृतिगोचरः ।**
**सोपायश्चानिमित्तश्च बुद्धैरभ्यनुमोदितः ॥ २२ ॥** 30
**त्रैधातुकाप्रपन्नश्च परिणामोऽपरस्त्रिधा ।**
**मृदुर्मध्योऽधिमात्रश्च महापुण्योदयात्मकः ॥ २३ ॥** इति ॥

W 373 अनुमोदनामनस्कारेण स्वपरपुण्यक्रियासमतां प्रतिलभते इत्यतोऽनन्तरमनुमोदनामनस्कारार्थमाह–**अथ खल्वायुष्मन्** इत्यादि। **कियता** इति कियन्मात्रेण प्रकारेण। **न गृह्णीते** न मन्यते। **नोपलभते** इति तत्त्वतः प्रयोगाद्यवस्थास्विति योज्यम्। **न कल्पयति न विकल्पयति न समनुपश्यति** इति यथाक्रममतीतानागतप्रत्युत्पन्नानिति संबन्धः। अभूतपरिकल्प-
5 प्रभवत्वात् **कल्पनाविठपिताः**। वर्तमानस्वसामान्यरूपविरहाद्यथाक्रमम् **अजाताः अनिर्जाताः**। अतीतादागमनाभावेन **अनागतिकाः**। अनागते गमनाभावेन **अगतिकाः**। **धर्मता** इति मायोपमरूपता। **इयता** इति एतावता अनन्तरप्रकारेणेत्यर्थः। **यथाविमुक्ति** इति यथा क्लेशज्ञेयावरणविगतिरनुत्पत्तिलक्षणा। तत्त्वेन सांक्लेशिकधर्मायोगादबद्धानां वैयवदानिकधर्मविरहादमुक्तानाम्। यस्मादव्याहतदर्शनालोकस्य शास्तुर्यथा विभागशः प्रत्यात्मनि प्रतिभासिते
10 तथा विभागेनैव जगद्धितविधित्सया तेन द्रष्ट्रा करुणामयेन भगवता कर्मफले प्रोक्ते, तस्मादतीन्द्रियमपि सर्वं यथादर्शनमेव स्थितमिति भावः। संसारनिर्वाणाप्रतिस्थानादसक्तानाम्। अनुमोदनाधिकारे प्रसङ्गात् परिणामयामीति परिणामनामनस्कारः कथितः। मायोपमतया संसरणाभावावसंक्रान्तितः विनाशाभावादविनाशतः इति योज्यम्। प्राणातिपातादित्रिविधकायिककर्माभावात् कायसुचरितम्। मृषावादादिचतुर्विधवाचिककर्मविगमात्
15 वाक्सुचरितम्। अभिध्यादित्रिविधचैतसिककर्मवियोगात् मनःसुचरितम्। पूर्ववत् तत्कस्य W 375 हेतोः इत्याशङ्क्य तथैवाभिप्रायेणाह–**तथा हि ते बोधिसत्त्वाः** इत्यादि। पैशुन्यपारुष्यसंभिन्नप्रलापैरभिधानादाक्रुष्टः। दण्डादिभिस्ताडनादभिहतः। हठेन नियमकरणात् परिभाषितः। उन्नतिलक्षणेन मानेन सह वर्तनात् समान इत्येके। समानशब्दः सन्निद्ध्यर्थे
W 376 वर्तते इति केचित्। तथैव तत्कस्य हेतोः इत्याशङ्क्याह–**तथा हि ते** इत्यादि। उत्तप्त-
20 वीर्यारम्भप्रदर्शनार्थं स्थानचंक्रमणयोरुपादानात्तिष्ठन्तश्चंक्रमणाभिरूढाः इति द्वयमुक्तम्। W 377 अनभ्युत्साहलक्षणविषादविगमादविषीदन्तः। **स्त्यानमिद्धेन** इति। मोहांशिकचित्तकर्मण्यता स्त्यानम्, दध्याद्युपयोगनिमित्तमागम्य मोहांशिकश्चेतसोऽभिसंक्षेपः मिद्धम्। पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह–**तथा हि** इत्यादि। **चत्वारि ध्यानानि समापद्येरन्** इति लौकिकानि
W 378 B 249 रूपधातुसंगृहीतानि चत्वारि ध्यानानि भावयेयुः। तथैव तत्कस्य हेतोः इत्याशङ्क्य
25 पूर्ववदाह–**तथा हि ते बोधिसत्त्वाः** इत्यादि। तदयं समासार्थः–संवृत्युपायेन कुशलमूलान्युपलभ्य प्रमुदितचित्तेन परमार्थतोऽनुपलम्भतया अनुमोदनीयानीत्यनुमोदनामनस्कार इति।

B 248 (margin at line 8)

तथा चोक्तम्—

**उपायानुपलम्भाभ्यां शुभमूलानुमोदना।**
**अनुमोदे मनस्कारभावनेह विधीयते॥ २४॥** इति॥

30 अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्याया-
मनुमोदनापरिणामनापरिवर्तो नाम षष्ठः॥

## ७ निरयपरिवर्तः सप्तमः ।

सास्रवभावनामार्गानन्तरमनास्रवो भावनामार्गो वक्तव्यः । स च द्विविध इति प्रथममभिनिर्हारलक्षणं भावनामार्गं वक्तुं स्वभावाभिधानादाह—**अथ खल्वायुष्मान्** इत्यादि । तथागतज्ञानस्य निष्पादनहेतुत्वात् सर्वज्ञज्ञानपरिनिष्पत्तिः । सर्वज्ञत्वमिति रूपाद्यविपरीतदर्शनम् । स्वभाव इत्यर्थः । **एवम्** इत्यादिवचनेन लब्धप्रसादातिशयत्वादभिनिर्हारस्य विस्तरेण ज्ञानस्वाभाव्यपरिदीपनार्थमाह—**अवभासकरी** इत्यादि । उष्मगतज्ञानालोकत्वादवभासकरी । कायवाङ्मनोभिः प्रणामान्नमस्करोमि । यस्मान्नमस्करोमि तस्मान्नमस्कारार्हत्वान्नमस्करणीया । मूर्धावस्थाप्राप्तत्वेनाश्रद्धादिभिरसंसर्गादनुपलिप्ता । क्षान्तिस्वभावत्वेनापायसंवर्तनीयकर्मविगमात् सर्वलोकनिरुपलेपा । अग्रधर्मरूपत्वेन लोकोत्तरज्ञानोदयहेतुत्वादालोककरी । दुःखे धर्मज्ञानक्षान्त्या स्वदर्शनप्रहातव्यत्रैधातुकक्लेशप्रहाणात् सर्वत्रैधातुकवितिमिरकरी । धर्मज्ञानेन विमुक्तिसाक्षात्करणात् सर्वक्लेशदृष्ट्यन्धकारापनेत्री । अन्वयज्ञानक्षान्त्या आर्यधर्मान्वयावगमादाश्रयणीया । अन्वयज्ञानेन निश्चयावधारणादग्रकरी । समुदये धर्मज्ञानक्षान्त्यादिभिश्चतुर्भिः क्षणैः पूर्ववत् व्यापारकरणाद्यथाक्रमं बोधिपक्षाणां धर्माणां **क्षेमकरी, आलोककरी, सर्वभयोपद्रवप्रहीणा आलोककरी** इति पदचतुष्टयं योज्यम् । मांसदिव्यप्रज्ञाबुद्धधर्मचक्षुःपरिग्रहं कृत्वा पूर्ववन्निरोधे धर्मज्ञानक्षान्त्या मार्गदर्शयित्री । धर्मज्ञानेन चक्षुः । अन्वयज्ञानक्षान्त्या मृदुमध्याधिमात्रविपक्षापगमेन आर्यधर्मान्वयावगमात् मोहतमस्तिमिरविकरणी । अन्वयज्ञानेन निश्चयावधारणाद्वितिमिरकरणी । मार्गे तथैव धर्मज्ञानक्षान्त्या अकरणी । धर्मज्ञानेन मार्गावतारणी । अन्वयज्ञानक्षान्त्या सर्वज्ञता । अन्वयज्ञानेन सर्वक्लेशज्ञेयावरणवासनानुसंधिप्रहीणतामुपादाय अनुत्पादिका । सास्रवभावनामार्गेण कुशलधर्मप्रसवनादनिरोधिता । मायोपमत्वादनास्रवाभिनिर्हारभावनामार्गरूपेण सदावस्थानादनुत्पन्ना अनिरुद्धा । अत्यन्तविशुद्धिभावनामार्गस्वभावेनातिशयहितकारिणीत्वात् स्वलक्षणशून्यतामुपादाय माता । स च मृदुमध्याधिमात्रभेदात् त्रिविध इति यथाक्रमं दशबलकरी, अनवमर्दनी, नाथकरीति पदत्रयमुक्तम् । आनन्तर्यमार्गतया सर्वसंसारप्रहाणात् संसारप्रतिपक्षः । कूटः सामग्री, तत्र तिष्ठतो हेतुप्रत्ययजन्यो भावस्तथोक्तः, तत्प्रतिषेधादकूटस्थतामुपादाय । विमुक्तिमार्गेण सर्वगुणसंपदभिमुखीभावात् सर्वधर्मस्वभावविदर्शनी, पश्चादेवं समधिगततत्त्वानां यथाशयं त्रियानधर्मदेशनया परिपूर्णत्रिपरिवर्तद्वादशाकारधर्मचक्रप्रवर्तनी, इत्येवमेषां पदानामर्थनिर्देशो वाच्यः इति पूर्वाचार्याः । तत्र त्रयः परिवर्ताः द्वादश च आकाराः यस्मिन् धर्मचक्रे इति विग्रहः । तत्रामी त्रयः परिवर्ताः—यदुत इदं दुःखमार्यसत्यम्, तत्खल्वभिज्ञाय परिज्ञेयं परिज्ञातम् । इदं दुःखसमुदयः आर्यसत्यम्, तदभिज्ञाय प्रहातव्यं प्रहीणम् । इदं दुःखनिरोधः आर्यसत्यम्, तदभिज्ञाय साक्षात्कर्तव्यं साक्षात्कृतम् । इदं दुःखनिरोधगामिनी प्रतिपदार्यसत्यम्, तत्खल्वभिज्ञाय भावयितव्यं भावितं मयेति भिक्षवः पूर्वमनुश्रुतेषु धर्मेषु योनिशोमनसिकुर्वतः प्रत्यक्षार्थत्वादनास्रवा प्रज्ञा

W 382 B 252 चक्षुरुदपादि । निःसंशयत्वात् ज्ञानम्, भूतार्थत्वात् विद्या, विशुद्धत्वात् बुद्धिरुदपादि, इत्येतत् क्रियापदमेकैकस्मिन् सत्ये त्रिष्वपि योज्यम् । अतः प्रत्येकं चतुर्णामार्यसत्यानां त्रिपरिवर्तनात् त्रिपरिवर्तम् । चक्षुरित्यादयश्चाकाराश्चत्वारस्त्रिपरिवर्तनात् प्रतिसत्यं त्रयः इत्यतो द्वादशाकारम् । एतावतैव जगदर्थसंपादनात् परिपूर्णं त्रिपरिवर्तद्वादशाकारं धर्मश्चक्र-5 मिव धर्मचक्रं यत् प्रथमतो वाराणस्यां भाषितं सूत्रम् । यथा राज्ञश्चक्रवर्तिनश्चक्ररत्नमग्रेसरम्, सर्वस्तु बलकायस्तदेवानुसरन् पश्चाद्गच्छति, तथा सकलत्रैलोक्याधिपतेस्तथागतस्य तत्सूत्र-मग्रतः कृत्वा सर्वो देशनाधर्मः प्रभवति । अतस्तन्मातुराधिपत्येन प्रवर्तते इति भगवती तथोक्ता । श्रेष्ठतां प्रतिपादयितुमाह—**कथं भगवन्** इत्यादि । परिहरन्नाह—**यथा शारिपुत्र**

W 383 इत्यादि । शास्तृशरीरप्रतिपत्त्यादिविधानात् नान्यथा बुद्धत्वसंप्राप्तिः इति श्रेष्ठता कथिता । 10 **कुतः** इति कस्माद्धेतोरित्यर्थः । तदेवाह—**किंनिदाना** इति । एतन्निदानेति पुण्यस्कन्धाभि-भवहेतुका । अभिनिर्हारश्रेष्ठताधिकारे परिणामनामनस्काराभिभूतपुण्यस्कन्धहेतुका पृच्छा किमर्थमिति चेत्, उच्यते । यत्र हि नाम सास्रवपरिणामनामनस्कारस्येदृशी श्रेष्ठता यद्बला-दप्रमेयदानादिपुण्यस्कन्धाभिभवो जातः, तत्र सुतरामेव अनास्रवभावनामार्गस्येति कथनाय

W 384 परिणामाभिभूतपुण्यस्कन्धहेतुका पृच्छा कृता । अतिशयार्थमेवाह—**अपि तु खलु पुनः** 15 इत्यादि । **सर्वज्ञतामार्गावताराय** इति बुद्धत्वप्रापकमार्गप्रमुदितादिभूमिष्ववतारनिमित्तम् । अपरिणायकमभव्यमिति सारथिभावरहितमयोग्यम् । संवृतिपरमार्थसत्यसकलसत्त्वार्थालम्बन-

B 253 भेदात् त्रिविधम्[1] । **दानम्** इत्यादि । तत्र दानं धर्मामिषाभयभेदात् त्रिविधम् । तथा शीलमकुशल-निवृत्तिकुशलप्रवृत्तिसत्त्वार्थक्रियारूपेण त्रिविधम् । तथा क्षान्तिरपि धर्मनिध्यानदुःखाधि-वासनपरापकारमर्षणात्मिका त्रिविधा । तथा वीर्यमपि संनाहकुशलसत्त्वार्थप्रयोगभेदात् 20 त्रिविधम् । तथा ध्यानं गुणसत्त्वार्थक्लेशप्रतिपक्षसुखाभिनिर्हारात्[2] [3] पूर्ववत् त्रिविधमिति । **जात्यन्धभूतम्** इति उत्पद्यमानमेव संवृतिपरमार्थसत्यसकलसत्त्वार्थालम्बनभेदात्[4] त्रिविधप्रज्ञा[5]-चक्षुषा विहीनम् । **कुतः पुनः** इति कस्मात्पुनः । नैवेत्यर्थः । पारमितानामधेयमेव कथयति **पारमिताशब्दम्** इति । **आसां चक्षुःप्रतिलम्भः** इति दानादिपारमितानां धर्मताचक्षुः-समन्वागमः । सर्वधर्मानभिसंस्कृतिं प्रतिपादयितुमाह—**कथं भगवन् बोधिसत्त्वेन** इत्यादि ।

W 385 25 परिहरन्नाह—**रूपस्य** इत्यादि । मायोपमतया रूपादेरधिगमो मातुरभिनिर्हार इत्यर्थः । उपसंहरन्नाह—**एवमनभिसंस्कारेण** इत्यादि । तथतारूपत्वात् सर्वधर्मविशेषानुत्पादनेन अधिगमप्रयोगोऽनभिसंस्कारः, तेन स्कन्धानामधिगमः इति यावत् । क्वचिदनभिनिर्हारेणेति पाठः । तत्राप्ययमेवार्थो ग्राह्यः । सर्वधर्मानुपलम्भेनाभिसमयार्पणार्थमाह—**एवमभिनिर्हृता** इत्यादि । **न कंचिद्धर्ममर्पयति** इति यथोपलम्भादिविपर्यासस्तथा न कंचिदधिगमधर्मं[6] 30 योगिसंताने समुत्पादयति, तदा प्रज्ञापारमितेति संख्यां गच्छति अविपर्यस्तत्वादिति मतिः ।

---

१ B om. the sentence. २ W गुणाभिनिर्हार°. ३ W °सुखविहारभेदात्. ४ W om. संवृति...भेदात्. ५ W त्रिमण्डलविशुद्धिप्रज्ञा°. ६ W om. अधिगम.°.

सर्वज्ञतायास्त्वर्पणं युक्तम्, अन्यथा निरर्थिकैव प्रज्ञापारमितेत्यभिप्रायवानाह–**किमियं भगवन्** इत्यादि । विपर्यासद्वारेण नार्पयतीत्याह–**न यथोपलम्भः** इत्यादि । तत्रोपलम्भो बाह्यार्थोपलम्भो नाम चत्वारोऽरूपिणः स्कन्धाः । अभिसंस्कारो मायोपममेवेदं[1] तत्त्वमित्यादिचित्ताभोगः । प्रकारान्तरव्यवच्छेदेनान्यथार्पणमित्याह–**कथं तर्हि** इत्यादि । **यथा कौशिक नार्पयति तथार्पयति** इति येन प्रकारेण मायोपमतया कंचिदभिनिवेशं विपर्यासं नार्पयति तथा सर्वज्ञतामर्पयतीत्यर्थः । न कंचित् **धर्ममुत्पादयति** इति वैयवदानिकम्, न कंचिद्धर्मं निरोधयतीति सांक्लेशिकम् । प्रत्युपस्थितेत्यनुत्पादाय, अनुपस्थितेत्यनिरोधायेति योज्यम् । एवमप्यभिनिवेशो बन्धनमित्याह–**सचेदेवम्** इत्यादि । प्रयोगदर्शनभावनाविशेषमार्गेषु यथाक्रमं **दूरीकरिष्यति रिक्तीकरिष्यति तुच्छीकरिष्यति न करिष्यति** इति पदचतुष्टयं योज्यम् । प्रकारान्तरेणापि दूरीकरणादिकमाह–**अस्त्येषः** इत्यादिना । भवत्येष रूपाद्यभिसंबोधपर्याय इत्यर्थः । ननु धर्मतया रूपाद्येव प्रज्ञापारमिता इति न्यायात् कथं रूपाद्यवगमेन मातुर्दूरीकरणादिकमिति तत्कस्य हेतोः इत्याशङ्क्याह–**प्रज्ञापारमितायां हि** इत्यादि । एतदुक्तम्–मायोपमतया यस्मात् रूपाद्येव जिनजननी इत्येकस्वभावत्वेन न्यायात् परिदीपितायां प्रज्ञापारमितायां पृथग्रूपाद्यवगमो विपर्यासः । तस्माद्रूपाद्यवगमेन मातुर्दूरीकरणादिकम् इति महार्थतामाह–**महापारमितेयम्** इत्यादिना । बुद्धमहार्थसाधनात् महापारमिता । तत्र **न महत् करोति** अधिकानुत्पादात् । **नाल्पीकरोति** व्यवस्थितानपकर्षणात् । तदेव यथायोगं कथयति–**न संक्षिपति न विक्षिपति** इति ।

प्रसिद्धमात्रस्य हि यायथार्थता
तदर्थसंबोधफलं हि शासनम् ।

इति भावः । **न बलीकरोति** अपूर्वसमारोपात् । **न दुर्बलीकरोति** विद्यमानानपवादात् । पृथग्जनावस्थायां विपर्यासबलादल्पीयसी सर्वज्ञता । मुक्त्यवस्थायां मातुः सामर्थ्येन विपर्यासापगमात् महती जाता । तत्कथमेवं वक्ष्यते इति तत्कस्य हेतोः इत्याशङ्क्याह–**असंक्षिप्ता हि** इत्यादि । एतदुक्तम्–विपर्यासापगमे मातुः सामर्थ्यस्य स्थितत्वेन यस्मात् सर्वज्ञता असंक्षिप्ता अविक्षिप्ता, तस्मान्न महती नाल्पीक्रियते इति । तत्राप्यभिनिवेशो बन्धनमित्याह–**सचेदेवम्** इत्यादि । **किं पुनरेवं संजानानः** इति वक्ष्यमाणोपलम्भं प्रतिपद्यमानः किं पुनः प्रज्ञापारमितायां चरति, अपि तु महोपलम्भत्वान्नैवेत्यर्थः । ननूपलम्भस्य को दोषो येन तत्सद्भावान्न चरतीति तत्कस्य हेतोः इत्याशङ्क्याह–**न ह्येष** इत्यादि । एतदुक्तम्–यस्मादेष प्रज्ञापारमितायाः सदृशः स्यन्दो निष्यन्दः तदनुरूपं फलं सत्त्वनिर्वाणोपलम्भो न भवति, तस्मादुपलम्भाभावान्न चरतीति । **कथं पुनरेतत्** इति तत्कस्य हेतोः इत्याशङ्क्याह–**सत्त्वास्वभावा** इत्यादि । सत्त्वानामस्वभाव एव जातिः प्रकृतिर्यस्या इति सा तथोक्ता । एवं मन्यते–सत्त्वानुत्पादप्रकृतिकाया मातुः कथं सत्त्वोपलम्भो निष्यन्दफलमिति । सत्त्वानुत्पादरूपतार्थ-

[1] W मायोपमतया कश्चिदेवं तत्त्वम्.

B 256 मेवाह—**सत्त्वास्वभावतया** इत्यादि। तत्रास्वभावता विविक्तता अचिन्त्यता यथाक्रमं कल्पितादे-
र्वेदितव्या। सत्त्वाविनाशधर्मता सदैवावस्थिता तथता। सत्त्वस्य मायोपमतया दर्शनमार्गेण
अनवगमः सत्त्वानभिसंबोधनता। सत्त्वस्य पूर्ववत् भावनामार्गेण अप्रतिपत्तिः सत्त्वयथा-
भूतार्थानभिसंबोधनता। सत्त्वस्य बलं प्रमाणाव्याहतं सामर्थ्यं मायोपमत्वम्, तस्य प्राप्तिः
5 समुदागमनता। तया तथागतबलस्य प्रज्ञापारमितायाः समुदागमनता वेदितव्या।
यथोक्तस्वभावादिलक्षण एवाभिनिर्हारभावनामार्गोऽवसातव्यः। तथा चोक्तम्—

**स्वभावः श्रेष्ठता तस्य सर्वस्यानभिसंस्कृतिः।**
**नोपलम्भेन धर्माणामर्पणा च महार्थता॥** २५॥ इति॥

तदनन्तरं द्वितीयोऽत्यन्तविशुद्धिलक्षणो भावयितव्यः, तदुत्पादानुत्पादहेतोः, यथाक्रमं
10 परिग्रहत्यागेन इत्युत्पादहेतुं तावत् प्रतिपादयितुमाह—**यो भगवन्** इत्यादि। मार्गान्तरा-
काङ्क्षणात् न काङ्क्षिष्यति। संदेहाभावात् न विचिकित्सिष्यति। अज्ञानविगमात् न
धन्धायिष्यति। **चिरचरितावी** इति चिरं दीर्घकालं चरितमनुष्ठितं दानादि, श्रावकादि-
W 391 बोधावनिर्यातनेन अवितुं रक्षितुं शीलमस्येति तथोक्तः। अनुगमिष्यति धर्मतोऽर्थतश्च
अनुमोत्स्यते। तन्नयतः अनुबोधयिष्यति परान् उभयथा यथाक्रममित्येवमर्थभेदो वाच्यः।
15 परिवारादिप्रदानात् पर्युपास्यः। संशयार्थपरिपृच्छनात् परिपृच्छ्येति बुद्धसेवा कथिता।
अधिमोक्षस्य पर्युपासनादिना कः संबन्धो येनाधिमोक्षबलात् पर्युपासनादिकं प्रतीयते
B 257 इति तत्कस्य हेतोः इत्याशङ्क्याह—**यः कश्चित्** इत्यादि। एतदुक्तम्—विशिष्टकारणमन्तरेण
तादृग्विधाधिमोक्षाद्यसंभवात् तत्कारणं तथागतपर्युपासनादिकमनुमीयते इति। समाधानो-
त्पादनाच्छ्रोत्रमवदधाति। मण्डलादिकरणात् सत्कृत्य शृणोति। अप्रस्तुतार्थानभिधानात्
W 392 20 कथं नोपच्छिनत्ति। **चिरचरितावी सः** इति वचनेन दानादिरुक्तः। अनेकबुद्धपर्युपासनात्
बहुबुद्धपर्युपासितः। सहेतुकश्रवणादावनभिनिवेशं प्रतिपादयितुमाह—**शक्या पुनः** इत्यादि।
**उपलक्षयितुम्** इत्यादिपदानि यथासंख्यमियं सेत्यादिपदचतुष्टयेन संबन्धनीयानि। तत्र
आकारलिङ्गनिमित्तानि स्वसामान्योभयरूपाणि यथाक्रमं वेदितव्यानि। हेतुबलादपि श्रवणं
संवृत्या न तु तत्त्वतः इत्याह—**नो हीदम्** इति। तदेवाह—**नेयम्** इत्यादि। प्रतीयमानेऽपि
25 स्कन्धादिना कथं न शक्यते श्रवणादि कर्तुमिति तत्कस्य हेतोः इत्याशङ्क्याह—**सर्वधर्म**
W 393 इत्यादि। तत्र वर्तमानीभूतस्कन्धादिलक्षणशून्यत्वात् सर्वधर्मविविक्तत्वम्, कार्यकारणान्तद्वय-
विगमादत्यन्तविविक्तत्वम्। तस्मात् त्रैयध्विकशून्यत्वेन तत्त्वतः स्कन्धादिभिर्निर्देष्टुं न
शक्यते इति वाक्यार्थः। तद्व्यतिरेकेण तर्हि निर्दिश्यतामित्याह—**न चान्यत्र** इत्यादि।
प्रकारान्तरस्यानिषेधे कथमेवं लभ्यते इति तत्कस्य हेतोः इत्याशङ्क्याह—**स्कन्ध** इत्यादि।
30 उत्पादहेतुवैकल्येन शून्यम्। स्वरूपानवधारणात् विविक्तम्। कार्यसामर्थ्यविरहेण शान्तम्।
एतदुक्तम्—सर्वधर्मसंग्राहकस्कन्धादीनां तत्त्वतो निःस्वभावत्वेन तद्व्यतिरेकेण निर्देष्टुं न
शक्यते इति। **इति हि** इत्याद्युपसंहारः। संज्ञा समज्ञा यथाक्रमं स्वसामान्यलक्षणोद्ग्रहणलक्षणे।

प्रज्ञप्तिस्तत्संकेतोद्ग्रहणम् । व्यवहारः प्रज्ञप्तिपूर्वकौ हिताहितप्राप्तिपरिहारौ । **विभज्य** इत्यादि प्रज्ञापारमितायोगार्थं येनोपायकौशलं विमात्रतया मृद्वादिभेदेन भावितं स योगमापत्स्यते इति विभज्य वक्तव्यमेतत् । अनेनोपायकौशलमुक्तम् । यथोक्तमेव सेवादित्रयमुत्पादहेतुः । तथा चोक्तम्—

**बुद्धसेवा च दानादिरुपाये यच्च कौशलम् ।**
**हेतवोऽत्राधिमोक्षस्य** इति ॥ 5

अनुत्पादहेतुं निर्दिशन्नाह—**स्यात् खलु पुनः** इत्यादि । अनधिमोक्षे किं कारणमिति तत्कस्य हेतोः इत्याशङ्क्याह—**पूर्वमपि** इत्यादि । **ततः पर्षद्भ्योऽपक्रान्ताः** इति । प्रतिक्षेपचित्तेनेति शेषः । प्रयोगाद्यवस्थात्रये यथाक्रमं **संचितेन** इत्यादि वक्तव्यम् । कायासंनिधानान्न कायसामग्री । चित्तविक्षेपान्न चित्तसामग्री । प्रत्यक्षानुमानागमप्रमाणैर्यथासंख्यं **न जानन्ति न पश्यन्ति न बुध्यन्ते** । **अत एव न वेदयन्ते** । परानिति शेषः । स्वरूपनिराकरणात् 10 **प्रत्याख्यास्यन्ति** । सामर्थ्यापह्नवात् **प्रतिक्षेप्स्यन्ति** । अप्रियाभिधानात् **प्रतिक्रोक्ष्यन्ति** । कुशलमूलानुत्पादादुपहत्याकुशलवासनोत्पादेन **दग्धाः** । स्वल्पदानादित्रययोगात् **अल्पपुण्याः** । मृदुमैत्र्यादिसंभवात्—**अल्पकुशलमूलाः** । कर्तुकामतापनयात् **विच्छन्दयिष्यन्ति** । स्वरूपापकर्षणकरणात् **विवेचयिष्यन्ति** । पुनः प्रवृत्तिनिराकरणात् **विवर्तयिष्यन्ति** । **सर्वेण** इत्यादि । सर्वेण बुद्धरत्नादिरूपेण । **सर्वं** शाक्यमुनितथागतादिरूपम् । **सर्वथा** 15 मृदुमृद्वादिप्रकारभेदेन । **सर्वमधि**शीलादिप्रकारम् । उत्पादनादुपस्थापितेन । विनाशाभावात् समुत्थापितेन । **महानिरयेषु** इति । जम्बूद्वीपस्याधो विंशत्या योजनसहस्रैरवीचिर्महानरकः तत्प्रमाणः । तदुपरिष्टात् प्रतापनस्तपनो महारौरवो रौरवः संघातः कालसूत्रः संजीवश्चेत्यष्टौ महानिरयाः । **तेजःसंवर्तनी** इति नरकगतिमुपादाय यावद्ब्रह्मलोके कश्चित् सत्त्वो नावशिष्टो भवति, तदा शून्यभाजने सप्त सूर्याः प्रादुर्भूय क्रमेण अप्मण्डलमारभ्य यावत् प्रथमं ध्यानं 20 दहन्ति । **अन्येषु लोकधातुषु** इति त्रिसाहस्रमहासाहस्रेषु । प्रचुरदुःखानुभवे किं कारणमिति तत्कस्य हेतोः इत्याशङ्क्याह—**यथापि नाम** इत्यादि । सुगमम् । **पञ्च** इति । मातृवधः पितृवधोऽर्हद्वधः संघभेदस्तथागतदुष्टचित्तरुधिरोत्पादश्चेत्येतानि पञ्च कर्माण्यनन्तरमवीचिमहानिरये जन्महेतुत्वादानन्तर्याणि । कार्यकारणस्वभावैस्त्रिभिः सादृश्याभावात् यथाक्रमं **न प्रतिवर्णिकान्यपि नानुरूपाण्यपि न प्रतिरूपाण्यपि** इति योज्यम् । ननु दुःखितेषु करुणा- 25 प्रवर्तनात् कथं स्थानादिनिषेधः इति तत्कस्य हेतोः इत्याशङ्क्याह—**धर्मदूषका हि** इत्यादि । अन्येषामपि स्वदोषापादनात् **कसम्बकजाताः** सस्योपघातकतृणजातिवत् बोधिसत्त्वस्य विनाशात् । **कृष्णाभिजातिकाः** कृष्णसर्पवत् द्वेषबाहुल्यात् कृष्णाहिजातिकाः । **अनयेन व्यसनम्** इति यस्मादेवंविधपापकारिभिः सह कृपाविषयत्वेन संवासंत्रिषयविभागादिकं[1] परिहृत्य आदिकर्मिकाः संवासादिना अनयेनेति दुराचारेण व्यसनमुपघातमापत्स्यन्ते, 30 तस्माद्धर्मदूषका वर्जनीया इति यावत् । धर्मदूषकाः क उच्यन्ते इत्याह—**ये च** इत्यादि । संभवत्प्रामाण्यस्याकथने किं कारणमिति तत्कस्य हेतोः इत्याशङ्क्याह—**मा तथारूपस्य** इति ।

B 258 W 394 W 397 B 259 W 398 W 399 B 260 W 400

---

[1] B अवस्थाविशेष°.

यस्मात् महानारककायप्रमाणं श्रुत्वा दुःखमहत्त्वं प्रतिपद्य महाभयेन सहसा प्रतिपक्षसमुदा-चारादिविरोधेनोष्णरुधिरागमनादयः स्युः, तस्मान्नाख्यायते इति समुदायार्थः। **मरणमात्रकं वा दुःखमागाढमाबाधं स्पृशेत्** इति मृदुमध्याधिमात्रभेदादुक्तम्। **पश्चिमाया जनताया आलोकः** इति। अशुक्लकर्मकारिणः संवेगोत्पादाद्धर्मालोकः संवेगः इति तद्धेतुत्वात्तथोक्तः।

W 401 5 **सुसंवृतकायकर्मवाक्कर्ममनस्कर्मणा** इति यथाक्रमं स्मृतिसंप्रजन्यतामुपादाय कायिकवाचिक-मानसिककुशलानुष्ठानादुक्तम्। विपरीतकरणे को दोष इति तत्कस्य हेतोः इत्या-शङ्क्याह–**यत्र हि नाम** इत्यादि। **एवंरूपेण** इति। नैतद्बुद्धवचनम् इत्येवं स्वभावेन अस्योप-लक्षणपरत्वात् विपरीतकायवाङ्मनस्कर्मणापीति ज्ञेयम्। प्रक्रान्तवाग्दुर्भाषितप्रकरणोपसंहारा-र्थमाह–**कतमेन** इत्यादि। अन्यथा, अनन्तरमेवोक्तमिति कथं प्रश्नः स्यात्? **मोहपुरुषाः** इति।

W 402 10 स्वकेऽवतारात् स्वस्यैव विनये दर्शनादपि।
औदार्यादपि गाम्भीर्यादविरुद्धैव धर्मता॥

इति वचनात् "यत्सूत्रेऽवतरति विनये च संदृश्यते, धर्मतां च न विलोमयति" इति बुद्धभाषितलक्षणानवगमेन सूत्रादिसंगृहीताया मातुः स्वभावानवधारणात् मूढः। स्यादेतत्–निकायग्रन्थे परिमितपरिमाणसूत्रेष्वनवतारात्तथा परिच्छिन्नप्रमाणविनयपिटकेऽसंदर्शनात्तथा 15 व्यवस्थापितपुद्गलनैरात्म्यादिधर्मताविलोमनेन अबुद्धवचनमहायानप्रतिक्षेपादमोहः इति। एवं

B 261 च सति मुक्तकसूत्राण्यपि सूत्रान्तपिटकेष्वपठितत्वादबुद्धवचनान्यभ्युपेयानि स्युः। तथैकैक-स्मिन् सूत्रान्तपिटकेऽन्यानि सूत्रान्तपिटकानि न सर्वप्रकारमवतरन्ति। तथैकैकस्मिन् विनयेऽन्ये विनया न सर्वप्रकारं संदृश्यन्ते। तथैकैकस्मिन् निकाये या धर्मता व्यवस्थापिता न सा अन्येषु निकायेषु धर्मतां सर्वप्रकारमनुलोमयतीत्येवमष्टादशभेदभिन्नानि सूत्रविनयाभि-20 धर्मपिटकानि परस्परं ग्रन्थार्थव्यतिभिन्नानि कथं बुद्धवचनानि सिद्ध्यन्तीत्यव्यापकमेतत् बुद्धवचनलक्षणमभ्युपगच्छन्तीति मूढा एव। अथवा,

मनःप्रदोषः प्रकृतिप्रदुष्टे
ह्ययुक्तरूपेऽपि न युक्तरूपः।
प्रागेव संदेहगतस्य धर्मे
25 तस्मादुपेक्षैव वरं ह्यदोषः॥

सूत्रालंकार–१.२१

इत्यस्यार्थस्यापरिज्ञानात् मोहपुरुषाः। **दूषयितव्याम्** इति। परस्परविरोधोद्भावनया प्रतिक्षेप्तव्या-

W 403 मिति पूर्ववत्। **प्रतिबाधितव्या**मिति प्रत्यक्षादिप्रमाणबाधनात्। अस्य तु सद्धर्मप्रतिक्षेपस्य चतुरो हेतून् प्रतिपादयितुमाह–**कोऽत्र हेतुः** इत्यादि। **चतुर्भिराकारैः** इति माराधिष्ठानगम्भीरधर्मान-30 धिमोक्षस्कन्धाद्यभिनिवेशपापमित्रपरिग्रहैश्चतुर्भिः प्रतिक्षेपहेतुभिरित्यर्थः। तथा चोक्तम्–

**धर्मव्यसनहेतवः॥ २६॥**

**माराधिष्ठानगम्भीरधर्मतानधिमुक्तते।**
**स्कन्धाद्यभिनिवेशश्च पापमित्रपरिग्रहः॥ २७॥** इति॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां
35 निरयपरिवर्तो नाम सप्तमः॥

——०——

## ८ विशुद्धिपरिवर्तोऽष्टमः ।

अधिगमानधिगमहेतुं प्राप्तिपरिहारविषयमुक्त्वा एवं प्रकृतस्य अत्यन्तविशुद्धिलक्षण- B 262
भावनामार्गस्य सामान्येन विशुद्धिं प्रतिपादयितुं गाम्भीर्यं प्रतिपादयन्नाह—**दुरधिमोचा** W 405
इत्यादि । दुःखेनाधिमोच्यते इति दुरधिमोचा, दुरधिमोक्ष्येति यावत् । ननु पृथग्जनार्यभेदेन
बन्धमोक्षात् कथमबद्धममुक्तं रूपमिति तत्कस्य हेतोः इत्याशङ्क्याह—**रूपास्वभावत्वात्** इति 5
त्रैयध्विकरूपस्य न्यायतो निःस्वभावत्वात् । सामान्येन निर्दिश्य अतीतादिभेदेनाह—**रूपस्य** W 406
इत्यादि । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**पूर्वान्तास्वभावम्** इति । पूर्वान्तो हेतुस्तत्त्वतो-
ऽनुत्पन्नत्वेन अस्वभावो यस्य वर्तमानरूपस्येति तथोक्तम् । पूर्ववत् तत्कस्य हेतोः इत्या-
शङ्क्याह—**अपरान्तास्वभावम्** इति । अपरान्तं कार्यं पूर्ववदस्वभावमस्येति विग्रहः । तथैव
तत्कस्य हेतोः इत्याशङ्क्याह—**प्रत्युत्पन्नास्वभावम्** इति प्रत्युत्पन्नलक्षणविरहितम् । रूपादि- 10
स्वभावशून्यत्वेन पृथग्जनागोचरत्वात् दुरधिमोचा । लौकिकवीतरागाविषयत्वात् परमदुरधि- W 407
मोचा । ननु रूपादिप्रज्ञापारमितास्वभावयोः संवृतिपरमार्थभेदेन विवेकप्रतिपत्तेः कथं
परमदुरधिमोचेति तत्कस्य हेतोः इत्याशङ्क्याह—**या रूपविशुद्धिः** इत्यादि । नानात्वलक्षण-
भेदाभावादभिन्नम् । प्रभेदलक्षणच्छेदाभावादच्छिन्नम् । स्वसामान्यलक्षणनानात्वविरहाद्वा
यथाक्रममुक्तम् । **इति हि** इत्यादि । 15

संवृतेस्तथता यैव परमार्थस्य सा मता ।
अभेदात् सोऽपि हि न्यायो यथादर्शनमास्थितः ॥

इति न्यायात् या रूपादेरात्मात्मीयाद्यभिनिवेशविगमात् मायोपमताविशुद्धिः, सैव B 263
सर्वविपक्षरहितत्वेन स्रोतआपत्त्यादिफलस्य प्रज्ञापारमितायाः विशुद्धिः । तथा फलस्य या W 408
विशुद्धिः सा रूपादेर्विशुद्धिरिति अद्वयात् द्वैधीकारादभिन्नमच्छिन्नम् । तस्मात् फलविशुद्धितो 20
रूपादिविशुद्धिः, तथा रूपादिविशुद्धितः फलविशुद्धिः कथितेति यावत् । तथा चोक्तम्—

**फलशुद्धिश्च रूपादिविशुद्धिरेव तयोर्द्वयोः ।**
**अभिन्नाच्छिन्नता यस्मादिति शुद्धिरुदीरिता ॥** २८ ॥ इति ॥

सामान्येन शुद्धिमेवमभिधाय विशेषेणाह—**पुनरपरम्** इत्यादि । **सर्वज्ञताविशुद्धिः**
इति त्रिसर्वज्ञताविशुद्धिरित्यर्थः । ततश्चेदमुक्तं भवति—श्रावकाणां क्लेशावरणप्रहाणात्, 25
प्रत्येकबुद्धानां तु क्लेशावरणस्य ज्ञेयावरणैकदेशग्राह्यविकल्पस्य च प्रहाणात् सर्वज्ञता-
विशुद्धिः । यानत्रयमार्गावरणप्रहाणात् बोधिसत्त्वानां मार्गज्ञताविशुद्धिः । सवासनक्लेशज्ञेया-
वरणप्रहाणात् धर्मधातूद्भवत्वादात्यन्तिकी तथागतानां सर्वाकारज्ञताविशुद्धिः इति । तथा
चोक्तम्—

**क्लेशज्ञेयत्रिमार्गस्य शिष्यखड्गजिनौरसाम् ।** 30
**हानाद्विशुद्धिरात्यन्तिकी तु बुद्धस्य सर्वथा ॥** २९ ॥ इति ॥

मार्गज्ञताधिकारे विशुद्धिकथनप्रसङ्गादात्यन्तिकी च इतरा च तथागतानां श्रावका-
W 409 दीनां च यथाक्रमं विशुद्धिः कथिता। सा कथमित्याह–**अथ खल्वायुष्मान्** इत्यादि।
गम्भीरावभासकरी आलोकोऽप्रतिसंधिरसंक्लेशोऽप्राप्तिरनभिसमयोऽनभिनिर्वृतिरत्यन्तानुपपत्ति-
B 264 रित्यार्यशारिपुत्रोक्तानि नवपदार्थानि यथाक्रमं मृदुमृद्वादिनवप्रकारभावनामार्गस्वभावत्वेन
5 वाच्यानि। प्रतिपदं च विशुद्धत्वादिति भगवतोक्तवचनमधिमात्राधिमात्रादिनवप्रकार-
विपक्षप्रहाणतो योज्यम्। कामधातुरूपधात्वारूप्यधातुष्विति वचनात् कामधात्वादि-
नवभूमिको भावनामार्गो ग्राह्यः। यत्तूक्तम्—

कामधातौ भवाग्रे च बोधिमार्गाङ्गवर्जिता।

इति, तदनुपायकुशलान् श्रावकानधिकृत्येति न तेनास्य विरोधः इत्येके। अनागम्य-
W 410 10 स्थानमारभ्य यावदाकिंचन्यायतनपर्यन्तो नवभूमिको भावनामार्गः इत्यपरे। कामधात्वादि-
वचनं तु मातुस्तत्र परमार्थतोऽस्थानप्रतिपादनपरम्, न तु नवभूमिप्रकाशकमिति। तदयं
समासार्थः–यथोक्तासु नवभूमिषु प्रत्येकं यथासंख्यं च अधिमात्रादिनवप्रकारविपक्षस्य
प्रतिपक्षभावेन मृदुमृद्वादिमार्गो यथाक्रमं नवप्रकारः। सर्वथा अन्यथा च विशुद्धिहेतुत्वा-
दात्यन्तिकी च इतरा च विशुद्धिरिति। तथा चोक्तम्—

15 **मृदुमृद्वादिको मार्गः शुद्धिर्नवसु भूमिषु।**
**अधिमात्राधिमात्रादेर्मलस्य प्रतिपक्षतः॥ ३०॥** इति॥

कथमनुपचरिता आत्यन्तिकी विशुद्धिरित्याह–**न जानाति** इत्यादि। स्वरूपं न
जानाति। प्रभेदं न संजानीते विशुद्धत्वादिति त्रैधातुकप्रतिपक्षत्वात्। किमिति विषयगतोऽयं
प्रश्नो न तु क्षेपे। तदेवाह–**रूपम्** इत्यादि। ननु सदावस्थितं रूपं किमिति न प्रतिपद्यते
20 इति तत्कस्य हेतोः इत्याशङ्क्याह–**विशुद्धत्वात्** इति। तत्त्वतो निःस्वभावत्वात्। ननु च
W 411 B 265 अधिमात्राधिमात्रादिः प्रतिपक्षो मृदुमृद्वादिभिर्विपक्षैरिति भवितव्यम्। तत्कथमन्यथा निर्दिष्ट-
मित्याशङ्कायामाह–**प्रज्ञापारमिता भगवन् सर्वज्ञतायाः** इत्यादि। व्यवस्थितधर्मतत्त्वापनयना-
भावात् **नापकारं करोति**। अपूर्वीकरणात् **नोपकारं करोति** इति पूर्वेण संबन्धः। प्रतिपक्षं
**न परिगृह्णाति**। न विपक्षं **परित्यजति**। न जानातीत्यादिप्रकरणस्यायं समुदायार्थः। ननु
25 च अधिमात्रादिमात्रादिः प्रतिपक्षो मृदुमृद्वादिविपक्षः इति भवितव्यम्। तत्कथमन्यथा
निर्देशः इति चोद्यस्य परमार्थेन कस्यचिन्नोपकारादिकमिति परिहारः। तथा संवृत्या सूक्ष्म-
मलापकर्षणे रजकमहायत्नोदाहरणेन मृदुमृद्वादिक्रमप्रतिपक्षोत्पादेन च सामर्थ्याक्षिप्तेन
समाधानतस्तस्य यथानिर्दिष्टभावनामार्गस्यान्त्यक्षणस्य त्रैधातुकाकारज्ञानज्ञेययोरनुपलम्भात्
या समता सर्वधर्ममायोपमताप्रतिपत्तिः, सैव समस्तप्रतिपक्षरूपत्वमिति कृत्वा आत्यन्तिकी
30 विशुद्धिर्मुख्या भगवतो बुद्धस्येष्यते इति। तथा चोक्तम्—

**त्रिधातुप्रतिपक्षत्वं समता मानमेययोः।**
**मार्गस्य चेष्यते तस्य चोद्यस्य परिहारतः॥ ३१॥** इति॥

भावनामार्गपरिसमाप्त्यनन्तरं तदधिकारे प्राग्यदुक्तं या रूपविशुद्धिर्या फलविशुद्धिर्या सर्वज्ञताविशुद्धिरिति, तन्निर्दिशन्नाह—**आत्मविशुद्धितो भगवन् रूपविशुद्धिः** इत्यादि । यथा आत्मनः परपरिकल्पितस्य परमार्थतोऽनुत्पत्तिविशुद्धिस्तद्वद्रूपादिसर्वज्ञतान्तानां विशुद्धिर्वेदितव्येति हारकत्रयस्यार्थः। केवलं संवृत्या रूपादीनामात्मनश्चार्थक्रियासु यथासंख्यं योग्यायोग्यत्वेन तथ्यातथ्यतया भेदः, न तु परमार्थतः, इत्यभिप्रायेण सर्वत्र भगवतोक्तमत्यन्तविशुद्धत्वा- 5 W 412 B 266
दिति । यथोक्तभावनामार्गे तत्त्वतो नाधिगमः इत्याह—**आत्मविशुद्धितो भगवन्न प्राप्तिर्नाभिसमयः** इति । तत्र न प्राप्तिरप्रजप्राप्त्या योग्यतालक्षणया । नाभिसमयो विमुक्तिमार्गेण । तत्त्वेन नैवमित्याह—**विशुद्धत्वात्** इति । शून्यत्वादित्यर्थः । संवृत्या तु सर्वमेवास्तीत्याह—**आत्मापर्यन्ततया** इत्यादि । अविचारैकरम्यपूर्वपूर्वकारणस्यात्मनः स्वभावस्यापर्यन्ततया रूपादीनामपर्यन्तता गम्यते इति यावत् । विशुद्धत्वात् न्यायानुयायिन्योत्पत्त्या रहितत्वात् । 10 W 413
मार्गज्ञतामुपसंहरन्नाह—**य एवमस्य** इत्यादि । एवमनन्तरोक्तध्यामीकरणादिक्रमेण योऽयमवबोधोऽधिगमः, सेयं प्रज्ञापारमिता मार्गज्ञता बोधिसत्त्वानां निर्दोषत्वेनावगन्तव्या ।

**इत्यधिकारो द्वितीयः ॥**

सर्ववस्तुपरिज्ञानं विना न मार्गज्ञतापरिज्ञानं सम्यक्, इति सर्वज्ञतां वक्तुं संसारनिर्वाणाप्रतिष्ठानमाह—**सा खलु पुनः** इत्यादिना । त्रैयध्विकधर्माणामनुत्पादाकारेण तुल्यताव- 15
बोधात् या श्रावकाद्यगोचरत्वेन विप्रकृता विप्रकृष्टरूपा बुद्धबोधिसत्त्वानां प्रज्ञापारमिता मता, **सा खलु पुनर्नापरे तीरे** संसारे प्रज्ञया आदीनवदर्शनात् । **न परे तीरे** निर्वाणे, कृपया सर्वसत्त्वार्थकरणात्, नापि संसारनिर्वाणमुभयमन्तरेण वस्तुनोऽसत्वात् मध्येऽपि व्यवस्थिता । **अत्यन्तविशुद्धत्वात्** इति प्रज्ञाकरुणयोः सम्यक् प्रतिवेधेन संसारनिर्वाणो- B 267
भयोपलम्भवियोगात् । तथा चोक्तम्— 20

**नापरे न परे तीरे नान्तराले तयोः स्थिता ।**

**अध्वनां समताज्ञानात् प्रज्ञापारमिता मता ॥ १ ॥** इति ॥

सर्वज्ञताधिकाराद् व्यतिरेकनिर्देशेन श्रावकादीनामध्वसमताज्ञानाभावात् सम्यक् प्रज्ञापारमिता दूरीभूतेति, स्वाधिगममात्रात्मिका तु प्रज्ञापारमिता कृपाप्रज्ञावैकल्यात् निर्वाणे W 414
संसारे चावस्थिता वस्त्ववस्तूपलम्भतयेति ज्ञेयम् । एवमुत्तरत्रापि क्वचिदन्वयमुखेन, 25
क्वचित् व्यतिरेकमुखेन, क्वचिदुभयथापि निर्देश इति प्रतिपत्तव्यम् । ननु—

यः प्रतीत्यसमुत्पादः शून्यता सैव ते मता ।

—चतुःस्तव-लोकातीत-२०

इति न्यायादध्वसमताज्ञानं पदार्थावबोध एव, स च सर्वेषामेव समस्तीति कथं श्रावकादीनां सम्यक् प्रज्ञापारमितादूरीभावः इत्याह—**एवमपि** इत्यादि । अपिशब्दान्न 30
केवलमन्येन भावाद्याकारेण, किं तर्ह्येवमपि न क्वचित् स्थितेत्यप्यभिनिवेशनिमित्तयोगेनेत्यर्थः । **रिङ्क्ष्यति दूरीकरिष्यति** इति तदात्वे च आयत्यां चेति यथाक्रमं वाच्यम् । किमत्र

**कारणं** निमित्तप्रतिपत्त्या मातुर्दूरीभाव इति तत्कस्य हेतोः इत्याशङ्क्याह—**नामतोऽपि** इत्यादि। तत्र प्रज्ञापारमितेत्यादिव्यपदेशमात्रं नाम। कल्पितादिलक्षणं वस्तु निमित्तम्। सक्तिस्थानविपर्यासः सङ्गः। एतदुक्तम्—मायाकारनिर्मितवस्तुनः प्रतिभासेऽविदिततत्स्वरूपस्य B 268 भावाभिनिवेशितया नैःस्वाभाव्याप्रतिभास इव कल्याणमित्राद्युपायकौशलवैकल्यात् निमित्त-5 योगेन प्रतिपत्तौ विपर्यासलक्षणोपलम्भसङ्गसंभवात् तत्समतापरिज्ञानमविज्ञातभावरूपाणां W 415 श्रावकादीनां नास्ति, इत्यतस्तेषां दूरीभावो जिनजनन्याः इति। बोधिसत्त्वादीनां तु उत्सारितभावाभिनिवेशभ्रान्तिनिमित्तानां रूपादिसर्वधर्मपरिज्ञानमेव तत्समतापरिज्ञानम्, इत्यतस्तेषां सम्यगासन्नीभावोऽस्या मातुरिति सामर्थ्यात् कथितमित्याह—**आश्चर्यं भगवन्** इत्यादि। **यावत्** इति वचनात् सुपरिशुद्धेत्यादिपरिग्रहः। श्रावकप्रत्येकबुद्धाधिगमविपर्ययेण 10 कथनात् स्वाख्याता। परिपूर्णमहायानाधिगमतः सुनिर्दिष्टा। समस्तगुणप्रकर्षनिष्ठाधिगमतः सुपरिनिष्ठिता। **इमेऽपि सङ्गाः** इति नामाद्याः। श्रावकबोधिसत्त्वभेदादेतदेव प्रतिपत्तव्यम्। तथा चोक्तम्—

**अनुपायेन दूरं सा सनिमित्तोपलम्भतः।**
**उपायकौशलेनास्याः सम्यगासन्नतोदिता॥ २॥** इति॥

15 श्रावकादीनामेवं मातुर्दूरीभावेनानुष्ठानं प्रतिपक्षोऽपि सन् वस्तूपलम्भविपर्यास-W 416 प्रवृत्तत्वेन बोधिसत्त्वानां त्याज्यत्वात् विपक्षः इति प्रतिपादयितुमाह—**कतमे ते** इत्यादि। **शून्यम्** इति तीर्थिकपरिकल्पितात्मनो विवेकः इति। संजानीते इति वक्ष्यमाणेन संबन्धः। **इयन्तम्** इति अप्रमेयादिसंख्यावच्छिन्नम्। **प्रथमेन चित्तोत्पादेन** इति दानादिबोधिपक्षो-पलक्षणमत्र चित्तोत्पादः। कथं चित्तोत्पादः सङ्गः इत्याह—**कतमेन** इत्यादि। विपर्यास-B 269 20 प्रवृत्तत्वेनाह—**सचेत्** इत्यादि। **इदं तत् प्रथमं बोधिचित्तम्** इति। एवमभिनिवेशयोगेन यथा तद्बोधिचित्तं संजानीते, तथेदं तत् प्रथमं बोधिचित्तं परिणामयामीत्यभिनिवेशयोगेन, यदा च परिणामयति तदा अनेन पर्यायेण संगतिरिति वाक्यार्थः। कस्मादेवं विपर्यास इत्याह—**न च चित्तप्रकृतिः** इत्यादि। **परिणामयितुम्** इति यथोक्तद्वादशप्रकारभेदभिन्नपरि-णामनामनस्कारेण चित्तस्य प्रकृतिरनुत्पादता न शक्या परिणामयितुं तस्योपलक्षणत्वादेका-25 नेकवस्तुरूपतया संज्ञातुमपि न शक्येत्यवगन्तव्यम्, संजानीते परिणामयतीति पदद्वयस्य प्रकृतत्वात्। एतदुक्तम्—रूपादिस्कन्धानां शून्यत्वे त्रैयध्विकानां च सर्वधर्माणां सास्रवा-नास्रवोभयस्थानीयानामतीतादिस्वभावत्वे दानादिबोधिपक्षाणामनुष्ठाने च तात्त्विकोपलम्भ-संज्ञाविपर्यासप्रवृत्तत्वेन यस्माद्विपक्षः, तस्मादेषां प्रकृतिस्तथता संज्ञातुमशक्या इति। तथा चोक्तम्—

W 417 30 **रूपादिस्कन्धशून्यत्वे धर्मेषु त्र्यध्वगेषु च।**
**दानादौ बोधिपक्षेषु चर्यासंज्ञा विपक्षता॥ ३॥** इति॥

यथोक्तार्थविपर्ययेण बोधिसत्त्वानां प्रतिपक्षमाह—**तस्मात्तर्हि** इत्यादिना। यतो विपक्षस्त्याज्यस्तस्माद्भूतानुगमेन देयदायकप्रतिग्राहकाद्यनुपलम्भयोगेन दानादौ परेषां संदर्शनादिकं कार्यमित्यर्थः। **एवमात्मानं च न क्षिणोति** इति। तथैव भूतानुगमयोगेन दानादौ स्वयमवस्थानादात्मानमुपलम्भविपर्यासविशेषेण न विनाशयति। **इमाश्च** इति रूपाद्यालम्बनाः पूर्वमुक्ताः। धर्मताविरुद्धस्थूलतरतमसङ्गकथनात् साधु साध्विति साधुकारं दत्वा 5 सूक्ष्मतरसङ्गार्थमाह—**तेन हि सुभूते** इति। निमित्ततो मनसिकरोतीति रूपकायाद्यालम्बनेनाभिमुखीकरणात्। कथं पुनरेवं सङ्गः कथितः इत्याह—**यावन्ति खलु पुनः** इत्यादि। तदयं प्रकरणार्थः—त्रिमण्डलविशुद्ध्या दानादावात्माद्यनवबोधेन स्वपरयोर्नियोजनं सम्यक् प्रवृत्तत्वात् सर्वसक्तिनिचयस्थानप्रतिषेधेन च उपादेयत्वात् सर्वथा प्रतिपक्षः। तथागतादिषु मनस्कारादिः पुण्यसंभारहेतुत्वेन प्रतिपक्षोऽपि सन् सूक्ष्मसक्तिरूपतया न सर्वथा प्रतिपक्षः 10 इति। तथा चोक्तम्—

**दानादिष्वनहंकारः परेषां तन्नियोजनम्।**
**सङ्गकोटीनिषेधोऽयं सूक्ष्मः सङ्गो जिनादिषु॥ ४॥** इति॥

कथं पुनः सूक्ष्मसक्तिर्विपक्षः इति तत्कस्य हेतोः इत्याशङ्क्याह—**निमित्ततो हि सुभूते सङ्गः** इति। तदेव कथयन्नाह—**इति हि सः** इत्यादि। इदमेव तत्त्वमिति 15 निश्चयग्रहणात् निमित्तीकर्तुम्, पुनः पुनरालम्बनात् नालम्बनीकर्तुमिति भेदः। **नापि सा दृष्टश्रुतमतविज्ञाता** इति चक्षुर्विज्ञानेन दर्शनात् दृष्टा। श्रोत्रविज्ञानेन श्रवणात् श्रुता। घ्राणजिह्वाकायविज्ञानैरनुभूतत्वात् मता। मनोविज्ञानेनोपलम्भात् विज्ञाता। **नापि** इति प्रत्येकं संबन्धनीयम्। एतदेव ज्ञेयज्ञानगाम्भीर्यभेदेनाह—**गम्भीरा** इत्यादिना। प्रकृतिरिति स्वभावः। तथतेति यावत्। **विविक्तत्वात्** इति सर्वोपलम्भशून्यत्वात्। **प्रकृति-** 20 **गम्भीरा** इति प्रकृत्या ज्ञानस्य स्वभावेनानुत्पादेन श्रोत्राद्यविषयत्वाद्गम्भीरा। **प्रकृतिविशुद्धत्वात्, प्रकृतिविविक्तत्वात्** इति यथाक्रममविकाराविपर्यासपरिनिष्पत्त्या परिनिष्पन्नत्वादित्यर्थः। एतदुक्तम्—यस्मात् स्वभावेनैव सर्वधर्मगोत्राणां ज्ञानज्ञेयस्वभावानां प्रकृत्यैव शून्यत्वात् तेषां गाम्भीर्यम्, तस्मात् केनचिद्रूपेणोपलम्भः सूक्ष्मा सक्तिर्विपक्षः इति। तथा चोक्तम्—

**तद्गाम्भीर्यं प्रकृत्यैव विवेकाद्धर्मपद्धतेः।** इति॥ 25

कथं तर्हि तस्य वर्जनमित्याह—**प्रकृतिविविक्ता** इति। भावाभ्युपगमदोषरहितत्वेन यस्मात् प्रकृतिविविक्ता, तस्मान्नमस्करोमि[1]। प्रज्ञापारमितेति वचनान्न तर्हि सर्वधर्मा विविक्ता इत्याशङ्कायामाह—**सर्वधर्माः** इत्यादि। ननु स्वसंवेदनरूपत्वेनावगमाभावात् सर्वधर्मविविक्तायाः कथं सा स्वसंविद्रूपा प्रज्ञापारमितेति तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि सुभूते** इत्यादि। एतदुक्तम्—बाह्यवस्तुपरिनिष्पत्त्यभावे स्वप्नादाविवोपदर्शितविविधाकारप्रभेदप्रपञ्चं बहिरिव 30

B 270 W 418 W 419 B 471 W 420

[1] B नमस्कारा°.

परिस्फुरद्रूपं विज्ञानमुपजायते यदा, अतो ज्ञानस्य संवृत्या मायोपमतावगमात् तदव्यतिरिक्तत्वेन अकृताः शून्याः मायोपमाः सर्वधर्माः इति भगवतोऽभिसंबोधात्तेषां विविक्ततप्यवगता इति।

भावा जायन्ति संवृत्या परमार्थेऽस्वभावकाः।
तया सर्वमिदं सत्यमसत्यं परमार्थतः॥

5 —लङ्का०—१०.४२९

इत्यार्यलङ्कावतारसूत्रानुसारेण अनन्तरमेवार्थतत्त्वं स्पष्टयन्नाह—**तस्मात् तर्हि** इत्यादि। अनभिसंबुद्धास्तत्त्वतः इति शेषः। साधूक्तत्वेन समर्थनमाह—**तथा हि** इत्यादिना। कीदृशी प्रकृतिरित्याह—**या च** इत्यादि। या च प्रकृतिः स्वभावस्तथता, सैव स्वरूपविरहादप्रकृतिः, या च अप्रकृतिः, सा सर्वधर्माणां प्रकृतिः, एकलक्षणत्वादेकरूपत्वात्, यदुत अलक्षणत्वा-
10 न्निःस्वभावत्वादित्यर्थः। एतदेवोपसंहरन्नाह—**तस्मात् तर्हि** इत्यादि। ननु भिन्नकारणजन्यत्वेन भावानां भिन्नस्वभावत्वे कथमेकलक्षणत्वमिति तत्कस्य हेतोः इत्याशङ्क्याह—**न हि सुभूते** इत्यादि। एवं मन्यते—प्रमाणव्याहतोत्पादरूपत्वादेषां भिन्नहेतुजन्यत्वनिबन्धनानेकस्वभावाभावे यस्मादेषां न नानारूपता परमार्थतः, तस्मादेकैव प्रकृतिरिति। **एवमेताः** इत्यादि। यथोक्तक्रमेण रूपादिसर्वधर्माणामेकैव प्रकृतिर्यदुत अप्रकृतिरिति ज्ञानज्ञेयसमतैक-
15 परिज्ञानेन पूर्वोक्ताः सङ्कोट्यः सूक्ष्माः सक्तिरूपा विवर्जिता भवन्ति। तथा चोक्तम्—

**एकप्रकृतिकं ज्ञानं धर्माणां सङ्गवर्जनम्** ॥ ५ ॥ इति ॥

कथं पुनः प्रकृत्या धर्मगाम्भीर्यं प्रागुक्तमित्याह—**गम्भीरा भगवन् प्रज्ञापारमिता** इति। कथमिति काका प्रश्नः। **आकाशगम्भीरतया** इति सर्वविज्ञानोपलब्धार्थनिराकरणेनानुपलम्भेन ज्ञानज्ञेयसमतासंसूचकेन यस्मात्तस्याः प्रकृतेर्दुर्बोधता कथिता, अतस्तया
20 आकाशस्येव गाम्भीर्यमित्यर्थः। तथा चोक्तम्—

**दृष्टादिप्रतिषेधेन तस्या दुर्बोधतोदिता**। इति ॥

किं पुनः कारणमेवं तस्याः प्रकृतेर्दुर्बोधतेत्याह—**दुरनुबोधा भगवन् प्रज्ञापारमिता** इति। अत्रापि पूर्ववत् काका प्रश्नः। **न कश्चिदभिसंबुध्यते** इति रूपाद्यावेणिकबुद्धधर्माद्याकारैः प्रकृतेस्तथतास्वाभाव्यादनभिसंबोधेन यस्माच्चिन्तातिक्रान्तत्वमिष्यते, अतोऽस्या
25 दुर्बोधतेति यावत्। तथा चोक्तम्—

**रूपादिभिरविज्ञानात्तदचिन्त्यत्वमिष्यते** ॥ ६ ॥ इति ॥

अचिन्त्यत्वमेव कुत इत्याह—**अचिन्त्या** इत्यादि। कथमिति शेषः। **न चित्तेन ज्ञातव्या न चित्तगमनीया** इति। यस्मादकृतत्वेनाधिमोक्षमनस्कारानधिमोक्षात् न चित्तेन ज्ञातव्या, तत्त्वमनस्कारापरिज्ञानात् न चित्तगमनीया, तस्मादचिन्त्यत्वमिति यावत्।
30 अकृतत्वमेव कथमित्याह। **अकृतः** इत्यादि। कथमित्युपस्कारः। **कारकानुपलब्धितः** इति कारकहेतोरनुपलम्भात्। तथा हि प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावो वर्णितः। तत्र न तावत् निराकारेणावसीयते। संविन्मात्रेण सर्वचेतसां साम्यात् इदमस्य ज्ञानं नेदमस्येति कुतो

व्यवस्था? यतो बीजज्ञानादङ्कुरज्ञाने तदज्ञानात्तदज्ञाने च बीजं कारणमङ्कुरः कार्यमिति स्यात्। नापि बीजजन्यत्वात् बीजं तेनावसीयते। मा भूत् चक्षुर्जन्यत्वाच्चक्षुषोऽवगतिरतः इति। अथ निराकारस्यापि चेतसोऽस्त्यसाधारणः कश्चिदात्मातिशयो हेतुधर्मसामर्थ्यजनितः, यस्मादियं व्यवस्था इति चेत्, एवमप्यात्मातिशयः, इत्याकारस्यैव नामान्तरमारोपितम्। न च नामान्तरकरणादर्थान्तरं भवितुमर्हति। नासावाकारश्चेत्, कस्तर्हीत्यपदिश्यताम्। दुरुप- 5 लक्षणतया नायमिदंतया निर्देष्टुं शक्यते इति चेत्, यत एवेयं व्यवस्था—इदं बीजमयमङ्कुर इति, तदनुपलक्षणे कुतोऽनुमा स्यात्। न हि दण्डविषाणानुपलक्षणे अयं दण्डी विषाणी वेति व्यवस्थीयते। नापि साकारेण। न ह्याकारो वस्तुना व्याप्तः, असत्यपि तस्मिन् द्विचन्द्रादावस्य भावात् नैवम्, भ्रान्तत्वादस्य। यस्त्वभ्रान्तो नासावसति वस्तुनि भवति। न च अन्यव्यभिचारेऽन्यव्यभिचारः इत्यपि असत्। न हि कार्यकारणभावसाधनवेलायामयं 10 भ्रान्तः खल्वाकारोऽयं नेति निश्चयनिबन्धनमस्ति अर्वाग्दशः, न चातीन्द्रियदृशः प्रति इदमुच्यते। न चासति निश्चये हेतुफलभावव्यवस्था ज्यायसी। न च वस्त्वाकारो ज्ञानस्य युज्यते। यदि ह्येकदेशेन ज्ञेयाकारं ज्ञानमिति तत् परिच्छिद्यात्, तदा सर्वे सर्वविदः प्रसज्येरन्, ज्ञेयत्वादिभिः सर्ववस्तुसाधारणैराकारैरन्वितत्वात् सर्वज्ञानानाम्। सर्वात्मनापि ज्ञेयाकारत्वे ज्ञानस्य, ज्ञानज्ञेययोरैक्येन विभागायोगात् व्यवहारोच्छेदः। सर्वात्मना च 15 संवेदनस्य संवेद्याकारत्वे तदभावात्। इत्यलमतिप्रसङ्गेन। मन्दबुद्धिजनानुग्रहेण संनिहित-विनेयजनविपर्याससनिराचिकीर्षया वा यथानिर्दिष्ट एव विपक्षप्रतिपक्षयोरयं विभागोऽव-सातव्यः। तथा चोक्तम्—

**एवं कृत्वा यथोक्तो वै ज्ञेयः सर्वज्ञतानये।**
**अयं विभागो निःशेषो विपक्षप्रतिपक्षयोः** ॥ ७ ॥ इति ॥ 20

तयोर्विभावनायां कः प्रयोग इति प्रयोगार्थमाह—**तेन हि** इत्यादि। यस्मादेवं विपक्षप्रतिपक्षौ हेयोपादेयौ, तस्मात्तदर्थं कथं चरितव्यमित्यर्थः। रूपादिप्रयोगमाह—**न रूपे चरति** अभिनिवेशयोगेन यदा, तदा **चरति प्रज्ञापारमितायाम्**। एवमुत्तरत्र वेदितव्यम्। रूपाद्यनित्यादिप्रयोगार्थमाह—**सचेद्रूपमनित्यम्** इत्यादि। रूपाद्यपरिपूरिप्रयोगमाह—**सचेद्रूपम-प्रतिपूर्णम्** इत्यादिना। लक्षणशून्यत्वात् कल्पितं रूपमप्रतिपूर्णम्। गुणगणोपेतत्वाद्धर्मतारूपं 25 प्रतिपूर्णम्। **न तद्रूपम्** इत्यादि। धर्मधर्मिणोर्बुद्धिपरिकल्पितभेदात्। **सचेदेवमपि न चरति, चरति प्रज्ञापारमितायाम्** इति वक्ष्यमाणेन संबन्धनीयम्। यथोक्तधर्मदेशनया संजातातिशयत्वेनाह—**आश्चर्यम्** इत्यादि। अन्यार्थकथनेन प्रकारान्तराभिधानादाश्चर्यम्। तस्मादेवं प्रयोगकथनेन ससङ्गता रूपादीनामुपलम्भरूपत्वम्, असङ्गता च मातुरनुपलम्भस्वभावता कथिता। रूपादिष्वसङ्गप्रयोगमाह—**रूपं ससङ्गमसङ्गम्** इत्यादि। ससङ्गमसङ्गमिति 30 सोपलम्भमनुपलम्भमित्यर्थः। नन्वभिनिवेशमकृत्वा भावयितुमशक्यत्वात् कथमेवमुच्यते इति तत्कस्य हेतोः इत्याशङ्क्याह—**असक्ता** इत्यादि। अभिष्वङ्गविगमादसक्ता। **अबद्धा अमुक्ता**

W 423 B 274 W 424 W 424 W 425 B 275 W 426

W 427 इति पदद्वयं व्याख्यातम्। प्रतीत्यसमुत्पादशून्यतारूपत्वादसमतिक्रान्ता। एतदुक्तम्—यथाभिनिवेशमतत्त्वात् यथातत्त्वं च अनभिनिवेशात् विकल्पेन विषयीकर्तुमशक्या यस्मात् सर्वज्ञता, तस्मात्तत्र सङ्गं न जनयति इति। **एवं हि** इत्याद्युपसंहारः। अविकारप्रयोगमाह—**आश्चर्यम्** इत्यादिना। देशनादेशनाभ्यां यथाक्रमं ग्रन्थात्मिकाया मातुर्निष्ठान्तर्धानाभ्यां परि-
5 हाणिः। तथा देशनया युक्त्यागमाबाधितरूपेण संतानान्तरे समुत्पादात् वृद्धिः। अदेशनया निरन्तरप्रतिसंलयनेन स्वसंतानेऽधिकार्थदर्शनात् वृद्धिः। मुख्यायास्तु मातुर्निर्विकारस्वभावत्वात् सर्वमेतन्नास्तीत्याह—**या देश्यमानापि** इत्यादि। अविरुद्धत्वात् **साधु** इत्यादिवचनपूर्वकमेतदेव
B 276 दृष्टान्तेन स्पष्टयन्नाह—**तद्यथापि नाम** इत्यादि। अकर्तृप्रयोगार्थमाह—**तद्यथापि नाम सुभूते**
W 428 **मायापुरुषः** इत्यादि। वितथप्रख्यातिरूपत्वेन अकर्तृत्वाद्रागद्वेषक्लेशाभ्यां नानुनीयते न
10 प्रतिहन्यते। अत एव तदुदयक्लेशैर्न संक्लिश्यते इति योज्यम्। दुष्करप्रयोगस्य त्रैविध्यादुद्देशदुष्करतासर्वाकारज्ञताप्रयोगार्थमाह—**दुष्करकारकः** इत्यादि। **नोत्प्लवते** इति न तरलायते नोपरि वर्तते। न हर्षमुत्पादयति इति यावत्। **न च प्रत्युदावर्तते** इति नैव विनिवृत्तिं
W 429 कुर्यात्। अयं **संनाहः** इति वक्ष्यमाणः संनाहः। ननु संभवत्प्रज्ञादिप्रकर्षमवगम्य यत्नकरणात् को नामातिशयो दुष्कर इति तत्कस्य हेतोः इत्याशङ्क्याह—**आकाशेन** इत्यादि।
15 एतदुक्तम्—आकाशोपमानपि सर्वधर्मानध्यालम्ब्य तत्त्वतः संभवत्प्रज्ञादिप्रकर्षाभावेऽपि सर्वाकारज्ञतायाः कृतशः संनाहकरणादतिशयो दुष्कर इति। **आकाशसमानां धर्मधातुः समानाम्** इति लौकिकलोकोत्तरप्रसिद्धिभेदेन द्वयमुक्तम्। प्रयोगदुष्करतामार्गज्ञताप्रयोगार्थमाह—**आकाशं स भगवन् परिमोचयितुकामः** इति। मार्गज्ञतायां यः प्रयोक्तुकाम- इति शेषः। कारित्रदुष्करतासर्वज्ञताप्रयोगार्थमाह—**आकाशं स भगवन् उत्क्षेप्तुकामः**
20 इति। सर्वज्ञतां यः कर्तुकामः इत्युपस्कारः। **महावीर्यपारमितासंनाहप्राप्तः** इति संनाहप्रयोग-
W 430 कारित्रेषु शून्यताकरुणागर्भमहाध्यवसायसंपन्नः। **संनाहं संनह्यते** इति त्रिविधदुष्कर-
B 277 मुत्सहते। यथाभव्यफलप्राप्त्या अवन्ध्यप्रयोगार्थमाह—**अथ खलु** इत्यादिना। **अन्यतमो भिक्षुः** इति अकथापुरुषो नामगोत्रादिभिरनभिलक्षितः पुद्गलः इति यावत्। **नमस्करोमि** इति अन्येषामपि पार्षदानां यथाभव्याधिगमावाप्तिं संसूचयन् शून्यतानुत्पादादिप्रयोगेण स्वानु-
25 रूपाधिगमाज्जातप्रसादातिशयो नमस्करोति। प्रयोगमेवाह—**तथा हि भगवन्** इत्यादिना। **आकाशः** इति ज्ञेयशून्यत्वे। **अभ्यवकाशः** इति ज्ञाननिःस्वभावत्वे। अपरप्रत्ययप्रयोगार्थमाह—**आज्ञापयतु भगवन्** इत्यादि। **नो हीदम्** इति अपरप्रत्ययतां दर्शयति। परेण
W 431 रक्षादौ परप्रत्ययतासंभवात्। एतदेव प्रश्नयन्नाह—**एवं कौशिक सचेत्** इत्यादि। प्रज्ञापारमिताविहारित्वादेव स्वतस्तस्य रक्षादयो भविष्यन्ति नान्यथेति वाक्यार्थः। निःस्वभावधर्मा-
30 धिमोक्षाच्च स्वतस्तस्य रक्षादयः इत्याह—**अपि च कौशिक** इत्यादि। सप्तविधख्यातिज्ञानप्रयोगमाह—**तत् किं मन्यसे कौशिक** इत्यादिना। तत्र विज्ञानपरिणतत्वेन परिणामख्यात्या स्वप्नोपमाः, मन्त्रौषधिसंहतत्वेन समाहारख्यात्या मायोपमाः। अविद्यमानत्वेन विरोधख्यात्या

मरीच्युपमाः । शब्दप्रत्ययत्वात् प्रत्ययख्याता प्रतिश्रुत्कोपमाः । ज्ञेयरूपासंक्रमणादसंक्रान्तिख्याता प्रतिभासोपमाः । आधारविगमान्निराधारख्याता गन्धर्वनगरोपमाः । हेतुविरहादकारकख्याता निर्मितोपमाश्च भावा ज्ञाता भवन्तीत्येवं पञ्चविंशतिसाहस्रिकायामुक्तम् । अत्र तु संक्षेपस्य विवक्षितत्वात् प्रतिश्रुत्कोपमाः सर्वधर्माः इति वचनेन मध्यस्य निर्देशादाद्यन्तत्रिकनिर्देशः इति प्रतिपत्तव्यम् । तदेवमन्वयमुखेन बोधिसत्त्वानां दशविधः 5 प्रयोगः कथितः, अर्थात् यथोक्तविपर्ययेण श्रावकादीनां वेदितव्यः । तथा चोक्तम्— B 278

**रूपादौ तदनित्यादौ तदपूरिप्रपूरयोः ।**
**तदसङ्गत्वे चर्यायाः प्रयोगः प्रतिषेधतः ॥ ८ ॥**
**अविकारो न कर्ता च प्रयोगो दुष्करस्त्रिधा ।**
**यथाभव्यं फलप्राप्तेरवन्ध्योऽभिमतश्च सः ॥ ९ ॥** 10
**अपरप्रत्ययो यश्च सप्तधा ख्यातिवेदकः ।** इति ॥

समताद्वारेण प्रयोगो भावनीय इति समतामाह—**स च तान् न मन्यते** W 432 इत्यादिना । तत्र समाहितेन चित्तेन तान्न मन्यते यतो न समनुपश्यति । ते च धर्मा न विद्यन्ते यतो न संदृश्यते । समाहितेन मनसा न जानाति यतो न संजानीते । ते च धर्मास्तज्ज्ञानगम्या न संविद्यन्ते यतो नोपलभ्यन्ते इति योज्यम् । उपसंहारार्थमाह—**सचेदेवं** 15 **विहरति** इत्यादि । तदेवं रूपादिपदार्थमनना-नीलादिनिमित्तमनना-रूपं द्विधा विंशतिधेत्यादि प्रपञ्चमनना-निर्वेधभागीयाद्यधिगममननानां प्रतिषेधेन ज्ञातृज्ञेयधर्मानुपलब्धिश्चतुर्धोक्ता विज्ञेया । तथा चोक्तम्—

**चतुर्धा मनना तस्य रूपादौ समता मता ॥ १० ॥** इति ॥

प्रयोगसमतां प्रतिविध्य दर्शनमार्गोऽध्येय इत्यधुना वक्तव्यः । स च षोडशक्षणिक 20 W 433 इति क्षणान्तराभावज्ञापनार्थं साक्षिभावकथनाय सर्वबुद्धभाषितत्वप्रतिपादनाय च **अथ खलु बुद्धानुभावेन** इत्यादिवचनम् इत्यार्यविमुक्तिसेनः । उपायकौशलबलेनान्येषां विधिप्रतिषेधाभावात् सहालोकधातौ भद्रकल्पे बोधिसत्त्वसहस्रस्य नियमेन बुद्धत्वप्राप्तेर्बुद्धसहस्रमित्युक्तम् । B 279 **नामभिः** इति पदसमुदायैर्वाक्यैः । **पदैः** इति सुप्तिङन्तैरक्षरसमुदायैः । **अक्षरैः** इति एवमित्यादिवर्णैः । अयमेव प्रज्ञापारमितापरिवर्त इति विशुद्धिपरिवर्तः इत्यर्थः । तत्र अतीत- 25 तथागतोदाहरणं तद्देशनापर्युपयोगज्ञापनार्थम् । मैत्रेय इत्यनागततथागतोदाहरणमनागतसत्त्वार्थप्रयोजनाविष्करणार्थम् ॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां
विशुद्धिपरिवर्तो नामाष्टमः ॥



# ९ स्तुतिपरिवर्तो नवमः ।

B 280 W 435 अधुना दर्शनमार्गार्थमाह—**प्रज्ञापारमिता** इति । प्रतिसत्यं धर्मज्ञानक्षान्तिर्धर्मज्ञानम्, अन्वयज्ञानक्षान्तिरन्वयज्ञानमित्येवं षोडशक्षणात्मकः सर्वज्ञताधिकारे दर्शनमार्गः इत्यर्थः । तथा चोक्तम्—

5 **धर्मज्ञानान्वयज्ञानक्षान्तिज्ञानक्षणात्मकः ।**
**दुःखादिसत्ये दृङ्मार्ग एष सर्वज्ञतानये ॥ ११ ॥** इति ॥

**नामधेयमात्रमेतत्** इति । विकल्पप्रतिबिम्बमात्रमेतदित्यर्थः । **तच्च नामेदम् इति नोपलभ्यते,** तत्त्वतो निःस्वभावत्वात् । नाम किमुच्यते इत्याह—**वाग्वस्त्वेव** इति विकल्प[1]-प्रतिबिम्बकम् । किमाकारं सत्यम्, इत्याकारप्रतिपादनार्थमाह—**किं कारणम्** इत्यादि । **न**

W 436 10 **रूपं नित्यं नानित्यम्** इति नैःस्वाभाव्येन रूपं नित्यानित्यवियोगान्न नित्यं नानित्यमित्याकारः प्रथमः । **न रूपं बद्धं न मुक्तमत्यन्तविशुद्धम्** इति दुःखादुःखविगमत्वेन बन्धमोक्षाभावात् विशुद्धम्, अपगतशाश्वतोच्छेदान्तमिति द्वितीयः । **अनेन सुभूते कारणेन** इति अविपरीत-सर्वधर्माभिसंबोधिहेतुतया यथावद्धर्मतत्त्वद्योतिकामिमामेत्र प्रज्ञापारमितां भाषिष्यते । अन्यस्य तथाविधधर्मतत्त्वप्रकाशने सामर्थ्याभावादित्यर्थः । **रूपविशुद्धितः** इति शून्याशून्यरहित-

W 437 15 त्वात् विशुद्धमिति तृतीयः । **रूपानुत्पादानिरोधासंक्लेशाव्यवदानविशुद्धितः** इति आत्मा-नात्मस्वभावाभावान्नोत्पन्नं[2] न निरुद्धं न संक्लिष्टं न व्यवदातमेवं विशुद्धमिति चतुर्थः । **आकाश-विशुद्धितः** इति हेत्वहेतुतुच्छत्वादाकाशसदृशं विशुद्धमिति पञ्चमः । **रूपनिरुपलेपापरि-**

B 281 **ग्रहतया** इति समुदयासमुदयविसंयोगात् सर्वक्लेशोपक्लेशनिरुपलिप्तम् इति षष्ठः । प्रभवा[3]-प्रभवसंक्लेशापरिग्रहेण निर्मुक्तम् इति सप्तमः । **आकाशप्रतिश्रुत्कावचनीयाप्रव्याहारनिरुप-**

20 **लम्भतया** इति प्रत्ययाप्रत्ययविमुक्तत्वादाकाशप्रतिश्रुत्कावत् स्वरूपतोऽवचनीयमित्यष्टमः । यस्मान्निरोधानिरोधेनासंबन्धः, तस्माद्वचनोदाहरणेन संतानान्तरे निरोधसत्यार्थोऽप्रापणीयः इति नवमः । शान्ताशान्ताभावान्नोपलम्भकरणमिति दशमः । **सर्वोपलेपानुपलेपधर्मानुप-**

W 438 **लेपतया** इति प्रणीताप्रणीतविकलत्वात् सर्वोपलेपधर्मैः सास्रवैरनुपलेपधर्मैरनास्रवैश्चानुप-लिप्तत्वादतिक्रान्तोभयान्ता विशुद्धिरित्येकादशः । **प्रागेव** इति सुतरामेवोद्ग्रहणादिकारिणां

25 सुलब्धा लाभाः । श्रोत्रविज्ञानानुभवविशिष्टत्वादुद्ग्रहणादेरित्यर्थः । **न तेषां चक्षूरोगः** इत्यादि निःसरणानिःसरणविविक्तत्वात् सर्वव्याध्यनुत्पादः इति द्वादशः । **बहुतरम्** इति अष्टम्यादौ प्रजावलोकनादवतीर्णशक्रादिबहुतरश्रोतृसद्भावादिति भावः । मार्गे धर्मज्ञानक्षान्तिमाह—

W 439 **बहूनि सुभूते** इत्यादिना । प्रज्ञापारमितया देवपुत्राणामनुपकारात्तां भाषमाणस्य रक्षादिकरणे तेषां को हेतुरिति तत्कस्य हेतोः इत्याशङ्क्याह—**सदेवमानुषासुरस्य** इत्यादि । **अनुत्तरं**

30 **रत्नम्** इति सर्वपापप्रशमहेतुत्वेन मार्गमार्गारहितत्वादनुत्तररतिं तनोतीति देवपुत्रादीनामुपकार-

---

१ B निर्विकल्प.° २ W °स्वभावतया नोत्पन्नं. ३ W प्रभवाप्रभवाभावेन असंक्लेशात्परिग्रहेण.

भावादनुत्तररत्नमपायोच्छित्तिरिति त्रयोदशः। **अतोऽपि सुभूते** इत्यादि। न केवलमत्र बहुतर- B 282
श्रोतृजनसंभवादतोऽप्यनुत्तररतिदानादपि ततो धर्मभाणकत्वेन हेतुना बुद्धत्वप्राप्तेर्हेतुभूतं
निदानं पुण्यं प्रसविष्यतीत्यर्थः। मार्गे धर्मज्ञानमाह—**अपि तु खलु** इत्यादिना। महानुभावत्वेऽपि
बह्वन्तराये किं कारणमिति तत्कस्य हेतोः इत्याशङ्क्याह- **तथा हि** इत्यादि। महानुभावत्वात्
बहूनामभिलषणीयत्वात् बहुप्रत्यर्थिकानि। **यथा सारं च** इत्यादि। येन प्रकारेणोत्तरो- 5 W 440
त्तरसारता, तथा प्रत्यर्थिकबहुतेत्यर्थः। सामान्येन निर्दिश्य, इदानीं विशेषेणाह—**अनुत्तरं
चेदं सुभूते महारत्नम्** इति। सर्वसत्त्वहितसुखाद्यर्थं प्रत्युपस्थितत्वेन सर्वधर्मविकल्पाभावा-
दविकल्पककल्याणप्रकृतिरत्नार्थेन न्यायान्यायासंश्लेषात् फलसाक्षात्करणं प्रत्युपायोऽविकल्पत्वं
महारत्नमिति चतुर्दशः। मार्गेऽन्वयज्ञानक्षान्तिमाह—**न च सुभूते** इत्यादिना। कल्पितभावं
नावलीयते, परतन्त्रं न संश्लिष्यते, परिनिष्पन्नं न परिगृह्णातीत्यर्थभेदः। एतदुक्तम्—प्रति- 10
पत्त्यप्रतिपत्तिविनिर्मुक्तत्वेन धर्माणां निमित्तैरसंसर्गः इति पञ्चदशः। विद्यमानत्वेऽपि धर्माणां
कथनं न परिग्रहः इति तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि** इत्यादि। गतार्थम्। मार्गे-
ऽन्वयज्ञानमाह—**अनुत्पत्तितः** इत्यादिना। नैर्याणिकानैर्याणिकविकलत्वेनोभये वाच्यवाचक- W 441
भावलक्षणे ज्ञेये शब्दे ज्ञानस्यानुत्पत्तिरित्याकारः षोडशः। प्रकारान्तरेणानुपलिप्तार्थं कथयन्नाह—
**तथा हि** इत्यादि। इत्थमपि धर्मतत्त्वमभिनिविश्यमानं दोषायेत्याह—**सचेदेवमपि** इत्यादि। 15
यथोक्तनीत्या षोडशाकाराः सर्वज्ञताक्षणाः इति दर्शनमार्गो बोधिसत्त्वानामन्वयमुखेन कथितः।
अर्थादेतद्विपर्ययेण श्रावकादीनामनित्यादिभिराकारैर्दृङ्मार्गोऽवसेयः। तथा चोक्तम्— B 283

**रूपं न नित्यं नानित्यमतीतान्तं विशुद्धकम्।**
**अनुत्पन्नानिरुद्धादि व्योमाभं लेपवर्जितम्॥ १२॥**

**परिग्रहेण निर्मुक्तमव्याहारं स्वभावतः।** 20
**प्रव्याहारेण नास्यार्थः परेषु प्राप्यते यतः॥ १३॥**

**नोपलम्भकृदत्यन्तविशुद्धिर्व्योध्यसंभवः।**
**अपायोच्छित्त्यकल्पत्वे फलसाक्षात्क्रियां प्रति॥ १४॥**

**असंसर्गो निमित्तैश्च वस्तुनि व्यञ्जने द्वये।**
**ज्ञानस्य या चानुत्पत्तिरिति सर्वज्ञताक्षणाः॥ १५॥** इति॥ 25

विस्तरेण निर्दिश्य एवं सकलार्थसंग्राहकत्वेन त्रिसर्वज्ञतामध्ये सर्वाकारज्ञतामुप- W 442
संहरन्नाह—**सा खलु पुनः** इत्यादि। तत्रावेशिका चित्तोत्पादद्वारेण उत्पादिका। निवेशिका
अववादादिना प्रतिष्ठापिका। संदर्शिका संनाहप्रतिपत्त्या सामान्यरूपेण। निदर्शिका
प्रस्थानप्रतिपत्त्या विशेषरूपेण। आवाहिका संभारप्रतिपत्त्या प्रापिका। निर्वाहिका
निर्याणप्रतिपत्त्या निष्कर्षिका। सर्वत्र न कस्यचिद्धर्मस्येत्यभिसंबन्धनीयम्। अविपरीतधर्मा- 30
मृतरसेन तृप्ताः पूजयन्तीत्याह—**अथ खलु** इत्यादि। प्रसादौद्बिल्यसमुत्थः सिंहनादः

किलकिला। प्रक्ष्वेडितमित्येके। हर्षजनितोऽट्टहासः। किलकिला तत्पूर्वकं नृत्यं प्रक्ष्वेडितमित्यपरे। वाराणस्यां प्रथमतो धर्मचक्रप्रवर्तनापेक्षया द्वितीयम्। तात्त्विकाभिनिवेशनिराकरणार्थमाह–**नेदम्** इत्यादि। तदेव कथयन्नाह–**नापि** इत्यादि। मार्गज्ञतामुपसंहरन्नाह–**महापारमितेयम्** इत्यादि। **असङ्गता** इति अनभिनिवेशनता। उपलम्भेऽपि धर्मादर्शने को

B 284
W 443

5 हेतुरिति तत्कस्य हेतोः इत्याशङ्क्याह–**न हि सः** इत्यादि। सुबोधम्। **प्रवर्तयिष्यति** इति उत्पादयिष्यति। कारणसामग्रीकरणेन धर्मोत्पादनात् कथमेवमुच्यते इति तत्कस्य हेतोः इत्याशङ्क्याह–**अत्यन्ता** इत्यादि। कारणस्यैव असत्त्वादिति भावः। **निवर्तयिष्यति** इति विनाशयिष्यति। मुद्गरादिना प्रवृत्तसंतानविरुद्धपदार्थोत्पादने विनाशाध्यवसायात् कथमेवमुच्यते इति तत्कस्य हेतोः इत्याशङ्क्याह–**आद्यनभिनिर्वृत्ता हि भगवन् सर्वधर्माः** इति।

10 आदावेवोत्पादहेतोरसत्त्वेनानुत्पन्नाः। तदेव कथयन्नाह–**प्रकृतिविविक्तत्वात् सर्वधर्माणाम्** इति। स्वभावेन शून्यत्वात् कुतो विरुद्धतेति भावः। सर्वज्ञतामुपसंहरन्नाह–**न हि सुभूते शून्यता** इत्यादि। शून्यत्वादीनामनुत्पन्नत्वादिति मतिः। **इयं सा** इति सर्वज्ञता। **सर्वधर्माणां देशना** इत्यारभ्य यावत् **दक्षिणीयः कृतः** इति परमार्थसत्यमधिकृत्य उक्तत्वात् सुगमः। यथोक्तनीत्या त्रिसर्वज्ञतोपसंहारे न विप्रतिपत्तिः कार्या। तथा चोक्तम्–

W 444

15 **इति सेयं पुनः सेयं सेयं खलु पुनस्त्रिधा।**
**अधिकारत्रयस्यैषा समाप्तिः परिदीपिता॥ १६॥** इति॥

किमर्थं पुनस्तथा सर्वज्ञतायां पृथग्भावनामार्गो नास्ति यथा मार्गज्ञतायामभिहितः? श्रावकप्रत्येकबुद्धसंपदं बोधिसत्त्वो ज्ञानेन दर्शनेन चावलोक्य अतिक्रामति इति वचनेन असाक्षात्कर्तव्यत्वान्निर्दिष्टो बोधिसत्त्वानाम्, श्रावकादीनां तु यथापरिदृष्ट एवार्थः पुनःपुन-

B 285

20 रभिमुखीक्रियमाणो भावनामार्ग इति सुगमत्वान्नोक्तः। निर्वेधभागीयं पुनर्बोधिसत्त्वानां पूर्वोक्तमेव क्रमेणावसातव्यम्। श्रावकादीनां तु अनित्यादिभिरेवाकारैराकीर्यमाणे सत्यचतुष्टये सास्रवं भावनामयमुष्मादिकं स्पष्टत्वान्नोक्तमिति ग्राह्यम्। ननु मार्गज्ञतायां श्रावकादिमार्गस्याभिधानात् सर्वज्ञता कथितैव, कस्मात्पुनः सर्वज्ञतायाः पृथक् निर्देशः इति **चेत्, उच्यते**। तत्र हि–

25 चतुर्णामार्यसत्यानामाकारानुपलम्भतः।
श्रावकाणामयं मार्गो ज्ञेयो मार्गज्ञतानये॥

–अभिसमयालंकारः २.२

इत्यनुपलम्भभावनादिक्रमेण श्रावकादिमार्गो बोधिसत्त्वेन ध्येयः इत्युक्तम्। अतोऽनित्यादिभिराकारैर्व्यतिरेकमुखाक्षिप्तैरशेषवस्तुपरिज्ञानार्थं पृथक् सर्वज्ञतोपादानम्। बहु वक्तव्यं

30 चेदमित्यलमतिप्रसङ्गेन॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां
सर्वज्ञतापरिच्छेदस्तृतीयः॥

परिज्ञातत्रिसर्वज्ञतावशित्वार्थं पुनः सर्वाकारमार्गवस्तुज्ञानसंग्रहेण त्रिसर्वज्ञतां भावयति इति सर्वाकाराभिसंबोधो वक्तव्यः। तत्र तावत् नित्यादिग्राहविपक्षस्य प्रतिपक्षधर्मस्वभावानामनित्याद्यालम्बनप्रकाराणामाकारत्वेन व्यवस्थानं सामान्येन लक्षणं ज्ञेयम्, अतो निर्वस्तुकाकारदोषो नेह विजृम्भते। ते चाकारास्त्रिसर्वज्ञताभेदात् त्रिप्रकारा एव मता इति ग्राह्यम्। तथा चोक्तम्— 5

**वस्तुज्ञानप्रकाराणामाकारा इति लक्षणम्।** B 286

**सर्वज्ञतानां त्रैविध्यात् त्रिविधा एव ते मताः॥ १॥** इति॥

तत्र चत्वार्यार्यसत्यान्यधिष्ठानं कृत्वा त्रिसर्वज्ञताधिकारेण यस्मिन् सत्ये यावन्तो भवन्ति आकारास्तान् परिदीपयन् सर्वज्ञताधिकारेण तावदाह—**एवमुक्ते आयुष्मान् सुभूतिर्भगवन्तम्** इत्यादि। **असत्पारमितेयम्** इति आकाशस्येव नित्यरूपेणासत्ताम् अविद्यमानतामुपादाय हेतूकृत्य असदनित्याकार इत्यर्थः। **असमसमता** इति सर्वधर्मानुपलब्धेरिव समतामनुत्पादतामुपादाय दुःखाकारोऽन्याकारविसदृशत्वेन असमोऽतुल्यः स तत्त्वतः समतानुत्पादः। **विविक्त°** इति अत्यन्तेनातिशयेनात्मनः शून्यतामुपादाय शून्याकारगुणावाहकत्वेन विवेकः। **अनवमृद्य°** इति सर्वधर्माणामात्मत्वेनानुपलब्धितामुपादाय सर्वतीर्थिकासाधारणत्वेन तीर्थिकाकोप्यत्वेनानात्माकारोऽनवमर्दनीयः। तदेवमसदनुत्पादविवेकानवमर्दनीयाकाराश्चत्वारो यथासंख्यमनित्यादिलक्षणा दुःखसत्ये भवन्ति। **अपद°** इति। तत्र चत्वारोऽरूपिणः स्कन्धाः नाम, शरीरं रूपस्कन्धः, तेषामसौ हेतुः, इति कृत्वा। न्यायेन **अनामाशरीरताम्** उपादाय हेत्वाकारास्तत्त्वतोऽप्रसवाधानार्थेनापदः। **अस्वभाव°** इति अनुत्पादानिरोधस्वभावामनागतिमगतिमुपादाय समुदयाकारोन्यायेनाकाशम्। **अवचन°** इति सर्वधर्माणामविद्यमानत्वेनोद्भावनासंवृत्यापि शब्दावाच्यत्वादविकल्प्यतामुपादाय प्रभवाकारोऽप्रव्याहारः। **अनाम°** इति पञ्चस्कन्धानुपलब्धितामुपादाय, अचैतसिकत्वेन प्रत्ययाकारोऽनाम। तदेवमपदाकाशाप्रव्याहाराणामाकाराश्चत्वारो यथाक्रमं हेत्वादिलक्षणाः समुदयसत्ये भवन्ति। **अगमन°** इति। निरोधस्वभावसर्वधर्माणां क्वचिदगमनतामुपादाय निरोधाकारोऽगमनः। **असंहार्य°** इति आदिशान्तत्वेन विषयभावोपसंहाराभावात् सर्वधर्माग्राह्यतामुपादाय शान्ताकारोऽसंहार्यः। **अक्षय°** इति। धर्मधातुरूपेणाक्षयधर्मयोगतामुपादाय प्रणीताकारोऽक्षयः। **अनुत्पत्ति°** इति एकानेकहेतुवैधुर्यात् सर्वधर्मानभिनिर्वृत्तितामुपादाय निःसरणाकारोऽनुत्पत्तिः। तदेवमगमनासंहार्याक्षयानुत्पत्त्याकाराश्चत्वारो यथासंख्यं निरोधादिस्वभावा निरोधसत्ये भवन्ति। **अकारक°** इति मार्गस्य कर्तृग्राहप्रतिपक्षत्वात् कारकानुपलब्धितामुपादाय मार्गाकारोऽकारकः। **अजानक°** इति प्रमाणबाधितत्वेन सर्वधर्माणामनात्मतामनुपलम्भात्मतामुपादाय न्यायाकारोऽजानकः। **असंक्रान्ति°** इति धर्मधातुरूपेण च्युत्युपपत्त्योर्विनाशोत्पादयोरनुत्पत्तिमुपादाय प्रतिपत्त्याकारोऽसंक्रान्तिः। **अविनय°** इति। पूर्वान्तापरान्तप्रत्युत्पन्नाध्वानुपलब्धितामुपादाय क्लेशविनयासंभवान्नैर्याणिकाकारोऽविनयः। तदेवमकारकाजानकासंक्रान्त्य-

(Margin: 10, W 446, 15, 20, B 287, 25, W 447, 30)

विनयाकाराश्चत्वारो यथासंख्यं मार्गादिस्वभावा मार्गसत्ये क्लेशावरणप्रतिपक्षे भवन्ति। **स्वप्न°** इति न्यायानुयायिनो जन्मनोऽसत्त्वादनुत्पादविज्ञपनतामुपादाय स्वप्नप्रतिश्रुत्का-प्रतिभासमरीचिमायाकाराः पञ्च यथाक्रमं निःस्वभावानुत्पन्नानिरुद्धादिशान्तप्रकृतिपरि-निर्वृतिलक्षणाः सामान्येन ज्ञेयावरणप्रतिपक्षभूताः सर्वज्ञतया प्रत्येकबुद्धाः संगृहीता इति 5 तेषां ज्ञेयावरणप्रतिपक्षात्मके सास्रवे भावनामार्गे भवन्ति। **असंक्लेश°** इति रागद्वेषमोहा-स्वभावतामुपादाय क्लेशाभावोऽसंक्लेशः। **अव्यवदान°** इति आश्रयस्य क्लिष्टसत्त्वस्यानुप-लब्धितामुपादाय व्यवदानाभावोऽव्यवदानम्। **अनुपलेप°** इति आकाशस्य प्रकृतिप्रभास्वर-त्वेनानुपलेपतामुपादाय क्लेशोपक्लेशाभावोऽनुपलेपः। **अप्रपञ्च°** इति सर्वधर्ममननानामुप-लम्भरूपाणां समतिक्रमतामुपादाय प्रपञ्चाभावोऽप्रपञ्चः। **अमनन°** इति सर्वोपलम्भसमुद्धाता-10 दनिञ्जनतां निष्प्रकम्पतामुपादाय मननाभावोऽमननः। **अचलित°** इति। आसंसारं धर्मधातुस्थितितामुपादाय भ्रंशाभावोऽचलितः। तदेतेऽसंक्लेशाव्यवदानानुपलेपाप्रपञ्चामनना-चलाकाराः षट् यथाक्रमं संक्लेशव्यवदानक्लेशवासनारूपादिप्रपञ्चस्वाधिगमोपलम्भपरिहाणि-विकल्पानां षण्णां प्रतिनियतज्ञेयावरणानां प्रतिपक्षभूताः प्रत्येकबुद्धानां ज्ञेयावरणप्रतिपक्षा-त्मकेऽनास्रवदर्शनमार्गे भवन्ति। समुदायेन सप्तविंशतिरिति सर्वज्ञताकाराः। तथा चोक्तम्—

15 **असदाकारमारभ्य यावन्निश्चलताकृतिः।**
**चत्वारः प्रतिसत्यं ते मार्गे पञ्चदश स्मृताः॥ २॥** इति॥

तदनन्तरं मार्गज्ञताकारा वक्तव्याः। तत्र संक्लेशेतरपक्षाश्रयेण समुदयमार्गसत्ये कारणम्, दुःखनिरोधसत्ये च फलमित्यर्थद्वारेण निर्दिष्टे समुदयमार्गदुःखनिरोधसत्येषु यथासंख्यमष्टौ सप्त पञ्च षोडशाकारा बोद्धव्याः। तत्र हेतुस्त्रिविधः। छन्दो रागो नन्दी 20 च पौनर्भविकी तृष्णेति। छन्दप्रतिपक्षेणाह—**विराग** इति। सर्वधर्माणां शून्यतारूपेणावि-तथतां सत्यतामुपादाय रागाभावो विरागः। कर्तुकामत्वाभावाभिसंधिना निर्दिष्टः छन्दो-वस्थायां रागः प्रधानमिति कृत्वा। तदभावेन छन्दस्याभावापदेशात् रागस्य वा कार्यात्मनो-ऽभावेन अविकलतद्धेतुकच्छन्दस्याभावः कथितः, अन्यथा अविकले कारणे सति कार्यानुदयो न स्यादिति न्यायात्। रागप्रतिपक्षेणाह—**असमुत्थान** इति। मायोपमत्वे सर्वधर्मनिर्विकल्पता-25 मुपादाय समुत्थानस्य छन्दस्याभावोऽसमुत्थानः धर्मेष्वसक्तत्वाभिसंधिना कथितः। रागा-वस्थायां साक्षात्प्रवृत्तिहेतुत्वेन छन्दः प्रधानमिति कृत्वा। तदभावेन रागस्याभावापदेशात्। पुनर्भवनिमित्तनन्दीतृष्णाप्रतिपक्षेणाह—**शान्त** इति। सर्वधर्माणां नीलपीतादिनिमित्तानुप-लब्धितामुपादाय तृष्णायाः प्रधानेनानुपशमस्याभावः शान्तः। समुदयस्त्रिधा—रागद्वेषमोहाः। तत्प्रतिपक्षेणाह—**निर्दोष** इति। दशबलवैशारद्यादिगुणपारमितामुपादाय दोषाभावो निर्दोषः। 30 अरागः अद्वेषः अमोहः इति यावत्। प्रभवः परिकल्पः, ततो रागादिप्रसूतेः। तत्प्रतिपक्षे-णाह—**निःक्लेश** इति। परिकल्पस्य द्वयाद्यभिनिवेशस्यासत्तामुपादाय क्लेशहेतुप्रभवाभावो निःक्लेशः। प्रत्ययः सत्त्वाभिनिवेशः। सत्कायदृष्टेः सर्वानर्थप्रत्ययत्वात्। तत्प्रतिपक्षेणाह—

B 288 W 448 W 449 B 289

**निःसत्त्व** इति । अविपर्यासार्थेन भूतकोटितामुपादाय प्रत्ययाभावो निःसत्त्वः । तदेवं विरागाकारमारभ्य यावन्निःसत्त्वाकार इति यथाक्रमं यो हेतुः छन्दो रागो नन्दी च, यः समुदयो रागद्वेषमोहाः, यः प्रभवः परिकल्पः, यश्च प्रत्ययः सत्त्वाभिनिवेश इति, तत्प्रतिपक्षेण त्रयस्त्रयः एक एकः इत्यष्टावाकाराः समुदयसत्ये भवन्ति । **अप्रमाण** इति सर्वधर्मसमुत्थानस्य प्रादुर्भावस्यासमुत्थानतामुपादाय विपक्षनिवृत्तिप्रतिपक्षावाहकत्वेनाप्रमाणसत्त्वावकाशदत्वात् मार्गाकारोऽप्रमाणः । यथा चाप्रमाणसत्त्वावकाशदः इत्याह–**अन्तद्वयाननुगम** इति । सर्वधर्मानभिनिवेशतामुपादाय संसारनिर्वाणान्तद्वयस्य प्रहाणादननुगमोऽनुपलम्भः । **असंभिन्न** इति धर्मधातुरूपेण सर्वधर्माणामसंभेदनताम् अनानारूपतामुपादाय विपक्षनिवृत्त्या न्यायाकारोऽसंभिन्नः । यथा च न्यायः इत्याह–**अपरामृष्ट** इति सर्वश्रावकप्रत्येकबुद्धभूम्यस्पृहनतामुपादाय तद्विकल्पासंमृष्टोऽपरामृष्टः । **अविकल्प** इति विकल्पसमतामुपादाय प्रतिपत्त्याकारोऽविकल्पः । यथा च प्रतिपत्तिरित्याह–**अप्रमेय** इति अप्रमाणधर्मतामुपादाय लब्धपरित्यागेऽलब्धलाभे च हीनप्रणीतविकल्पाभावं पुरोधाय ज्ञेयावधिरहितत्वेनाप्रमेयः । **असङ्ग** इति तत्र तत्राधिगमे गगनवत् सर्वधर्मासङ्गतामुपादाय नैर्याणिकाकारोऽसङ्गः । तदेवमप्रमाणान्तद्वयाननुगमासंभिन्नापरामृष्टाविकल्पाप्रमेयासङ्गाकारा यथाक्रमं यः सर्वसत्त्वावकाशदो मार्गः, यथा च सर्वसत्त्वावकाशदः, यो न्यायो यथा च न्यायः, या प्रतिपत्तिर्यथा च प्रतिपत्तिः, यच्च निर्याणमिति, द्वौ द्वौ द्वावेक इति सप्ताकारा मार्गसत्ये भवन्ति । **अनित्य** इति सर्वधर्माणामसत्त्वेन हेतुप्रत्ययैरसंस्कृततामुपादाय नित्यमसदित्यसदर्थोऽनित्यार्थः । **दुःख** इति आकाशस्य सर्वधर्मेषु समतामुपादाय सर्ववस्तुव्यापि संस्कारदुःखम् । **शून्य** इति अधिष्ठात्रात्मसंबन्धगन्धानुबन्धेनापि सर्वधर्मानुपलब्धितामुपादाय परपरिकल्पितात्मादिरहितत्वं शून्यम् । **अनात्म** इति स्वयमनात्मत्वेन सर्वधर्मानभिनिवेशतामुपादाय पुद्गलाद्यस्वभावोऽनात्मा । **अलक्षण** इति सर्वधर्मानभिनिर्वृत्तितामुपादाय निःस्वभावोऽलक्षणम् । तदेवमनित्यदुःखशून्यानात्माकाराः पञ्चमालक्षणाकारस्वभावा इति पञ्चाकारा दुःखसत्ये भवन्ति । **सर्वशून्यता** इति पूर्वापरभावलक्षणस्यान्तस्य मध्यस्य च परितोऽन्तद्वयेन युक्तत्वात् पर्यन्तस्य अविद्यमानत्वेनानन्तापर्यन्ततामुपादाय निरोधसत्याकाराः षोडश शून्यताः सर्वशून्यताः । तत्र अध्यात्मबहिर्धोभयवस्तूनां निरोधेनाध्यात्मबहिर्धोभयशून्यताकारास्त्रयो निरोधाकारस्वभावाः शून्यतायां भाजनलोके परमार्थे संस्कृतेऽसंस्कृते शाश्वतोच्छेदान्तेऽनवराग्रसंसारे अधिगतधर्मानवकारेऽभिनिवेशस्य प्रज्ञप्त्यात्मकस्याष्टप्रकारस्य निरोधेन यथाक्रमं शून्यताशून्यता, महाशून्यता, परमार्थशून्यता, संस्कृतशून्यता, असंस्कृतशून्यता, अत्यन्तशून्यता, अनवराग्रशून्यता, अनवकारशून्यता चेत्यष्टौ शून्यताकाराः शान्ताकारस्वभावाः । प्रणीताकारः परपरिकल्पितकारकनिरोधेन प्रकृतिशून्यताकारः । विषयभ्रान्त्यात्मिकानां प्रज्ञप्तिलक्षणकालभ्रान्तीनां निरोधेन सर्वधर्मलक्षणानुपलम्भशून्यताकारास्त्रयो निःसरणाकारस्वभावाः । स्वभावनिरोधेनाभावस्वभावशून्यताकार एव निःसरणाकारात्मक इति निरोधाकारं शान्ताकारं

प्रणीताकारं निःसरणाकारं चाधिकृत्य यश्चाध्यात्मिकादेर्वस्तुनो निरोधः, यथा च शान्तोऽष्टविधाभिनिवेशोपरमात्, यथा च प्रणीतः प्रकृत्या, यथा च निःसरणं त्रिविधभ्रान्तिनिरोधेन, यच्च निःसरणमभावस्वभावतेति त्रयोऽष्टावेकत्वय एक इति यथाक्रमं षोडशाकारा निरोधसत्ये भवन्ति। समुदायेन षट्त्रिंशत्। इति मार्गज्ञताकाराः। तथा चोक्तम्—

5 **हेतौ मार्गे च दुःखे च निरोधे च यथाक्रमम्।**
**अष्टौ ते सप्त पञ्चेति षोडशेति च कीर्तिताः॥ ३॥** इति॥

तदनन्तरं सर्वाकारज्ञताकारा वक्तव्याः। तत्र च सर्वार्यपुद्गलाधिकारेण त्रिविधसर्वज्ञताकारसंग्रहो भवति। अतः सर्वज्ञतामार्गभेदेनाह—**स्मृत्युपस्थानादिबोधिपक्षधर्म०** इति। तेषामेव बोधिपक्षधर्माणामनुपलब्धितामुपादाय स्मृत्युपस्थानादय एव पारमितेत्यर्थः।
10 एतदुक्तम्—तत्र सर्वज्ञतायामादौ चतुःसत्यावताराय स्वसामान्यलक्षणपरीक्षितकायवेदनाचित्तधर्मस्मृत्युपस्थानाकाराश्चत्वारो वस्तुपरीक्षामार्गाः, तेन कायादिचतुर्विधवस्तुपरीक्षणात्। ततोऽवतीर्णस्य वीर्यम्, इति सर्वथोत्पन्नानुत्पन्नस्याकुशलस्य कुशलस्य च यथाक्रमं प्रहाणानुत्पादनार्थं भूयो भावोत्पादनार्थं च हेतुभूतवीर्यात्मकाः सम्यक्प्रहाणाकाराश्चत्वारो व्यवसायिकमार्गाः। तथा आवरणप्रहाणादिमुखेन वीर्यारम्भात् वीर्यवतश्चित्तकर्मण्यतापा-
15 दनमिति छन्दवीर्यचित्तमीमांसासमाधिप्रहाणसंस्कारसमन्वागतर्द्धिपादाकाराश्चत्वारः समाधिपरिकर्ममार्गाः। तथा छन्दादिमुखेन कर्मण्यतापादनात् कृतचित्तपरिकर्मणोऽनन्तरमूष्ममूर्धप्रयोग इति तत्स्वभावाः श्रद्धावीर्यस्मृतिसमाधिप्रज्ञेन्द्रियाकाराः पञ्च सम्यगभिसमयप्रायोगिकमार्गाः, श्रद्धेन्द्रियादिना आर्यमार्गसमुदागमाय अधिपतिभूतोष्ममूर्धप्रयोगात् अधिगतोष्मादेः क्षान्त्यग्रधर्मप्रयोगः इति तत्स्वभावाः श्रद्धावीर्यस्मृतिसमाधिप्रज्ञाबलाकाराः
20 पञ्च सर्वथा अभिसमयसंश्लेषमार्गाः। श्रद्धाबलादिना अनन्तरं सत्यप्रतिवेधार्थमाश्रद्ध्यादिविपक्षानभिभूतक्षान्त्यग्रधर्मप्रयोगात् विदितोष्मादिचतुष्कस्य सत्यदर्शनमार्ग इति स्मृतिधर्मप्रविचयवीर्यप्रीतिप्रस्रब्धिसमाध्युपेक्षाकाराः सप्त बोध्यङ्गान्यभिसमयमार्गाः, तेन आदितः प्रत्यात्मवेद्यतत्त्वाभिसंबोधात्। परिज्ञातसत्यदर्शनस्य भावनामार्ग इति सम्यग्दृष्टिसंकल्पवाक्कर्मान्ताजीवव्यायामस्मृतिसमाध्यार्याष्टाङ्गमार्गाकारा विशुद्धनैर्याणिकमार्गाः, दर्शनमार्गा-
25 दूर्ध्वमनेन भावनाप्रहातव्यक्लेशविशुद्धये निर्याणात्। अत एवैषां बोधिपक्षधर्माणामेषा आनुपूर्वी। तदेवं वस्तुपरीक्षामार्गादि सप्तविधं मार्गमधिकृत्य सर्वज्ञतामार्गाधिष्ठानाः सप्तत्रिंशदाकारा भवन्ति। तदनन्तरं मार्गज्ञतामार्गभेदानाह—**शून्यानिमित्ताप्रणिहितपारमिता** इति। शून्यानात्माकारस्वभावं प्रथमं शून्यताविमोक्षमुखं दृष्टिकृतप्रतिपक्षः। यच्चानिमित्तं निरोधो येन च निमित्तविकल्पापोढेन मार्गेणेति कृत्वा
30 निरोधमार्गसत्याकारस्वभावं द्वितीयमानिमित्तविमोक्षमुखं दृष्टिनिमित्तविकल्पप्रतिपक्षः। यत्तूक्तम्—आनिमित्तः शमाकारैरिति, तद्वस्तुनिमित्तानुविद्धं श्रावकमार्गमधिकृत्य, इति न

B 293
W 453

तेनास्य विरोधः । अनित्यदुःखसमुदयसत्याकारस्वभावं तृतीयमप्रणिहितं विमोक्षमुखं त्रैधातुक- B 294
प्रणिधानप्रतिपक्षः । इत्येवं त्रिविमोक्षमुखाकारास्त्रयः प्रतिपक्षमार्गः । **अष्टविमोक्षपारमितेयम्** W 454 इति अविभावितविभावितरूपसंज्ञत्वाद्यथाक्रममध्यात्मं रूप्यरूपी च प्रत्यात्मं ध्यान-
मारूप्यसमापत्तिं वा निश्रित्य बहिर्धा रूपाणि सुवर्णदुर्वर्णानिपश्यति, इत्येतौ निर्माणावरण-
प्रतिपक्षेण द्वौ विमोक्षौ । शुभाशुभरूपनिर्माणे च यथासंख्यमाभोगः प्रातिकूल्यं च संक्लेशः, 5
तत्प्रतिपक्षेण शुभं विमोक्षमुखं कायेन साक्षात्कृत्वा उपसंपद्य विहरति । प्रत्यात्मं शुभाशुभेषु
रूपेष्वन्योन्यापेक्षासंज्ञामन्योन्यानुगमसंज्ञां च निश्रित्य अन्योन्यैकरससंज्ञालाभेन यथेष्टं
रूपाधिमोक्षविभुत्वलाभादित्येको विमोक्षः । इति विमोक्षाकारास्त्रयो निर्याणमार्गः । मोक्षानु-
कूलविहारमार्गस्वभावाश्चतुरारूप्यसमापत्त्याकाराः शान्तविहारमार्गस्वभावः संज्ञावेदितनिरो-
धाकार एक इति पञ्चाकारा दृष्टधर्मसुखविहारमार्गः । **नवानुपूर्वविहारपारमितेयम्** इति 10
चतुर्ध्यानारूप्यनिरोधसमापत्त्याकारा नव लोकोत्तरमार्गः । **चतुःसत्यपारमितेयम्** इति
चतुःसत्यसंगृहीताः क्लेशविसंयोगलक्षणानन्तर्यमार्गाकाराश्चत्वारः प्रहाणमार्गः । **दशपारमितेयम्** W 455 इति दानादिपारमिताकारा दश बुद्धत्वमार्गः । तदेवं प्रतिपक्षमार्गादिषड्विधमार्गमधि-
कृत्य मार्गज्ञतामार्गाधिष्ठानाश्चतुस्त्रिंशदाकारा भवन्ति । तदनन्तरं सर्वाकारज्ञताकारा वक्तव्याः ।
तत्र च मार्गो निरतिशयत्वादेक एव, केवलं तु बलवैशारद्याद्याकारभेदेनास्य विशेषमार्गस्या- 15
साधारणभेदो वक्तव्य इत्याह—**बलपारमितेयम्** इति । स्थानास्थानज्ञानबलम्, कर्मविपाक- B 295
ज्ञानबलम्, नानाधिमुक्तिज्ञानबलम्, अनेकलोकधातुज्ञानबलम्, इन्द्रियपरापरज्ञानबलम्,
सर्वत्रगामिनीप्रतिपज्ज्ञानबलम्, संक्लेशव्यवदानज्ञानबलम्, पूर्वनिवासानुस्मृतिज्ञानबलम्,
च्युत्युपपत्तिज्ञानबलम्, आस्रवक्षयज्ञानबलमिति निर्जितविपक्षत्वेनानवमृद्यतामुपादाय बला-
कारा दश । **वैशारद्यपारमितेयम्** इति बुद्धोऽहमित्यात्मप्रतिज्ञाने रागादीनामन्तरायत्वा- 20
ख्याने सर्वज्ञतादिमार्गस्य निर्याणत्वप्रकाशने क्षीणास्रवत्वेनात्मनोऽभ्युपगमे च पर्यनुयोक्तृ-
रभावेन अनवलीनचित्ततामुपादाय वैशारद्याकाराश्चत्वारः । **प्रतिसंवित्पारमितेयम्** इति पर्याये
धर्मलक्षणे जनपदभाषायां धर्मप्रभेदे च यथाक्रममधिगतास्वादनज्ञेयावरणप्रतिघाताभावेन W 456
सर्वज्ञानासङ्गाप्रतिघातितामुपादाय धर्मार्थनिरुक्तिप्रतिभानप्रतिसंविदाकाराश्चत्वारः । **सर्व-
बुद्धधर्मावेणिकपारमितेयम्** इति । नास्ति स्खलितं रवितं मुषितस्मृतिरसमाहितं चित्तं 25
नानात्वसंज्ञा अप्रतिसंख्यायोपेक्षा चेत्येवमाकाराः षट् । ज्ञेयावरणविशुद्धिमारभ्य नास्ति
छन्दतो वीर्यतः स्मृतितः समाधेः प्रज्ञाया विमुक्तेश्च सकाशात्परिहाणिरित्येवमाकाराः
षट् । कायवाङ्मनस्कर्मणां ज्ञानपूर्वंगमानुपरिवर्तनाकारास्त्रयः । अतीतानागतप्रत्युत्पन्नेष्व-
सङ्गाप्रतिहतज्ञानाकारास्त्रय इति श्रावकाद्यसाधारणत्वेन गणनासमतिक्रमणतामुपादाय
अष्टादशावेणिकबुद्धधर्माकाराः । **तथागततथता** इति सर्वस्य धर्मस्य बुद्धैर्भगवद्भिर्भाषि- 30
तस्य लक्षणार्थावैकल्यादवितथतामुपादाय सर्वबुद्धभाषिततथताकार एकः । **स्वयंभूपार-
मितेयम्** इति सर्वधर्मास्वभावतामुपादाय तदधिगमस्यापरप्रत्ययत्वात् सर्वधर्मवशवर्तन- B 296

स्वयंम्वाकार एकः। **सर्वज्ञज्ञानपारमितेयम्** इति सर्वधर्मस्वभावसर्वाकारपरिज्ञानतामुपादाय सर्वाकाराभिसंबोधिबुद्धत्वाकार एकः। तदेवं कृत्वा यथा बलादिभिराकाराणां प्रभेदो यश्चैषां स्वभावस्तथता, यस्य च ते सर्वधर्मवशवर्तिनः स्वयंभुवः, यदर्थं च सर्वधर्मसर्वाकाराभिसंबोधायेति यथाक्रमं दश चत्वारश्चत्वारोऽष्टादश एक एक एकश्चेत्येकोनचत्वारिंशदाकाराः 5 सर्वाकारज्ञतामार्गाधिष्ठाना भवन्ति। यथोक्ता एव चाकाराः श्रावकादिभेदेन सर्वाकारज्ञतायां मार्गसत्यभेदादवगन्तव्याः। तथा चोक्तम्—

**स्मृत्युपस्थानमारभ्य बुद्धत्वाकारपश्चिमाः।**
**शिष्याणां बोधिसत्त्वानां बुद्धानां च यथाक्रमम्** ॥ ४ ॥
**सप्तत्रिंशच्चतुस्त्रिंशत्त्रिंशन्नव च ते मताः।**
10 **त्रिसर्वज्ञत्वभेदेन मार्गसत्यानुरोधतः** ॥ ५ ॥ इति ॥

तत्रानास्रवाः सास्रवाश्च सर्वज्ञताकारा यथाक्रमं श्रावकबोधिसत्त्वभेदेन। मार्गज्ञताकाराः सास्रवा एव, बोधिसत्त्वानामत्यन्तक्लेशाप्रहाणात्। अनास्रवा एव सर्वाकारज्ञताकाराः सवासनक्लेशज्ञेयावरणप्रहाणेन सर्वधर्मज्ञानित्वात् सम्यक्संबुद्धस्य इत्येकत्र गण्यमानं त्रिसप्तत्युत्तरमाकारशतमित्याकाराः। यत्तूक्तम्—नामतः षोडशेभ्योऽन्याकारा इति, तत्क्लेशावरणमात्र-15 प्रतिपक्षाकाराभिसंधिनेति न तेनास्य विरोधः॥

W 457

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां
स्तुतिपरिवर्तो नाम नवमः॥



## १० धारणगुणकीर्तनपरिवर्तो दशमः ।

**विशिष्टप्रयोगैराकारा** भावयितव्याः । ते च प्रयोक्तारं विना कथयितुमशक्या इति श्रवणादिभाजनं प्रयोक्तारं निर्दिशन्नाह—**अथ खलु शक्रस्य** इत्यादि । तथागतमुद्दिश्य विहारादिकरणात् **पूर्वजिनकृताधिकाराः** । पिण्डपातादिदानात् **बहुबुद्धावरोपितकुशलमूलाः** । कल्याणमित्रैरधिष्ठितत्वेन **कल्याणमित्रपरिगृहीताः** । यथोक्तविशेषणत्रयोपेता एवाकार- 5 लक्षणाया मातुरस्या मुख्यतः श्रवणभाजनम् । तथा चोक्तम्—

B 297
W 460

**कृताधिकारा बुद्धेषु तेषूप्तशुभमूलकाः ।**

**मित्रैः सनाथाः कल्याणैरस्याः श्रवणभाजनम् ॥ ६ ॥** इति ॥

**अवरमात्रकेण** इति अल्पेन । कायाद्युपस्थानाराधनात् **बहुबुद्धपर्युपासिताः** । संशयार्थनिर्णयाय स्वरूपपरिपृच्छनात् **परिपृष्टाः** । हेतुपरिपृच्छया **परिप्रश्नीकृताः** । दानादि- 10 दशपारमिताप्रतिपत्त्यनुष्ठानात् **बहुबुद्धावरोपितकुशलमूलाः** । कृततथागतपर्युपासनादय एवोद्ग्रहणादिभाजनमित्यवसातव्यम् । तथा चोक्तम्—

**बुद्धोपासनसंप्रश्नदानशीलादिचर्यया ।**

**उद्ग्रहधारणादीनां भाजनत्वं सतां मतम् ॥ ७ ॥** इति ॥

युक्त एवायं शक्रस्य वितर्कः । यस्य यथोक्तहेतुरस्ति स एवाधिमोक्षं करोतीत्याह— 15 **यो भगवन्** इत्यादि । **तथा त्वया शिक्षिष्यते** इत्यादि पदत्रयं प्रयोगमौलपृष्ठावस्थासु दर्शनभावनाविशेषमार्गभेदाद्वा ग्राह्यम् । ननु विशिष्टार्थाधिगमाभावे कथमुद्ग्रहादिमात्रेण अविनिवर्तनीयो धारयितव्य इति तत्कस्य हेतोः इत्याशङ्क्याह—**गम्भीरा** इत्यादि । यथोक्त- तथागतपर्युपासनसंप्रश्नदानशीलादिचर्याहेतुत्रयवैपरीत्येन परीत्तकुशलमूलेन अपरिपृच्छक- जातीयेन पूर्वमचरितव्रता इति पदत्रयं योज्यम् । एतदुक्तम्—व्यतिरेकमुखेन यस्माद्यथा- 20 निर्दिष्टबुद्धोपासनादिकारणेनाधिमुञ्चति प्रज्ञापारमितां विशिष्टाध्याशयतया, तस्मादविनि- वर्तनीयो धारयितव्यः इति । यथोक्तहेतुवैकल्याच्च प्रतिक्षिपन्तीत्याह—**ये पुनरधिमुच्य** इत्यादि । कथमिदानीं प्रतिक्षेपाशयेन पूर्वं प्रतिक्षेपो गम्यते इति तत्कस्य हेतोः इत्याशङ्क्याह—**यथापि** इत्यादि । यस्मादिदानीं कुशलमूलानां परीत्तत्वात् प्रतिक्षेपाशयो मातुः, तस्मात् पूर्वमपि प्रतिक्षेपो गम्यते । अन्यथा परीत्तकुशलमूलत्वानुपपत्तेरित्यर्थः । 25 तदेवाह—**न हि भगवन्** इत्यादि । उचितमेवोक्तं शारिपुत्रेणेत्याह—**गम्भीरा** इत्यादि । किमत्राश्चर्यम्? नैव किंचित्, कारणानुरूपत्वात् कार्यस्य । संजातप्रसादातिशयत्वादाह— **नमस्करोमि** इत्यादि । कथं मातुर्नमस्कारेऽन्यस्य संबन्धाभावान्नमस्कार इति तत्कस्य हेतोः इत्याशङ्क्याह—**अतोनिर्जाता हि** इत्यादि । बोधिसत्त्वावस्थायां मातुरभ्यासेन बुद्धत्वप्राप्तेस्ततः सर्वज्ञता निर्जाता । बुद्धत्वावस्थायां विनेयेभ्यः प्रज्ञापारमिताप्रकाशनात् सर्वज्ञज्ञानप्रभाविता 30 च प्रज्ञापारमिता, इत्येवं हेतुफलसंबन्धात् प्रज्ञापारमितानमस्कारे सर्वज्ञज्ञानस्य नमस्कारः ।

B 298
W 461
W 462
W 463

**एवम्** इति सर्वज्ञज्ञानस्य हेतुत्वेन फलत्वेन चेत्यर्थः। श्रुतचिन्ताभावनामयज्ञानैर्यथाक्रमं **प्रज्ञापारमितायां चरितव्यम्** इत्यादि पदत्रयं योज्यम्। प्रयोक्तुर्निर्देशानन्तरं प्रयोगार्थं प्रश्नयन्नाह—**कथं भगवन्** इत्यादि। प्रकरणानुरूपत्वात् प्रश्नस्य साधु साध्विति साधुकारदानम्। **एनमर्थम्** इत्यादि। वक्ष्यमाणान् विंशतिप्रयोगनारम्य स्वाधिगमार्थं **परिप्रष्टव्यम्**।
5 पराधिगमार्थं **परिप्रश्नीकर्तव्यम्। तथागतं मन्यसे** प्रतिपद्यसे। जानीषे इति यावत्। तत्र रूपादिष्वनवस्थानप्रयोगमाह—**इह** इत्यादिना। आधारस्वरूपभेदेन **रूपे रूपम्** इति पदद्वयं वाच्यम्। ततः किमित्याह—**यतः** इत्यादि। एतदुक्तम्—यस्माद्रूपादिषु निःस्वभावतया स्थानप्रतिषेधः, तस्मात्तत्रानवस्थानप्रयोगः इति। अयोगप्रयोगार्थमाह—**रूपम् इति कौशिक न योजयति** इति। न योगमापद्यते इत्यर्थः। ततः किं भवतीत्याह—**यतः** इत्यादि। **एवं**
10 **योगमापद्यते** इति। एवं तत्त्वतो योगाभावेन संवृत्या योगमापद्यते। अयोग एव तेषु प्रयोग इत्यर्थः। गम्भीरप्रयोगमाह—**गम्भीरा** इत्यादिना। रूपादितथतागम्भीरतया प्रतिष्ठानानुपलब्ध्यर्थेन सर्वज्ञताधिकारे गम्भीरेत्यवबोधात्। दुरवगाहप्रयोगमाह—**दुरवगाहा** इत्यादिना। रूपादिदुरवगाहतया प्रकल्पनाविलार्थेन मार्गज्ञताधिकारे दुरवगाहेत्यधिमोक्षात्। तदेव कथयन्नाह—**दुरुद्वहा** इति। श्रोत्रविज्ञानेन तदाकृष्टेन च मनोविज्ञानेन दुरुद्वहत्वात्।
15 अप्रमाणप्रयोगमाह—**अप्रमाणा** इत्यादिना। रूपाद्यप्रमाणतया पर्यन्तानुपलम्भार्थेन सर्वाकारज्ञताधिकारेऽप्रमाणेत्यालम्बनात्। अथवा, गम्भीराभिसंबोधमसाधारणाभिसंबोधं निरुत्तराभिसंबोधं चाधिकृत्य यथाक्रमं त्रिविधोऽयं गम्भीरप्रयोगादिरुक्तः। साधूक्तत्वेन गम्भीरप्रयोगं स्पष्टयन्नाह—**एवमेतत्** इत्यादिना। तदयं समासार्थः—यदा गम्भीरं रूपादिकमित्यभिनिवेशयोगेन तत्त्वतो न तिष्ठति, तदा अविपर्यस्तत्वात्तत्र गम्भीरयोगमापद्यते। यदा च
20 गम्भीरमित्यपि न योगमापद्यते, तदा गम्भीरं रूपादिकमित्यपि न तिष्ठति। एवं योगावस्थानस्य निषेधेन अविपरीतगाम्भीर्यप्रयोगार्थः कथित इति। एतदनुसारेण दुरवगाहाप्रमाणप्रयोगयोरप्यर्थो वाच्यः। एते च गम्भीरादयस्त्रयः प्रयोगाः प्रत्येकं मृदुमध्याधिमात्राः इत्यार्यविमुक्तिसेनः। कृच्छ्रचिराभिसंबोधप्रयोगार्थमाह—**गम्भीरा भगवन् प्रज्ञापारमिता अविनिवर्तनीयस्य** इत्यादि। नियतगोत्रत्वेन कश्चिदवैवर्तिकोऽप्यव्याकृत इति तद्व्यवच्छेदार्थं
25 व्याकृतग्रहणम्। मातरि सर्वप्रकारज्ञामाभावेन विचिकित्सादिसंभवात् तस्यैव पुरतो भाषणे को हेतुरिति तत्कस्य हेतोः इत्याशङ्क्याह—**स हि** इत्यादि। स यस्मात् प्रतिविद्धधर्मधातुनिष्यन्ददेशनाधर्माग्रत्वेन मिथ्याज्ञानाभावात् **न काङ्क्षिष्यति**, संशयज्ञानविगमात् **न विचिकित्सिष्यति**, अज्ञानविरहात् **न धन्धायिष्यति**, सम्यग्ज्ञानोपेतत्वात् **न विवदिष्यति**, तस्मात्तस्यैव पुरतो भाषणीयेति मतिः। सामर्थ्यादन्यस्य पुनरुत्रासादिसंभवात् कृच्छ्रचिराभि-
30 संबोधप्रयोगो दर्शितः। व्याकरणलाभप्रयोगमाह—**सचेत् पुनः** इत्यादिना। को दोष इति कतमः काङ्क्षादिदोषः स्यात् गोत्रसामर्थ्यादनुत्रासादिः। अतो न कश्चिदित्याह—**दूरतः** इत्यादि। दूराद्दूरतरे। दीर्घकालादिति यावत्। तदेवाह—**चिरयानसंप्रस्थितः** इति। अथवा

B 299 W 464 W 465 B 300 W 466 W 467 W 468 B 301

दूरतो गम्भीरार्थाधिमोक्षाच्छ्रावकाद्यगोचरतः । **प्रज्ञापारमितां लप्स्यते** इत्यादि । प्रथमतरमेव तावद्दूरात्पश्यति । ततो दर्शनाह्लादितशरीरो वन्दते । ततो विवर्धमानप्रसादवेगः प्रदक्षिणीकरणादिना पर्युपास्ते । ततः कृतानुपूर्विको निषद्य शृणोति । इत्येवं दर्शनाद्यर्थं प्रज्ञापारमितां प्राप्स्यति । **न चेदानीमसौ चिरेण** इति नचिरेण, इदानीमेव दर्शनादिकाले । एतदेवाह—**आसन्नम्** इत्यादिना । **नैकं तथागतम्** इत्यादि । एकद्वित्रितथागतानतिक्रमिष्यति । ततः स 5 बोधिसत्त्वः पश्चात् **व्याकरणं प्रतिलप्स्यते** इत्येवं न, अपि तु तेभ्य इत्यर्थः । तदेव कथयन्नाह—**अपि तु तानारागयिष्यति** इति । अपि च तानेकद्वित्रितथागतान् सम्यक् तत्प्रज्ञप्तशिक्षाप्रतिपत्त्या आरागयिष्यति । **तथागतदर्शनं** च व्याकरणेनावन्ध्यं करिष्यति इति एकद्वित्रितथागतादिदर्शनं व्याकरणेनाशून्यं करिष्यति, नियमेन व्याकरणलाभात् । तदेवाह—**तथागतदर्शनाच्च** इत्यादिना । **यावच्च व्याकरणम्** इत्याद्युपसंहारः सुगमः । 10 अविनिवर्तनीयप्रयोगार्थमाह—**अथ खल्वायुष्मान् शारिपुत्रः** इत्यादि । **कः पुनर्वादोऽत्र यः श्रुत्वा चोद्ग्रहीष्यति** इति । यः सम्यगुद्ग्रहणादिना अविनिवर्तनीयप्रयोगेण युक्तः स परिपक्वकुशलमूलः इत्यत्र को वादः ? नैव कश्चित्संदेह इत्यर्थः । साधूक्तत्वेनानुमतिमाह—**एवमेतत्** इत्यादि । यथोक्तप्रयोगमेव द्रढयन्नाह—**प्रतिभाति मे भगवन्** इत्यादि । **औपम्योदाहरणम्** इति सादृश्योदाहरणम् । **उपपत्स्यते** इति उपपत्स्यते प्रज्ञापारमितोद्ग्रहणादिना । कथं 15 परिपक्वकुशलमूलो बोधिसत्त्वो लक्ष्यते, अन्यस्यापि तदुद्ग्रहादिसंभवादिति तत्कस्य हेतोः इत्याशङ्क्याह—**भूयस्त्वेन हि** इत्यादि । यस्माद्बाहुल्येन धर्मव्यसनसंवर्तनीयैः कर्मभिरविरहितानां प्रज्ञापारमितायां चित्तानि सम्यगुद्ग्रहादिविमुखत्वेन प्रतिकूलानि भविष्यन्ति, परित्यागपरत्वेन परिवेल्लयिष्यन्ति । यस्माच्चानुपचितकुशलमूलाः प्रज्ञापारमितायामर्थानवबोधात् न प्रस्कन्दन्ति, नापि प्रसादलाभात् प्रसीदन्ति, तस्मादुपचितकुशलमूलास्ते यथावदुद्ग्रहणादि- 20 कारिणः इति वाक्यार्थः । **भूतकोट्याम्** इति । भूतकोटिर्धर्मधातुः, तद्द्योतनात् प्रज्ञापारमिता तथोक्ता । निर्याणप्रयोगमाह—**तद्यथापि नाम भगवन् पुरुषो योजनशतिकात्** इत्यादिना । **एवमेव** इत्यादि बहुयोजनशतिकाटवीकान्तारात् प्रस्थितपुरुषवत् आन्तरायिकधर्मवर्जनादिप्रतिपत्तिमतो यस्येयं जिनजननी श्रवणाद्यर्थमुपपद्यते, नियमेन निर्याणान्तेन वेदितव्यमभ्यासन्नोऽहमनुत्तरायाः सम्यक्संबोधेरित्यर्थः । तदेवाह—**नापि तेन** इत्यादिना । तद्विरोधिधर्मा- 25 नुपस्थापने कथं श्रावकादिभूमौ पतनभयं न स्यादिति तत्कस्य हेतोः इत्याशङ्क्याह—**तथा ह्यस्येमानि** इत्यादि । एतदुक्तम्—यस्मात् पुद्गलनैरात्म्यमात्रप्रभवत्वेन श्रावकादिभूमिविरुद्धामविकलसर्वधर्मनैःस्वाभाव्यद्योतिकां प्रज्ञापारमितां दर्शनाद्यर्थं लभते, ततो विरुद्धाया मातुरुपलम्भान्न श्रावकादिभूमिपातशङ्का इति । साधूक्तत्वात् **एवमेतत् शारिपुत्र, एवमेतत्** इति स्वहस्तं दत्वा पुनरपि सामर्थ्याधानार्थमाह—**प्रतिभातु** इत्यादि । निरन्तरप्रयोगार्थमाह— 30 **तद्यथापि नाम भगवन्निह कश्चिदेव** इत्यादि । **स्तम्बं वा स्तम्बनिमित्तं** वा इति विटपं विटपनिमित्तं चेत्यर्थः । स्तम्बाद्यनुपलम्भात् कथं महासमुद्रस्याभ्यासन्नत्वमिति तत्कस्य

W 469 W 470 B 302 W 471 W 472 B 303 W 473

हेतोः इत्याशङ्क्याह—**अनुपूर्वनिम्नो हि** इत्यादि । एतदुक्तम्—यस्मात्स्वहेतुना जनित-स्तम्बादिना विरुद्धः अनुपूर्वनिम्नः स्वभावो महासमुद्रस्य, अतस्तदुपलम्भस्वभावादेव स्तम्बाद्यनुपलम्भात्तस्याभ्यासन्नत्वमिति । **प्रज्ञापारमितां शृण्वता वेदितव्यम्** इति । सतत-भावनादिप्रतिपत्त्या निरन्तरप्रयोगबलान्निश्चेतव्यम् । कथं मातुः श्रवणकारणेन व्याकरण-
5 कार्यासन्नीभावोऽनुमीयते इति तत्कस्य हेतोः इत्याशङ्क्याह—**तथा ह्येनाम्** इत्यादिना। एतदुक्तम्—कारणस्यार्थान्तरनिरपेक्षतया कार्योत्पादनयोग्यतानुमानेन स्वभावहेतुना व्याक-
W 474 रणासन्नीभावानुमानाददोषः इति । आसान्नभिसंबोधप्रयोगमाह—**तद्यथापि नाम भगवन् वसन्ते** इत्यादिना । **शीर्णपर्णपलाशेषु** इति पतितवृद्धपत्रेषु । पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हीमानि पूर्वनिमित्तानि** इत्यादि ।

10 हेतुना यः समग्रेण कार्योत्पादोऽनुमीयते ।
अर्थान्तरानपेक्षत्वात् स स्वभावोऽनुवर्णितः ॥

इति न्यायेन गतार्थमेतत् । **उपनामितेयम्** इति अभिनवानास्रवधर्माधारत्वादिप्रति-
B 304 पत्तेरासन्नाभिसंबोधप्रयोगसामर्थ्येन ढौकिता । क्षिप्राभिसंबोधप्रयोगार्थमाह—**तद्यथापि नाम**
W 475 इत्यादि । जातगर्भत्वाद्गुर्विणी । आसन्नप्रसवकालत्वात् गुरुगर्भा । अङ्गविजृम्भणाद्वेष्टते ।
15 पौर्विकेणायोनिशोमनसिकारेण ग्राम्यधर्मप्रतिसंयुक्तेन प्रयोगमौलपृष्ठावस्थासु यथाक्रममासेवितेन निषेवितेन भावितेन सर्वत्र पुनःपुनरामुखीकरणात् बहुलीकृतेन इमां वर्तमानामेवंरूपामसह्यां कायेन वेदनां दुःखमनुभवामीति चिन्तयतीति शेषः । **शृण्वतश्चैनां रमते चित्तमस्याम्** इति। आधेयस्य प्रतिपत्तिधर्मस्य क्षिप्रं धर्मकायफलाभिनिर्वर्तनादिप्रतिपत्तिमतो यथोक्तप्रयोग-सामर्थ्याच्चित्तं प्रज्ञापारमितायां श्रवणपूर्वकं रमते। भक्तिं करोतीति यावत्। परार्थप्रयोगमाह—
W 476 20 **आश्चर्यं भगवन् यावत्** इत्यादिना । यावद्वचनेन सनाथा इत्यादिपरिग्रहः । यस्मात् व्याकरणादिभिर्भूमिषु पारमितासु च निवेशनात् सुपरिगृहीताः सुपरीत्ताश्च कल्याणमित्रप्रत्य-र्पणाच्च सुपरीन्दिता भगवता बोधिसत्त्वाः, तस्मादाश्चर्यम्। सर्वविषयत्वेऽपि कृपाया विशिष्टा-शयसंपत्तिभव्यताबलेन प्रतिनियतजनानुग्रहो विस्मयः । विशिष्टाशयसंपत्तिमेवाह—**तथा हि** इत्यादिना । अनागतसंबन्धेनार्थकारित्वाद्बहुजनहिताय प्रतिपन्नाः । वर्तमानकालतयेदानी-
25 मर्थकरणाद्बहुजनसुखाय । अतीतकालसंबन्धेन कृतानां कुशलाकुशलधर्मवासनानां यथाक्रमं विवृद्धये परिहाणये वा यत्नकरणात् लोकानुकम्पायै प्रतिपन्ना इति पूर्वेण संबन्धः । पुन-
B 305 रप्यतीतानागतवर्तमानकालसंबन्धात् सामान्येनाह—**महतो जनकायस्यार्थाय हिताय सुखाय**
W 477 इति । **धर्मं देशयितुकामाः** इति प्रज्ञापारमितायां धर्मचक्रप्रवर्तनादिप्रतिपत्तिमतां परार्थकरणाद्धर्मं भाषितुकामाः । अवृद्ध्यपरिहाणिप्रयोगार्थमाह—**इह भगवन् बोधि-**
30 **सत्त्वस्य** इत्यादि । रूपादीनां वृद्धिपरिहाण्यदर्शनेन प्रज्ञापारमितायां चरणानुज्ञाना-त्तत्प्रयोगोऽभिहितः । धर्माधर्माद्यनुपलम्भप्रयोगार्थमाह—**धर्मं न समनुपश्यति** इत्यादि । धर्माधर्मादेरनुपलम्भप्रतिपत्त्या तत्प्रयोगत्वादेवं भावनापरिपूरिं गच्छति । **अचिन्त्याकार-**

संज्ञानिरोधप्रयोगार्थमाह—**अचिन्त्यमिदं भगवन् देश्यते** इत्यादि। धर्मधातुरूपत्वेन चिन्तयितुमशक्यत्वादचिन्त्यम्। रूपाद्यचिन्त्यमिति यदि न संजानीते तद्ग्रहणसंज्ञानिरोधात्, तदा यथोक्तप्रयोगे चरति प्रज्ञापारमितायामित्यर्थः। अविकल्पप्रयोगार्थं प्रश्नयन्नाह—**कोऽत्र भगवन् अधिमोक्षयिष्यति** इत्यादि। परिहर्तुमाह—**यः शारिपुत्र चरितावी** इत्यादि। कथं **भगवंश्चरितावी बोधिसत्त्वो महासत्त्वो भवति** इति स्वरूपलाभप्रश्नं कथं चरितावीति नामधेयं लभते इत्यन्वर्थसंज्ञालाभप्रश्नं च परिहरन्नाह—**इह शारिपुत्र** इत्यादि। ननु चिन्ताविषयबलवैशारद्यादिसद्भावे कथं न कल्पयतीति तत्कस्य हेतोः इत्याशङ्क्याह—**बलानि हि शारिपुत्र** इत्यादि। तत्त्वतो धर्मधातुरूपत्वाद्रूपादितन्निमित्ततत्स्वभावविकल्पनादिप्रतिपत्तिसामर्थ्येनाविकल्पप्रयोगलाभाच्चिन्तातिक्रान्तत्वेनाचिन्त्यानि बलादीनि न कल्पयतीत्यर्थः। फलरत्नदानप्रयोगार्थमाह—**गम्भीरा भगवन् प्रज्ञापारमिता, रत्नराशिर्भगवन् प्रज्ञापारमिता** इति। धर्मपुद्गलनैरात्म्यप्रतिपक्षत्वेन गम्भीरा सती प्रथमफलदर्शनादिप्रतिपत्त्या फलरत्नदानप्रयोगवतां स्रोतआपत्त्याद्यनुत्तरसम्यक्संबोधिफलरत्नस्य दात्रीत्वाद्रत्नराशिः। विशुद्धिप्रयोगार्थमाह—**शुद्धराशिः** इत्यादि। आकाशस्येव शुद्धत्वमुपादाय रूपादिविशुद्धिभावनया तत्प्रयोगवतां क्लेशज्ञेयावरणप्रहाण[1]हेतुत्वेन शुद्धराशिः। अवधिप्रयोगार्थमाह—**आश्चर्यं भगवन्** इत्यादि। महानुभावत्वेऽप्यन्तरायसंभव इत्याश्चर्यम्। साधूक्तमित्याह—**एवमेतत् सुभूते** इत्यादि। निर्युक्तिकमेवेदमिति तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि** इत्यादि। यस्मान्मारः पापीयान् औत्सुक्यमुद्योगमापत्स्यते अन्तरायं कर्तुम्, तन्निमित्तम्। तस्माद्बहवोऽन्तराया इत्यर्थः। यद्येवं कथं तर्हि शीघ्रं लिख्यते इत्याह—**तत्र शीघ्रम्** इत्यादि। "संवत्सरेणेति वचनं तावता ऋत्वादिप्रत्ययसाकल्यात् बहिःकालो नास्तीति ज्ञापनार्थम्" इत्यार्यविमुक्तिसेनः। **तथा लिखितव्यैव** इति संवत्सराभियोगानुत्सर्गादिप्रतिपत्तिमतामवधिप्रयोगलाभात् लिखितव्यैव निर्विघ्नतया। शीघ्रमिति शेषः। ननु संवत्सरेण लिखने कथं शीघ्रमिति तत्कस्य हेतोः इत्याशङ्क्याह—**एवं ह्येतत्** इत्यादि। धर्मतैषा यस्मान्महारत्नानां बहवोऽन्तरायाः संभवन्ति, तस्मात् परमरत्नस्वभावाया मातुः संवत्सरेण बह्वन्तरायत्वेऽपि लिखनं शीघ्रमेवेति भावः। यथोक्ता एव प्रयोगा ग्राह्याः। तथा चोक्तम्—

> **रूपादिष्वनवस्थानात्तेषु योगनिषेधतः।**
> **तत्तथतागम्भीरत्वात्तेषां दुरवगाहतः॥ ८॥**
>
> **तदप्रामाण्यतः कृच्छ्राच्चिरेण प्रतिबोधतः।**
> **व्याकृतावविवर्त्यत्वे निर्याणे सनिरन्तरे॥ ९॥**
>
> **आसन्नबोधे क्षिप्रं च परार्थेऽवृद्ध्यहानितः।**
> **धर्माधर्माद्यदृष्टौ च रूपाचिन्त्याद्यदर्शने॥ १०॥**

[1] B om. °प्रहाण°.

**रूपादेस्तन्निमित्तस्य तद्भावस्याविकल्पकः।**

**फलरत्नप्रदाता च शुद्धकः सावधिश्च सः ॥ ११ ॥** इति ॥

युक्तरूपा चेयमेषां विंशतेः प्रयोगाणामानुपूर्वी। तथा हि—रूपादिष्वनभिनिवेशयोगेन स्थितः, अयोगप्रयोगेणाभियुज्यमानः तेषां रूपादीनां गम्भीरतां दुरवगाहतामप्रमाणतां
5 चावगच्छति। ततोऽसम्यग्योगविहितत्वेनादिकर्मिकः कृच्छ्रेण तदन्यः सुखेन व्याकरणमविनिवर्त्यभूमिं च प्राप्य निर्याति, अविरहितो भवति, अभिसंबोध्यासन्नीभवति, क्षिप्रमभिसंबुध्यते। ततः परार्थं कुर्वन् न वर्धते, न परिहीयते। ततो धर्माधर्मादौ सामान्ये रूपाचिन्त्यादौ च विशेषे सर्वसंज्ञाप्रहाणादविकल्पकः। फलरत्नप्रदानेन परां शुद्धिं निष्ठां प्राप्तो भवति। पूर्वमेव आसंवत्सरमभियोगपरिकर्मितचित्तसंतानः इत्यधिगमप्रभावितः
W 482 10 प्रयोगानुक्रमः। प्रयोगानन्तरं गुणदर्शनपूर्वकं सुतरामभ्यस्यन्ते प्रयोगाः, इति तद्गुणा वक्तव्याः। तत्र प्रथमं मारशक्तिव्याघातगुणं वक्तुमाह—**इह भगवन् प्रज्ञापारमितायाम्**
W 483 B 308 इत्यादि। **न प्रसहिष्यते** इति न प्रभविष्यति। **अच्छिद्रसमादानस्य** इति अखण्डितप्रज्ञापारमितापठनादिसमादानस्य। अच्छिद्रसमादानस्य तावन्मात्रं विघ्नसामर्थ्यादाह—**यदा भगवन्** इत्यादि। **कथमेतर्हि** इति केन प्रकारेणेदानीम्। **कस्य वा अनुभावेन**इति, कस्य
15 वा सामर्थ्येन। **सम्यक्संबुद्धानामनुभावेन** इति विकल्पेन प्रश्नद्वयस्य कृतत्वात् पाश्चात्यस्यैव परिहारः। एतदुक्तम्—प्रयोगभावनावस्थायां तथागतानामधिष्ठानस्य लाभात् मारशक्तिव्याघातगुणोदयेनोद्ग्रहणादिकं करिष्यन्ति इति। तथागतानुभावस्तेषां कथमिति तत्कस्य हेतोः इत्याशङ्क्याह—**एषा हि शारिपुत्र धर्माणां धर्मता** इति। सुगमम्। एतदेव स्पष्टयन्नाह—
W 484 **ये तेऽप्रमेयेषु** इत्यादि। द्वितीयं बुद्धसमन्वाहारज्ञातत्वगुणं वक्तुमाह—**ये चैनां प्रज्ञापार-**
20 **मिताम्** इत्यादि। शक्त्याधानायावलोकनात् समन्वाहरिष्यन्ति। सामर्थ्योत्पादनात् परिग्रहीष्यन्ति। तदेव विस्तरेणाह—**येऽपि ते भगवन्** इत्यादिना। प्रयोगमौलपृष्ठावस्थासु तथागते समन्वाहरणलाभात् बुद्धसमन्वाहारज्ञातत्वगुणोदयेन श्रवणादि करिष्यन्तीत्याह
W 485 **बुद्धानुभावेन** इत्यादिवचनम्। साधूक्तत्वेनाह—**एवमेतत्** इत्यादि। तृतीयं बुद्धप्रत्यक्षीकरणगुणं निर्दिशन्नाह—**ज्ञातास्ते** इत्यादि। विशिष्टार्थाधानाभिप्रायेण दिव्यचक्षुषा ज्ञाताः।
25 प्रज्ञाचक्षुषा अधिष्ठिताः। धर्मचक्षुषा दृष्टाः। **व्यवलोकिता बुद्धचक्षुषा** इति स्पष्टमेव। के पुनस्ते इत्याह—**ये ते** इत्यादि। एतदुक्तम्—तथागतज्ञानदर्शनलाभात् बुद्धप्रत्यक्षीकरणगुणवन्तो ये श्रवणादिकारिणः, ते ज्ञाताः इति। सम्यक्संबोध्यासन्नीभावगुणं चतुर्थं
B 309 W 486 निर्दिशन्नाह—**श्रुत्वोद्गृह्य** इत्यादि। **आसन्नीभविष्यन्ति** इति तथागतानां समीपीभवनलाभेन सम्यक्संबोध्यासन्नीभावगुणोदयान्निकटवर्तिनो भविष्यन्ति। महार्थतादिगुणं पञ्चमं प्रतिपाद-
30 यन्नाह—**येऽपि शारिपुत्र एनाम्** इत्यादि। **न तथतायां स्थास्यन्ति** इति अनन्यथार्थेन तथतायां सम्यक्संबोधौ प्रतिपत्तिवैकल्यात् न तदैव स्थास्यति। **तेषामपि** इति महानुशंसलाभात् महार्थतादिगुणोदयेन पुस्तकलिखिताया धारणवाचनवतां बुद्धैरविरहितत्वं सुगति-

परायणत्वं सम्यक्संबुद्धत्वं निर्वाणात् परेणापि च परार्थप्रवृत्तिमधिकृत्य यथाक्रमं महार्थिको महानुशंसो महाफलो महाविपाकश्चेति चत्वारि पदानि वेदितव्यानि । प्रकृष्टश्चात्र पाको विपाको द्रष्टव्यः । **सपरिश्रमः** इति तल्लिखनम् । परिष्पन्द इति धारणवाचने ।

यथाप्रज्ञप्तितो धर्ममहायानमनस्क्रिया ।
बोधिसत्वस्य सततं प्रज्ञया त्रिप्रकारया ।  5  W 487
धातुपुष्ट्यै प्रवेशाय चार्थसिद्ध्यै भवत्यसौ ॥

इति सर्वस्य महायानधर्मस्यानुशंसत्वे कथं जिनजनन्या एवानुशंसा इति तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि प्रज्ञापारमिता** इत्यादि । यस्मात् सर्वधर्मनैःस्वाभाव्यमुखेन धर्माणां तत्त्वप्रतिवेधाय श्रवणादिक्रमेण प्रत्युपस्थिता, तस्मात्तस्या एवानुशंसो मुख्यत इत्यर्थः देशनिरूपणगुणं षष्ठं वक्तुमाह—**इमे खलु पुनः शारिपुत्र षट्पारमिताप्रतिसंयुक्ताः** 10 इत्यादि । षट्पारमितावचनं दानादिपारमितासहायभूतत्वात् परिशिष्टपारमितानाम् । तथा  B 310 हि—दानादिभिस्तिसृभिः पारमिताभिरनुगृहीतसत्त्वानां चतुःसंग्रहवस्तुसंगृहीतेनोपाय-कौशलेन कौशले प्रतिष्ठापनात् उपायकौशलपारमिता तिसृणां पारमितानां सहायभूता । दृष्टे धर्मे क्लेशप्रचुरतया कुशले कर्मण्यक्षमत्वेन आयत्यां मन्दक्लेशत्वे मनसः प्रणिधानात् प्रणिधिपारमिता वीर्यपारमितायाः सहायभूता । सत्पुरुषसेवां सद्धर्मश्रवणं चागम्य, दुर्बला- 15 ध्याशयतां व्यावर्त्य, आशयबलवत्त्वं प्रणीते धातौ प्राप्य, अध्यात्मं चित्तस्थापनसामर्थ्य-  W 488 लाभाद्बलपारमिता ध्यानपारमितायाः सहायभूता । बोधिसत्त्वपिटकश्रुतालम्बनपूर्वकलोको-त्तरप्रज्ञानिर्हारसामर्थ्यात् ज्ञानपारमिता प्रज्ञापारमितायाः सहायभूतेति । **वर्तन्याम्** इति पूर्वदेशे । **नवमण्डप्राप्तः** इति नवमण्ड इवाभिनवसार इव अभिधेयेऽर्थे तैस्तैर्धर्मभाणकैः प्राप्ते सति प्रचरिष्यन्ति सूत्रान्ताः इति पूर्वेण संबन्धः । अनेन च ग्रन्थेन तथागतकृत्य- 20 करणादेशनिरूपणागुणलाभेन धर्मभाणकानां बुद्धसमन्वाहारकाङ्क्षादिनिरासार्थो वेदितव्यः । तदेवाह—**समन्वाहृताः** इत्यादिना । पञ्चकषायोत्सदत्वेनात्यन्तमभव्यत्वात् सत्त्वधातोर्धर्म-रत्नस्य प्रचरणमसंभावयन्नाह—**इयमपि** इत्यादि । **पश्चिमे काले** इत्येतदेवाह—**पश्चिमसमये** इति । न कणादादिपरिकल्पितः कालो नित्योऽस्ति क्रमेतराभ्यामर्थक्रियारहितत्वेनासत्त्वात् । किं तु भावसंनिवेश एव कश्चित् पश्चिमः समयः संकेतः पश्चिमः कालः । उत्तरस्यां 25 दिशि न सर्वत्र, किं तर्ह्युत्तरे दिग्भागे चीनविषयादौ[1] । एवंविधेऽपि काले केचिदव-  W 489 रोपितकुशलमूला भविष्यन्तीत्याह—**ये तत्र शारिपुत्र** इत्यादि । तथापि बहुत्वमपश्यन्नाह—  B 311 **कियन्तः** इत्यादि । कल्याणमित्रादिबलेन बहूनां संभव इत्याह—**बहवः** इत्यादि । स्वरूपबहुत्वा-द्बहवः । गोत्रप्राचुर्यात् सुबहवः । सर्वानास्रवधर्मपरिपूरिगुणं सप्तमं कथयन्नाह—**किंचापि**  W 490 **शारिपुत्र बहवः** इत्यादि । **तेभ्योऽपि बहुभ्योऽल्पकाः** इति श्रवणादिकारिभ्योऽपि बहुभ्यो- 30 ऽपि प्रतिपक्षधर्मपरिपूरणलाभादनास्रवधर्मपरिपूरिगुणनिष्पत्त्या अनवलयादिकारिणोऽल्पका

---

१ W चीनदेशादौ.

इत्यर्थः। कथापुरुषतागुणमष्टमं वक्तुमाह—**अनुबद्धास्तैः पौर्षकाः** इत्यादि। त्रिशरणादि-भावेनाश्रयणादनुबद्धाः कल्पितादिस्वभावत्रयपरिज्ञानार्थं प्रतिपत्त्यालम्बनसमुदागमत्रयाव-बोधार्थं वा यथाक्रमं **परिपृष्टाः परिपृच्छिताः परिप्रश्नीकृताः** इति पदत्रयं वाच्यम्। अणु-मात्रावद्यदर्शनात् परिपूर्णकारिणः। त्रिस्मृतबुद्धभूमिप्रापकधर्मश्रवणाः कथमनुत्तरां बोधिमार-

W 491 5 भ्यार्थकारिण इति तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि तेषाम्** इत्यादि। समुदाचारा भविष्यन्तीति सर्वाकारज्ञताकथाकथनलाभेन कथापुरुषतागुणसंभवात् प्रज्ञापारमिताप्रतिसंयुक्ता विकल्पाः प्रवर्तिष्यन्ते। अभेद्यतागुणं नवमं निर्दिशन्नाह—**तेषु च सुस्थिताः** इत्यादि। समु-दाचारेषु तेषु व्यवस्थिताः। **न शक्या भेदयितुम्** इति तथागतसानाथ्यकरणलाभेनाभेद्यता-गुणोत्पत्तेर्भेदयितुं बोधेर्निवर्तयितुमशक्याः। **छन्दतः** इति सूत्रान्तमहायानाभिलाषतः।

10 **मन्त्रतः** इति—

B 312

रक्षन्ति देवता मन्त्रैः कुशले वर्तते मनः।
व्याधयोऽकालमृत्युश्च दौर्भाग्यं च प्रणश्यति॥

इति बह्वनुशंसात् मन्त्रचर्याभ्यासाच्च भेदयितुं न शक्यन्ते इत्येके। मारेण पापीयसा सर्वप्रकारेणौपधिसामर्थ्यात् मन्त्रसामर्थ्याच्च प्रज्ञापारमितातो निवर्तयितुमशक्या इत्यपरे। ननु

15 स्वल्पकालेन बोधेरप्राप्त्या कथमशक्या भेदयितुमिति तत्कस्य हेतोः इत्याशङ्क्याह—**यथापि नाम** इत्यादि। तस्यानल्पकल्पासंख्येयवीर्यत्वात् बोधिं प्रति न सहसा अप्राप्तौ विनिवृत्ति-रित्यर्थः। असाधारणकुशलमूलोत्पत्तिगुणं दशमं प्रतिपादयन्नाह—**ते च कुलपुत्राः** इत्यादि। तत्र प्रीतिर्या लोकोत्तरधर्मपर्येष्टिः। प्रसादो बुद्धधर्मसंघाश्रयः। प्रामोद्यं या शुद्धता चित्त-स्येत्यार्षम्। अथवा पूर्वोक्तमेव व्याख्यानम्। **प्रतिलप्स्यन्ते** इति असाधारणकुशलमूलपरि-

W 492 20 ग्रहात् प्राप्स्यन्ति। प्रतिज्ञायाथार्थ्यसंपादनगुणमेकादशं कथयन्नाह—**बहुजनस्य च** इत्यादि। पूर्वविधमन्तरेण कथं सत्त्वार्थं कुर्वन्तीति तत्कस्य हेतोः इत्याशङ्क्याह—**एवं हि तैः** इत्यादि। **वाग्भाषिता** इति प्रणिधानवचनमुच्चारितम्। महाबोधिचित्तोत्पादे नियोजनात् प्रस्थाप-यिष्यामः संदर्शयिष्याम इत्यादि। व्याख्यातम्। स्मृत्युपस्थानादिभावनासु प्रवर्तनात् संप्रभावयिष्यामः। प्रमुदितादिसप्तभूमिप्रस्थापनात् **संबोधये प्रतिष्ठापयिष्यामः**।

W 493 25 वाग्भाषणेऽपि तदर्थानिष्पत्तौ कथमर्थक्रियाकारित्वमिति तत्कस्य हेतोः इत्याशङ्क्याह—**अनुमोदितं हि** इत्यादि। यस्मात्तेषामाशयपरिशुद्धिं चित्तेन ज्ञात्वा वागनुमोदिता मया तथागतेन, तस्मात् प्रतिज्ञानुमोदनलाभे क्रमेण प्रयोगाभ्यासात् प्रतिज्ञायाथार्थ्यसंपादनगुणो-दयेनाशेषसत्त्वार्थकारिण इत्यर्थः। उदारफलपरिग्रहणं द्वादशं वक्तुमाह—**एवं च ते कुलपुत्राः** इत्यादि। **उदाराधिमुक्तिकाः** इति गम्भीरोदारार्थाधिमोक्षेणोदारफलपरिग्रहादुदाराधि-

30 मुक्तिकाः। सत्त्वार्थकरणसामर्थ्यलाभेन सत्त्वार्थप्रतिपत्तिगुणं त्रयोदशं निर्दिशन्नाह—**तेष्वपि ते**

W 494 **बुद्धक्षेत्रेषु** इत्यादि। स्वज्ञानविषयातिक्रान्तदेशनया संजातबहुमानत्वादाह—**आश्चर्यम्** इत्यादि। अतीतादिधर्मेषु प्रहीणाशेषविपर्याससवासनस्यापि भगवतो यथादर्शनं संवृत्या ज्ञानं

प्रवर्तते इति विस्मयः। यावदिति पर्यन्तनिर्देशादधर्मादिपरिग्रहः। चतुर्विज्ञानेनादृष्टम्, श्रोत्रविज्ञानेनाश्रुतम्, घ्राणविज्ञानेनाविदितम्, मनोविज्ञानेनाविज्ञातम् नास्ति किंचिदिति योजनीयम्। दौष्ठुल्यवासनास्वभावानीन्द्रियाणि, इति वचनादज्ञानस्वभावस्येन्द्रियस्य बुद्धत्वावस्थायां प्रहाणेन मनोबुद्धिवदिन्द्रियबुद्ध्या विषयपरिच्छेदेन यस्मात् सर्वं विज्ञानं भगवतः सर्वविषयमिष्यते, तस्मान्निर्मलतया चक्षुरादिज्ञानेन नास्ति किंचिददृष्टादिकमित्य- 5 दोषः। तथा च इन्द्रियबुद्धिः पूर्वानुसारेण व्यवस्थाप्यते इत्यवसेयम्। मातुरलाभविकललाभ- W 495 विपर्ययेण नियतिलाभगुणं चतुर्दशं प्रतिपादयन्नाह—**ये च तस्मिन् काले** इत्यादि। **अन्वेषमाणानाम्** इत्यादि पदत्रयं प्रयोगाद्यवस्थासु योज्यम्। यदुक्तम् **आश्चर्यम्** इत्यादि, B 314 तत् साधूक्तमित्याह—**एवमेतम्** इत्यादि। धर्मतैषा यद्बुद्धा भगवन्तो मायोपमतया सर्वं प्रतिपद्यन्ते इति। किमत्र कारणमिति यदुक्तं तत्परिहर्तुमाह—**तस्मिन् खलु पुनः** इत्यादि। 10 निर्युक्तिकमेवेदं भगवतोक्तमिति तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि तैः** इत्यादि। **अगवेषयन्तोऽपि लप्स्यन्ते** इति अविकलप्रज्ञापारमिताप्रापकपूर्वकुशलमूलसमन्वागमे प्रयोगा- भ्यासेन नियतिलाभगुणोदयात् प्राप्स्यन्ते। **यान्यपि च ततोऽन्यान्यपि** इति ततः प्रज्ञापार- मितातः सकाशाद्यान्यन्यानि समाधिराजादीनि सूत्राणि। **स्वयमेव** इति अनुकूलताप्राप्त्या कर्मकर्तृविवक्षावशादेवमुक्तम्। **उपगमिष्यन्ति** इत्यादि पदत्रयं श्रुतादिज्ञानोदयभेदेन 15 W 496 कल्पितादिस्वभावत्रयावबोधेन वा यथाक्रमं योज्यम्। पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह— **एवमेतत्** इत्यादि। धर्मतैषा यः प्रत्युत्पन्ने जन्मन्यपरित्यक्तवीर्यो ग्रन्थं मृगयते, अर्थं च पर्येषते, स प्रकृतिपरित्यागाज्जातिव्यतिवृत्तोऽपि पूर्वकायविरहाज्जन्मान्तरव्यतिवृत्तोऽप्यपरस्मिन् जन्मान्तरेऽप्यन्यजातिसंगृहीतोऽपि नियतिगुणलाभात् प्राप्स्यतीत्यर्थः। पदपरमत्वादाह—**इम एव** इत्यादि। **नान्ये** इति षट्पारमितारहिताः। **किम्** इति काका प्रश्नः। साधारणकुशल- 20 मूलायत्तत्वात् सर्व एवोत्पत्स्यन्ते इत्याह—**ये चान्येऽपि** इत्यादि। अन्येऽपीति अषट्पारमिता- प्रतिसंयुक्ताः। पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्य तथैवाह—**एवं ह्येतत्** इत्यादि। **अनुपलम्भ-** W 497 B 315 **प्रतिसंयुक्ताः** इति पुद्गलनैरात्म्यप्रतिसंयुक्ताः। **शून्यताप्रतिसंयुक्ताः** इति धर्मनैरात्म्यपरि- दीपकाः यथोक्ता एव गुणा ग्राह्याः। तथा चोक्तम्—

**माराणां शक्तिहान्यादिश्चतुर्दशविधो गुणः।** इति॥ 25

अभिसमयलंकारालोकायां प्रज्ञापारमिताव्याख्यायां
धारणगुणपरिकीर्तनपरिवर्तो नाम दशमः॥



# ११ मारकर्मपरिवर्त एकादशः ।

B 316 W 499 गुणानन्तरं के पुनस्ते प्रयोगान्तरायकरा दोषाः, येषां परिवर्जनेन प्रयोगा भावयितव्या इत्यनन्तरायकरान् दोषान् वक्तुमाह—**गुणा इमे भगवन्** इत्यादि । **केचित् पुनः** इति कियन्तः पुनरित्यर्थः । प्रतिवचनमाह—**बहूनि** इति । तथापि कियद्बहु मारकर्म न ज्ञायते

W 500 5 इत्याह—**कियद्रूपाणि** इति कियत्संख्यावच्छिन्नस्वभावानि, बहूनि । षट्चत्वारिंशद्दोषा इति प्रतिपादयन् कृच्छ्रप्राप्तिं तावदाह—**तेषाम्** इत्यादिना । **चिरेण प्रतिभानम्** इति दीर्घकालेन मातरि ज्ञानोत्पादः । अल्पाशुप्रतिभानतां वक्तुमाह—**तदपि** इत्यादि । क्षिप्रतरोत्पादेन पौर्वापर्यानिरूपणाददृढीभूतं ज्ञानमुत्पद्यमानं विक्षेप्स्यते, प्रज्ञापारमितातो भ्रश्यते । कायदौष्ठुल्यं कथयन्नाह—**ते विजृम्भमाणाः** इत्यादि । तत्र कायपरावर्तनाद्विजृम्भयन्तः, महाट्ट-

10 हासादिकरणाद्धसन्तः, स्वेनाङ्गेन तत्प्रतिबद्धेन वा परापभ्राजनादुच्चग्घयन्तः इति वाच्यम् । चित्तदौष्ठुल्यं प्रतिपादयन्नाह—**विक्षिप्तचित्ताः** इत्यादि । **अन्योन्यविज्ञानसमङ्गिनः** इति परस्परं समालम्बितरञ्जनीयवस्तुविज्ञानाः । अयोगविहितस्वाध्यायादितां निर्दिशन्नाह—**परस्पर-**

W 501 **मुपहसन्तः** इत्यादि । लिखिष्यन्तीत्युपलक्षणात् स्वाध्यायादिकं ग्राह्यम् । वैमुख्यनिमित्तग्राहितां कथयन्नाह—**न वयमत्र गाधम्** इत्यादि । श्रुतचिन्तामयज्ञानाविषयत्वात् यथाक्रमं

15 न गाधं नास्वादं च लभामह इति योज्यम् । **न नोऽत्र** इति । नोऽस्माकम् । यावद्भि-

B 317 W 502 श्चित्तोत्पादैरप्रसादबहुलैरपक्रामन्ति, तावत्कल्पान् संसारस्य योगापत्तये ग्रहीष्यन्तीति । किमत्र कारणमिति तत्कस्मादित्याशङ्क्याह—**इमां हि** इत्यादि । हेतुभ्रंशं वक्तुमाह—**पुनरपरम्** इत्यादि । **आहारिकाम्** इति उत्पादिकाम् । **विवर्ज्योत्सृज्य** इति प्रयोगाशयाभ्यामिति वाच्यम् । **परीत्तबुद्धयः** इति स्वल्पबुद्धयः । यथाभूतपरिज्ञाया मूलमिति सम्यग्धर्मावबोधस्य

20 प्रधानं कारणम् । **प्रशाखाम्** इति श्रावकयानादिकम् । प्रणीतास्वादभ्रंशं निर्दिशन्नाह—

W 503 **तद्यथापि नाम** इत्यादि । निर्युक्तिकमेवेदमिति तत्कस्य हेतोः इत्याशङ्क्याह—**न हि तेऽल्पबुद्धयः** इति । कथं बुद्धवचनेऽपि श्रावकयानादौ प्रतिपत्तिर्निन्द्यते इति तत्कस्य हेतोरित्याशङ्क्याह—**न हि सुभूते** इत्यादि । प्रतिषिद्धाचरणान्निन्द्यते इत्यर्थः । **दमयिष्यामः शमयिष्यामः परिनिर्वापयिष्यामः** इति पदत्रयं प्रयोगदर्शनभावनामार्गेषु यथाक्रमं वेदित-

25 व्यम् । श्रावकप्रतिपत्तिं प्रतिषिध्य बोधिसत्त्वप्रतिपत्त्यर्थमाह—**अपि तु खलु पुनः** इत्यादि ।

W 504 **न च तैर्मन्तव्यम्** इति सर्वसत्त्वार्थं कुशलमूलाभिसंस्कारैर्नोत्कर्षः कार्यः । उत्तमयानभ्रंशं प्रतिपादयन्नाह—**तद्यथापि नाम** इत्यादि । **हस्तिनं लब्ध्वा** इति स्पर्शादिनोपलभ्य । **प्रकाशम्** इत्यालोकम् । **उपनिध्यायेत्** इति निरूपयेत् । **नो हीदम्** इति हस्तिपदाद्वर्णसंस्थाने ग्रहीतुमशक्यत्वान्नैवेत्यर्थः । उद्देशभ्रंशं वक्तुमाह—**तद्यथापि नाम सुभूते रत्नार्थिक**

B 318 W 505 30 इत्यादि । प्रमाणानवबोधान्नात्रगाहेत । **नो हीदम्** इति । रत्नोद्देशमहासमुद्रभ्रंशान्नैव पण्डितः । **प्रतिसंलयनम्** इति कायादिविवेकः । **दृष्ट एव** इत्यादि । प्रत्युत्पन्ने जन्मन्यनागतोत्पत्तिं प्रति हेतुमकृत्वा क्लेशेभ्यः स्वचित्तमपनीय प्रदीपवन्निर्वृतिं करोमि । ननु सर्वोपद्रवास्पदजन्मनिरोधे

कथं प्रवृत्तिर्वार्यते इति तत्कस्य हेतोः इत्याशङ्क्याह—**महायानसंप्रस्थिता हि** इत्यादि। महायानसंप्रस्थितत्वेन जगदर्थकरणाय कृतसंनाहानामुपायकौशलबलेन जन्मसंभवेऽप्युपद्रवा-भावादित्यर्थः। **अल्पोत्सुकतायाम्** इति तावन्मात्रसंतोषे। लाभसत्कारस्य बन्धनत्वेन कथमेवं निषिध्यते इति तत्कस्य हेतोः इत्याशङ्क्याह—**लोकपरिणायका हि** इत्यादि। एतदुक्तम्—आत्माभिनिवेशेनावग्रहे क्लेशवर्धनाल्लाभसत्कारौ बन्धनम्। यदा तु दानादिभिः परानावर्ज्य पद्मवत्तत्रासक्तः सारथिभावेन लोकार्थकारी भवेत्, तदा न कश्चिद्दोषः॥ इति प्रथमं दशकम्॥

W 506

हेतुफलसंबन्धभ्रंशं कथयन्नाह—**ये च खलु पुनः** इत्यादि। एतदेव स्पष्टय-न्नाह—**तद्यथापि नाम** इत्यादि। **पलगण्ड** इति तक्षकः। **पलगण्डान्तेवासीति** तच्छिष्यः। **वैजयन्तस्य प्रासादस्य** इति। सुमेरुतलमध्ये सुदर्शनं नाम नगरं सौवर्णम्। दैर्घ्येण अर्धतृतीययोजनसहस्रप्रमाणमेकैकं पार्श्वम्। उच्छ्रयेण द्व्यर्धयोजनम्। तत्र नगरस्य मध्ये शक्रस्य वैजयन्तो नाम प्रासादः। दैर्घ्येणार्धतृतीययोजनशतप्रमाणमेकैकं पार्श्वम्। उच्छ्रयेण यथाशोभं कृतो वैजयन्तप्रासादः। चिरक्षिप्रप्रभेदेन **कर्तुकामो निर्मातुकाम** इति पदद्वयम्। **नो हीदम्** इति सूर्याचन्द्रमसोर्विमानाद्यथायोगं पञ्चाशत्सैकयोजनाद्वैजयन्तस्याधिकप्रमाणत्वेन हेतुफलानुरूपविपर्ययसूचनान्नैवेत्यर्थः। निरुत्तरभ्रंशं वक्तुमाह—**तद्यथापि नाम सुभूते कश्चिदेव** इत्यादि। तत्र वर्णो गौरत्वादिः। संस्थानं दीर्घत्वादिकम्। लक्षणादिसंपत्तेजः। आकाशगमनादिकमृद्धिः। निमित्तमसाधारणं वस्तुनश्चिह्नम्। वर्णादिसादृश्यमात्रोपलम्भेन विप्रलब्धबुद्धित्वादप्रतिबलः। ननु श्रावकयानेऽपि तथागतत्वप्रापककरुणादिधर्मनिर्देशात् कथं तेन सर्वाकारज्ञता न पर्येषणीयेति तत्कस्य हेतोः इत्याशङ्क्याह—**धन्धको हि** इत्यादि। सर्वाकारानिर्देशान्निर्दिष्टोऽप्यविस्पष्ट इत्यर्थः। धर्मसंभोगनिर्माणकायत्रयभ्रंशेन यथाक्रमं चक्रवर्तिशतरसभोजनानर्घमणिरत्नदृष्टान्ताः। बहुविधविषयविकल्पप्रतिभानोत्पादं कथयन्नाह—**पुनरपरम्** इत्यादि। चतुर्विधदोषप्रतिपादनार्थमाह—**शक्या** इत्यादि। **नो हीदम्** इति तत्त्वतो मायोपमज्ञानत्वादिति मतिः। **लिखितेति मंस्यन्ते** इति लिखनाभिनिवेशः। **असतीति वा** इति अभावाभिनिवेशः। **अक्षरेषु वा प्रज्ञापारमितामभिनिवेक्ष्यन्ते** इति अक्षराभिनिवेशः। **अनक्षरा** इति अनक्षराभिनिवेशः कथितः। जनपदादिमनस्कारं निर्दिशन्नाह—**पुनरपरं सुभूते प्रज्ञापारमितायाम्** इत्यादि। तत्र देशो मगधादिः। एकगृहा-दिको ग्रामः। अष्टादशप्रकृतिवासो नगरम्। वणिग्बहुलस्थानविशेषो निगमः। चातु-र्वर्ण्यावासप्रदेशो जनपदः। चम्पादिविषयो राष्ट्रम्। राज्ञामावासदेशो राजधानी। आख्यानं जातकमालादि। गुल्मस्थानं घट्टस्थानम्। विशिखा परिष्कार[1]विशेषः। शिबिका याप्य-यानम्। प्रियाप्रियव्यत्यस्तः प्रियाप्रियवियोगः। इतिकर्तव्यता सततकरणीयता। गुल्माक्ष-दर्शनं घट्टस्थाने पाशकादिदर्शनम्। शेषं सुगमत्वान्न विभक्तम्। लाभसत्कार-श्लोकास्वादनं प्रतिपादयन्नाह—**पुनरपरं सुभूते बोधिसत्त्वानाम्** इत्यादि। लाभसत्कार-

W 507 B 319 W 508 W 510 W 511 W 512 W 513 B 320 W 514

१ B आपणवीथी.

**श्लोकास्वादः** इति। तत्र लाभो रत्नादिप्राप्तिः, सत्कारः श्रीपट्टबन्धनादिः, श्लोको यशः, तेषामनुभवनमास्वादः। अमार्गोपायकौशलमार्गणं वक्तुमाह–**पुनरपरं सुभूते** इति। शून्यतादिप्रतिसंयुक्तेषु कथं न स्पृहेति तत्कस्य हेतोः इत्याशङ्क्याह–**किं चापि** इत्यादि। द्वितीयं **दशकम्**॥

अमी तावदस्यां प्रवृत्तस्यान्तरायाः कथिताः। संप्रति पुनः प्रवृत्तेः पूर्वमेव W 515 5 विसामग्री वक्तव्या इति छन्दकिलासवैधुर्यार्थमाह–**पुनरपरं सुभूते धार्मश्रवणिक** इत्यादि। छन्दिक इत्यभिलाषसंपन्नः। किलासीत्यालस्योपेतः। वीर्यरहितः कुसीद[1] इति यावत्। छन्दविषयभेदवैधुर्यार्थमाह–**पुनरपरं सुभूते धार्मश्रवणिकच्छन्दिकः** इत्यादि। तत्राधिकारार्थप्रतिपत्त्या गतिमान्, तावन्मात्रार्थावगमात् मतिमान्, मेधायोगात् स्मृतिमान्। **देशान्तरं क्षेप्स्यते** इत्यनेन श्रोतुश्छन्दविषयाद्दैशिकस्य भिन्नच्छन्दविषयत्वमावेदितम्। **रूपमित्याद्युक्ते** 10 रूपादिस्कन्धापरिज्ञानात् नोद्घटितज्ञः। रूपणालक्षणं रूपमित्याद्यभिधाने तदर्थानवबोधात् न विपञ्चितज्ञः। रूपं द्विधा, विंशतिधा, इत्याद्युच्चारेण तदर्थानवगमादनभिज्ञः। यथोक्त- W 516 वैधुर्यमेव स्पष्टयन्नाह–**पुनरपरं सुभूते धर्मभाणकश्च** इत्यादि। धर्मदैशिकश्रावणिकयोर्दातुकामदेशान्तरगन्तुकामत्वेन भिन्नविषयच्छन्दत्वात्। लाभगौरवाल्पेच्छतावैधुर्यार्थमाह–**पुनरपरं** B 321 **सुभूते धर्मभाणकश्चामिषगुरुकः** इत्यादि। अनेनैव हारकेण धुतगुणयोगायोगौ[2] कथितौ। 15 तथा हि–तयोर्यथाक्रमं लाभादिगुरुत्वेन धुतगुणायोगोऽल्पेच्छतादित्वेन च धुतगुणयोगो W 517 देशितः। कल्याणाकल्याणधर्मत्वार्थमाह–**पुनरपरम्** इत्यादि तत्र कल्याणधर्मत्वेन श्राद्धः, तद्वैपरीत्येनाश्राद्धः। अनेनैव हारकनिर्देशेन त्यागमात्सर्यमुक्तम्। तथा हि–**अर्थं परित्यक्तुकामः** इति श्रावणिकत्यागः। **न वा भाषितुकामः** इति दैशिकस्य मात्सर्यं विहितम्। अनेनैव च दानाग्रहणं कथितम्। तथा हि–पूर्ववच्छ्रावणिकस्य दानं दैशिकस्य पुनरल्पे- 20 च्छता वा इत्यग्रहणमावेदितम्। उद्घटितज्ञविपञ्चितज्ञतार्थमाह–**पुनरपरम्** इत्यादि। **अर्थमवबोद्धुकामः** इति उद्घटितज्ञत्वेनार्थं प्रतिपत्तुकामः। **धर्मान्तरायिकतया** इति सर्वधर्मप्रतिक्षेपसंवर्तनीयतया। **न संभविष्यन्ति** पुस्तकादिरूपेण। **नावतरिष्यन्तीति** विपञ्चितज्ञत्वेन तस्यावबोधमार्गं न गमिष्यन्ति। **अप्राप्तधर्मभाणिनः** इति अप्राप्तधर्मभाणकस्य। **प्रतिवाणी** इति न मया श्रोतव्यमिति प्रतिकूलं वचनम्। सूत्रादिधर्माभिज्ञानभिज्ञार्थमाह–**पुनरपरम्** इत्यादि। 25 **भाषितुकामः** इति सूत्रादिधर्माभिज्ञतया वक्तुकामः। **अच्छन्दिकः** इति तेषामेव सूत्रादिधर्माणा- B 322 मनभिज्ञतया श्रवणार्थमभिलाषरहितः। षट्पारमितासमन्वागमासमन्वागमौ इति मारकर्मनैनैव हारकेणोक्तम्। **तथा हि भाषितुकामः** इत्यनेन सत्त्वानुग्रहाशयतया षट्पारमितासमन्वागमः। **अच्छन्दिकः** इत्यनेन च वैरूप्याशयतया दानादिवियोगः कथितः॥ इति तृतीयं **दशकम्**॥

W 518 उपायकौशलानुपायकौशले धारणीप्रतिलम्भाप्रतिलम्भौ लिखितुकामतालिखितुकामते 30 विगताविगतकामादिच्छन्दत्वे च श्रावणिकमादिं कृत्वा प्रतिपादयन्नाह–**पुनरपरं सुभूते** इत्यादि। मिद्धादिगुरुकत्वेनाश्रोतुकामतया श्रावणिकस्य प्रतिषेधविषयम्।

[1] B om. कुसीद.  [2] B om. धुतगुण°.

समन्वागमादिकदैशिकस्य च भाषितुकामत्वेन समन्वागमादिकप्रतिषेधविषयमुक्तं वेदितव्यम्। यथोक्तमेवार्थं दैशिकमादिं कृत्वा निर्दिशन्नाह—**पुनरपरं सुभूते धर्मभाणकः** इत्यादि । अपायगतिवैमुख्यार्थमाह—**पुनरपरं सुभूते प्रज्ञापारमितायाम्** इत्यादि । **एवंदुःखा** इत्यादि । अवीचिज्वालादिदुःखा नारकाः । परस्परभक्षणादिदुःखा तिर्यग्योनिः । क्षुत्पिपासादिदुःखाः प्रेताः । विष्णुचक्रादिभयाः सर्वासुराः । जात्यादिदुःखाः सर्वसंस्काराः । इहैव दुःखस्यान्तः 5 W 519 करणीय इत्यनन्तरमेवं श्रुत्वा सत्त्वार्थनिमित्तमपायगतौ वैमुख्यं करिष्यन्तीति शेषः । सुगतिगमनसौमनस्यार्थमाह—**पुनरपरम्** इत्यादि । तत्र अशाश्वतं प्रबन्धोच्छेदात् । अनित्यं क्षणिकानित्यतया । दुःखं संस्कारदुःखतायोगात् । विपरिणामधर्मकं विपरिणामदुःखसद्भावादिति । **तदेवं सर्वमशाश्वतम्** इत्यादि सर्वं हि संस्कृतमनित्यम् इत्यादेर्व्याख्यानमित्यवसातव्यम् । **संवेगमापत्स्यन्ते** इति प्रथमफलादिसुगत्यभिलाषेण बोधिचारिकाविमुखतां करिष्यन्ति । पूर्वं बाहुल्येन 10 B 323 श्रावणिकं पश्चाद्दैशिकं नियम्य वैधुर्यमाख्यातम् । इदानीं पुनः पूर्वं दैशिकं पश्चाच्छ्रावणिकं W 520 नियम्य वैधुर्यमुच्यते, अन्तरायानुपूर्व्यनियमज्ञापनार्थम् । तत्र एकाकिपर्षदभिरमत्वार्थमाह—**पुनरपरं सुभूते येऽपि भिक्षवो धर्मभाणकास्त एकाकिताभिरता भविष्यन्ति । येऽपि धार्मश्रवणिकास्तेऽपि पर्षद्गुरुका भविष्यन्ति** इति । अनुबन्धकामानवकाशदानत्वार्थमाह—**तेऽपि धर्मभाणका एवं वक्ष्यन्ति** इत्यादि । **अनुवर्त्स्यन्ति** इति अनुबन्धयिष्यन्ति । **न चावकाशं** 15 **दास्यन्ति** इति प्रज्ञापारमितां दास्यामीत्युक्त्वा तद्दानाय नावसरं करिष्यन्ति । आमिषकिंचित्काभिलाषतददातुकामतार्थमाह—**स च धर्मभाणकः** इत्यादि । **ते च न दातुकामाः** इति अर्थश्रावणिका न दातुकामाः । जीवितान्तरायानन्तरायदिग्गमनार्थमाह—**तेन तेन गमिष्यति** इत्यादि । W 521 दुर्भिक्षः इति भक्तरहितत्वेन दुष्प्रापभिक्षः । **अयोगक्षेमः** इति । इष्टावाप्तिर्योगः, निरुपद्रवत्वं क्षेमः, तदुभयाभावादयोगक्षेमः । जीवितेन्द्रियनिरोधाज्जीवितान्तरायः । **तस्मिंश्च प्रदेशे जीवितान्तरायोऽपि भवेत्** इति । अनन्तरायां दिशं गच्छेयुर्भवन्त इति शेषः ॥ इति चतुर्थं दशकम् ॥ 20

दुर्भिक्षदिग्गमनागमनार्थमाह—**स च धर्मभाणकस्तान्** इत्यादि । कच्चिदिति कदाचित् । **नानुवर्त्स्यन्ति** इति नानुगमिष्यन्ति । चौराद्याकुलितदिग्गमनागमनार्थमाह—**पुनरपरं सुभूते** W 522 इत्यादि । तत्र जन्तुर्वृश्चिकादिः । दुष्टग्रहो व्यालः, प्रेतादिरमनुष्याः, कान्तारं भयस्थानम्, B 324 सरीसृपः सर्पः, मांसाशी यक्षादिः क्रव्यादः । **प्रत्युदावर्त्स्यन्ते** इति निवर्तिष्यन्ते । 25 कुलावलोकनदौर्मनस्यार्थमाह—**पुनरपरं सुभूते धर्मभाणको भिक्षुर्मित्रकुल** इत्यादि । उपसंहारार्थमाह—**इति हि सुभूते मारः** इत्यादि । मारभेदप्रयोगं कारणप्रश्नेनाह—**किमत्र भगवन्** इत्यादिना । **उद्योगमापत्स्यते** इति महायानाद्विभेत्तुं यत्नं करिष्यति । **तथा तथा चोपायेन चेष्टिष्यते** इति पूर्वोक्तप्रकारव्यतिरेकेणोपायेन विघ्नार्थं यतिष्यते । कारणं W 523 निर्दिशन्नाह—**प्रज्ञापारमितानिर्जाता हि** इत्यादि । प्रतिवर्णिकोपसंहारार्थमाह—**पुनरपरं सुभूते** 30 W 524 **मारः** इत्यादि । अपरसूत्रानुलोमनात्सूत्रागतम् । स्वस्मिन्नर्थविनिश्चयादिसूत्रे दृश्यमानत्वात्सूत्रपर्यापन्नम् । जननीसदृशसूत्रोपसंहारेण संशयोत्पादनात् संशयं प्रक्षेप्स्यति । कल्पितादि-

स्वभावत्रयापरिज्ञानादल्पबुद्धिकान् मन्दबुद्धिकान् परीत्तबुद्धिकानिति यथाक्रमं वाच्यम्। तदेव कथयन्नाह—**अन्धीकृतान्** इति। अयथाविषयस्पृहोत्पादनं वक्तुमाह—**पुनरपरं सुभूते** इत्यादि। **भूतकोटिं साक्षात्करोति** इति श्रावकनिर्याणमधिगच्छति। नियमादनेन तत्राभिलाषो जन्यते इति षट् दोषाः ॥

कियन्तं मारकर्मप्रकारं निर्दिश्य अपरमतिदिशन्नाह—**एवं सुभूते मारः** इत्यादि। बहुप्रत्यर्थिकमहारत्नोदाहरणेन पूर्वोक्तमेव समर्थयन्नाह—**एवमेतद्भगवन्** इत्यादि। बहुप्रत्यर्थिकत्वे किं कारणमिति तत्कस्य हेतोः इत्याशङ्क्याह—**यदुत दुर्लभत्वात्** इत्यादि। साधूक्तमित्याह—**एवमेतत्सुभूते** इत्यादि। बह्वन्तरायत्वेऽपि तथागतसामर्थ्यादेव लभ्यते इत्याह—**किंचापि सुभूते** इत्यादि। तथागतसामर्थ्यपरिकल्पने को हेतुः इति तत्कस्य हेतोः इत्याशङ्क्याह—**मारोऽपि हि** इत्यादि ॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां
मारकर्मपरिवर्तो नामैकादशः ॥



## १२ लोकसंदर्शनपरिवर्तो द्वादशः ।

तथागतानामुद्योगमेव दृष्टान्तेन स्पष्टयन्नाह—**तद्यथापि नाम** इत्यादि । **अस्पर्शविहारः** इति असुखविहारः । **अमनआप** इति चित्तेनानभिप्रेतः । पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह—**एतया हि वयम्** इत्यादि । तत्र केनचिदाहाराद्युपस्तम्भेन सुधारितामन्येऽपि धारयेयुः । चौरादिभ्यो विहितरक्षत्वेन **सुगोपायिता गोपायेयुः** । कायिकमलाद्यपनयनेन **सुकेलायितां केलयेयुः** । आपाततो विद्युदादिपातात् । उत्पाततः सर्वौपसर्गिकरोगतः । अनिष्टनिपातः अनिष्टवस्तुसंभवः । दार्ष्टान्तिकार्थमाह—**एवमेव सुभूते तथागताः** इत्यादि । इहलोकधातुस्था एव तथागता ग्राह्याः । यतोऽनन्तरं वक्ष्यति—**येऽपि तेऽन्येषु लोकधातुषु** इत्यादि । **अन्तरायं न कुर्युः** इति यथापूर्वोक्तन्यायेन षट्चत्वारिंशद्दोषान् न कर्युः । तथा **औत्सुक्यमापत्स्यन्ते** इति पूर्वेण संबन्धः । तथा चोक्तम्—

**दोषाश्च षड्विबोद्धव्याश्चतुर्भिर्दशकैः सह ॥ १२ ॥** इति ॥

दोषानन्तरं यथासंख्यं गुणदोषादानत्यागेन प्रयोगा भावनीया लक्षणज्ञानपूर्वकम्, इति प्रयोगाणां लक्षणं करणसाधनपरिग्रहेण ज्ञानविशेषकारित्रस्वरूपम्, कर्मसाधनपरिग्रहेण च स्वभावात्मकं वक्तव्यम् । तथा चोक्तम्—

**लक्ष्यते येन तज्ज्ञेयं लक्षणं त्रिविधं च तत् ।**
**ज्ञानं विशेषः कारित्रं स्वभावो यश्च लक्ष्यते ॥ १३ ॥** इति ॥

तत्र तावत् ज्ञानलक्षणं त्रिसर्वज्ञताभेदेन भिद्यमानं सर्वज्ञताद्वारेण तथागतनिर्वृत्तिज्ञानं कथयन्नाह—**एवं हि सुभूते तथागताः** इत्यादि । निर्युक्तिकमेवेदमिति तत्कस्य हेतोः इत्याशङ्क्याह—**एषा हि** इत्यादि । तत्रोत्पादनान्माता, संवर्धनाज्जनयित्री, समुत्पादनात् सर्वज्ञताया दर्शयित्री। लोकस्य च संदर्शयित्री, शून्यतादिरूपेणावगमात् । अत्र केचित् स्वयूथ्या एवं चोदयन्ति—यदि युगपदेकज्ञानक्षणेन निःशेषं ज्ञेयमण्डलं संवृत्या व्याप्यते, तदा भावानामियत्तापरिच्छेदादनन्तत्वमभ्युपेतं बाध्येत । तथा हि एकज्ञानारूढाद्भावादन्यो भावो नास्तीत्येवं परिच्छिद्यमानाः कथमन्तवन्तो न भवेयुरिति ? तदेतदसारम् । यदि तावन्निराकारविज्ञानमाश्रित्यैवं चोद्यते, तदा सर्वमसंगतम् । तथा हि—यात्किंचिद्वस्तुजातं सत्तामनुभवति, तस्य सर्वस्य सत्तामात्रेण सर्वज्ञचेतसा परिच्छेदात्तेन तद्व्याप्तमिति व्यपदिश्यते । न तु परैरेव घटनादेशापर्यन्ततया व्याप्तेः । न चैकेन ज्ञानेन परिच्छिन्नानीत्येतावता वस्तूनामात्मस्वभावहानिः, येन तान्येकज्ञानपरिच्छेदवशादनन्तत्वमात्मस्वभावं जह्युः । न हि नीलपीतादयो भावा बहवो युगपच्चित्रास्तरणादिष्वेकज्ञानक्षणावसीयमानतनवोऽनेकत्वं विजहति। नापि परस्परं समन्वाविशन्ति । अपि तु यथैव ते सन्ति, तथैव ज्ञानेन परिछिद्यन्ते, नान्येन रूपेण। तद्वत् सत्त्वभाजनलोकोऽपि यथैव सत्तामनुभवति तथैव सर्वज्ञचेतसा गृह्यते। अपर्यन्तश्च दिक्षु विदिक्षु सत्त्वादिलोकोऽवस्थितः इत्यपर्यन्ततयैव तस्य ग्रहणं न तु पर्यन्त-

वर्तितयेति कुतोऽन्तवत्त्वप्रसङ्गः? स्यादेतत्। साकल्यग्रहणाभ्युपगमे कथं पर्यन्तग्रहणं न स्यादिति? नैतदस्ति। को ह्यत्र प्रतिबन्धो यत्र साकल्यग्रहणं तत्रावश्यं पर्यन्तग्रहणमिति? B 328 तथा हि–यावन्तस्ते सन्ति भावास्तेषां मध्ये नैकोऽपि सर्वज्ञज्ञानाविदितस्वरूपः सत्तामनुभवति, अपि तु सर्व एव सर्वज्ञचेतसा विदितस्वरूपा एवोदयन्ते व्ययन्ते च, नैकोऽपि परित्यक्तः। 5 इत्ययं सकलग्रहणस्यार्थः। इयमेव च तेषामेकज्ञानेन व्याप्तिः। अन्यथा सकलशब्दवाच्यत्वमपि तेषां नाङ्गीकर्तव्यम्, मा भूदन्तवत्त्वप्रसङ्गः। इति यत्किंचिदेतत्। यथोक्तमेकज्ञानारूढात् भावादन्यो नास्तीत्येवं परिच्छेदात् कथमन्तवन्तो न भवेयुरिति, तदप्यसम्यक्। न हि निराकारज्ञानवादिपक्षे ज्ञानात्मनि भावानामारोपणमस्ति, अपि तु सत्तामात्रेण तेन ते वेद्याः। नापि भावानां ज्ञानपरिच्छेद्यस्वभावतया अनन्तत्वमभ्युपेतम्, W 533 10 येन ज्ञायमानतया तेषामन्तवत्त्वं प्रसज्यते। किं तु देशवितानापर्यन्ततया अनन्तो भाजनलोकः। सत्त्वलोकस्तु संख्यानापर्यन्ततयापि। न च देशावस्तम्भाद्यपर्यन्तत्वे सति ग्राह्यत्वविरोधः कश्चित् येनाग्राह्यता भवेत्। यदि पर्यन्ततया न गृह्णाति, कथं सर्वज्ञः स्यादिति चेत्, अत एव यत एव असौ पर्यन्ततया न गृह्णाति तत एव सर्वज्ञो भवति। अन्यथा अनन्तं वस्त्वन्तवत्त्वेन गृह्णन् भ्रान्तो भवेत्। तथा हि–यदस्ति तदस्तित्वेन, यन्नास्ति 15 तन्नास्तित्वेन गृह्णन् सर्वविदुच्यते। न च सत्त्वभाजनलोकस्य पर्यन्तोऽस्ति। तस्मात्पर्यन्तं गमनकृतमविद्यमानमसंविद्यमानतया गृह्णन्, सर्वज्ञज्ञानपरिच्छेदकृतं तु अपर्यन्तं विद्यमानं विद्यमानतया पश्यन् कथमसर्वज्ञो नाम? स्यादेतत्। निराकारज्ञानपक्षे विषयग्रहणमनुपपन्नं सर्वत्राविशिष्टत्वात्, तस्य तेन प्रतिकर्मविभागानुपपत्तेः, अतो निराकारपक्षोऽनुपन्यसनीय एव सर्वदा, तस्य दुष्टत्वादिति। तदेतदप्यसम्यक्। न हि सर्वज्ञज्ञानस्य प्रतिकर्म विभाग B 329 20 इष्यते, तस्य सर्ववस्तुविषयत्वात्। यतो न तन्नीलस्यैव संवेदनं पीतस्यैव वा, अपि तु सर्वस्यैवेतीष्टम्। यस्य ह्यर्वाग्दर्शनस्य ज्ञानं प्रतिनियतार्थविषयग्राहि निराकारज्ञानपक्षे, तस्य सर्वत्राविशेषात् प्रतिकर्मविभागानुपपत्तिर्दोष उच्यते। तथा हि–नीलस्येदं वेदनं न पीतस्येति नियमाभावात्, सर्वस्य पृथग्जनस्य सर्वज्ञत्वप्रसङ्गापादनं क्रियते। सर्वज्ञस्य तु तदिष्टमेवेति तस्य किमनिष्टमापद्यताम्? तेन सर्वज्ञावस्थायां निराकारं योगबलेनोत्पद्यमानमविरुद्धमेव। 25 विभागेन हेयोपादेयवस्तुपरिज्ञानं न स्यादिति चेत्, तदपि न। यदि हि युगपदनन्ते वस्तुनि प्रतिभासमाने हेयोपादेयवस्तुनः प्रतिभासविरोधः स्यात्, अविरोधे वा अन्यैः सह भासमानस्य तस्य हेयोपादेयवस्तुनस्तत्त्वप्रच्युतिः स्यात्, अप्रच्युततत्त्वस्यापि विभागेनावभासं वा न स्यात्, विभक्तावभासस्यापि यदि परिच्छेदकः शुद्धलौकिको विमर्शप्रत्ययो वा W 534 पृष्ठभावी नोत्पद्येत, तदा एतत्सर्वं स्याद्वक्तुम्। यावता विश्वस्मिन् जगत्यवभासमाने तदपि 30 हेयोपादेयं वस्तु अविरुद्धप्रतिभासमप्रच्युतात्मतत्त्वं विभक्तमेवावभासते, पश्चात्सर्वज्ञज्ञानबलोत्पन्नशुद्धलौकिकप्रत्यवमर्शप्रत्ययेन च परिच्छिद्यते एव, इति कथं विभागेन तदपरिज्ञानं नाम? तदेवं निराकारज्ञानपक्षे तावदचोद्यमिति प्रतिपादितम्॥

अथ साकारज्ञानवादिपक्षे चोद्यते। तत्राप्यविरोध एव। तथा हि–यथैव तदनन्तं वस्तु अनन्ताकारानुगतमात्मसत्तामनुभवति, तथैव तत्सार्वज्ञं चेतोऽपरिमितवस्तुगताकारोपग्रहेणोत्पद्यमानमविरुद्धमेव। एकस्य ज्ञानस्यानेकवस्त्वाकारोपग्रहणोत्पत्त्यविरोधात्। एकस्यानेकाकारत्वं विरोध एवेति चेत्, न, आकाराणामसद्भूतत्वात्। यदि ह्येकस्य पारमार्थिका आकारा भवेयुः, तदा स्यादेकस्य चित्रत्वविरोधः। यावता असत्यभूता एवाकारा इतीष्टम्। यद्येवं भ्रान्तज्ञानसमङ्गित्वात् भ्रान्तः प्राप्नोति सर्वज्ञः, इति चेत् न। यथाभूतपरिज्ञानाददोष एषः। यदि ह्यसत्यं सत्यत्वेन गृह्णीयात्, तदा भ्रान्तः स्यात्। यदा त्वभूतानाकारानसत्यत्वेनैव जानाति, तदा कथं भ्रान्तो भवेत्? अर्थव्यतिरिक्तज्ञानारूढाकारग्रहणे सति अर्थेषु दृष्टादिव्यवहारं कुर्वन् कथमभ्रान्त इति चेत्, न, सम्यगुपायपरिज्ञानात्। यदि ह्युचितं ग्रहणोपायमपास्य उपायान्तरेणामुख्येनार्थं गृह्णीयात्, तदा भ्रान्तो भवेत्। यावता साकारज्ञानवादिपक्षे ज्ञानस्यात्माकारानुभवव्यतिरेकेण नान्योऽर्थग्रहणव्यापारोऽस्ति। तत्कथमुचितेनार्थोपाधिभेदेन ग्रहणव्यापारेणार्थं गृह्णन् भ्रान्तो भवेत्? अतो ज्ञेयवदेकचेतसापि ज्ञानस्यानन्तवस्तुगताकारोपग्रहणोत्पत्तेरनन्तं वस्तु तेन व्याप्तमित्युच्यते। येनैव चात्मना ज्ञानात्मनि भावाः समारोहन्ति, तेनैव तत्पृष्ठभाविपरामर्शचेतसा वा परिच्छिद्यन्ते। न च सर्वज्ञचेतसि परिमितभेदानुगताः समारोहन्ति भावाः। किं तर्हि यावत्किंचिदस्तित्वमनुभवति, तत्सर्वमेव समारोहति। सर्वस्यैव सर्वज्ञज्ञानोत्पादनं प्रति आलम्बनभावेनाप्रतिबद्धशक्तिकत्वात्, मनोविज्ञानस्य च सर्वार्थविषयत्वात्। अतः सार्वज्ञस्य चेतसः परिमितवस्त्वाकारोपग्रहणानुपपत्तेः, पृष्ठलब्धेन वा शुद्धलौकिकेन परामर्शप्रत्ययेन देशपर्यन्तवर्तित्वेनापरिच्छेदात्, कथमियन्त इति परिच्छेदो भवेत्, येनान्तवत्त्वं स्यात्? यदि नाम प्रतिभासमानादन्यन्नास्तीत्येवं परामर्शो जातः, तथापि नान्तवत्प्रसङ्गः। तथा हि–यदि प्रतिभासमानमन्तवदेव निर्विकल्पे सर्वज्ञचेतसि प्रतिभासेत, तदा तत्पृष्ठलब्धेन परामर्शचेतसा अन्तवत्त्वं भावानां व्यवच्छिद्येत। तद्व्यवच्छेदाच्च अनन्तत्वहानिर्भवेत्। यावता प्रतिभासमानं वस्तु सार्वज्ञे चेतसि अनन्तमेव प्रतिभासेत, सर्वज्ञस्याप्रतिहतशक्तिकत्वात्। तस्मादन्यदप्रतिभासमानमन्तवदेव, तस्यैव च परामर्शचेतसा व्यवच्छेदः क्रियते इति सुतरामेव भवता अनन्तत्वं भावानामुपपादितमिति यत्किंचिदेतत्। ये पुनः सर्वमेव योगिज्ञानमनालम्बनं सत्यस्वप्नदर्शनवद्वस्तुसंवादितया प्रमाणमिति प्रतिपन्नाः, तान् प्रति अन्तवत्त्वचोद्यं दूरीकृतावकाशमेव ॥

स्यादेतत्। योगिनामनास्रवं ज्ञानं शास्त्रे सामान्यविषयमेवोपवर्ण्यते, न तु स्वलक्षणविषयम्। तत्कथं सामान्यविषयेण योगिनो ज्ञानेन भावानां स्वरूपाण्येवावबुध्यन्ते इति चेत्, तदेव हि स्वलक्षणं विजातीयव्यावृत्तभिन्नाकारप्रत्ययहेतुतया शास्त्रे सामान्यलक्षणमित्युच्यते। अतस्तद्ग्राहकं योगिज्ञानं भावनाबलेन स्फुटप्रतिभासमुत्पद्यमानं स्वलक्षणगोचर-

१ W असत्यभूतान्.

मेवेत्यविरुद्धमेतत्। यत्सामान्यगोचरं तत्कथं स्वलक्षणग्राहि भवतीति कथं परस्परविरुद्धाना-मेकज्ञानेन ग्रहणमिति चेत्, उच्यते। यद्यपि भावाः केचित्परस्परं विरोधिनः, तथापि ते ज्ञानेन सहाविरुद्धा एव। युगपदेकेनापि ज्ञानेन विरुद्धानेकार्थग्रहणोपलम्भात्। तथा हि–ये परस्परपरिहारेण स्थितलक्षणाः, तेषामैक्यं विरुद्धम्। ये तु सहानवस्थायिनः, तेषामेक-

B 332 W 536 5 देशावस्थानं विरुद्धम्। न चैकविज्ञानभासनादेषामैक्यमेकदेशत्वं वा प्रसज्यते। तेन नैकविज्ञानभासित्वमेषां विरोधः। दृष्टं च विरुद्धानामपि सतामेकज्ञानभासनम्। यथा शुच्यशुचिनोश्चक्षुर्विज्ञानेन परस्परपरिहारस्थितलक्षणयोरहेर्मयूरस्य च सहानवस्थायिनोर्युग-पद्ग्रहणम्। स्यादेतत्। यदि विरुद्धानामप्येकविज्ञानावभासनमविरुद्धम्, एवं सति सुखदुःखयो रागद्वेषयोर्वा किमेकविज्ञाने वेदनं प्राणभृतां स्वसंतानेनोत्पद्यते इति। यत्

10 सुखादीनां सकृदवेदनं तत्कारणाभावेनानुत्पत्तेरसंनिहितत्वात् सुखादीनाम्, न तु विरुद्धत्वा-दित्यवसातव्यम्। यथा चातीतानागतवस्तुग्रहणं तथा प्रागेव प्रतिपादितम्। अथवा वर्तमानस्यैव साक्षात् पारंपर्येण वा तदुपकार्योपकारकस्वभावस्य प्रतिपत्त्यैव अतीतानागतयोः प्रतिपत्तिः। विविक्तभूतलप्रतिपत्त्यैव घटादेरभावप्रतिपत्तिवत्। न चैवं सति आनुमानिको भगवान्, लिङ्गाभावात्। सर्वविशेषयुक्तस्यैव वर्तमानस्य प्रत्यक्षत्वेन तयोः प्रत्यक्षत्वात्।

15 इत्यलमतिप्रसङ्गेन ॥

W 537 जनयित्रीत्वं स्पष्टयन्नाह–**अतोनिर्जाता हि** इत्यादि। एवं सर्वज्ञतायाश्च दर्शयित्रीति

W 538 जनयित्रीत्वेनैव सर्वज्ञतायाश्च प्रतिपादिका। लोकज्ञानं प्रतिपादयन्नाह–**यद्भगवानेवमाह** इत्यादि। **न लुज्यन्ते न प्रलुज्यन्ते** इति। क्षणिकप्रवन्धानित्यताभ्यां यथाक्रमं न नश्यन्ति। न प्रणश्यन्तीत्यर्थः। वस्तुधर्मस्वभावत्वात् कथं तौ न भवतः इति तत्कस्य हेतोर्न लुज्यन्ते

20 न प्रलुज्यन्ते इत्याशङ्क्याह–**शून्यतास्वभावा हि** इत्यादि। तत्त्वतोऽस्वभावत्वात् स्कन्धानां

B 333 शून्यादित्वेन वस्तुधर्मस्वभावाभावे क्षणिकप्रवन्धानित्यते न भवतः। संवृत्या तु स्त इति भावः। सर्वसत्त्वचित्तचरितज्ञानं निर्दिशन्नाह–**पुनरपरम्** इत्यादि। प्रतिज्ञातार्थं समर्थयितुं

W 539 प्रश्नयन्नाह–**कथं च सुभूते** इत्यादि। परिहरन्नाह–**सत्त्वास्वभावतया** इत्यादि। सत्त्वानां मायोपमस्वभावत्वादप्रमेयादिरूपेण परिज्ञानम्। उपसंहरन्नाह–**एवं हि सुभूते** इत्यादि।

25 अमुनैव विधिना तेषां चित्तचरितपरिज्ञानमित्याह–**यान्यपि तानि** इत्यादि। **सत्त्वासद्भावतया** इति सत्त्वस्याविद्यमानत्वस्य तत्त्वतोऽनुपलब्धेर्धर्मधातुरूपतया अप्रमेयादिरूपत्वेन सत्त्वानां

W 540 चित्तचरितानि प्रजानाति। चित्तसंक्षेपज्ञानं कथयन्नाह–**संक्षिप्तानि चित्तानि** इत्यादि। **स संक्षेपं क्षयतः क्षयं चाक्षयतः** इति। तदालम्बनेन धर्मतायां प्रविष्टं चित्तं स संक्षेपं क्षयतो विनाशतः संवृत्या जानाति। क्षयमपि विनाशं क्षयिणोऽसत्त्वात् परमार्थतोऽक्षयमविनाशं

30 यथाभूतं प्रजानाति। चित्तविक्षेपज्ञानं गदितुमाह–**विक्षिप्तानि चित्तानि** इत्यादि। **धर्मताताः** इति धर्मधातोरनुत्पादतः। तदमनसिकारेण बहिः प्रवृत्तानि चित्तानि विक्षिप्तानि संवृत्या। परमार्थतः पुनरलक्षणानि स्वभावविरहितानि। लक्षणानित्यत्वेनाक्षीणानि प्रबन्धोपरमादवि-

क्षीणानि बहिर्गमनासंभवादविक्षिप्तानीति यथाभूतं प्रजानाति। चित्ताक्षयाकारज्ञानं वक्तुमाह—**अप्रमेयाक्षयाणि चित्तानि** इत्यादि। **अधिष्ठितम्** इति महाकरुणया आसंसारमधिष्ठितं तच्चित्तम्। यथायोगं त्रिविधसंस्कृतलक्षणासंभवादनिरोधमनुत्पादमस्थितम्। अतो धर्मिरूपत्वायोगादनाश्रयम्। प्रमातुमशक्यत्वेनाप्रमेयं धर्मधातुवद्विनाशानुपपत्तेरक्षयं भवति तथागतस्य। येनैव चित्तेनाकाशमिवाप्रमेयाक्षयतया सर्वसत्त्वानां चित्ताप्रमेयाक्षयतां स्वसमाधि- 5 दर्पणतले प्रतिभासनाद्यथाभूतं प्रजानाति। सरागादिचित्तज्ञानं कथयन्नाह—**संक्लिष्टानि चित्तानि** इत्यादि। **असंक्लेशसंक्लिष्टानि** इति भ्रान्तिमात्रास्तित्वात्। क्लेशकर्मजन्मलक्षणैः संक्लेशैस्तत्त्वतोऽसंक्लेशैर्विपर्यासबलात् संक्लिष्टान्युपहतानि। **असंकेतानि** इति अप्रतिनियत-वृत्तीनि। विगतरागादिचित्तज्ञानं निर्दिशन्नाह—**असंक्लिष्टानि चित्तानि** इत्यादि। **प्रकृति-प्रभास्वराणी**ति पृथग्जनावस्थायामविशुद्धभ्रान्तिकारणनिर्जातत्वेन तथाभूतान्यपि चित्तानि 10 नैःस्वाभाव्यात् प्रमाणोपपन्नानुत्पादादिरूपात्मावबोधपरायणत्वेन प्रतिपक्षोदयादप्यनिवर्त्या-नीति शक्यापनेयरागादिसहायत्वात् प्रभास्वराणि परिशुद्धनिजस्वभावमात्राणि। सामान्येन सरागादिचित्तं वीतरागादिचित्तं च निर्दिश्यैवं तदुपायं यथाक्रमं कथयितुं **लीनानि चित्तानि** इत्यादिकमेकं हारकम्, **प्रगृहीतानि चित्तानि** इत्यादिकं च द्वितीयमाह। **अनालयलीनानि** इति अस्थानार्हेऽनालये समापत्त्यास्वादनादौ रागादिहेतुत्वेन लीनान्यभिनिविष्टानि। 15 **अग्राह्याणि सुभूते तानि चित्तानि न प्रग्रहीतव्यानि** इति। तत्रोद्धतमौद्धत्याभिशङ्कि वा चित्तं संवेजनीयवस्तुमनस्कारेण शमथनिमित्तेन। लीनं लयाभिशङ्कि वा चित्तम् अभि-प्रमोदनीयवस्तुमनस्कारेण प्रग्रहनिमित्तेन। समप्राप्तं चित्तमनाभोगमनस्कारेणोपेक्षानिमित्तेन च गृहीतमित्येवं विरागादिहेतुत्वेन प्रगृहीतानि चित्तानि। पुनरग्रहणार्हत्वेनाग्राह्याणि। **भूयो न प्रग्रहीतव्यानि**। तयोरेव चित्तज्ञानयोः सामान्येन पर्यायं कथयन् यथाक्रमं 20 **सास्रवाणि चित्तानि** इत्यादिकमेकम्, अनास्रवाणीत्यादिकं चापरं हारकमाह—**अस्वभा-वानि सुभूते तानि चित्तानि, असत्संकल्पानि** इति। सास्रवाणि चित्तानि प्रतिपक्षो-दयान्निवर्त्यत्वेन अविद्यमाननिजस्वभावानि। ततश्च असत्तातुल्यानि। **अभावगतिकानि सुभूते तानि चित्तानि**। **अनाभोगानि** इति अनास्रवाणि चित्तानि दर्शनभावनाहेयक्लेशानाम-भावपर्यवसानानि। ततश्च स्वरसेन परिशुद्धसंतानप्रवर्तनादनाभोगानि। तयोरेव पुनः 25 प्रभेदं वक्तुं षट् **सरागाणि** इत्यादि हारकानाह—**या चित्तस्य सरागता** इत्यादि। या चित्तस्य सरागता विषयादिसक्तिरूपता पृथग्जनस्य, न सा चित्तस्य यथाभूतता न्यायतो मायोपमस्वप्रकाशरूपता भवति। शक्याशक्यापनेयत्वेनानयोर्यथाक्रमं चलाचलरूपत्वात्। तथा आर्याणां प्रतिपक्षभावनया चित्तस्य या यथाभूतता अनास्रवरूपता, न सा सरागता, तत्प्रतिपक्षरूपत्वात्। तस्मादशुद्धावस्थायां सरागाणि चित्तानि संवृत्या। **यः सुभूते चित्तस्य** 30 इत्यादि। यश्चित्तस्य विगमो रागविगमावस्था पृथग्जनस्य, न सा चित्तस्य सरागता रागावस्था। तयोर्भिन्नरूपत्वात्। तथा या वीतरागस्य विष्कम्भणादिप्रहाणेन प्रहीणरागस्य चित्तस्य

W 541 B 334 W 542 W 543 B 335 W 544 W 546

B 336 यथाभूतता तद्विविक्तात्मसंवेदनता, न सा चित्तस्य सरागता। तस्माद्विवेकावस्थायां विगतरागाणि चित्तानि। एतदनुसारेण परिशिष्टेषु सदोषादिहारकेषु ग्रन्थो व्याख्येयः॥

W 547 विपुलचित्तज्ञानं वक्तुं व्यतिरेकान्वयमुखेन हारकद्वयमाह—**अविपुलानि चित्तानि** इत्यादि। **असमुत्थानयोगानि सुभूते तानि चित्तान्यसमुत्थानपर्यापन्नानि** इति तत्त्वतोऽनु-
5 त्पत्तेः कारणसंबन्धशून्यत्वेनासमुत्थानयोगानि प्रादुर्भावविरहात्। कामादिधातौ अप्रतिबद्धत्वात् तान्यसमुत्थानपर्यापन्नानि, एवमनुपलम्भादविपुलानि। **न हीयन्ते** इत्यादि। विनाशाभावान्न हीयन्ते। उत्पादाभावान्न विवर्धन्ते। अत एव क्वचिद्गमनाभावेनाविगमत्वान्न
W 548 विगच्छन्ति। एवं धर्मधातुस्वाभाव्याद्विपुलानि चित्तानीति। महद्गतचित्तज्ञानं कथयितुं व्यतिरेकान्वयमुखेन हारकद्वयमाह—**अमहद्गतानि चित्तानि** इत्यादि। **अनागतिकानि सुभूते तानि**
10 **चित्तान्यगतिकान्यपर्यापन्नानि** इति सत्कार्यप्रतिषेधेनातीतादध्वनस्तदागमनवैकल्यादनागतिकानि चित्तानि। सर्वात्मना विनाशादनागतेऽपि काले गमनानुपपत्तेरगतिकानि। प्रत्युत्पन्नेऽपि एकानेकस्वभाववैधुर्यादपर्यापन्नानि। एवममहद्गतानि। **समतासमानि सुभूते तानि चित्तानि स्वभावसमानि** इति तत्त्वतोऽनुत्पादरूपत्वादात्मादिनिःस्वभावतुल्यत्वेन समतासमानि चित्तानि। तथ्यसंवृत्या तु सर्वगुणावाहकरूपेण प्रतिभासनात् मायास्वभावसमानि। एवं
W 549 15 महद्गतानि। अप्रमाणचित्तज्ञानं निर्दिशन्नाह—**अप्रमाणानि चित्तानि** इत्यादि। **अनिश्रयत्वात्**
B 337 इति। न हि प्रतिनियतस्तेषामाश्रयो विद्यते इत्यप्रमाणानि। अनिदर्शनचित्तज्ञानं प्रतिपादयन् पूर्ववद्धारकद्वयमाह—**सनिदर्शनानि चित्तानि** इत्यादि। **समदर्शनानि सुभूते तानि चित्तानि चित्तस्वभावानि** इति मायोपमात्मसंवेदनतया समदर्शनानि तुल्योपलम्भरूपाणि सर्वाण्येव ज्ञानानि। कुशलाकुशलवासनाभिश्रितत्वाच्चित्तस्वभावानि संचितवासनारूपाणि। एवं
W 550 20 सनिदर्शनानि। **अलक्षणत्वात्** इत्यादि। तत्त्वतो वर्तमानस्वरूपविरहेणालक्षणत्वादतीतानागतरूपाभ्यां सह यथाक्रमं कार्यकारणसंबन्धानुपपत्त्या अर्थविविक्तत्वात् त्रयाणां मांसादिचक्षुषां सर्वेषां वा पञ्चानामविषयत्वेनानवभासगतमदृश्यं चित्तम्। एवमनिदर्शनानि।
W 552 यथोक्तज्ञानमेव सप्रतिघादित्वेन कथंचिद्व्यावृत्त्योच्यते इति प्रतिपादयन् **सप्रतिघानि चित्तानि** इत्यष्टौ हारकानाह—**असत्संकल्पितानि** इत्यादि। असता अविद्यमानेनोत्पादादि-
25 रूपेण संकल्पितानि अध्यारोपितानि चित्तानि शून्यानि अस्वभावानि, आलम्बनवशिकानि, संवृत्या आलम्बनपरतन्त्राणि। एवं प्रमाणबाधितत्वात् सप्रतिघानि। **अद्वयभूतानि** इत्यादि। उत्पादानुत्पादरहितत्वेनाद्वयभूतानि। तत्त्वतोऽभवनमेव संवृत्या भवनमित्यभूतसंभूतानि। एवं प्रमाणोपपन्नत्वादप्रतिघानि। **सुभूते सोत्तरस्य** इत्यादि। आत्माद्यभिनिवेशेन
W 553 **सोत्तरस्य** न्यूनावस्थां प्राप्तस्य चित्तस्य या यथाभूतता नैरात्म्यसंवेदनता, म तत्रास्ति मन्य-
B 338 30 मानता सत्कायादिदृष्ट्युपलम्भता। तस्मादेवं संवृत्या सोत्तराणि। **अण्वपि** इत्यादि। यस्मात्परमार्थतोऽणुमात्रमपि चित्तं वस्तुस्वरूपं नोपलब्धम्, तस्माद्बुद्धत्वावस्थायामिव पृथग्जनावस्थायां प्रकृतिवैयवदानिकस्वभावेन सर्वरूपादिनिमित्तापगमान्निष्प्रपञ्चानि। एवं तत्त्वतो

निरुत्तराणि चित्तानि । **असमसमानि हि** इत्यादि । उत्पादादिदोषवैषम्यादसमेन ग्राह्येण समानि । तद्ग्राहकत्वेन प्रवृत्तानि चित्तानि विक्षेपादकृतसमाधानत्वेनासमवहितानि, एवमसमाहितानि । **समसमानि हि** इत्यादि । सर्वदोषवैषम्यानुपपत्तेः समो धर्मधातुः, तेन सह अनुत्पादादिना तुल्यत्वात् समानि । विक्षेपात् कृतप्रतीकारत्वेन समवहितानि । तत्त्वतोऽविद्यमानस्वभावत्वेन आकाशसमानि, एवं समाहितानि । **स्वभावविमुक्तानि** इत्यादि । न्यायानुयायिजन्मरहितत्वात् स्वभावविमुक्तानि चित्तान्यविद्यमानसत्तारूपत्वादभावस्वभावानि । ततश्च बन्धापनयनपूर्वकमोक्षाभावादविमुक्तानि चित्तानि । **चित्तं हि** इत्यादि । यस्मादेकानेकस्वभाववैधुर्येणासत्त्वाच्चित्तं त्रैकालिकं तथागतेनानुपलब्धम्, तस्मात्प्रकृत्या द्विविधावरणविगमाद्विमुक्तानि । प्रभेदं निर्दिश्य इदानीमदृश्यचित्तज्ञानं वक्तुमाह—**अदृश्यानि चित्तानि** इत्यादि । **असत्त्वात् सुभूते अदृश्यम्** इति लक्षणशून्यत्वेनासत्त्वाददृश्यं कल्पितं चित्तम् । हेत्वभावेनाभूतत्वादविज्ञेयं परतन्त्रम् । स्वरूपाविद्यमानत्वेन अपरिनिष्पन्नत्वादग्राह्यं परिनिष्पन्नं चित्तम् । प्रत्येकं प्रज्ञाचक्षुरादिभिस्त्रिभिः संबन्धनीयम् । पञ्चानां वा बुद्धधर्मचक्षुरादीनामनवभासगतत्वाददृश्यादिकमवगन्तव्यम् । एवं हि सुभूते **प्रज्ञापारमिता** इत्युपसंहारपदं संक्षिप्तचित्तज्ञानादिहारकान्तेऽपि प्रत्येकं संबन्धनीयम् । चित्तोन्मिञ्जितादिज्ञानं कथयन्नाह—**उन्मिञ्जितनिमिञ्जितानि** इत्यादि । तत्र विधिमुखेन यः स्वविषये चित्तप्रसरः, सोऽयमुन्मिञ्जः । प्रतिषेधमुखेन विषयान्तराच्चित्तस्यापसर्पणं निमिञ्जः । तत्संजातत्वादुन्मिञ्जितनिमिञ्जितानि । लौकिकलोकोत्तरप्रसिद्धिभेदात्परसत्त्वानां परपुद्गलानामिति द्वयमुक्तम् । **रूपनिश्रितानि** इत्यादि । सर्वाण्येव विधिप्रतिषेधमुखेन रूपादिपञ्चस्कन्धाश्रितान्युत्पद्यन्ते चित्तानीत्यर्थः । तदेव कथयन्नाह—**भवति तथागतः** इत्यादि । मरणादुत्तरकालं तथागतो भवति तिरोभावरूपेणावस्थानात् । किमिति काका प्रश्नकरणात् सांख्यप्रभृतीनां रूपादिगतोऽयमुन्मिञ्जितविकल्पः । तथैव सर्वात्मना निरन्वयविनाशान्न भवतीति लौकायतिकानां निमिञ्जितविकल्पः । अवस्थातुरेकत्वादवस्थायाश्च भिन्नत्वाद्यथाक्रमं पूर्ववद्भवति न भवतीति दिगम्बरप्रभृतीनामुभयविकल्पः । तत्त्वान्यत्वरूपेणावाच्यत्वान्न भवति, न न भवतीति पुद्गलवादिनामुभयप्रतिषेधाधिष्ठानो विकल्पः । एते च विकल्पास्तत्त्वतोऽनुत्पन्नत्वादतथ्यसंवृतिभाविन्यात्मस्वभावे तथागते न कथंचित् प्रतिष्ठां लभन्ते । तथा शून्यतादेशनायामविनेयजनापेक्षया अवस्थापनीयप्रश्नत्वेन व्यवस्थापिताः प्रदेशान्तरे । एवं शाश्वत आत्मेत्यादयोऽवगन्तव्याः । पर्षन्मण्डले तस्मिन् यथोक्तप्रभेदात्मदृष्ट्युपेतानां संनिहितविनेयजनानामाशयानुरोधादेतावत्प्रभेदोपादानम् । तथताकारज्ञानं वक्तुमाह—**पुनरपरं सुभूते तथागतः** इत्यादि । **तथा सुभूते तथागतो रूपं जानाति, यथा तथता** इति ।

यः प्रतीत्यसमुत्पादः शून्यता सैव ते मता

—चतुःस्तव-लोकातीत—२०

इति तथताकारेण रूपादिस्कन्धपरिज्ञानादुन्मिञ्जितादीनामपि तथतापरिज्ञानमिति यावत् । सम्यक्संबुद्धस्य तथतावबोधतत्परसमाख्यानप्रज्ञपनज्ञानं च कथयन्नाह—**एवं हि सुभूते**

W 558 **तथागततथतया च स्कन्धतथतया च** इत्यादि । **तथतां प्रज्ञपयति** इति सर्वधर्मानुयायिनीं तथतामेकरूपेण व्यवस्थापयति । अनेन तथताप्रज्ञपनज्ञानमुक्तम् । तदेवाह—**यैव च** इत्यादिना । ननु धर्मिभिन्नत्वे कथमभेदस्तथताया इति तत्कस्य हेतोः इत्याशङ्कयाह—**उक्तं हि** इत्यादि । **यस्मात्पञ्चस्कन्धा लोक इति संज्ञाताः** संख्याता इति भगवता पञ्चस्कन्धैः 5 सर्वधर्मनिर्देशाधिकारे कथितम् । तस्मान्न लोकोऽन्यो नित्यादिलक्षणो भिन्नः, केवलं संनिहित-विनेयप्रतिपत्त्यपेक्षया भिन्नधर्मित्वेनोक्तः । तदेव वक्तुमाह—**तस्मात्तर्हि** इत्यादि । **अनेकभावाभावापगता** इति तत्त्वतोऽनुत्पादरूपत्वेन वस्तुधर्मसमतिक्रमान्नैकत्वं नापि नानात्वमिति शून्यतारूपेणैकैवैषा तथता सर्वधर्मव्यापिनी घटपटादेरनेकस्माद्भावात् । प्रागभावादिलक्षणाच्चाभावादपगता प्रयोगमार्गे । तथा दर्शनभावनाविशेषनिष्ठामार्गेषु च यथाक्रममक्षयत्वा-

W 559 B 341 10 दविकारत्वादद्वयद्वैधीकारत्वादेकैवैषा तथतेति योज्यम् । **प्रज्ञापारमितामागम्याभिसंबुद्ध्य** इत्यनेन तथतावबोधज्ञानमावेदितम् । **लोकस्य लोकं संदर्शयति** इति भावाभिनिवेशिनो लोकस्य मायोपमं लोकं कथयति । कल्पितपरतन्त्रपरिनिष्पन्नस्वभावानां मायोपमतादर्शनाद्यथाक्रमं **तथतां जानाति, अवितथतां जानाति, अनन्यतथतां जानाति** इति पदत्रयं वाच्यम् । **तथतामभिसंबुद्धः संस्तथागत इत्युच्यते** इत्यनेन तथतापरिज्ञानमावेदितम् ।

W 560 15 **कोऽत्र भगवन्नन्योऽधिमोक्ष्यते** इति । नैव कश्चिदनियतगोत्रादिरधिमुच्यति, किं तर्हि विशिष्ट एव पुद्गल इत्याह—**अविनिवर्तनीयः** इत्यादि । **अभिसंबुद्ध्य आख्यातानि** इति तथतासमाख्यानज्ञानमनेन निर्दिष्टम् । अक्षया अक्षयैवाख्यातेति—

"उत्पादाद्वा तथागतानामनुत्पादाद्वा तथागतानां स्थितैवैषां धर्माणां धर्मता"

इति वचनादक्षया तथता अक्षयत्वेन निर्दिष्टा । तथतावबोधादिज्ञानचतुष्टयमेकीकृत्य 20 निर्दिष्टम्, एवमतो ज्ञानलक्षणं सर्वज्ञतासंगृहीतं षोडशप्रकारं भवति । तथा चोक्तम्—

**तथागतस्य निर्वृत्तौ लोके चालुज्यनात्मके ।**
**सत्त्वानां चित्तचर्यासु तत्संक्षेपे बहिर्गतौ ॥ १४ ॥**
**अक्षयाकारतायां च सरागादौ प्रविस्तृते ।**
**महद्गतेऽप्रमाणे च विज्ञाने चानिदर्शने ॥ १५ ॥**
25 **अदृश्यचित्तज्ञाने च तदुन्मिञ्जादिसंज्ञकम् ।**
**पुनस्तथताकारेण तेषां ज्ञानमतः परम् ॥ १६ ॥**
**तथतायां मुनेर्बोधे तत्पराख्यानमित्ययम् ।**
**सर्वज्ञताधिकारेण ज्ञानलक्षणसंग्रहः ॥ १७ ॥** इति ॥

B 342 W 561 30 तदनन्तरं मार्गज्ञताद्वारेण ज्ञानलक्षणकथनार्थमाह—**अथ खलु शक्रदेवेन्द्रप्रमुखाः** इत्यादि । **कथं भगवन् अत्र लक्षणानि स्थाप्यन्ते** इति । केन प्रकारेण मार्गज्ञताधिकारे ज्ञानलक्षणानि निर्दिश्यन्ते । **शून्यम्** इत्यादि । शून्यतानिमित्ताप्रणिहितानुत्पादानिरोधा-

संक्लेशाव्यवदानाभावज्ञानान्यष्टौ स्वशब्देनोक्तानि । स्वभावज्ञानं **निर्वाणम्** इति, अनिश्रितज्ञानं **धर्मधातुः** इति, आकाशलक्षणज्ञानं **तथता** इति एवं ज्ञानत्रयं व्यवस्थापितम् । निर्युक्तिकमेवेदमिति तत्कस्य हेतोः इत्याशङ्क्याह—**अनिश्रितानि हि** इत्यादि । यस्मादेतानि ज्ञानलक्षणानि तत्त्वतोऽनुत्पादरूपत्वान्न क्वचित् प्रतिबद्धानि, तस्माद्यथोक्तस्वभावानीति वाक्यार्थः । धर्मताविकोपनज्ञानार्थमाह—**नैतानि लक्षणानि** इत्यादि । **चालयितुम्** इति 5 विकोपयितुम् । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**सदेवमानुषासुरोऽपि हि** इत्यादि । W 562 **एतल्लक्षण एव** इति अविकोपितमायोपमो धर्मतास्वभावः । असंस्कारज्ञानार्थमाह—**नाप्येतानि लक्षणानि केनापि हस्तेन स्थापितानि** इति । असंस्कृतत्वादेव भावानामिति भावः । अविकल्पज्ञानं वक्तुमाह—**यो देवपुत्राः** इत्यादि । संस्कृतत्वे कथं न स्थापितमिति तत्कस्य हेतोः इत्याशङ्क्याह—**असंस्कृतत्वात्** इति । अहेतुप्रत्ययसमुद्भूतत्वादित्यर्थः । प्रभेदज्ञानार्थमाह— 10 **अथ खलु भगवंस्तान्** इत्यादि । तथागतेन प्रकाशितत्वात् । कथं पूर्वमवस्थितानि इति B 343 तत्कस्य हेतोः इत्याशङ्क्याह—**यथैतानि** इत्यादि । **आख्यातानि** इति शून्यतादिरूपेण । W 563 प्रभेदत इति शेषः । अलक्षणज्ञानं कथयन्नाह—**गम्भीराणि भगवन्** इत्यादि । **असङ्गज्ञानम्** इति सर्वाभिनिवेशरहितं परमार्थतोऽलक्षणज्ञानं निष्पन्नावस्थायां यदुत प्रज्ञापारमिता बुद्धानाम् । तदेवाह—**असङ्गज्ञानाय** इत्यादिना । निष्पन्नावस्थायां पुनरसङ्गज्ञानाय भाव्यमाना 15 प्रज्ञापारमिता तथागतानामेव सर्वाकारगोचरो ज्ञानविषयीभवति । **अस्य लोकस्य संदर्शयित्री** इति । यथोक्तैः षोडशप्रकारैर्मार्गज्ञताज्ञानैर्लोकतत्त्वसाक्षात्करणाल्लोकं संदर्शयति । तथा चोक्तम्—

**शून्यत्वे सानिमित्ते च प्रणिधानविवर्जिते[1] ।**
**अनुत्पादनिरोधादौ धर्मताया अकोपने ॥ १८ ॥** 20
**असंस्कारेऽविकल्पे च प्रभेदालक्षणत्वयोः ।**
**मार्गज्ञताधिकारेण ज्ञानलक्षणमिष्यते ॥ १९ ॥ इति ॥**

तदनन्तरं सर्वाकारज्ञताद्वारेण ज्ञानलक्षणार्थमाह—**यथा सुभूते तथागताः** इत्यादि । W 564 तत्र स्वधर्मोपनिश्रयविहारज्ञानं सम्यक्संबुद्धस्य कथयन्नाह—**इमं धर्मं प्रज्ञापारमिताम्** इत्यादि । **अस्थानतः** इत्यनिवेशतः । **विहरन्ति** इति दृष्टधर्मसुखविहारार्थमधिगतमर्थमामुखी- 25 कृत्य विहरन्ति । सत्कारगुरुकारमाननापूजनाज्ञानानि वक्तुमाह—**धर्मं सत्कुर्वन्ति** इत्यादि । **पूजयन्ति** इत्यस्यार्थं प्रयोगपृष्ठावस्थाभेदेनाह—**अर्चयन्त्यपचायन्ति** इति । सामान्येन निर्दिश्य विशेषार्थमाह—**प्रज्ञापारमितैव** इत्यादि । विशेषग्रहणे किं निबन्धनमिति तत्कस्य हेतोः इत्याशङ्क्याह—**अतो हि सुभूते** इत्यादि । तत्र कृतज्ञाः प्रत्युपकारकरणात्, कृतवेदिनो- B 344 ऽल्पस्याप्युपकारस्य महत्त्वेन स्मरणात् । यानं महायानं प्रतिपद्दर्शनादिमार्गः । **अनुगृह्णीते** 30

१ W °विवर्जने.

**अनुपरिपालयति** इति । तयोरेव यथाक्रमं वर्णवदनात् । अकृतकज्ञानं वक्तुमाह–
W 565 **पुनरपरं सुभूते तथागतेन** इत्यादि । तत्र कारकहेतोरसत्त्वादकृताः, विनाशहेतो-
रभावेनाविकृताः, संस्कृतस्वरूपविरहादनभिसंस्कृताः । सर्वत्रगज्ञानं कथयन्नाह–**प्रज्ञापार-**
**मितां** हि इत्यादि । एवं सर्वधर्मेषु ज्ञानं प्रवृत्तमिति अकृतकत्वाद्यवगमेन ज्ञानमुत्प-
5 न्नम् । तत्त्वतोऽनुत्पन्नत्वे भावानां कथं दृश्यदर्शकदर्शनमित्याह–**यदा भगवन्** इत्यादि ।
तत्र मनोविज्ञानेन परिच्छेदाभावादजानकाः । चक्षुरादिविज्ञानेनोपलम्भविरहादपश्यकाः ।
W 566 निर्युक्तिक एवायमनुवाद इत्याह–**कथं च** इत्यादि । यस्मात्सर्वधर्मास्तत्त्वेनोत्पादाभावाच्छून्या
ग्राह्यग्राहकसंबन्धानुपपत्तेरनिश्रिताः, तस्मादजानका अपश्यका इत्यर्थः । प्रज्ञापारमितां
चागम्य इत्थंभूतधर्मावबोधेन लोकस्यादर्शनमेव दर्शनं तत्त्वतः । संवृत्या तु यथाप्रतीतमेवेति
10 भावः । अदृष्टार्थदर्शकज्ञानं निर्दिशन्नाह–**रूपस्यादृष्टत्वात्** इत्यादि । रूपाद्यदर्शनमेव लोकस्य
W 567 B 345 तत्त्वतो दर्शनमिति भावः । तदेवाह–**कथं भगवन्** इत्यादिना । **न रूपालम्बनम्** इति न
रूपादिनिर्भासम् । **सैव लोकस्य दृष्टता** इति । सच्च सदिति जानाति, असच्चासदिति
वचनादसतो लोकस्यादर्शनमेव दर्शनम् । परिशिष्टज्ञानकथनार्थमाह-**कथं च** इत्यादि ।
**इति लोकः शून्यः** इति लोकशून्यताकारज्ञानमुक्तम् । **इति लोकं सूचयति** इति लोकशून्यता-
15 सूचकज्ञानम् । **एवं ज्ञापयति** इति लोकशून्यताज्ञापकज्ञानम् । **एवं लोकं संदर्शयति**
इति लोकशून्यतादर्शकज्ञानम् । इत्येतानि त्रीणि ज्ञानानि यथाक्रमं संगृहीतपरिपाचित-
विमोचितानां विनेयानामर्थाय वेदितव्यानि । तिस्रः सर्वज्ञताश्चाभिप्रेत्य त्रिविधार्यपुद्गलाधि-
कारेण यथाक्रमं प्रदेशवृत्तिमुद्देशवृत्तिं प्रत्यक्षवृत्तिं च अधिकृत्य अवगन्तव्यानि इत्यार्यविमुक्ति-
सेनः । **इति लोकोऽचिन्त्यः** इति अचिन्त्यताज्ञानम् । **इति लोकः शान्तः** इति शान्तता-
20 ज्ञानम् । **इति लोको विविक्तः** इति लोकनिरोधज्ञानम् । **इति लोकाविशुद्ध्या** इत्यादिना
संज्ञानिरोधज्ञानं च गदितमवगन्तव्यम् । सर्वाकारज्ञतासंगृहीतानि यथोक्तान्येव षोडश ज्ञाना-
न्यवसातव्यानि । तथा चोक्तम्––

**स्वधर्ममुपनिश्रित्य विहारे तस्य सत्कृतौ ।**
**गुरुत्वे माननायां च तत्पूजाकृतकत्वयोः ॥ २० ॥**
25 **सर्वत्र वृत्तिमज्ज्ञानमदृष्टस्य च दर्शकम् ।**
**लोकस्य शून्यताकारसूचकज्ञापकाक्षगम् ॥ २१ ॥**
**अचिन्त्यशान्ततादर्शि लोकसंज्ञानिरोधि च ।**
**ज्ञानलक्षणमित्युक्तं सर्वाकारज्ञतानये ॥ २२ ॥** इति ॥

W 568 अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां
30 लोकसंदर्शनपरिवर्तो नाम द्वादशः ॥

## १३ अचिन्त्यपरिवर्तस्त्रयोदशः ।

सामान्यरूपतया ज्ञानाकारेण परिच्छिन्नानां विशेषो ज्ञेयः इति ज्ञानलक्षणानन्तरं विशेषलक्षणं सामान्येनोपोद्घातयन्नाह—**अथ खल्वायुष्मान्** इत्यादि । **महाकृत्येन** इति अचिन्त्यातुल्यादिविशेषविशिष्टैर्दुःखादिसत्यविषयैः षोडशभिर्धर्मान्वयज्ञानक्षान्तिज्ञानक्षणै-र्विशेषलक्षणस्वभावैस्तथागतत्वाद्यर्थाय प्रत्युपस्थितेत्यर्थः । तथा चोक्तम्— 5

B 346 W 569

**अचिन्त्यादिविशेषेण विशिष्टैः सत्यगोचरैः ।**

**विशेषलक्षणं षड्भिर्दशभिश्चोदितं क्षणैः** ॥ २३ ॥ इति ॥

बतशब्दोऽवधारणे । कः पुनरचिन्त्यादिविशेष इत्याह—**अचिन्त्यकृत्येन** इत्यादि । अचिन्त्यातुल्याप्रमेयासंख्येयताभिस्तावद्विशेषैर्यथाक्रमं दुःखसत्यचतुःक्षणसंगृहीतैर्विशेषलक्षण-मुक्तम् । **असमसमकृत्येन** इति सर्वेषामेवेदं विशेषणम् । एषां च व्याख्यानं ग्रन्थत एव 10 भविष्यति । निरुपपत्तिक एवायमनुवाद इति व्याख्यातुमाह—**कथं च** इत्यादि । तत्र **तथा-गतत्वम्** इत्यादि पदचतुष्टयमादर्शादिज्ञानचतुष्टयभेदेन योज्यमिति पूर्वाचार्याः । तथागतत्वादि-निष्पादनादचिन्त्यकृत्यत्वम् । एवमुत्तरत्राप्यतुल्यकृत्यत्वादिकं ग्राह्यम् । चित्तचैतसिकादि-प्रवृत्तौ कथं चिन्तयितुं न शक्यमिति तत्कस्य हेतोः इत्याशङ्क्याह—**न हि चित्तम्** इत्यादि । चित्तं मनोविज्ञानम्, चेतना मानसं कर्म, तज्जे वाक्कायकर्मणी चैतसिको वा प्रज्ञादिः 15 आलम्बकभावेनात्र बुद्धत्वादौ न प्रवर्तते, सर्वविपर्यासापगमादिति भावः । **तुलयितुं वा** इति बुद्धया स्वरूपमवधारयितुम् । **अप्रमेयं हि** इति यस्मात्प्रमातुमशक्यम् । **असंख्येयं हि** इति यस्मादेकत्वादिना गणयितुं न पार्यते । कुतः पुनरुत्तर इति समाभावात् असमस्य कस्मात्पुनरुत्तरः प्रतिविशिष्टो भविष्यति? अतोऽसमेनात्मना समस्तुल्य इत्यसमसमो भगवान् सर्वज्ञः । एतदुक्तम्—तत्कस्य तथागतत्वादिकमेव सर्वैरचिन्त्यादिपदैर्व्यावृत्तिभेदेनोच्यते इति । 20 पदपरमत्वेन तथागतत्वादिकमेवाचिन्त्यादिविशिष्टमित्यवगम्य रूपादौ संदेहादार्यसुभूतिराह—**किं पुनः** इत्यादि । न्यायस्य तुल्यत्वादित्यभिप्रायेणाह—**एवमेतत् सुभूते, एवमेतत्** । **रूपमपि** इत्यादि । पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्य अचिन्त्यातुल्यते तावत् पूर्वोक्ताभिप्रायेण कथ-यन्नाह—**रूपस्य हि सुभूते या धर्मता** इत्यादि । **रूपमपि सुभूते अप्रमेयम्** इत्यादिना अप्रमेयतां व्याचष्टे । कथं प्रमाणसद्भावेऽप्रमेया इति तत्कस्य हेतोः इत्याशङ्क्याह—**रूपस्य** 25 **हि सुभूते प्रमाणं न प्रज्ञायते** इत्यादि । **अप्रमाणत्वात्** इति तत्त्वतोऽनुत्पन्नत्वेन सर्वधर्माणा-मप्रमाणत्वात् प्रमाणं न विद्यते । अतो न प्रज्ञापिते इति यावत् । **रूपमपि** इत्यादिना असंख्येयतां कथयति । **गणनासमतिक्रान्तत्वात्** इति मायोपमत्वेनैव एकत्वादिगणनाभि-रसंगृहीतत्वात् । अचिन्त्यत्वादिकमेव स्पष्टयितुमसमसमताप्रतिपादनार्थमाह—**रूपमपि सुभूते असमसमम्** इत्यादि । **आकाशसमत्वात्** इति समाधिकाभावादाकाशेन तुल्यत्वा- 30 दसमसमाः । सामान्येन पुनरपि प्रतिपादयन्नाह—**तत्किं मन्यसे** इत्यादि । **नो हीदम्** इति । तत्त्वतो निःस्वभावत्वादिति भावः । दार्ष्टान्तिकार्थं वक्तुमाह—**एवमेव सुभूते** इत्यादि । **अनेन**

W 570 W 571 B 347 W 572 W 573 B 348 W 574

**पर्यायेण** इति आकाशदृष्टान्तनिर्देशेन। **तथागतधर्माः** इति अचिन्त्यादिभिरेव सर्वप्रकारं तथागतानां धर्माधिगमात्। उपसंहारार्थमाह—**अनेनापि** इत्यादि। तदेव स्पष्टयन्नाह—**एते च सुभूते तथागतधर्माः** इत्यादि। **विज्ञानगतस्य** इति मायोपमप्रतिभासप्राप्तस्यार्थस्याचिन्त्यता-दिव्यपदेशः संवृत्या। उपसंहारार्थमाह—**तस्मात् सुभूते** इत्यादि। अनास्रवधर्मदेशना

W 575 5 संपन्नहेतुकानां विफला नास्तीत्याह—**अस्यां खलु पुनः** इत्यादि। **अनुपादायास्रवेभ्यः** इति क्लेशवासनाबीजाधानमकृत्वा क्लेशेभ्यश्चित्तानि विमुक्तानि। **विरजो विगतमलं धर्मेषु धर्मचक्षुर्विशुद्धम्** इति। दुःखसत्यादौ धर्मज्ञानक्षान्तिभिर्विरजः। धर्मज्ञानैर्विगतमलम्। ज्ञेयविषये धर्मचक्षुः पूर्वोक्तमपगतदोषमुत्पन्नम्। क्षान्तिः प्रतिलब्धेत्यनुत्पन्नाः सर्वधर्मा इति धर्मनिध्यानक्षान्तिर्दुःखे धर्मज्ञानक्षान्तिर्वा प्राप्ता। **ते च** इति विंशतिमात्रा बोधिसत्त्वाः।

10 यद्यप्यनादिर्बुद्धवंशः, प्रतिबुद्धोत्पादे च असंख्येयसत्त्वपरिनिर्वाणम्, तथापि संसारिणां परिक्षयो नास्ति, अनन्तत्वादाकाशवत्। न हि पर्वताद्यनेकावरणसंभवेऽपि नभसः परिक्षयोऽस्तीत्येके। ये प्रतिपक्षधर्मसंनिधावपचयधर्माणो दृष्टास्ते प्रतिपक्षात्यन्तसमृद्धौ संभवदत्यन्तापचयधर्माणः, यथा कनकमलादयः। नैरात्म्यादिलक्षणप्रतिपक्षसंमुखीभावेना-

W 576
B 349 पचयधर्माणः संसारिण इति स्वभावहेतुबलात् संसारिणामुच्छेद इत्यपरे। सर्वार्यपुद्गलसंग्रह-

15 विशेषं समुदये प्रथमक्षणसंगृहीतं वक्तुमाह—**गम्भीरा भगवन्** इत्यादि। मातरि बुद्धत्वाद्य-प्रतिबन्धात् कथं महाकृत्यत्वमिति तत्कस्य हेतोः इत्याशङ्क्याह—**अत्र हि** इत्यादि। **सर्वज्ञता-समायुक्ता** इति। सर्वाकारज्ञता प्रज्ञापारमितायां प्रतिबद्धा। सर्वकार्यप्रतिबद्धत्वमेव

W 577 मातुर्दृष्टान्तेनाह—**तद्यथापि नाम** इत्यादिना। **मूर्धाभिषिक्तस्य** इति अष्टादशमहाकुलैभि-रभिषिक्तः। यद्वा राजहस्तिकरोदकाभिषिक्तः। **जनपदस्थामवीर्यप्राप्तस्य** इति स्वराज्यविगम-

20 भयाभावाज्जनपदविषये स्थामप्राप्तः। तन्निग्रहानुग्रहसामर्थ्ययोगाद्वीर्यप्राप्तः। **कृत्यानि** इति व्यापाराः। **अमात्यसमायुक्तानि** इति मन्त्रिप्रतिबद्धानि। तत्र कायवाग्व्यापाराभावाद्यथा-क्रममल्पोत्सुकोऽपहृतभार इति योज्यम्। परिग्रहाभिनिवेशमन्तरेणाधिगमानुपपत्तिरित्या-शङ्क्याह—**कथं भगवन्** इत्यादि। परिहारार्थं प्रतिप्रश्नमाह—**तत्किं मन्यसे** इत्यादिना। **परिग्रहं वा अभिनिवेशं वा** इति यथासंख्यं ग्राह्यग्राहकविकल्पाभ्यामवग्रहमित्यर्थः। **नो**

W 578 25 **हीदं भगवन्** इति। अयमत्र समासार्थः—यस्मादार्यपुद्गलस्य निर्विकल्पेन ज्ञानेन दर्शनमार्गादौ स्थितस्य ग्राह्यमिदं फलम्, अहं ग्राहक इत्येवंरूपो विकल्पो न समुदाचरति, सर्वविकल्प-प्रतिपक्षत्वात्तथाभूतज्ञानस्य। अन्यथा साभिलापज्ञानैर्यथावस्थितवस्त्वनुभवानुपपत्तेस्तथ्यज्ञान-वियुक्तत्वेन मार्गासंभवात् क्लेशप्रहाणवैकल्ये सति अर्हत्त्वफलोदयो न स्यात्, श्रुतचिन्ता-

B 350 वस्थायामिव। तस्मान्मार्गाद्व्युत्थितस्यैव योगिनोऽपगतैकत्वाभिनिवेशवचनादिविकल्पवत् समा-

30 रोपरोहिता ग्राह्यग्राहककल्पनामतिरुपजायते। तथा च वस्तुतत्त्वाग्रहणात्। **नाहं तं धर्मं समनुपश्यामि** इति। एतदेवानुवदन्नाह—**एवमेतत्** इत्यादि। औपलम्भिकजनानुकम्पया आह—**सर्वज्ञतापि भगवन्** इत्यादि। तस्मात्तेभ्यो न वक्तव्यमिति भावः॥

पुरुषविशेषवेदनीयताविशेषं द्वितीयक्षणसंगृहीतं कथयन्नाह–**अपि नु खलु पुनः** इत्यादि । तत्र प्रकृतिसमुदानीतगम्भीरधर्माधिमोक्षगोत्रत्वेन यथाक्रमं हेतुसंपन्नाः, दीर्घरात्रावरोपितकुशलमूलाः । गोत्रद्वयस्य तथागताधिष्ठानेन वृद्धयर्थं पदद्वयमध्ये पूर्वजिनकृताधिकारा इत्युक्तम् । तत्र गम्भीरा दुर्दृशा दुरनुबोधा इति पदत्रयं कल्पितादिस्वभावत्रयानुपलम्भतोऽवगन्तव्यम् । असाधारणताविशेषं तृतीयक्षणसंगृहीतं निर्दिशन्नाह– 5 **सचेद्भगवन्** इत्यादि । **श्रद्धानुसारिभूमौ** इति निर्वेधभागीयावस्थातः पूर्वं संभारभूमौ दानाद्यनुष्ठानमुपलम्भयोगेन कुर्युः । **क्षान्तिम्** इति धर्मनिध्यानक्षान्तिः । श्रवणावस्थायां प्रयोगमौलभेदेन **रोचयेत् गवेषयेत्** । चिन्तावस्थायां तथैव **चिन्तयेत् तुलयेत्** । भावनावस्थायां पूर्ववदुपपरीक्षेत उपनिध्यायेदिति वाच्यम् । क्षिप्राभिज्ञताविशेषं चतुर्थक्षणसंगृहीतं प्रतिपादयन्नाह–**एवमुक्ते भगवान्** इत्यादि । **यावद्** इति वचनाद्बोधिसत्त्वादिपरिग्रहः । 10 **निर्वाणम्** इति तथागतत्वम् । अन्यूनापूर्णताविशेषं निरोधे प्रथमक्षणसंगृहीतं वक्तुमाह–**अथ खलु ते कामावचराः** इत्यादि । **महापारमितेयम्** इति न्यूनपरिपूर्णत्वाभावान्महानुभावयुक्ता । **अविदूरं गत्वा अन्तर्हिताः** इति भगवतः प्राकृतदर्शनविषयं यावत् पद्भ्यां गत्वा अपरेण खड्ग्या गता इत्यर्थः ॥

W 579 W 580 B 351

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायाम् 15
अचिन्त्यपरिवर्तो नाम त्रयोदशः ॥



# १४ औपम्यपरिवर्तश्चतुर्दशः ।

B 352 W 581 तीव्रप्रतिपत्तिविशेषं द्वितीयक्षणसंगृहीतं कथयन्नाह—**यो भगवन् बोधिसत्त्वः** इत्यादि । **सहश्रवणेन** इति श्रवणमात्रानन्तरम् । तत्र श्रवणचिन्ताभावनाक्रियाविरोधेन यथाक्रमं **नावलीयते न संलीयते नावतिष्ठते** । यतोऽज्ञानसंशयमिथ्याज्ञानविरहात् **न धन्धा-** 5 **यति न विचिकित्सति न काङ्क्षति** इति पदार्थो वाच्यः । अभिलाषयोगात् **अभिनन्दति** । **न विपृष्ठीकरिष्यति मानसम्** इति न विप्रतिसारचित्तमुत्पादयिष्यति । **करिष्यत्यनुबन्धम्** W 582 इति धर्मभाणकस्यापरित्यागात् । तदेवाह—**अनुगमिष्यति धर्मभाणकं नोत्स्रक्ष्यति** इति । एतदेव दृष्टान्तेन वक्तुमाह—**तद्यथापि नाम सुभूते** इत्यादि । **कायगता वा** इत्युरोगतीकर- णात् । **पुस्तकगता वा** इति पुस्तकधारणात् । समुदागमविशेषं तृतीयक्षणसंगृहीतं वक्तु- 10 माह—**स्याद्भगवन्नेतैः** इत्यादि । **स्यात्** भवेत् । **किम्** इति काक्वा प्रश्नः । **एतैरेव गुणैः** इति प्रज्ञापारमिताधिमोक्षानवलयादिभिः । अन्वयमुखेन परिहरन्नाह—**स्यात् सुभूते बोधि-** W 583 **सत्त्वः** इत्यादि । व्यतिरेकमुखेनापि निर्दिशन्नाह—**येन खलु पुनः** इत्यादि । निर्युक्तिक एवायमिति तत्कस्य हेतोः इत्याशङ्क्याह—**तथा ह्यस्य अस्याम्** इत्यादि । एतदुक्तम्—यस्मा- न्मातुर्वासनाधानवैकल्येन काङ्क्षायितत्वादिकं भवति, तस्मात् पूर्वमपरिपृच्छकजातीयः इति । 15 तदेव स्पष्टयन्नाह—**पुनरपरम्** इत्यादि । **तावत्कालिकी** इति कतिपयदिनानुबन्धिनीति । B 353 W 584 **संह्रियते च** इति विरोधिप्रत्ययबलादपनीयते । **असंहार्या च** इति परिपृच्छाबाहुल्येन अशक्योत्तरा । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**एवं ह्येतत् सुभूते भवति** इत्यादि । धर्मतैषा यत्कारणानुविधायि तत्कार्यमित्यर्थः । येन पूर्वं न संपरिपृष्टा इत्यादौ तु सर्वकालमिति भावः । यतोऽनन्तरमेवोक्तम्—**एकं वादिनम्** इत्यादि । **कंचित् कालं छन्दो-** 20 **ऽनुवर्तते** इति कतिपयदिनाभ्यासबलात्तावन्मात्राभिलाषो भवति । कारणानुरूपत्वात् कार्य- स्येति मतिः । **उत्क्षिप्यते** इति श्रद्धातो भ्रश्यते । **अवसीदति** इति श्रद्धायोगेऽपि । **चलाचल** इति प्रतिनियतधर्मानालम्बनात् । तदेवाह—**तूलपिचूपमश्च** इति । तूलवर्तिकरणाय संस्कृतं तूलकं तूलपिचुः । तेनानवस्थितसाधर्म्यात् सदृशः तदुपमः । श्रवणाद्यवस्थासु प्रयोगादिषु W 585 वा यथासंख्यं **नानुग्रहीष्यति नानुवर्तिष्यते नानुपरिवारयिष्यति** इति वाच्यम् । आलम्बन- 25 विशेषं चतुर्थक्षणसंगृहीतं निर्दिशन्नाह—**तद्यथापि नाम** इत्यादि । बाह्याध्यात्मिकोपद्रवा- भावात् **स्वस्तिना अनन्तरायेण** इति द्वयोरुपादानम् । तदेवाह—**अक्षताश्चानुपहताश्च** इति । **व्यध्वनि** इत्यन्तराल एव विमार्गे विनाशमापत्स्यते । **अस्ति श्रद्धा** इत्यादि । तत्र श्रद्धा अस्तित्वेनाभिसंप्रत्ययः । क्षान्तिरनुत्पादादिधर्मक्षमणम् । रुचिरवग्रहः । छन्दः कर्तुकामता । वीर्यं कुशलोत्साहः । अप्रमादः कुशलाकुशलयोर्यथाक्रमं सेवनासेवने । अधिमुक्तिर्निश्चया- 30 वधारणम् । अध्याशयः परोपकारादिप्रवणं चित्तम् । त्यागः फलेन सह सर्वस्वपरित्यज- B 354 W 586 नम् । गौरवं सर्वत्र नम्रता । प्रीतिः सौमनस्यम् । प्रामोद्यं हर्षविशेषः । प्रसादो गुणवत्ता- दर्शनाद्भक्तिविशेषः । प्रेम शक्यानुष्ठानेऽभिलाषः । अनिक्षिप्तधुरता प्रतिज्ञाभारापरित्यागः ।

अनालम्बनालम्बनोदाहरणं सान्तरनिरन्तरकारिणोः सर्वाकारज्ञताविपक्षप्रतिपक्षभावपरिदीपनार्थम् । आधारविशेषं मार्गे प्रथमक्षणसंगृहीतं वक्तुमाह—**तद्यथापि नाम सुभूते स्त्री वा** इत्यादि । निर्युक्तिक एवायम् इति तत् कस्य हेतोः इत्याशङ्क्य वस्तुधर्मत्वेन परिहरन्नाह—**यथापि नाम** इत्यादि । **परिवहेत्** इत्युदकं नयेत् । तथैव तत्कस्य हेतोः इत्याशङ्क्य पूर्ववदाह—**यथापि नाम** इत्यादि । **प्रज्ञापारमितोपायकौशल्येन** इति शून्यताकरुणाभ्यामित्यर्थः । परिपक्वामघटौ प्रतिपत्तिधर्मस्याधारानाधारभावसंदर्शनार्थौ । साकल्यविशेषं द्वितीयक्षणसंगृहीतं प्रतिपादयन्नाह—**दुष्प्रज्ञजातीयः** इत्यादि । **अनाकोटिताम्** इति उदकप्रवेशस्थाने वल्कलादानात् । **अपरिकर्मकृताम्** इति पूतिकाष्ठानपनयनात् । **भारार्तामभिरूढः** इति गुरुभारभरितामुत्कलितः । **असंतीर्णभाण्डैव संसत्स्यति** इति अप्राप्तस्थलपरिष्कारैव अवसादं यास्यति । **परिहीण** इति अप्राप्तपरिहाण्या । अन्तरा **संसत्स्यति व्यवसादमापत्स्यते** इति अन्तरा भेदं यास्यति । बुद्धभूमिं च विपादमापत्स्यते । अनागतार्थनिश्चयाभावात् कथं स्यास्यत्ययमिति तत्कस्य हेतोः इत्याशङ्क्य अविकलकारणमात्रानुबन्धियोग्यतानुमानादाह—**एवं ह्येतत्सुभूते** इत्यादि । आकोटितानाकोटितनौग्रहणं प्रतिपत्तिवैकल्यसाकल्यज्ञापनार्थम् । संपरिग्रहविशेषं तृतीयक्षणसंगृहीतं प्रतिपादयन्नाह—**कश्चिदेव पुरुषो जीर्णः** इत्यादि । तत्र जराजर्जरितगात्रत्वाज्जीर्णः । वयःप्राप्तत्वेन **वृद्धः** । सुभाषितदुर्भाषिताविवेकत्वात् महल्लकः । **क्षपितः** इत्युपहतः । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**यथापि नाम** इत्यादि । जीर्णपुरुषस्य परिग्रहापरिग्रहोदाहरणं प्रज्ञापारमितोपायकौशलपरिग्रहापरिग्रहाभ्यां यथायोगं संसारनिर्वाणैकान्तपातापातार्थपरिदीपनार्थम् ॥

W 588 W 589 B 355 W 591

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायाम्
औपम्यपरिवर्तो नाम चतुर्दशः ॥



# १५ देवपरिवर्तः पञ्चदशः ।

B 356 W 594 अनास्वादविशेषं चतुर्थक्षणसंगृहीतं निर्दिशन्नाह—**आदिकर्मिकेण** इत्यादि । तत्र कायेन वाचा परिवारादिप्रदानेन च आराधनात् यथासंख्यं **सेवितव्यानि भक्तव्यानि पर्युपासितव्यानि** इति योज्यम् । **योगमापद्यस्व** इति देयदायकप्रतिग्राहकाद्यनुपलम्भयोगेन 5 प्रतिपत्तिपरो भव । **मा रूपतः परामृक्षः** इति मा रूपाद्यभिनिवेशयोगेन ग्रहीरित्यर्थः । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**अपरामृष्टा हि** इत्यादि । तत्त्वतोऽनुत्पादरूपत्वात् सर्वाकारज्ञता न केनचित् प्रकारेण प्रत्यवमर्षणीया । पेयालम् इति "तत्सर्वमनुत्तरायाम् इति यावत् कुलपुत्र सर्वज्ञता" इत्ययं ग्रन्थः शीलादिपारमिताचतुष्टयेऽतिदेशनीयः । **अनुपूर्वेण** इति आदौ आत्मादिनिराकरणेन बाह्येऽर्थे प्रतिष्ठाप्य, पश्चात् कल्पितपरतन्त्रपरिनिष्पन्नस्वभाव-10 कथनेन त्रैधातुकचित्तमात्रावगमे नियोज्य, तदनु सम्यगर्थक्रियासु योग्यमयोग्यं तथ्यातथ्यभेदेन संवृतिसत्यद्वयमविचारैकरम्यपूर्वपूर्वस्वकारणाधीनं निर्दिश्य तथ्यसंवृतौ स्थित्वा यथादर्शनं मायापुरुषेणेव दानाद्याचरितव्यम्, परमार्थतोऽनुत्पादश्च भावयितव्यः, इत्येवं क्रमेण **प्रज्ञापारमितायामवतारयितव्यः** । तदेवं षोडशप्रकारं विशेषलक्षणमावेदितं येन श्रावकादिमार्गेभ्यो बोधिसत्त्वादीनां मार्गज्ञतादिद्वये विशेषमार्गो विशिष्यते । अतस्तेषां यथोक्त-W 595 15 विशेषविकलाभिज्ञाद्युत्पादनलक्षणत्वेन सुगमत्वान्नोक्तः । तथा चोक्तम्—

B 357
**अचिन्त्यातुल्यते मेयसंख्येयासमतिक्रमौ ।**
**सर्वार्यसंग्रहो विज्ञवेद्यासाधारणज्ञते ॥ २४ ॥**
**क्षिप्रज्ञान्यूनपूर्णत्वे प्रतिपत्समुदागमौ ।**
**आलम्बनं च साधारं साकल्यं संपरिग्रहः ॥ २५ ॥**
20 **अनास्वादश्च विज्ञेयो विशेषः षोडशात्मकः ।**
**विशेषमार्गो मार्गेभ्यो येनान्येभ्यो विशिष्यते ॥ २६ ॥** इति ॥

विशेषलक्षणेनावच्छिन्नानां किं कारित्रमिति कारित्रलक्षणं वक्तव्यम् । तत्र हितसुखकारित्रे निर्दिशन्नाह—**दुष्करकारका भगवन्** इत्यादि । **एवंरूपम्** इति बुद्धत्वनिष्पादकमविकलं कारणमित्यर्थः । तत्र अनागततदात्वसुखोपसंहाराभिप्रायेण **हिताय सुखाय** इति 25 द्वयमुक्तम् । एतच्च द्वयमनुकम्पया स्यादित्याह—**लोकानुकम्पायै संप्रस्थिताः** इति । त्राणादि-W 596 कारित्रप्रतिपादनायोद्देशमाह—**लोकस्य त्राणं भविष्यामः** इत्यादिना । तत्र त्राणकारित्रं निर्दिशन्नाह—**कथं च सुभूते** इत्यादि । तत्र **व्यायच्छन्ते वीर्यमारभन्ते** इति प्रयोगासंतुष्टिवीर्याभ्यां यथाक्रमं योज्यम् । **त्राणं भवन्ति** इति अविपाकधर्मतायां स्थापनात् । शरणकारित्रं वक्तुमाह—**कथं च** इत्यादि । तत्र जातिः अभूत्वाभावः, जरा पुराणीभावः, व्याधिरस्वास्थ्यम्, W 597 30 मरणं पूर्वकर्माक्षिप्तनिकायपरित्यागः, शोको वैमनस्यम्, परिदेवः प्रियगुणानुस्मरणसहितं क्रन्दनम्, दुःखं कायिकमसातं वेदितम्, दौर्मनस्यं चैतसिकं पूर्ववत्, उपायासो भारोद्वह-

नादिः । **शरणम्** इति आत्यन्तिकहितोपसंहारार्थेन । लयनकारित्रं निर्दिशन्नाह–**कथं च** इत्यादि । **अश्लेषाय** इति रूपाद्यनुत्पादाय । लयनमिति दुःखहेतुनिवर्तनार्थेन । अश्लेषार्थमेव स्पष्टयन्नाह–**कथं भगवन्नश्लेषः** इत्यादि । **ज्ञानदर्शनात्** इति । अस्मिन् प्रसङ्गे यथानिर्दिष्टार्थसाक्षात्करणं ज्ञानदर्शनम् । परायणकारित्रं प्रतिपादयन्नाह–**कथं च सुभूते** इत्यादि । **यत्सुभूते रूपस्य पारं न तद्रूपम्** इति प्रकर्षगमनार्थेन रूपस्य यत्पारमनुत्पादो 5 निःस्वभावता, न तद्रूपं भवतीति संवृत्या । परमार्थतः पुनर्यथा पारं शून्यता, तथा रूपम् ।

धर्मधातुविनिर्मुक्तो यस्माद्धर्मो न विद्यते ।

–सूत्रालंकार–१३.११

इत्याह–**यथा सुभूते पारं तथा रूपम्** इति । अभिसंबुद्धा एवेति इदानीमपि शून्यतारूपत्वाद्बुद्धत्वावस्थायामिव अधिगताः सर्वधर्माः, तस्मादेतत्सूत्राभियोगो व्यर्थ इति 10 भावः । भ्रान्त्यात्मकविकल्पसद्भावात् कथमभिसंबुद्धा इति तत्कस्य हेतोः इत्याशङ्क्याह–**न ह्यत्र** इत्यादि । विकल्पस्यानुत्पादरूपत्वाद्रूपादिपारे विकल्पो नैवास्तीत्यर्थः । **अभिसंबुद्धा एव भवन्ति सर्वधर्माः** इति । तत्त्वतः इति शेषः । संवृत्या पुनरनादिकालीनसमारोपापनयनाय सूत्राभियोगः सफलो भवेदिति भावः । संवृत्यधिगममेवावेदयन्नाह–**इदमपि** इत्यादि । बहुशो बहुधा उपायं भावयन्त्युपनिध्यायन्ति, न च साक्षात्कुर्वन्ति । इदं परमदुष्करं सहसा 15 कर्तुमशक्यम् । न चावलीयन्ते दानादिपारमितापूरणे च कौसीद्यं न प्रतिपद्यन्ते । **एते धर्माः** इति प्रकृतिपरिनिर्वृतत्वादिलक्षणाः । **परायणं भवन्ति** इति धर्मदेशनया संसारनिर्वाणसमतोपसंपादनार्थेन त्रातारो भवन्ति । द्वीपकारित्रं वक्तुमाह–**कथं च सुभूते** इत्यादि । **उदकपरिच्छिन्नाः** इति जलमध्ये स्थिताः स्थलभागाः । **पूर्वान्तापरान्तपरिच्छिन्नं रूपम्** इति पूर्वान्तो हेतुरपरान्तं कार्यम्, ताभ्यां परिच्छिन्नम्, तन्मध्यवर्ति मायोपमस्वरूपम् । 20 **एतेन सुभूते परिच्छेदेन** इति तत्त्वतोऽनुत्पादेन । **एतच्छान्तम्** इत्यादि पदपञ्चकेन प्रयोगदर्शनभावनाशैक्षविशेषमार्गेषु यथाक्रमं मार्गसत्यमावेदितम् । **लोकस्य द्वीपा भवन्ति** इति उदकपरिक्षिप्तस्थलसाधर्म्येण पूर्वान्तापरान्तपरिच्छिन्नसर्वधर्माधिगमात् तृष्णाक्षयविरागनिरोधनिर्वाणदेशिकत्वेन स्वपरार्थाधिगमाधारभावोपसंहारादाश्रयणीया भवन्ति । **कथं च** इत्यादि । आलोककारित्रं पुनः सालोकरत्नद्वीपसाधर्म्येण अविद्यान्धकारक्षयस्य तृष्णादि- 25 क्षयान्तर्भावेन द्वीपकारित्रमेव । पृथक्करणं तु ज्ञानालोकस्य अज्ञानक्षये प्राधान्यादिति वेदितव्यम् । **अविद्याण्ड॰** इत्यादि । अविद्यैवाण्डकोशपटलं ग्राह्यग्राहकाकारादिप्रतिभासः । तेन पर्यवनद्धानां समन्ताद्बाह्येनाज्ञानेन युक्तानां **सत्त्वानां तमोभिभूतानाम्** आन्तरेण अविद्यावासनाबीजेनाभिभूतानां सर्वाज्ञानतमोन्धकारं बाह्याभ्यन्तरमज्ञानं विधुन्वन्ति अपनयन्तीति संबन्धः । किं कुर्वाणा इत्याह–**प्रज्ञया अवभासयन्ते** इति । ज्ञानालोकं कुर्वाणा इत्यर्थः । 30 परिणायककारित्रं कथयन्नाह–**कथं च सुभूते** इत्यादि । **परिणायका भवन्ति** इति रूपादिसर्वधर्माणां स्वभावेनानुत्पादानिरोधाय धर्मप्रकाशनात् सारथिभावेन, परार्थप्रतिपत्त्युपसंहारात् नायकाः । अनाभोगादिकारित्रत्रयार्थं प्रश्नयन्नाह–**कथं च** इत्यादि । **लोकस्य**

B 358 W 598 W 599 B 359 W 600 W 601 B 360 W 602

**गतिर्भवन्ति** इति त्रिविधकारित्रव्यापारोपसंहारादाश्रया भवन्ति। तत्र सर्वज्ञताधिकारधर्मदैशिकत्वेन अनाभोगप्रवृत्तसत्त्वार्थोपसंहारादाश्रया भवन्तीत्यनाभोगकारित्रं तावत् कथयन्नाह—**इह सुभूते** इत्यादि। **आकाशगतिकम्** इति आकाशनिष्ठम्। एतदेव कथयन्नाह—**यथाकाशम्** इत्यादि। तत्र द्रव्याभावमात्रमाकाशम्। अतीतात् कालादागमनाभावादनागतमनागते च 5 काले गतिवैकल्यादगतम्, कारकहेतोरसत्त्वादकृतम्, विनाशहेतुविरहादविकृतम्, स्थापकसंस्कारानुपपत्तेरनभिसंस्कृतम्, कालत्रये स्वभावावियोगाद्यथाक्रममस्थितमसंस्थितमव्यवस्थितम्, अतश्चानुत्पन्नमनिरुद्धम्। उपसंहारार्थमाह—**एवमेव सुभूते** इत्यादि। **आकाशकल्पत्वादविकल्पा** इति खतुल्यत्वान्निर्विकल्पाः। अनागतम् इत्यादि निर्युक्तिकमिति तत्कस्य हेतोः इत्याशङ्क्याह—**या सुभूते रूपस्य** इत्यादि। शून्यता अनुत्पादरूपता। यदि नाम 10 तस्या गमनागमनं नास्ति, तथापि रूपादीनां कथं न भवतीति तत्कस्य हेतोः इत्याशङ्क्याह—**शून्यतागतिका हि** इत्यादि। अनुत्पादस्वभावत्वात् सर्वधर्माः शून्यतादिस्वभावाः। तत्र मायोपमत्वाच्छून्यता। सर्वनिमित्तविगमादानिमित्तम्, प्रार्थनाविषयातिक्रान्तत्वादप्रणिहितम्। गगनवत् प्रकृतिप्रभास्वरत्वादनभिसंस्कारः। **तां गतिं न व्यतिवर्तन्ते** इति तं स्वभावं नातिक्रामन्ति, अतोऽनन्तरं **एवं खलु सुभूते बोधिसत्त्वा** 15 **महासत्त्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः सन्तो लोकस्य गतिर्भवन्ति** इति वक्ष्यमाणेन हारकान्तेन संबन्धतः। सर्वज्ञताधिकारस्तु हिताद्यनाभोगपर्यन्ते सर्वत्र कारित्रे निर्वाणपरिदीपनार्थेन वेदितव्यः। मार्गज्ञताधिकारधर्मदैशिकत्वेन यथायाननिर्वाणतदसाक्षात्करणोपसंहाराद्गतिर्भवन्तीति यानत्रयनिर्याणतत्फलासाक्षात्करणकारित्रं प्रतिपादयन्नाह—**अनुत्पादगतिका हि** इत्यादि। तत्र कल्पितदुःखविवेकादनुत्पादगतिकाः, विकल्पित20 दुःखविरहादजातिगतिकाः, धर्मतादुःखवियोगादभावगतिकाः, कल्पितसमुदयाभावात् स्वप्नोपमप्रतिभासमात्रस्य विद्यमानत्वेन स्वप्नगतिकाः। यथा आत्मा प्रमाणबाधितत्वान्न विद्यते तद्वद्विकल्पितसमुदयासत्त्वादात्मगतिकाः। धर्मतासमुदयस्य मायोपमत्वेनाविद्यमानपरिच्छेदत्वादपर्यन्तगतिकाः। कल्पितादित्रिविधभावनिरोधाद्यथाक्रमं शान्तगतिकाः, निर्वाणगतिकाः, अप्रत्युद्धारगतिका इति पदत्रयं वाच्यम्। तथैव कल्पितादित्रिविधमार्गस्वभावत्वादनागतिकाः, 25 अगतिकाः, अचलगतिका इति। अतोऽप्यनन्तरं पूर्ववद्धारकान्तेन संबन्धः करणीयः। गतिकारित्रं च कथयन्नाह—**रूपगतिका हि** इत्यादि। रूपादिगतिका धर्मतात्मकरूपादिस्वभावाः। **लोकस्य गतिर्भवन्ति** इति सर्वाकारज्ञताधिकारिकसर्वधर्मदैशिकत्वेन बोधिसत्त्वा लोकस्याश्रयणीया भवन्तीति। यथोक्तमेकादशविधमेव कारित्रलक्षणमवसातव्यम्। तथा चोक्तम्—

W 603 W 218 B 361 W 604 W 605 B 365

**हितं सुखं च त्राणं च शरणं लयनं नृणाम्।**
30 **परायणं च द्वीपं च परिणायकसंज्ञकम्॥ २७॥**
**अनाभोगं त्रिभिर्यानैः फलासाक्षात्क्रियात्मकम्।**
**पश्चिमं गतिकारित्रमिदं कारित्रलक्षणम्॥ २८॥ इति॥**

कारित्रलक्षणेनावच्छिन्नानां स्वभावलक्षणं कथयन् प्रतिपत्त्यर्थमाह—**के भगवन् इमाम्** इत्यादि। स्वरूपमावेदयन्नाह—**ये सुभूते चरिताविनः** इत्यादि। स्वभावलक्षणकथनार्थं प्रश्नयन्नाह—**किंस्वभावाः** इत्यादि । परिहर्तुमाह—**वैनयिकविविक्तस्वभावाः** इति । विनीयतेऽनेनेति विनयो धर्मधातुः, तत्प्रभवो विपक्षविवेकाद्विविक्तः स्वभावो येषां ते तथोक्ताः। इत्यनेनैव पदेन क्लेशविवेकस्वभावो रागादिविविक्तस्वभावत्वेन, क्लेशलिङ्गविवेकस्वभावो रागादिलिङ्गकायादिदौष्ठुल्यविविक्तस्वभावत्वेन, क्लेशनिमित्तविविक्तस्वभावो रागादिनिमित्तायोनिशोमनसिकारविविक्तस्वभावत्वेन, विपक्षप्रतिपक्षविवेकस्वभावो रागारागद्वेषाद्वेषमोहामोहविविक्तस्वभावत्वेन चेति स्वभावचतुष्टयं सर्वाकारज्ञतागतिकत्वेन अधिमोक्तॄणां भावनामार्गोपन्यासार्थेनावेदितम्। तामेव गतिं निर्देष्टुमाह—**किं भगवन्नेवम्** इत्यादि । **एवंगतिकाः** इति सर्वाकारज्ञतागतिकाः । साधूक्तत्वेनाह—**एवमेतत्सुभूते** इत्यादि । दुष्करस्वभावं वक्तुमाह—**दुष्करकारकः** इत्यादि । **एवमेतत्** इति सर्वधर्माणात्यन्ततया अविद्यमानत्वात्तदसंबद्धतामुपादाय सर्वं सत्त्वपरिनिर्वापणदुष्करसंनाहत्वेन दुष्करकारकः । संनाहस्वरूपं स्पष्टयन्नाह—**स खलु पुनरयम्** इत्यादि। तत्र वर्तमानरूपाद्यभिनिवेशविरहान्न रूपादिसंबन्धः। अनागततत्प्रार्थनाविमुखत्वान्न रूपादेरर्थाय संबन्धः । निर्युक्तिकमेवेदमिति तत्कस्य हेतोः इत्याशङ्क्याह—**सर्वधर्मासंबद्धः** इति । तत्त्वतोऽविचारैकरम्यत्वादिति मतिः। ऐकान्तिकस्वभावं प्रतिपादयन्नाह—**अस्य भगवन् बोधिसत्त्वस्य** इत्यादि। **एवं महासंनाहसंनद्धस्य** इति ऐकान्तिकस्वभावेन युक्तस्य। तत्र श्रावकभूमिः प्रत्येकबुद्धभूमिश्च सम्यक्प्रवृत्तत्वात् बोधिसत्त्वस्य न प्रतिकाङ्क्षितव्या। बुद्धभूमिः पुनरभिलापयोगेन नाकाङ्क्षणीया। कथमयमर्थो लभ्यते इत्याह—**कं त्वं सुभूते अर्थवशम्** इत्यादि । सर्वोपलम्भप्रतिपक्षत्वात् मातुः, इत्यभिप्रायेण परिहरन्नाह—**अस्थानं हि** इत्यादि । तत्र हेतुवैकल्यादस्थानमसंभवः । फलासंभवादनवकाशोऽनवसरः । श्रावकादिभूमिपातास्थानानवकाशत्वेन चैकान्तिकभावना अनभिनिवेशयोगेन परिदीपिता भवेत् । उद्देशस्वभावं निर्दिशन्नाह—**अपि तु बुद्धभूमिरेव** इत्यादि । **प्रतिकाङ्क्षितव्या** इति। मायोपमसर्वधर्माधिमोक्षादिति भावः। अनेनोद्देशभावना अव्यभिचारत्वेनोद्योतिता स्यात्। अनुपलम्भस्वभावं कथयन्नाह—**गम्भीरा भगवन्** इत्यादि । सा न केनचिद्भावयितव्या, भाव्यभावकभावनानुपलम्भात् । तदेवाह—**तां हि** इत्यादिना। पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह—**न हि** इत्यादि। न हि कश्चिद्धर्मः परिनिष्पन्न इति कर्तृकर्मक्रियादिलक्षणः । कथं तर्हि भावना इत्याह—**आकाशभावना** इति तत्त्वतो मायोपमभावना । तामेव भावनां सर्वाकारज्ञतादिभेदेनाह—**सर्वधर्मभावना** इत्यादिना । तत्र सर्वाकारज्ञतया सर्वाभिसमयानुत्पादसंग्रहात् सर्वधर्मभावना । मार्गज्ञतया अनभिनिवेशेन सर्वमार्गशिक्षणादसङ्गभावना । सर्वज्ञतया अशेषवस्तुसंग्रहादनन्तभावना । सर्वाकाराभिसंबोधेन विशेषमार्गरूपत्वादसंभावना । मूर्धाभिसमयेन निष्ठामार्गलक्षणत्वादपरिग्रहभावना । अनभिनिवेशस्वभावं वक्तुम् **एवमेतत् सुभूते, एवमेतत्** इति स्वहस्तदानपूर्वकमाह—**अतो**

W 606 W 607 W 608 W 609 W 610 B 364

W 611 **हि सुभूते गम्भीरायाः** इत्यादि। अत इति वक्ष्यमाणात् कारणादित्यर्थः। कारणमेवाह--**कश्चित्** इत्यादिना। कश्चिच्छब्दो यस्मादर्थे वर्तते। **नाभिनिवेशं करोति** इति न वस्तुपरिग्रहं करोति। **परभणितानि परमन्त्रितानि नाभिनिविशते** इति निकायभिक्षूणां नेदं बुद्धवचनमिति प्रकटाभिधानं परभणितम्, प्रच्छन्नकथनं परमन्त्रितं नाकर्णयति। **न** 5 **परस्य श्रद्धया गच्छति,** इति प्रत्यात्मवेद्यप्रसादलाभान्न परप्रणेयो भवति। ग्रन्थाद्यवगमादवगाहते। अर्थालम्बनादधिमुच्यते। तथैव तत्कस्य हेतोः इत्याशङ्क्याह--**तथा हि** इत्यादि। जन्मान्तरवासनाधानमन्तरेण च अनुत्रासादिर्न भवतीति भावः। अनुत्रासादिभिश्च मार्गज्ञताकारभावना कथिता स्यात्। आलम्बनस्वभावं निर्दिशन्नाह--**यो भगवन् बोधिसत्त्वः** इत्यादि। **आकारेण** इति ग्रहणप्रकारेण। व्यवचारिता निरूपिता। सर्वज्ञतानिम्नयेति

B 365 10 त्रिसर्वज्ञतानिष्ठया चित्तसंतत्या। अनेन त्रिसर्वज्ञताभावना कथिता स्यात्। निर्ज्ञातस्वरूपा संततिरन्यस्य व्यवचारणे दक्षेत्याह--**कथं भगवन्** इत्यादि। प्रयोगमौलपृष्ठावस्थासु मायोपम-

W 612 सर्वधर्मभावनात्मिकया चित्तसंतत्या पूर्विकया सर्वज्ञतानिम्ना संततिर्व्यवचारितेति परिहरन्नाह--**आकाशनिम्नया** इत्यादि पदत्रयम्। इयं **सा व्यवचारणा** इति यथोक्तनिश्चितसंतत्या सा व्यवचारणा सम्यगित्यर्थः। निर्युक्तिकमेवेदमिति तत्कस्य हेतोः इत्याशङ्क्याह--**अप्रमेया हि** 15 इत्यादि। यस्मात्तत्त्वेन प्रमाणप्रमेयत्वसमतिक्रमाद्यथायोगमप्रमेया अप्रमाणा च सर्वज्ञता, तस्मान्मायोपमभावनानिश्चितसंतत्या व्यवचारणा। अन्यथा प्रमेयत्वादिसद्भावाद्भावग्रहः

W 613 स्यादिति वाक्यार्थः। एतदेव स्पष्टयन्नाह--**यत्सुभूते** इत्यादि। तत्र प्राप्तिः पृथग्जनस्य शीलादिस्वभावः संभारमार्गः। अभिसमयः संभृतसंभारस्य निर्वेधभागीयात्मकः प्रयोगमार्गः। अधिगमः सर्वत्रगधर्मधातुप्रतिवेधलक्षणो दर्शनमार्गः। मार्गो लौकिकध्यानारूप्यालम्बनो 20 लौकिकभावनामार्गः। मार्गफलं दुःखसत्यादिज्ञानरूपो लोकोत्तरभावनामार्गः। ज्ञानमधिमात्राधिमात्रादिक्लेशप्रहाणकारी मृदुमृद्वादिस्वभावो मृदुमार्गः। विज्ञानं मध्याधिमात्रादिक्लेशविध्वंसको मध्यमृद्वादिलक्षणो मध्यो मार्गः। उत्पत्तिर्मृद्वधिमात्रादिक्लेशोन्मूलकोऽधिमात्रमृद्वादिरूपोऽधिमात्रो मार्गः। विनाशो भावनामार्गे क्लेशप्रहाणोपायः प्रयोगमार्गः। उत्पादः क्लेशप्रहाणेन विमुक्तिप्रापकः सम्यगानन्तर्यमार्गः। व्ययः क्लेशविविक्तज्ञानसाक्षात्कारी 25 विमुक्तिमार्गः। निरोधः परिशिष्टक्लेशप्रकारस्य प्रयोगानन्तर्यविमुक्तिमार्गात्मको विशेषमार्ग इत्येके। वैशेषिकगुणाभिनिर्हारको विशेषमार्गो निरोध इत्यन्ये। भावना वज्रोपमः समाधिः

B 366 सर्वावरणाभेद्यभेदकः। विभावना निष्ठामार्गः क्षयानुत्पादज्ञानम्। देशो देशसामान्यम्। प्रदेशो देशविशेषः। **न केनचिदभिसंबोद्धुम्** इति रूपादिभिराकारैर्न शक्या अधिगन्तुम्। तदेवाह--**न रूपेण** इत्यादिना। यत्तर्हि इदमुक्तम्--

30 आलम्बनं सर्वधर्मा लौकिकाः कुशलादयः।

--अभिसमयालंकार--१.४१

इत्यादि, तत्कथमिति तत्कस्य हेतोः इत्याशङ्क्याह--**रूपमेव हि** इत्यादि। **यस्माद्योगि**-संवृत्या रूपादिकमेव मायोपमताधिगतं बुद्धत्वमित्यर्थः। यथोक्तम्--

प्रसिद्धमात्रस्य हि यायथार्थता
तदर्थसंबोधफलं हि शासनम् । इति ॥

**दानपारमितैव** इत्यादि । तत्र दानशीलक्षान्तिपारमितास्तिस्रो वीर्यध्यानपारमितयो- W 614
श्चांशः पुण्यसंभारः । ज्ञानसंभारस्तु प्रज्ञापारमिता वीर्यध्यानपारमितयोश्चांशः, इत्येतत्सर्वं
मायोपमत्वेनाविशिष्टत्वात्तथागतत्वम् । सम्यग्धर्मावबोधेन संजातप्रसादातिशया भगवत्पाद- 5
वन्दनापूर्वकं मातुर्माहात्म्यं शक्रादयः प्रकटयन्तीत्याह—**अथ खलु शक्रः** इत्यादि । तत्र
गम्भीरा रूपादितथतास्वभावत्वात् । श्रुतचिन्ताभावनावस्थासु मायोपमत्वाद्यथाक्रमं दुरवगाहा
दुर्दृशा दुरनुबोधा । **इदमप्यर्थवशम्** इति । अपिशब्दान्न केवलं विनेयाग्रहणादि, किं तर्हि
इदमपि धर्मगाम्भीर्यं पश्यत इत्यर्थः । **अल्पोत्सुकतायाम्** इति । निर्व्यापारत्वे चित्तमवनतम्,
न धर्मदेशनायाम्, तथापि ब्रह्माध्येषणान्महाकरुणया धर्मचक्रं प्रवर्तितमिति भावः । 10
साधूक्तत्वेनानुवदन्नाह—**एवमेतत्** इत्यादि । उपसंहारार्थमाह—**गम्भीरो बतायम्** इत्यादि । W 615
केयं गम्भीरता इत्याह—**यत्र न कश्चित्** इत्यादि । सर्वलोकविप्रत्यनीकस्वभावं कथयन्नाह—
**आकाशगम्भीरतया** इत्यादि । अविचारैकरम्यकारणत्वादाकाशगम्भीरतया गम्भीरः । तत्त्वेन
मायोपमकार्यस्वभावत्वादात्मगम्भीरतया गम्भीरः । उत्पादाभावात् सर्वधर्मानागमनतया
गम्भीरः । विनाशवियोगात् सर्वधर्मागमनतया गम्भीरः । एतदुक्तम्—स्वप्नोपमहेतुफलधर्मा- 15
धिगतिपूर्वकः क्षयानुत्पादज्ञानस्वभावो मया धर्मोऽभिसंबुद्धो देश्यते इति । यथोक्तस्वभावमेव
स्पष्टयन्नाह—**आश्चर्यम्** इत्यादि । हेतुवैशिष्ट्यादाश्चर्यम्, फलातिशयादद्भुतम् । सर्वलोक- W 616
विपरीतत्वात् सर्वलोकविप्रत्यनीकः । तदेव वक्तुमाह—**अनुद्ग्राहाय** इत्यादि । **अयम्** इति
प्रज्ञापारमितात्मकः ॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां 20
देवपरिवर्तो नाम पञ्चदशः ॥



# १६ तथतापरिवर्तः षोडशः ।

B 368
W 617

अप्रतिघातस्वभावं निर्दिशन्नाह—**अथ खल्वायुष्मान्** इत्यादि । **नायम्** इति त्रिविध-सर्वज्ञताकारसुपरिपूर्णाभिसमयत्वेन सर्वत्र रूपादौ ज्ञानधर्मस्याप्रतिघातित्वादयं देशनाधर्मो न क्वचित्प्रतिहन्यते । अपदस्वभावं वक्तुमाह—**अप्रतिहत** इत्यादि । **सर्वपदानुपलब्धितः** इति
5 ज्ञानज्ञेयसमतया सर्वप्रतिष्ठानुपलम्भार्थेनाप्रतिहतलक्षणोऽनभिभूतः । **अद्वितीयत्वात्** इति एकाकित्वात् अप्रतिमलक्षणोऽसादृश्यलक्षणः । **निःप्रत्यर्थिकत्वात्** इति सर्वप्रतिपक्षसमति-क्रान्तत्वात् अप्रतिलक्षणोऽप्रतिपक्षलक्षणः । **अनभिनिर्वृत्तत्वात्** इति अजातत्वात् **अपदो**ऽप्रतिष्ठास्वभावः । **सर्वोपपत्त्यनुपपत्तित्वात्** इति देवादिसर्वगतिष्वविद्यमानरूप-त्वादनुत्पादः । **सर्वपथानुपलब्धित्वात्** इति सर्वमार्गत्वेनानुपलम्भात् अपथोऽमार्गः ।
10 **अपदः** इत्यस्य प्रयोगदर्शनभावनाविशेषाशैक्षमार्गेषु विशेषणार्थमप्रतिहतलक्षण इत्यादि

W 618

पञ्चपदोपादानम् । अगतिस्वभावं कथयन्नाह—**अनुजातो बतायम्** इत्यादि । भगवतः संबन्धी श्रावकोऽयम्, अनु पश्चाज्जातस्तथागत इव इत्यनुजातः । कथं श्रावकोऽपि तथागत इवानुजात इति तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि भगवन्** इत्यादि । यस्मात्सर्वमेव धर्ममनधिगतार्थविषयमपि सम्यक् शून्यतया देशयति, तस्मात्तथागत इवानुजात इत्यर्थः ।
15 वस्तुधर्मत्वेनानुजातार्थं विघटयन्नाह—**यद्देवपुत्राः** इत्यादि । **अजातत्वात्** इति तत्त्वेनानुत्पन्न-त्वात् । अजातस्तथागतस्य श्रावकः सुभूतिस्तस्यैव तथतामनुयातः प्राप्तस्तादात्म्येनानुगतः ।

B 369
W 619

"तथाभावस्तथतेत्यत एव निर्देशादस्य ह्रस्वत्वम्" इत्याचार्यवसुबन्धुः । कथमित्याह—**यथा तथागतः** इत्यादि । **एवं हि सुभूतिः** इति । यस्मादनन्तरोक्ततथतारूपेण तथागततथता-मनुयातः, ततोऽजातत्वादनुजात इति पूर्वेण संबन्धः करणीयः । एवमुत्तरत्राप्यवगन्तव्यम् ।
20 अभ्यासयोगेन तत्तथताप्राप्तौ कथं न वस्तुधर्मत्वेनानुजातः स्यादित्याह—**आदित एव** इत्यादि । **आदितः** इति प्रथमत एवेत्यर्थः । निर्युक्तिकमेवेदमिति तत्कस्य हेतोः इत्याशङ्क्याह—**या हि** इत्यादि । **सा सर्वधर्मतथता** इति द्रव्याभिमतानां रूपादीनां सामान्यधर्मता । अनुत्पाद इति यावत् । एवं तथागतसर्वधर्मतथतयोः परस्परमभेदेन तथागततथतायाः सर्वविषयत्वमावेदितम् । अतश्च सैव सुभूतेरपि, इत्याह—**या च** इत्यादि । अतोऽनुजात इति तथताप्राप्तियोगादनु-
25 जातः । तथता तर्हि द्रव्यसती स्यादित्याह—**सापि च** इत्यादि । **अतथता** इति निर्विषय-प्रतिषेधानुपपत्तेस्तथतापि सांवृती । मायोपमेति यावत् । **तथागतमनु जातः** इति अनुशब्दयोगे कर्मविभक्तिः । **तथागतस्येति पाठे** तत्संबन्धो विवक्षितः । तत्त्वतो धर्मतारूपत्वे कथमनुजात

W 620

इत्याह—**तथागतस्य** इत्यादि । **स्थितिता** इति संवृत्या प्रबन्धधर्मता । यद्येवं विकारादिमान् सुभूतिः स्थविरः स्यादित्याह—**यथा तथागत** इत्यादि । तत्र अधिकन्यूनविकाराभावाद्यथा-
30 क्रममविकारा निर्विकारा । स्वपरविकल्पवियोगादविकल्पा निर्विकल्पा । तथागततथतावत् सुभूतितथता कुतोऽविकारादिस्वभावेत्याह—**यथा च** इत्यादि । एतदेव कुतः इति तत्कस्य

B 370

हेतोः इत्याशङ्क्याह—**या च तथागततथता** इत्यादि । **एकैवैषा** इत्यभिन्ना, यस्माद्भेदककर्म-

कर्तृक्रियानुपलम्भादद्वया अद्वैधीकारा अद्वयतथतेत्यर्थभेदो वाच्यः । सर्वथा आधारत्वविरहान्न क्वचित् । हेतोरभावान्न कुतश्चित् । संबन्धिनोऽसत्त्वान्न कस्यचित् । संबन्धिभावादौ तु वस्तुत्वापत्तेस्तथतैव न स्यादित्याह–**यतः सा** इत्यादि । **एवं हि सुभूतिः** इति । तथागतसर्वधर्मतथतयोरेवमेकस्वभावत्वेन तथागततथतया संगृहीतत्वान्निर्विकल्पादिस्वभावा सुभूतितथता । तस्मादकृततथतया अनुजात इत्यर्थः । तथतारूपेण सर्वेषामनुजातत्वे सुभूतेः कोऽतिशय इति चेत्, सत्यम् । किं तु यदेव विवादास्पदीभूतं तदेव निर्दिश्यते । अन्यथा अश्रोतृसंस्कारकं वाक्यं कुर्वाणः कथं नोन्मत्तः स्यात्? एतदेव स्पष्टयन्नाह–**या चाकृततथता** इत्यादि । **न सा कदाचिन्न तथता** इति । सर्वदैव तथतेत्यर्थः । उपसंहरन्नाह–**यथा तथागततथता सर्वत्र** इत्यादि । **सर्वत्र** इति सर्वस्मिन् काले । **अभिनिर्मितः** इति प्रभावतो निष्पादितः । **अलुप्तम्** इति । लुप्तमप्रतीतमदृष्टम्, न लुप्तमलुप्तं दृष्टम् । प्रतीतमिति यावत् । **भेदकानुपलब्धितः** इति । प्रमाणोपपन्नैकस्वभावत्वेन तथताया भेदकप्रमाणानुपलम्भेन द्वयमप्यनन्तरोक्तमभिन्नमित्येतदलुप्तम् । सर्वधर्मतथतात्मिका तथागततथता, सुभूतितथता पुनर्न तथाविधा । तत्कथं तथतया द्वयमभिन्नं स्यादित्याह–**यथा तथागततथता** इत्यादि । **नान्यत्र** इति निपातवचनं प्रथमार्थे वर्तते । तदुक्तम्–स्यात्, यथा सर्वधर्मतथताया नान्या तथागततथता, किं तर्हि तदात्मिका, एवं सुभूतितथतापीति । **न सा कस्यचिन्न तथता** इति । सर्वस्य सा तथतेत्यर्थः । तदेवाह–**सैव सा** इत्यादिना । यैव सा तथता सुभूतेः, सैव सर्वधर्मतथतेति योज्यम् । **अनन्यतथतानुगमेन** इति आत्मस्वभावतथतानुकारेण तां तथतां सर्वधर्मानुवर्तिनीमुपगतः । तथतास्वभावत्वे कथमनुगम इति चेत्, आह–**न चात्र** इत्यादि । संवृत्यैवं व्यपदेशः कृतः । परमार्थतस्तु नैवात्र मायोपमत्वे कश्चिद्भावः क्वचिदनुगतिं सदृशतां प्राप्तः । त्रैयध्विकसर्वधर्माणां तथता त्रैकालिकी, तथागततथता तु प्रकृतिप्रभास्वरत्वेनोत्पादविरहान्न तथाविधा । तत्कथमनयोरेकत्वमिति चेत्, आह–**यथा तथागततथता** इत्यादि । तत्रोत्पादपूर्वकविनाशाभावान्न अतीता, भविष्यदुत्पादवियोगान्न अनागता, लब्धसत्ताकत्वानुपपत्तेर्न प्रत्युत्पन्ना । **एवं सर्वधर्मतथता** इति । मायोपमत्वप्रसाधकप्रमाणस्य सर्वत्र तुल्यत्वादिति भावः । भवतु वा सांवृतभावोपाधिभेदेन तत्तथतायास्त्रैकालिको व्यपदेशः, तथापि तथागतसर्वधर्मतथतयोरभेद एवेत्याह–**तथागततथतयापि** इत्यादि । न केवलमात्मतथतया, किं तर्हि तथागततथतयापि । यस्मात्तथतामनुप्राप्तः सन् सुभूतिस्तयैव तथागततथतया अतीतादितथतामनुगतः, अतीतादितथतया च तथागततथतामनुगतो भवति, तस्मान्नास्ति विमुक्तेर्नानाकरणमिति भावः । अतीतादिप्रत्येकसमुदायभेदेन च हारकचतुष्टयमवगन्तव्यम् । उपसंहरन्नाह–**इति हि सुभूतितथता** इत्यादि । बोधिसत्त्वतथागतावस्थयोरेव तावद्भिन्नरूपत्वात्तथतायाः कुतः सर्वधर्माभिन्नस्वभावत्वमिति कस्यचिदाशङ्कायामाह–**यैव च** इत्यादि । **इयं सा तथता** इति । सर्वदैकस्वभावत्वाद्युक्तेयं सा तथता, यथा सर्वप्रकारागन्तुकमलापगमेनाभिसंबोधात् । ये एकानेकस्वभावा न भवन्ति, न तेषां परमार्थतः स्वभावोऽस्ति,

यथा मायादिरूपस्य। न भवन्ति चैकानेकस्वभावाः स्वपरोदिता भावा इति व्यापकानुपलब्ध्या मायोपमस्तथागत इत्यर्थः। नासिद्धोऽयं हेतुः, यस्मात्प्रेक्षावतां प्रवृत्तेः प्रयोजनवत्तया व्याप्तत्वात् अर्थक्रियायोग्यपदार्थविषयो विचारः, अन्यथा अर्थक्रियार्थिनां पुंसामसदर्थपदार्थविचारैः किं प्रयोजनम्, इत्यर्थक्रियाकारी भावोऽभ्युपगन्तव्यः। स चान्योन्यव्यवच्छेदरूपत्वात्
5 ज्ञेयरूपो वा भवेत्, ज्ञानरूपो वेति विकल्पः। तत्र यदि आद्यः पक्षः, तदा परस्परसंयुक्तस्वभावो वा भवेत्, बहुभिर्वा समानजातीयैः परमाणुभिः परस्परसामर्थ्यविधृतैरसमाश्लिष्टस्वरूपैः सान्तरैः परिवृतः, यद्वा निरन्तरैः, इति पक्षत्रयम्। तत्र प्रथमे पक्षे यद्येकेन सहैकदेशेन संयोगोऽपरस्य, तदा सावयवत्वप्रसङ्गादेकत्वहानिः, अपरापरस्वभावैरण्वन्तरसमाश्लेषात्। सर्वात्मना संयोगपक्षेऽपि यदा पूर्वोऽणुरपराणुना सह सर्वात्मना संयुज्यते,
10 तदा अपरोऽपि पूर्वेण, इत्यतः संयोगस्योभयपदार्थाधीनत्वेन परस्परस्वभावानुप्रवेशान्न कस्यचिदणोरेकस्वभावता। तथा हि- पूर्वोऽणुरपरेण सर्वात्मना संयुज्यते इति स्वस्वभावं परित्यज्य सर्वथा अपररूपापत्तेस्तस्य च संयुज्यमानस्यासत्त्वम्। तथा अपरोऽपि पूर्वेण संयुज्यते इति स्वस्वभावं विहाय सर्वथा पूर्वरूपभवनात्तस्य संयोगाश्रयस्यासत्त्वम्।
B 373 ततश्च एकस्यैकदा परस्परपरिहारस्थितलक्षणविधिप्रतिषेधायोगात् कथमेकस्वभावता? द्वितीये-
W 625 15 ऽपि परिवारकपक्षे, यदि नाम समानजातीयैः संस्पर्शो नेष्टः, तथापि छिद्रस्यालोकतमोरूपत्वात् विजातीयैरालोकतमःपरमाणुभिरभीष्ट एव। न हि आलोकेनासमाक्रान्तस्य तमोरहितता, तमसा वा अनास्पदीकृतस्यालोकरहितत्वं युक्तिमत्, तयोरन्योन्यविरहितदेशादिमात्रप्रतिबद्धोदयत्वात्। तथा च अनन्तरोपवर्णितो दोषः समुपनिपतति। अथ विजातीयैरपि संस्पर्शो नानुमन्यते, तदा योऽसौ मध्यवर्ती परमाणुर्येनैकेन स्वभावेन एकपर-
20 माण्वभिमुखावस्थितः, तेनैवान्यपरमाण्वभिमुखः यद्वा अन्येनेति विकल्पद्वयम्। तत्र यद्याद्यः पक्षः, तदा यदेकरूपपरमाण्वभिमुखस्वभावं तदेकदेशम्, तद्यथा तस्यैव परमाणोः पूर्वदिगवस्थितपरमाणुः। एकपरमाण्वभिमुखस्वभावाश्च सर्वे परिवारकाः परमाणव इति स्वभावहेतुः। तेनैव स्वभावेनेत्यभ्युपगमान्नासिद्धता। सपक्षे सद्भावान्न विरुद्धता। भिन्नदेशावस्थाने तु नाभिमतैकपरमाण्वभिमुखस्वभावा भवेयुः, तस्य परमाणोरपरापरस्वभावाभावात्, असता च
25 स्वभावेनाभिमुख्यायोगादिति न चानैकान्तिकता हेतोः। ततश्च परिवार्यावस्थानाभावेन परिवारकाणामणूनामेकदेशताप्रसङ्गात् तत्त्वतः प्रचयाभावे तत्साध्यार्थक्रियावैकल्यादेव तस्य परमाणोर्नैकस्वभावाभ्युपगमो युक्तः। द्वितीये तु पक्षे, अपरापरस्वभावैरपरापरपरमाण्वभिमुखयोगात् स्फुटतर एव सावयवताप्रसङ्गादेकत्वविरहोऽणूनाम्, स्वभावभेदलक्षणत्वात् वस्तुभेदस्य। तृतीयस्तु नैरन्तर्यपक्षः संयोगपक्षमेवानुपतति, तत्पर्यायत्वात्। न ह्यन्तराल-
B 374 30 देशविरहिणां परस्परसंश्लेषं मुक्त्वा अन्या गतिरस्ति। न च शब्दान्तरेणाभिधीयमानः स एवार्थोऽन्यथा भवति, अतिप्रसङ्गात्। अथ असंयुक्त एव परमाणुर्बहुभिस्तु दिक्शब्दवाच्यैः

---

१ W परमार्थयोग्य°.

समीपेतरदेशावस्थितैः परमाणुभिः परिवृत इति चेन्मतम्, तदयुक्तम् । न ह्यर्वाक्परभागयो-रभावे वचनमिदमर्थवत्तायां व्यवतिष्ठते ।

तदन्यापेक्षयान्यस्य यद्रूपमवधार्यते ।
तदसत्, तत्र तत्त्वेन पारापारादिभेदवत् ॥

इति न्यायान्न भूतार्थेन सावयवत्वमिति चेत्, न । पारापारयोरपि बहिरर्थवादिनां 5 व्यपेक्षाभेदेनासांकर्यात् पितापुत्रादिवत् तात्त्विकमेव रूपमित्यभ्युपगन्तव्यम् । यदपेक्षया हि तत्पारं न जातु तदपेक्षया तदपारमिति । अन्यथा पारापारयोरपारमार्थिकत्वे कथं पारापाराभिधानतटस्थितयोरसांकर्येणावस्थानम् ? तथा हि—पाराभिमतादन्यत्वमेव विवक्षितस्य अपारस्य अपारत्वमुच्यते । तस्य च कल्पितत्वे तयोरैक्यप्रसङ्गः । तथा च न तदाश्रितानामसंकीर्णावस्थितिः स्यात् । न हि कल्पनोपरचितो भेदोऽर्थक्रियाङ्गम् । अथ संवेदनबला- 10 द्विषयस्थितेरननुभूयमानत्वेनार्थस्यात्यन्तपरोक्षत्वात्, समनन्तरप्रत्ययबलेन प्रतिनियतस्य कार्यस्योदयात्, तद्व्यतिरेकेण कल्पयितुमशक्यत्वाच्च स्वतःसिद्धरूपमेवाद्वयं ज्ञानमेकस्वभावं परमार्थतो ग्राह्यग्राहकभावरहितमहेतुकत्वे नित्यं सत्त्वादिप्रसङ्गात्, नित्यत्वेऽर्थक्रियाद्यनुपपत्तेश्च स्वहेतुप्रतिबद्धोदयमुदयानन्तरापवर्गि केवलमनादिभवभाविभावाभिनिवेशवासनापरिपाक-प्रभावादाकारास्तत्र प्रतिभासन्ते इति ज्ञानात्मको भावो योगाचारैरभ्युपगम्यते । तत्रापि किं 15 ते आकारास्तात्त्विका एव, किं वा प्रतिबिम्बादिवदविचारैकरम्याः इति विकल्पः । यदि आद्यः, तदा तात्त्विकानेकाकाराव्यतिरेकादाकारस्वरूपवदनेकत्वं विज्ञानस्य आसज्यते, इति एकता कुतः ? अथ सकृदनुभूयमानत्वेन विज्ञानस्यैकत्वं निश्चितम्, तदा एकज्ञानाव्यतिरेकादाकाराणामेकत्वं विज्ञानस्वरूपवद्दुर्निवारम् । भवत्वेवमिति चेत्, नैवम् । तथा हि—यद्येक आकारश्चलनत्वादिविशिष्टः प्रतिभासते, तदा परिशिष्टा अप्याकाराः पूर्वाकाराव्यतिरिच्य- 20 मानमूर्तिस्वभावत्वात्तथाविधा एव स्युः, इति वैचित्र्याकारानुभवो विरुध्यते । अतो नानात्वमैकान्तिकमेवाकाराणामित्येकानेकत्वयोः परस्परविरुद्धधर्माध्यासयोगात् पारमार्थिक-मेवाकारविज्ञानयोर्नानात्वं स्थितम्, इत्यभ्युपगताद्वयनयहानिः । अथ सुखादिवन्नीलादय आकारा अनुभवात्मका एव, इत्येकस्य चित्रत्वानभ्युपगमान्न यथोक्तदूषणप्रसङ्ग इति मत्वा समानजातीयान्यपि विज्ञानानि बहूनि विजातीयज्ञानवत् सकृदुत्पद्यन्ते इति वर्ण्यते, तदा 25 अयमन्यो दोषः । तथा हि—यत्तन्मध्याभिमतं विज्ञानं परिवृताणुप्रख्यमिष्यते, तद्येन स्वभावेनैकस्याभिमुख्यं प्रतिपद्यते, किं तेनैवान्यस्यापि, अथ अन्येनेति विकल्पः । तेनैवेति पक्षे परिवार्यावस्थानाभावेन अवशिष्टानां न दिगन्तरावस्थितिर्यथार्थो भवेत् । अतश्च पूर्वापरादिदिग्भागेनानुत्पत्तेर्नीलादिमण्डलसंनिवेशप्रतिभासो न स्यात् । अन्येनेति पक्षे स्वभावभेदलक्षणत्वाद्वस्तुभेदस्य इत्येकता कुत इति परमाणुविचारभावी दोषः समापतति । 30 ननु अमूर्तत्वात् ज्ञानानां न देशकृतं पौर्वापर्यमस्ति, तत्कथमणुवत् मध्यवर्तित्वं ज्ञानानां भवेत् ? सत्यमेतत् । अयमपरोऽस्य दोषोऽस्तु—यद्देशवितानप्रतिभासिनामाकाराणां सत्यत्व-

W 626　B 375　W 627　B 376

मिच्छता ज्ञानानामदेशानामपि सतां बहूनां तथा देशवितानास्थानेनोत्पादः परिकल्प्यते। अन्यथा हि, यद्यनेकविज्ञानोत्पादकल्पनायामपि तथा देशवितानोत्पादप्रतिभासो मिथ्या स्यात्, तदा अनेकविज्ञानोत्पादकल्पना व्यर्थैव स्यात्। न च देशवितानावस्थितनीलादि-प्रतिभासमन्तरेण अन्यन्नीलाद्यनुभूयते यत्सत्यं भवेत्। तस्य च अलीकत्वे किमन्यत्सत्यं 5 भविष्यति? इति यत्किंचिदेतत्। ननु तथाप्यणवो मूर्ताः, विज्ञानं त्वमूर्तम्, तत्कथं स एवात्र दोष इति चेत्, नैष दोषः। तथा हि—तदेव नीलादि नैरन्तर्येण भासमानमेकेन परमाण्वात्मकमुपगम्यते, अपरेण संविद्रूपमिति नाममात्रमेव केवलं भिद्यते, न तु देशनैर-न्तर्यावस्थानलक्षणस्यार्थस्य भेदः। न च नाममात्रप्रवृत्तिद्वारकृतं तुल्यदोषतापादनं क्रियते, अपि तु देशनैरन्तर्यावस्थानकृतम्। तच्च नाममात्रभेदेऽप्यस्ति, इति कथं तुल्यदोषता न भवेत्?

W 628 10 अथ एवमपि ज्ञानज्ञेययोर्वैसादृश्यात् ज्ञेयगतं दूषणं ज्ञानेनानुमन्यते, तदाप्युच्यते युगपदनेक-ज्ञानोदये घटपटादिविषयः प्रतीयमानो विकल्पः क्रमभावी न स्यात्। न चैतच्छक्यते वक्तुम्, निर्विकल्पकज्ञानान्येव युगपदिति तदनुभवनिश्चयद्वारेण विकल्पानामुत्पत्तेः। ततश्च न हि इमाः कल्पनाः स्वयमसंविदितरूपा उत्पद्यन्ते, इति सकृदनुभवनिश्चयप्रसङ्गात् क्रमभावी विकल्पोऽनुभूयमानो न स्यादिति प्रत्यक्षविरोधः। अथ मतम्—एकमेव विज्ञानमागृहीत-15 चित्ररूपं मेचकमणिप्रतिभासवदिति, तदसत्। तथा हि—यच्चित्रं तदेकं न भवति, यथा

B 377 नानासंतानवर्तिनः प्रत्ययाः। चित्रं चेदं विज्ञानमिति विरुद्धोपलब्धिः। चित्रत्वेनोपलम्भा-न्नासिद्धो हेतुः, सपक्षे भावान्न विरुद्धः। कथं पुनश्चित्रैकत्वयोर्विरोधो येन चित्रत्वमेकत्व-मपनयेत् इति चेत्, उच्यते। न हि नानास्वभावव्यतिरेकेण अन्यच्चित्रशब्दाभिधेयमस्ति। नानैकत्वयोरन्योन्यस्वरूपव्यवच्छेदनान्तरीयकत्वात् परस्परपरिहारस्थितिलक्षणो विरोध इति 20 सिद्धो विरोधः। विरुद्धयोरप्येकस्वभावत्वे सकलं विश्वमेकं द्रव्यं स्यात्, ततश्च सहोत्पाद-विनाशादिप्रसङ्गो दुर्निवारः। अन्यथा नाममात्रमेव स्यादेकमिति। न च नाम्नि विवाद इति न अनैकान्तिकता च हेतोः। दृष्टान्तो मेचकमणिप्रतिभासस्तावत् सिद्ध इत्यपि न वक्तव्यम्। तत्राप्येकरूपत्वे नानारूपतया अव्याप्तत्वेन नानारूपावभासित्वाद्यनुपपत्तेस्तुल्यपर्यनुयोग-त्वात्। अथ स्यात्—प्रतिभासमानस्य नीलादेर्देशकालान्तरस्थात्पदार्थान्न भेदः प्रत्यक्षेण 25 प्रतीयते, द्वयोरप्रतिभासनेन एतस्मादिदं भिन्नमित्यग्रहात्। नापि समानकालदेशस्थात् प्रतिभासमानादस्मादिदं भिन्नमिति प्रत्ययोऽस्ति, निर्विकल्पतया प्रत्यक्षेणाग्रहात्। तस्माद्ग्राह्यग्राहकयोर्ग्राह्याणां च परस्परं भेदाग्रहाच्चित्राद्वयमेवैकरूपं प्रत्यक्षे प्रतिभासते इति,

W 629 तदप्येतेनैव प्रत्युक्तम्, एकस्य चित्रत्वविरोधात्। अथ अभिन्नयोगक्षेमत्वाच्चित्रमप्येकम्, तदयुक्तम्। अन्योन्यव्यावृत्तरूपत्वेनास्यैकत्वविरोधात्। न च अस्यानेनाभिन्नयोग-30 क्षेमत्वं प्रत्यक्षेणावगम्यते, युगपत्प्रतिभासस्याभिन्नयोगक्षेमरूपत्वे स्वरूपान्यत्वस्यापि

B 378 प्रतिभासनात् कथं न भेदप्रतिभासो भवेत्? यदि च भेदस्याग्रहादद्वैतं कल्प्यते, तदा अभेदस्य अस्मादिदमभिन्नमित्येवंरूपस्याग्रहात् द्वैतं किं न कल्प्यते? अथ भेदाभेद-

विनिर्मुक्तं वस्तुमात्रं गृह्यते, कथं तर्हि नीलादेश्चित्रस्य च प्रतिभासः? चित्रश्चेत्प्रतिभास इष्यते, स एव लोके भेदप्रतिभास उच्यते, इति कथं भेदापलापः? अथ मतम्—यदि सत्यरूपा एवामी स्युराकाराः, तदा सर्वोऽयं विरोधः। यावता शुद्धस्फटिकोपलसंकाशमेव तद्विज्ञान-मसंप्राप्तनीलाद्याकारभेदम्, तस्मिन्नेवंविधेऽप्यनादिकालिकविपर्यासवासनापरिपाकप्रभावात् मृच्छकलादिषु मन्त्राद्युपप्लुतलोचनपुरुषप्रतिभासापन्नकरितुरगादीनामिवाकाराणामवभासन- 5 मिति। परमार्थत एकरूपस्यैव ज्ञानस्याभ्युपगमेऽलीकत्वान्न विरोधः, यतो भवता दोषाभि-धानेनालीकत्वमेवाकाराणां प्रतिपाद्यते। तच्चास्माभिरभ्युपगतमिति। तदसत्। तथा हि—यदतिस्फुटमाबालप्रतीतनीलाद्याकाररूपमनुभूयते तदलीकम्, अननुभूयमानं तु स्फुटप्रति-भास्याकारव्यतिरिक्तमद्वयं ज्ञानं यत् तत्सत्यमिति किमतः परमिह सुभाषितमस्ति? किमित्यति-परिस्फुटसंवेदनानुपपत्तिरसत्त्वेऽपि तत्त्वत इति चेत्, उच्यते। यद्यत्र असंविद्यमानरूपं न 10 तत्तत्र संवेद्यते, यथा दुःखे सुखादिरूपम्। असंविद्यमानाश्चाकारा नीलादयो विज्ञाने इति व्यापकविरुद्धोपलब्धिः। अलीकत्वेनाकाराणां निश्चितत्वान्नासिद्धता, सपक्षे भावान्न विरु-द्धता। तत्र यदि परमार्थतोऽसंवेदनप्रसङ्गः साध्यते, तदा सिद्धसाधनम्। सामान्येन तदा साध्यधर्मविपर्यये साधनधर्मस्य बाधकप्रमाणाभावात्कथं संदिग्धविपक्षव्यावृत्तिकत्वं हेतोर्न भवेदित्यपि न वक्तव्यम्। यतः सामान्येनैवात्र साध्यते, न चात्रानैकान्तिकता। तथा हि— 15 द्विविधं संवेदनं मुख्यं गौणं च। तत्र मुख्यं यदजडरूपम्। स च ज्ञानस्यैवासाधारणः स्वात्मभूतो धर्मः कथमसतः आकारस्य स्यात्? तथा हि—यदज्ञानरूपं न तस्य मुख्यं संवे-दनमस्ति, यथा आकाशनलिनस्य। अज्ञानरूपाश्चासत्त्वेनोपगता नीलादय आकाराः इति व्यापकविरुद्धोपलब्धिः। गौणमपि न संभवति, यतः स्वाकारनिर्भासज्ञानोत्पादनमेव गौणं संवेदनमुच्यते। तच्चासतः सर्वसामर्थ्यशून्यस्य तुरगविषाणस्येवायुक्तम्, सर्वसामर्थ्यविवेक- 20 लक्षणत्वादसत्त्वस्य। तथा हि—यदसमर्थं न तस्य गौणं संवेदनं यथा तुरगविषाणस्य। असमर्था-श्चासत्त्वेनाभिमता नीलादय आकारा इति व्यापकविरुद्धोपलब्धिः। आकाराणामलीकत्वान्ना-सिद्धो हेतुः, सपक्षे भावान्न विरुद्धः। तदेवं मुख्योपचरिताभ्यामन्योन्यपरिहारस्थितलक्ष-णाभ्यां संवेदनस्य व्याप्तत्वात्, तस्य च व्यापकस्य निवृत्तेः, संवेदनस्यापि तद्व्याप्तस्य निवृत्तिरेव, इति नासत्त्वादित्यस्य हेतोः संवेदनेऽवकाशो नास्तीति नानैकान्तिकत्वम्। ननु 25 मरीच्यादौ जलाद्याकारस्यासतोऽपि संवेदनादनैकान्तिकत्वमेवेति चेत्, न। तत्रापि हि जलाद्याकारो यदि नान्तर्नापि बहिः, तदा तस्यात्यन्तासतः कथं संवेदनं स्यादिति तुल्य एव पर्यनुयोगः। प्रतिबन्धबलेनानुभूयन्ते इत्यपि न वक्तव्यम्। तथा हि न ज्ञानस्वभावता आकाराणाम्, ज्ञानवत् सत्त्वप्रसङ्गात्। अथाकारस्वभावता ज्ञानस्यानुमन्यते, तदा आकारवत् ज्ञानस्यासत्त्वप्रसङ्गः। न च ज्ञानादाकाराणामुत्पत्तिः, नीरूपस्य जन्यरूपासंभवात्। नाप्या- 30 कारेभ्यो ज्ञानस्य, आकाराणामलीकत्वेनार्थक्रियासामर्थ्यविरहात्। न च तादात्म्यतदुत्पत्तिभ्या-मन्यः संबन्धोऽस्ति। ततश्च यस्य येन सह प्रतिबन्धो नास्ति, न तत्तस्मिन् संवेद्यमाने

B 379
W 630
B 380

नियमेन संवेद्यते, यथा ज्ञानात्मनि संवेद्यमाने वन्ध्यासुतः। नास्ति च तादात्म्यतदुत्पत्ति-लक्षणो द्विविधोऽपि प्रतिबन्धो ज्ञानेन सहाभिमतानामाकाराणामिति व्यापकानुपलब्धिः। संबन्धाभावस्य प्रतिपादितत्वान्नासिद्धता, सपक्षे भावान्न विरुद्धता, सर्वसंवेदनप्रसङ्गान्ना-W 631 नैकान्तिकता च हेतोः। ततश्च योऽयमाकारो ज्ञानसमानकालभावित्वेन भवता परिकल्पितः, 5 तस्याहेतुकत्वे कथमपेक्षाभावात् कादाचित्कत्वमित्यभिधानीयमत्र कारणम्। योऽपि मन्यते —अलीकत्वेऽपि यथा भवतां संवृत्या ज्ञानज्ञेययोः प्रतिभासनम्, तथा अस्माकमपि निराकारे तात्त्विके ज्ञाने तदप्रतिबद्धैव अविद्या अलीकापि सती संवृत्या अन्यत्वेऽपि प्रतिभासते इति, तदप्येतेनैव प्रत्युक्तम्। अस्माकं तु संवृत्या ज्ञानमेव ज्ञेयरूपमिति संबन्धस्याभ्युपगतत्वात्तयोः प्रतिभासनमविरुद्धम्। अथ मा भूदयं दोष इति हेतुमत्त्वमभ्युपगम्यते, तदा प्रतीत्यसमुत्पन्न-10 त्वाद्ग्राह्यग्राहकाकारयोः कल्पितत्वाभावात् परतन्त्रतास्वभावः प्रसज्यते। यतो न प्रतीत्यसमुत्पत्ते-रन्यत्पारतन्त्र्यम्। यद्यप्येवं तथापि पारमार्थिकी सत्ता कुतो लभ्यते इति चेत्, उच्यते। तथा हि—विज्ञानस्यापि न प्रत्ययोद्भवात् स्वभावादन्या सत्ता, इत्यतः प्रतीत्योत्पत्त्यविनाभाविनी पारमार्थिकी सत्ता दुर्निवारा। ततश्च पौर्वापर्येण भावाद्यौगपद्येनासंवेदनप्रसङ्गेऽप्युपगताकारा-लीकत्वहानिः स्यात्। अथ यथोक्तोऽप्याकारो नाभ्युपगम्यते, तदा उपलब्धिलक्षणप्राप्तत्वेन B 381 15 अनाकारमेव ज्ञानं सदा सर्वप्राणभृद्भिः संवेद्यते इति प्राप्तम्। स्यादेतत्—संवेद्यते एव, किं त्वनुभूयमानाकारोपजनितविभ्रमबलेनानुपलब्धिलक्षणप्राप्तत्वादर्वाग्दृशाम्, अतोऽनुभूतनि-श्चितोपलम्भवैकल्यान्न तस्योपलम्भोऽस्ति क्षणिकत्ववदिति, तदसत्। तथा हि—यद्यन्तर्बहि-र्वा आकाराः संभवेयुः, तदा तेषां संवेदनोपजनितविभ्रमबलेन संविद्यमानमपि विज्ञानं न निश्चिन्वन्तीति स्यात्। यदा तु नान्तर्न बहिस्ते सन्ति, तदा कस्यानुभवेन विप्रलभ्येरन् 20 येन संवेदयन्तोऽप्यद्वयं न विनिश्चिन्वन्तीति स्यात्? अथ मतम्—भ्रान्तेरयमेव स्वभावो यदलीकाकारसंदर्शनम्। तेन असतोऽप्याकारस्य भ्रान्तिवशात्संवेदनं भविष्यतीति, तदप्य-सम्यक्। तथा हि—भ्रान्तिशब्देन विभ्रमोत्पत्तिवासनाहेतुभूतज्ञानावस्था वा अभिधीयते, W 632 यद्वा तथाविधवासनाप्रभवं भ्रान्तमेव ज्ञानं कार्यरूपम्? तत्र आद्ये पक्षे तत्र हेतावाकाराणा-मप्रतिबद्धत्वात्तद्बलात्तेषां संवेदनमयुक्तम्, अतिप्रसङ्गात्। न चापि तदुत्पत्तिलक्षणः 25 प्रतिबन्धोऽस्त्येवेति युक्तम्, पूर्ववत् परतन्त्रत्वप्रसङ्गात्। अथापि द्वितीयः पक्षः, तत्रापि प्रतिबन्धो भवन् आकाराणां तादात्म्यलक्षणो भवेत् न तदुत्पत्तिलक्षणः, तत्समानकालमनु-भूयमानत्वात्। समानकालयोश्च हेतुफलत्वायोगात्। ततश्च भ्रान्तिवत्तदव्यतिरेकात्परतन्त्र-त्वप्रसङ्गो दुर्निवार इति यत्किंचिदेतत्। स्यादेतत्—भ्रान्तग्राह्यग्राहकाकाराभावात् सुप्ताद्यव-स्थायां स्वसंवित्तिरेकरूपा सत्या भविष्यतीति, तदसत्। मनोविज्ञानस्य धर्मधात्वालम्बन-B 382 30 त्वेऽपि केवलचैतसिकधर्माग्रहणात् कलापपरिच्छेदेन चित्ररूपत्वात्। अथ ग्राह्यग्राहक-भावरहित एव ससंप्रयोगविज्ञानस्कन्धस्य स्वभावो निश्चितः, तथापि चित्रतामेवाभिधावति। तथा हि भ्रान्तिवासना विद्यते इति भवता अभ्युपगम्यते अथ न, इति विकल्पद्वयम्।

यद्याद्य', तदा वितथाकाराभिनिवेशवासनैवाविद्या, सा च वासना शक्तिरुच्यते । शक्तिश्च कारणज्ञानात्मभूतैवेति । तेन पूर्वपूर्वस्मात् कारणभूतादविद्यात्मनो ज्ञानादुत्तरोत्तरकार्यस्य वितथाकाराभिनिवेशिन उत्पत्तेः, अविद्यावशात्तथाख्यातिर्युक्तेति बलाच्चित्रत्वमायातम् । न च समनन्तरप्रत्ययान्नियम इति वक्तव्यम्, यतो यथोक्तमेव ज्ञानं समनन्तरप्रत्यय इति यत्किंचि-देतत् । अथ तत्र वासनात्मिकाः शक्तयो भिन्ना इति चेत्, न । तात्त्विकानेकशक्त्यव्यतिरेकात् 5 शक्तिस्वरूपवद्युगपदनेकत्वं विज्ञानस्यासज्यते । तत्र चोक्तो दोषः । तथैकज्ञानाव्यतिरेकाद्वा शक्तीनामेकत्वं विज्ञानस्वरूपवत् दुर्निवारमिति कथं समनन्तरप्रत्ययभेदः ? अथ नेति द्वितीयः पक्षो मतः, तदा मुक्ताः स्युरयत्नेन सर्वदेहिन इत्यादिप्रसङ्गोऽनिवार्यः । अथ सर्वमेव पृथग्जनस्य ज्ञानमनापन्ननीलाद्याकारोपरागं प्रवर्तते, तत्रैकत्वहानिप्रसङ्गो न भवि-ष्यति । अचित्ररूपत्वात् नीलादिसंवेदनरूपता या तस्य व्यवस्थाप्यते, सा तत्संवेदनरूपत्वात्, 10 W 633 न तु नीलादिरूपापत्तेः । तथा हि आलम्बनग्रहणप्रकार एवाकारो न तु तादृप्यम् । यत्तु नीलादि बहिरिव प्रतिभासमानमालक्ष्यते, तन्न ज्ञानाकारतया, अपि तु ज्ञानं नीलादि-संवेदनमनुभवन् प्रतिपत्ता मोहात्तथा बहीरूपेण नीलादिकमध्यवस्यतीति । एतदपि मिथ्या । तथा हि–यदि नीलादिना सहगतस्य कश्चित् प्रतिबन्धो नास्ति, तदा कथं नीलादिसंवेदनं स्यात् ? न हि तादृप्यव्यतिरेकेणान्यो निरीहस्य ज्ञानस्यालम्बनग्रहणप्रकारोऽस्ति येन 15 B 383 तादृप्यव्यतिरेकेणाकारो व्यवस्थाप्यते, अतिप्रसङ्गात् । अपि तु तादृप्योत्पत्त्यैव ज्ञानस्य सव्यापारता प्रतीयते । स एव तस्यालम्बनग्रहणप्रकार उच्यते । तत्र चोक्तो दोषः । नास्त्येव सर्वथा नीलादिरिति चेत्, नैवम् । तथा हि–यदि नीलादि नान्तर्नापि बहिरस्ति, तत्कथमिदमविकल्पे चेतसि स्फुटतरमनुभूयते इति वक्तव्यम् । न चैतच्छक्यते वक्तुं नैव प्रतिभासते इति । सर्वेषामनुभवसिद्धत्वात्तस्य प्रतिभासस्य । न चापि स्फुटावभासिनो 20 विकल्पविषयता युक्ता, येनोच्यते मूढात्मना तथावसीयते इति । अथैवमप्यनुमन्यते विकल्पे-नावसीयते इति, तदसत् । यस्माद्यदि निराकारमेव सर्वं ज्ञानमनुभूतं तदा तत्पृष्ठभाविनापि विकल्पेन प्रतिनियतस्य नीलादेराकारस्याध्यवसायोऽप्ययुक्त एव, प्रतिबन्धाभावात् । भ्रान्तेरयमेव स्वभाव इति चेत्, उक्तमत्र परतन्त्रत्वप्रसङ्गात् कथं भ्रान्तावस्य प्रतिबन्ध इति । तस्मात्प्रतिबन्धाभावाद्विकल्पविषयतयापि नीलादेरसतः संवेदनानुपपत्तेरयुक्तमेतदिति । 25 यद्येवम्, अस्तु तर्हि अपरिशुद्धावस्थायां चित्रावभासमलीकमेव ज्ञानम्, परिशुद्धावस्थायां भ्रान्तिविगमादद्वयरूपमेवैकस्वभावं भविष्यतीति । उच्यते । यद्यशुद्धावस्थायां सर्वमलीकमेव ज्ञानम्, तदा शुद्धावस्थायां तत् सत्यरूपं कुतो जातमिति वक्तव्यम् । न च अलीकात्सत्य- W 634 रूपस्योत्पत्तिर्युक्ता, तस्यासमर्थत्वात् । सामर्थ्ये वा तदलीकं कथं भवेत् ? तथाविधस्याप्यली-कत्वेऽन्यस्यापि सत्यत्वं कथं भवेत् ? अतो निर्हेतुकमेव तत्स्यात् । तच्चायुक्तम्, नित्यं 30 B 384 सत्त्वादिप्रसङ्गात् । भ्रान्तिविगमादित्यपि न वक्तव्यम् । यदि हि विशुद्धावस्थायां सर्वेषा-माकाराणां निवृत्तिः संभवेत्, तदा संभाव्यते एवैतत् । यावता भ्रान्तिनिवृत्तावपि नाकाराणां

निवृत्तिः संभवति, तत्र तेषां यथोक्तन्यायेन प्रतिबन्धाभावात्। न चाप्रतिबन्धे सति एक-
निवृत्तावपरस्य नियमेन निवृत्तिः, गवाश्वादिवदतिप्रसङ्गात्। अथापि स्यात्—कस्यचिन्निसर्ग-
सिद्धमेवाद्वयज्ञानं प्रपञ्चापगतमेकं भविष्यतीति, तदयुक्तम्। निसर्गसिद्धत्वे हि प्रतिनियता-
श्रयपरिग्रहेणानायत्तत्वान्न तथाविधा सत्ता कस्यचिद्विरमेत्। ततश्च प्रतीत्यादिविरोधो भवेत्।
5 स्यादेतत्—स तादृशो हेतुधर्मो येन पूर्वपूर्वप्रतिपक्षक्षणबलेनोत्पादात् प्रतिनियतकारणायत्त-
स्वभावतया कस्यचिदेव भविष्यतीति। तदेतन्नितरामेव न राजते। यथोदितविधिभिः सर्वस्य
नीरूपतापादनेन परमार्थतः कार्यकारणभावस्यानुपपत्तेरिति यत्किंचिदेतत्। अतो यदा
विचार्यमाणो भावानां न कश्चिदंशरूपोऽपि स्वभाव एकभागरहिततया सिद्धः, तदा अनेकः कथं
सेत्स्यति? तत्समुदयात्मकत्वादनेकत्वस्येति नासिद्धो हेतुः। ननु न सर्वस्य प्रतिभासमानस्यैका-
10 नेकस्वभावरहितत्वेन निःस्वभावत्वं प्रत्यक्षतोऽवभासते, भावविषयत्वादस्य। नाप्यनुमानतः,
व्याप्तेर्ग्राहकस्य प्रत्यक्षस्याभावात्। अनुमानेन च ग्रहणेऽनवस्थानादप्रतिपत्तेः कथं सिद्धो
हेतुरिति चेत्, न। तथा हि—समुदितानुमानविधिभिर्निःस्वभावत्वमेकस्वभावरहितत्वेन
व्याप्तमिति प्रतिपादितम्। तेषां च मध्ये कस्यचिदनुमानस्य प्रत्यक्षेण व्याप्तिः, कस्यचित्
प्रत्यक्षगृहीतव्याप्तिकेनानुमानेन गृह्यते इति यथास्वं प्रमाणेन निश्चितपक्षधर्मग्रहणात्कुतोऽन-
15 वस्था? सपक्षे भावान्न विरुद्धः। तथा हि—यदि यथोक्तहेतुः साध्यविपर्ययसाधनात् पारमार्थिक-
स्वभावे वर्तेत, तदा तादात्म्यतदुत्पत्तिभ्यां तत्र प्रतिबद्धोऽन्यत्र विचारविमर्दासहिष्णुत्वेन
तात्त्विकरूपविरहिणि मायादिरूपे कथं वर्तितुमुत्सहेत? भावधर्मत्वहानिप्रसङ्गादिति कथं
प्रसिद्धदृष्टान्तं प्रति विरुद्धता हेतोः? अथ मतम्—मां प्रति दृष्टान्त एवोभयधर्मानुगतो न
सिद्धो विज्ञानरूपेण मायादीनां वस्तुसत्त्वेनाभ्युपगमात्, अतोऽनैकान्तिकता हेतोरिति,
20 तदसत्। तथा हि—विज्ञानानां सर्वेषामेव वस्तुत्वेनाभिमतानां यथोदितानुमानविधिभि-
र्नैःस्वाभाव्यं प्रतिपादितम्। ततो न स्वेच्छाबलेन वस्तूनां तथा भावो लक्ष्यते, येन प्रमाण-
बाधितस्यापि मायादेर्विज्ञानरूपेण सिद्धत्वादसिद्धो दृष्टान्तः स्यादिति न किंचिदेतत्।
स्यादेतत्—पक्षसपक्षयोः सत्त्वे सिद्धेऽपि कथं विपक्षाद्व्यावृत्तिर्निश्चीयते हेतोः, येन संदिग्ध-
व्यतिरेकदोषदुष्टता न भवतीति? उच्यते। यद्रूपव्यवच्छेदनान्तरीयकपरिच्छेदनं हि यत्,
25 तत् तत्परस्परपरिहारस्थितलक्षणम्। तद्यथा—भावोऽभावव्यवच्छेदनान्तरीयकपरिच्छेदः।
परस्पररूपव्यवच्छेदनान्तरीयकपरिच्छेदे च एकत्वानेकत्वे, तस्मात् परस्परपरिहारस्थित-
लक्षणे इति। यौ च परस्परपरिहारस्थितलक्षणौ तावेकविधानस्यापरप्रतिषेधनान्तरीय-
कत्वाद्राश्यन्तराभावं गमयतः, तद्यथा भावाभावौ। ते अन्योन्यपरिहारस्थितलक्षणे च एकत्वाने-
कत्वे, तस्माद्राश्यन्तराभावादेकत्वानेकत्वाभ्यां स्वभावः क्रोडीकृत इति साध्यविपर्यये हेतो-
30 रस्त्येव व्यतिरेकः। कुतो यथोक्तदोषावकाशः? ननु च अत्र प्रतिज्ञार्थैकदेशत्वादसिद्धो हेतुः,
यस्मादेकानेकयोः स्वभावप्रभेदरूपत्वात् तद्विपर्यययोरपि साध्यसाधनयोरभेद एव। ततश्च
यदि साध्यमसिद्धम्, हेतुरपि तदभिन्नस्वभावत्वादसिद्धः। अथ हेतुः सिद्धः तदा निःस्वभाव-

B 385
W 635
B 386

वत्वमपि भावानां सिद्धम्। न ह्येकानेकत्वविरहिणि शशविषाणादौ कश्चिद्भावस्वरूपता- W 636
मभ्युपैतीति चेत्, तदसत्। तथा हि—हेतुस्तावद्यथा सिद्धः, तथा विस्तरेण प्रतिपादितम्।
तस्मिन् सिद्धेऽपि यदि नाम विधिरूपतया साध्यते नैःस्वाभाव्यम्, तथापि वस्त्वभिनिवेशस्य
दुस्त्यजतया तत्त्वतः समस्तवस्तुव्यापिनैःस्वाभाव्ये निश्चयाद्यनुत्पादाद्वयामूढं प्रति सर्वभावानां
निःस्वभावताव्यवहारयोग्यताप्रसाधनान्न प्रतिज्ञार्थैकदेशता हेतोर्यथोपलब्धिलक्षणप्राप्तानुप- 5
लम्भेन नास्तित्वस्येति अचोद्यम्। अथ मूढं प्रति नैःस्वाभाव्यमेव तावत्साधयितव्यं व्यवहारार्थ-
मित्यभिनिविश्यते, तत्राप्युच्यते—यदा त्वेकानेकत्वयोः स्वभावव्यापकयोर्निवृत्त्या वृक्षनिवृत्त्या
शिंशपानिवृत्तिवद्भाविकी स्वभावनिवृत्तिः साध्यते, तदा कुतः प्रतिज्ञार्थैकदेशता हेतोः? न हि
व्याप्यव्यापकवृत्तिवचनयोर्भिन्नव्यवच्छेदरूपयोः पर्यायत्वम्, न चापर्यायरूपस्य प्रतिज्ञार्थैक-
देशत्वमिति यत्किंचिदेतत्। ननु परमार्थत इति विशेषणमनर्थकम्। तथा हि—अविसंवादको 10
न्यायः परमार्थ इति परमार्थशब्देन त्रिरूपलिङ्गजनिता बुद्धिरभिधीयते, तदा तस्या अपि
संवृतिरूपत्वात् कथं परमार्थत्वम्? यदि च तद्वशाद्भावानां निःस्वभावत्वं व्यवस्थाप्यते,
तदा तस्याश्च बुद्धेः कुतो व्यवस्थापनीयम्? न तत एव स्थापयितुं युक्तम्, स्वात्मनि
वृत्तिविरोधात्। नापि प्रमाणान्तरतः, अनवस्थाप्रसङ्गात्। अथ तामेकां बुद्धिं मुक्त्वा B 387
व्यवस्थाप्यते, न तर्हि सर्वविषयनैरात्म्यं प्रतिपादितं भवतीति। सात्वेतत्, किं तु 15
सकलप्रपञ्चपरिवर्जितपरमार्थस्यानुकूलत्वाद्यथोक्तबुद्धेः परमार्थत्वम्। निःस्वभावतापि च तत
एव। न च स्वात्मनि वृत्तिविरोधः, सामान्यरूपेण सर्वधर्माणां निःस्वभावताव्यवस्थापनात्।
तत्र च सामान्यलक्षणे तद्बुद्धिस्वरूपस्यान्तर्गतत्वात् यथा सर्वधर्मेषु सत्त्वादिभ्यो हेतुभ्यो
विनाशित्वप्रत्ययो भवन् नात्मानं विरहय्य भवतीत्यचोद्यम्। ननु समारोपिततात्त्विकोत्पत्त्या-
द्याकाररहिततया अविचारैकमनोहरो भावस्वभाव एव निःस्वभावताशब्देनोच्यते। तस्य च 20
भावस्वभावस्य प्रत्यक्षत्वात्तत्स्वभावभूतापि निःस्वभावता प्रत्यक्षैव घटविविक्ते भूतल इवोप- W 637
लब्धे तदात्मभूतो घटविवेकः। अन्यथा भिन्नयोगक्षेमत्वादव्यतिरेकता अवहीयते। ततश्च
भावो निःस्वभावो न स्यात्, असंबन्धान्निःस्वभावतायाः। न च तदुत्पत्तिलक्षणः संबन्धः,
अवस्तुत्वेनाकार्यत्वात्तस्याः, तस्माद्बालैः सा न प्रत्यक्षतोऽवसीयते इति प्रत्यक्षबाधा। तथा उप-
लब्धिलक्षणप्राप्तानुपलब्ध्या घटवदभावव्यवहारयोग्यत्वान्नास्त्येव निःस्वभावतेत्यनुमानबाधा। 25
शशिन्यचन्द्रत्ववदागोपालजनस्य निःस्वभावताप्रतीतिवैकल्यात्प्रतीतिबाधापि दुर्निवारैवेति
चेत्, तदसत्। तथा हि—समारोपिताकारविविक्तता भावानां निःस्वभावतोच्यते। सा च
भावस्वभावग्रहणेन गृहीतापि क्षणिकत्ववदभ्रान्त्या समारोपिततत्त्वोत्पत्त्याद्याकारतिरस्कृत-
रूपत्वान्न बालैर्निश्चीयते। अतो निश्चयानुपपत्तेः प्रत्यक्षताया अभावान्न प्रत्यक्षबाधा। तथा
गृहीतापि व्यवहारायोग्यत्वादगृहीतकल्पैवेति नोपलब्धिलक्षणप्राप्तत्वमस्याः, ततो नानुमान- 30 B 388
बाधा। परमार्थत इति विशेषणाच्च भावप्रतीतेरनपह्नवेन प्रतीतिबाधा नास्त्येवेति यत्किंचि-
देतत्। निर्बीजभ्रान्तेरयोगात् कथं तया समारोपित आकार इत्यपि न वक्तव्यम्। यतः

सत्येन सह अलीकाया भ्रान्तेः कः संबन्धः? न तावत् तत्स्वभावता, सत्यालीकयोर्विरोधात्। नापि तदुत्पत्तिः, अलीकस्याकार्यत्वात्। अतः सांवृतमेव कारणं पूर्वमुपादानमस्या न विरुध्यते। तस्यापि कारणस्य अपरं सांवृतमेव पूर्वं कारणम्। एवंविधहेतुपरंपरायाश्चानादित्वान्न कदाचिन्निरुपादाना भ्रान्तिः। कथं प्रतिनियम इति चेत्, उच्यते। तात्त्विकभावस्वरूपवत्

5 सांवृतस्याप्ययमेव स्वभावोऽपरसांवृतकारणाधीनो यत्प्रतिनियतसांवृतकार्यकारणं नाम। कथं तर्हि सांवृतमिति चेत्, अर्थक्रियासमर्थमेव हि वस्तु विचारविमर्दाक्षमत्वात् सांवृतमित्युच्यते।

W 638 तथा हि–तथ्यातथ्याभ्यां सर्व एव राशिर्व्याप्तः, तयोरन्योन्यपरिहारस्थितलक्षणत्वात्। तथ्यरूपतायां च निषिद्धायां सामर्थ्यादितरत्रावस्थानमेषामापतितम्। अतः स्वयमेवेदं रूपं सर्वभावैः स्वीकृतमित्यदोषः। ननु हेतुमन्तरेणेष्टार्थासिद्धेः सर्वधर्मनैःस्वाभाव्यप्रसाधनाय हेतोः

10 परिग्रहं कुर्वतां तस्य सत्ता अभ्युपगता, सर्वधर्मनैःस्वाभाव्यप्रतिज्ञया च असत्तेति परस्परविरोधात् स्वमातृवन्ध्यात्वप्रतिज्ञावत् स्ववचनविरोधः। यतो न हेतोः स्वत एव निःस्वभावता सिध्यति, स्वात्मनि कारित्रविरोधात्। नाप्यन्यतः, अनवस्थाप्रसङ्गादिति चेत्, न। निःस्वभावतापि च तत एवेत्यादिनोक्तोत्तरत्वात्। एवं निःस्वभावत्वेऽपि

B 389 संवृत्या कर्मफलसंबन्धव्यवस्थापनेन आगमविरोधस्याभावात्तद्विरोधोऽपि नोद्भावनीयः।

15 अथ मतम्–निःस्वभावतावादिनः सर्वार्थाभावादाश्रयासिद्धतादयो दोषा दुर्निवारा इति, तदसत्। तथा हि–सर्व एव अनुमानानुमेयव्यवहारः परस्परपराहतसिद्धान्ताहितधर्मभेदपरित्यागेन आबालजनप्रतीतं धर्मिणमाश्रित्य प्रवर्तते। तत्प्रतिबद्धो हेतुः सिद्धः, तथा दृष्टान्तोऽपि। अन्यथा यदि सिद्धान्ताश्रितो हेतुर्धर्मी दृष्टान्तो वा स्यात्, तदैकसिद्धान्तप्रसिद्धविशेषणविशिष्टो धर्मी विवादास्पदीभूतत्वादपरस्यासिद्ध इति विशिष्ट-

20 धर्मिणोऽसिद्धेराश्रयासिद्धो हेतुः स्यात्। तथा स्वरूपासिद्धौ दृष्टान्तधर्मिणश्चासिद्धिरिति सर्वथैव धूमसत्त्वादिभ्यो दहनानित्यतादिप्रतीतिवैकल्यात् साध्यसाधनव्यवहारोच्छेदः स्यात्। अविज्ञानादिरूपपरावृत्तज्ञानमात्रादेः कस्यचित् सिद्धत्वादिति यत्किंचिदेतत्। स्यादेतत्–यो हि प्रतिभासमानं धर्मिणमाश्रित्य समारोपिताकारनिषेधनाय साधनं प्रयुङ्क्ते, तस्याश्रयासिद्धतादयो दोषा नावतरन्ति। त्वया तु प्रतिभासमान एव धर्मी निषिध्यते। तत्कथ-

25 माश्रयासिद्धतादयस्ते नावतरन्तीति? नैवम्। तथा हि–परमार्थत इति विशेषणात्, प्रतिभासमाने धर्मिणि समारोपितभाविकस्वभावनिषेधः साध्यते, न तु धर्मिस्वरूपनिषेध

W 639 इति समानम्। अथ मतम्–पारमार्थिकश्चेत् स्वभावो निषिद्धः, किमपरमवशिष्यते तस्य धर्मिणो रूपं यत्प्रतिभासेतेति? तदप्यसत्। न हि पारमार्थिकस्वभावत्वेन प्रतिभासो व्याप्तः येन तन्निवृत्तौ निवर्तेत। अलीकस्यापि द्विचन्द्रकेशोण्डुकादेर्भासनात्। न

B 390 30 चैतच्छक्यते वक्तुम्–यद्यपि द्विचन्द्रादयो बहीरूपतया अलीकाः, ज्ञानरूपतया तु ते पारमार्थिका एवेति प्रतिभासनं युक्तमिति चित्ररूपतया देशस्थतया च तेषां प्रतिभासनात्। न हि ज्ञानमेकं चित्रं युक्तम्, एकत्वहानिप्रसङ्गात्। अनेकज्ञानोत्पत्तेश्च पूर्वं निषिद्धत्वात्

नापि देशस्थममूर्तत्वात् । तस्मान्न द्विचन्द्रादयः पारमार्थिकाः । तथा च प्रतिभासन्ते इति न पारमार्थिकस्वभावनिवृत्तौ प्रतिभासनता विरुध्यते इति तात्त्विको भावाभ्युपगमो न कार्यः । नाप्यभावाभ्युपगमः, भावनिवृत्तिलक्षणत्वात्तस्य । भावासिद्धौ निर्विषयस्य नञोऽप्रयोगेणासति निषेध्ये निषेधस्याप्रवर्तनात्, तत्पूर्वकस्य तस्याप्यसिद्धेरैकान्तिकभावाभावपक्षभाविनो दोषा नास्मानुपालीयन्ते । ततश्च अन्योन्यव्यवच्छेदरूपत्वादेकप्रतिषेधनान्तरीयकमपरधर्मिविधानं 5 बलादापतितमिति यदुच्यते, तदसंगतम्, तत्त्वतो भावरूपस्य व्यवच्छेद्यस्याभावात् । एवं च भावाभावस्वरूपाभावे साक्षात्पारंपर्येण वा ज्ञानज्ञेययोरप्रतिबद्धवृत्तित्वान्न तद्विषयो विकल्पः सर्वथा तात्त्विक इति सिद्धम् । न च मन्तव्यम्—अनादिवासनोद्भूतो भावाभावस्वरूपाभावेऽपि तद्विषयो विकल्पः शशविषाणादिविकल्पवदुपजायते इति । तथा हि—यदि नाम बाह्ये वस्तुनि न प्रतिबद्धः, तथापि पूर्वके ज्ञाने तदव्यतिरिक्तवासनाप्रबोधेनो- 10 त्पादनात्तदुत्पत्तिलक्षणः प्रतिबन्धोऽस्यास्त्येव । तथा समानकालभाविनि ज्ञाने तदव्यतिरिक्तत्वेन तादात्म्यलक्षण इति विकल्पारूढप्रतिबिम्बस्य केनचित् प्रकारेण विधिप्रतिषेधाभ्यां व्यवहारः । अतो यथोदितविधिना वासनाप्रभवज्ञानाभावेन तत्प्रतिबिम्बविरहाद्विकल्पानुत्पत्तेः कुतो भावाभावस्वरूपाभावे विकल्प इति वक्तव्यम् । एतेन यदेके वर्णयन्ति—प्रेक्षावतः प्रमाणोपपन्नेऽर्थे सत्यत्वेनाभिनिवेशोऽन्यत्रालीकत्वेन युक्तः, अन्यथा 15 प्रेक्षावत्त्वहानिप्रसङ्गात् । अतः सत्यालीकत्वाभिनिवेशस्य दुस्त्यजतया कथं सर्वविपर्यासप्रहाणमिति? तदपि प्रत्युक्तम् । अभिनिवेशस्य ज्ञानादव्यतिभिन्नमूर्तित्वात्तदभावे कथमभिनिवेशस्य युक्तरूपतेति । तदेवं भावाभावविकल्पाभ्यां सर्वविकल्पस्य व्याप्तत्वात्, व्यापकाभावे व्याप्यस्यासंभवात्तत्त्वतो भावाभावपरामर्शरहितानविचाररमणीयान् अन्तर्बहिःसारविरहिणः कदलीस्कन्धनिभान् सर्वभावानेव सर्वाकारज्ञताद्यष्टाभिसमयक्रमेण प्रज्ञा- 20 चक्षुषा निरूपयतो भावनाबलनिष्पत्तौ केषांचित् मणिरूपादिज्ञानवदुत्सारितसकलभ्रान्तिनिमित्त एव स्वतःप्रमाणभूतो यथाभूतार्थग्राहित्वात् मायोपमाद्वयज्ञानात्मसंवेदनो विशुद्धसांवृतकारणनिर्जातः सर्वविपर्यासप्रहाणादुरुकरुणाप्रज्ञास्वभावः सांवृतो ज्ञानालोकः समुपजायते, प्रतीत्यसमुत्पादधर्मतया यथा न पुनः कल्पनाबीजं प्रादुर्भवति । एवं च यदुच्यते कैश्चित्—विद्यया अविद्याक्षयः, विद्या च यथार्थज्ञानम् । ताथागतमपि यदि ज्ञानं भवतां 25 सांवृतम्, तस्मादविद्यारूपत्वाद्विद्यायाः समुत्पादाभावे कथमविद्याविनिवृत्तिः? यावच्च अविद्या न प्रहीणा, तावत्कथं मुक्तिरिति? तदसंगतम् । तथा हि नित्यत्वादिसमारोपितधर्मप्रतीतिरविद्या । तद्विपरीतप्रमाणाबाधितधर्मप्रतीतिस्तु विद्येति विपर्यासाविपर्यासनिबन्धनं तयोर्व्यवस्थानमतिप्रतीतम् । अतः सांवृतत्वेऽपि विरुद्धधर्मोदयाद्यथाभूतपदार्थावगमेन विपर्यासनिवृत्तौ कुतस्तन्निबन्धनमविद्यात्वं येन तदप्रहाणान्मुक्तिरसंगतेति यत्किंचिदेतत् । तदेवं कस्यचित् 30 पारमार्थिकस्य भावस्य प्रज्ञाचक्षुषा अदर्शनमेव परमं तत्त्वदर्शनमभिप्रेतम्, न तु निमीलिताक्षजात्यन्धादीनामिव प्रत्ययवैकल्यादमनसिकारतो वा यददर्शनम् । ततो भावादिविपर्यास-

B 391 W 640

B 392

W 641 वासनाप्रहाणाभावादसंज्ञिसमापत्त्यादिव्युत्थितस्येव भावादिविपर्यासवासनाप्रभवक्लेशज्ञेयावरणस्योत्पत्तेरमुक्त एव योगी भवेत्। यस्माच्च यथोक्तमेव तत्त्वज्ञानं मुक्त्यावाहकं नान्यथा, अतिप्रसङ्गात्, अतः प्रागुक्तमेव परमतत्त्वदर्शनं ग्राह्यम्, तेन सर्वदोषविरोधिनैरात्म्यदर्शने प्रत्यक्षीकृते सति तद्विरुद्धत्वात् क्लेशावरणं ज्ञेयावरणं च प्रहीयते। अतः प्रतिबन्धाभावा-
5 द्रविकिरणवदपगतमेघाद्यावरणे नभसि सर्वत्र प्रतीत्यसमुत्पन्ने वस्तुनि तत्त्वोत्पत्त्यादिकल्पनारहितेऽव्याहतो योगिप्रत्यक्षो ज्ञानालोकः प्रवर्तते। तथा हि—वस्तुस्वभावप्रकाशरूपं विज्ञानम्। तच्च संनिहितमपि वस्तु प्रतिबन्धसद्भावान्न प्रकाशयेत्। प्रतिबन्धाभावे सति अचिन्त्यशक्तिविशेषलाभात् किमिति सकलमेव वस्तु न प्रकाशयेत्? अतः संवृतिपरमार्थरूपेण सकलस्य वस्तुनो यथावत्परिज्ञानात् सर्वाकारज्ञत्वमवाप्यते। अतोऽयमेव सर्वावरणप्रहाणे सर्वाकार-
10 ज्ञत्वाधिगमे च परमः पन्थाः। विशेषस्त्वयं योगिनां पृथग्जनेभ्यः—ते हि मायाकारा इव मायायां यथावत् प्रसिद्धमात्रासत्यतापरिज्ञानान्न भावान् सत्यतोऽभिनिविशन्ते, तेन ते योगिन इत्युच्यन्ते। ये तु तां मायां बालप्रेक्षकजनवत् सत्यत्वेनाभिनिविष्टाः, तद्वद्भावमपि, ते विपरीताभिनिवेशाद्बाला उच्यन्ते इति सर्वमविरुद्धम्। ततश्च युक्त्यागमाभ्यां परिविदित-
B 393 मायोपमाद्वयचित्तास्तत्त्वातत्त्वावबोधाभ्युद्यतमतयोऽद्वयं मायोपमं चित्तं तथ्यसंवृतिरूपमेव
15 श्रुतचिन्तामयेन ज्ञानेन व्यवस्थाप्य प्रतीत्यसमुत्पादधर्मतया सर्वाकारज्ञताद्यष्टाभिसमयक्रमेण सादरनिरन्तरदीर्घकालविशेषभावनया भावयन्तः संहृतसकलविकल्पमाभवमनुबद्धं मायोपमाद्वयविज्ञानमात्रप्रबन्धमासादयन्ति योगीशाः। स एव मुख्यः प्रतिपक्षः। प्रथमं तु मायोपममिति साभिजल्पं विज्ञानं व्यवस्थापकं तदनुगुणम्, न तु मुख्यप्रतिपक्षभूतम्। तथा हि—बाह्यार्थनये पुद्गलनैरात्म्यादिभावनापि न वस्तुरूपं चेतस्यवस्थाप्य क्रियते। वस्तुनो निर्विकल्पज्ञान-
20 समधिगम्यत्वात्, तस्य चादावसंभवात् भावे भावनावैयर्थ्यप्राप्तेः, तस्मात्तत्राप्ययं परो नाममात्रानुस्यूतविकल्पप्रतिबिम्बे तत्त्वावधानानुकूल्यभाजिवस्त्वध्यवसायी संतुष्यति। तदत्र नामाकाराभ्यासात् कथं जल्पो न विवर्धितो भवति? स्तिमितान्तरात्मनः क्रमेण विकल्पसंहार इति चेत्, तदेतदितरत्रापि समानमित्यलमतिप्रसङ्गेन ॥

तदेवं सर्वाकाररमणीयतथतानिर्देशस्य माहात्म्यख्यापनाय धर्मताबलान्निमित्तमुत्पन्न-
25 मित्याह—**अस्यां खलु पुनः** इत्यादि। षड्विकारमष्टादशमहानिमित्तमिति क्रियाविशेषणत्वादेकवचनम्। तत्र च [ षट्सु विकारेषु ] द्वौ विकारौ भाजनलोके, अभिसंस्कृतामनभिसंस्कृतां च पृथिवीमधिकृत्य यथासंख्यं चलनमुन्नमनं च। सत्त्वलोके चतुर्विधसत्त्वनिकायमकुशलिनं नानादेवताधिमुक्तं मानिनं विद्यावन्तं चाधिकृत्य यथाक्रममवनमनमूर्ध्वगमनमधोगमनं घोषो-
B 394 न्नदनं च। अष्टादशमहानिमित्तानि पुनरेषामेव षण्णां विकाराणां मृदुमध्याधिमात्रक्रिया-
30 भेदेनाकम्पत् यावत्संप्रागर्जदित्यर्थनिर्देशाद्भवन्ति। अथवा मध्यादुन्नमति अन्तेऽवनमतीत्येकः। अयमेव च विपर्ययेण द्वितीयः। तथा हि—पूर्वा दिगुन्नमति अपरा दिगवनमतीति तृतीयः। अयमेव विपर्ययाच्चतुर्थः। तथा दक्षिणा दिगुन्नमति उत्तरा दिगवनमतीति पञ्चमः। अयमेव

विपर्ययेण षष्ठ इति षड् विकारा भवन्ति। अष्टादशमहानिमित्तानि पुनस्तथैवावगन्तव्यानि। उपसंहरन्नाह—**एवं हि** इत्यादि। तथागतमनुजात इति एवं सर्वज्ञताकारानुजातत्वेनानुजातः। W 643 अजातिस्वभावं कथयन्नाह—**पुनरपरं सुभूतिः स्थविरो न रूपम्** इत्यादि। तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि** इत्यादि। सुगमम्। **एवं हि** इति। एवं मायोपमत्वात् मार्गज्ञताकारानुजातत्वेन तथागतमनुजातः। तथतानुपलम्भस्वभावं निर्दिशन्नाह—**गम्भीर-** 5 **चर्येयम्** इत्यादि। सर्वाकारज्ञताकारस्वभावानुपलम्भात्तथता गम्भीरचर्या। साधूक्तत्वेनानुवदन्नाह—**एवमेतत्** इत्यादि। भगवतां न विफला धर्मदेशनेत्याह—**अस्मिन्** इत्यादि। W 644 **पूर्वपरिकर्मकृतैः** इति संभारभूम्यादौ समुपार्जितपुण्यज्ञानसंभारैः पूर्वपरिकर्मभिः कृता निष्पादिता ये तैर्मायोपमधर्मभावनायां क्षान्तिरधिमुक्तिः प्रतिलब्धेत्येके। सर्वत्रगधर्मधातुप्रतिवेधादनुत्पत्तिकधर्मक्षान्तिरधिगतेत्यपरे। केन कारणेन महायानप्रवृत्तानां हीनयानावकाशो 10 भवतीत्याह—**को भगवन् हेतुः** इत्यादि। तत्र हेतुरुपादानकारणं प्रत्ययः सहकारिकारणम्, प्रज्ञोपायकौशल्यवैकल्यं कारणमित्याह—**एतैः शारिपुत्र** इत्यादि। उपचयार्थमाह—**किंचापि** इत्यादि। स्पष्टार्थं च दृष्टान्तमाह—**तद्यथापि** इत्यादिना। पक्षिणः शकुनेरिति पक्षौ B 395 W 645 द्वावस्येति पक्षी, नरोऽपि मित्रारिपक्षसद्भावात् पक्षी स्यादिति शकुनिग्रहणम्। शिवादिरपि शकुनिः स्यादिति पक्षीति वचनम्। **नो हीदम्** इत्यादिवचनं निर्युक्तिकमेवेति तत्कस्य 15 W 646 हेतोः इत्याशङ्क्याह—**गुरुद्रव्यस्योर्ध्वप्रदेशात्** पाते वस्तुधर्मत्वेन नियमात्। क्षतत्वादिकमाह—**एवं ह्येतत्** इत्यादि। दार्ष्टान्तिकार्थमाह—**एवमेतत्** इत्यादि। **पतति** इति दानादिप्रयुक्तस्यापि प्रज्ञापारमितोपायकौशल्यप्रयोगमन्तरेण श्रावकादिभूमौ पातो भवति। अनेन च तदुभययोगस्य निर्याणे प्राधान्यमावेदितम्। यथानिर्दिष्टं षोडशप्रकारमेव स्वभावलक्षणं ग्राह्यम्। तथा चोक्तम्— 20

> **क्लेशलिङ्गनिमित्तानां विपक्षप्रतिपक्षयोः।**
> **विवेको दुष्करैकान्तावुद्देशोऽनुपलम्भकः॥** २९॥
> **निषिद्धाभिनिवेशश्च यश्चालम्बनसंज्ञकः।**
> **विप्रत्ययोऽविघाती च सोऽपदागत्यजातिकः॥** ३०॥
> **तथतानुपलम्भश्च स्वभावः षोडशात्मकः।** 25
> **लक्ष्मेव लक्ष्यते चेति चतुर्थं लक्षणं मतम्॥** ३१॥ इति॥

यथोक्तप्रयोगपरिज्ञानं मोक्षभागीयकुशलमूलवत एवेति मोक्षभागीयं वक्तुमाह—**पुनरपरं शारिपुत्र बोधिसत्त्वः** इत्यादि। तत्राभिमुखीकरणात् समन्वाहरति। निश्चयप्रभावेनावधारयति। **निमित्तयोगेन** इति एकान्ताभिनिवेशयोगेन। लौकिकलोकोत्तरज्ञानाभ्यामनवगमान्न जानाति, न पश्यतीति योज्यम्। **परिणामयितुमिच्छति** इति। **शून्यतैवानुत्तरा** 30 **सम्यक्संबोधिः** इति परिणामनात्। पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह—**एवं हि**

W 647 B 396

इत्यादि । मोक्षभागीयनिर्देशाधिकाराद्व्यतिरेकनिर्देशेनेदमुक्तं स्यात् । अनिमित्तालम्बन-
ज्ञानाकारेण दानादिसर्वबुद्धधर्माणां स्वसंताने प्रादुर्भावात् समुदागमे कर्तव्ये यत् कौशलं
प्रज्ञापारमितोपायलक्षणम्, तदस्मिन् सर्वाकाराभिसंबोधे मोक्षभागीयमिष्टम्। मोक्षोऽत्र विसंयोग-
W 648 विशेषः, तद्भागहितत्वात् मोक्षभागीयम्, प्रथमतः सर्वाकाराभिसंबोधात्मके शासनेऽवतारहेतु-
5 भूतं श्रुतचिन्तामयम् । अतः प्रज्ञोपायकौशलविरहाद्भूमिद्वये पात इति । तथा चोक्तम्—

**अनिमित्तप्रदानादिसमुदागमकौशलम् ।**
**सर्वाकारावबोधेऽस्मिन् मोक्षभागीयमिष्यते** ॥ ३२ ॥ इति ॥

कौशलमेवं स्पष्टयन्नाह—**यथा अहम्** इत्यादि । भाषितस्येति स्थास्यत्ययं श्रावकादि-
भूमाविल्यस्य यथा अहमर्थमाजानामि, तथा बहुपुण्यसंभारादिनापि महाबोध्यधिगमे संशयो
10 भवति । कथं तर्हि प्राप्यते इत्याह—**तस्मात्तर्हि** इत्यादि । प्रज्ञापारमिता भावयितव्या,
उपायकौशलेन च भवितव्यमिति । तत्र प्रज्ञापारमिता सर्वाकारैर्निखिलधर्मपरिज्ञानम् ।
उपायो बुद्धादिविषये श्रद्धा । दानादौ वीर्यम् । कल्याणकामतादेः स्मरणम् । कर्मकर्तृ-
क्रियानुपलम्भश्च समाधिः । तदेवमिन्द्रियार्थाभावादनिन्द्रियस्वभावश्रद्धावीर्यस्मृतिसमाधिप्रज्ञा-
स्वभावं पञ्चप्रकारं मोक्षभागीयं कुशलमूलमुपार्जनीयमित्युक्तं भवेत् । तथा चोक्तम्—

B 397 15 **बुद्धाद्यालम्बना श्रद्धा वीर्यं दानादिगोचरम् ।**
**स्मृतिराशयसंपत्तिः समाधिरविकल्पना** ॥ ३३ ॥
**धर्मेषु सर्वैराकारैर्ज्ञानं प्रज्ञेति पञ्चधा** । इति ॥

W 649 साधूक्तत्वेनानुवदन्नाह—**एवमेतत्** इत्यादि । एवमपि न सर्वैरनुत्तरा सम्यक्संबोधिः
W 650 श्रद्धादिभिः प्राप्येत्याह—**गम्भीरा** इत्यादि । मध्यैः श्रद्धादिभिरप्राप्यमाणत्वाद्दुरभिसंभवा ।
20 मृदुभिस्तैरेव अनधिगम्यमानतया परमदुरभिसंभवा । तथैवानुवदन्नाह—**एवमेतद्देवपुत्राः**
इत्यादि । **दुःप्रज्ञैः** इत्यादि । सर्वाकारधर्मपरिज्ञानविरहाद्दुःप्रज्ञाः । दानादिविषयवीर्यवैकल्येन
हीनवीर्याः । सर्वाविकल्पनसमाधिवियोगेन हीनाधिमुक्तिकाः । बुद्धाद्यालम्बनश्रद्धाभावादनु-
पायकुशलाः । हितवस्त्वादिस्मरणवैधुर्यात् पापमित्रसंसेविनः । अनेनेदमुक्तं स्यात्—धर्मतेयं
यतोऽधिमात्रैः श्रद्धादिभिः सम्यक्संबोधिः सुबोधा, मृदुभिस्तैरेव दुर्बोधेत्यर्थादिदमाक्षिप्तम् ।
25 मध्यैः प्रत्येकबोधिर्मृदुभिः श्रावकबोधिरिति । तथा चोक्तम्—

**तीक्ष्णैः सुबोधा संबोधिर्दुर्बोधा मृदुभिर्मता** ॥ ३४ ॥ इति ॥

परमार्थसत्याश्रयेण दुरभिसंभवत्वं विघटयन्नाह—**यद्भगवानेवम्** इत्यादि । कथमिति
क्षेपेणैवेत्यर्थः । कथं न किंचिदभिसंबुध्यते इति तत्कस्य हेतोः इत्याशङ्क्याह—**शून्यत्वात्**
W 651 इति । अनुत्पन्नत्वादभिसंबोद्धव्यो धर्मो नास्तीत्यर्थः । तदेव स्पष्टयन्नाह—**तथा हि भगवन्**
B 398
30 इत्यादि । **प्रहाणाय** इति क्लेशानामानन्तर्यमार्गेण प्रहाणार्थम् । **अभिसंबुध्येत अभिसंबोद्ध-
व्यम्** इति विमुक्तिमार्गावस्थायाम् । **आजानीयादाज्ञातव्यम्** इति विशेषमार्गेण । **अनेनापि**

इति कर्तृकर्मक्रियानुपलम्भेनापि । शून्यत्वेऽपि स्वभिसंभवत्वं नास्तीत्याह–**असंभवत्वात्** इत्यादि । तत्र हेतोरसत्त्वादसंभवत्वम्, कार्याभावादसद्भूतत्वम् । ततो लौकिकलोकोत्तर-ज्ञानाविषयत्वाद्यथाक्रममविकल्पितत्वमविठपितत्वमिति पदद्वयं योज्यम् । इदमुक्तं भवति–धर्माणामनुत्पन्नत्वेन ज्ञानाविषयत्वात्कथं स्वभिसंभवा अनुत्तरा सम्यक्संबोधिः ? किं तर्हि एवं धर्माधिमोक्षेऽपि पुण्यज्ञानसंभारमुपार्ज्य योगिसंवृत्या मायापुरुषेणेवाधिगम्यमानत्वाद्दुरभिसं- 5 भवेति । एतदेवोपोद्बलयन्नाह–**शून्यमित्यनेनापि** इत्यादि । तथैव तत्कस्य हेतोः इत्याशङ्क्याह–**न ह्यायुष्मन्** इत्यादि । **अभिसंभोत्स्ये** इति । शून्यत्वेनाकाशस्वभावस्य बोधिसत्त्वस्याह-मभिसंभोत्स्ये इत्येवं प्रयोगाभावादेव दुरभिसंभवेत्यर्थः । **एवं च** इत्यादि । निःस्वभावा एवाभि-संबोद्धव्याः । पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह–**आकाश** इत्यादि । धर्मा यस्मादाकाशसमाः, तथा चोत्पादवैधुर्याद्दुरभिसंभवा बोधिरित्यर्थः । संवृत्यापि स्वभिसंभवत्वं निराकुर्वन्नाह– 10 **यदि चायुष्मन्** इत्यादि । **न विवर्तेरन्** इत्यभिलाषसद्भावात्, न त्वेव निवर्तेरन् । व्यतिरेकमुखेन निर्दिश्य, अन्वयमुखेनाह–**यस्मात्तर्हि** इत्यादि । विवृत्तिरेव न संभवति, तत् कथं तया दुरभिसंभवत्वमित्याह–**किं पुनः** इत्यादि । रूपादयो धर्मिणस्तद्व्यतिरिक्ता वा तथता रूपादितथतालक्षणो धर्मस्तत्पृथग्भूतो वा निवर्तमानो निवर्तेत । किमिति सर्वत्र प्रश्ने धर्मताभिप्रायेण पृष्टत्वादाह–**नो हीदम्** इति वाक्यार्थः । प्रमुदितादिसप्तभूमिषु सामान्येन 15 विवृत्त्यसंभवं निर्दिश्य अचलादिभूमित्रये पुनर्बोधकबोध्यधर्मभेदेनाह–**किं पुनरायुष्मन् शारिपुत्र रूपमभिसंबुध्यते** इत्यादि । समन्तप्रभां बुद्धभूमिमधिकृत्याह–**तत्किं मन्यसे** इत्यादि । **तत् कतम** इति तस्मान्निवृत्त्यसंभवादेव कारणात् यस्तस्यामेव धर्मतायां शून्यतायां सर्वानभिनिवेशयोगेन स्थितः कतमः स धर्मो विवर्तते ? नैव कश्चिदित्यर्थः । **कतमो वा** इति । नैव कश्चित् । कच्चिदिति निपातोऽपि नुशब्दार्थे वर्तते । उपसंहरन्नाह–**एवमायुष्मन्** 20 इत्यादि । सत्यत इति परमार्थसत्यतः । स्थितित इति प्रज्ञप्तिव्यवस्थानत इत्येके । ज्ञानज्ञेय-स्वभावतत्त्वविरहाद्यथाक्रमं सत्यतः स्थितितः इत्यपरे । संवृतिसत्याश्रयेण स्वभिसंभवत्वं निराक्रियमाणं परमार्थतो यदि साध्यते, तदा प्रकृतानुपयोगीत्याह–**यथा** इत्यादि । यया धर्मनयजात्या येन धर्माणामनुत्पादप्रकारेण निर्दिश्यते, तथा न कश्चिद्विवर्तते, किं तु संवृत्या विवर्तते इति मतिः । संवृतिरेव नास्तीति चेत्, तत्र न केवलं प्रत्यक्षादिबाधा, 25 किं तर्हि अभ्युपेतबाधापीत्याह–**ये च खलु पुनरिमे** इत्यादि । व्यवस्थानं न भवतीति सर्वधर्मानुत्पादनिर्देशेन यस्मादेकमेव बोध्यात्मकं सत्त्वं चित्तं तदेव यातव्यत्वाद्यानं बोधिसत्त्वयानं बुद्धयानं तथागतभूमिसंगृहीतम्, तस्माद्धेत्ववस्थाश्रावकादियानत्रयानुत्पत्ते-स्तद्यानिकबोधिसत्त्वानां त्रयाणां व्यवस्थानं न स्यात् । तथा अभ्युपेतविरोध इति भावः । सर्वधर्मानुत्पन्नत्वेऽपि बोधिसद्भावेन अन्यतमैकबोधिसत्त्वाभ्युपगमात् कथं त्रिविधबोधिसत्त्व- 30 व्यवस्थानमापद्यते इत्याह–**किं पुनरायुष्मन्** इत्यादि । किमेकमपि बोधिसत्त्वमायुष्मान् सुभूतिः स्थविरो नाभ्युपगच्छति, यतस्त्रिविधपुद्गलासत्त्वं चोद्यते इत्यर्थः । जानन्नपि

W 652 W 653 W 654 B 399 W 656 W 657 B 400 W 658

तद्वचनेन परिहारं दापयितुमाह—**प्रष्टव्यस्तावदायुष्मान् सुभूतिः स्थविरः** इति। तमेव प्रश्नयन्नाह—**किं पुनस्त्वम्** इत्यादि। प्रतिप्रश्नेन परिहरन् वक्तुमाह—**किं पुनरायुष्मन्** इत्यादि। तथतायास्तथतेति अनुत्पादस्यापि तत्त्वतोऽसत्त्वात्। **न ह्येतत्** इति।
W 659 विवृण्वन्नाह—**तथापि** इत्यादि। त्रिभिराकारैरिति श्रावकयानादिप्रकारैः। व्यवच्छेद-
5 फलत्वाद्वाक्यस्य एकेन तर्ह्युपलभ्यते इत्याह—**किं पुनः** इत्यादि। **एकेनापि** इति महायानात्मकेनापि प्रकारेण। तुल्यत्वान्न्यायस्येत्याह—**न ह्येतत्** इति। आधेयमपि निराकर्तुमाह—**कच्चित्पुनः** इत्यादि। **न ह्येतत्** इति गतार्थम्। प्रकृतार्थमुपसंहरन्नाह—**एवमायुष्मन्** इत्यादि। **कुतस्त्वैवं भवति** इति योगिसंवृत्या अनुत्तरा बोधिरिति न तद्बलात्परमार्थतो बोधिसत्त्वास्तित्वम्। ततश्चायं श्रावकयानिक इत्यादि **कस्मात्त्वैवं**
W 660 10 **भवति**? अपि तु नैवं चित्तमुत्पादयितव्यमिति यावत्। चोद्यपरंपरया प्रसङ्गागत-मेवार्थं मोक्षभागीयलिङ्गत्वे योजयन्नाह—**एवमेतेषाम्** इत्यादि। **प्रविभाव्यमानानाम्** इति निरूप्यमाणानाम्। तत्र अविशेषता त्रिविधबोधिसत्त्वस्य भेदानुपलम्भात्। निर्विशेषता
B 401 तथतैकरसत्वेनावगमात्। निर्नानाकरणता यथोक्तप्रकारव्यतिरेकेण पृथक्कर्तुमशक्यत्वात्। मृदुमध्याधिमात्रमोक्षभागीयसमन्वागमाद्यथाक्रमं **चित्तं नावलीयते** इत्यादि पदत्रयं योज्यम्।
15 धर्मताविरुद्धार्थं कथयन्नाह—**साधु साधु** इत्यादि। अनेकप्रकारबोधिभेदादाह—**कतमया** इत्यादि। सुगमम्। उत्पन्नमोक्षभागीयस्योत्साहिनो निर्वेधभागीयार्थमाह—**अनुत्तरायां भगवन्**
W 661 इत्यादि। समं स्थानव्यमित्युद्देशं निर्दिशन्नाह—**सर्वसत्त्वेषु** इत्यादि। समचित्तमनुनया-भावात्। न विषमचित्तं द्वेषविरहात्। **मैत्रचित्तेन** इति प्रत्युत्पन्नार्थचित्तेन इति। **हितचित्तेन** इति अनागतार्थचित्तेन। मैत्रहितचित्तयोरेवार्थमाह—**कल्याणचित्तेन निहतमानचित्तेन** इति।
20 **अप्रतिहतचित्तेन** इति प्रतिघाविविक्तेन। तदेवाह—**अविहिंसाचित्तेन** इति। **अविहेठनाचित्तेन** इति भयोत्पादरहितेन। **मातृसंज्ञाम्** इत्यादि सुगमम्। किं तु भ्रातृभगिनीमित्रामात्यज्ञाति-सालोहितसंज्ञाश्चोपलक्षणत्वेनावगन्तव्याः। तत्र च मातापित्रादीनां द्वयं द्वयमेकैकं कृत्वा पञ्चाकारा वक्तव्याः। सर्वसत्त्वानामहं नाथ इति। इदमुक्तं स्यात्—सममैत्रहिताप्रतिघा-विहेठनाचित्ताकारैः पञ्चभिर्मातापितृभ्रातृभगिनीपुत्रदुहितृमित्रामात्यज्ञातिसालोहितचित्ता-
W 662 25 कारैश्च सर्वसत्त्वालम्बने सम्यगूष्मगतकुशललाभात् सर्वसत्त्वानां त्रातेति। तथा चोक्तम्—

**आलम्बनं सर्वसत्त्वा ऊष्मणामिह शस्यते।**
**समचित्तादिराकारस्तेष्वेव दशधोदितः॥ ३५॥** इति॥

B 402 मूर्धानमधिकृत्याह—**स्वयं च** इत्यादि। इदमुक्तं स्यात्—स्वयं सर्वपापनिवृत्तस्य दानाद्येषु प्रतिपत्त्या स्थितस्य च तथैवान्येषां पापनिवृत्तौ समादापनेन कुशलप्रवृत्तौ
30 समादापनवर्णवदनसमनुज्ञानाकारैरालम्बने मूर्धगतमुत्पद्यते इति। तथा चोक्तम्—

**स्वयं पापान्निवृत्तस्य दानाद्येषु स्थितस्य च।**
**तयोर्नियोजनान्येषां वर्णवादानुकूलते॥ ३६॥**
**मूर्धगम्** इति॥

क्षान्तिमधिकृत्याह– **एवं सत्येषु यावद्बोधिसत्त्वन्यामावक्रान्तौ** इति । यथा मूर्धसु स्वपराधिष्ठानभेदेनालम्बनाकारभेदो व्याख्यातः, तथा दुःखादिसत्यचतुष्टयं प्रथमफलादिकं प्रमुदितादिभूमिं च स्वयं परिजानतोऽन्येषां च तत्रैव समादापनादिभिराकारैरालम्बने क्षान्तिरुत्पद्यते इत्यर्थः । तथा चोक्तम्— W 663

**स्वपराधारं सत्यज्ञानं तथा क्षमा** । इति ॥ 5

अग्रधर्मानधिकृत्याह– **सत्त्वपरिपाचने** इत्यादि । तत्रानावरणं रूपं बोधिसत्त्वाभिज्ञादि, सद्धर्मस्थितिर्बुद्धत्वम् । इदमुक्तं स्यात्– स्वयं सत्त्वपरिपाचनादौ स्थितस्य अन्येषामपि तत्र समादापनादिभिराकारैरालम्बनेऽग्रधर्मा भवन्तीति । तथा चोक्तम्—

**तथाग्रधर्मा विज्ञेयाः सत्त्वानां पाचनादिभिः** ॥ ३७ ॥ इति ॥

एतानि पुनर्निर्वेधभागीयानि मृदुमध्याधिमात्रभेदात् प्रत्येकं त्रिविधानि भवन्ति । 10 तत्र मृदूष्मगतं सममैत्रचित्ताभ्यां तदात्वे पराविहेठनामुपादाय, मध्यं हितादिचित्तत्रयेण आयत्यां परहिताशयतामुपादाय । अधिमात्रं मात्रादिचित्तोत्पादेन तदात्वे आयत्यां च परेषामिष्टोपसंहारकामतामुपादाय निर्दिष्टम् । मृदुमूर्धगतं पापनिवृत्तौ स्वपरनियोजनेन अन्येषां दुःखहेतुनिवृत्तिकामतामुपादाय । मध्यं दानादौ स्वपरस्थापनेन अन्येषां सुखहेतुसंनियोगाभिलाषितामुपादाय । अधिमात्रं द्विधा–प्रतीत्यसमुत्पादभावनायामात्मपरप्रवर्तनेन 15 अन्येषां सुखदुःखविपर्यासप्रहाणाभिप्रायतामुपादायोक्तम् । मृद्वी मध्याधिमात्रा च क्षान्तिर्यथाक्रममेव सत्येषु यावद्बोधिसत्त्वन्यामावक्रान्तौ इत्यनेन अन्येषामार्यमार्गे प्रथमफलादौ बुद्धत्वे च नियोक्तुकामतामुपादायोक्तम् । किं त्वधिमात्रा क्षान्तिरनेकक्षणिकी[1] ग्राह्या । मृदुमध्याधिमात्रास्त्वग्रधर्मा यथासंख्यं परेषामविशेषेण यानत्रये परिपाचनाय विशेषेण बोधिसत्त्वमार्गे नियोजनाय सर्वसंपत्प्रकर्षनिष्ठाधिष्ठानकामतामुपादाय सत्त्वपरिपाचनावरण- 20 रूपसद्धर्मस्थितिवचनेनोक्ताः । यदुक्तमभिधर्मकोशे—

यथाधिमात्रा क्षान्तिरेकक्षणिकी तथाग्रधर्माः ।

इति, तत्स्वार्थाधिकारात् । इह तु परार्थाधिष्ठानानां मृदुमध्याधिमात्रभेदो व्याख्यातः । परार्थपरस्य तारतम्यावस्थासंभवात्, इति न तेनेदं विरुध्यते । प्रत्यभिसमयं कस्मान्निर्वेधभागीयादिनिर्देश इति चेत्, उच्यते । सर्वाकारमार्गवस्तुविभावनाभेदेन यथाक्रमं सर्वाकारज्ञतादि- 25 त्रिविधेऽभिसमये लौकिकनिर्वेधभागीयाधिगमपूर्वको लोकोत्तरदर्शनभावनामार्गाधिगमः । सर्वाकाराभिसंबोधादौ तु त्रिविधेऽभिसमये भावनोत्तरोत्तरावस्थाविशेषेण सर्वाकारविशेषमार्गसंगृहीतं ज्ञानमनास्रवं मृदुमध्याधिमात्रक्रमेणोत्पद्यते, इति सकृदुत्पत्तिनिरासाय निर्वेधभागीयादिव्यपदेशोऽभिहित इति केचित् ॥ W 664 B 404

अभिसमयालंकारालोकायां प्रज्ञापारमितायां 30

तथतापरिवर्तो नाम षोडशः ॥

---

१ B एकक्षणिकी.

## १७ अविनिवर्तनीयपरिवर्तः सप्तदशः ।

B 405 W 665 अवैवर्तिकबोधिसत्त्वसंघस्य यथोक्तनिर्वेधभागीयमन्यदपि दर्शनमार्गादिकमित्यवैवर्तिक-बोधिसत्त्वसंघो वक्तव्यः । स च निर्वेधभागीयप्रयोगमार्गस्थः, तथा क्षान्तिज्ञानसंगृहीतदर्शन-मार्गस्थः, परश्च प्राबन्धिकभावनामार्गस्थः इति त्र्यवस्थो भवति । तथा चोक्तम् —

5 **निर्वेधाङ्गान्युपादाय दर्शनाभ्यासमार्गयोः ।**
**ये बोधिसत्त्वा वर्तन्ते सोऽत्रावैवर्तिको गणः** ॥ ३८ ॥ इति ॥

तत्र रूपादिनिवृत्तिनिर्विचिकित्साद्याकारैर्विंशतिप्रकारैर्निर्वेधभागीयस्थानमवैवर्तिक-लक्षणं ज्ञेयम् । तथा चोक्तम्—

**रूपादिभ्यो निवृत्त्याद्यैर्लिङ्गैर्विंशतिधेरितैः ।**
10 **निर्वेधाङ्गस्थितस्येदमवैवर्तिकलक्षणम्** ॥ ३९ ॥ इति ॥

तथतास्वभावत्वाद्रूपादिभ्यो निवृत्तिं तावत्प्रतिपादयितुमाह—**अविनिवर्तनीयस्य** इत्यादि । तत्र आकाराः प्रतिपक्षसंगृहीताः । लिङ्गानि स्वाश्रयचिह्नानि । निमित्तानि तत्परि-भोगोपकरणगतानि । अथवा आकारः कायिको हर्षविशेषो रोमोद्गमाश्रुपातादिः । लिङ्गं W 666 वचनविशेषः प्रहर्षाध्येषणादिः । निमित्तम् अनुष्ठानविशेषः श्रवणधारणवाचनपूजनादिः । 15 पूर्वपूर्वव्याख्याभूतान्यमूनि वा पदानि । **कथं वा वयं भगवन् जानीयाम** इत्यनेन असंकीर्ण-प्रतिपत्तिनिमित्तं प्रश्नयन्नाह । परिहरन्नाह—**या च सुभूते** इत्यादि । **तथताभूमिः** इति सर्व-भूमेर्मायोपमत्वात् । तदेवाह—**सर्वा** इत्यादिना । युक्त्यागमाभ्यां निश्चितत्वेन अन्यथाकरणा-B 406 संभवाद्यथासंख्यं न कल्पयति, न विकल्पयति । **ततोऽपि** इति पर्षन्मण्डलात् । **एवमेतत्** इति रूपादिभ्यो निवृत्तत्वेन । **एवमेतत्तथैव** सत्या, मोहोऽन्य इति चिन्ताश्रवणकालेऽधि-20 मुक्त्यावगाहते । भावग्रहापरिदीपनान्न च यत्किंचित्प्रलापी भवति । मायोपमार्थप्रकाशकत्वेन अर्थसंहितामेव वाचं भाषते नानर्थसंहिताम् । धर्मताभावनाभियोगान्न च परेषां कृताकृतानि कार्याकार्याणि व्यवलोकयति । **धारयितव्यः** इति—

हेतुना यः समग्रेण कार्योत्पादोऽनुमीयते ।
अर्थान्तरानपेक्षत्वात् स स्वभावोऽनुवर्णितः ॥

W 667 25 इति न्यायाद्योग्यतानुमानेन निश्चेतव्यः । अवेत्य प्रसादलाभेन विचिकित्साक्षयमावेद-यन्नाह—**पुनरपरम्** इत्यादि । **मुखमुल्लोकयति** इति ज्ञातव्यतत्त्वपरिज्ञानादिसंभावनाशयेन आराधनतया न मुखं निरीक्षते । **व्यपाश्रयते** इति शरणादिभावान्न स्वीकरोति । प्रणिधान-समृद्ध्या अष्टाक्षणक्षयार्थमाह—**स खलु पुनः** इत्यादि । **नापायेषूपपद्यते** इति नरकप्रेततिर्य-गुपपत्त्यभावः साक्षात्कथितः । उपलक्षणत्वादस्य मिथ्यादृष्टिबुद्धवचनाश्रवणप्रत्यन्तजनपदो-30 त्पादाभावो ग्राह्यः । **न च स्त्रीभावं परिगृह्णाति** इति स्त्रीभावप्रतिषेधवचनात् इन्द्रियजडमूक-W 668 भावं न गृह्णातीति लभ्यते । चशब्दान्न दीर्घायुष्कदेवोपपत्तिं गृह्णातीत्यर्थः । **कारुणिकतया**

स्वपरकुशलधर्मनियोजनार्थमाह—**पुनरपरम्** इत्यादि। तत्र प्राणातिपातः परेषां जीवितक्षयः। स्थानाच्चौर्येण परद्रव्यावर्जनमदत्तादानम्। अनङ्गादौ स्त्र्याद्यभिगमनं काममिथ्याचारः।

वल्कलैः सगुडैः काचित्क्रियते मधुनापरा।
पिष्टकिण्वजलैरन्या सुरा ज्ञेया त्रिधा बुधैः॥ W 669 B 407
मैरेयं गुडधात्र्यम्बुधातकीसंस्कृतं विदुः। 5
मदयेदशितं पीतं यत्तन्मद्यमिति स्मृतम्॥
तदेतत्त्रिविधं सर्वं शुक्लधर्मविपक्षतः।
प्रमादस्थानमित्याह प्रसङ्गादागतं पुनः॥

अभूताभिधानमनृतवचनम्। परभेदकं वचः पिशुनवचनम्। अप्रियाभिधानं परुषवचनम्। सर्वक्लेशजनितं वाक्यं संभिन्नप्रलापः। अभिध्या परद्रव्येषु 10 विषमस्पृहा। व्यापादः सत्त्वविद्वेषः। नास्तीति दृष्टिर्मिथ्यादर्शनम्। सर्वेण मन्त्रप्रयोगादिना। सर्वं निखिलसत्त्वविषयम्। सर्वथा मृद्वादिनापि प्रकारेण। सर्वं तच्चित्तमपि नाध्यापद्येत न कुर्यात्। परात्मपरिवर्तकत्वेन सर्वसत्त्वविषयपरिणामितदानादि-कार्थमाह—**पुनरपरम्** इत्यादि। यं यं धर्ममिति सूत्रादिकं पर्यवाप्नोति स्वीकरोति। ददाति फलेन सह प्रयच्छति। सम्यग्धर्मावबोधेन गम्भीरधर्मकाङ्क्षणार्थमाह—**पुनरपरम्** इत्यादि तत्र 15 W 670 मार्गान्तराभिलाषोऽपर्याप्तितामुपादाय काङ्क्षा। ऋजुमार्गविलोमनं विमतिः। गोत्रधर्मस्य विविधकुशलवृद्धिगमनाभावेन विचिकित्सनाद्विचिकित्सा। सर्वथा बोधवैकल्यात् धन्धत्वम्। परहितप्रतिपन्नत्वेन मैत्रकायवाङ्मनस्कर्मार्थमाह—**हितवचनः** इत्यादि। तत्र मैत्रकायकर्मणा योगादनागतपथ्याभिधायितया हितवचनः। तथैव वाक्कर्मसद्भावेन परिमितवचनान्मित-वचनः। मैत्रीपरिभावितचित्तसमुत्थापितत्वेन श्रोत्रसुखादिकारित्वात् स्निग्धवचनः। 20 B 408 प्रयोगसंपत्त्या कामच्छन्दो व्यापादः स्त्यानमिद्धमौद्धत्यकौकृत्यं विचिकित्सा चेति पञ्चनीवरणासंवासार्थमुपलक्षणत्वेनाह—**अल्पस्त्यानमिद्धश्च भवति** इति। विभावितप्रति-पक्षत्वेन अविद्यादिसर्वानुशयहानार्थमाह—**निरनुशयश्च भवति** इति। तत्राविद्यादृष्ट्यास्रव-संगृहीतानामनुशयानामभावान्निरनुशयत्वम्, न तु कामभवास्रवसंगृहीतानाम्, बोधिसत्त्वस्य संचिन्त्यभवोपादानात्। नित्यसमाहितत्वेन स्मृतिसंप्रज्ञार्थमाह—**सोऽभिक्रामन्** वा इत्यादि। 25 W 671 तत्रागमनम् अभिक्रमः। गमनं प्रतिक्रमः। संप्रज्ञानयोगान्न भ्रान्तचित्तः। स्मृतिसद्भावा-दुपस्थितस्मृतिः। भिन्नेर्यापथपरिहारार्थं नातिमन्दं न विलम्बितम्। शान्तरूपाभिद्योतकत्वात् सुखम्। एकपादस्य सम्यगप्रतिस्थानेऽपरपादानुत्क्षेपान्न च सहसा पादं भूमेरुत्क्षिपति। सप्राणकदेशपरिहारार्थं न च सहसा पादं भूमौ निक्षिपति। चौक्षसमुदाचारत्वेन शुचिपरिभोग्यचीवरादिकार्थमाह—**तस्य खलु पुनः** इत्यादि। तत्राल्पाबाधोऽल्पव्याधिः। 30 अल्पादीनवोऽल्पपरोपद्रवः। तदेवमूष्मगतावस्थस्य एकादशाकारा भवन्ति। सर्वलोकाभ्युप-गतकुशलमूलत्वेन कायेऽशीतिकृमिकुलसहस्रासंभवार्थमाह—**यानि खलु** इत्यादि। सर्वेण

अणुनापि रूपेण, सर्वं कृमिकुलम् । सर्वथा वर्णादिप्रकारेण । सर्वमशीतिसहस्रसंख्यम् ।
W 672 तथैव तत्कस्य हेतोः इत्याशङ्क्याह–**तथा हि तस्य** इत्यादि । कुशलमूलविशुद्ध्या चित्ता-
B 409 कौटिल्यार्थमाह–**यथा यथा च** इत्यादि । तत्र कायपरिशुद्धिर्लक्षणाद्यलंकृतगात्रता ।
वाक्परिशुद्धिर्ब्रह्मस्वरादिरूपता । द्वयमेतच्चित्तपरिशुद्धिकार्यत्वेनोक्तम् । अत एव चित्तपरि-
5 शुद्धिविभजनार्थं प्राधान्यादाह–**का पुनः** इत्यादि । तत्र लाभादिनिरपेक्षत्वाच्चित्तात्पकल्पता ।
भूतदोषपरिच्छदनाभावच्चित्ताशाठ्यता । अभूतगुणसंदर्शनवैकल्याच्चित्तामायाविता । यथाभूत-
वादित्वाच्चित्ताकुटिलता । मात्सर्यादिविविक्तत्वाच्चित्तावङ्कता । **यया च** इति महायानप्रवणया ।
W 673 लाभसत्कारादिनिरपेक्षत्वेन द्वादशधुतगुणसमादानार्थमाह–**पुनरपरम्** इत्यादि । तत्र लाभो
द्रव्यप्राप्तिः । सत्कारो बहुमानता । श्लोकः कीर्तिः । न तद्गुरुको न तत्प्रवणो भवति ।
10 तत्रेमे द्वादश धुतगुणाः–यदिदं पांशुकूलिकत्वम्, त्रैचीवरिकत्वम्, सर्वनामतिकत्वम्,
पैण्डपातिकत्वम्, ऐकासनिकत्वम्, पश्चात्खलुभक्तिकत्वम्, आरण्यकत्वम्, वार्क्षमूलि-
कत्वम्, अभ्यवकाशित्वम्, श्माशानिकत्वम्, नैषधिकत्वम्, याथासंस्थरिकत्वम् चेति ।
दानादिविशेषप्रतिपत्त्या पारमिताविपक्षमात्सर्यादिचित्तानुत्पादार्थमाह–**नेर्ष्यामात्सर्यबहुलो भवति** इति । उपलक्षणत्वात् सर्वपारमिताविपक्षो ग्राह्यः । धर्मधातुना सर्वधर्मसंग्रहाद्धर्मता-
15 विरुद्धप्रज्ञापारमितायोगगमनार्थमाह–**न च गम्भीरेषु** इत्यादि । चालयितुमशक्यत्वात्
W 674 स्थिरबुद्धिः । सूक्ष्मार्थदर्शनाद्गम्भीरबुद्धिः । संयोजनात् संस्यन्दयति । स्वात्मीकृत-
सत्त्वधातुत्वेन परार्थनरकाभिलाषार्थमाह–**पुनरपरम्** इत्यादि । गृहीतबोधिचित्तपरित्यागात्
**प्रतिदेशय** । पुनरनुत्पादनात् प्रतिनिसृज । दोलायमानत्वाभावान्न क्षुभ्यति । गृहीतापरित्यागान्न
B 410 चलति । तदेवं मूर्धगतावस्थस्य षडाकारा भवन्ति । अधिगतसंप्रत्ययधर्मत्वेनापरप्रणय-
W 675
20 नार्थमाह–**पुनरपरम्** इत्यादि । दुःखादिसत्यचतुष्टयस्य मायोपमत्वेनावगमात् **धर्मताम्** इत्यादि
पदचतुष्कोपादानम् । **न परस्य श्रद्धया गच्छति** इति धर्मताप्रत्यक्षकारित्वान्न परसंप्रत्ययेन
प्रतिपद्यते । एतदेव दृष्टान्तपूर्वकं स्पष्टयन्नाह–**तद्यथापि नाम सुभूते** इत्यादि । अनपहरणीय-
त्वादसंहार्यः । निवृत्त्यसंभवादप्रत्युदावर्तनीयधर्मा । एकान्तस्थितत्वान्नियतो भवति सर्वज्ञता-
W 676 याम् । एतदेव विस्तारयन्नाह–**सम्यक्संबोधिपरायणः** इत्यादि । विदितबुद्धत्वोपायकौशलत्वेन
W 677
25 प्रतिरूपमार्गोपदेशकमारस्य मारत्वावबोधार्थमाह–**पुनरपरम्** इत्यादि । **एषा** इति प्रज्ञापार-
मिताचर्या । **इहैव** इत्यस्मिन्नेव जन्मनि । दुःखस्यान्तं कुरु, चतुरार्यसत्यभावनयेति शेषः ।
**अहो बत** इत्यादि । अहो कष्टम्, इहैव तावत्त्वायमात्मभावो धर्मताधिगमवैकल्येन यदोत्तर-
कालमपरिनिष्पन्नोऽनभिनिर्वृत्तो भविष्यति, तदा कस्मात्पुनस्त्वमन्यमात्मभावं प्रणिधानादि-
बलेन सत्त्वार्थं प्रतिग्रहीतव्यं मन्यसे इत्यर्थः । मारोऽयमित्यन्यमार्गोपदेशिनोऽवबोधेन
30 निवर्तनासंभवादविनिवर्तनीयः । तदेवं क्षान्तिगतावस्थस्याकारद्वयं स्यात् । त्रिमण्डलविशुद्ध्या
B 411 सर्वत्र बुद्धानुमोदितप्रतिपत्त्यर्थमाह–**सचेद्बोधिसत्त्वस्य** इत्यादि । चित्तं परतः श्रुत्वैवमिति
परस्मात्परतो मारादेव नैतद्बुद्धभाषितमित्यादीनि विवेकपदानि श्रुत्वा चित्तं धर्मताया न

परिहीयते इत्यर्थः । प्रयोगमौलपृष्ठावस्थासु न परिहीयते न प्रत्युदावर्तते, न चान्यथाभाव श्चित्तस्येति यथाक्रमं योज्यम् । **तथा चरन्** इति बुद्धानुज्ञातचर्यया चरन्नित्यर्थः । उपसंहरन्नाह—**सचेद्बोधिसत्त्वो महासत्त्वः** इत्यादि । तदेवमग्रधर्मगतावस्थस्यैक आकारः स्यात् । यथोक्तै- W 678 रेवाकारैर्निर्वेधभागीयस्थितो बोधिसत्त्वोऽनुत्तरबोधेर्न विवर्तते इति लक्षणीयः । तथा चोक्तम्—

**रूपादिभ्यो निवृत्तिश्च विचिकित्साक्षणक्षयौ ।** 5
**आत्मनः कुशलस्थस्य परेषां तन्नियोजनम् ॥ ४० ॥**
**पराधारं च दानादि गम्भीरेऽर्थेऽप्यकाङ्क्षणम् ।**
**मैत्रं कायाद्यसंवासः पञ्चधावरणेन च ॥ ४१ ॥**
**सर्वानुशयहानं च स्मृतिसंप्रज्ञता शुचि ।**
**चीवरादिशरीरे च क्रमीणामसमुद्भवः ॥ ४२ ॥** 10
**चित्ताकौटिल्यमादानं धूतस्यामत्सरादिता ।**
**धर्मतायुक्तगामित्वं लोकार्थं नरकैषणा ॥ ४३ ॥**
**परैरनेयता मारस्यान्यमार्गोपदेशिनः ।**
**मार इत्यवबोधश्च चर्या बुद्धानुमोदिता ॥ ४४ ॥**
**ऊष्ममूर्धसु स क्षान्तिष्वग्रधर्मेष्ववस्थितः ।** 15
**लिङ्गैरमीभिर्विंशत्या संबोधेर्न विवर्तते ॥ ४५ ॥** इति ॥

निर्वेधभागीयस्थावैवर्तिकलक्षणानन्तरं दर्शनमार्गस्थावैवर्तिकलक्षणं दुःखे धर्मज्ञान-क्षान्त्यादिभिः षोडशभिः क्षणैर्वक्तव्यम् । तथा चोक्तम्—

**क्षान्तिज्ञानक्षणाः षट् च पञ्च पञ्च च दृक्पथे ।**
**बोधिसत्त्वस्य विज्ञेयमवैवर्तिकलक्षणम् ॥ ४६ ॥** इति ॥ 20

तत्र रूपादिधर्मावबोधव्यावर्तनेन दुःखे धर्मज्ञानक्षान्तिरिति कथयन्नाह— B 412 W 679 **पुनरपरम्** इत्यादि । व्यवस्थितविशेषानुत्पादान्नाभिसंस्करोति । अपूर्वाकरणान्नोत्पादयति । पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि** इत्यादि । **स्वलक्षणशून्यैः** इति स्वभावशून्यधर्मतया रूपादिधर्मावबोधानुपलम्भाद्बोधिसत्त्वन्यामं दुःखे धर्मज्ञानक्षान्ति-मधिगतोऽवक्रान्तः सन् तमपि धर्मं नोपलभते, यतस्तं नाभिसंस्करोति, 25 नोत्पादयतीत्यर्थः । **अनुत्पादज्ञानक्षान्तिकः** इति यथानिर्दिष्टक्षान्तिलाभी । अनुत्तरबोधि-चित्तदृढतया दुःखे धर्मज्ञानमित्याह—**पुनरपरम्** इत्यादि । दर्शनभावनाविशेषमार्गेष्वसत्त्व- W 680 प्रतिपादनार्थमाकाशसमेत्यादिपदत्रयोपादानम्, प्रयोगादिषु वा । श्रवणचिन्ताभावनादिष्वेवं ज्ञातव्यमित्यादि योज्यम् । तत्र दृढं चित्तं निरन्तरायसारतया । अप्रकम्प्यं धर्मताप्रत्यक्ष-कारितया । असंहार्यं परेषामविषयतया । समादानप्रयोगोद्देशापरिभ्रंशार्थेन वा योज्यम् । 30 श्रावकप्रत्येकबुद्धयानचित्तविनिवर्तनात् दुःखेऽन्वयज्ञानक्षान्तिरित्याह—**पुनरपरम्** इत्यादि ।

श्रावकप्रत्येकबुद्धभूमिनिवृत्तः सर्वज्ञतायां प्रवृत्तो भवतीति तत्र सत्यां प्रवृत्तौ या निवृत्तिः, सत्यां वा अप्रवृत्तौ या प्रवृत्तिः, ते त्विह निवृत्तिप्रवृत्ती निर्दिष्टे, न तु निवृत्तिप्रवृत्तिमात्रे, तयोः सम्यगर्थीकरणात्। तथा तृतीये क्षणेऽन्वयज्ञानसंबन्धेन श्रावकादिभूमिपातः संभवति, तस्य त्रैधातुकप्रतिपक्षवाहकत्वात्। अतस्तन्निवृत्त्याकारः कथितः। धर्मप्रविचयसामर्थ्यात् B 413 W 681
5 ध्यानाद्यङ्गपरिक्षयेण दुःखेऽन्वयज्ञानमित्याह—**स आकाङ्क्षन्** इत्यादि। नवानुपूर्वसमापत्त्याद्युपलक्षणम्। अत्र ध्यानानि दृष्टधर्मसुखविहारार्थमभिमुखीकरणात् ध्यानैर्विहरति, तत्फलसाक्षात्करणाद् ध्यानपरिजयं च करोति। तत्तदङ्गप्रहाणेनाधिगतान्वयज्ञानस्य रूपारूप्यधातुप्रतिपक्षत्वज्ञापनार्थमालम्बनाद्ध्यानानि च समापद्यते। अनुकूलात्मभावस्य परिग्रहान्न च ध्यानवशेनोपपद्यते। दुःखेऽन्वयज्ञानावस्थायां बोधिसत्त्वस्य वैराग्यलाभानुपपत्त्या स
10 पुनरेव कामावचरान् धर्मानध्यालम्बते इति योज्यम्। अपगताकुशलत्वेन कायचेतोलाघवात् समुदये धर्मज्ञानक्षान्तिरित्याह—**पुनरपरम्** इत्यादि। दर्शनहेयविकल्पापगतत्वेन कायचित्तलाघवोत्पादान्न नामादिगुरुको भवति। बाह्याध्यात्मिकयशोभेदात् कीर्तिः श्लोक इति द्वयमुक्तम्। विदितस्वलक्षणशून्यधर्मत्वान्नामाद्यलाभेऽपि वैमनस्याभावेन असंक्षुभितचित्तः। मायोपमभावनोपायकौशलसामर्थ्येन अनभिनिवेशकामोपभोगात्समुदये धर्मज्ञान-
15 मित्याह—**सचेत् सोऽगारम्** इत्यादि। अगारं गृहम्। प्राप्तेषु कामेषु कामाभिष्वङ्गोऽभिनिवेशः। अप्राप्तेष्वभिप्रायः प्रार्थना। मायोपमनिर्वाणधर्मावगमान्निर्वित्संज्ञी। एतदेव दृष्टान्तेन स्पष्टयन्नाह—**तद्यथापि नाम** इत्यादि। जीवितेन्द्रियादिनिरोधभयदर्शनादुत्त्रस्तसंज्ञी। सभयत्वादविश्रब्धम्। अनागतेष्वनर्थिका वर्तमानेष्वगृद्धा विनष्टेष्वसक्ता इत्येके। प्रयोगादिषु चेत्यपरे। प्रासादिकसुखदत्वात् प्रियरूपसातरूपाणि। तेऽगारमध्यावसन्तः W 682
20 **अनर्थिका एव च भवन्ति** इति पूर्वेण संबन्धः। विपायादीनवदर्शनेन सदा ब्रह्मचारित्वात्। समुदयेऽन्वयज्ञानक्षान्तिरित्याह—**न समविषमेण** इत्यादि। न समविषमेण नोद्धारवृद्धिन्यायेन। न्यायोपात्तत्वाद्धर्मेण। सदा ब्रह्मचारित्वान्नाधर्मेण। शमथस्निग्धसंतानत्वान्न परेषामपमर्दनमुपघातं कुर्वन्ति। तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि तैः** इत्यादि। **सत्पुरुषैः** इत्यादि स्तुतिरित्येके। षोडशक्षणदर्शनमार्गलाभात् यथाक्रमं सत्पुरुषैरित्यादि- B 414 W 683
25 षोडश पदानीत्यपरे। सत्पुरुषधर्मतया सम्यगुपकरणाजीवविशुद्धत्वात्समुदयेऽन्वयज्ञानमित्याह—**पुनरपरम्** इत्यादि। वज्रपाणिरित्येतत्संज्ञकोऽन्यः कश्चित् प्रतिविशिष्टो महायक्षः। अनभिभवनीयकायवाक्चित्तत्वाद्यथासंख्यम् दुर्धर्षानतिक्रमणीयदुरासदपदानि वाच्यानि। बस्तिगतकोषगुह्यत्वात् पुरुषवृषभेन्द्रियसमन्वागतः। आर्यतारादिमन्त्रप्रकारो मन्त्रजातिः। चन्द्रसूर्यग्रहोत्पादितभृङ्गराजादिरोषधिः। मन्त्रजात्योषध्य एव विद्याभेषजादि। आदिशब्दा- W 684
30 द्यन्त्रादिपरिग्रह इत्येके। मन्त्रजातिर्लोकोत्तरा बहुद्रव्यसमाहारलक्षणौषधिः। विद्या लौकिकी, भेषजमेकाङ्गिकमित्यपरे। पुरुषदेवतासंबन्धान्मन्त्रजातिः। उत्पन्नव्याधिप्रतीकारार्थमोषधिः। स्त्रीदेवतासंबन्धाद्विद्या, भेषजमनागतोत्पातप्रतिषेधार्थमित्यन्ये। कायवाक्कलहाभावान्न विग्रह-

विवादशीलः । शून्यतावस्थितत्वेन स्कन्धधात्वायतनयोगानुयोगविहारप्रतिषेधान्निरोधे धर्म- ज्ञानक्षान्तिरित्याह—**पुनरपरम्** इत्यादि । योगानुयोगग्रहणेन दुःखसमुदयसत्ययोर्निरोधमार्ग- सत्ययोश्च यथाक्रमं योगानुयोगयोः पौर्वापर्यं ज्ञापितम् इत्यार्यविमुक्तिसेनः । स्कन्धादिषु प्रथमो- ऽभिनिवेशो योगः । पश्चादत्यन्ताभिनिवेशोऽनुयोग इत्यपरे। निरस्तविपक्षत्वेन अधिगमान्तराय- धर्मकथायोगानुयोगविहारप्रतिषेधान्निरोधे धर्मज्ञानमित्याह—**न संगणिका** इत्यादि । कथा- ग्रहणेन वस्तुविकल्पस्य दुःखसमुदयज्ञानकाले एव उत्सन्नत्वान्निरोधज्ञानस्य कथामात्रविकल्प- प्रतिपक्षत्वमावेदितम् । एतां चावस्थामधिकृत्योच्यते—

नाममात्रमिदं सर्वं संज्ञामात्रे प्रतिष्ठितम् ।
अभिधानात्पृथग्भूतमभिधेयं न विद्यते ॥ इति ॥

—प्रज्ञापारमितापिण्डार्थः—४५

परिज्ञातविकल्पदोषत्वेन बोधिसंभारभूतदानादिप्रचुरविचित्रधर्मसेनाकथायोगानुयोग- विहारप्रतिषेधान्निरोधेऽन्वयज्ञानक्षान्तिरित्याह—**न सेनाकथा** इत्यादि । तत्र सेना बोधि- संभारधर्मसमूहः । निरोधज्ञानावस्थायां प्रभूतसमुदागस्योपयुक्तता अनेन सूचिता । तथा हि— प्रकृतिशून्यतायां स्थितो न कस्यचिद्धर्मस्य अल्पत्वं वा बहुत्वं वा समनुपश्यतीत्यार्यपञ्चविंश- तिसाहस्रिकावचनादित्येके । ग्राह्यग्राहकयोर्हेयत्वेन विपक्षप्रतिपक्षघात्यघातकयुद्धकथायोगानु- योगविहारप्रतिषेधान्निरोधेऽन्वयज्ञानमित्याह—**न युद्धकथा** इत्यादि । एवंभूतावस्थस्य स्वरसत एव विपाकनिरोधश्चतुर्विधो भवति यदुत इन्द्रियग्रामनिरोधः प्रथमः । तथा इन्द्रियाश्रयभूत- भौतिकनगरनिरोधो द्वितीयः । तथा इन्द्रियविषयनिगमनिरोधस्तृतीयः । यदाह—**न ग्राम०** इत्यादि । जनपदादयो निगमप्रभेदाः । आत्माभिनिवेशनिरोधश्चतुर्थः । यदाह—**नात्मकथा** इत्यादि । आत्मन एव आत्मीयसंबन्धेन प्रभेदार्थं न अमात्येत्याद्युपादानम् । स चायं चतुर्विधो विपाकनिरोधः प्रत्येकं त्रैधातुको वेदितव्यः । तत्र कामरूपधात्वोरिन्द्रियाधार- विषयनिरोधोऽतिप्रतीतः । आरूप्ये तु उपेक्षाजीवितमनःसंज्ञेन्द्रियसद्भावादिन्द्रियनिरोधः ।

निकायं जीवितं चात्र निश्रिता चित्तसंततिः ।

इति कृत्वा इन्द्रियाधारनिरोधः । मनोविषयधर्मनिरोधसंभवादिन्द्रियविषयनिरोधः संभवति । सर्वत्र आत्माभिनिवेशस्तु विद्यते एवेति तन्निरोधोऽप्युपपन्नः । दानादिविशेषात्र- बोधेन मात्सर्यदौःशील्यादियोगानुयोगविहारप्रतिषेधात् मार्गे धर्मज्ञानक्षान्तिरित्याह—**न धर्मविरुद्धकथा** इत्यादि । धर्मविरुद्धकथानिषेधेन क्षान्तेरानन्तर्यमार्गत्वात् क्लेशविसंयोग- कारणत्वं विज्ञापितम् । कायवाक्समारम्भः कलहः । वाक्चित्तकृतं वैरूप्यं भण्डनम् । विग्रह- विवादौ व्याख्यातौ । कुशलधर्मानुवर्तनाद्धर्मकामाः । प्रतिपत्तिफलधर्मयोः संस्कृतत्वाद्यथाक्रमं हानोपादानकथनादभेदवर्णवादिनः । विशिष्टतरावस्थाप्राप्त्यभिलाषात् मित्रकामाः । श्रावका- द्यसाधारणधर्मगदनाद्धर्मवादिनः । उपपत्तिवशितालाभात्तत्रोपपद्यन्ते । यथोक्तक्षान्तिमेव स्पष्टयन्नाह—**पुनरपरम्** इत्यादि । कोविदा इति पण्डिताः । **यद्भूयस्त्वेन** इति बाहुल्येन ।

B 417 सर्वधर्मत्रिविमोक्षमुखस्वभावत्वेन अणुमात्रधर्मानुपलम्भात् मार्गे धर्मज्ञानमित्याह—**पुनरपरम्** इत्यादि। मायोपमसर्वधर्मावगमेन अणुमात्रधर्मोपलम्भवैकल्यात् **नैवं भवत्विति अनिवर्तनीयो वाहं न वाहमविनिवर्तनीयः** इति। प्रयोगाद्यवस्थासु विचिकित्सासंशयसंसीदनापदानि योज्यानि। विचिकित्साद्यभावत्वेन विमुक्तिमार्गत्वात् ज्ञानस्य विसंयोगप्राप्तिकारणत्वं
5 कथयति। तदेव दृष्टान्तपूर्वकं स्पष्टयन्नाह—**तद्यथापि नाम** इत्यादि। मारकर्मावबोधादिना विसंयोगप्राप्तिकारित्वमेव ज्ञापयति। पुनरपि दृष्टान्तेन विस्तारयन्नाह—**तद्यथापि नाम सुभूते**
W 689 **पुरुषः** इत्यादि। सर्वथा अपनयनात् प्रतिविनोदयितुम्, तावत्कालसमुदाचारात् विष्कम्भयितुं वा चालयितुं वा। कम्पयितुं वेति स्ववस्थानादपनेतुम्। तत्रैव अदृढीकर्तुमित्यर्थः। अनेन च सदेवकेन लोकेनाशक्यनिवृत्तित्वेन सदेवकं लोकमतिक्रम्य न्यामावक्रमणात् मार्गे धर्म-
10 ज्ञानस्य त्रैधातुकप्रतिपक्षत्वं ज्ञापितं भवेत्। **जातिव्यतिवृत्तस्यापि** इति जन्मान्तरगतस्यापि
W 690 श्रावकादिचित्तानुत्पादेन प्रयोगस्य यानान्तरनिर्याणाभावादैकान्तिकत्वमावेदितम्। अभिसंप्रत्ययलाभेन त्रिसर्वज्ञतात्मकस्वभूमित्रयनिश्चितावस्थानात् मार्गेऽन्वयज्ञानक्षान्तिरित्याह—**जातिव्यतिवृत्तस्याप्येवं भवति—नाहम्** इत्यादि। **स्वस्यां भूमौ** इति त्रिसर्वज्ञतायाम्। तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि** इत्यादि। **चित्तेन** इति पञ्चाभिज्ञाधिगमेन। **ज्ञानेन**
15 इति सत्याभिसंबोधेन। तथा **तन्नान्यथेति** अर्हत्त्वं बोधिसत्त्वैर्न साक्षात्कर्तव्यमिति यथोक्तं
W 691 B 418 भगवता तथैव तन्नान्यथेत्यर्थः। **एवं प्रत्यवेक्षते, एवं समन्वाहरति** इति प्रत्यक्षानुमानाभ्यामवधारयति। **बुद्धाधिष्ठानम्** इति बुद्धरूपम्। **अद्धा बतायम्** इति अवश्यं बतायम्। तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**तथा ह्यस्य** इत्यादि। एकान्तनिष्ठत्वेन सर्वाकारज्ञतादिधर्मार्थं जीवितत्यागात् मार्गेऽन्वयज्ञानमित्याह—**पुनरपरम्** इत्यादि। तत्र कायत्यागादात्मपरि-
20 त्यागः। चित्तत्यागाज्जीवितपरित्यागः। उभयाभिधानं व्यस्तसमस्तात्मपरित्यागज्ञापनार्थमित्यन्ये। प्रेम स्नेहः। गौरवं बहुमानता। **ममाप्येषः** इत्यनेन त्रिसंयोगप्राप्तेः सद्धर्मपरि-
W 692 ग्रहसभागता ज्ञापिता। यथोक्तज्ञानमेव विस्तारयन्नाह—**पुनरपरम्** इत्यादि। तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि तेन** इत्यादि। यथोक्तैरेवाकारैरचिन्त्योपायवतां बोधिसत्त्वानां धर्मनैरात्म्यद्योतकैः साक्षात्कृताः षोडशक्षणा दर्शनमार्गस्थावैवर्तिकबोधिसत्त्वलक्षणं ग्राह्यम्।
25 तथा चोक्तम्—

**रूपादिसंज्ञाव्यावृत्तिर्दार्ढ्यं चित्तस्य हीनयोः।**
**यानयोर्विनिवृत्तिश्च ध्यानाद्यङ्गपरिक्षयः॥ ४७॥**

**कायचेतोलघुत्वं च कामसेवाभ्युपायिकी।**
**सदैव ब्रह्मचारित्वमाजीवस्य विशुद्धता॥ ४८॥**

30 **स्कन्धादावन्तरायेषु संभारे सेन्द्रियादिके।**
**समरे मत्सरादौ च नेति योगानुयोगयोः॥ ४९॥**

विहारप्रतिषेधश्च धर्मस्याणोरलब्धता ।
निश्चितत्वं स्वभूमौ च भूमित्रितयसंस्थितिः ॥ ५० ॥
धर्मार्थं जीवितत्याग इत्यमी षोडश क्षणाः ।
अवैवर्तिकलिङ्गानि दृङ्मार्गस्थस्य धीमतः ॥ ५१ ॥ इति ॥

ननु कथं योगिसंतानप्रत्यात्मवेद्याः क्षणाः परप्रतिपत्तये लक्षणानि, इति चेत्, 5 B 419 W 693
उच्यते । यतः क्षान्तिज्ञानक्षणाः सम्यगधिगताः सन्तोऽनभिनिविष्टग्राह्यग्राहकाकारशुद्ध-लौकिकपृष्ठचित्तसंगृहीतं स्वानुरूपकार्यं रूपादिसंज्ञाव्यावर्तनादिकं परप्रतिपत्तिविषयं जनयन्ति । अधिगमानुरूप एव सर्वत्र योगिनां व्यवहारोऽन्यत्र सत्त्वविनयप्रयोजनवशादिति कृत्वा । तस्मात्ते लक्षणानि भवन्तीति ॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायाम् 10
अविनिवर्तनीयाकारलिङ्गनिमित्तपरिवर्तो नाम सप्तदशः ॥



# १८ शून्यतापरिवर्तोऽष्टादशः ।

B 420
W 695

भावनामार्गस्थावैवर्तिकलक्षणं प्रतिपादयितुं दर्शनमार्गसंबन्धेन प्रस्तावयन्नाह—**अथ खलु** इत्यादि । असाधारणधर्मयोगादाश्चर्यम् । यथोक्तक्षान्तिलाभेन दर्शनहेयक्लेशविसंयोगात् महागुणसंभारसमन्वागतः[1] । यथानिर्दिष्टज्ञानलाभेन दर्शनहेयक्लेशापुनरुत्पत्तेरप्रमाणगुण-
5 समन्वागतः । तदनु सर्वाकारज्ञताभिनिर्हारज्ञानलाभादपरिमितगुणसमन्वागतः । साधूक्तत्वेन **एवमेतत् सुभूते, एवमेतत्** इति । अनुवादस्य निर्युक्तिकत्वात् तत्कस्य हेतोः इत्याशङ्क्याह—**अविनिवर्तनीयेन** इत्यादि । आकारानन्त्यादनन्तम्, सर्वतोऽविषयत्वेनापर्यन्तम्, सर्वलोका-

W 696

कम्प्यत्वेनासंहार्यम् । संबन्धमापाद्य एवं प्रकृतार्थमाह—**प्रतिबलो भगवन्** इत्यादि । यस्माद्भगवानाकारादिकं निर्देष्टुं प्रतिबलः, अत एव भगवता भावनामार्गस्थावैवर्तिकलक्षणार्थं
10 गम्भीराणि स्थानानि कथनीयानीत्यर्थः । **गम्भीराणि गम्भीराणि** इति वीप्साभिधानं पौनः-पुन्याभ्यासमार्गज्ञापनार्थम् । स्थानानीति स्थित्यभिधानम् । यत्र भावनामार्गे स्थित्वा बोधिसत्त्वाश्चत्वारि स्मृत्युपस्थानानि यावदष्टादशावेणिकान् बुद्धधर्मान् परिपूरयेयुः, तस्य निरवशेषाधिगमपरिपूरिकारणत्वज्ञापनेन प्राबन्धिकताद्द्योतनार्थम् "नागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते" इति न्यायाद्भावनामार्गं विशेषयन्नाह—**साधु साधु** इत्यादि । **गम्भीराणि**
15 इति । गम्भीरो भावनामार्ग इत्यर्थः । **निगमयितुकामः** इति प्रतिपादयितुकामः । कतम-

B 421
W 303

त्पुनरस्य गाम्भीर्यमित्याह—**गम्भीरम्** इत्यादि । भावप्रधानोऽयं निर्देशः । गाम्भीर्यमित्यर्थः । तत्र ग्राहकविवेकेन शून्यता । ग्राह्याभावादानिमित्तम् । ग्राह्यग्राहकविविक्ताद्वयज्ञानस्यापि वस्तुसतोऽधिगन्तव्यस्यासत्त्वादप्रणिहितम् । जात्यादिलक्षणत्रयविसंयोगादनाभोगप्रवृत्तत्वाद्वा

W 697

अनभिसंस्कारः । हेतोरसत्त्वादनुत्पादः । प्रतिसंधिविगमादजातिः । दर्शनमार्गविपक्ष-
20 विरहादभावः । भावनामार्गविपक्षविश्लेषाद्विरागः । आयत्यां दुःखानुत्पत्तिधर्मत्वान्निरोधः । अनिमित्तशान्तसुखविहारपदस्थानत्वान्निर्वाणम् । दृष्टे धर्मे दुःखाप्रचारफलत्वाद्विगमः, इत्येव-मेषां शून्यतादीनामर्थभेदो वाच्यः इत्येके । सर्वैरप्येतैः पदैः व्यावृत्तिभेदाद्धर्मधातुरेव निर्दिश्यते इति ग्राह्यम् । सा च शून्यतादीनां गम्भीरता समारोपापवादान्तद्वयरहिततेति प्रतिपादनार्थं काक्वा प्रश्नयन्नाह—**एतेषामेव** इत्यादि । भगवन्नित्यनन्तरं किमिति शेषः । परिहारार्थमाह—
25 **सर्वधर्माणाम्** इत्यादि । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**रूपं हि** इत्यादि । एतदेव कुत इति प्रश्नयन्नाह—**कथं च सुभूते** इत्यादि । परिहरन्नाह—**यथा सुभूते तथता, तथा गम्भीरं रूपम्** इत्यादि । यथा शून्यता गम्भीरा, तथा तत्त्वतोऽनुत्पन्नत्वेन रूपादिकमपि गम्भीर-मित्यर्थः । अनेन च तथतायां न रूपादिकम्, इति समारोपान्तः प्रतिषिद्धः । यथा

W 698

रूपतथता, तथा गम्भीरं रूपमिति ।

30 यः प्रतीत्यसमुत्पादः शून्यता सैव ते मता ।

---

[1] W om. °संभार°.

इति वचनाद्रूपादितथतैव संवृत्या रूपादिकमविचारैकरम्यमिति यावत्। अनेन च नान्यत्र रूपादिकात्तथतेत्यपवादान्तः प्रतिक्षिप्तः। उपसंहरन्नाह—**यत्र सुभूते न रूपम्** इत्यादि। **आश्चर्यम्** इति एकस्यैव युगपदर्थद्वयकथनाद्विस्मयः। यावद्वचनेन अभिनिवेश-प्रतिषेधानभिनिवेशविधानादिपरिग्रहः। **सूक्ष्मेणोपायेन** इति अनुत्रासक्रमेण। रूपतश्च निवारितो निर्वाणं च सूचितमिति तथतायां रूपादिप्रतिषेधाद्रूपादौ प्रवृत्तिनिराकरणाय निवारितः। तत्रैव शून्यत्वेनाभ्यासकरणान्निर्वाणं च कथितं स्यात्। तदयं समासार्थः—शून्यतादिके न रूपादिकम्, न ततोऽन्यच्छून्यतादिकमिति यथाक्रमं या समारोपापवादान्त-मुक्तता, सा शून्यतादेर्गाम्भीर्यं शून्यतादिकमिति गाम्भीर्ययोगाद्गम्भीरोऽभ्यासपथ इति। तथा चोक्तम्—

**गम्भीरो भावनामार्गो गाम्भीर्यं शून्यतादिकम्।**
**समारोपापवादान्तमुक्तता सा गभीरता॥ ५२॥** इति॥

विशेषणं निर्दिश्य एवं विशेष्यभावनामार्गार्थमाह—**इमानि सुभूते** इत्यादि। **चिन्त-यिष्यति** इति श्रुतमय्या प्रज्ञया। **तुलयिष्यति** इति चिन्तामय्या। **उपनिध्याति** इति भावनामय्या। समाधौ वा प्रयोगमौलपृष्ठभाविन्या प्रज्ञयेति यथाक्रमं योज्यम्। कस्मिन् पुनर्विषये भावनामार्ग इत्याह—**एवं मया** इत्यादि। तत्रैवं मया स्थातव्यम्, यथा निर्वेध-भागीयाधिकारेण प्रज्ञापारमितायामाज्ञप्तम्। एवं मया शिक्षितव्यम्, यथा दर्शनमार्गाधिकारेण प्रज्ञापारमितायामाख्यातम्। एवं मया प्रतिपत्तव्यम्, यथा भावनामार्गाधिकारेण प्रज्ञापार-मितायामुपदिष्टमिति वाच्यम्। तथा चोक्तम्—

**चिन्तातुलननिध्यानान्यभीक्ष्णं भावनापथः।**
**निर्वेधाङ्गेषु दृङ्मार्गे भावनामार्ग एव च॥ ५३॥** इति॥

अत एव चत्वारि निर्वेधभागीयानि दर्शनभावनामार्गौ चाधिकृत्य, तथा संपादय-मानस्तथोपनिध्यायंस्तथोपपरीक्षमाणस्तथा प्रयुज्यमानस्तथा घटमानस्तथा व्यायच्छमान इति षट् पदानि भवन्ति। कथं भावनामार्गस्य स एव विषयः? प्राबन्धिकत्वात्पूर्वपूर्वस्योत्तरोत्तर इत्यदोषः। भावनामार्गानुशंसार्थं प्रश्नयन्नाह—**अयम्** इत्यादि। यो बोधिसत्त्वश्चिन्तादि-प्रयुक्तः सम्यगेकदिवसमप्यत्र भावनामार्गे योगमापद्यते, सोऽयं तेनैकदिवसेन कियत्पुण्यं करोति? परिहारार्थमाह—**तद्यथा** इत्यादि। न्यूनेऽपि विषयेऽधिकरागत्वाद्रागचरितः। रागविकल्पबाहुल्याद्वितर्कचरितः। समुदायावयवशोभत्वाद्यथाक्रमं योषिदभिरूपा प्रासादिका। दृष्ट्यनुकूलत्वेन दर्शनीया। अमुष्मिन् स्थाने त्वया गन्तव्यमित्यभिधानं संकेतः। **न वशयेत्** इति न लभेतेत्येके, न पश्येदित्यपरे। आदिमध्यपर्यवसानेषु स्वाभिमतसुरतानुकूलव्यापार-निर्वर्तनाद्यथासंख्यमेवं करिष्यामि, एवं रमिष्यामि, एवं क्रीडिष्यामि, सर्वत्र यथेष्टप्रवर्तनादेवं प्रविचारयिष्यामीति योज्यम्। **इयतः** इति रागचरितपुरुषवितर्कसंख्यानित्यर्थः। **कर्मणः**

B 424 क्षयाच्छोरयति। विष्कम्भणाद्विपृष्ठीकरोति। अपूर्वस्यानुत्पादनेन संसाराजन्मप्रबन्धतो व्यन्तीकरोति। तदेवमप्रमाणकुशलसंपरिग्रहादपरिमितकल्पानां छोरणविपृष्ठीकरणव्यन्तीकरणलक्षणस्त्रिविधोऽनुशंसो भावनामार्गकारित्रज्ञापनार्थं कथितः स्यात्। **य इह** इत्यादि। निर्वेधभागीयाधिकारेण यथाज्ञप्तं तिष्ठति। दर्शनमार्गाधिकारेण यथाख्यातं शिक्षते। मृदुमध्याधि-
5 मात्रभावनामार्गाधिकारेण यथोपदिष्टं यथानिर्दिष्टं प्रतिपद्यते, उपनिध्यायति, योगमापद्यते इति संबन्धः। उपसंहरन्नाह—**एवं सुभूते बोधिसत्त्वः** इत्यादि। **एकदिवसेन तावत्कर्म करोति** इत्यनन्तरं जन्मप्रबन्धतोऽपरिमितकल्पान् यावता परित्यजतीति शेषः॥

भावनामार्गस्येदानीं प्रकारभेदो द्रष्टव्यः। त्रयो हि मूलप्रकाराः मृदुमध्याधिमात्राः। तेषां पुनः प्रत्येकं मृदुमध्याधिमात्रभेदे क्रियमाणे नव प्रकारा भवन्ति। यथा प्रतिपक्षस्य,
10 एवं विपक्षस्यापि नव प्रकारा वेदितव्याः। तत्र च मृदुमृदुना मार्गेणाधिमात्राधिमात्रविकल्पस्य प्रहाणं यावदधिमात्रेण मृदुमृदुविकल्पस्येति ग्राह्यम्। आदित एव अधिमात्रमार्गासंभवादुत्पन्नाधिमात्रमार्गस्य चाधिमात्रक्लेशाभावात्। यथौदारिको मलश्चैलात्पूर्वं
W 702 निर्धूयते, पश्चात्सूक्ष्मः। यथौदारिकं च तमः सूक्ष्मेणालोकेन हन्यते, सूक्ष्मं चाधिमात्रेण। शुक्लाश्च धर्मा बलवन्तः, दुर्बलास्तु कृष्णाः, क्षणिकमृदुकेनाप्यार्यमार्गेण अनादिसंसारपरं-
15 पराप्यायितानामधिमात्रक्लेशानामुन्मूलनात्। बहुकालसंवर्धितदोषाणां त्रिवृत्कर्षनिष्कर्षणवत्,
B 425 क्षणिकाल्पप्रदीपमहातमोघातवच्चेत्याचार्यवसुबन्धुः। तत्रान्यापदेशेनोत्तरोत्तरपुण्याधिकत्वप्रतिपादनात् प्रतिपक्षप्रभेदमभिभूयमानपुण्यवचनेन च विपक्षप्रभेदं निर्दिशन् विकल्पक्लेशा बोधिसत्त्वा इति कृत्वा अधिमात्राधिमात्रविकल्पप्रकारं वक्तुमाह—**यश्च प्रज्ञापारमिताविरहितः** इत्यादि। मृदुमृदुमार्गार्थमाह—**अयमेव ततः** इत्यादि। तत इति दानदातुः सकाशाद्वि-
20 शिष्यते इति। असंख्येयाप्रमेयाप्रमाणपुण्यपरिग्रहाद्विशिष्टतरः। अधिमात्रमध्यविकल्पं कथयन्नाह—**पुनरपरम्** इत्यादि। **दद्यात् प्रतिष्ठापयेत्** इति निर्यातयेच्चिरस्थितिकं च
W 703 कुर्यादित्यर्थः। मृदुमध्यमार्गार्थमाह—**यश्च बोधिसत्त्वः** इत्यादि। बहुतरमित्यसंख्येयादिस्वभावम्। अधिमात्रमृदुविकल्पं प्रतिपादयन्नाह—**पुनरपरम्** इत्यादि। यावद्वचनात्सकृदागामिप्रभृतीनां ग्रहणम्। अणुमात्रभयदर्शित्वेन शीलेषु च परिपूरणकारी। मृद्वधिमात्र-
25 मार्गार्थमाह—**यश्च बोधिसत्त्वः** इत्यादि। **ततो मनसिकारात्** इति प्रज्ञापारमिताभावनातः।
W 704 मध्याधिमात्रविकल्पं ख्यापयन्नाह—**पुनरपरम्** इत्यादि। **क्षान्त्या च समन्वागतः** इति परापकारमर्षणादिक्षान्त्या युक्तः। मध्यमृदुमार्गार्थमाह—**यश्च** इत्यादि। धर्मदानमिति सम्यगर्पणम्। अत एव धर्मं देशयेदिति पूर्वस्मादिदं विशिष्यते। मध्यमध्यविकल्पमावेदयन्नाह—**पुनरपरम्** इत्यादि। उत्तप्तवीर्यत्वादारब्धवीर्यः। मध्यमध्यमार्गार्थमाह—**यश्च खलु पुनः** इत्यादि।
30 **परिणामयेत्** इति उपलम्भदृष्ट्या निर्यातयेत्। अत एवानन्तरं प्रज्ञापारमितोक्तेन परिणामेनेति
W 705 विशेषो वक्ष्यते। अयमेव धर्मदानपूर्वकोपलम्भपरिणामो मध्यमृदुविकल्पो वक्ष्यमाणपरिणामापेक्षया स्यात्। मध्याधिमात्रमार्गार्थमाह—**पुनरपरम्** इत्यादि। **प्रज्ञापारमितोक्तेन** इति सर्व-

धर्मानुपलम्भयोगेन । ततः इत्युपलम्भयोगेन परिणामयितुः सकाशात् । मृद्वधिमात्रविकल्पं निर्दिशन्नाह—**पुनरपरम्** इत्यादि । **प्रतिसंलाने न पुनरेव योगमापद्यते** इति परिणामोत्तर-कालं प्रज्ञापारमिताविहारे न चित्तसमाधानतां कुर्यात् । अधिमात्रमृदुमार्गार्थमाह—**यश्च खलु पुनः** इत्यादि । **प्रतिसंलाने पुनरेव योगमापद्येत** इति भूयोऽपि मनसि कुर्यात् । एतदेव स्पष्टयन्नाह—**प्रतिसंलाने च पुनरेव योगमापद्यमानः** इति । मृदुमध्यविकल्पं वक्तुमाह— 5 **यदा भगवन्नभिसंस्कारः** इत्यादि । अभिसंस्कारश्चित्ताभोगो विकल्पो विपर्यासो यदा कथं विकल्पबीजानुगमात्तदा बहुतरं पुण्यं परिणामनाकाले प्रसवतीत्युच्यते । विकल्पस्यापि मायोपमत्वेनानुगमादविपर्यासप्रवृत्तत्वेन संवृत्या बहुतरं पुण्यमिति परिहरन्नधिमात्रमध्यमार्गार्थ-माह—**सोऽपीदानीम्** इत्यादि । स इत्यभिसंस्कारप्रभवः पुण्यराशिः । **इदानीम्** इति अष्टम-प्रकारभावनामार्गावस्थायाम्, न तु पूर्वम्, तत्र विपर्यासप्रभवत्वात् । अध्यात्मबहिर्धोभयशून्य- 10 ताभिः शून्यकः । शून्यतामहापरमार्थशून्यताबलाद्रिक्तकः । संस्कृतासंस्कृतात्यन्तानवराग्रा-नवकारशून्यताभिस्तुच्छकः । प्रकृतिशून्यतादिभिर्नवप्रकारैरसारकः । संनाहप्रस्थानसंभार-निर्याणप्रतिपत्तिभिर्यथाक्रमं शून्यक इत्यादि पदचतुष्टयमित्यन्ये । मृदुमृदुविकल्पं कथयन्नाह—**यथा यथा खलु पुनः** इत्यादि । **यथा यथा** इति येन येन अध्यात्मादिशून्यताद्याकारेण । बोधिसत्त्वो महासत्त्वः इत्यनन्तरं संख्येयाप्रमेयाद्यधिगमसंगृहीत इति शेषः । **एवं धर्मान्** 15 इति मायोपमान् । अधिमात्राधिमात्रमार्गार्थमाह—**यथा च यथा च सुभूते बोधिसत्त्वः** इत्यादि । सर्वविकल्पबीजविगमादप्रमेयमसंख्येयं पुण्यं प्रसवति । अप्रमेयमित्यनेन अप्रमाण-मप्याक्षिप्तम् । कोऽर्थभेद इति प्रश्नयन्नाह—**अप्रमेयस्य च** इत्यादि । किं नानाकरणमिति किमुपलक्षणम् । किं सामान्यलक्षणमिति यावत् । **कः प्रतिविशेषः** इति । किं स्वभावलक्षणं किं स्वलक्षणमित्यर्थः । सामान्यलक्षणार्थमाह—**अप्रमेयम्** इत्यादि । **यत्र प्रमाणान्युपरमन्ते** 20 इति यस्मिन् पुण्यविषये प्रत्यक्षेण विषयीकर्तुमनुमानेन च मातुमशक्यत्वात् प्रत्यक्षानुमान-प्रमाणानि न प्रवर्तन्ते, तदप्रमेयमप्रमाणम् । अनेनाधिगमस्यासंस्कृतत्वं विभुत्वं च ज्ञापित-मिति केचित् । **यन्न शक्यं संख्यया क्षपयितुम्** इति अविद्यमानसंख्यत्वेन यत्पुण्यं संख्यया निष्ठापयितुमशक्यम्, तदसंख्येयम् । अनेन तस्य समताधिगमो ज्ञापितः इत्येके । स्वभाव-लक्षणार्थमाह—**स्याद्भगवन्** इत्यादि । **पर्यायः** प्रभेदः । **यत्** इत्यव्ययत्वात् येनेत्यर्थः । 25 **अप्रमेयम्** इत्यसंख्येयाद्युपलक्षणम् । साधूक्तत्वेन तद्वचनमनुवदन्नाह—**यत्सुभूतिरेवमाह** इत्यादि । एवमनूद्य प्रतिपादयन्नाह—**स्यात्सुभूते** इत्यादि । **येन** इति धर्मधातुस्वभावात्म-केनेति । परमार्थतः शून्यतालक्षणोऽपि विकल्पप्रतिपक्षयोर्भेदादनागम्य ध्यानान्तरादिनव-भूमिषु महोपायकौशलबलेन वा कामधात्वादिनवभूमिषु यथासंख्यं यथोक्तनवप्रकारः प्रबन्धेन प्रवर्तमानो भावनामार्गोऽवसातव्यः । तथा चोक्तम्— 30

W 706 B 427 W 707 W 708 B 428

**प्राबन्धिकत्वादिष्टोऽसौ नवधा च प्रकारतः ।**
**मृदुमध्याधिमात्राणां पुनर्मृद्वादिभेदतः ॥ ५४ ॥** इति ॥

ननु एकैकमेव प्रकारमधिकृत्य भिन्नार्थासंख्येयप्रमेयाप्रमाणपुण्यप्रसवकार्यवचनस्य प्रयोगेण कारणानामपि बहुधा भेदात् कथं नवप्रकारो भावनापथ इत्यभिप्रायवानाह—**कस्य पुनः** इत्यादि। परिहरन्नाह—**शून्यतायाः** इत्यादि। त्रिविमोक्षमुखस्वभावभावनामार्गप्रकारस्येत्यर्थः। प्रकर्षपर्यन्तवर्तित्वान्नवमप्रकारस्यैवाधिवचनमित्यवगमादाह—**किं शून्यतायाः**

5 इत्यादि। **नान्येषाम्** इति अतोऽन्येषां सर्वधर्माणां प्रथमादिप्रकाराणां किं नाधिवचनम्? तद्वचनेन परिहर्तुमाह—**तत्किं मन्यसे** इत्यादि। सर्वधर्मा इति प्रथमादिप्रकाराः। शून्या एवेति न्यायस्य सर्वत्र तुल्यत्वात् त्रिविमोक्षमुखस्वभावाः सर्व एव प्रकारास्तथागतेनाख्याताः। सर्वप्रकाराणां शून्यतादिवचनमिति प्रतिपाद्य पर्यायार्थमाह—**ये च सुभूते** इत्यादि। **अप्रमेयतापि** इति। अपिशब्दादसंख्येयतादयः। यस्मादसंख्येयाप्रमेयादिनिर्देशा

10 वागभिलापस्वभावाः व्यावृत्त्यपेक्षोपजनितनानात्वरूपेण एकस्मिन्नर्थे प्रयुक्ताः, तस्मात्परमार्थेन यथोक्तलक्षणस्य भावनामार्गस्य भेदं कर्तुं न क्षमा इत्याह—**तस्मात्तर्हि** इत्यादि। **एषाम्** इत्यसंख्येयादीनाम्। संवृत्या त्वनालम्बनमहाकरुणास्वभावधर्मधातुनिष्यन्दभूतास्ते देशनाधर्मस्वभावा यथोक्तनिर्देशा बालजनानां महाफलोदयप्रकाशकत्वेनाभिमतास्तथागतस्येत्याह—**अभिलापाः** इत्यादि। **एते** इत्यसंख्येयादयः। **देशनाभिनिर्हारनिर्देशः** इति देशना अभि-

15 निर्ह्रियते जन्यतेऽनेनेति देशनाभिनिर्हारो धर्मकायः, तस्योद्भावनासंवृत्या निर्देश इति विग्रहः। तथा चोक्तम्—

**असंख्येयादिनिर्देशाः परमार्थेन न क्षमाः।**

**कृपानिष्यन्दभूतास्ते संवृत्याभिमता मुनेः॥** ५५ ॥ इति॥

तथागतस्य करुणानिष्यन्दनिर्देशत्वादेतैः सर्वविषयैर्भवितव्यमित्याह—**आश्चर्यम्**

20 इत्यादि। यावद्वचनादप्रमेयतादि परिग्रहः। **सर्वधर्माणाम्** इति प्रथमादिनवप्रकाराणाम्। धर्मतेति निर्वाणरूपता, व्यञ्जनार्थयोर्भेदानुपलम्भादनभिलाप्या। भाषितस्येत्यनन्तरनिर्देशस्य। **तथा सर्वधर्माः** इति रूपादयः। साधूक्तत्वात् **एवमेतत्** इत्याद्यनूद्य पूर्ववत् **तत्कस्य हेतोः** इत्याशङ्क्याह—**या सुभूते** इत्यादि। **सर्वधर्माणां शून्यता** इति ज्ञेयत्वादिभेदान्तरप्रतिक्षेपेण शून्यतेत्युक्तम्। ततः शून्याः सर्वधर्मा एवाभिलपितुं न शक्या इत्यर्थः। ननु निःस्वभावतया

25 तत्त्वान्यत्वाभ्यामवाच्यस्य परमार्थतो धर्मतास्वरूपस्य अभिमतमार्गवस्तुनो विपक्षप्रतिपक्षयोर्यथाक्रममपगमोदयौ न युज्येते, सर्वथातिशयाधानाभावादित्याह—**किं पुनर्भगवन्** इत्यादि। तत्त्वेनाह—**नो हीदं सुभूते** इत्यादि। यद्येवं भावनासंज्ञकेन मार्गेण नैव किंचिदधिमात्रादि नवविधं विकल्पजातं परित्यक्तम्, नापि किंचिन्मृदुमृद्वादि नवप्रकारं मार्गजातं प्राप्तम् अतोऽनुपन्यसनीय एवेत्यभिप्रायेण अनिष्टमापादयन्नाह—**सचेद्भगवन्** इत्यादि। **अनभिल-**

30 **प्यस्य** इति भावनामार्गस्य। तदप्रभेदत्वादेव दानादीनामपि हानिवृद्ध्यभाव इत्यादि—**दानपारमिताया अपि** इत्यादि। भवत्वेवम्, को दोष इति चेत्, आह—**सचेद्भगवन्** इत्यादि। कथमिति क्षेपे। नैवेत्यर्थः। उपचयार्थमाह—**न च भगवन्** इत्यादि। तथा चोक्तम्—

**हानिवृद्धी न युज्येते निरालापस्य वस्तुनः ।**
**भावनाख्येन किं हीनं वर्त्मना किमुदागतम्** ॥ ५६ ॥ इति ॥

परमार्थतोऽनिष्ठापादनमपि न भवतीत्याह—**एवमेतत्** इत्यादि । संवृत्या तु यथा अनुत्तरा सम्यक्संबोधिः, तथा भावनामार्गोऽक्रियाकारीति कथयन्नाह—**अपि तु खलु पुनः** इत्यादि। **नैवं भवति** इति दानपारमिता विवर्धते वा परिहीयते वेति वस्तूपलम्भयोगेन नैवं चित्तमुत्प- 5 द्यते । **यथानुत्तरा** इति यथाधिपत्यमात्रेण निरतिशयाधाना अनुत्तरा सम्यक्संबोधिर्विनेयानां पुण्यज्ञानानुरूपतया विशिष्टार्थप्रतिभासिचित्तजननद्वारेण परिणामितपुण्यवर्धनात् संवृत्या अभिमतार्थस्य साधिका, तथा परिणामयतीत्यर्थः । तद्वदयमपि आगन्तुकमलापगमाद्भावनया साक्षात्कृतो भावनामार्गो मायोपमत्वान्निरतिशयाधानो यथा संवृत्या विपक्षप्रतिपक्षयोरपगमो- दयक्रमेण अर्थक्रियाकारी तथोपन्यस्यते इति मतिः । तथा चोक्तम्— 10

W 713

**यथा बोधिस्तथैवासाविष्टस्यार्थस्य साधकः** । इति ॥

अस्यैवार्थस्य विस्तरेण निर्देशार्थं **पुनरपरम्** इत्यादि पञ्चहारकोपादानम् । किंलक्षणा बोधिरित्याह—**का पुनरेषा** इत्यादि । **तथतैषा** इति तथतास्वरूपा । मायोपमनिष्प्रपञ्च- ज्ञानात्मकधर्मकायादिमयतथागतस्वभावेति यावत् । भावनामार्गेऽपि तथतास्वभाव एवेत्यभि- प्रायः । तथा चोक्तम्— 15

B 431
W 714
W 715

**तथतालक्षणा बोधिः सोऽपि तल्लक्षणो मतः** ॥ ५७ ॥ इति ॥

**न च सुभूते तथता विवर्धते वा परिहीयते वा** तत्स्वरूपत्वात्, तथा बोधिमार्गा- वपीति शेषः । एवं हि हेतुफलयोः फलहेत्वोर्वा परस्परस्वभावानुविधानाद्धेतुफलसंबन्धावैप- रीत्यं समुद्भावितं स्यात् । पुनरपि संवृत्या मार्गस्य सामर्थ्यमावेदयन्नाह—**सचेद्बोधिसत्त्वः** इत्यादि । **तत्प्रतिसंयुक्तैः** इति भावनामार्गप्रतिबद्धैः । **अभीक्ष्णं बहुलम्** इति प्रयोगपृष्ठा- 20 वस्थाभेदेन द्वयोपादानम् । मौलावस्थायां तन्मयत्वेन विहरणानुपपत्तेः । **एवम्** इति तथारूपेण । उपसंहरन्नाह—**एवं खलु सुभूते** इत्यादि । **अर्थस्य** इति भावनामार्गस्य ॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां
शून्यतापरिवर्तो नामाष्टादशः ॥

B 432
W 717

# १९ गङ्गदेवाभगिनीपरिवर्त एकोनविंशः ।

संवृत्याप्यर्थक्रियाविशिष्टार्थप्रतिभासिचित्तजननद्वारेण न घटते इत्याशङ्कयन्नाह—**किं पुनर्भगवन्** इत्यादि । एकैकस्मिंश्चित्ते पूर्वापरीभूते बुद्धबोधिनिष्पादकसर्वाकारज्ञतादिसमस्तार्थाप्रतिभासनान्नैव एकैकेन प्रथमेन चित्तोत्पादेन पश्चिमेन वा बोधिमभिसंबुध्यते बोधिसत्त्वः इत्यर्थः । एकविज्ञानसंततयः सत्त्वा इति वचनादसंभवित्वेन किं युगपदुत्पन्नसमीहितार्थनिष्पादकधर्मप्रतिभासेन अनेकचित्तक्षणेन बोधिमभिसंबुध्यते इति पक्षो नाशङ्कितः । विदितानुत्तरबुद्धबोधिनिष्पादकधर्मस्वरूपेण क्रमोत्पत्त्युपपन्नपूर्वापरीभूतानेकचित्तक्षणेन बोधिमभिसंबुध्यते इत्ययमपि पक्षो न संगच्छते इत्याह—**पौर्वको भगवन्** इत्यादि । **असमवहितः** इति पश्चिमप्रथमयोर्यथाक्रमं निरन्वयोदयविनाशेन परस्परमसंबन्धादसंश्लिष्टः । **कथम्** इति संबन्धाभावाद्विशिष्टार्थप्रतिभासिचित्तानुत्पादान्नैव कुशलमूलानामुपचयो भवति । ततो न अनुत्तरा सम्यक्संबोधिरिति भावः । पूर्वोक्तपक्षस्यानभिमतत्वात् पश्चिमपक्षे

W 718

प्रसिद्धदीपदृष्टान्तयोगेन परिहारार्थमाह—**तत्किं मन्यसे** इत्यादि । **तैलप्रद्योतस्य** इति प्रदीपस्य । **प्रथमाभिनिपातेन** इति प्रथमक्षणमिलितेन । **नो हीदम्** इति प्रत्येकमसामर्थ्यादुक्तम् । तदेव स्पष्टयन्नाह—**न हि भगवन्** इत्यादि । प्रथमे ज्वालावर्त्योर्मीलनक्षणे द्वितीयक्षणमन्तरेण स्वकारणपरंपराक्रमायातसमानकालसंहतोत्पत्त्यविशिष्टत्वात् कार्यकारणलक्षण-

B 433

दाह्यदाहकभावानुपपत्तौ नार्चिषा प्रथमाभिनिपातेन सा वर्तिर्दग्धा । पश्चिमेनैव दीपक्षणेन तर्हि दग्धा, इति चेत्, आह—**न च प्रथमाभिनिपातमनागम्य अर्चिषा सा वर्तिर्दग्धा** इति । अपि तु प्रथमं दीपक्षणमपेक्ष्य अर्चिषा पश्चिमेन सा वर्तिर्दग्धा, प्रथमक्षणमन्तरेण पश्चिमक्षणासंभवात् । प्रथमक्षणवत् पश्चिमक्षणस्यापि नय इत्याह—**न च भगवन्** इत्यादि । द्वितीयेऽपि विशिष्टज्वालावर्त्योरुत्पत्तिक्षणे प्रथमक्षणमन्तरेण नित्यसत्त्वादिप्रसङ्गतया संवृत्युत्पादाभावात् कार्यकारणलक्षणदाह्यदाहकभावविरहे पश्चिमाभिनिपातेन अर्चिषा न सा वर्तिर्दग्धा । प्रथमेनैव तर्हि दीपक्षणेन दग्धेति चेत्, आह—**न च पश्चिम** इत्यादि । अपि तु पश्चिमं दीपक्षणमपेक्ष्य अर्चिषा पूर्वेण वर्तिर्दग्धा, पश्चिमक्षणमन्तरेण प्रथमक्षणस्य दाहेऽसामर्थ्यात् । प्रत्येकमसामर्थ्येऽर्थादुभयोरभ्युपगतसामर्थ्यस्य आहत्य प्रतिपादनार्थं

W 719

पुनरपि प्रश्नयन्नाह—**तत्किं मन्यसे सुभूते, अपि नु सा वर्तिर्दग्धा** इति । अभ्युपगतार्थस्यान्यथाकर्तुमशक्यत्वादाह—**दग्धा भगवन्** इत्यादि । यदि नाम पूर्वोत्तरक्षणयोर्यथाक्रमं तुल्यकालनिरन्वयविनाशोदयात् परस्परासंसृष्टत्वम्, तथापि यदा संहतविशिष्टोत्पन्नं प्रथमदीपवर्तिक्षणं इदंप्रत्ययतात्मकप्रतीत्यसमुत्पादधर्मतया समपेक्ष्य, अविचारैकरम्यत्वेन हेतुफलसंबन्धबलादाहितसामर्थ्यातिशय एव विशिष्टो द्वितीयदीपवर्तिक्षणः स्यात्, तदा निर्हेतुकविनाशेऽपि कार्यकारणलक्षणदाह्यदाहकभावसद्भावात् प्रथमपश्चिमक्षणाभ्यां वर्तिर्दग्धेत्यर्थः । अनन्तरमर्थं प्रकृतार्थे नियोजयन्नाह—**एवमेव सुभूते** इत्यादि । सुबोधम् ।

B 434
W 720

पूर्वापरीभूताभ्यां प्रत्येकमनभिसंबोधिर्युगपदुत्पन्नैस्तर्ह्यभिसंबुध्यते इति चेत्, आह—**न च**

**तैश्चित्तोत्पादैः** इति । युगपदुत्पन्नैरपि बहुभिश्चित्तक्षणैर्नाभिसंबुध्यते । एकविज्ञानसंततयः सत्त्वा इति वचनादसंभवित्वेनेति भावः । अन्यथा तर्हि बुध्यते इति चेत्, आह–**न चान्यत्र तेभ्यश्चित्तोत्पादेभ्योऽभिसंबुध्यते** इति । यथोक्तचित्तव्यतिरेकेण चित्तान्तरेण नाभिसंबुध्यते, असंभवात् । सर्वथा तर्हि बोध्यसंभवः स्यादित्याह–**अभिसंबुध्यते च** इत्यादि । पूर्वापरीभूतक्षणयोरेकविषयोपयोगज्ञापनपरेण दीपदृष्टान्तन्यायेन बोधिनिष्पादककतिपयपदार्थ- 5 प्रतिभासि प्रथमविज्ञानं पूर्ववत्प्रतीत्य तत्प्रतिभासार्थाभ्यधिकविशिष्टार्थप्रतिभासिपश्चिमविज्ञानोदयादाभ्यां चित्तोत्पादाभ्यामभिसंबुध्यते बोधिसत्त्वोऽनुत्तरां बोधिमित्यर्थः । यथोक्तेनैव च दीपदृष्टान्तेन अष्टप्रकारा गम्भीरधर्मता प्रतिसर्तव्या । तथा चोक्तम्—

> **पूर्वेण बोधिर्नो युक्ता मनसा पश्चिमेन वा ।**
> **दीपदृष्टान्तयोगेन गम्भीरा धर्मताष्टधा** ॥ ५८ ॥ इति ॥ 10

प्रसङ्गागतं निर्दिश्य इदानीं भावनामार्गस्थबोधिसत्त्वानामवैवर्तिकलक्षणकथनाय (W 721) यस्मिन् विषयेऽष्टविधगाम्भीर्यं तद्वक्तव्यम्, इत्युत्पादगाम्भीर्यं तावत्कथयन्नाह–**गम्भीरोऽयं भगवन्** इत्यादि । **अभिसंबुध्यते च** इत्यादिना संवृत्या क्षणद्वयेन बोध्यधिगमोऽभ्युपगतः । सोऽपि न युक्त इत्याह–**तत्किं मन्यसे** इत्यादि । यच्चित्तं प्रथमक्षणवर्ति निरुद्धम्, अपि नु तत्किं द्वितीयक्षणे संवृत्या पुनरुत्पत्स्यते, यतः क्षणद्वयेन बोधिर्युक्ता स्यात् ? निरन्वय- 15 विनष्टस्य पुनरुत्पादासंभवादाह–**नो हीदम्** इति । हेतुमन्तरेण फलासंभवात्, पश्चिम- (B 435) क्षणव्यापारेऽपि पारंपर्येण प्रथमक्षणव्यापारोपचारात् क्षणद्वयेन बोधिर्युक्ता । न तु संवृत्यापि प्रथमक्षणस्य मुख्यतो व्यापार इत्यर्थः । ततश्चेदमुक्तं स्यात् न पूर्वापरक्षणाभ्यां न च तावनागम्य विशिष्टार्थोत्पादनम् । इदमुत्पादगाम्भीर्यमिति । निरोधगाम्भीर्यार्थमाह–**तत्किं मन्यसे सुभूते यच्चित्तमुत्पन्नम्, अपि नु तन्निरोधधर्मि** इति । तत्रोत्पन्नमतीतं विनष्ट- 20 सत्ताकमिति यावत् । तत्त्वेन निरोधरूपत्वादाह–**निरोधधर्मि** इति । निरोधः शून्यता, स एव धर्मोऽस्य विद्यते इति निरोधधर्मि, तथतात्मकमित्यर्थः । तस्य किं द्वितीये क्षणे निरोध इत्याह– **तत्किं मन्यसे सुभूते यन्निरोधधर्मि अपि नु तन्निरोत्स्यते** इति । उत्पन्नमात्रमेव (W 722) तन्निरोधप्रासतां गतं तत्प्रकृतित्वात्, किं पुनर्निरोत्स्यते इत्यभिप्रायादाह–**नो हीदं भगवन्** इति । अनागतं किं निरोधधर्मोपेतमित्याह–**तत्किं मन्यसे सुभूते यच्चित्तमनुत्पन्नम्, अपि नु** 25 **तन्निरोधधर्मि** इति । **नो हीदम्** इति भावनिवृत्तिस्वभावत्वाद्विनाशस्य नैवानुत्पन्नं निरोधधर्मि । तस्य किं निरोधोऽस्ति क्षणान्तरे इत्याह–**तत्किं मन्यसे सुभूते यन्निरोधधर्मि अपि नु तन्निरोत्स्यते** इति । **नो हीदम्** इति प्रथमक्षणाभावेन द्वितीयक्षणनिरोधविरहान्नैव क्षणान्तरे निरोत्स्यते । वर्तमानस्य तर्हि निरोध इति चेत्, आह–**तत्किं मन्यसे सुभूते** (W 723, B 436) **यच्चित्तमनुत्पादानिरोधधर्मि, अपि नु तन्निरोत्स्यते** इति । वर्तमानमपरोत्पादवैयर्थ्या- 30 दनुत्पादधर्मि । सत्ताकाले विनाशाभावात् अनिरोधधर्मि । **नो हीदम्** इति एकानेकस्वभाववैधुर्यादिति मतिः । यद्येवमभावस्तर्हि निरुध्यते इत्याह–**तत्किं मन्यसे सुभूते यो**

**धर्मः प्रकृत्या स्वभावनिरुद्ध एव, स धर्मो निरोत्स्यते** इति। स्वरूपेण स्वभावनिरुद्धो रूपादिस्वभावरहितो यो धर्मोऽभावसंज्ञकः, स एव धर्मः किं निरोत्स्यते? **नो हीदम्** इति अनन्तरं त्रैयध्विकवस्तुनिरोधनिराकरणादविद्यमानत्वेनाभावो नैव निरुध्यते। मायोपमता तर्हि निरुध्यते इत्याह–**तत् किं मन्यसे सुभूते या धर्माणां धर्मता सा निरोत्स्यते** इति।
5 **नो हीदं भगवन्** इति। धर्मता अविचारैकरम्यता अलीकरूपत्वात् तत्त्वेन नैव निरुध्यते। किं तु सर्वस्यैवोत्पन्नस्य वस्तुनः प्रकृत्या मायोपमस्य संवृत्या निरोधान्निरोधगाम्भीर्यमित्युच्यते।
W 724 तथतागाम्भीर्यार्थमाह–**तत् किं मन्यसे सुभूते तथैव स्थास्यति यथा तथता** इति। बोधिसत्त्वे इति शेषः। अविकल्पज्ञानविषयोपेतत्वादाह–**तथैव भगवन् स्थास्यति यथा तथता** इति। त्रैयध्विकबोधिसत्त्वानां तथतावदवस्थाने नित्या तथता स्यादिति चेदाह–**तत् किं मन्यसे**
10 **सुभूते यदि तथैव स्थास्यति यथा तथता, तदा मा अकूटस्था भूद्** इति। अकारप्रश्लेषाद् अकूटस्था अनित्या मा भूत्, अपि तु नित्या कूटस्था तथता स्यादिति किं मन्यसे?

यः प्रतीत्यसमुत्पादः शून्यता सैव ते मता।

B 437 इति वचनात् सांवृतक्षणिकपदार्थस्वभावत्वादाह–**नो हीदम्** इति। पदार्थरूपत्वान्नैव तर्हि गम्भीरेति चेदाह–**तत् किं मन्यसे सुभूते गम्भीरा तथता** इति। **गम्भीरा भगवन्** इति
15 रूपादिपदार्थावगमेऽपि तदव्यतिरिक्ता साक्षात्कर्तुमशक्यत्वात् तथता गम्भीरा। दुर्बोधा इति
W 725 यावत्। ज्ञेयगाम्भीर्यार्थमाह–**तत् किं मन्यसे सुभूते तथतायां चित्तम्** इति। तथतायामाधारभावस्य अविद्यमानत्वादाह–**नो हीदम्** इति। तथताव्यतिरिक्तं तर्हि चित्तं स्यादित्याह–**तत् किं मन्यसे सुभूते चित्तं तथता** इति। **नो हीदम्** इति संवृतिपरमार्थयोः परस्परपरिहाराच्चित्तं तथता नैव। अर्थादन्यच्चित्तं तथतायाः सकाशादिति चेदाह–**तत् किं मन्यसे**
20 **सुभूते अन्यत् तथतायाश्चित्तम्** इति।

धर्मधातुविनिर्मुक्तो यस्माद्धर्मो न विद्यते।

–सूत्रालंकार–१३.११

इत्यभिप्रायवानाह–**नो हीदम्** इति। एतदुक्तम्–तथतातो न व्यतिरिक्तं नाप्यव्यतिरिक्तं चित्तमात्रमिदं सर्वं वस्तु ज्ञेयगाम्भीर्यमिति। ज्ञानगाम्भीर्यार्थमाह–**समनुपश्यसि त्वं**
W 726 25 **सुभूते तथताम्** इति। **नो हीदम्** इति तथतास्वभावत्वात् तथतां तत्त्वतो न पश्यामि, अतोऽदर्शनमेव दर्शनं ज्ञानगाम्भीर्यमिति मतिः। चर्यागाम्भीर्यार्थमाह–**तत् किं मन्यसे सुभूते य एवं चरति, स गम्भीरे चरति** इति। **एवम्** इति तथतारूपेण। तत्त्वेन नैव क्वचिच्चरतीत्याह–**यो भगवन्नेवं चरति स न क्वचिच्चरति** इति। एतदेव स्पष्टयन् तत्कस्य हेतोः इत्याशङ्क्याह–**तथा हि** इत्यादि। एतदुक्तम्–यस्मात्तथतायां स्थितस्य ते अनुष्ठान-
30 विशेषाः समुदाचाराः तात्त्विकहेतुफलाभावाद्यथाक्रमं न प्रवर्तन्ते न समुदाचरन्ति, तस्माद्धर्मतया सर्वत्राचरणमेव चरणम्। इदं चर्यागाम्भीर्यमिति। अद्वयगाम्भीर्यार्थमाह–**यः सुभूते बोधिसत्त्वः** इत्यादि। **क्व चरति** इति कस्मिन् विषये अनुतिष्ठति। **परमार्थे** इति निमित्तानिमित्तद्वयसमुदाचाराभावाद्धर्मधातौ चरति। एवमद्वयगाम्भीर्यं स्यादिति भावः। तदेव स्पष्टयन्नाह–**तत् किं मन्यसे सुभूते यो बोधिसत्त्वो महासत्त्वः परमार्थे चरति, स**

**निमित्ते चरति । नो हीदम्** इति निमित्तानिमित्तसंज्ञाप्रतिषेधाद्भावाभावाभिनिवेशलक्षणे निमित्ते नैव चरति । उपायकौशलगाम्भीर्यार्थमाह—**तत् किं मन्यसे सुभूते, अपि नु तस्य निमित्तमविभावितम्** इति । अविभावितमप्रहीणम् । अव्यक्तमिति यावत् । **नो हीदम्** इति सर्वधर्मानुपलम्भबलान्नैव निमित्तमविनष्टमस्ति । यद्येवं तर्हि निमित्तं प्रहीणमिति चेदाह—**तत् किं मन्यसे सुभूते, अपि नु बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो** 5 **निमित्तं विभावितं भवति** इति । प्रहाणे यत्नाभावान्नैव निमित्तं प्रहीणमित्याह—**न स भगवन् इत्यादि** । बोधिसत्त्वचर्यां चरन्निहैव प्रत्युत्पन्ने जन्मनि कथमहं निमित्तप्रहाणमनुप्राप्नुयामिति नैवं बोधिसत्त्वो घटते । व्यायच्छत इति यावत् । तत्प्रहाणे च को दोष इत्याह—**सचेत् पुनः** इत्यादि । कथमेकस्य प्रहाणाप्रहाणे इति चेदाह—**एतत्तद् भगवन्** इत्यादि । एतदुक्तम्—संवृत्या मायोपमं यल्लक्षणं यत्स्वरूपं यन्निमित्तं यद्धेतुकं रूपादि 10 जानाति तत्त्वतोऽनुत्पन्नत्वात्, आनिमित्ते च धर्मधातौ परिजयं करोति, एवं परमार्थेन प्रहाणं संवृत्या च अप्रहाणम् । इदमुपायकौशलगाम्भीर्यमिति । तदेवमचिन्त्यविमोक्षमुखलाभात्, परस्परविरुद्धार्थानुष्ठानेनोत्पादाद्यष्टविधगाम्भीर्यमधिगमानुरूपव्यवहारप्रवर्तनात्, षोडशक्षणवत् भावनामार्गस्थावैवर्तिकलक्षणं ग्राह्यम् । तथा चोक्तम्—

**उत्पादे च निरोधे च तथतायां गभीरता ।** 15
**ज्ञेये दाने च चर्यायामद्वयोपायकौशले च ॥** ५९ ॥ इति ॥

अवैवर्तिकलक्षणकथनेन शैक्षो बोधिसत्त्वसंघोऽभिहितः । तदनु संक्लेशव्यवदानविकल्पप्रहाणेन तदुभयसमताधिगमादशैक्षो भवति, परेण शिक्षितव्याभावात् । अतोऽशैक्षसंघलक्षणपरिदीपनाय संसारनिर्वाणसमता वक्तव्येत्याह—**य आयुष्मन् सुभूते बोधिसत्त्वः** इत्यादि । अपिनुशब्दः किंशब्दार्थे प्रश्ने वर्तते । **किं प्रज्ञापारमिता विवर्धते?** वृद्धिमुप- 20 यातीत्यर्थः । नैव विवर्धत इत्याह—**सचेत्** इत्यादि । अत्र संसारव्यवदानाविकल्पज्ञानं यथाक्रमं स्वप्नदिवसाभिसंधिनोक्तम् । अभिप्रायस्त्वेवं लक्ष्यते—यदि विपक्षप्रतिपक्षविकल्पप्रहाणमधिकृत्य तदुभयसमतावगमाद्यथा दिवसगतस्य भावनावृद्धिः, तदा तथा स्वप्नान्तरगतस्यापि विवर्धेत यावता यथा दिवसे न विवर्धेत तथा स्वप्नेऽपीति । एतदेव स्पष्टयितुं तत्कस्य हेतोः इत्याशङ्क्याह—**अविकल्पो** हि इत्यादि । यदि दिवसे चरतः प्रज्ञापारमिता विवर्धेत, तदा 25 अभ्याससामर्थ्यात् स्वप्नेऽपि विपुलता स्यात् । यावता नैव, यस्मात् सांसारिकवैयवदानिकधर्माणां प्रतिभासमात्रस्वभावस्वप्नसदृशत्वेनावगमात् संसारनिर्वाणयोः स्वप्नदिवसस्वभावयोर्नानात्वेन विपक्षप्रतिपक्षविकल्पाभ्यां विकल्पयितुमशक्यत्वात् स्वप्नश्च दिवसश्चाविकल्पः समतात्मक इत्युक्तो भगवतेति यावत् । तथा चोक्तम्—

**स्वप्नोपमत्वाद्धर्माणां भवशान्त्योरकल्पना** । इति ॥ 30

ननु सर्वधर्माणां स्वप्नसदृशत्वे सति दशाकुशलादीनामभावः स्वप्नावस्थायामिव जाग्रद्दशायामपि स्यादित्याह—**यत्पुनरायुष्मन् सुभूते स्त्री वा इत्यादि** । किमिति क्षेपाभिधा-

W 727 W 728 B 439 W 729 B 440

W 730 यित्वान्नैव इत्यर्थः। स्वरूपोपचयादाचयः, कार्यजननसामर्थ्यादुपचयः। तद्वत् स्वप्नतुल्यत्वेन प्रयोगादीनामभावाद्दिवसेऽपि शुभाशुभकर्मणोऽभावः स्यादिति भावः। परमार्थतो नैवाचयोपचयावित्याह–**यथा स्वप्नोपमा** इत्यादि। संवृत्या तु कर्मफलसंबन्धस्याभीष्टत्वात्

मिद्धेनोपहतं चित्तं स्वप्ने तेनासमं फलम्।

5 इति दृष्टान्तासिद्धिः स्यादित्याह–अथ **पुनरायुष्मन्** इत्यादि। तस्य कर्मण इति स्वप्नावस्थाभाविनः। एतदेव स्पष्टयन्नाह–**कथं च** इत्यादि। तत्र प्रयोगादिनिष्पादनात् कायवाक्चित्तोपघाताद्वा "अहो हतः, साधु हतः, सुष्ठु हतः, सर्वत्रात्मव्यापारोपलम्भान्मया हतः" इत्यर्थभेदो वाच्यः। एतदुक्तम्–यथा बाह्यार्थनये क्षणिकतया निर्हेतुकविनाशे "कर्मजं लोकवैचित्र्यम्" इति सिद्धान्ताच्च परमार्थतो न कश्चिन्न केनचिद्धतो नापि कस्यचिद्द्रव्यं 10 केनचिद्गृहीतमित्याद्युपगमे प्रवृत्तसंतानविरुद्धपदार्थोत्पादनात् मारणाद्यध्यवसायद्वारेण अयोनिशोमनस्कारादिमतोऽकुशलादिवत् प्राणातिपातादयो दिवसे व्यवस्थाप्यन्ते, तथा स्वप्ने W 731 अपि उपचितकुशलाकुशलस्य प्रबुद्धावस्थायाम्। अहो हत इत्यादिविकल्पेन प्रयोगावस्थाद्यभि- B 441 निवेशपरिपुष्ट्या परिपोषप्राप्तेर्बहिरर्थनयेनापि स्वप्नावस्थायामिवेति दृष्टान्तासिद्धिः। अतो मध्यमकनयेन जाग्रदवस्थायामपि स्वप्नसदृशे वस्तुनि तदनुरूपार्थे भावाद्यभिनिवेशेन 15 अखण्डितसकलविपर्यासबन्धनानां कुशलादयो व्यवस्थाप्यन्ते। किं तु मिद्धादिकभ्रान्तिकारणत्वेन अस्पष्टाकुशलप्रतिपत्त्या स्वप्ने न्यूनं फलं जाग्रदवस्थायां तु मिद्धादिकभ्रान्तिकारणविगमात् स्पष्टानाकुलप्रतिभासत्वेन अधिकं फलम्। स्वप्नावस्थायामपि कर्मफलसद्भावस्याभिमतत्वात् अभिक्षुत्वादिदोषो नोद्भावनीयः। शिक्षादातृकवत् संवरासंवरत्वस्य भगवत्प्रज्ञप्तिवशादेव अवस्थाप्यमानत्वादिति। विकल्पबलाद्यदि कर्मणः परिपोषः, तदा 20 प्रतिपक्षविरोधेऽपि विकल्पानुवृत्त्या तथागतस्यापि स्यादित्याह–**सचेदायुष्मन् सुभूते** इत्यादि। विकल्पयन् क्षयसंज्ञामुत्पादयति इति–**क्षीणा मे संसारिणः स्कन्धाः** इत्यादि क्षयसंज्ञां करोति। **तस्यापि कर्मणः** इति क्लेशप्रहाणकारिणो मनस्कारस्य कर्मणः स्वरूपोपचयादाचयः, कार्यजननसामर्थ्यादुपचयः स्यात्। ततश्चोपचितस्य कर्मणः प्राप्तव्यफलविशेषसद्भावादपरिनिष्पन्न एव तथागतः स्यादिति भावः। विनेयानुरोधेन तथागतस्य **क्षीणा मे** W 732 25 **जातिः** इत्यादिविकल्पो व्यवस्थापितः, न तु तत्त्वत इत्याह–**नो हीदम्** इति। एतदेव समर्थयितुं तत्कस्य हेतोः इत्याशङ्क्याह–**सर्वकल्पविकल्पं** इत्यादि। सर्वकल्पा रूपादयः स्वसामान्यलक्षणात्मका निर्विकल्पसविकल्पज्ञानालम्बनस्थानीयाः, तेषु विकल्पस्तदुपलम्भः तेन प्रहीणो रहितो निर्विकल्पधर्मताधिगमादित्यर्थः। आलम्बनोपलम्भमन्तरेण मानसं कर्म चित्तं च अन्येषां कस्मान्न प्रवर्तते इति चेदाह–**एवमेव** इत्यादि। धर्मतैषा प्रतीत्य- B 442 30 समुत्पादधर्मतया यस्मादनालम्बनं कर्म चित्तं च नोत्पद्यते, तस्मात् सालम्बनमेवोत्पद्यते इति। एतदेव स्पष्टयन्नाह–**दृष्टश्रुत०** इत्यादि। तत्र–

तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः।

–प्रमाणवार्तिक–३.२५१

इति न्यायेन काचिद्बुद्धिः संक्लेशालम्बना संक्लेशं परिगृह्णाति, काचिद्बुद्धिर्व्यवदाना-लम्बना व्यवदानं परिगृह्णाति। चेतना इति बुद्धिरित्येके। "चेतना मानसं कर्म" इति वचनात् कर्मैवं पर्यायेणोक्तमित्यपरे। उपसंहरन्नाह—**तस्मात्तर्हि आयुष्मन्** इत्यादि। अतीताना- W 733
गतस्यासत्त्वेन आलम्बनभावानुपपत्तेः, वर्तमानस्य चार्थस्य साकारज्ञानादिभिर्ग्रहीतुमशक्यत्वेन सर्वालम्बनशून्यत्वे सालम्बनापि चेतना कथमुत्पद्यते इत्याह—**यदायुष्मन् सुभूते** इत्यादि। 5
**विविक्तानि** इति आलम्बनभावरहितत्वेन शून्यानि। संवृत्या अभूतपरिकल्पालम्बनादुत्पद्यते इत्याह—**निमित्तीकृत्य** इत्यादि। रूपादिगतमसाधारणं चिह्नं तत्त्वेनानिमित्तमपि यथादर्शनं निमित्तीकृत्य। आरोप्य इति यावत्। **यावत्** इत्यनेन विज्ञानप्रत्ययं नामरूपमित्यादिपरिग्रहः। **लोकव्यवहारमुपादाय** इति संवृतिमधिकृत्य। उत्पद्यते इत्यनन्तरम् उच्यते इति शेषः।
स्वप्नेऽपि कर्मफलसंबन्धास्तित्वे प्रतिपादिते पुनरौपलम्भिकजनानुरोधेन आशङ्कयन्नाह— 10 W 734
**यदायुष्मन् सुभूते** इत्यादि। परिहृतेऽप्यर्थे पुनराशङ्कायामानन्त्येन कः सचेताः परिहरतीत्य-भिप्रायादाह—**अयमायुष्मन् शारिपुत्र मैत्रेय** इत्यादि। **कायसाक्षी** इति अर्हत्त्वप्रतिपन्नको- B 443
ऽनागामी निरोधलाभी कायसाक्षी। तद्वत् बुद्धत्वप्रतिपन्नकत्वेनार्यमैत्रेयः कायसाक्षी। **एनमर्थम्** इति स्वप्ने परिणामितम्। किं तद्दानमिति प्रश्नम्। सुभूतिवचनादेव आर्यमैत्रेयमामन्त्र-यन्नाह—**अथ खल्वायुष्मान्** इत्यादि। प्रतिपादितेऽप्यर्थे प्रत्येकविनेयभेदेन पुनः पुनराशङ्कायां 15
भूयो भूयः परिहाराभिधानेऽपि न सर्वेषामेकबुद्धोत्पादकाल एव विपर्यासापनयनं शक्यं कर्तुं भव्यानामेवार्थकरणात्, इत्येतत्प्रश्नविसर्जनाधिकारेणैवानागतबुद्धपरंपरोत्पत्तिः इत्यपरि-समाप्तिनिर्देशोऽयं प्रश्नः। तत्परिसमाप्तौ सत्यां कर्तव्याभावादनागतबुद्धोत्पादवैयर्थ्यप्रसङ्ग-श्चेत्यभिप्रायवान् परिहर्तुकामत्वेनाह—**यदायुष्मान् सुभूतिरेवमाह** इत्यादि। संभवमधिकृत्य W 735
विकल्पयन्नाह—**किं पुनरायुष्मन् सुभूते यदेतन्नामधेयम्** इत्यादि। तत्र तावन्न शून्यता विसर्ज- 20
यतीत्याह—**या खलु पुनः** इत्यादि। **न सा प्रतिबला** इति अविद्यमानत्वान्न सा समर्था। W 736
रूपादयोऽपि न शक्ता इत्याह—**तमप्यहम्** इत्यादि। कर्तृकर्मक्रियानुपलम्भभेदेन यो धर्मो विसर्जयेत्, यो धर्मो विसर्जयितव्यः, येन धर्मेण विसर्जयेदित्युपादानमात्मानं विषयी-कृत्योक्तम्—**यो धर्मो व्याकृतः** इति। सर्वधर्मानुपलम्भो न घटते इत्याह—**कच्चित्पुनः** इत्यादि। कच्चित् इति यदि। एतदुक्तम्—यदि त्वया एते रूपादयो धर्मा एवं साक्षात्कृताः 25
यथैनान् धर्मान् वाचा भाषसे, तदा विकल्पार्थोपलम्भवदधिगतार्थोपलम्भसद्भावे विसर्जक-भावेन कथं सर्वधर्मानुपलम्भ इति। नैवमधिगत इत्याह—**न मया आयुष्मन्** इत्यादि। प्रयो- B 444
गाद्यवस्थासु न वेद्मीत्यादि योज्यम्। कथं तर्हीत्याह—**अपि तु खलु पुनः** इत्यादि। एत-दुक्तम्—सर्वधर्मानुपलम्भरूपेण निर्विकल्पकज्ञानेन एवंस्वभावाः सर्वधर्मा मायोपमत्वेना-स्वभावत्वात् साक्षात्कृताः, यथा अधिगमावस्थायां विकल्पासमुदाचारान्न कायेन स्पृश्येत, न 30
वाचा भाष्येत, न मनसा समन्वाहियेत। यस्माद्विकल्पानुगमे विपर्याससमुद्भवादधिगमो W 737
न स्यात्, ततश्च अधिगमोत्तरकालमुद्भावनासंवृत्या व्यवहार इति। श्रावकागोचरो

निर्विकल्पकज्ञानाधिगम इत्याह—**गम्भीरप्रज्ञः** इत्यादि। श्रावकाणामीदृश एवाधिगम इत्याह—**कुतस्ते शारिपुत्र** इत्यादि। निर्विकल्पज्ञानमात्रेणाधिगमस्य तुल्यत्वाद्गम्भीरप्रज्ञोऽयमिति नैवं चित्तमुत्पादनीयमित्यर्थः। तुल्यत्वमेव कथयन्नाह—**समनुपश्यसि त्वम्** इत्यादि। तं धर्मं क्षयानुत्पादज्ञानलक्षणमर्हत्त्वं विकल्पज्ञानेन अधिगमकाले किं त्वं समनुपश्यसि? उपलभसे 5 इति यावत्। विपर्यस्तत्वेन अधिगमविरोधित्वान्नैवेत्याह—**न ह्येतत्** इति। बोधिसत्त्वानामीदृश W 738 एव अधिगमकाले न्याय इत्याह—**एवमेव शारिपुत्र** इत्यादि। तदेवं कर्माभावादि-चोद्यानां यथोक्ता एव प्रतिसमाधयो ग्राह्याः। तथा चोक्तम्—

**कर्माभावादिचोद्यानां परिहारा यथोदिताः** ॥ ६० ॥ इति ॥

संसारनिर्वाणसमतामुपसंहर्तुं तद्देशनायास्तादात्विकं प्रयोजनमधिकृत्याह—**स चरन्नोत्र-** 10 **स्यति** इत्यादि। अनुपलम्भचर्यायां लब्धशक्तित्वान्नाहं नाभिसंभोत्स्ये, अपि तु नियतमभि-B 445 संभोत्स्ये इत्येवमयं योगमापद्यते। विभावितोभयसमतो बुद्धो भवति। स्वबुद्धक्षेत्रे इत्यन्तरं सत्त्वभाजनलोकभेदेन द्विविधबुद्धक्षेत्रविशुद्धिं निर्दिशन्नाह—**पुनरपरं शारिपुत्र** इत्यादि। तत्र सत्त्वलोकस्याशुद्धिर्या जिघत्सादिका, तस्याः प्रतिपक्षेण दिव्योपभोगादि-शुद्ध्युपसंहारतः, तथा भाजनलोकस्य अशुद्धिर्या स्थाणुकण्टकादिका, तस्याः प्रतिपक्षेण 15 समपाणितलजातादिशुद्ध्युपसंहारतो यथाक्रमं द्विविधबुद्धक्षेत्रविशुद्धिरित्यभिसंक्षेपतः। तथा चोक्तम्—

**सत्त्वलोकस्य या शुद्धिस्तस्याः शुद्ध्युपहारतः।**
**तथा भाजनलोकस्य बुद्धक्षेत्रस्य शुद्धता** ॥ ६१ ॥ इति ॥

W 739 विस्तरस्तु यथासूत्रं सुबोधम्। तत्र किंचिदुच्यते। तथैव तत्कस्य हेतोः इत्या-20 शङ्क्याह—**तथा हि तेन सर्वम्** इत्यादि। एतदेव स्पष्टयन्नाह—**तेनैवं चित्तम्** इत्यादि। तत्र सर्वेण वर्णसंस्थानवस्तुरूपेण, सर्वं तज्जातिभेदभिन्नं वस्तु, सर्वथा तदेकैकजातिप्रकारभेदेन, सर्वत्र यथासंभवप्रकारं स्वरूपविरहान्न भविष्यन्ति। तत्कृतचिह्नाभावान्न प्रज्ञास्यन्ते। तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**सर्वस्वपरित्यागकुशलाभिरता हि** इत्यादि। एतदेव W 740 विस्तारयन्नाह—**तेनैवं चित्तम्** इत्यादि। **व्यापादक्रोधरोषा** इति। व्यापादः सत्त्वविद्वेषः। 25 क्रोधः सत्त्वासत्त्वयोराघातः। रोषो वैरानुबन्धः। चित्तविशेषोत्पादात् **तथा च करिष्यामि**। प्रतिपत्त्या संपादनात् **तथा च प्रतिपत्स्ये**। अतिशयवीर्यकरणात् **व्यापत्स्ये**। पानीयाभावात् W 742 B 446 **पानीयकान्तारं तद्भयम्**। तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**असंत्रस्त°** इत्यादि।

अष्टाङ्गोपेतपानीयं सुगन्धि स्वादु शीतलम्।
लघ्वच्छं शुचि पातुश्च कुक्षिकण्ठौ न बाधते ॥

30 इत्युदकलाभादष्टाङ्गोपेतपानीयलाभिनः। मृदुमध्याधिमात्रभेदेन **सुखिताः सुखसमङ्गिनः सर्वसुखसमर्पिताः**। दर्शनपथप्राप्तत्वेन प्रादुर्भविष्यति। उपभोगयोग्यत्वेनोत्पत्स्यते। स्थितिहेतुत्वादन्नादयो जीवितपरिष्काराः। चिरेणेत्यतिदीर्घकालेन। पूर्ववत् तत्कस्य हेतोः

इत्याशङ्क्याह—**यो हि चित्तक्षणे** इत्यादि । यस्माद्यश्चित्तक्षणस्तत्त्वतोऽनुत्पन्नः संवृत्या, सैषा चिरकालवती प्रथमकारणरहितत्वादनादिरपूर्वा कोटिः । पर्यन्तो भागो बुद्धत्वावस्था-शून्यतास्वभावत्वाद्यदुत अकोटिः, तस्माच्चिरेणाभिसंबोधादुत्रासादि न कर्तव्यम् । दुष्करसंज्ञा च नोत्पादयितव्या इत्यर्थः । **भयभैरवेभ्यः** इति । बाह्यं व्यालादि भयम् । अध्यात्मं ज्वरादि भैरवम् ॥ यथोक्तबुद्धक्षेत्रपरिशोधनेऽशक्यानुष्ठानत्वान्न कश्चित् प्रवर्तते इति 5 चेदाह-**अथ खलु तत्र पर्षदि** इत्यादि । **अत्र स्थाने** इति अभ्यासयोगेन शक्यत्वा-न्निर्दिष्टबुद्धक्षेत्रपरिशोधने । तदाशयसंपत्तिबलाद्व्याकरणनिमित्तं जातमित्याह—**अथ खलु भगवान्** इत्यादि । **मूर्धन्यन्तरधीयत** इति । धर्मतैषा यदा तथागतेन व्याकरणं कर्तव्यम्, तदा उष्णीषसंधौ रश्मयोऽन्तर्लीनाः । निमित्तदर्शनात् संजातातिशयत्वेन आर्यगङ्गदेवा विहितपूजेत्याह—**समनन्तरप्रादुष्कृते च** इत्यादि । बहुधा गृहीतसंबन्धत्वेन स्मितप्रयोजनं 10 प्रश्नयन्नाह—**अथ खल्वायुष्मानानन्दः** इत्यादि । स्वरूपमावेदयन्नाह—**इयमानन्द** इत्यादि । **सम्यक्संबोधिमभिसंभोत्स्यते** इति व्याकरणेन पार्षदानामेवंविधबुद्धक्षेत्रविशुद्धिलाभसंप्रत्यये साक्षिभावः सूचितः इति केचित् । अभिसंबोध्यवस्थातः प्रागपि व्याकुर्वन्नाह—**सेयमानन्द** इत्यादि । व्याकृतानामेव तत्रोत्पादाद्विस्मय इत्याह—**अथ खल्वायुष्मत** इत्यादि । साधूक्त-त्वादाह—**एवमेतद्** इत्यादि । तत्र क्लेशावरणप्रहाणादुत्तीर्णपङ्काः । मूर्धाभिसमयेऽवस्थितत्वा- 15 द्बोधिपरिनिष्पत्त्युपगताः । श्रावकसंघमपि व्याकुर्वन्नाह—**तस्य खलु पुनः** इत्यादि । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**तावन्त** इत्यादि । कृतपुण्यानां निष्पन्नप्रणिधानत्वेनाह—**तेन खलु पुनः** इत्यादि । उपसंहरन्नाह—**सुवर्णपुष्पस्य** इत्यादि । अत्याश्चर्यं श्रुत्वा पूर्वयोगं प्रश्नयन्नाह—**अनया भगवन्** इत्यादि । स्वरूपमावेदयन्नाह—**अनया आनन्द** इत्यादि । प्रणिधानानुरूपमेवेदं सर्वप्रकारव्याकरणमित्याह—**कृतपरिकर्मा** इत्यादि । तत्र प्राप्तदर्शनमार्ग- 20 त्वात् कृतपरिकर्मा । विदितभावनापथस्वभावत्वात् कृतपर्यन्ता । तथैव स्वहस्तयन्नाह—**एवमेतद्** इत्यादि ॥

W 743 W 744 B 447 W 745 W 746 W 747 W 748

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां
गङ्गदेवाभगिनीपरिवर्तो नामैकोनविंशतितमः ॥



# २० उपायकौशल्यमीमांसापरिवर्तो विंशः।

B 448
W 749

निष्पादितबुद्धक्षेत्रविशुद्धिनोपायकौशलेन संभारं परिपूर्य पश्चाद्यथाभव्यतया बुद्धकृत्यं स्वबुद्धक्षेत्रे करणीयमित्युपायकौशलं वक्तव्यम्। तत्रास्य विषयं प्रतिपादयितुं प्रश्नयन्नाह— **प्रज्ञापारमितायाम्** इत्यादि। परिहारार्थमाह— **इह सुभूते** इत्यादि। रूपमिति तां धर्मतां 5 धर्मतयेति, तां धर्मतां शून्यतां धर्मतया शून्यतया रूपं वस्त्विति प्रत्यवेक्षमाणो यथा न समनुपश्येच्छून्यतां शून्यतास्वभावेन, अस्तीति यथा नोपलभेत, तथा प्रत्यवेक्षितव्यमिति यावत्। एतदुक्तम्—मायोपमः शून्यतादिरुपायकौशलविषयः इति। कथं पुनरभ्यासेऽपि

W 750

नाधिगच्छतीत्याह— **यद्भगवान्** इत्यादि। अस्य परिहारेणोपायकौशलप्रयोगं निर्दिशन्नाह— **यतः सुभूते** इत्यादि। **सर्वाकारवरोपेताम्** इति दानाद्यविकलाम्। **असमाहित एव** इति। 10 प्रज्ञापारमिता च महोपायकौशलात्मिका मया परिगृहीता भविष्यति, न च शून्यता साक्षात्कृता, इत्यभिप्रायादतन्निष्ठ एव शून्यतासमाधौ चित्तं धारयति। अत्र च मध्ये जिनजननीसामर्थ्यान्न परिहीयते बोधिपक्षैर्धर्मैः, न चास्रवक्षयं कामभवास्रवप्रहाणं संचिन्त्य सत्त्वार्थं प्रतिजन्मपरिग्रहात् करोति। शून्यतासमाध्यालम्बनादास्रवक्षये च परिजयं करोतीत्यर्थः।

W 751

एतदेव स्पष्टयन्नाह— **यस्मिन् समये** इत्यादि। कथमभ्यासेऽपि न साक्षात्कर्तव्यमिति तत्कस्य 15 हेतोः इत्याशङ्क्याह— **एवामारूढकुशला** इत्यादि। **भूतकोटिं न साक्षात्करोति** इति। एतदुक्तम्—सर्वाकारभावनापरिजयप्रत्यवेक्षासाक्षात्करणकालाकालज्ञानप्रयोगसामर्थ्यात्तस्मिन् समाधौ स्थितोऽपि न शून्यतामधिगच्छेदिति। उपायः पुनर्दशविधो भवति। तत्र तावत्

B 449
W 753

प्रतिबन्धसमतिक्रमणेन आन्तरायिकधर्मसमतिक्रमणोपायार्थमाह— **तद्यथापि नाम** इत्यादि। तत्र शौर्यरूपगुणैर्मृदुमध्याधिमात्रैः यथाक्रममुपेतत्वात् परमशूरश्च भवेदित्यादि नव पदानि वाच्यानि। 20 ग्रन्थार्थग्रहणसमर्थत्वान्मेधावी। करणपाटवाद्वचनसमर्थः। प्रश्नपरिहारकौशलात् प्रतिवचनसमर्थः। स्तम्भितत्वाभावात् प्रतिभानसंपन्नः। स्वीकारार्थसंपादनात् प्रतिपत्तिसंपन्नः। हेयोपादेयत्वेन कालादीनां परिज्ञानात् कालज्ञः। देशज्ञः स्थानज्ञः। मुख्यतो धनुषि सुशिक्षितत्वादिष्वस्त्रे च परमगतिं गतः। बहूनां दृढानां च प्रहरणानां निवारकत्वाद्बहुप्रहरणावरणो दृढप्रहरणावरणः। परावर्जनकराः कायादिविकाराः कलाः। चित्रकर्मादीनि शिल्पस्थानानि। **स्मृतिमान्** 25 इत्यादि सुगमम्। निर्वर्तनसामर्थ्यान्निस्तरणसमर्थः। केनचिदेव कारणसामग्रीयोगेन अमित्राद्युपनिपातेन। चित्तवाक्कायविकारापादनाद्यथाक्रमं महाप्रतिभयं भीषणं रोमहर्षणम्। सर्वोपद्रवरहितत्वेन शान्त्या क्षेमेण अपक्रमयिष्यामि। शरीरसौस्थित्यात् पुष्ट्या स्वस्तिना परिमोचयिष्यामि। एकद्रव्याभिलाषाद्वैरानुबन्धेन प्रत्यर्थिकाः। अमित्रपक्षपतिताः प्रत्यमित्राः। दयालुत्वादतिस्निग्धः। दाक्षिण्ययोगात् सानुक्रोशः। तथैव तत्कस्य हेतोः इत्याशङ्क्याह— **तथा हि**

W 754
B 450

30 **भगवन्**। इत्यादि। कायचित्तपीडारहितत्वादक्षतोऽनुपहतः। दृष्टान्तमेवं निर्दिश्य दार्ष्टान्तिकार्थमाह— **एवमेव सुभूते बोधिसत्त्वः** इत्यादि। तत्र सत्त्वेषु सुखसंयोगदुःखवियोगसुखाविश्लेषहितकरणाशयसमृद्धौ सपरिवाराः समाधयो यथाक्रमं मैत्रीकरुणामुदितोपेक्षाः। तथैव तत्कस्य

हेतोः इत्याशङ्क्याह—**तथा ह्यस्य** इत्यादि । एतदेव स्पष्टयन्नाह—**यस्मिन् समये** इत्यादि ।
**मारपक्षं चातिक्रम्य** इत्यनेन आन्तरायिकधर्मसमतिक्रमणोपायः सूचितः स्यात् । उपसंहर-
न्नाह—**यस्मिन्** इत्यादि । विभावितसर्वसमत्वेन अप्रतिष्ठितविहारोपायं कथयन्नाह—**तद्यथापि** W 755
**नाम सुभूते पक्षी** इत्यादि । **न च तत्रापि निश्रितो न च प्रतिष्ठितः** इति आकाशस्या-
सत्त्वान्न तत्र बुद्ध्या निश्रितो नापि कायेन स्थितः । अथ च तस्मिन्नेव च विहरति 5
इत्यप्रतिष्ठितविहारोपायो ज्ञापितः स्यात् । दार्ष्टान्तिकार्थमाह—**एवमेव सुभूते बोधिसत्त्वः**
इत्यादि । प्रणिधानसमृद्ध्या पूर्वप्रणिधानानुवृत्त्युपायं निर्दिशन्नाह—**तद्यथापि नाम सुभूते** W 756
**बलवान्** इत्यादि । **यावन्नाकाङ्क्षेत्** इत्यनेन प्रणिधानविधमुपादायानुवृत्तिर्ज्ञापिता । प्रकृतार्थे
बोधिसत्त्वे नियोजयन्नाह—**एवमेव सुभूते** इत्यादि । भावनाविशेषमार्गाभ्यां यथाक्रमं परिपक्वानि
सुपरिपक्वानि । उपसंहरन्नाह—**तस्मात्तर्हि सुभूते** इत्यादि । स्वभ्यस्तसर्वदुष्करत्वेनासाधारणोपायं 10 W 757
प्रतिपादयन्नाह—**दुष्करकारको भगवन्** इत्यादि । श्रुतचिन्ताभावनाभिर्यथाक्रमं शून्यतायां
चरतीत्यादि योज्यम् । साधूक्तत्वेनानुवदन्नाह—**एवमेतद्** इत्यादि । तथैव तत्कस्य हेतोः
इत्याशङ्क्याह—**तथा** हि इत्यादि । अमुमेवार्थं समर्थयन्नाह—**यदा बोधिसत्त्वः** इत्यादि । B 451
पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह—**तथा ह्यस्य** इत्यादि । **न साक्षात्करोति** इति सर्व-
सत्त्वापरित्यागाशयसामर्थ्येन भूतकोटेरनधिगमादसाधारणोपायो ज्ञापितः स्यात् । सर्वधर्मा- 15
नुपलम्भादसक्त्युपायं वक्तुमाह—**पुनरपरं सुभूते यदा** बोधिसत्त्वः इत्यादि । **सत्त्वसंज्ञया** W 758
इति भावाभिनिवेशेन । **न च परिहीयते** इति आस्वादनोपलम्भेन परिहाणिसंभवा-
न्मैत्र्यादिसर्वकुशलधर्मापरिहाणिवचनादनास्वादनोपायः सूचितः स्यात् । तथैव तत्कस्य
हेतोः इत्याशङ्क्याह—**उपायकौशल्यपरिगृहीतो** हि इत्यादि । शून्यताविमोक्षमुखत्वेनानुप-
लम्भोपायार्थमाह—**पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्यैवं भवति । दीर्घरात्रममी** 20 W 759
**सत्त्वा उपलम्भे चरन्ति** इत्यादि । **शून्यतासमाधिविमोक्षमुखं समापद्यते** इति शून्यता-
समाधिविमोक्षमुखभावनापरिपूरिगमनादनुपलम्भोपायः परिदीपितः । निमित्तानुपलम्भादनि-
मित्तोपायार्थमाह—**पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्यैवं भवति । दीर्घरात्रममी**
**सत्त्वा निमित्तसंज्ञया** इत्यादि । **आनिमित्तं समाधिविमोक्षमुखं समापद्यते** इति । अनिमित्त-
समाधिविमोक्षमुखभावनापरिपूरिगमनेनानिमित्तोपायो गदितः । प्रणिधानानुपलम्भेनाप्रणि- 25
धानोपायार्थमाह—**पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्यैवं भवति—दीर्घरात्रममी सत्त्वा** W 760
**नित्यसंज्ञया** इत्यादि । **अप्रणिहितं समाधिविमोक्षम्** इति अप्रणिहितसमाधिविमोक्षमुख- B 452
भावनापरिपूरिगमनेन अप्रणिधानोपायः सूचितः । शून्यतादीनां श्रावकादिसाधारणत्वेऽपि
तदुपायविशेषणार्थमाह—**यो हि कश्चित् सुभूते बोधिसत्त्वः** इत्यादि । तत्र शून्यतादित्रि-
विमोक्षमुखविपर्ययेणोपलम्भे चरिताविनः इत्यादि त्रिधोक्तम् । तस्यैव च व्याख्यानं पिण्ड- 30
संज्ञायामित्यादिना यथाक्रमं कृतम् । **शून्यतातः** इत्यादावबह्वादित्वेन सप्तम्यन्तात्तसिः । W 761
एतदुक्तम्—कृपादियोगादेवं ज्ञानधर्मसमन्वागतो बोधिसत्त्वः शून्यतादौ पतेदित्यस्थानमेत-

दिति। प्रश्नपूर्वकावैवर्तिकधर्मकथनेनावैवर्तिकलिङ्गोपायार्थं प्रश्नं कर्तुं शिक्षयन्नाह—**एवं हि** W 762 **सुभूते बोधिसत्त्वः** इत्यादि। व्यतिरेकमुखेन निर्दिशन्नाह—**सचेत्** इत्यादि। तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**यो ह्यसौ** इत्यादि। तत्र आवेणिको धर्मः सर्वसत्त्वापरित्यागः, तं श्रुतचिन्ताभावनामयज्ञानोत्पादनार्थं यथाक्रमं न सूचयति, न प्रभावयति, नोपदर्शयति, 5 यतो न प्रजानाति, परिपृष्टो न व्याकरोति, न विसर्जयतीति यथासंख्यं योज्यम्। तां भूमिमित्युपायकौशल्यम्। अन्वयमुखेन प्रतिपादयितुं काक्वा प्रश्नयन्नाह—**स्यात्पुनर्भगवन्** इत्यादि। तथैव परिहरन्नाह—**स्यात्सुभूते** इत्यादि। **एवं प्रतिपद्येत** इति उपायकौशल्यं सर्वसत्त्वापरित्यागश्चाभ्यसनीय इत्यवगच्छेत्। **एवं विसर्जयेत्** इति परैः पृष्टस्य अवैवर्तिका- B 453 धिगमानुरूपव्याकरणाव्याकरणाभ्यामवैवर्तिकानवैवर्तिकभावधारणेन अवैवर्तिकलिङ्गोपायः W 763 10 सूचितः स्यात्। सर्वविषयज्ञानत्वेन अप्रमाणविषयोपायार्थं चाह—**तेन हि भगवन्** इत्यादि। **असंहार्या** इति तेषां बोधिसत्त्वानामसंहार्यत्वेनोपायस्य विषयाप्रमाणता ज्ञापिता भवेत्। तदेवं विषयप्रयोगाभ्यां समन्वागतं यथोक्तमेव दशविधमुपायकौशलं ग्राह्यम्। तथा चोक्तम्—

**विषयोऽस्य प्रयोगश्च शात्रवाणामतिक्रमः।**
**अप्रतिष्ठो यथावेधमसाधारणलक्षणः॥** ६२ ॥
15 **असक्तोऽनुपलम्भश्च निमित्तप्रणिधिक्षतः।**
**तल्लिङ्गश्चाप्रमाणश्च दशधोपायकौशलम्॥** ६३ ॥ इति ॥

कः पुनस्त्रिसर्वज्ञतायाः सर्वाकाराभिसंबोधस्य च विशेषः? प्रतिनियताकारविषया- स्तिस्रः सर्वज्ञताः यथोक्तेनाकारप्रतिनियमेन। समस्ताकारविषयस्तु सर्वाकाराभिसंबोध इति केचित्। लाक्षणिकं त्रिसर्वज्ञताव्यवस्थानम्। प्रायोगिकस्तु सर्वाकाराभिसंबोध इत्यन्ये। 20 विपक्षप्रतिपक्षव्यवस्थानप्रभावितः सर्वाकाराभिसंबोधः, त्रिसर्वज्ञतास्तु न चैवम्, प्रकृति- शान्ताकारत्वादित्यपरे॥

**समाप्तः सर्वाकाराभिसंबोधः॥**

प्राप्तसर्वाकाराभिसंबोधस्य इदानीं प्रकर्षपर्यन्तोऽधिगम इति मूर्धाभिसमयो वक्तव्यः। तत्र लिङ्गं तावदस्याभिधानीयं येनासौ लिङ्ग्यते। ततः स्वप्नावस्थायामप्यत्यभ्यासात् स्वप्न- 25 सदृशसर्वधर्मेक्षणं प्रथमं लिङ्गं वक्तुमाह—**सचेत् पुनः सुभूते बोधिसत्त्वो महासत्त्वः स्वप्ना- न्तरगतोऽपि** इत्यादि। एतदुक्तम्—एवं प्रज्ञोपायपरिगृहीता बोधिसत्त्वस्य योगधर्मभावना B 454 मूर्धप्राप्ता, या स्वप्नान्तरेऽप्यस्या योगविदर्शनामनस्कारास्तथाभूतधर्मासाक्षात्करणेन सत्त्वधातु- W 764 सापेक्षा एव प्रवर्तन्ते इति। द्वितीयश्रावकादिभूमिस्पृहाचित्तानुत्पादनलिङ्गार्थमाह—**पुनरपरं सुभूते** इत्यादि। तत्रापूर्वप्राप्त्यभिलाषः स्पृहा। प्राप्तावियोगेच्छा अनुशंसाचित्तम्। तृतीय- 30 तथागतादिदर्शनलिङ्गार्थमाह—**अनेकशतायाः पर्षदः** इत्यादि। चतुर्थबुद्धर्द्धिविकुर्वितोपलब्धि- W 765 लिङ्गार्थमाह—**वैहायसमभ्युद्गम्य** इत्यादि। पञ्चमस्वप्नोपमधर्मदेशनाचित्तोत्पादलिङ्गार्थमाह—

**बोधिसत्त्वो महासत्त्वो नोत्त्रस्यति** इत्यादि । षष्ठस्वबुद्धक्षेत्रापायप्रहाणानुस्मरणलिङ्गार्थमाह—**नैरयिकान् सत्त्वान्** इत्यादि । किमिदमुपायविशुद्धिलक्षणं नामेति प्रश्नयन्नाह—**तत्र सुभूते कथम्** इत्यादि । परिहरन्नाह—**सचेत् सुभूते बोधिसत्त्वः** इत्यादि । सप्तमनगरादिदाहप्रशमनसत्याधिष्ठानसमृद्धिलिङ्गार्थमन्वयमुखेनाह—**नगरदाहे वा** इत्यादि । मृदुमध्याधिमात्रभेदेन अपगमाद्यथाक्रममुपशाम्यतु शीतीभवतु अस्तं गच्छत्विति योज्यम् । व्यतिरेकमुखेनापि कथयन्नाह—**सचेन्नोपशाम्यति** इत्यादि । उभयथापि निर्दिशन्नाह- **सचेत्पुनः** इत्यादि । **कर्म विपच्यते** इति सद्धर्मप्रत्याख्यानम् । दृष्टधर्मसंवर्तनीयमेव कर्म सत्याधिष्ठानानिष्पत्तेर्दौर्मनस्यादिना अनुभूयते । **तत एव** इति जन्मान्तरसंगृहीतात् । अष्टमयक्षाद्यमनुष्यापगमसत्यवाक्यनिष्पत्तिलिङ्गार्थं व्यतिरेकमुखेनाह—**पुनरपरं सुभूते यैराकारैः** इत्यादि । तत्र स्वयंप्रवेशाद्गृहीतः । सामर्थ्याधानेन कायादिविकारापादनादाविष्टः । सर्वाकारज्ञतादिपञ्चविधाभिसमयेन सर्वपदार्थावगमाद्यथाक्रममज्ञातमित्यादीनि पञ्च पदानि नेति पूर्वेण योज्यानि । अन्वयमुखेनापि कथयन्नाह—**सचेत् पुनः सुभूते** इत्यादि ॥

W 767 5 W 768 B 455 10 W 769

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायाम्
उपायकौशल्यमीमांसापरिवर्तो नाम विंशतितमः ॥



# २१ मारकर्मपरिवर्त एकविंशः ।

B 456 W 772 माराधिष्ठानेनापक्रमणे सति नेदमष्टमं लिङ्गमित्याह—**तत्र खलु पुनः** इत्यादि । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**मारो हि** इत्यादि । **अचिरयानसंप्रस्थितस्य** इति मूर्धाभिसमयेऽधुना प्रवृत्तस्य स्वरूपमहत्त्वाद्बलवत्तरम्, कार्यनिर्वर्तकत्वात्तेजोवत्तरम्, गौरवाकारणा-
5 दवमंस्यते, हास्यस्थानीयत्वादुच्चग्घयिष्यति, अतिशयोक्त्यभिधानादुल्लापयिष्यति, निन्दाकारणात् कुत्सयिष्यति, वैरूप्यनिश्चारणात् पंसयिष्यति, मानस्योत्पादनविशेषाधानात् मानं जनयिष्यति, मानं संजनयिष्यति । तथैव अतिमानमानातिमानाभिमानभेदेन पदषट्कम्—मानं वर्धयिष्यति, मानं संवर्धयिष्यति, मानं स्तम्भयिष्यति, मानमुपस्तम्भयिष्यति, मानं बृंहयिष्यति, मानमुपबृंहयिष्यति, इति यथाक्रमं योज्यम् । मिथ्यामानकरणात् मानमुत्पाद-
10 यिष्यति । **स तेन मानेन** इत्यादि । हीनादहं श्रेयान्, सदृशेन वा सदृश इति चित्तोन्नतिर्मानः । सदृशादहं श्रेयान्, श्रेयसा वा सदृश इत्यतिमानः । श्रेयसः श्रेयानहमिति मानातिमानः । अप्राप्ताधिगमे प्राप्त्यभिप्रायादभिमानः । अगुणवतोऽपि गुणवानहमिति मिथ्यामानः । **दूरीकरिष्यति सर्वज्ञताम्** इत्यादि । एतदुक्तम्—मानेन दूरीकरिष्यति
W 773 सर्वज्ञतां त्रिसर्वज्ञतात्मिकाम् । अतिमानमानातिमानाभिमानैर्यथाक्रमं दूरीकरिष्यत्यनुत्तरं
15 बुद्धज्ञानं सर्वाकाराभिसंबोधम्, स्वयंभूज्ञानं मूर्धाभिसमयम्, सर्वज्ञज्ञानमनुपूर्वाभिसमयम् । मिथ्यामानेन च दूरीकरिष्यत्यनुत्तरां सम्यक्संबोधिमेकक्षणाभिसंबोधपूर्वकं धर्मकायाभि-
B 457 समयमिति । **न सेविष्यते** इत्यादिपदत्रयं श्रुतादिज्ञानोत्पादनार्थम्, कल्पितपरतन्त्रपरिनिष्पन्न-
W 774 स्वरूपपरिज्ञानार्थं वा यथासंख्यं योज्यम् । प्रसङ्गान्मारकर्मप्रभेदं निर्दिशन् मृदुमारकर्मार्थमाह—**पुनरपरम्** इत्यादि । **नामापदेशेन** इति तन्नामकथनेन । **नामाधिष्ठानेन** इति मात्रादिनाम-
20 व्यपदेशेन । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**तव हीदं नामधेयम्** इत्यादि । तत्र ग्रामं परित्यज्य क्रोशमात्रेणावस्थानादारण्यकः । गृहीतपिण्डपातसमादानत्वात् पैण्डपातिकः । रथ्याकर्पटचीवरत्वेन पांशुकूलिकः । समस्तं भक्तादिकमादाय भोजनात्पश्चात्खलुभक्तिकः । एकाशनोपवेशेन यथेष्टं परिभोगादेकाशनिकः । यथासंस्तीर्णकर्पटादौ शयनाद्याथासंस्तरिकः । संघाट्यादित्रिचीवरमात्रत्वात् त्रैचीवरकः । श्मशाने स्थितत्वेन श्माशानिकः । तथा
25 वृक्षमूलिकः । निषद्यया रात्रौ स्थानात् नैषद्यिकः । उपर्यावरणाभावेन आभ्यवकाशिकः । धृतोर्णाचीवरादित्वेन नामतिकः । अधिकाभिलाषाभावादल्पेच्छः । तावन्मात्रेण संतोषात् संतुष्टः । आपत्तिरहितत्वेन प्रविविक्तः । अल्पेच्छत्वादपगतपादम्रक्षणः । पूर्ववत् तत्कस्य
W 775 हेतोः इत्याशङ्क्याह—**तथा हि** इत्यादि । मध्यमारकर्मार्थमाह—**तं च मारः** इत्यादि । तथैव

तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि तव** इत्यादि । अधिमात्रमारकर्मार्थमाह—**तस्य खलु पुनः** B 776
इत्यादि । पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि** इत्यादि । सद्भूतत्वे कथं पुनरिदं मारकर्मे-
त्याशङ्क्याह—**ये खलु पुनः** इत्यादि । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**ये हि** इत्यादि । प्रधान- B 458
बुद्धत्वावस्थानामव्याकरणेन मारकर्मार्थमाह—**पुनरपरम्** इत्यादि । तत्र प्रयोगाद्यवस्थासु यथाक्रम- W 778
मनुवर्तितमनुवितर्कितमनुविचारितम् । श्रुतमयादिज्ञानेन वेति केचित् । **तदुभयं तुलयित्वा** 5
इति । यत्तेन विचिन्तितम्, यच्च मारेण निर्दिष्टं नामधेयम्, तदेतदुभयं समेति तुल्यमेति
( संगच्छते ) इति निरूप्य मंस्यते इति संबन्धः । तथैव सत्यत्वे कथं मारकर्मेत्याशङ्क्याह—
**यानि च मया** इत्यादि । एवं नामापदेशेन बोधिसत्त्वानां तिरस्कारिणो दुर्लभा बोधिरित्याह—
**सचेत्पुनः** इत्यादि । संधाव्य संसृत्येति पापदेशनया आत्मानं निर्मलीकृत्य । निरभिमानतां
प्राप्येत्यर्थः । एतदेव स्पष्टयन्नाह—**यदि चासौ** इत्यादि । तत्र विदूषणाप्रतिपक्षेण विगर्हि- 10
ष्यति । समुदाचारप्रतिपक्षेण वान्तीकरिष्यति । स्वपरापेक्षलज्जया जुगुप्सिष्यति । आश्रय-
बलात् प्रतिनिःस्रक्ष्यति । प्रत्यापत्तिबलात् प्रतिदेशयिष्यति । दीर्घकाललभ्यत्वेन दुर्लभा ।
तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**तावद्गुरुतरं हि** इत्यादि । परापमानसमुत्थत्वेन यस्मान्मन-
नापत्तिस्थानं तावद्गुरुतरम्, येन बोधिर्दुर्लभा भवति, न त्वसंभविनीत्यर्थः । तथा हि ये
प्रतिपक्षसंनिधावपचयधर्माणस्ते संभवदत्यन्तोन्मूलनदक्षप्रतिपक्षाः, तद्यथा कनकमलादयः । 15 W 779
यथोक्तधर्माणश्च सर्व एव सद्धर्मावरणादय इति न्यायान्निःशेषं क्षयं यात्येव मननापत्ति-
स्थानम् । यत्पुनः "न प्रणश्यन्ति" इत्यादि वचनम्, तदसत्यां प्रतिपक्षभावनायामिति ज्ञेयम् ।
अन्यथा युक्तिविरोधो बहुतरसूत्रान्तविरोधश्च स्यात् । नियतवचनमप्येतेनैव व्याख्यातम् । B 459
अनियतवचनं पुनरसत्यामपि प्रतिपक्षभावनायां कादाचित्कफलत्वादित्यवसातव्यम् । मनना-
पत्तिस्थानस्य गुरुत्वमेव दृष्टान्तेन स्पष्टयन्नाह—**तद्यथापि नाम** इत्यादि । **चतस्रो मूलापत्तय** 20
इति वधस्तेयमैथुनानृतसंज्ञिताः प्रधानापत्तयः । भिक्षुसंवरभ्रंशादभिक्षुः । श्रामणेरत्वाभावा-
दश्रमणः । उपासकभाववियोगादशाक्यपुत्रीयः । जन्मान्तरेऽप्यधिगमाभव्यत्वाद्गुरुतरापत्तिरियं
मननापत्तिः । अतिगुरुत्वमावेदयन्नाह—**तिष्ठन्तु** इत्यादि । **पञ्चभ्यः** इति तथागतदुष्टचित्त-
रुधिरोत्पादादिभ्यः । **गुरुतरः** इति मानसहगतचित्तोत्पादनसंख्यावच्छिन्ननरकवासानुभवनात् ।
नामापदेशेन एवं मारकर्म निर्दिश्य विवेकगुणेनापि मृदुमारकर्मार्थमाह—**पुनरपरम्** इत्यादि । 25 W 781
तत्र वनप्रस्थो वनविशेषः । पश्चाद्विप्रतिसारित्वेन यावत्समाधेरनधिगमादपरिशुद्धकायवाङ्मन-
स्कर्मान्तः । तद्विपर्ययात् परिशुद्धकायवाङ्मनस्कर्मान्तः । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—
**तथा हि** इत्यादि । मध्यमारकर्मार्थमाह—**किंचापि** इत्यादि । **इमं विवेकम्** इति प्रज्ञापार- W 782
मितोपायकौशल्यात्मकम् । **निश्रितः** इत्यादि । मृदुमध्याधिमात्रावग्रहभेदात्तत्र विवेके

अरण्यवासादौ यथाक्रमं निश्रितः आलीनोऽध्यवसितः, तेनैवात्मोत्कर्षादध्यवसायमापन्नः। पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह—**यः सुभूते** इत्यादि। **तेन विवेकेन** इति तेनारण्यवासादिना विवेकेन विहरन् अस्मिन् बोधिसत्त्वविवेके महोपायकौशलादौ न संदृश्यते। अधिमात्रमारकर्मार्थमाह—**तमेवम्** इत्यादि। **संकीर्णविहारेण** इति श्रावकादिमनस्कारोपेतत्वात्। B 460 W 783 5 **आकीर्णविहारेण** इति महायानाद्बहिर्गतविहारत्वात्। अन्यैर्बोधिसत्त्वैरस्पृश्यत्वाद्बोधिसत्त्वचण्डालः। स्वपरबोधिचित्तदूषणाद्बोधिसत्त्वदूषी। वाङ्मात्रेण बोधिसत्त्वचर्याभ्युपगमाद्बोधिसत्त्वप्रतिरूपकः। बोधिसत्त्वधर्मवियोगाद्बोधिसत्त्वप्रतिवर्णिकः। बोधिसत्त्वसंघस्योपघाताद्बोधिसत्त्वकारण्डवकः। अकल्पिकपरिभोगाच्चौरः। तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**अभिमानपतिता हि** इत्यादि। पापधर्मयोगादविशुद्धधर्माणः। कल्याणमित्रविरहादनाचार्याः। अन्यथा-10 W 784 वादित्वादनार्यधर्माणः। नवमस्वयमभिज्ञापराक्रमकल्याणमित्रसेवनलिङ्गार्थमाह—**यस्य खलु पुनः** इत्यादि॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां
मारकर्मपरिवर्तो नामैकविंशतितमः॥



## २२ कल्याणमित्रपरिवर्तो द्वाविंशः। B 461

नवममेव लिङ्गं कथयन्नाह–**अथ खलु भगवान्** इत्यादि। तत्र फलावस्थाः षट् पारमिताः शास्ता, प्रथमाधिगममार्गसंदर्शनाल्लब्धालोकावस्था मार्गः, अधिकालोकरूपत्वात् वृद्धालोकावस्था आलोकः, ग्राह्यग्राहकाभावतत्त्वैकदेशप्रविष्टत्वात् तत्त्वार्थैकदेशप्रसृतावस्था उल्का, अनन्तरतत्त्वज्ञानोदयादानन्तर्यसमाध्यवस्था अवभासः, सर्वोपद्रवनिवारणात् प्रथमायां 5 भूमौ त्राणम्, तदाशयप्रयोगावन्ध्यत्वपदस्थानेन द्वितीयायां शरणम्, निरवद्यरतिवस्तुत्वात् तृतीयायां लयनम्, परमार्थत्वागमनपदस्थानेन चतुर्थ्यां परायणम्, त्रैधातुकपरिच्छिन्नत्वात् पञ्चम्यां द्वीपः, प्रज्ञापारमितास्वभावत्वात् षष्ठ्यां माता, उपायरूपत्वात् सप्तम्यां पिता, प्रणिधानात्मकत्वात् अष्टम्यां ज्ञानाय, बलपारमितालक्षणत्वात् नवम्यां बोधाय, ज्ञानपारमितातिरिक्तत्वेन दशम्यामनुत्तरायै सम्यक्संबोधये संवर्तन्ते इत्यर्थभेदः। अनुच्चलनकारण- 10 भोगागारसक्तिप्रतिपक्षेण यथाक्रमं दानशीलपारमिते। निवृत्तिकारणसांसारिकसत्त्वविप्रतिपत्तिजदुःखदीर्घकालिकशुक्लपक्षप्रयोगपरिखेदप्रतिपक्षेण यथासंख्यं क्षान्तिवीर्यपारमिते। विप्रणाशकारणविक्षेपदौष्प्रज्ञ्यप्रतिपक्षेण तथैव ध्यानप्रज्ञापारमिते च, इत्येवं विपक्षप्रतिपक्षव्यवस्थानतः षट्, इति संख्याव्यवस्थानम्। तथा च[1] ताभिः पारमिताभिरविक्षेपकारणैः एका पारमिता। अविक्षेपः संपद्यते, यमविक्षेपं निश्रित्य यथावत् धर्मतत्त्वावबोधात् बुद्धधर्माः 15 समुदागच्छन्ति, इत्येवं सर्वबुद्धधर्मसमुदागमपदस्थानतः संख्याव्यवस्थानम्। तथा दानपारमितया सत्त्वानुग्रहात्, शीलपारमितया अनुपघातात्, क्षान्तिपारमितया B 462 उपघातमर्षणात्, वीर्यपारमितया कृत्यव्यापारगमनात्, सत्त्वान् परिपाचने योग्यान् W 788 कृत्वा विक्षिप्तचित्तानां समाधानाय ध्यानपारमितया, समाहितचित्तानां विमोक्षाय प्रज्ञापारमितया, अववादनात् परिपाकः, इत्येवं सत्त्वपरिपाचनानुकूल्यतोऽपि संख्याव्यव- 20 स्थानमवसेयम्। तथैव तत्कस्य हेतोः इत्याशङ्क्याह–**अत्र हि** इत्यादि। कल्याणमित्रार्थमेव स्पष्टयन्नाह–**येऽपि ते सुभूते** इत्यादि। पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह–**आसु हि** इत्यादि। यावांश्च कश्चित् बुद्धधर्म इत्यस्य सर्वाकारज्ञताद्यष्टाभिसमयक्रमेण विभजनात् बुद्धज्ञानमित्यष्ट पदानि। उपसंहरन्नाह–**तस्मात् तर्हि** इत्यादि॥

दशमसर्वप्रकारप्रज्ञापारमिताशिक्षणलिङ्गार्थमाह–**आसु खलु पुनः** इत्यादि। तथैव 25 तत्कस्य हेतोः इत्याशङ्क्याह–**एषा हि** इत्यादि। दर्शनभावनाविशेषाशैक्षमार्गप्रापणात् यथाक्रमं नायिकेत्यादि पदचतुष्टयम्। आदौ उत्पादनात् जनयित्री। पश्चात् संवर्धनात् धात्री। पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह–**प्रज्ञापारमिता** इत्यादि॥

एकादशसर्वानभिनिवेशलिङ्गार्थमाह–**किंलक्षणा** इत्यादि। **असङ्गलक्षणा** इति W 790 अनभिनिवेशस्वभावा। पदपरमत्वादाह–**स्याद्भगवन्** इत्यादि। न्यायस्य तुल्यत्वादाह– 30

W 787

---

१ B चतसृभिः for ताभिः.

**एवमेतत्** इत्यादि । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**सर्वधर्मा हि** इत्यादि । तत्र हेतुफलभावरहितत्वात् यथासंख्यं विविक्ताः शून्या इति केचित् । शून्यत्वे संक्लेशाद्यभाव B 463 इत्याह—**यदि भगवन्** इत्यादि । **स धर्मो नोपलभ्यते** इति । शून्यत्वादेवेति भावः । **अस्य भाषितस्य** इति संक्लेशाद्यनुपपत्तौ विविक्तशून्यतादेशनायाः । प्रतिप्रश्नेन परिहर्तुमाह—

5 **तत्किं मन्यसे** इत्यादि । **संक्लेशो व्यवदानं च प्रज्ञायते** इति एतदुक्तम्—शून्यत्वेऽपि W 791 सर्वधर्माणां संवृत्या कर्मफलसंबन्धस्य विद्यमानत्वात् यथा अभिनिवेशस्तथा संक्लेशः, यथा च W 792 अनभिनिवेशस्तथा व्यवदानं च प्रज्ञायते इति । द्वादशबुद्धबोध्यासन्नीभवनलिङ्गार्थमाह—**एवं च भगवन् चरन् बोधिसत्त्वः** इत्यादि । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**अनभिभूतम्** इत्यादि । आदर्शादिज्ञानचतुष्टयभेदेन बुद्धत्वमित्यादि पदचतुष्टयम् । तथैवानुवद-

10 न्नाह—**एवमेतत्** इत्यादि । एतावन्त्येव लिङ्गान्यवसातव्यानि । तथा चोक्तम्—

**स्वप्नान्तरेऽपि स्वप्नाभसर्वधर्मेक्षणादिकम् ।**
**मूर्धप्राप्तस्य योगस्य लिङ्गं द्वादशधा मतम् ॥ १ ॥** इति ॥

W 794 लिङ्गैरेवं लक्षितस्य कतिप्रकारा विवृद्धिरिति जम्बूद्वीपकादिसत्त्वतथागतसत्कारादिपुण्यादिकां प्रथमां विवृद्धिं वक्तुमाह—**सचेत् पुनः सुभूते ये जम्बूद्वीपे सत्त्वाः** इत्यादि ।

15 जम्बूद्वीपस्योपलक्षणत्वात् त्रिसाहस्रमहासाहस्रलोकधातवीयसत्त्वानामप्यत्र ग्रहणम्, पञ्चविंशतिसाहस्रिकायां तथाभिधानात् । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**यथा यथा हि** इत्यादि । **दक्षिणीयतां गच्छति** इति पुण्यक्षेत्रतां प्रतिपद्यते । एतदेव कुत इति तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि** इत्यादि । **स्थापयित्वा** इति परित्यज्य । पूर्ववत् तत्कस्य B 464 हेतोः इत्याशङ्क्याह—**अप्रतिपुद्गला हि** इत्यादि । प्रत्यक्षानुमानागमार्थानामधिगमादप्रति-

20 पुद्गलाः इत्यादि पदत्रयम्, दैशिकत्वात् इत्यपरे। प्रकारान्तरेणापि पुण्याभिभवत्वं वक्तुमाह— W 795 **कथं च** इत्यादि । **वध्यगतानिव** इति मरणार्हानिव । **क्षणांश्च विरागयतः** इति । पापानुष्ठानेन मनुष्यादिभावान्नाशयतः । **दायकानाम्** इति समादायकानाम् । **दानपतीनाम्** इति साक्षाद्दातॄणाम् । [दक्षिणां] **विशोधयन्ति** इति सम्यक् फलवतीं कुर्वन्तीत्यर्थः । **अनेन मनसिकारेण** इति सत्त्वानां मार्गोपदेशादिस्वभावेन । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—

25 **यो ह्येनान्** इत्यादि । **स एव** इति महोपायकौशलाया मातुरालम्बने स एव सत्त्वोपकारमनस्कारः । **यथायम्** इति मैत्र्यादिस्वभावो मनस्कारः । **क्षपयेत्** इत्यतिक्रामयेत् ॥

W 796 द्वितीयविशिष्टप्रज्ञापारमितामनस्कारस्वभावविवृद्ध्यर्थमाह—**तद्यथापि नाम सुभूते केनचिदेव** इत्यादि । **मणिरत्नज्ञाने वर्तमानेन** इति तत्परीक्षाशास्त्रपरिज्ञानात् । **मणिरत्नजातिज्ञेन** इति लक्षणपरिजयात् । **यावत् सा वा अन्या वा प्रतिलब्धा भवति** इति ।

30 सा वा प्रज्ञापारमिता अन्या वा समाधिराजादिसूत्रान्तधर्मता प्राप्ता भवति । पुस्तकापेक्षया सा वा अन्या वा, इति केचित् । शून्यत्वादिविरहितत्वं न घटते इत्याह—**यत्पुनः** इत्यादि । परिहरन्नाह—**सचेत्** इत्यादि । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**प्रज्ञा** इत्यादि । एतदुक्तम्—

यस्मात् प्रज्ञापारमिता शून्या, तत्त्वतो विवृद्धिपरिहाणिरहिता, तस्मात् शून्याः सर्वधर्माः, इत्यालम्बनात् मनस्कारस्यापि शून्यत्वाधिमोक्षे सति अविपर्यस्तत्वात् प्रज्ञापारमितामनस्कारा-विरहिता इति ॥ B 465

तृतीयातिशयानुत्पत्तिकक्षान्तिलाभस्वरूपविवृद्ध्यर्थं प्रश्नयन्नाह—**सचेत् भगवन्** इत्यादि। परिहरन्नाह—**न खलु पुनः** इत्यादि । **बोधये समुदागच्छति** इत्यादि । 5 एतदुक्तम्—यतः प्रज्ञापारमिताया हानिवृद्धिप्रतिषेधवत् बोधिसत्त्वस्य परमार्थतो हानिवृद्धिप्रतिषेधः, ततो मायोपमभावनया संवृत्या पुण्यज्ञानसंभारं समुदानयति, अनुत्तरां च सम्यक्संबोधिमभिसंबुध्यते, अन्यथा तत्त्वतो हानिवृद्धिसंभवे विपर्यासोऽसन्नेवेति । एतदेव तत्त्वमित्याह—**सचेत् सुभूते बोधिसत्त्वः** इत्यादि । **चरत्ययं बोधिसत्त्वः** इत्यनेन कश्चित्तात्त्विको धर्मः समाक्षिप्त इत्यभिप्रायादाह—**किं पुनर्भगवन्** 10 **प्रज्ञापारमिता चरति** इत्यादि । **कथं पुनः** इत्यादि । यदि यथोक्तप्रकारप्रतिनिषेधेन सर्वत्र **नो हीदम्** इत्युच्यते भगवता, कथं पुनः प्रकान्तरेण चरति, **येन चरत्ययं बोधिसत्त्वः** इति प्रागुक्तमित्यर्थः । संवृत्या तदुक्तमित्याह—**किं पुनः सुभूते समनुपश्यसि** इत्यादि । तत्त्वतः इति भावः । उपसंहरन्नाह—**एवं खलु** इत्यादि । सर्वधर्मानुपलम्भादेव परमार्थ-द्वारेणानुपपत्तौ मायोपमभावनया संवृत्या चरणादनुत्पत्तिकेषु धर्मेषु विशिष्टाधिमुक्तिर्भवति । 15 वैशारद्यप्रतिपदादिभिः सर्वोपलम्भभयाभावान्निर्भीकृता प्रतिपत् । श्रुतमयादिज्ञानोत्पादाय **एवं चरन्** इत्यादि पदत्रयम् । आदर्शादिज्ञानभेदेन च **अनुत्तरं बुद्धज्ञानम्** इत्यादि पदचतुष्टयं योज्यम् ॥

W 799 W 800 B 466

चतुर्थबोध्यबोधकधर्मानुपलम्भलक्षणविवृद्ध्यर्थमाह—**या भगवन् सर्वधर्माणाम्** इत्यादि । **संवृत्या व्याकरणम्** इति प्रतिप्रश्नेनाह—**किं पुनः सुभूते** इत्यादि । तथैव तत्कस्य 20 हेतोः इत्याशङ्क्याह—**सर्वधर्मेषु** इत्यादि । **न मे एवं भवति** इति । अनेन अविकल्पा मूर्धाभिसमये प्रज्ञापारमिता इति कृत्वा बोधिसत्त्वस्यैवं विकल्पाभावं स्वव्याजेनाह ॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां

कल्याणमित्रपरिवर्तो नाम द्वाविंशतितमः ॥



## २३ शक्रपरिवर्तस्त्रयोविंशः।

B 467
W 806

पञ्चमविशिष्टकुशलमूलसमन्वागमात्मकवृद्ध्यर्थमाह—**तेन खलु पुनः** इत्यादि। बाल-जनोत्त्रासकरत्वात् आकाशगम्भीरतया गम्भीरा। हेतुभावरहितत्वेन यथाक्रमं विविक्तत्वा-द्दुर्दृशा, शून्यत्वाद्दुरनुबोधा। दर्शनभावनाविशेषमार्गोत्पादनार्थं यथासंख्यं शिक्षिष्यन्ते, 5 प्रतिपत्स्यन्ते, योगमापत्स्यन्ते इति वाच्यम्। संवरसत्त्वार्थक्रियाकुशलधर्मसंग्राहकत्रिविध- (W 807) शीलस्कन्धानां विपक्षधर्मरहितत्वात् **अखण्डेन** इत्यादि पदत्रयम्। तेषामेवानुकूलधर्म-सद्भावात् **परिपूर्णेन** इत्याद्यपरं पदत्रयमिति केचित्। कायिकवाचिकमानसावद्याभावात् अखण्डोऽच्छिद्रोऽकल्मषः। श्रुतचिन्ताभावनाज्ञानसंपन्नत्वात् परिपूर्णः परिशुद्धोऽशबलः शीलस्कन्ध इत्यपरे। **क्षान्तिसंपन्नाः** इत्यादि पदत्रयं दुःखवासनादित्रिविधक्षान्तिभेदात्। 10 **आलब्धवीर्या** इत्यादि पदचतुष्टयम् आरम्भपरिकर्मप्रत्यवेक्षाप्रतिपत्तिवीर्यभेदात्। **ध्याना-रामाः** इत्यादि षट् पदानि अनागम्यध्यानान्तरप्रथमद्वित्रिचतुर्थध्यानाधिगमयोगात्। पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह—**यो हि बोधिसत्त्वः** इत्यादि। षष्ठसर्वदेवनिकायोपसंक्रमस्वभाव- (W 808) विवृद्ध्यर्थमाह—**एवं शिक्षमाणं च प्रज्ञापारमितायाम्** इत्यादि। **अहमपि** इति शक्रः। **नोत्पत्स्यन्ते** इति तथागताद्यधिष्ठानादिति भावः॥

15 अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां

शक्रपरिवर्तो नाम त्रयोविंशतितमः॥



## २४ अभिमानपरिवर्तश्चतुर्विंशः ।

सप्तमसर्वमाराभिभवेन स्वरूपविवृद्ध्यर्थमाह—**अथ खलु भगवान्** इत्यादि । **शिक्षते** इत्यादि पदत्रयं प्रयोगानन्तर्यविमुक्तिमार्गभेदादुक्तम् । **शोकशल्यविद्धाः** इति स्वगोचरातिक्रमेण वैमनस्यप्राप्ताः । चरत्यसमाहितेन चित्तेन, योगमापद्यते समाहितेन । **न ह्येवमत्र युज्यमानम्** इति । यथा अन्येषु सूत्रान्तेषु भाषितम्, तथा नैवात्र घटमानवस्तु निर्दिष्टम्, अतोऽस्य भाषितस्य श्रुतचिन्तामयज्ञानेन बोद्धुमशक्यत्वात् यथाक्रमम् आगाधमास्वादं च न प्राप्नुयामित्यर्थः । मृदुमध्याधिमात्रसुखोदयेन तुष्ट उदग्र आत्तमनाः । तथैव त्रिविधसौमनस्योत्पादात् प्रमुदितः प्रीतिसौमनस्यजातः । प्रयोगादिषु विघ्नकरणसामर्थ्यात् संहर्षजातो हर्षितचित्तः प्रीतिप्रामोद्यजातः । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**दूरीकरोति** इत्यादि । **उद्गता** इत्युत्सदाः, **अध्याक्रान्ताः** इत्यभिभूताः । **अनिष्टत्वाय** इत्यादि पदचतुष्टयं नरकतिर्यक्प्रेतासुरगतिसंवर्तनीयत्वादिति केचित् । तत्र स्वस्थाने वाक्यसारम्भात् **कलहायति** । राजकुलादौ विवदनात् **विवदति** । दण्डादिग्रहणात् **विगृह्णीते** । दुःखं प्रति समाज्ञानात् **आक्रोशति** । प्रहारनियमनात् **परिभाषते** । द्वेषोपनिपातात् **व्यापद्यते** । क्रोधोत्पादात् **दोषमुत्पादयति** । **संनाहः संनह्यः** इति । यदि सर्वज्ञता परित्यक्ता, तदा कलहादिसमुत्थपापापनयनार्थं चित्तोत्पादसंख्यावच्छिन्नकल्पप्रमाणं वीर्यं करणीयमित्यर्थः । गुरुतरत्वात् पापस्य निःसरणमसंभावयन् प्रश्नार्थमाह—**अस्ति भगवन्** इत्यादि । संभवप्रतिपत्तिपक्षत्वेन सर्वेषामेव संप्रतिककर्मको धर्म इति व्यासमावेदयन्नाह—**सनिसरणः** इत्यादि । एतदुक्तम्—श्रावकयानिकादीनां स्वयाने संघादिशेषाद्यापत्तेः प्रतिक्रियादेशनया संप्रतिकधर्मको धर्मदेशिकः तथा महायानिकानां बोधिसत्त्वपिटकादौ देशित इति । प्राधान्यात् बोधिसत्त्वानारभ्य स्पष्टयन्नाह—**तत्र आनन्द योऽयम्** इत्यादि । कृतपापदेशनात् न देशयति । अकरणसंवराकरणात् नायत्यां संवराय प्रतिपद्यते । **उत्सारयितव्याः** इत्यादि पदत्रयं मृदुमध्याधिमात्रविग्रहाद्यपनयनात् । **दुर्लब्धाः** इति । **योऽहं जल्पिते सति परस्मिन् प्रतिजल्पामि** अमी कलहादयोऽप्रशस्तत्वेन दुर्लब्धा इत्येवं चित्तमुत्पादयतीत्यर्थः । **परुषं वा कर्कशं वा** इति । श्रोत्रासुखकारित्वात् परुषम्, वैमनस्यकरत्वात् कर्कशम् । **दुरुक्तानि** इत्यादि पैशुन्यपारुष्यसंभिन्नप्रलापभेदादुक्तम् । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**न मया अध्यासयत** इत्यादि । क्षोभः संरम्भः । भ्रुकुटिः ललाटसंकोचः । **सर्वसत्त्वानामन्तिके स्थातव्यम्** इति यथोक्तक्रमेण मारकर्मणामभिभवनात् सत्त्वविषये वर्तितव्यम् ॥

अष्टमशास्तृसदृशजनसमानावस्थालक्षणविवृद्ध्यर्थमाह—**कथं च आनन्द** इत्यादि । **तत्र एकयानसमारूढाः** तुल्यसंनाहप्रतिपत्त्या । **एकमार्गसमारूढाः** सदृशप्रस्थानप्रतिपत्त्या । **समानाभिप्रायाः** संभारप्रतिपत्तेरेकत्वेन । **समयानसंप्रस्थिताः** निर्याणप्रतिपत्तेस्तुल्यत्वेन । **यत्र** इति दानादौ । **यथा** इत्यनुपलम्भयोगेन ॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायाम्

अभिमानपरिवर्तो नाम चतुर्विंशतितमः ॥

## २५ शिक्षापरिवर्तः पञ्चविंशः ।

B 470 W 821 नवमोपायकौशलपरिशुद्धशिक्षास्वरूपविवृद्ध्यर्थं प्रश्नयन्नाह—**क पुनः** इत्यादि । क्षयादौ शिक्षमाणो बुद्धत्वे शिक्षते इत्यावेदयन्नाह—**सचेत्** इत्यादि । तथतैव व्यावृत्तिभेदात् यथा क्षयानुत्पादादिभिर्व्यपदिश्यते तथा व्याख्याता । कथमन्यत्र शिक्षायामन्यत्र शिक्षा 5 विधीयते इति पृच्छन्नाह—**किं कारणम्** इत्यादि । **यत्सुभूते** इत्यादिना तद्वचनमनूद्य प्रतिप्रश्नेन परिहरन्नाह—**तत् किं मन्यसे** इत्यादि । **तथता** इति सर्वज्ञता । बुद्धत्वमिति यावत् । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**अक्षयो हि भगवन् क्षयः** इति । क्षीयन्तेऽस्मिन् सर्वविकल्पा इति बुद्धत्वं क्षयः, धर्मधातुः विनाशरहितत्वादक्षय इति । तादात्म्यसंबन्धेन क्षयादिस्वभावा सर्वज्ञतेत्यर्थः । **उत्पद्यते** इत्याद्यनुत्पादादिविपर्ययेणावगन्तव्यम् । परिशुद्धशिक्षत्वेन प्रशंसार्थ- 10 माह—**तस्मात्तर्हि** इत्यादि । पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह—**सर्वसत्त्वसारा हि** इत्यादि । तत्र पक्षिघातकाः शाकुनिकाः, मांसविक्रयकारिणो निषादाः । कैवर्ता धीवराः । मृगादिघातनादौरभ्रिकाः । चक्षुःश्रोत्रविज्ञानाभावात् अन्धबधिरौ । एकाक्षिवैकल्यात् काणः । हस्तादिच्छेदात् कुण्ठः । वक्रपृष्ठत्वात् कुब्जः । कूर्परोपरि ह्रस्वपर्वत्वात् कुणिः । विसदृशजङ्घोरुत्वात् लङ्गः । स्खलद्गतित्वात् खञ्जः । सहसा वक्तुमसमर्थत्वात् जडः । क्वचित् जड्ड 15 इति पाठः । तत्राप्ययमेवार्थ इति केचित् । लौल इति उच्चार्यवचनात् लोलः । गुरुलकारमुच्चार्याभिधानात् लल्लः । उच्चैःश्रवणात् कल्लः । हस्तपादाद्यल्पप्रमाणत्वेन हीनाङ्गः । न्यूनातिरेकाङ्गो विकलाङ्गः । वैरूप्यात् विकृताङ्गः । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**अस्ति हि तस्य** इत्यादि । प्रकृतिपरिशुद्धित्वेन बलादिविशुद्ध्याधिगमो नोपपद्यते इत्याह—**यदा भगवन्** इत्यादि । संवृत्यधिगमादाह—**एवमेतत्** इत्यादि । पूर्ववत् तत्कस्य हेतोः इत्या- 20 शङ्क्याह—**सर्वधर्मा** हि इत्यादि । एतदुक्तम्—प्रकृतिपरिशुद्धत्वेऽपि सर्वधर्माणां स्वभावशुद्धधर्मापरिज्ञानवतां सत्त्वानां तथाभूतज्ञानोत्पादनार्थं मायोपमधर्मभावनया, संसीदनत्वेन संवृत्या बलादिपरिशुद्धिं प्राप्नोतीति ॥

B 471 W 822

दशमबुद्धगोत्रीभवनलक्षणविवृद्ध्यर्थमाह—**तद्यथापि सुभूते अल्पकास्ते महापृथिव्याम्** इत्यादि । क्षारप्राचुर्यात् **ऊषराः** । रूक्षत्वात् **उज्जङ्गलाः** । **अल्पकास्ते बोधिसत्त्वाः** 25 इत्यनेन बुद्धगोत्राणां मूर्धाभिसमये विवृद्धिलाभयोग्यानामल्पीयस्त्वं ज्ञापितं स्यात् ॥

W 824 एकादशमबुद्धत्वफलप्राप्तिनिमित्तात्मकविवृद्ध्यर्थं मृदुमध्याधिमात्रदृष्टान्तभेदेन हारकत्रयमाह—**पुनरपरं सुभूते तद्यथापि नाम** इत्यादि । **प्रज्ञापारमितामार्गम्** इति तथागतप्राप्तिनिमित्तात्मकैकादशीं विवृद्धिमित्यर्थः । द्वादशपारमिताविपक्षचित्तानुत्पादस्वभावविवृद्ध्यर्थमाह—**एवं हि सुभूते प्रज्ञापारमितायाम्** इत्यादि । तत्र कल्पितपरतन्त्रपरिनिष्पन्नवस्त्वभि- W 825 30 निवेशेन यथाक्रमं संगृहीताः परिगृहीता उद्गृहीताः । विपर्यासरहितत्वेनावबोधादनुगताः । चतुर्दशसर्वपारमितासंग्रहज्ञानलक्षणविवृद्ध्यर्थमाह—**तद्यथापि नाम सुभूते सत्कायदृष्टौ** B 472 इत्यादि । द्वाषष्टिदृष्टयो ब्रह्मजालपरिपृच्छादौ द्रष्टव्याः । ग्रन्थप्राचुर्यात् न लिख्यन्ते ।

यथोक्तविवृद्धिमेव स्पष्टयन्नाह—**तद्यथापि नाम सुभूते पुरुषस्य** इत्यादि । पञ्चदशसर्व- W 827
संपत्प्रतिलम्भार्थविवृद्ध्यर्थमाह—**तस्मात्तर्हि सुभूते बोधिसत्त्वेन** इत्यादि । तथैव तत्कस्य हेतोः
इत्याशङ्क्याह—**पुण्याग्रत्वात्** इति । अमुमेवार्थं विस्तारयितुं प्रश्नयन्नाह—**तत्किं मन्यसे** इत्यादि ।
पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह—**एवं महार्थिका** हि इत्यादि । तत्र दर्शनादिमार्गचतु-
ष्टयाधिगमादनुत्तरतां गन्तुकामेन इत्यादि पदचतुष्टयम् । धर्मसंभोगनिर्माणकायत्रयप्रतिलम्भाय 5
बुद्धविक्रीडितम् इत्यादि पदत्रयं वाच्यम् । सर्वसंपत्प्राप्तौ श्रावकोऽपि स्यादित्याह—**किं
पुनः** इत्यादि । अन्यार्थतया अभ्यसनात् नैव श्रावक इत्याह—**श्रावकसंपत्तिरपि** इत्यादि ।
षोडशसम्यक्संबोधौ आसन्नीभावस्वभावविवृद्ध्यर्थमाह—**एवं शिक्षमाणः सुभूते बोधिसत्त्वो** W 828
**महासत्त्वः** इत्यादि । तत्राप्यभिनिवेशो बन्धनमित्याह—**सचेत् पुनः** इत्यादि । न चरतीति
भावोपलम्भविपर्यासादिति भावः । अनभिनिवेश एव तत्त्वमित्याह—**अथ तामपि** इत्यादि । 10
यथोक्ता एव विवृद्धयो ग्राह्याः । तथा चोक्तम्—

**जम्बुद्वीपजनेयत्ताबुद्धपूजाशुभादिकाम् ।**
**उपमां बहुधा कृत्वा विवृद्धिः षोडशात्मिका** ॥ २ ॥ इति ॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां
शिक्षापरिवर्तो नाम पञ्चविंशतितमः ॥



# २६ मायोपमपरिवर्तः षड्विंशः ।

B 473 W 829 विवृद्ध्या एवं वर्धितस्य मूर्धाभिसमयस्य आत्मीभावगमनपर्यन्तलक्षणां निरूढिं वक्तुं प्रशंसयन्नाह—**चरन्नेव तावत्** इत्यादि । **स्पृहणीयास्ते** इति अनेन मूर्धाभिसमयलाभिनां W 830 दुर्लभतां कथयति । संजातप्रसादातिशयत्वात् इष्टाशंसनां कुर्वन् अधुना निरूढिमावेदयन्नाह— 5 **यैर्बोधिसत्त्वयानिकैः** इत्यादि । **उह्यमानान्** इति प्रेर्यमाणान् । सर्वदोषवैषम्याभावात् समे । पारिमे तीरे निर्वाणे । बुद्धत्वे इति यावत् । स्वपरोभयार्थसंपत्संपादकत्वेन यथाक्रमम् अभीप्सिताः परिचिन्तिताः परिगृहीता इति केचित् । त्रिसर्वज्ञतानिष्पादकत्वेन इत्यन्ये । **बुद्धधर्माणाम्** इत्युद्देशपदम् । **सर्वज्ञताप्रतिसंयुक्तधर्माणां स्वयंभूधर्माणाम् असंहार्यधर्माणाम** इति सर्वाकारज्ञतादित्रिसर्वज्ञताभेदेन निर्दिष्टम् । तदेवं त्रिसर्वज्ञताधर्माणामनुत्तरा परिपूरिः 10 कथिता स्यात् । सा च अपरित्यक्तसत्त्वार्थनिरूढिरित्याह—**न मे भगवन्** इत्यादि । **महाकरुणया समन्वागताः** इति । एवंभूताधिगमावस्थायामपि निर्वाणपातपरिहारार्थं महाकरुणासंमुखीकरणात् सत्त्वावतारणादिचित्तोत्पादाच्च महाकरुणया युक्ताः । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**तया महाकरुणया** इत्यादि । दर्शनभावनाविशेषाशैक्षमार्गाधि- W 831 गमभेदात् यथाक्रमं **वयं तीर्णा** इत्यादि पदचतुष्टयम् । एतदुक्तम्—सम्यगुपायकौशलबलेन 15 एवं निर्विकल्पाधिगमावस्थायां महाकरुणादिसंमुखीकरणभावेन अपरित्यक्तसत्त्वार्थलक्षणा यथोक्तसर्वाकारज्ञतादित्रिसर्वज्ञताधर्माणामनुत्तरा परिपूरिर्निरूढिरिति । तथा चोक्तम्—

B 474 **त्रिसर्वज्ञत्वधर्माणां परिपूरिरनुत्तरा ।**

**अपरित्यक्तसत्त्वार्था निरूढिरभिधीयते ॥** ३ ॥ इति ॥

निरूढ्या एवं निरूढस्य स्थिरीभावलक्षणां चित्तसंस्थितिं प्रतिपादयितुं प्रश्नयन्नाह— 20 **यस्तेषां भगवन्** इत्यादि । योऽनुमोदते कियत् स पुण्यं प्रसवतीति संबन्धः । प्रथमयानसंप्रस्थितानां चर्याप्रतिपन्नानामनिवर्तनीयानामेकजातिप्रतिबद्धानाम् इत्यनेन यथासंभवं पूर्वोक्तचतुर्विकल्पप्रतिपक्षयोः दर्शनभावनामार्गयोः चतुर्विधाधिगन्तृव्यपदेशात् चातुर्विध्यं ख्यापितमित्येके । लिङ्गविवृद्धिनिरूढिचित्तसंस्थितिस्वरूपावबोधभेदादित्यन्ये । अधिमुक्तिचर्याभूमौ प्रथमयानसंप्रस्थिताः । प्रमुदितादिसप्तभूमिषु चर्याप्रतिपन्नाः । अचलादिभूमिद्वितयेऽविनि- 25 वर्तनीयाः । दशम्यां भूमौ एकजातिप्रतिबद्धा इत्यपरे । चित्तसंस्थितिमावेदयन् प्रश्नपरिहारार्थ- W 832 माह—**स्यात् खलु पुनः** इत्यादि । **पलाग्रेण** इति पलप्रमाणेन । एतदुक्तम्—संभवत्प्रमाणस्य वस्तुनो योगिभिः इयत्तया पलप्रमाणेन परिमाणं प्रमातुं शक्यते इति न्यायात् चतुर्द्वीपादित्रिसाहस्रलोकधातुप्रमाणं गृह्यते, न तु अनुमोदनापुण्यप्रमाणम्, इत्यर्थान्तरव्याजेन प्रमाणातिक्रान्तपुण्यस्वरूपा समाधिलक्षणा चित्तसंस्थितिः कथितेति । तथा चोक्तम्—

30 **चतुर्द्वीपकसाहस्रद्विसाहस्रकोपमः ।**

**कृत्वा पुण्यबहुत्वेन समाधिः परिकीर्तितः ॥** ४ ॥ इति ॥

एतानि च लिङ्गादीनि यथाक्रमम् ऊष्मादिचतुर्निर्वेधभागीयस्वरूपाणि मूर्धाभिसमये वेदितव्यानि ॥

निर्वेधभागीयानन्तरं दर्शनमार्गः । तत्र चतुर्विधो विपक्षो ग्राह्यग्राहकविकल्पः सप्रतिपक्षो वक्तव्य इत्यादौ तावत् सकलप्रवृत्तिपक्षाधिष्ठानं प्रथमं ग्राह्यविकल्पमावेदयन्नाह—**माराधिष्ठितास्ते भगवन्** इत्यादि । माराधिष्ठिता मारपाक्षिका मारभवनच्युता इति 5 मृदुमध्याधिमात्रनिन्दाभिधानात् पदत्रयम् । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**मारभवनविध्वंसनकरा हि** इत्यादि । व्यतिरेकमुखेन निर्दिश्य अन्वयमुखेन तमेव विकल्पं कथयन्नाह—**अनुमोदितव्या भगवन्** इत्यादि । मायोपमभावनया द्वयाद्वयसंज्ञाविगतानां बोधिसत्त्वानामेवंविधचित्तोत्पादानुमोदनादौ प्रवृत्तिः कार्येत्यर्थः । साधूक्तत्वादनुवदन्नाह—**एवमेतत् कौशिक** इत्यादि । द्वितीयं निवृत्तिपक्षाधिष्ठानं ग्राह्यविकल्पं कथयन्नाह—**यैः** 10 **कौशिक कुलपुत्रैः** इत्यादि । **न विरागयिष्यन्ति** इति हेये वस्तुनि । निवृत्तिग्राह्यविकल्पबलादिति भावः । तथैव अविपरीतत्वेन प्रशंसयन्नाह—**एवमेतत् भगवन्** इत्यादि । एतदुक्तम्—अनुपलम्भोपलम्भस्वभावौ प्रवृत्तिनिवृत्तिपक्षौ यथाक्रममादानसंत्यागाकारेण ग्राह्यौ इति प्रवृत्तिनिवृत्तिपक्षाधिष्ठानौ ग्राह्यविकल्पौ वस्तुन्यप्रतिबद्धवृत्तित्वेन वितथप्रतिभासित्वात् अयथाविषयस्वरूपौ वक्ष्यमाणविषयभेदेन प्रत्येकं नवप्रकारौ विबन्धकत्वात् क्लेशवत् विपक्षौ 15 ज्ञेयाविति । तथा चोक्तम्—

> **प्रवृत्तौ च निवृत्तौ च प्रत्येकं तौ नवात्मकौ ।**
> **ग्राह्यौ विकल्पौ विज्ञेयावयथाविषयात्मकौ** ॥ ५ ॥ इति ॥

एवं ग्राह्यविकल्पद्वयं निर्दिश्य ग्राहकविकल्पद्वयं वक्तव्यम् इति प्रथमं द्रव्यसत्पृथग्जनपुरुषाधिष्ठानं ग्राहकविकल्पं कथयन्नाह—**एवं तैरनुमोदनासहगतैः** इत्यादि । तथैव 20 तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि तैः** इत्यादि । द्रव्यसन्नेव आत्मा ग्राहक इति विकल्पाभिनिवेशेन पृथग्जनैरनुमोदितानि कुशलमूलानि, यतस्तस्मात् सत्कारादिकं फलमुक्तम्, न त्वन्यत् बुद्धत्वादिकमित्यर्थः । ननु च अनात्मानः सर्वधर्मा इत्यपि पृथग्जनाः प्रतिपद्यन्ते, इत्यव्यापिनी प्रथमग्राहकविकल्पव्यवस्था । अधिमुक्तिमनस्कारः स तेषाम्, तत्त्वमनस्कारश्चेह विवक्षित इत्यसारम् । द्वितीयं प्रज्ञप्तिसदार्यपुद्गलाधिष्ठानं ग्राहकविकल्पं 25 वक्तुमाह—**यैरपि भगवन् छन्दमुत्पाद्य** इत्यादि । **सम्यक्संबोधेराहारका भविष्यन्ति** इति प्रज्ञप्तिसन्नेवात्मा ग्राहक इति विकल्पाभिनिवेशेन आर्याणामनुमोदनाचित्तोत्पादात् विवर्धमाना बोधेरनुत्तरायाः समुत्पादका मुख्यतो भविष्यन्तीत्यर्थः । धर्मताविरुद्धत्वादनुवदन्नाह—**एवमेतत् कौशिक** इत्यादि । मृदुमध्याधिमात्रानुमोदनाभेदादनुमोदितानि इत्यादि पदत्रयं वाच्यम् । ननु च आर्यस्याप्येवं भवति, अश्रौषमहं भिक्षवो रात्र्याः प्रत्यूषसमये शृगालस्य 30 प्राणिनो वाशितशब्दम्, तथाहं स तस्मिन् समयेऽनन्दितो नाम मृगराजोऽभूवम्, इत्यव्यापिनी द्वितीयग्राहकविकल्पव्यवस्था । सांव्यवहारिकमार्याणामेवंविधं वचनं न

B 475 W 833 W 834 B 476 W 835 W 836

पारमार्थिकमित्यसारम् । एतदुक्तम्—पृथग्जनार्यपुद्गलयोर्यथाक्रमं द्रव्यप्रज्ञप्तिसत्पुरुषाधिष्ठानौ
B 477 ग्राहकौ, इति द्वावेतौ ग्राहकविकल्पौ। यदा तद्विषयभावापन्नग्राह्यावर्थौ न तथा ग्राह्यरूपेण
भवतः, तदा न कस्यचित् तौ ग्राहकाविति। ग्राहकरूपेण अनयोर्विविक्तं रूपमिति
वितथप्रतिभासित्वात् अयथाविषयस्वरूपौ वक्ष्यमाणविषयभेदेन प्रत्येकं नवप्रकारौ विबन्ध-
5 कत्वात् विपक्षाविति। तथा चोक्तम्—

**द्रव्यप्रज्ञप्तिसत्सत्त्वविकल्पौ ग्राहकौ मतौ ।**
W 837 **पृथग्जनार्यभेदेन प्रत्येकं तौ नवात्मकौ ॥ ६ ॥**
**ग्राह्यौ चेन्न तथा स्तोऽर्थौ कस्य तौ ग्राहकौ मतौ ।**
**इति ग्राहकभावेन शून्यतालक्षणं तयोः ॥ ७ ॥** इति ॥

10 तत्र कथं विषयभेदेन प्रथमो ग्राह्यविकल्पो नवधेति प्रथमविकल्पार्थमाह—**कथं भगवन्** इत्यादि। कथमिति केन प्रकारेण । न मायोपमं चित्तं न माया नाप्यन्यो
W 838 धर्मस्तत्त्वेन कथंचिदभिसंबुध्यते इति प्रतिप्रश्नेन प्रतिपादयन्नाह—**तत्किं मन्यसे** इत्यादि ।
**यश्चात्यन्तविविक्तो धर्मः** इति । यो धर्मः स्वभावशून्यः, सोऽनुत्पन्नत्वात् अस्तितां
न प्रतिपद्यते ।

15 न च निर्विषयः साधुः प्रयोगो विद्यते नञः ।
विकल्पापाश्रयत्वे वा सांवृतः स्यान्न तात्त्विकः ॥

इति न्यायात् नास्तितां च न प्रतिपद्यते इत्यर्थः। पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह—
**न हि भगवन्** इत्यादि । विविक्तत्वादेव सर्वधर्माणां न हेतुफलभाव इत्याह—**यश्च धर्मोऽत्यन्तविविक्तः** इत्यादि । **आवाहको वा निर्वाहको वा** इति उत्पादको वा
20 नाशको वेत्यर्थः । अमुमेवार्थं विस्तारयन्नाह—**कथं च भगवन्** इत्यादि। तत्त्वतो नैव
बोध्यबोधकमित्युपसंहरन्नाह—**यदा भगवन्** इत्यादि। सुभाषितत्वात् स्वहस्तयन्नाह—**साधु**
B 478 **साधु** इत्यादि। किं तु संवृत्या सुविशुद्धात् कारणात् सुविशुद्धं फलमित्याह—**यत एव**
W 839 **सुभूते** इत्यादि। मायोपमत्वेन कार्यकारणयोरविपर्यस्तत्वादिति भावः। विविक्तता इत्यप्यभि-
निवेशो न कार्यः इत्याह—**सचेत् सुभूते बोधिसत्त्वः** इत्यादि ।

25 शून्यता सर्वदृष्टीनां प्रोक्ता निःसरणं जिनैः ।
येषां तु शून्यता दृष्टिस्तानसाध्यान् बभाषिरे ॥

मध्यमकशास्त्र—१३.८

इति न्यायात् विविक्तताभिनिवेशस्यापि विपर्यासरूपत्वात् नैव प्रज्ञापारमिता स्यात् ।
कथं तर्हि तामागम्य अभिसंबुध्यते इति चेदाह—**एवं खलु सुभूते** इत्यादि। एवमविचारैक-
30 रम्यत्वेन संवृतिरूपतया इति यावत्। अत एव परमार्थमधिकृत्याह—**नापि सुभूते प्रज्ञापारमिताम्**
इत्यादि। संवृत्या उपसंहरन्नाह—**अभिसंबुध्यते** च इत्यादि। **भाषितस्य** इति नाभिसंबुध्यतेऽभि-
W 840 संबुध्यते च, इत्यस्य। तथैवानुवदन्नाह—**एवमेतत्** इत्यादि। **दुष्करकारकः** इति संवृतिसत्या-

श्रयेणेति भावः । अत एव परमार्थसत्यमधिकृत्याह—**यथाहं भगवन्** इत्यादि । **भाषितस्य** इति दुष्करकारक इत्यस्य । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि भगवन्** इत्यादि । कर्तृकर्म-क्रियानुपलम्भदेशनायामनवसादादिना स्वभावविकल्पविरहात् सम्यक्प्रवृत्तत्वेन जिनजनन्यां चरतीत्याह—**सचेत् भगवन्** इत्यादि । द्वितीयविकल्पार्थमाह—**तद्यथापि नाम भगवन्** इत्यादि । अविकल्पत्वाद्भगवन् इत्यनेन गोत्रविकल्पनिरासो ज्ञापितः । तृतीयविकल्पार्थमाह— 5 **मायापुरुषस्य** इत्यादि । नैवं भवत्यनुत्तरा इत्यनेन प्रतिपत्तौ समुदागमविकल्पनिषेधः कृतः । चतुर्थविकल्पार्थमाह—**प्रतिभासस्य** इत्यादि । प्रतिभासदृष्टान्तेन आलम्बनविकल्पापोहो दर्शितः । पञ्चमविकल्पार्थमाह—**तथागतस्य कश्चित् प्रियो वा** इत्यादि । **अविकल्पत्वादेव भगवन्** इत्यनेन बोधिसत्त्वस्यापि तथागतप्रियाप्रियासंविद्यमानदृष्टान्तेन प्रतिपक्षविपक्ष-विकल्पापोहो दर्शितः । षष्ठविकल्पार्थमाह—**यथैव हि भगवन्** इत्यादि । **सर्वकल्प-** 10 **विकल्पप्रहीणः** इति स्वाधिगमविकल्पानुपलम्भो दर्शितः । सप्तमविकल्पार्थमाह—**तथागतेनार्हता** इत्यादि । तथागतनिर्मितोदाहरणेन निर्माणान्वयकर्तृविकल्पापोहो दर्शितः । अष्टमविकल्पार्थ-माह—**स निर्मितको यस्य** इत्यादि । अनेन च दृष्टान्तेन कारित्रविकल्पविवेको निवेदितः । नवमविकल्पार्थमाह—**दक्षिणेन पलगण्डेन** इत्यादि । स च दारुसंघातोऽविकल्प इत्यनेन क्रियासाफल्यविकल्पविरहो निगदितः । एतदुक्तम्—विविक्तेन विविक्तानवबोधस्वभावे 15 अचलादिभूमिप्रवेशेन नियतबुद्धगोत्रे मायोपमप्रतिपत्त्या दर्शनादिमार्गसमुदागमे प्रतिभास-मात्रेण अभ्रान्तज्ञानालम्बने गुणदोषदर्शनपूर्वकोपादेयहेयत्वेन प्रतिपक्षविपक्षे सर्वत्रगादित्वेन स्वाधिगमे हीनाप्रणीतत्वेन श्रावकादिभूमिदूरीकरणे यथाशयानुरूपनिर्माणेन सत्त्वार्थव्यापारे सम्यगुपायकौशलबलेन सर्वजननिर्वाणप्रतिष्ठापनक्रियाफले च निर्दोषतया सर्वथा उपादेय-त्वेन प्रवृत्तिः कार्या, इत्येवं प्रवृत्तिपक्षाधिष्ठानः प्रथमो ग्राह्यविकल्पो नवप्रकारो मूर्धाभि- 20 समये दर्शनमार्गप्रयोगावस्थायां बोधिसत्त्वानां प्रहेयः तत्तत्प्रतिपक्षावस्थाप्रतिपादनेन व्यतिरेकमुखेन प्रतिपादित इति । तथा चोक्तम्—

B 479 W 841 W 842 W 843 B 480

**एष स्वभावे गोत्रे च प्रतिपत्समुदागमे ।**
**ज्ञानस्यालम्बनाभ्रान्तौ प्रतिपक्षविपक्षयोः ॥ ८ ॥**

W 844

**स्वस्मिन्नधिगमे कर्तृतत्कारित्रक्रियाफले ।** 25
**प्रवृत्तिपक्षाधिष्ठानो विकल्पो नवधा मतः ॥ ९ ॥** इति ॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां
मायोपमपरिवर्तो नाम षड्विंशतितमः ॥



## २७ सारपरिवर्तः सप्तविंशः ।

B 481
W 845

कथं निवृत्तिपक्षाधिष्ठानो द्वितीयो ग्राह्यविकल्पो नवधा; इति प्रथमविकल्पार्थमाह—**सारे बतायम्** इत्यादि । प्रज्ञाकरुणयोः संसारनिर्वाणापातकारित्रत्वेन सकलाधिगमाधिपत्याद् यः प्रज्ञापारमितायां चरति, स सारे प्रधाने चरति इत्यनेन न्यूनताधिगमविकल्पो निषिद्धः ।
5 किं तु तत्रापि सारत्वाभिनिवेशो न कार्य इत्याह—**असारे बतायम्** इत्यादि । सारत्वावग्रहाभावादसारः । द्वितीयविकल्पार्थमाह—**नमस्कर्तव्यास्ते** इत्यादि । कल्याणमित्रादिसंपरिग्रहेण युक्ता ये प्रज्ञापारमितायां चरन्ति, ते नमस्करणीया इत्यनेन संपरिग्रहाभावविकल्पो निरस्तः । तृतीयविकल्पार्थमाह—**ये चेह गम्भीरायां प्रज्ञापारमितायाम्** इत्यादि । **न च तां**

W 846

**धर्मतां साक्षात्कुर्वन्ति** इत्यनेन प्रतिपत्तिविशेषज्ञापनात् प्रतिपत्तिवैकल्यविकल्पाभावो
10 दर्शितः । चतुर्थविकल्पार्थमाह—**अथ खल्वायुष्मान्** इत्यादि । **न साक्षात्कुर्वन्ति** इति यत् बोधिसत्त्वानां भूतकोटेरसाक्षात्करणम्, नैतद्दुष्करम्, अधिगमे स्वातन्त्र्यलाभादिति भावः । अतः परप्रत्ययगामित्वविकल्पो निरस्तः । पञ्चमविकल्पार्थमाह—**इदं तु देवपुत्राः** इत्यादि । **सत्त्वान् विनेष्यामः** इति मायोपमत्वेऽपि सर्वधर्माणां सत्त्वविनयार्थमव्यावृत्तिगमनयोगेन अन्ययानगमनाभावेन च अनुत्तरबोध्यधिगमप्रस्थानात् सर्वाकारज्ञतोद्देशापरिभ्रंशेन उद्देश-

B 482
W 847

15 निवृत्तिविकल्पविरहः सूचितः । षष्ठविकल्पार्थमाह—**आकाशं स देवपुत्राः** इत्यादि । तथैव तत्कस्य हेतोरित्याशङ्क्याह—**आकाशविविक्ततया** इत्यादि । **सत्त्वानां कृतशः संनाहं संनह्यन्ते** इति आकाशोपमनिखिलसत्त्वधातुविनयनार्थं संनहनेन अप्रदेशिकमार्गव्यापारकथनात् प्रादेशिककारित्रविकल्पविवेकोऽर्थात् कथितः । सप्तमविकल्पार्थमाह—**आकाशेन स** इत्यादि । सत्त्वानामाकाशस्वभावोपगमनज्ञापनात् अनेनाधिगमनानात्वविकल्पाभावो दर्शितः । अष्टम-

W 848

20 विकल्पार्थमाह—**अयं च संनाहः** इत्यादि । सत्त्वानामर्थाय संनहनेन प्रेक्षापूर्वकारित्वात् स्थानगमनाज्ञानविकल्पासंश्लेषो दर्शितः । नवमविकल्पार्थमाह—**सा च अत्यन्ततया** इत्यादि । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**सत्त्वविविक्ततया** इत्यादि । पारमार्थिकद्रव्यानुपलम्भात् रूपादीनां मायोपमता अनुगन्तव्या । **यावत्** इत्यनेन द्वादशायतनादिपरिग्रहः । तथागताद्यधिगमधर्माणामपि शून्यत्वात् सर्वधर्मविविक्तता । उपसंहरन्नाह—**एवं देवपुत्राः सर्वधर्म-**
25 **विविक्तता द्रष्टव्या** इति । एवमनुपलम्भदेशनायामनवसादात् **चरणम्** इत्याह । **एवं देवपुत्राः सर्वधर्मविविक्ततायाम्** इत्यादि । अनुत्रासे को हेतुरित्याह—**किं कारणम्** इत्यादि । कर्तृकर्मक्रियानुपलम्भात् परिहरति—**विविक्तत्वात्** इति । उपसंहरन्नाह—**अनेन भगवन्** इत्यादि । एतदुक्तम्—शून्यत्वादेव भेत्तृभीतिभेत्तव्यानामभावात् यतो न संसीदति, ततश्चरति मुख्यतो निर्याणस्वभावायां प्रज्ञापारमितायाम् । एवं च पृष्ठतो निर्याणविकल्पा-
30 पोहो दर्शितः स्यात् । एतदुक्तम्—संसारनिर्वाणान्यतरप्रपातित्वेन न्यूनताधिगमे कल्याणमित्रोपायकौशलविकलत्वेन संपरिग्रहाभावे समस्तज्ञेयावरणाप्रतिपक्षत्वेन प्रतिपद्वैकल्ये

B 483

तथागताद्युपदेशसापेक्षत्वेन परप्रत्ययगामित्वे सर्वसत्त्वाग्रतामहत्त्वाद्यप्रवृत्तत्वेन उद्देशनिवृत्तौ

क्लेशावरणप्रतिपक्षत्वेन प्रादेशिकमार्गव्यापारे सोपलम्भत्वे प्रथमफलाद्यधिगमनानात्वे सर्वाविद्यानुशयाप्रहीणत्वेन स्थानगमनाज्ञाने महायानसर्वसंग्राहकत्वेन सर्वाकारज्ञता-सर्वनिर्वाणपश्चादनुगमने च सदोषतया ग्राह्यत्वेन विनिवृत्तिः कार्या। इत्येवं निवृत्ति-पक्षाधिष्ठानः श्रावकप्रत्येकबुद्धसंतानोपादेयत्वसमुद्भवो द्वितीयो ग्राह्यविकल्पो बोधि-सत्त्वानां दर्शनमार्गे चित्तचैत्तप्रवृत्त्यवस्थायां प्रहेयः तत्तत्प्रतिपक्षावस्थाप्रतिपादनेन व्यति- 5 रेकमुखेन प्रतिपादित इति। तथा चोक्तम्—

**भवशान्तिप्रपातित्वान्न्यूनत्वेऽधिगमस्य च।**
**परिग्रहस्याभावे च वैकल्ये प्रतिपद्गते॥ १०॥**

**परप्रत्ययगामित्वे समुद्देशनिवर्तने।**
**प्रादेशिकत्वे नानात्वे स्थानप्रस्थानमोहयोः॥ ११॥** 10

**पृष्ठतो गमने चेति विकल्पोऽयं नवात्मकः।**
**निवृत्तिपक्षाधिष्ठानः श्रावकादिमनोभवः॥ १२॥** इति॥

कथं द्रव्यसत्पृथग्जनपुरुषाधिष्ठानः प्रथमो ग्राहकविकल्पो नवधा इति प्रथमविकल्पार्थ-माह—**नापि भगवन् कश्चित्** इत्यादि। ग्रहणमोक्षणविकल्पाभावादिति भावः। एतदेव स्पष्टयन्नाह—**तत्कस्य हेतोः** इत्यादि। द्वितीयविकल्पार्थमाह—**अपि तु खलु पुनः** इत्यादि। 15 **एवं चरति चरति प्रज्ञापारमितायाम्** इति सर्वधर्मानुपलम्भदेशनायाम् एवमनवसादादिना यश्चरति स मनसिकारविकल्पाभावात् सम्यक् चरति **जिनजनन्यामि**त्यर्थः। तृतीयविकल्पार्थ-माह—**एवं चरन्तं बोधिसत्त्वम्** इत्यादि। **एवं चरन्तं नमस्यन्ति** इति त्रैधातुकश्लेषविकल्प-विरहान्महानुभावत्वप्राप्त्या नमस्कुर्वन्ति। चतुर्थविकल्पार्थमाह—**येऽपि ते सुभूते अप्रमेयेषु** इत्यादि। **बुद्धचक्षुषा पश्यन्ति** इति स्थानविकल्पविवेकात् विशिष्टार्थोत्पादनाभिप्रायेण **निरूप-** 20 **यन्ति**। कार्यनिष्पादनाद**नुगृह्णन्ति**। भव्यतारूपेणावधारणात् **समन्वाहरन्ति**। तथागतानुग्रहा-देव प्रश्नयन्नाह—**ये च खलु पुनः** इत्यादि। पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह—**ये सुभूते** इत्यादि। एतदेव विस्तारयन्नाह—**तिष्ठन्तु** इत्यादि। पञ्चमविकल्पार्थमाह—**द्वाभ्याम्** इत्यादि। अपरित्यक्ता भवन्ति इत्यनेन अभावाभिनिवेशविकल्पो निषिद्धः। **सर्वधर्माश्चानेन शून्यतातो व्यवलोकिता भवन्ति**, इत्यनेन भावाभिनिवेशविकल्पश्च प्रतिक्षिप्तः। षष्ठविक- 25 ल्पार्थमाह—**अपराभ्यां सुभूते द्वाभ्याम्** इत्यादि। धर्मवस्तुप्रज्ञप्तिविकल्पो मया प्रहातव्य इत्युक्तार्थस्य निष्पादनात् **यथावादी तथाकारी च भवति**। अत एव च समन्वाह्रियते। सप्तमविकल्पार्थमाह—**एवं चरतः सुभूते** इत्यादि। यदुत **प्रज्ञापारमिताविहारेण** इति। सक्तिविकल्पप्रहाणकारित्वादस्य विहारस्येति भावः। एतदेव स्पष्टयन्नाह—**तत्कस्य हेतोः** इत्यादि। समाहितासमाहितभेदात् विहरन् **एवं चरन्** इति बोद्धव्यम्। प्रमुदितां भूमिमारभ्य 30 यावत् समन्तप्रभाबुद्धभूम्यधिगमलाभात् यथाक्रमं नाथो भविष्यसीत्याद्येकादशपदानि वाच्यानि। उपसंहरन्नाह—**एवं ते देवपुत्राः** इत्यादि। तथैव तत्कस्य हेतोः इत्याशङ्क्याह—

W 849 W 850 W 851 W 852 W 854 B 485

**एतेन हि सुभूते** इत्यादि । यस्मात् यथोक्तविहारेण विहरतो बोधिसत्त्वस्य बुद्धा भगवन्तो नामादिकीर्तनधर्मदेशनापूर्वकमुदानमुदीरयन्ति, तस्मादुत्साहं वर्धयिष्यन्तीत्यर्थः । एतदेव दृष्टान्तेन स्पष्टयन्नाह–**तद्यथापि नाम** इत्यादि । सर्वबोधिसत्त्वानामानन्त्यात् नामग्रहणाशक्यत्वात् अतिदिशन्नाह–**अपरेषाम्** इत्यादि । शाक्यमुनितथागतबुद्धक्षेत्रे प्रशंसनार्हा
5 बोधिसत्त्वा न विद्यन्ते इति चेत्, आह–**एवमेव सुभूते** इत्यादि । एतदुक्तम्–यथाहं स्वबुद्धक्षेत्रावस्थितबोधिसत्त्वोत्साहनाय अपरतथागतक्षेत्रावस्थितबोधिसत्त्वानां नामादिकीर्तनपरो धर्मं देशयामि, एवमेव तेऽक्षोभ्यादयोऽपि तथागता मद्बुद्धक्षेत्रावस्थितबोधिसत्त्वानां
W 855 नामादिकीर्तनपरा धर्मं देशयन्तीति । अष्टमविकल्पार्थमाह–**किं सर्वेषामेव** इत्यादि । **नो हीदम्** इति परिहारवचनं विवृण्वन्नाह–**न सुभूते** इत्यादि । **किं तर्हि सुभूते ये तेऽविनिवर्त-**
10 **नीयाः** इति । प्रतिपक्षविकल्पविगमात् येऽष्टम्यादिभूमौ अविनिवर्तनीयतां प्राप्ता इत्यर्थः ।
W 856 नवमविकल्पार्थमाह–**सन्ति भगवन् अविनिवर्तनीयान्** इत्यादि । विद्यन्ते इत्याह–**सन्ति सुभूते** इत्यादि । एतदेव ते पुनः कतम इत्याशङ्क्य प्रतिपादयन्नाह–**ये एतर्हि** इत्यादि । अक्षोभ्यस्येति वचनं बाहुल्येन तद्बुद्धक्षेत्रे परिशुद्धसंततीनामुत्पादात् । अन्यानप्यतिदिश-
B 486 न्नाह–**येऽपि ते सुभूते** इत्यादि । रत्नकेतुबोधिसत्त्वग्रहणं तत्समानजातीयबोधिसत्त्वोपलक्षणपरं
15 ज्ञेयम् । प्रतिविशिष्टकल्याणमित्रादिपरिग्रहबलेन अचलाया भूमेरपि प्राक् कथंचित् यथेच्छगमनव्याघातविल्पविरहात् ऋद्धिवशितां प्राप्ता येऽक्षोभ्यादिबुद्धक्षेत्रे बोधिसत्त्वा विहरन्ति, तेऽविनिवर्तनीयान् स्थापयित्वा नामादिकीर्तनविषया विद्यन्ते इत्यर्थः । एतदुक्तम्–यथावत् संवृत्या ग्रहणमोक्षणे तत्त्वतोऽमनस्कारेण मनस्करणे, धर्मतया त्रैधातुकोपश्लेषणे, शून्यतानवस्थानेन अनवस्थाने, अनभिनिवेशेन सर्वाभिनिवेशे, द्रव्यसद्भावेन सर्वधर्मप्रज्ञाप्तौ, तत्त्व-
20 ज्ञानासक्त्या अनभिनिवेशपूर्वकसक्तौ, समताभावनाप्रतिपक्षतया प्रतिपक्षे, सम्यगविज्ञातप्रज्ञापारमितत्वेन यथेच्छगमनव्याघाते च पारमार्थिकभावाभिनिवेशेन द्रव्यसन्नेव आत्मा ग्राहकः प्रवर्तते, इत्येवं पृथग्जनसंबन्धी प्रथमो ग्राहकविकल्पो नवप्रकारो बोधिसत्त्वानां दर्शनमार्गप्रयोगावस्थायां प्रहेयः, तत्प्रतिपक्षावस्थाप्रतिपादनेन व्यतिरेकमुखेन प्रतिपादित इति । तथा चोक्तम्—

25 **ग्राहकः प्रथमो ज्ञेयो ग्रहणप्रतिमोक्षणे ।**
**मनस्क्रियायां धातूनामुपश्लेषे त्रयस्य च ॥ १३ ॥**
**स्थाने चाभिनिवेशे च प्रज्ञप्तौ धर्मवस्तुनः ।**
**सक्तौ च प्रतिपक्षे च यथेच्छं च गतिक्षतौ ॥ १४ ॥** इति ॥

W 857 कथं प्रज्ञप्तिसत्पुरुषाधिष्ठानो द्वितीयो ग्राहकविकल्पो नवधेति प्रथमविकल्पार्थमाह–
30 **पुनरपरं सुभूते** इत्यादि । **अधिमुञ्चन्ति** इति सर्वसत्त्वाप्रताद्युद्देशगमनाभिप्रायेण अनुत्प-
B 487 त्तिकाः । शान्ता इति वा । सर्वधर्मान् मनसि कुर्वन्ति । न च तावत् प्रकर्षवतीमनुत्प-

१ W अभिनिवेश°.

त्तिकधर्मक्षान्तिमविनिवर्तनीयवशिताप्राप्तिं च अधिगता भवन्ति, इत्येवमुद्देशानिर्याणविकल्पाभावो दर्शितः । द्वितीयविकल्पार्थमाह—**येषां खलु पुनः** इत्यादि । **प्रहीणा तेषां श्रावकभूमिः प्रत्येकबुद्धभूमिश्च** इत्यनेन मार्गामार्गावधारणविकल्पाभावमाह । **बुद्धभूमिरेव तेषां प्रतिकाङ्क्षितव्या** इत्यनेनापि स्वमार्गावधारणविकल्पविरहो दर्शितः, अन्यथा विपर्याससद्भावेन बुद्धभूमेरसंभवात् । तृतीयविकल्पार्थमाह—**तेऽपि व्याकरिष्यन्तेऽनुत्तरायाम्** इत्यादि । 5 पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह—**येषां हि सुभूते** इत्यादि । **एवं प्रज्ञापारमितायां चरताम्** इति उत्पादनिरोधविकल्पविवेकेन अनुतिष्ठतामित्यर्थः । चतुर्थविकल्पार्थमाह—**पुनरपरं सुभूते** इत्यादि । **अविनिवर्तनीयतायां स्थास्यन्ति** इति ये बोधिसत्त्वाः काङ्क्षादिकमकृत्वा विस्तरेण श्रवणादिकं करिष्यन्ति, तेषां चान्तिके ब्रह्मचर्यचरणादिकमनुष्ठास्यन्ति, तेऽपि संयोगवियोगविकल्पविरहात् अविनिवर्तनीयत्वे स्थास्यन्तीत्यर्थः । पञ्चमविकल्पार्थमाह—**कः पुनर्वादो य** 10 **एनाम्** इत्यादि । रूपादिस्थानविकल्पानुपलम्भेन ये त्वधिमुच्य प्रज्ञापारमितां तथत्वाय च स्थित्वा बुद्धत्वनिमित्तं सत्त्वेभ्यो धर्मं देशयिष्यन्ति, ते नितरामविनिवर्तनीयत्वे स्थास्यन्तीति पूर्वेण संबन्धः । षष्ठविकल्पार्थमाह—**यदा भगवन् तथता** इत्यादि । **यत्सुभूते** इत्यादिना तद्वचनमनूद्य परिहरन्नाह—**न सुभूते तथताविनिर्मुक्तोऽन्यः** इत्यादि । धर्मधातुस्वभावत्वात् सर्वधर्माणां तथताव्यतिरिक्तान्यधर्मानुपलम्भे सति नैव कश्चित् परमार्थतस्तथतायां स्थास्यति, 15 संवृत्या पुनर्गोत्रविप्रणाशविकल्पविरहात् स्थास्यतीति भावः । परमार्थमेवाधिकृत्य स्पष्टयन्नाह—**तथैव तावत्** इत्यादि । सप्तमविकल्पार्थमाह—**न सुभूते तथता अनुत्तराम्** इत्यादि । तत्त्वतो न तथता, नान्यो वा धर्मो बोधिमभिसंबुध्यते । किं तु संवृत्या प्रार्थनाभावविकल्पविरहात् प्रार्थयितव्यवस्तूपलम्भेन अभिसंबुध्यते इति मतिः । अष्टमविकल्पार्थमाह—**न सुभूते तथता धर्मं देशयति** इति । तत्त्वतो न तथता धर्मं देशयति, अपि तु संवृत्या हेत्वभाव- 20 विकल्पविरहात् हेतुसद्भावेन देशयतीत्यभिप्रायः । नवमविकल्पार्थमाह—**सोऽपि सुभूते नोपलभ्यते यो धर्मो देश्येत** इति । प्रत्यर्थिकधर्मोपलम्भविकल्पाभावेन देश्यमानधर्मानुपलम्भ इत्यर्थः । एतदुक्तम्—श्रावकादिनियार्णत्वेन यथोक्तोद्देशानिर्याणे हिताहितप्राप्तिपरिहारत्वेन मार्गामार्गावधारणे संवृतिकार्यकारणभावेन उत्पादनिरोधे निरन्तरेतरप्रतिभासत्वेन समस्तवस्तुसंयोगवियोगे व्योमावस्थितशकुनिसदृशत्वेन रूपादिस्थाने, बोधिचित्तोत्पादादिद्वारेण 25 श्रावकादिगोत्रविनाशे तथताप्रतिविशिष्टधर्मताभावेन अभिलाषाभावे परमार्थसत्याश्रयेण हेत्वभावे अभ्यस्तमात्सर्यधर्मतया प्रत्यर्थिकमारादिवस्तूपलम्भे च तात्त्विकभावाभिनिवेशेन प्रज्ञप्तिसन्नेव आत्मा ग्राहकः प्रवर्तते, इत्येवमार्याणां संबन्धी द्वितीयो ग्राहकविकल्पो नवप्रकारो दर्शनमार्गचित्तचैत्तप्रवृत्त्यवस्थायां बोधिसत्त्वानां प्रहेयः तत्तत्प्रतिपक्षावस्थाप्रतिपादनेन व्यतिरेकमुखेनोक्तो भवति । तथा चोक्तम्— 30

**यथोद्देशमनिर्याणे मार्गामार्गावधारणे ।**
**सनिरोधे समुत्पादे वस्तुयोगवियोगयोः ॥ १५ ॥**

W 858 W 859 B 488 W 860 B 489

**स्थाने गोत्रस्य नाशे च प्रार्थनाहेत्वभावयोः ।**
**प्रत्यर्थिकोपलम्भे च विकल्पो ग्राहकोऽपरः ॥ १६ ॥** इति ॥

स्यात्—ग्राह्यविकल्पो न ग्राहकविकल्प इति चतुष्कोटिकम् । तत्र प्रथमा कोटिः [1]षड्विषयप्रतिभासा ग्राह्याकारा विज्ञप्तिः । द्वितीया तु एकक्षणिकी ग्राहकाकारा । तृतीया 5 सैव क्षणान्तरे । चतुर्थी तदाकारविनिर्मुक्ता प्रज्ञापारमितेति । स्यात्—गोत्रमेव न गोत्रविकल्प इति पश्चात्पादकः । यस्तावद्गोत्रविकल्पो गोत्रमपि तत्, तद्यथा प्रतिपक्षसमुदागमकाले गोत्रम् । स्यात्—गोत्रमेव न गोत्रविकल्पः, तद्यथा समुदागच्छद्गोत्रमिति । स्यात्—समुदागम-विकल्पो नालम्बनविकल्प इति पूर्वपादकः । यस्तावत् समुदागमविकल्पः आलम्बन-W 861 विकल्पोऽपि सः, तद्यथा समुदागच्छतः सम्यगालम्बने प्रयोगः । स्यात्—आलम्बन-10 विकल्प एव न समुदागमविकल्पः, तद्यथा अपरिनिष्पन्नमालम्बनमिति । अनया दिशा शेषोऽभ्यूह्यः । दर्शनमार्गे विपक्षं सप्रतिपक्षमेवं निर्दिश्य यत् महाबोधिनिष्पत्तये दर्शनमार्गो येन त्रिविधकारणेन सहित इष्यते, तदिदानीं वक्तव्यमिति महाबोधौ दर्शनादिमार्गसंदर्शनेन अन्येषां प्रतिष्ठापनं प्रथमं कारणं कथयन्नाह—**गम्भीरा भगवन्** इत्यादि । पूर्ववत् तत्कस्य B 490 हेतोः इत्याशङ्क्याह—**न च नाम भगवन्** इत्यादि । सर्वधर्मानुत्पादेऽप्यवलयनादिकमकृत्वा 15 ये अनुत्तरां बोधिं संवृत्या बोद्धुकामाः, ते दुष्करकारका इत्युत्साहप्रवेदनात् बोधौ दर्शनादिमार्गसंदर्शना अन्येषां प्रतिपादिता स्यात् । परमार्थसमाश्रयणे न किंचिद्दुष्करमित्याह—**यत् कौशिक एवम्** इत्यादि । सुभाषितत्वेन प्रशंसयन्नाह—**यद्यदेव आर्यसुभूतिः** इत्यादि । W 862 **न क्वचित् सज्जति** इति न क्वचिदभिनिविशते । स्वोक्तार्थं द्रढयन्नाह—**कच्चिदहम्** इत्यादि । धर्मस्य च अनुधर्ममिति यथाप्रणिहितस्य शून्यताधर्मस्य प्रतिपत्तिम् । साधूक्तमित्याह—W 863 20 **यत्खलु त्वम्** इत्यादि । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**यद्यदेव हि** इत्यादि । एतदेव कुतः इति तत्कस्य हेतोः इत्याशङ्क्याह—**सुभूतिर्हि कौशिक** इत्यादि । कामादिधातुत्रये प्रत्येकं मृदुमध्याधिमात्रक्लेशप्रहाणकारिणो दर्शनमार्गस्य शून्यतारूपेण दर्शितत्वात् यथाक्रमं प्रज्ञापारमितामपि तावन्नोपलभते इत्यारभ्य यावद्धर्ममेव तावन्नोपलभते इति नव पदानि वाच्यानि । सामान्येन सर्वधर्माणां कार्यकारणयोरनुपलम्भात् यथासंख्यं सर्वधर्मविविक्तविहारः, 25 सर्वधर्मानुपलम्भविहारश्च ग्राह्यः । यद्येवं बोधिसत्त्वैः समान एव श्रावकाणां विहार इति W 864 चेत्, आह—**यः खलु पुनः** इत्यादि । **तेषाम्** इति तथागतविहारव्यतिरिक्तानामन्येषाम् । **अनेन विहारेण विहर्तव्यम्** इति बोधिसत्त्वविहारानुशंसकथनेनैव महाबोधौ दर्शनादि-मार्गसंदर्शना अन्येषां निगदिता स्यात् ॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां
30 सारपरिवर्तो नाम सप्तविंशतितमः ॥

---

१ B यत् for षड्°.

## २८ अवकीर्णकुसुमपरिवर्तोऽष्टाविंशः ।

यथोक्तबोधिदर्शनादिमार्गसंदर्शनया संपन्नहेतुकैर्दर्शनमार्गाधिगमात् भिक्षुभिः कृता पूजेत्याह—**अथ खलु** इत्यादि । गृहीतमान्दारवपुष्पदेवपुत्रसंनिपातो भिक्षूणां पुष्पप्राप्तये पूर्वप्रणिधानबलात् इत्यवगन्तव्यम् । अधिगमसंप्रत्ययलाभात् उत्तरोत्तराभिवृद्ध्यर्थं प्रणिधानं च कृतवन्त इत्याह—**एवं च वाचमभाषन्त** इत्यादि । **अथ खलु भगवन्** इत्यादि व्याख्यातम् । 5 **विंशतिकल्पसहस्राणि** इति अपरिमितायुषो मनुष्यानारभ्य यावत् दशवर्षायुषो जायन्ते अयं शस्त्ररोगाभ्यां दुर्भिक्षेण च निर्गमादपकर्षः प्रथमोऽन्तरकल्पः । तेभ्यो दशवर्षायुष्केभ्यः क्रमेणोत्कर्षं गच्छन्तोऽशीतिवर्षसहस्रायुषो भवन्ति । पुनश्च तथैव आयुरपकर्षं प्रतिपद्यमाना दशवर्षायुषः, इत्येवमुत्कर्षापकर्षभेदेन अष्टादशान्तरकल्पाः, ततोऽपि दशवर्षायुष्केभ्य एव उत्कर्षं प्राप्नुवन्तः अशीतिवर्षसहस्रायुषः इत्ययमुत्कर्षो विंशतितमोऽन्तरकल्पः । तथा यावानेव अन्येषा- 10 मुत्कर्षणापकर्षणकालः, तावानेव प्रथमस्यान्तरकल्पस्यापकर्षकालः, पश्चिमस्योत्कर्षकाल इति समानकालाः सर्वे भवन्ति । एवमेकेनान्तरकल्पेन भाजनानां ध्वंसात् एकोनविंशत्या शून्यीभवनात् विंशतिमन्तरकल्पान् लोकः संवर्तते, विंशतिमन्तरकल्पान् संवृतस्तिष्ठति । तथा एकेनान्तरकल्पेन भाजनाभिनिर्वर्तनात् एकोनविंशत्या वासनात् विंशतिमन्तरकल्पान् लोको विवर्तते, विंशतिमन्तरकल्पान् विवृत्तस्तिष्ठति, एवमशीत्यन्तरकल्पसंख्यावच्छिन्नो महा- 15 कल्पोऽयम्, भद्रकल्पादितारकोपमस्तु कल्पो नैवं प्रणिधानकुशलमूलाधिपतेयत्वेन अतिदीर्घत्वात् । अतोऽपकर्ष एव काले यथोक्तान्तरकल्पप्रमाणेन कालस्य परिच्छेदात् विंशतिकल्पसहस्राणीत्युच्यते । बोधिनिमित्तार्थमेवान्येषां सम्यक् ग्रन्थार्थादिद्वारेण प्रज्ञापारमिताप्रत्यर्पणं द्वितीयं कारणं वक्तुमुपोद्घातयन्नाह—**ये हि केचित् आनन्द** इत्यादि । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**तथा हि मनुष्येषु** इत्यादि । **न प्रतिक्रोशन्ति** इत्यादि सप्त पदानि यथाक्रमं 20 सर्वाकारज्ञतादिसप्ताभिसमयविलोमनादिति वाच्यानि । **न विसंवादयिष्यति प्रणिधानम्** इति अनुत्तरबोधिविषये प्रवृत्तप्रणिधानम् । यद्यन्यथाप्रणिधिकरणात् न विसंवादयिष्यति, एवं तत्कुशलमूलं श्रावकप्रत्येकबुद्धत्वाय न दास्यति विपाकमित्यर्थः । उपोद्घातं कृत्वा इदानीं तथागतसंबन्धेन मृदुपरीन्दनार्थमाह—**तस्मात् तर्हि** इत्यादि । परीन्दामि प्रत्यर्पयामि । अनुपरीन्दामि पुनरपि प्रत्यर्पयामि । उद्ग्रहणाद्यर्थं प्रत्यर्पणादेव आर्यानन्दोऽस्या मातुः संगीतिकार 25 इति केचित् । धारणाद्यर्थमेव प्रत्यर्पणात् महावज्रधर एव संगीतकार इत्यपरे । तत्र विप्रणाशनम् अन्यथाकरणम् । उत्सर्जनं सर्वथा प्रत्याख्यानम् । **विस्मरणम्** अमनसिकरणम् । **पदसामन्तकः** पदैकदेशः । कायत्रयप्रापणात् यथाक्रमं माता जननी जनयित्री । तस्मादेव सर्वज्ञतायाः समुत्पादनात् आहारिका । मध्यपरीन्दनार्थमाह—**उद्ग्रहीतव्येयम्** इत्यादि । अधिमात्रपरीन्दनार्थमाह—**यथा तत्** इत्यादि । तत्तदिति कर्तव्यं वा इत्यादिना संबन्धः । **तया** 30 **हितैषितया** इति तथागतहितैषितया । बोधिसत्त्वसंबन्धेनापि मृदुपरीन्दनार्थमाह—**येऽपि ते** इत्यादि । मध्यपरीन्दनार्थमाह—**येऽपि केचित्** इत्यादि । अधिमात्रपरीन्दनार्थमाह—**एषा हि**

B 491 W 867 B 492 W 869 W 870 W 871 W 872 B 493 W 873

W 874 **आनन्द** इत्यादि। बोधिप्राप्तये च अव्यवहितं स्वतः प्रचुरतरप्रज्ञापारमिताभावनादिपुण्यलक्षणं तृतीयं कारणं कथयन्नाह—**सचेत् त्वमानन्द श्रावकयानिकानाम्** इत्यादि। **एकक्षणलव-मुहूर्तमपि** इति क्षणादिग्रहणं यथाक्रमं तीक्ष्णमध्यमृद्विन्द्रियपुद्गलज्ञापनार्थम्।

तत्राध्वपर्यन्तः क्षणः। विंशत्क्षणशतं पुनरस्तत्क्षणः। ते पुनः षष्टिर्लवः।
5 त्रिंशल्लवा मुहूर्तः।

सर्वान्त्योऽपि हि वर्णात्मा निमेषतुलितस्थितिः।

इति न्यायात् कथं क्षणेनैकेन धर्मं देशयतीति चेत्, उच्यते। देशकबोधिसत्त्वाधिपत्यात् श्रोतुः क्षणेनैकेन देशनाधर्मनिर्भासवतः प्रत्ययस्योत्पादात्, तेन तस्य धर्मो देशित इति व्यपदिश्यते। यथोक्तान्येवं त्रीणि सम्यक्संबोधिप्राप्तिकारणान्यवगन्तव्यानि। तथा चोक्तम्—

10 **बोधौ संदर्शनान्येषां तद्धेतोश्च परीन्दना।**
**तत्प्राप्त्यनन्तरो हेतुः पुण्यबाहुल्यलक्षणः** ॥ १७ ॥ इति ॥

W 875 यथानिर्दिष्टकारणसहितस्यैव दर्शनमार्गस्य विकल्पाप्रतिभासने सामर्थ्यमिति प्रति-पादयितुमक्षोभ्यतथागतसंदर्शनानाभासगमनोदाहरणं कथयन्नाह—**अथ खलु भगवान्** इत्यादि। तत्र सर्वगुणरत्नाकरत्वात् सागरोपमा, गम्भीरधर्मावबोधात् गम्भीरा, सर्वमार-
B 494 W 876 15 विषयातिक्रान्तत्वात् अक्षोभ्या। दार्ष्टान्तिकमर्थं वक्तुमाह—**एवमानन्द सर्वधर्माः** इति। चतुर्विधग्राह्यग्राहकविकल्पानां दर्शनमार्गेऽनाभाससंदर्शनार्थं सर्वधर्मा न चक्षुषोऽप्याभास-मागच्छन्ति इत्यादि पदचतुष्टयम्। एतदेव समर्थयितुमाह—**तत्कस्य हेतोः** इत्यादि। एतदेव कुत इति तत्कस्य हेतोः इत्याशङ्क्याह—**निरीहका हि** इत्यादि। एतदुक्तं भवति—कल्पितो धर्मोऽजानको यस्मादाकाशनिरीहकतया निरीहकः, तथा परतन्त्रोऽपश्यको यतो
20 मायापुरुषोपमत्वेन अचिन्त्यः, परिनिष्पन्नोऽपि न कार्यसमर्थः यस्मादसद्भावत्वेन अवेदक इति। उपसंहरन्नाह—**एवं चरन्तः** इत्यादि। का पुनरियं महाबोधिः यदर्थं यथोक्तकारणत्रय-
W 877 सहायो दर्शनमार्गोऽभिप्रेत इति महाबोधिं वक्तुमुपोद्घातयन्नाह—**सर्वशिक्षापरमपारमितां महाबोधिम्** इत्यादि। तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**एषा हि** इत्यादि। **उत्क्षिप्य पुनरेव निक्षिपेयुः** इत्यूर्ध्वमुन्नीय पुनरेव पातयेयुरित्यर्थः। न च तेषामित्यादि विनेयजन-
25 प्रतिभासापेक्षयोच्यते। न तु भगवतां विकल्पः समुदाचरति। तत्कस्य हेतोः इत्याशङ्क्याह—**अप्रमेया** इत्यादि। निर्विकल्पत्वादिति भावः। ननु अन्यदानादिशिक्षासद्भावे कस्मात् प्रज्ञापारमिताशिक्षा विधीयते इत्याह—**यावत्य आनन्द** इत्यादि। सामान्येनोपोद्घातं कृत्वा इदानीं महाबोधिस्वरूपं कथयन्नाह—**अक्षया हि** इत्यादि। क्षयाभावात् अक्षयज्ञानस्वभावा महाबोधिः प्रज्ञापारमिता। एतदेव तत्कस्य हेतोः इत्याशङ्क्य कथयन्नाह—**असत्त्वात्** इति।
B 495 30 क्षयाभावादित्यर्थः। एतदेव विस्तारयन्नाह—**आकाशस्य हि** इत्यादि। तत्र प्रत्यक्षेण स्वरूप-परिच्छेदः प्रमाणम्। अनुमानेन विविक्ततावबोधः क्षयः। आगमेन उभाभ्यां वा इयतावधारणं पर्यन्तः। अयमभिप्रायः—यथा आकाशस्य द्रव्याभावमात्रस्वभावत्वात् प्रमाणादि

ग्रहीतुं न शक्यते, तथा मातुरपीति । एतदेव स्पष्टयन्नाह-**तत्कस्य हेतोः** इत्यादि । ग्रन्थप्रमाणकथनेन प्रमाणादिकमाख्यातमिति चेत्, आह--**न मया आनन्द** इत्यादि । W 878 प्रज्ञापारमितायास्तत्त्वरूपाया इति भावः । कस्यास्तर्हि प्रमाणादिकं स्यादित्याह-**नामकायाः** इत्यादि । तत्र धर्माणां स्वभावाधिवचनं नामकायाः, तेषामेव विशेषाधिवचनं पदकायाः, तदुभयाश्रयाक्षराणि व्यञ्जनकायाः । नामादिस्वभावा प्रमाणबद्धा, सापि न 5 मुख्यतः प्रज्ञापारमितेत्यर्थः । तदेव स्पष्टयितुमाह- **तत्कस्य हेतोः** इत्यादि । एतदुक्तम्-परमार्थतस्ताथागतं ज्ञानं प्रज्ञापारमिता, तत्प्रतिपादनात् उपचारवृत्त्या ग्रन्थात्मिका प्रज्ञापारमिता, न तत्त्वत इति । अत एव तत्त्वमधिकृत्याह- **न हि प्रमाणवतीयम्** इत्यादि । तत्त्वरूपायाः प्रमाणाकथने कारणं पृच्छन्नाह-**केन पुनः** इत्यादि । W 879 परिहारार्थमाह-**अक्षयत्वात्** इत्यादि । **विविक्तत्वात्** इति उत्पादाभावेन अनुत्पादज्ञान- 10 स्वभावत्वादित्यर्थः । **विविक्तस्य** इति अनुत्पन्नस्य भावस्य शून्यता नोपलभ्यते, धर्मिणोऽसत्त्वादिति भावः । **अप्रमेयत्वात्** इति क्षयोत्पादाभावेन प्रमातुमशक्यत्वात् । त्रैयध्विकतथागतानां क्षयानुत्पादज्ञानप्रभावितत्वमित्याह-**येऽपि ते आनन्द** इत्यादि । तत्र क्षणिकानित्यतया **क्षीणा**, प्रबन्धानित्यतया **परिक्षीणा** । उपसंहरन्नाह-**तस्मात् तर्हि** इत्यादि । B 496 एतदुक्तम्-क्लेशज्ञेयावरणमलानामुत्पन्नानुत्पन्नत्वेन कल्पितानाम्- 15

धर्मधातुविनिर्मुक्तो यस्माद्धर्मो न विद्यते ।

इति धर्मधातुस्वभावानामाकाशस्येव निरोधोत्पादाभावात् एकानेकस्वभावकार्यकारणविचारणप्रमाणाद्युपपन्नभाववैधुर्यात् गगनकमलवद् यथाक्रमं मलानां क्षयोत्पादाभावात् अक्षयानुत्पादज्ञानात्मिका सर्वधर्माविपरीताधिगतिलक्षणा महाबोधिर्यथावत् प्रज्ञापारमिता धर्मकायोऽभिधीयते इति । तथा चोक्तम्— 20

**क्षयानुत्पादयोर्ज्ञाने मलानां बोधिरुच्यते ।**
**क्षयाभावादनुत्पादात्ते हि ज्ञेये यथाक्रमम्** ॥ १८ ॥ इति ॥ W 880

एवं च तत्त्वे निर्दिष्टे केचित् बहुलतरोपलम्भाभिनिवेशेन भावविनाशाभिसंधिना क्षीणे क्षीणमिति ज्ञानं क्षयज्ञानम्, अनागतभावानुत्पादाभिसंधिना च अनुत्पादज्ञानं वर्णयन्ति । इति महाबोधिस्वरूपं विप्रतिपत्तिस्थानत्वेन आहत्य[1] प्रतिपादयितुमाह-**गम्भीरमिदम्** 25 इत्यादि । तथैवानुवदन्नाह-**अक्षया** इत्यादि । **आकाशाक्षयत्वात् सर्वधर्मानुत्पाद** इति आकाशस्येव क्षयाभावात् धर्माणां चोत्पादाभावेन क्षयानुत्पादज्ञानात्मिका महाबोधिरक्षयेत्यर्थः । आदिकर्मिकावस्थायामुपलम्भाभिनिवेशेन भावनायां कस्मादीदृशी प्रज्ञापारमिता W 883 अधिगम्यते इत्याह-**कथं भगवन्** इत्यादि । नैष दोषः, यस्मात् प्रयोगकालमेवारभ्य विनाशोत्पादविगतान् मायोपमान् सर्वधर्मान् भावयतीत्याह-**रूपाक्षयत्वेन** इत्यादि । 30 प्रकारान्तरेणापि स्पष्टयन्नाह-**एवं खलु सुभूते** इत्यादि । तत्र पूर्वजन्मनि क्लेशावस्था इह B 497

---

१ W सत्यं for आहत्य.

अविद्या, तथा पुण्यादिकर्मावस्थाः संस्काराः, तथा इह जन्मनि प्रतिसंधिक्षणे पञ्च स्कन्धा विज्ञानम्। संधिचित्तात् परेण षडायतनोत्पादात् पूर्वं नामरूपम्। ततो यावदिन्द्रियविषयविज्ञानत्रिकसंनिपातो न भवति, तावत् षडायतनम्। यावत् वेदनात्रयकारणपरिच्छेदसमर्थो न भवति, तावत् त्रिकसंनिपातात् स्पर्शः। मैथुनरागात् प्राक् सुखाद्यनु-5 भवावस्था वेदना। विषयपर्येषणावस्थातः प्राक् कामगुणमैथुनरागसमुदाचारावस्था तृष्णा। विपयपर्येषणावस्था उपादानम्। विषयप्राप्तिहेतुपरिधावनोपार्जितपौनर्भविकं कर्म भवः। तेन कर्मणा आयत्यां पुनः प्रतिसंधिर्जातिः। ततः परेण यावद्वेदनावस्था सा जरामरणम्। इत्याद्यन्तयोर्द्वे द्वे मध्यस्थौ इति त्रिकाण्डो द्वादशाङ्गः प्रतीत्यसमुत्पादोऽस्य क्षयाभावादक्षयत्वेनेति पूर्ववत्। शाश्वतोच्छेदरहितत्वेन अन्तद्वयवर्जिता प्रतीत्यसमुत्पादव्यवलोकना। 10 **अनाद्यन्तमध्यं तम्** इति मायोपमत्वेन जन्मनाशस्थितिविरहितं तं प्रतीत्यसमुत्पादं व्यवलोकयति। इत्थंभूत एव प्रतीत्यसमुत्पादो ग्राह्य इत्याह—**एवं व्यवलोकयतः** इत्यादि। तत्र मनसिकारः अक्षयाभिनिर्हारः। उपायकौशल्यं प्रतीत्यसमुत्पादविचारणा। तदेव कथयन्नाह—**कथं प्रज्ञापारमितायाम्** इत्यादि। संवृतेस्तर्ह्युच्छेद इति चेत्, आह—**एवं खलु पुनः** इत्यादि। अहेतुकमिति संवृत्या हेतोर्विद्यमानत्वात्। **नित्यम्** इत्यादि। 15 तत्रोत्पादहेतोरसत्त्वात् नित्यः। उत्पन्नस्य विनाशाभावात् ध्रुवः। आविर्भावतिरोभावरूपेण अविवर्तनात् शाश्वतः। अवस्थान्तरप्राप्तिविरहादविपरिणामधर्मकः। कथं पुनरुपलभ्यमानरूपादीन् अक्षयाकारेण अभिमुखीकुर्यात् इत्याह—**यस्मिन् समये सुभूते** इत्यादि। रूपादिसर्वधर्मानुपलम्भेन सर्वात्मधर्मग्राहप्रहाणात् दर्शनमार्गव्यापारो द्योतितः स्यात्। यस्मादेवं सर्वधर्मादर्शनम्, अतो ये भावविनाशाभिसंधिना क्षीणे क्षीणमिति ज्ञानं क्षयज्ञानं भावानु-20 त्पादाभिसंधिना च अनुत्पन्नेऽनुत्पन्नमिति ज्ञानमनुत्पादज्ञानं वर्णयन्ति, तेषां क्षयानुत्पादवैकल्यात् एतज्ज्ञानं न घटते। तथा हि—उत्पन्नानुत्पन्नयोर्यथाक्रमं क्षयोत्पत्तिविघातलक्षणनिरोधेन अनिरुद्धायां परमार्थतस्तथतारूपायां प्रकृतौ सत्यां कतरद्विकल्पादिरूपमुत्पन्नं क्षीणम्, कतरच्च अनुत्पन्नमनुत्पत्तिधर्मकं जातं दर्शनमार्गबलेन वितथभावाभिनिवेशिनां वादिनाम्? यावता नैव किंचित्। तस्माद्यथोक्तमेव क्षयानुत्पादज्ञानं प्रतिपत्तव्यम्। 25 तथा चोक्तम्—

**प्रकृतावनिरुद्धायां दर्शनाख्येन वर्त्मना।**
**विकल्पजातं किं क्षीणं किं वानुत्पत्तिमागतम्** ॥ १९ ॥ इति ॥

अन्यथा तात्त्विकधर्मसत्त्वोपगमे भगवतः सर्वथा विकल्पक्लेशज्ञेयावरणप्रहाणं दुरुपपादं स्यात्। तथा हि—उदयव्ययशून्यत्वात् नास्त्यात्मेति विभावयन् आत्माभिनिवेशं परित्यज्य 30 तद्विविक्तस्व[1]भावं स्कन्धादिकं प्रतीत्यसमुत्पन्नमुदयव्ययधर्मकं समुपलभ्य नीलतद्धियोः सहोपलम्भनियमात् चित्तमात्रमेवेदं न बाह्योऽर्थोऽस्तीति मनसिकुर्वन् अपरित्यक्तग्राहकाकार-

B 498 W 884

---

१ B °स्वभावादिकं°

चित्ताभिनिवेशो बाह्यार्थाभिनिवेशं तिरस्कृत्य ग्राह्याभावे ग्राहकाभाव इति निध्यायन् तामपि ग्राहकाकारलक्षणां विज्ञप्तिमात्रतामवधूय अद्वयज्ञानमेव केवलं भावतो भावरूपमिति निश्चित्य तदपि प्रतीत्यसमुत्पन्नत्वात् मायावन्निःस्वभावं तत्त्वतोऽपगतैकान्तभावाभावादिपरामर्शरूपमिति भावयन् भावनाबलनिष्पत्तौ केषांचित् मणिरूप्यादिज्ञानवदुत्सारितसकलभ्रान्तिनिमित्ताया मायोपमात्मप्रतिभासधियो निर्विकल्पायाः कथंचित् प्रत्यात्मवेद्यायाः समुत्पादे 5 ज्ञेयावरणं सम्यग् योगी प्रजह्यात् । अन्यथा परैः सर्वदा आकाशस्य द्रव्याभावमात्ररूपधारणवत् अनाधेयानपनेयस्वरूपधारणाद्धर्माणां क्षणिकानां ज्ञानमात्ररूपाणां ज्ञेयलक्षणानां च यदि परमार्थतो विद्यमानता स्यात्, तदा प्रतिपक्षभावनया आकाशस्येव तेषां न किंचित् क्रियते । अतो भावाभिनिवेशविपर्यासाविनिवृत्त्या यद्भगवतः सर्वथा ज्ञेयावरणप्रहाणं धर्माणां च यत् सत्तोपगम्यते तत् परस्परविरुद्धार्थाभ्युपगमे विस्मयस्थानीयं भवेत् । 10 तथा चोक्तम्—

**सत्ता च नाम धर्माणां ज्ञेये चावरणक्षयः ।**
**कथ्यते यत्परैः शास्तुरत्र विस्मीयते मया ॥ २० ॥** इति ॥

यस्मादेवं भावाभिनिवेशेन मुक्तेरनुत्पत्तिः, अतोऽपवादसमारोपरूपमपनयनप्रक्षेपं कस्यचिद्धर्मस्याकृत्वा इदमेव प्रतीत्यसमुत्पन्नं संवृत्या तथ्यरूपं रूपादिनिःस्वभावादिरूपतो 15 निरूपणीयम्, एवं च मायागजेनापरमायागजपराजयवत् विपर्यासनिवृत्त्या तत्त्वदर्शी विमुच्यते इति प्रतिपत्तव्यम् । तथा चोक्तम्—

**नापनेयमतः किंचित्प्रक्षेप्तव्यं न किंचन ।**
**द्रष्टव्यं भूततो भूतं भूतदर्शी विमुच्यते ॥ २१ ॥** इति ॥

यथोक्ताविपर्यस्ततत्त्वभावनया सकलविपक्षधर्मातिक्रम इति माराणां वैमनस्यप्रति- 20 पादनेनाह—**यस्मिन् समये सुभूते** इत्यादि । पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह—**प्रज्ञापारमिताविहारेण हि** इत्यादि । उपसंहरन्नाह—**तस्मात्तर्हि** इत्यादि । ननु मुख्यतो दर्शनमार्गस्य महाबोधिकारणत्वात् कथं प्रज्ञापारमितायां चरितव्यमित्युक्तमिति तत्कस्य हेतोः इत्याशङ्क्य प्रकृतमेव दर्शनमार्गं विस्तरेण वक्तुमाह—**प्रज्ञापारमितायां हि** इत्यादि । प्रत्येकमेवं निर्दिश्य समुदायत्वेन वक्तुं पुनरप्याह—**प्रज्ञापारमितायाम्** इत्यादि । "षट्पारमितापूर्णाधिवचनमेतत् 25 यदुत प्रज्ञापारमिता" इति प्राग्वचनात् प्रज्ञापारमिताचर्ययैव षट् पारमिता भावनापरिपूरिं गच्छन्तीत्यर्थः । इह तु ग्रन्थसंक्षेपस्य अभिप्रेतत्वादुपलक्षणत्वेन प्रत्येकं दानादिपारमिताचर्ययापि षडेव पारमिता भावनानिष्पत्तिं प्रतिपद्यन्ते इत्यवगन्तव्यम् । तथा चोक्तं **पञ्चविंशतिसाहस्रिकायाम्**—"इह सुभूते बोधिसत्त्वस्य दानं ददतः सत्त्वेषु मैत्रं कायवाङ्मनस्कर्म प्रत्युपस्थितं भवति, एवं शीलपारमिता । तस्यैव प्रतिग्राहकाणामाक्रोशपरिभाषादि- 30 क्षमणेन क्षान्तिपारमिता । तस्यैव याचकाक्रोशपरिभाषादिभिर्दानोत्साहापरित्यागात् वीर्य-

B 499 W 885 B 500 W 886

१ W विवक्षितत्वात्.

पारमिता। तस्यैव च तद्दानं सर्वाकारज्ञतायां परिणामयतः श्रावकप्रत्येकबुद्धभूमिविक्षेप-
W 887 B 501 चित्ताभावेन ध्यानपारमिता। तस्यैव दानं ददतो मायाबुद्धिप्रत्युपस्थानेन कस्यचिदुपकारा-
पकारादर्शनात् प्रज्ञापारमिता" इति। एवं शीलं रक्षतो यावत् प्रज्ञां भावयतः प्रत्येकं
षट्पारमितापरिपूरिसंग्रहो यथासूत्रं वाच्यः। तस्मादेतदुक्तं भवति—दानादिषट्पारमितानां
5 प्रत्येकमेकैकभावे दानादौ यः परस्परं सर्वपारमितासंग्रहः, सोऽत्रैकक्षणिको मूर्धाभिसमये
दुःखधर्मज्ञानक्षान्तिसंगृहीतत्रिमण्डलविशुद्धिप्रभावितः षट्त्रिंशदाकारनिर्जातो दर्शनमार्गो-
ऽवसातव्यः इति। तथा चोक्तम्—

**एकैकस्यैव दानादौ तेषां यः संग्रहो मिथः।**
**स एकक्षणिकः क्षान्तिसंगृहीतोऽत्र दृक्पथे॥ २२॥** इति॥

10 एवंविधविकल्पानां प्रागेव प्रहाणसंभवात् कथमस्यां प्रकर्षपर्यन्ताधिगमावस्थायां
प्रहाणं निर्दिश्यते इति चेत्, नायं दोषः। यस्मात् सूक्ष्मगुह्यानुप्रवेशमहाभिज्ञाविबन्धक-
संमोहौ तद्बीजं च दशम्यां भूमौ प्रहीयते इत्यार्यसंधिनिर्मोचनादिसूत्रे पठ्यते। तस्मात् यथोक्त-
सत्रासनासंमोहनिदानसमुच्छेदेन निदानिनामेवंविधग्राह्यग्राहकचतुर्विकल्पानां प्रकर्षपर्यन्ता-
धिगमस्वभावत्वेन दशम्यां भूमौ प्रतिविद्धे मूर्धाभिसमये नियमात् प्रहाणं प्रतिपद्यते।
15 अन्यत्र तु कादाचित्कं प्रहाणमिति पूर्वाचार्याः। मन्दबुद्धीनां व्युत्पादनादनुग्रहाभिप्रायेण
यथानिर्दिष्टविकल्पानां विषयभेदात् प्रत्येकं नवधा भेदः कृतः। तीक्ष्णबुद्धीनामवज्ञानिरा-
करणाय नातिप्रभेदः, तथा प्रतिपक्षाणामित्यवगन्तव्यम्। अयं पुनरिह समासार्थः—
यथोदिता ग्राह्यग्राहकविकल्पाः सर्व एव विपर्याससमुत्थाः। स च विपर्यासोऽनादिकालीन-
भावाद्यभिनिवेशलक्षणः, तस्मात्तद्विपरीतालम्बनाकारतया तद्विरोधिनैःस्वाभाव्यज्ञानात्प्रहीयते
B 502 20 एव। तस्मिन् प्रहीणे तन्मूला ग्राह्यविकल्पादयः कथमवस्थानं लभेरन्निति। अस्मिंश्च
W 888 दर्शनमार्गे समुत्पन्ने कामरूपारूप्यधातुभेदेन प्रत्येकं चतुर्विकल्पनवप्रकारतया अष्टोत्तर-
शतग्राह्यग्राहकविकल्पप्रहाणेन तत्संगृहीतविकल्पजनकत्रासनाक्लेशाष्टोत्तरशतप्रहाणं प्रतीत्य-
समुत्पादधर्मतयोपलभ्य तत्र वशित्वार्थं तामेव पुनः पुनर्भावयतीत्याह—**सर्वाणि चोपाय-
कौशल्यानि** इत्यादि। स दर्शनमार्गप्राप्तो योगी क्लेशज्ञेयावरणभयाभावात् सिंहविजृम्भितं
25 नाम समाधिं समापद्य उत्तरकालमविद्याप्रत्ययाः संस्काराः इत्याद्यनुलोमं जरामरणनिरोधो
जातिनिरोधात् इत्यादि प्रतिलोमं प्रतीत्यसमुत्पादं निरूपयति। इदमत्रोपायकौशलं
प्रतिपत्तव्यम्। तथा चोक्तम्—

**स समाधिं समापद्य ततः सिंहविजृम्भितम्।**
**अनुलोमं विलोमं च प्रतीत्योत्पादमीक्षते॥ २३॥** इति॥

30 दर्शनमार्गमेवमभिधाय विपक्षप्रहाणादिकमाधारप्रतिपत्तिपूर्वकं सुबोधम् इत्याधारं
भावनामार्गं वक्तुमाह—**सर्वोपायकौशल्यानि सुभूते** इत्यादि। सर्वोपायकौशल्यमत्र भावनामार्गः।
स पुनर्नवानुपूर्वसमापत्तिसंगृहीतः, ताः पुनरवस्कन्दसमापत्तिसंगृहीता इत्यवगन्तव्यम्।

तस्मादेतदुक्तं भवति—प्रथमध्यानमारभ्य यावन्निरोधं गत्वा ततो निरोधमारभ्य यावत्प्रथमध्यानमागम्य एवमनुलोमप्रतिलोमक्रमद्वयेन चतुर्ध्यानचतुरारूप्यनिरोधलक्षणा नव समापत्तीर्गत्वा आगम्य पुनः प्रथमं ध्यानं समापद्य ततो व्युत्थाय निरोधम्, एवं यावत् नैवसंज्ञानासंज्ञायतनान्निरोधं समापद्य, ततो व्युत्थाय अनन्तरसमापत्तिमालम्ब्य कामावचरं विज्ञानं मर्यादारूपेणावस्थाप्य उपायकौशल्यबलेन व्युत्थाय तदेव विज्ञानमसमाहितमामुखीकृत्य, ततो निरोधं ततोऽसमाहितं ततो निरोधमेकं परित्यज्य नैवसंज्ञानासंज्ञायतनं ततोऽसमाहितम्, ततो द्वयं परित्यज्य आकिंचन्यायतनं ततोऽसमाहितम्, एवं यावदष्टौ परित्यज्य प्रथमं ध्यानं ततोऽसमाहितम्, इत्येकादिपरित्यागेन अनिरोधं यावत् विसदृशद्वारेण गच्छति, इत्यतुल्यगामवस्कन्दसमापत्तिं वशित्वलक्षणां भावनामार्गस्वभावां सर्वोपायकौशल्यात्मिकां परिग्रहीतुकामेन प्रज्ञापारमितायां चरितव्यमिति । तथा चोक्तम्—

**कामाप्तमवधीकृत्य विज्ञानमसमाहितम् ।**
**सनिरोधाः समापत्तीर्गत्वागम्य नव द्विधा ॥ २४ ॥**
**एकद्वित्रिचतुःपञ्चषट्सप्ताष्टव्यतिक्रमात् ।**
**अवस्कन्दसमापत्तिरानिरोधमतुल्यता ॥ २५ ॥** इति ॥

पञ्चविंशतिसाहस्रिकायाममुमेवार्थमधिकृत्य विस्तरेण "पुनरिह सुभूते बोधिसत्त्वो महासत्त्वो विविक्तं कामैर्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमध्यानमुपसंपद्य विहरति" इत्याद्यभिधानात् न संदेहः कार्यः । यस्त्वाह—

गत्वागम्य द्विधा भूमीरष्टौ श्लिष्टैकलङ्घिताः ।
व्युत्क्रान्तकसमापत्तिर्विसभागतृतीयगा ॥

इति वचनात् कथमेवमवस्कन्दसमापत्तिरिति । किं खलु वायसस्य पायसेन सालक्षण्यम्? अन्यदेवेदं प्रस्थानम् । यस्मात् इत्थंभूतोपायकौशलवतां बोधिसत्त्वानामसंख्येयकल्पकोटिनियुतशतसहस्रप्रस्थानापरिमितबुद्धपर्युपासनेन हेतुमहत्त्वेन भावनामार्गस्य प्रतिविशिष्टता स्यात् इत्यदोषः । तथागतानुस्मरणपूर्वकं भावनामार्गालोचनं विधेयमित्याह—**यस्मिन् समये सुभूते** इत्यादि । **दिवसस्यात्ययेन** इति दिवसैकपर्यवसानेनाप्यन्तशोऽच्छटासंघातमात्रकमित्यर्थः । भावनामार्गाभ्यासस्य प्रचुरविचित्रानुशंसपरिदीपनार्थमाह—**यश्च सुभूते औपलम्भिकः** इत्यादि । **प्रज्ञापारमितामभिनिर्हरेत्** इति भावनामार्गमुत्पादयेत् । गतिप्रश्नपरिहारभेदेन पुनरप्यनुशंसं कथयन्नाह—**तथागतसमन्वाहृतस्य** हि इत्यादि । **का गतिः** इति कीदृशी सभागता? नान्या गतिरिति, अपि तु सम्यक्संबोधिगतिः । **इमेऽपि सुभूते गुणा** इति, इमेऽप्यनुशंसा इति बहुपुण्यप्रसवनादिगुणाः, तथागतसमन्वाहारादयोऽनुशंसाः ॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायाम्
अवकीर्णकुसुमपरिवर्तो नामाष्टाविंशतितमः ॥



## २९ अनुगमपरिवर्त एकोनत्रिंशः ।

B 505 W 893 भावनामार्गमेवमभिधाय तत्र प्रहेयश्चतुर्विधो ग्राह्यग्राहकविकल्पः विपक्षप्रतिपक्ष-प्रतिपादनपरत्वेन वक्तव्य इत्युपोद्घातयन्नाह—**पुनरपरम्** इत्यादि । तत्र च प्रथमो ग्राह्य-विकल्पो विषयभेदान्नवधेति प्रथमविकल्पार्थमाह—**सर्वधर्मासङ्गतः प्रज्ञापारमितानुगन्तव्या** 5 इति । सर्वधर्मसंक्षेपविकल्पप्रहाणार्थं सर्वधर्मानभिनिवेशात् भावनामार्गो भावयितव्यः । एवमुत्तरत्र विकल्पाधिकारे प्रज्ञापारमितार्थो भावनामार्गार्थ इत्यवगन्तव्यम् । द्वितीयविकल्पार्थ-माह—**सर्वधर्मासंभेदतः** इति । धर्मविस्तरविकल्पप्रहाणार्थं सर्वधर्माणां धर्मधातुरूपेणा-संभेदात् एकरूपत्वात् । तृतीयविकल्पार्थमाह—**सर्वधर्मासंभवतः** इति तथागतसानाथ्या-भावविकल्पप्रहाणार्थं सर्वधर्माणां तत्त्वेनानुत्पादात् । चतुर्थविकल्पार्थमाह—**सर्वधर्मा निर्वि-** W 894 10 **कारसमा** इति । प्रयोगमार्गगुणाभावविकल्पप्रहाणार्थं सर्वधर्माणां धर्मधातुना निर्विकारेण तुल्यत्वात् । पञ्चमविकल्पार्थमाह—**सर्वधर्माणामनात्माविज्ञप्तितः प्रज्ञानुबोधनतः** इति । दर्शनमार्गगुणाभावविकल्पप्रहाणार्थं सर्वधर्माणामनात्मरूपेण अविज्ञप्तिरूपमिति प्रज्ञया अवबोधात् । षष्ठविकल्पार्थमाह—**सर्वधर्माश्च नाममात्रेण व्यवहारमात्रेणाभिलप्यन्ते** इति । भावनामार्गगुणाभावविकल्पप्रहाणार्थमन्तर्जल्पबहिर्जल्पमात्रेण सर्वधर्माणां संवृत्या अभि-B 506 15 लपनात्, बहिर्जल्पे तु कस्यचिदभिनिवेश इत्याह—**व्यवहारश्च** इत्यादि । सप्तमविकल्पार्थ-माह—**सर्वधर्मा अव्यवहाराः** इत्यादि । प्रयोगमार्गविकल्पप्रहाणार्थं सर्वधर्माणां मायोपमत्वेन श्रुतचिन्तालौकिकलोकोत्तरज्ञानैर्यथाक्रममभिलपितुमशक्यत्वात् अव्यवहारा अव्याहारा अव्यव-हृताव्याहृतत्वेन । अष्टमविकल्पार्थमाह- **सर्वधर्माप्रमाणतः** इति । दर्शनमार्गविकल्पप्रहाणार्थं W 895 धर्मधातुरूपेण सर्वधर्माणामप्रमाणत्वात् । तदेव स्पष्टयन्नाह—**रूपाप्रमाणतः** इत्यादि । नवम-20 विकल्पार्थमाह—**सर्वधर्मानिमित्ततः** इति । भावनामार्गविकल्पप्रहाणार्थं सर्वधर्माणां शून्यत्वेन अनिमित्तत्वात् । एतदुक्तं स्यात्—संक्षिप्तरुचिसत्त्वानुग्रहेण धर्मसंक्षेपे विस्तररुचिसत्त्वानु-कम्पया धर्मविस्तरे यथाविहितार्थाननुष्ठानेन बुद्धसानाथ्यापरिग्रहे समुत्पन्ननिरुद्धत्वेन प्रयोग-मार्गगुणाभावे सम्यगुत्पत्तिवैधुर्यात् दर्शनमार्गगुणाभावे अनागतासत्त्वेन भावनामार्गगुणाभावे शान्तत्वादिना निर्वाणप्रयोगमार्गे शून्यताभिनिर्हारत्वेन दर्शनमार्गे नैःस्वाभाव्यभावकत्वेन 25 भावनामार्गे च मायोपमतया प्रवृत्तिर्मया कार्या, इत्येवं प्रवृत्तिपक्षाधिष्ठानः प्रथमो ग्राह्य-विकल्पो नवप्रकारो भावनामार्गप्रयोगावस्थायां बोधिसत्त्वानां प्रहेयः तत्तत्प्रतिपक्षावस्थाप्रति-पादनेन व्यतिरेकमुखेनोक्त इति । तथा चोक्तम्—

**संक्षेपे विस्तरे बुद्धैः सनाथ्येनापरिग्रहे ।**<br>
**त्रैकालिके गुणाभावे श्रेयसस्त्रिविधे पथि ॥ २६ ॥**<br>
30 **एको ग्राह्यविकल्पोऽयं प्रयोगाकारगोचरः ।** इति ॥

प्रथममेवं निर्दिश्य द्वितीयो ग्राह्यविकल्पो नवप्रकारो वक्तव्य इति प्रथमविकल्पार्थ-B 507 माह—**सर्वधर्मनिर्वेधतः** इति । बोधिचित्तानुत्पादविकल्पापनोदार्थं सर्वधर्माणां धर्मधातु-

रूपेणाधिगमात् । द्वितीयविकल्पार्थमाह—**सर्वधर्मप्रकृतिपरिशुद्धितः** इति । बोधिमण्डामनसिकारविकल्पापनोदार्थं सर्वधर्माणां स्वभावविशुद्धिपरिज्ञानात् । तृतीयविकल्पार्थमाह—**सर्वधर्मावचनतः** इति । श्रावकयानमनसिकारविकल्पापनोदार्थं सर्वधर्माणां वाक्पथातिक्रान्तत्वात्[1] चतुर्थविकल्पार्थमाह—**सर्वधर्माणामनिरोधतः प्रहाणसमतया** इति । प्रत्येकबुद्धयानमनसिकारविकल्पापनोदार्थं सर्वधर्माणामुत्पादाभावेनानिरोधात् प्रहाणतुल्यत्वेन । पञ्चमविकल्पार्थमाह— **सर्वधर्माणां निर्वाणप्राप्तितः** इति । सम्यक्संबोधेरमनसिकारविकल्पापनोदार्थं तथतासमतया सर्वधर्माणां निर्वाणाधिगमात् । षष्ठविकल्पार्थमाह—**सर्वधर्माः** इत्यादि । भावनाविकल्पापनोदार्थमतीतानागताध्वनोरसत्त्वात् यथाक्रमं नागच्छन्ति न गच्छन्ति, तस्मादजानानाः सन्तो धर्मा वर्तमाने नोत्पन्नाः, धर्मधातुरिवात्यन्तानुत्पादात् । सप्तमविकल्पार्थमाह-**आत्मपरादर्शनतः** इति । अभावनाविकल्पापनोदार्थं स्वपरानुपलम्भात् । अष्टमविकल्पार्थमाह—**सर्वधर्माः** इत्यादि । नैवभावनानाभावनाविकल्पापनोदार्थमुत्पादादिदोषाभावात् आर्याः, भावनार्हात् अर्हन्तो यस्मात् मायोपमत्वेन स्वभावविशुद्धत्वात् । नवमविकल्पार्थमाह—**अपहृतभाराः** इति । अयथार्थविकल्पापनोदार्थं क्लेशज्ञेयावरणभाराभावात् अपहृतभारत्वेन । एतदुक्तं भवति—कल्याणमित्रादिवैकल्यात् बोधिचित्तानुत्पादे विशिष्टबुद्धालम्बनपुण्याभावात् बोधिमण्डामनस्कारे श्रावकगोत्रत्वात् तद्यानमनस्करणे प्रत्येकबुद्धगोत्रत्वात् तद्यानामुखीकरणे प्रज्ञापारमिताप्रतिपत्तिवैधुर्यात् सम्यक्संबोध्यमनस्करणे सोपलम्भत्वेन भावनायां निरुपलम्भवत्त्वेन अभावनायामनुपलम्भानुपलम्भत्वात् नभावनानाभावने विपरीताभिनिवेशात्, अयथार्थत्वे च भावाद्यभिनिवेशात् दुष्टत्वेन निवृत्तिर्मया कार्या, इत्येवं निवृत्तिपक्षाधिष्ठानो द्वितीयो ग्राह्यविकल्पो नवप्रकारो भावनामार्गचित्तचैत्तप्रवृत्त्यवस्थायां बोधिसत्त्वानां प्रहेयः तत्त्वप्रतिपक्षावस्थाप्रतिपादनेन व्यतिरेकमुखेनोक्त इति । तथा चोक्तम्—

**द्वितीयश्चित्तचैत्तानां प्रवृत्तिविषयो मतः ॥ २७ ॥**
**अनुत्पादस्तु चित्तस्य बोधिमण्डामनस्क्रिया ।**
**हीनयानमनस्कारौ संबोधेरमनस्कृतिः ॥ २८ ॥**
**भावनेऽभावने चैव तद्विपर्यय एव च ।**
**अयथार्थश्च विज्ञेयो विकल्पो भावनापथे ॥ २९ ॥** इति ॥

द्वितीयमेवं ग्राह्यविकल्पं निर्दिश्य प्रथमग्राहकविकल्पो नवप्रकारो वक्तव्य इति प्रथमविकल्पार्थमाह—**सर्वधर्मादेशाप्रदेशतः** इति । सत्त्वप्रज्ञप्तिविकल्पनिरासार्थं सर्वधर्माणां प्रकृत्या धर्मधातुस्वभावत्वेन सामान्यविशिष्टदेशविविक्तत्वात् । तदेव स्पष्टयन् तत्कस्य हेतोः इत्याशङ्क्याह—**रूपं हि** इत्यादि । **प्रकृतिस्वभावतः** इति शून्यताप्रकृतित्वेन सामान्यविशेषदेशविविक्तस्वभावत्वात् । द्वितीयविकल्पार्थमाह—**सर्वधर्मनिरोधप्रह्लादनत्वात्** इति धर्मप्रज्ञप्तिविकल्पनिरासार्थं सर्वधर्माणां निरोधस्य शून्यतोरुकरुणाद्यप्रमाणगुणगर्भत्वेन हर्षकरणात् ।

[1] W वाक्यार्थातिक्रान्तत्वात्.

तृतीयविकल्पार्थमाह–अरत्यविरतितः इति। अशून्यत्वविकल्पनिरासार्थं सर्वधर्मेषु मायोपमत्वेन अभिनिवेशानभिनिवेशवियोगात्। चतुर्थविकल्पार्थमाह–**अरक्ताविरक्ततया** इति। सक्ति-विकल्पनिरासार्थं सर्वधर्माणां धर्मधातुस्वभावत्वेन रागारागविविक्तत्वात्। तदेव कथयितुं तत्कस्य हेतोः इत्याशङ्क्याह–**रूपं हि** इत्यादि। **सतत्त्वेन** इति। तत्त्वपर्याय एव सतत्त्व-5 शब्दो द्रष्टव्यः। पञ्चमविकल्पार्थमाह–**प्रकृतिपरिशुद्धत्वात्** इति। धर्मप्रविचयविकल्प-निरासार्थं सर्वधर्माणां स्वभावानुत्पन्नत्वेन परिशुद्धत्वात्। षष्ठविकल्पार्थमाह–**सर्वधर्माः** इत्यादि। वस्तूद्देशविकल्पनिरासार्थं मायोपमत्वेन सङ्गासङ्गविगमादसक्तत्वेन सर्वधर्माणाम्। सप्तमविकल्पार्थमाह–**बोधिः** इत्यादि। यानत्रितयनिर्याणविकल्पनिरासार्थम्—

धर्मधातुविनिर्मुक्तो यस्माद्धर्मो न विद्यते।

10 इति बुद्धज्ञानावबोधनतया सर्वधर्माणां बोधिस्वभावत्वेन। अष्टमविकल्पार्थमाह–**सर्व-धर्मशून्यानिमित्ततः** इत्यादि। दक्षिणाशुद्धिविकल्पनिरासार्थम्। **सर्वधर्माणां त्रिविमोक्ष-मुखस्वभावत्वेन**। नवमविकल्पार्थमाह–**सर्वधर्मभैषज्यम्** इत्यादि चर्याविकोपनविकल्पनिरा-सार्थम्। मैत्रीस्वरूपतया द्वेषादिदोषप्रशमनेन सर्वधर्माणां भैषज्यस्वाभाव्यात्। एतदुक्तम्— द्रव्यसदनुपपत्त्या सत्त्वप्रज्ञप्तौ प्रतिभासमात्रत्वात् धर्मप्रज्ञप्तौ सर्वत्रगत्वात् सर्वाकारज्ञतादि-15 धर्माशून्यत्वे सर्वथा अभिनिवेशाप्रहाणात् धर्मसक्तौ निःस्वभावावबोधेन धर्मप्रविचये समुद्देशाकरणेन वस्तूद्देशकरणे रूपाद्युपलम्भत्वात् यानत्रयनिर्याणे सम्यगप्रतिपन्नत्वेन दक्षिणाशुद्धौ दानाद्युपलम्भप्रतिपत्त्या चर्याविकोपने च द्रव्यसन्नेव आत्मा ग्राहक इत्येवं द्रव्यसत्पुरुषाधिष्ठानः प्रथमो ग्राहकविकल्पो नवप्रकारो बोधिसत्त्वानां भावनामार्गप्रयोगा-वस्थायां प्रहेयः तत्तत्प्रतिपक्षावस्थाप्रतिपादनेन व्यतिरेकमुखेनोक्त इति। तथा चोक्तम्—

20 **ग्राहकः प्रथमो ज्ञेयः सत्त्वप्रज्ञप्तिगोचरः।**
**धर्मप्रज्ञप्त्यशून्यत्वे सक्तिप्रविचयात्मकः॥ ३०॥**
**कृतेन वस्तुनो यानत्रितये च स कीर्तितः।**
**दक्षिणाया अशुद्धौ च चर्यायाश्च विकोपने॥ ३१॥** इति॥

प्रथममेवं ग्राहकविकल्पं निर्दिश्य द्वितीयो ग्राहकविकल्पो नवप्रकारो वक्तव्य इति 25 प्रथमविकल्पार्थमाह–**सर्वधर्मा मैत्रीविहारिणः** इत्यादि। सर्वाकारज्ञतावरणसंमोहविकल्पा-पनयनार्थं सर्वधर्माणां चतुर्ब्रह्मविहारस्वाभाव्यात्। द्वितीयविकल्पार्थमाह–**सर्वधर्मा ब्रह्मभूताः** इत्यादि। मार्गज्ञतावरणसंमोहविकल्पापनयनार्थं सर्वदोषाणामहेतुत्वेन अनुत्पादकत्वात् सर्वधर्माणां निर्वाणरूपत्वेन। तृतीयविकल्पार्थमाह–**सर्वधर्माणाम्** इत्यादि। सर्वज्ञतावरण-संमोहविकल्पापनयनार्थं सर्वभावानां प्रार्थनाप्रतिघविविक्तत्वेन। चतुर्थविकल्पार्थमाह–30 **समुद्रापर्यन्ततया** इति। सर्वशान्तमार्गसंमोहविकल्पापनयनार्थं सर्वधर्माणां दशबलादि-गुणरत्नहेतुत्वेन समुद्रसमत्वात् समुद्रापर्यन्तत्वेन। पञ्चमविकल्पार्थमाह–**गगनापर्यन्ततया** इति। तथतादिसंयोगवियोगसंमोहविकल्पापनयनार्थं सर्वधर्माणां शून्यत्वेन गगनसमत्वात्

गगनापर्यन्ततया। षष्ठविकल्पार्थमाह—**मेरुविचित्रतया** इति। असमत्वसंमोहविकल्पापनयनार्थं सर्वानिष्टोपनिपाताक्षोभ्यत्वेन मेरुसमत्वात्, सर्वधर्माणां मेरुविचित्रत्वात्। सप्तमविकल्पार्थमाह—**रूपापर्यन्ततया** इति। दुःखादिसंमोहविकल्पापनयनार्थं धर्मधातुस्वरूपत्वात् रूपादीनामपर्यन्तत्वेन। अष्टमविकल्पार्थमाह—**सूर्यरश्मि०** इत्यादि। क्लेशप्रकृतिसंमोहविकल्पापनयनार्थं प्रकृतिप्रभास्वरत्वेन सूर्यमण्डलरश्म्युत्पादसमत्वात् सर्वधर्माणां सूर्यरश्मिमण्डलापर्यन्तावभासनतया। नवमविकल्पार्थमाह—**सर्वशब्दापर्यन्ततया** इति। अद्वयसंमोहविकल्पापनयनार्थं नाममात्रस्वभावेन सर्वशब्दापर्यन्तसमत्वात् सर्वधर्माणां सर्वशब्दापर्यन्ततया प्रज्ञापारमिता अनुगन्तव्या। एतदुक्तम्—सर्वाकारापरिज्ञानेन सर्वाकारज्ञतावरणसंमोहे, सर्वमार्गापरिज्ञानेन मार्गज्ञतावरणसंमोहे, सर्ववस्त्वपरिज्ञानेन सर्वज्ञतावरणसंमोहे प्रज्ञापारमितापरिज्ञानेन सर्वशान्तमार्गसंमोहे, तथताज्ञेयरूपाद्यपरिज्ञानेन तथतादिसंयोगवियोगसंमोहे, मारादिस्वरूपापरिज्ञानेन असमत्वसंमोहे, यथारुतार्थग्राहित्वेन दुःखादिसत्यसंमोहे, रागादिस्वभावापरिज्ञानेन क्लेशप्रकृतिसंमोहे, ग्राह्यग्राहकलक्षणापरिज्ञानेन अद्वयसंमोहे च सत्त्वप्रज्ञप्तितद्व्यवस्थापनप्रतिभासमानहेतुविषयः प्रज्ञप्तिसन्नेवात्मा ग्राहक इति प्रज्ञप्तिसत्पुरुषाधिष्ठानो द्वितीयो ग्राहकविकल्पो नवप्रकारो भावनामार्गचित्तचैत्तप्रवृत्त्यवस्थायां बोधिसत्त्वानां प्रहेयः तत्तत्प्रतिपक्षावस्थाप्रतिपादनेन व्यतिरेकमुखेनोक्त इति। तथा चोक्तम्—

**सत्त्वप्रज्ञप्तितद्धेतुविषयो नवधापरः।**
**भावनामार्गसंबुद्धो विपक्षस्तद्विघाततः॥ ३२॥**
**सर्वज्ञतानां तिसृणां यथास्वं त्रिविधावृतौ।**
**शान्तिमार्गे तथतादिसंप्रयोगवियोगयोः॥ ३३॥**
**असमत्वे च दुःखादौ क्लेशानां प्रकृतावपि।**
**द्वयाभावे च संमोहे विकल्पः पश्चिमो मतः॥ ३४॥** इति॥

यथोक्तभावनामार्गे विपक्षमेवं सप्रतिपक्षं निर्दिश्य तदधिगमेनैव चतुर्विकल्पप्रहाणात् सर्वगुणसंपदो भवन्तीत्याह—**सर्वबुद्धधर्मसमुदागमापर्यन्ततया** इति। एतदुक्तम्—भावनामार्गाभ्यासात् आसां चतुर्विकल्पजातीनामुपद्रवत्वेन इतीनां क्षये सति संरोधवैकल्येन संहर्षोच्छ्वासप्राप्ता इव सर्वाः त्रियानसंगृहीता गुणसंपदः कृपापारतन्त्र्यात् सर्वप्रकारजगत्सौख्योत्पादनदक्षाः सर्वथाभिमुख्यागमनप्रकारेण प्रकर्षपर्यन्ताधिगमफलैः प्राप्तशोभं भावनामार्गस्थं बोधिसत्त्वमाश्रयन्ते महासमुद्रमिव नद्यः, इत्येवं सर्वबुद्धधर्माणां समुदागमापर्यतन्त्वेन महानुशंसास्वभावेन भावनामार्गोऽवसातव्य इति। तथा चोक्तम्—

**आसां क्षये सतीतीनां चिरायोच्छ्वसिता इव।**
**सर्वाकारजगत्सौख्यसाधना गुणसंपदः॥ ३५॥**
**सर्वाः सर्वाभिसारेण निकामफलशालिनम्।**
**भजन्ते तं महासत्त्वं महोदधिमिवापगाः॥ ३६॥** इति॥

B 513 भावनामार्गानन्तरमानन्तर्यमार्ग इत्यानन्तर्यसमाध्यर्थमाह—**सर्वसत्त्वधातु°** इत्यादि। एतदुक्तम्—श्रावकप्रत्येकबुद्धभूमौ बोधिसत्त्वन्यामावक्रान्तौ च त्रिसाहस्रमहासाहस्रलोकधातवीयसत्त्वान् प्रतिष्ठाप्य कश्चित् यत्पुण्यं प्रसवति, तदुपमीकृत्य तद्विशिष्टपुण्यबहुत्वेन या सर्वाकारज्ञता तद्बुद्धत्वम्, इति बुद्धत्वप्राप्तेरव्यवहितो यः पूर्वसमनन्तरः समाधिः, सोऽत्र 5 आनन्तर्यसमाधिः। तस्यैवं सर्वसत्त्वधातुपुण्यज्ञानसंभारात् प्रतिविशिष्टत्वेन अपर्यन्ततया प्रज्ञापारमिता भावनीयेति। तथा चोक्तम्—

**त्रिसाहस्रजनं शिष्यखड्गाधिगमसंपदि।**
**बोधिसत्त्वस्य च न्यामे प्रतिष्ठाप्य शुभोपमाः॥ ३७॥**
**कृत्वा पुण्यबहुत्वेन बुद्धत्वाप्तेरनन्तरः।**
10 **आनन्तर्यसमाधिः स सर्वाकारज्ञता च तत्॥ ३८॥** इति॥

अस्य च आनन्तर्यसमाधेः सर्वधर्माभाव आलम्बनप्रत्ययः, स्मरणं चाधिपतिप्रत्ययः, प्रकृतिशान्तता च आकारोऽर्थादाक्षिप्तो वेदितव्यः। अन्यथा आनन्तर्यसमाधेरधिगन्तुमशक्यत्वात्। तथा चोक्तम्—

W 904 **आलम्बनमभावोऽस्य स्मृतिश्चाधिपतिर्मतः।**
15 **आकारः शान्तता चात्र** इति॥

अत्र च स्थाने दुरवगाहत्वादविदितोपायकौशलानां प्रवादिनां नानाचोद्यमुखपरंपराप्रसर्पिणी विप्रतिपत्तिरिदानीं निराकर्तव्येति प्रथमविप्रतिपत्त्यर्थमाह—**पृथिवीधात्वपर्यन्ततया** इति। संस्कृतासंस्कृतधात्वोरभावत्वेन आलम्बनोपपत्तौ विप्रतिपत्तेर्निराकरणाय मायोपमतया सर्वगुणप्रतिष्ठाभावात् पृथिवीसमत्वेन संवृत्या सर्वधर्माणामालम्बनस्वाभाव्यात् पृथिवीधात्व-
B 514 20 पर्यन्ततया आनन्तर्यसमाधिरनुगन्तव्य इत्यर्थः। एवमुत्तरत्राप्यानन्तर्यसमाधिः प्रज्ञापारमितार्थोऽस्मिन्नधिकारे प्रतिपत्तव्यः। सर्वथा नीरूपत्वात् आलम्बनस्वभावधारणे द्वितीयविप्रतिपत्तिं निराकर्तुं प्रकृतिविशुद्धत्वात् अप्समत्वेन सर्वधर्माणां तथैवालम्बनस्वभावव्यवस्थापनात् अब्धात्वपर्यन्ततया। भावाभावानुपलम्भेन सर्वाकारज्ञताज्ञाने तृतीयविप्रतिपत्तिनिराचिकीर्षया प्रकृतिप्रभास्वरत्वात् तेजःसमत्वेन सर्वधर्माणां पूर्ववत् सर्वाकार-
25 ज्ञताज्ञानरूपत्वात् तेजोधात्वपर्यन्ततया। तथतास्वभावत्वेन संवृतिपरमार्थसत्यद्वये चतुर्थविप्रतिपत्तिपत्तेर्निराकरणाय अनवस्थितवृत्तित्वात् वायुसमत्वेन सर्वधर्माणां संवृत्या निश्चितसत्यद्वयरूपत्वात् वायुधात्वपर्यन्ततया। दानाद्यनुपलम्भेन प्रयोगे पञ्चमविप्रतिपत्तिं निराकर्तुं प्रज्ञप्तिसत्त्वात् आकाशसमत्वेन सर्वधर्माणां पूर्ववत् प्रयोगस्वभावनिश्चयात् आकाशधात्वपर्यन्ततया। बोद्धव्याभावात् बुद्धरत्ने षष्ठविप्रतिपत्तिनिराचिकीर्षया विज्ञप्तिमात्रात्मक-
W 905 30 त्वात् विज्ञानसमत्वेन सर्वधर्माणां तथैव तथागतरूपत्वात् विज्ञानधात्वपर्यन्ततया च प्रज्ञापारमिता अनुगन्तव्या इत्याह—**एवमब्धातुतेजोधातु°** इत्यादि। सप्तमविप्रतिपत्त्यर्थमाह—**कुशलाकुशल°** इत्यादि। नामधेयमात्रत्वात् धर्मरत्ने विप्रतिपत्तेर्निराकरणाय तत्त्वतोऽनुत्पन्न

त्वात् कुशलाकुशलधर्मसंचयविगतत्वेन सर्वधर्माणां संवृत्या व्यवस्थापितधर्मरूपत्वात् कुशला-कुशलधर्मसंचयाप्रमाणतया । अष्टमविप्रतिपत्त्यर्थमाह—**सर्वधर्म°** इत्यादि । रूपाद्यालम्बनप्रति-षेधात् संघरत्ने विप्रतिपत्तिं निराकर्तुं मायोपमत्वात् सर्वधर्मसंचयविगतत्वेन सर्वधर्माणां पूर्ववत् संघरूपत्वात्, सर्वधर्मसंचयाप्रमाणतया । नवमविप्रतिपत्त्यर्थमाह—**सर्वधर्मसमाधि°** B 515 इत्यादि । दानद्यानुपलम्भेनोपायकौशले विप्रतिपत्तेर्निराचिकीर्षया धर्मधातुरूपत्वात् सर्वधर्म- 5 समाध्यपर्यन्ततासमत्वेन सर्वधर्माणां तथैवोपायकौशलसद्भावात् सर्वधर्मसमाध्यपर्यन्तता-प्रतिलम्भितया । दशमविप्रतिपत्त्यर्थमाह—**सर्वबुद्धधर्मा** इत्यादि । भावाभावोभयरूपाधि-गमप्रतिषेधात् तथागताभिसमये विप्रतिपत्तेर्निराकरणाय तथतारूपेण बुद्धधर्मस्वभावत्वात् सर्वधर्माणां योगिसंवृत्या तथागताभिसमयावस्थानात् सर्वबुद्धधर्मापर्यन्ततया । एकादश-विप्रतिपत्त्यर्थमाह—**सर्वधर्मापर्यन्ततया** इति । प्रपञ्चव्यवस्थापितानित्यादित्वेन नित्यादि- 10 W 906 विपर्यासे विप्रतिपत्तेर्निराचिकीर्षया धर्मतारूपेण अपर्यन्तधर्मतात्मकत्वात् सर्वधर्माणां पूर्ववत् व्यवस्थापितामित्यादिविपर्यासाभावात् सर्वधर्मापर्यन्ततया । द्वादशविप्रतिपत्त्यर्थमाह—**शून्यता-पर्यन्ततया** इति । विभावितमार्गफलासाक्षात्करणेन मार्गे विप्रतिपत्तेर्निराकरणाय मायोपम-त्वेन शून्यतापर्यन्तधर्मत्वात् सर्वधर्माणां सत्त्वेनाधिगमाभावात् शून्यतापर्यन्ततया । त्रयोदश-चतुर्दशविप्रतिपत्तिद्वयार्थमाह—**चित्तचैतसिकापर्यन्ततया** इति । हानोपादानाभावेन विपक्षे 15 प्रतिपक्षे च विप्रतिपत्तिं निराकर्तुमविद्योद्भूतप्रतिभासाच्चित्तचैतसिकापर्यन्तत्वेन सर्वधर्माणां संवृत्या व्यवस्थापितविपक्षप्रतिपक्षभावात् चित्तचैतसिकापर्यन्ततया । पञ्चदशविप्रतिपत्त्यर्थ-माह—**चित्तचरितापर्यन्ततया** इति । धर्म्यभावात् धर्मलक्षणे विप्रतिपत्तेर्निराचिकीर्षया प्रतिभासनिबन्धमात्रपदार्थावस्थानात् चित्तचरितोत्पत्तिलक्षणत्वेन सर्वधर्माणां तथैव स्थित- B 516 लक्षणभावात् चित्तचरितापर्यन्ततयेति । षोडशविप्रतिपत्त्यर्थमाह—**कुशलाकुशलधर्मापरिमाण-** 20 W 907 **तया** इति । स्वसामान्यलक्षणानुपपत्त्या भावनायां च विप्रतिपत्तेर्निराकरणाय भूतकोटिरूपेण कुशलाकुशलानुपलब्धिस्वभावत्वात् सर्वधर्माणां पूर्ववत् भावनासद्भावात् कुशलाकुशलधर्मा-परिमाणतया प्रज्ञापारमितापरिमाणता अनुगन्तव्या । विषयभेदेन भेदादनन्तोऽपि विप्रति-पत्तीनां संनिहितविनेयजनविप्रतिपत्तिनिराचिकीर्षया यथोक्ता एव परस्परविरुद्धा भाषार्था-नुष्ठानेन अनुयुज्यमानतया संशयरूपाः षोडश विप्रतिपत्तीः यथानिर्दिष्टविषयत्वेन सर्वाकार- 25 ज्ञताधिष्ठानाः । सर्वेषामेव अविदितबोधिसत्त्वोपायकौशलजनप्रवादिनां यथासंभवमुभयसत्या-श्रितोपायकौशलेन निराकृत्य सम्यक् सर्वथा निश्चयमुत्पाद्य कल्याणकामैर्बोधिसत्त्वैरानन्तर्य-समाधिरधिगम्यते इति प्रतिपत्तव्यम् । तथा चोक्तम्—

**जल्पाजल्पिप्रवादिनाम्** ॥ ३९ ॥

**आलम्बनोपपत्तौ च तत्स्वभावावधारणे ।** 30
**सर्वाकारज्ञताज्ञाने परमार्थे ससंवृतौ** ॥ ४० ॥

प्रयोगे त्रिषु रत्नेषु सोपाये समये मुनेः ।
विपर्यासे समार्गे च प्रतिपक्षविपक्षयोः ॥ ४१ ॥
लक्षणे भावनायां च मता विप्रतिपत्तयः ।
सर्वाकारज्ञताधारा षोढा दश च वादिनाम् ॥ ४२ ॥ इति ॥

5 इति मूर्धाभिसमयाधिकारः पञ्चमः ।

W 908 प्राप्तमूर्धाभिसमयो व्यस्तसमस्तत्वेन अधिगतानर्थाननुपूर्वीकृत्य स्थिरीकरणाय विभाव-
B 517 यति इत्यनुपूर्वाभिसमयार्थमाह–सिंहनादनदनतया इति । एतदुक्तम्–त्रिमण्डलविशुद्धि-
प्रभावितदानादिषट्पारमितासर्वाकारपरिपूरणेन प्रज्ञापारमितान्तर्गतपारमिताचतुष्टयत्वात्
सम्यक् दशभूमिनिष्पादकेन स्मृत्युपस्थानादिना सप्तबोध्यङ्गाकारेण आर्याष्टाङ्गमार्गतया च
10 परमार्थतोऽस्मरणलक्षणेन त्रिविधबुद्धानुस्मरणेन यथाक्रमं निर्वेधभागीयदर्शनभावनामार्गद्योत-
केन, तथैव कुशलाकुशलव्याकृतधर्मानुस्मरणेन पूर्ववत् आर्यावैवर्तिकबोधिसत्त्वसंघस्मरणेन,
तथैव शीलत्यागदेवतानामनुस्मरणेन रूपादिसर्वधर्माभावे स्वभावावबुद्धेन च योऽधिगमः,
सा अनुपूर्वक्रिया मता इत्येवमविपरीतार्थप्रतिपादनेन सिंहनादसमत्वात् सर्वधर्माणां सिंह-
नादनदनतया अनुपूर्वाभिसमयोऽनुगन्तव्य इति । तथा चोक्तम्—

15 दानेन प्रज्ञया यावद्बुद्धादौ स्मृतिभिश्च सा ।
धर्माभावस्वभावेनेत्यनुपूर्वक्रिया मता ॥ १ ॥ इति ॥

इति अनुपूर्वाभिसमयाधिकारः षष्ठः ।

W 909 विभावितानुपूर्वाभिसमयस्य तेषामेव स्वभ्यस्तीकरणाय तेषामेव क्षणेनैकेनाधिगमः
इत्येकक्षणाभिसंबोधार्थमाह–सर्वधर्माकोप्यतया इति । एकक्षणाभिसंबोधं प्रति अन्यथा-
20 कर्तुमशक्यत्वेन अकोप्यत्वात् रूपादीनां सर्वधर्माकोप्यतया प्रज्ञापारमिता अनुगन्तव्येत्यव-
यवार्थः । समुदायार्थः सूच्यते–लक्षणेनैकक्षणाभिसंबोधश्चतुर्विध इति । प्रथमं तावदेको भावः
सर्वभावस्वभावः, सर्वे भावा एकभावस्वभावाः ।

एको भावस्तत्त्वतो येन दृष्टः
सर्वे भावास्तत्त्वतस्तेन दृष्टाः ।

B 518 25 इति न्यायात् न केवलं बहुभिरेकस्य संग्रहः, अपि तु एकक्षणदानादिज्ञानेन आलम्ब्य-
मानेन अपगतप्रतिनियतवस्तुग्रहणविपर्ययरूपेण अनास्रवदानाद्यशीत्यनुव्यञ्जनलक्षणानां
धर्माणां संग्रहेण बोधिसत्त्वस्यावबोधात् अविपाकानास्रवसर्वधर्मैकक्षणलक्षणो भवति इत्येक-
क्षणाभिसंबोधः प्रथमः । तथा चोक्तम्—

अनास्रवाणां सर्वेषामेकैकेनापि संग्रहात् ।
30 एकक्षणावबोधोऽयं ज्ञेयो दानादिना मुनेः ॥ १ ॥ इति ॥

किमेवं पुनरेकानास्रवज्ञानालम्बने सर्वानास्रवसंग्रह इति चेत्, उच्यते । यथा एकापि

पदिका पुरुषप्रेरिता सकृत् एकवारं सर्वमरघट्टं सच्छिल्पिपूर्वपरिकर्मसामर्थ्यात् चलयति, तथा पूर्वप्रणिधानाधानावेधधर्मधातुसामर्थ्यात् एकस्मिन्नेव क्षणे ज्ञानमेकमनास्रवमालम्ब्यमानं कार्यकारणसंबन्धबलात् सर्वं सजातीयमभिमुखीकारयतीति । तथा चोक्तम्—

**अरघट्टं यथैकापि पदिका पुरुषेरिता ।**

**सकृत्सर्वं चलयति ज्ञानमेकक्षणे तथा ॥ २ ॥** इति ॥ 5 W 910

तदनु यदा बोधिसत्त्वस्य प्रतिपक्षभावनया सर्वविपक्षापगमेन सकलव्यवदानपक्ष-विपाकधर्मतावस्था सर्वकलङ्कापगमेन शरदिन्दुज्योत्स्नावत् शुक्लस्वभावा जाता, तदा एकस्मिन्नेव क्षणे विपाकावस्थाप्राप्तानामनास्रवसर्वधर्माणां बोधात् ज्ञानं प्रज्ञापारमिता, इत्येवं विपाकधर्मतावस्थानास्रवसर्वधर्मैकक्षणलक्षणो भवति, इत्येकक्षणाभिसंबोधो द्वितीयः । तथा चोक्तम्— 10

**विपाकधर्मतावस्था सर्वशुक्लमयी यदा ।**

**प्रज्ञापारमिता जाता ज्ञानमेकक्षणे तदा ॥ ३ ॥** इति ॥

तदनु पूर्वं स्वप्नोपमसर्वधर्माभ्यासेन संभारद्वयमनुभूय अधिगमावस्थायां स्वप्नस्वभावेषु सर्वधर्मेषु उपादानस्कन्धादिषु स्थित्वा दानादिषट्पारमिताप्रतिपत्त्या दानादिरूपनिरूपणा-कारेण अलक्षणाः सर्वधर्मा इति संक्लेशव्यवदानरूपाणां धर्माणामेकेनैव क्षणेन अलक्षणत्वं जानाति, इत्येवमलक्षणसर्वधर्मैकक्षणलक्षणो भवत्येकक्षणाभिसंबोधस्तृतीयः । तथा चोक्तम्— B 519 15

**स्वप्नोपमेषु धर्मेषु स्थित्वा दानादिचर्यया ।**

**अलक्षणत्वं धर्माणां क्षणेनैकेन विन्दति ॥ ४ ॥** इति ॥

तदनु निरन्तरदीर्घकालद्वयप्रतिभासप्रहाणाभ्याससात्मीभावादुन्मूलितद्वयप्रतिभास-वासनो यदा बोधिसत्त्वो ग्राह्यग्राहकयोगेन स्वप्नं ग्राह्यं स्वप्नदर्शिनं ग्राहकं नेक्षते, तदा सर्वेऽप्येवंधर्माणो धर्मा इति धर्माणामद्वयं तत्त्वमेकेनैव क्षणेन पश्यति । इत्येवमद्वयलक्षण-सर्वधर्मैकक्षणलक्षणो भवत्येकक्षणाभिसंबोधश्चतुर्थः । तथा चोक्तम्— 20

**स्वप्नं तद्दर्शिनं[1] चैव द्वययोगेन नेक्षते ।**

**धर्माणामद्वयं तत्त्वं क्षणेनैकेन पश्यति ॥ ५ ॥** इति ॥

एकक्षणाभिसंबोधं प्रति हेतुफलभेदेन यथाक्रममविपाकविपाकधर्मतावस्थानास्रवसर्व-धर्मैकक्षणाभिसंबोधद्वयं निर्दिश्य, एवं विशिष्टाधिगमावस्थायां धर्मतैकरसत्वेनासंभेदात् स्वप्नस्वभावीभूतसर्वधर्मावगमार्थं तृतीयमलक्षणसर्वधर्मैकक्षणाभिसमयं प्रतिपाद्य, स्वप्नावस्थाया-मपि ग्राह्यग्राहकयोस्तत्त्वेनानुपलम्भादद्वयप्रतिपत्त्यर्थमद्वयलक्षणसर्वधर्मैकक्षणाधिगमो निर्दिष्टः । इत्येवंलक्षणेनैकक्षणाभिसमयः चतुःप्रकारोऽपि योगिभिरधिगन्तव्य इत्येके । अन्ये तु—यदि 25 W 911

१ W तद्दर्शनं.

B 520 नाम चतुःप्रकारः संनिहितविनेयजनानुरोधेन व्यावृत्तिभेदात् कथंचिदुपात्तः, तथाप्यन्यतम एवैकः प्रकारो योगिना केनचित् साक्षात्कर्तव्यः इति मन्यन्ते ॥

**इत्येकक्षणाभिसमयाधिकारः सप्तमः।**

W 913 कस्मात् समुद्रापर्यन्ततया प्रज्ञापारमितापर्यन्तता अनुगन्तव्येत्युच्यते इति तत्कस्य 5 हेतोः इत्याशङ्क्याह—**रूपं हि सुभूते समुद्रसमम्** इत्यादि। येन साधर्म्येण रूपादीनां समुद्रादिभिस्तुल्यत्वं तथा समुद्रापर्यन्ततयेत्यादिपदव्याख्याने प्रागेव व्याख्यातमिति न पुनरुच्यते। उपसंहरन्नाह—**एवं हि सुभूते** इत्यादि। विभावितैकक्षणाभिसंबोधस्य द्वितीये क्षणे धर्मकायाभिसंबोध इति तदर्थमाह—**यदायं सुभूते बोधिसत्त्वः** इत्यादि। यदा सर्वमायाविवर्जितैर्मनसिकारैर्यथोक्तक्रमेण प्रज्ञापारमितामेनां सर्वधर्ममायोपमतां सर्वाकारज्ञतया अनुगमिष्यति, मार्गज्ञतया W 914 10 व्यवचारयिष्यति, सर्वज्ञतया अवतरिष्यति, सर्वाकाराभिसंबोधेनावभोत्स्यते, मूर्धाभिसमयेन चिन्तयिष्यति, अनुपूर्वाभिसमयेन तुलयिष्यति, एकक्षणाभिसमयेनोपपरीक्षिष्यते, धर्मकायाभिसंबोधेन च भावयिष्यति, तदा नास्य बोधिसत्त्वस्य दुर्लभा सर्वगुणानां धर्मकायस्वभावानां बुद्धक्षेत्रस्य सांभोगिककायलक्षणस्य अनुत्तराणां च बुद्धधर्माणां सकर्मकनिर्माणकायस्वरूपाणां परिपूरिरित्यवयवार्थः। समुदायार्थस्तूच्यते—स च धर्मकायाभिसंबोधः स्वाभाविककायादिभेदेन 15 चतुर्विध इति। तत्र प्रथमो ये स्मृत्युपस्थानादयो ज्ञानात्मका लोकोत्तरा धर्मधातुरूपत्वात् अनास्रवामलानामागन्तुकत्वेन सर्वप्रकारां विशुद्धिं प्रकृतिविविक्तलक्षणां प्राप्ताः, तेषां या प्रकृतिः B 521 स्वभावोऽनुत्पादरूपः, अयं मुनेर्बुद्धस्य भगवतो लोकोत्तरेण मार्गेण प्राप्यते, न क्रियते, इत्यकृत्रिमार्थेन मायोपमविज्ञानसर्वधर्मप्रतिपत्त्या अधिगतः स्वाभाविकः कायः। परिशिष्टकायत्रयं तथ्यसंवृत्या प्रतिभासमानं परमार्थतो धर्मतारूपं यथाधिमोक्षप्रभावितं बुद्धबोधिसत्त्वश्रावका-20 दिगोचरत्वेन व्यवस्थापितमिति कथनाय—

विविक्ताव्यतिरेकित्वं विवेकस्य यतो मतम्।

इति न्यायात् तदव्यतिरेकेऽपि पृथग्व्यवस्थाप्यते इत्यवसातव्यम्।

तथा चोक्तम्—

**सर्वाकारां विशुद्धिं ये धर्माः प्राप्ता निरास्रवाः।**

25 **स्वाभाविको मुनेः कायस्तेषां प्रकृतिलक्षणः** ॥ १ ॥ इति ॥

तदनु स्मृत्युपस्थानार्याष्टाङ्गमार्गान्ता बोधिपक्षाः पूर्ववदप्रमाणानि मैत्र्यादिचतुर्ब्रह्मविहाराः। अध्यात्मं रूप्यरूपी बहिर्धा रूपाणि पश्यतीति द्वौ। शुभं विमोक्षं कायेन साक्षात्कृत्वा उपसंपद्य विहरतीत्येकः। आकाशविज्ञानाकिंचन्यनैवसंज्ञानासंज्ञायतनानीति चत्वारः। संज्ञावेदितनिरोध इत्येकः। इत्यष्टौ विमोक्षाः। रूपधातुचतुर्ध्यानानि चतुरारूप्य-W 915 30 समापत्तयो निरोधसमापत्तिरिति नव समापत्तयः। पृथिव्यप्तेजोवायुनीलपीतलोहितावदातविज्ञानाकाशमिति कृत्स्नं दशविधम्। अध्यात्मरूपारूपसंज्ञिनौ प्रत्येकं परीत्ताधिमात्राकाराभ्यां बहिर्धा रूपाणि पश्यतस्तान्यभिभूय जानीते इति चतुष्टयम्। अध्यात्मारूपसंज्ञी

एव नीलपीतलोहितावदातानभिभूय पश्यतीति चतुष्टयम्, इत्यष्टविधमभिभ्वायतनम् । B 522
परसंतानगतक्लेशरणप्रबन्धोन्मूलनात् समाधिः इत्यरणा, सम्यगपगतसर्वनिमित्तसङ्ग्व्याघातं संशयापनयनकारिप्रणिधानसमृद्ध्या आसंसारमसमाहितावस्थायां प्रवर्तते इति प्रणिधानम्, षडभिज्ञाः, चतस्रश्च प्रतिसंविदः पूर्वोक्ता आश्रयालम्बनचित्तज्ञानपरिशुद्धयः इति चतस्रः शुद्धयः। आयुश्चित्तपरिष्कारकर्मोपपत्त्यधिमुक्तिप्रणिधानर्द्धिज्ञानधर्मवशिता इति दश वशिताः। 5
बलानि दश । चत्वारि वैशारद्यानि पूर्वमुक्तानि । परिशुद्धकायवाङ्मनःसमुदाचारस्तथागतः, नास्त्यस्य विपरीतसमुदाचारता, यां परपरिज्ञानभयात् प्रच्छादयितव्यां मन्येत इत्यरक्षणं त्रिविधम् । धर्मदेशनायां श्रोतुकामाश्रोतुकामोभयकामेषु यथाक्रममनुनयप्रतिघोभयविविक्त एवोपेक्षकः स्मृतिमान् विहरतीति स्मृत्युपस्थानं त्रिधा । सत्त्वार्थक्रियाकालानतिक्रमलक्षणे-त्यसंमोषधर्मता । क्लेशज्ञेयावरणानुशयरूपबीजप्रहाणात् वासनायाः समुद्घातः सकलजन- 10
हिताशयता, महती करुणा जनेऽष्टादशावेणिकाः बुद्धधर्माः सर्वाकारज्ञता च इति । तथा मार्गज्ञतादयोऽपि प्रागुक्ताः। सर्वे च आश्रयपरावृत्त्या परावृत्ता बोधिपक्षादयो निष्प्रपञ्च-ज्ञानात्मका धर्मकायो द्वितीयोऽभिधीयते इति केचित् । तथा चोक्तम्—

बोधिपक्षाप्रमाणानि विमोक्षा अनुपूर्वशः ।
नवात्मिका समापत्तिः कृत्स्नं दशविधात्मिकम् ॥ २ ॥ 15
अभिभ्वायतनान्यष्टप्रकाराणि प्रभेदतः ।
अरणा प्रणिधिज्ञानमभिज्ञाः प्रतिसंविदः ॥ ३ ॥
सर्वाकाराश्चतस्रोऽथ शुद्धयो वशिता दश ।
बलानि दश चत्वारि वैशारद्यान्यरक्षणम् ॥ ४ ॥ W 916
त्रिविधं स्मृत्युपस्थानं त्रिधासंमोषधर्मता । 20 B 523
वासनायाः समुद्घातो महती करुणा जने ॥ ५ ॥
आवेणिका मुनेरेव धर्मा येऽष्टादशेरिताः ।
सर्वाकारज्ञता चेति धर्मकायोऽभिधीयते ॥ ६ ॥ इति ॥

अन्ये तु—

सर्वाकारां विशुद्धिं ये धर्माः प्राप्ता निरास्रवाः । 25
स्वाभाविको मुनेः कायस्तेषां प्रकृतिलक्षणः ॥

इति यथारुतत्वेन लोकोत्तरानेव अनास्रवान् धर्मानभ्युपगम्य तेषां या प्रकृतिरनुत्पादता तल्लक्षणः स्वाभाविकः कायः। स एव च धर्मताकायो धर्मकायः इति भावप्रत्ययलोपात् व्यपदिश्यते इति व्याख्याय, के पुनस्तेऽनास्रवा धर्मा येषां प्रकृतिलक्षणो धर्मकाय इत्याशङ्क्य, बोधिपक्षेत्यादिकारिकामवतारयन्ति । तेषां योगिसंवृत्त्या विशिष्टार्थप्रतिभास- 30
जननद्वारेण आश्रयपरावृत्त्या परावृत्ता धर्मदेशनाद्यर्थक्रियाकारिणोऽवश्यमद्वयाश्चित्तचैत्ताः कथमभ्युपगन्तव्याः ? संगृहीता इत्यपरे ॥

य: प्रतीत्यसमुत्पाद: शून्यता सैव ते मता।

इति न्यायात् धर्मतात्मककायप्रतिपादनादेव अद्वयज्ञानात्मको धर्मकाय: प्रतिपादित इति चेत्, एवं तर्हि न्यायस्य तुल्यत्वात् सांभोगिकनैर्माणिककायद्वयमपि प्रतिपादितम्, इति पृथङ्निर्देशो न कर्तव्य: स्यात्। अथ प्रवचने पठितत्वात् योगिसंवृत्या तन्निर्देश इति 5 मतम्, अमुनैव न्यायेन अद्वयज्ञानात्मकोऽपि धर्मकायस्तथैव पृथङ्निर्दिश्यतामिति प्राप्तम्। केचित् कायचतुष्टयव्याख्याने—

स्वाभाविक: ससांभोगो नैर्माणिकोऽपरस्तथा।
धर्मकाय: सकारित्रश्चतुर्धा समुदीरित:॥

B 524 इति कारिकायां स्वाभाविकशब्दानन्तरं धर्मकायशब्दस्यापाठात् कायत्रयमेवेति। 10 अन्ये तु उपदर्शितप्रयोजनसामर्थ्यात् कारिकाबन्धानुरोधेन ज्ञानस्यैव कारित्रेण संबन्धार्थं W 917 चैवमुक्तम्, अतोऽविरुद्धं सर्वं प्रदेशान्तराभिहितं कायचतुष्टयं भवतीति। स्यादेतत्—श्रावकाद्यरणासमाधेस्तथागतस्य को विशेषोऽरणासमाधेरिति। मा अस्मद्दर्शनात् कस्यचित् क्लेशोत्पत्ति: स्यात्, इति मनुष्यक्लेशोत्पत्तिपरिहारिता श्रावकाद्यरणासमाधि:। तथागतानां तु सकलजनक्लेशप्रबन्धोन्मूलनं स्यादिति ग्रामादिषु अरणासमाधिविशेष:। तथा चोक्तम्—

15 **श्रावकस्यारणादृष्टेर्नृक्लेशपरिहारिता।**
**तत्क्लेशस्रोतउच्छित्त्यै ग्रामादिषु** जिनारणा॥ ७॥ इति॥

श्रावकादिप्रणिधिज्ञानात् तथागतप्रणिधिज्ञानस्य को विशेष इति चेत्, उच्यते। निर्निमित्तत्वेन स्वरसप्रवृत्तं वस्त्वनभिनिवेशात् रूपादिसङ्गविगतं सवासनक्लेशज्ञेयावरणप्रहाणात् सर्वज्ञेयाव्याघातम् आसंसारमवस्थानात् सदा स्थितम्, सम्यक् प्रतिसंविल्लाभात् 20 प्रश्नविसर्जनकारि ताथागतं प्रणिधिज्ञानमिति श्रावकादिप्रणिधिज्ञानाद्विशिष्टमिष्टम्।

तथा चोक्तम्—

**अनाभोगमनासङ्गमव्याघातं सदा स्थितम्।**
**सर्वप्रश्नापनुद्बौद्धं प्रणिधिज्ञानमिष्यते**॥ ८॥ इति॥

सवासनासुसूक्ष्मक्लेशज्ञेयावरणसंमोहद्वयप्रहाणप्रतिविशिष्टत्वेन सर्वेषामेव तथागतसंतान- 25 वर्तिबोधिपक्षादिधर्माणां निरतिशयविशेषसद्भावात् एतद्विशेषणद्वयमन्तरोदितमुपलक्षणत्वेन ग्राह्यम्। स्यादेवम्—नित्यं महाकरुणामयधर्मकायावस्थाने कथं सकलप्राणभृतां सदा नार्थ- B 525 क्रियेति। कल्याणमित्रादिसमवधानात् बुद्धाद्यालम्बने परिपोषं गते हेतौ पूर्वावरोपितकुशलमूलबीजे सति, यस्य सत्त्वस्य यस्मिन् काले धर्मदेशनादिकं क्रियमाणमायतिपथ्यं भवति, तदा तस्यार्थकरणाय पूर्वप्रणिधानसमृद्ध्या तत्प्रतिभासानुरूपेण अर्थक्रियाकारी भगवानिति 30 महाकरुणास्वभावधर्मकायावस्थानेन सर्वदा चिन्तामणिरिव उपस्थितोऽपि स्वकर्मापराध- W 918 जनितहेतुवैधुर्यान्न फलदायक: प्रतिभासते। ततो यथा देवराजे वर्षत्यपि सति पूतीभावादिना

अबीजीभूतं बीजं तिलादि न प्रादुर्भवति, तद्वत् बुद्धानां सकलमनोरथपरिपूरणदक्षाणां समुत्पादेऽपि अभव्यो न भद्रं सद्धर्मश्रवणादिकं प्राप्नोतीत्यवसातव्यम् । तथा चोक्तम्–

**परिपाकं गते हेतौ यस्य यस्य यदा यदा ।**
**हितं भवति कर्तव्यं प्रथते तस्य तस्य सः ॥ ९ ॥**
**वर्षत्यपि हि पर्जन्ये नैव बीजं प्ररोहति ।** 5
**समुत्पादेऽपि बुद्धानां नाभव्यो भद्रमश्नुते ॥ १० ॥** इति ॥

यथोक्तन्यायेनैवं सर्वत्र प्रतिभासद्वारेण अर्थक्रियाकरणवैपुल्यात् प्रबन्धतया आसंसारमवस्थानेन च भगवतः क्षयाभावात् यथाक्रमं बुद्धो व्यापी[1] नित्य इत्यभिधीयते । तस्मात् कथं ज्ञानात्मको धर्मकायः प्रतिनियतयोगिसंतानाधारवर्ती प्रतिक्षणमुत्पद्यमानो व्यापी नित्य इत्यपि कथ्यते इति न मन्तव्यम् । तथा चोक्तम्— 10

**इति कारित्रवैपुल्यात् बुद्धो व्यापी निरुच्यते ।**
**अक्षयत्वाच्च तस्यैव नित्य इत्यपि कथ्यते ॥ ११ ॥** इति ॥

B 526

तदनु दशभूमिप्रविष्टमहाबोधिसत्त्वैः सह परमानवद्यमहायानधर्मसंभोगप्रीतिसुखोपभोगात् सांभोगिकोऽयं कायो द्वात्रिंशल्लक्षणाशीत्यनुव्यञ्जनविराजितगात्रो रूपकायस्वभावस्तृतीयो बुद्धस्य भगवतो ग्राह्यः । तथा चोक्तम्— 15

**द्वात्रिंशल्लक्षणाशीतिव्यञ्जनात्मा मुनेरयम् ।**
**सांभोगिको मतः कायो महायानोपभोगतः ॥ १२ ॥** इति ॥

तानि पुनर्द्वात्रिंशल्लक्षणानि–यदुत ( १ ) गुरूणामनुगमनप्रत्युद्गमनादिना चक्राङ्कहस्तपादता । ( २ ) दृढसंवरसमादानत्वात् कूर्मवत् सुप्रतिष्ठितपादता । ( ३ ) चतुःसंग्रहवस्तुसेवनात् राजहंसवत् जालावनद्धाङ्गुलिपाणिपादता । ( ४ ) प्रणीतखाद्यभोज्यादिदानात् 20 मृदुतरुणहस्तपादता । ( ५ ) प्रणीततरलेह्यादिदानेन समुच्छ्रितहस्तपादस्कन्धग्रीवाप्रदेशत्वात् सप्तोच्छ्रयता । ( ६ ) वध्यमोक्षणत्वात् दीर्घाङ्गुलिता । ( ७ ) जीवितानुग्रहकरणात् आयतपार्ष्णिता । ( ८ ) प्राणातिपातविरत्या बृहदृजुगात्रता । ( ९ ) कुशलधर्मसमादानात् उच्छङ्खपादता । ( १० ) गृहीतकुशलसमादानवर्धनात् ऊर्ध्वगरोमता । ( ११ ) सत्कृत्य विद्याशिल्पादिदानात् एणेयजङ्घता । ( १२ ) संविद्यमानार्थयाचनकजनाप्रत्याख्यानात् 25 पट्टरुबाहुता । ( १३ ) सर्वजनब्रह्मचर्यसमादापनगुह्यमन्त्रारक्षणात् कोशगतबस्तिगुह्यता । ( १४ ) प्रणीतोपास्तरणदानात् सुवर्णवर्णता । ( १५ ) प्रासादवरदानात् श्लक्ष्णच्छविता । ( १६ ) संगणिकादिपरिवर्जनात् प्रदक्षिणावर्तैकैकरोमता । ( १७ ) सर्वगुरुजनयथास्थाननिवेशनात् ऊर्णाङ्कितमुखता । ( १८ ) सर्वथा मुखरवचनानवसादनात् सिंहपूर्वार्धकायता । ( १९ ) प्रियवादित्वसुभाषितानुलोमत्वात् सुसंवृतस्कन्धता । ( २० ) भैषज्यादिदानात् 30

W 919

१ B अव्ययो For व्यापी.

B 527 चितान्तरांसता। (२१) ग्लानजनोपस्थानात् रसरसाग्रता। (२२) वनारामादिकरण-
समादापनात् न्यग्रोधपरिमण्डलता। (२३) विहाराद्यभ्यधिकप्रदानादुष्णीषशिरस्कता।
(२४) श्लक्ष्णादिवचनात् प्रभूतजिह्वता। (२५) सर्वलोकधातुसत्त्वसद्धर्मविज्ञपनात् ब्रह्म-
स्वरता। (२६) संभिन्नप्रलापविरत्या सिंहहनुता। (२७) सर्वजनसंमानादिना शुक्ल-
5 दन्तता। (२८) विशुद्धाजीवत्वात् समदन्तता। (२९) सत्यवचनसमुदाचारात् अविरल-
दन्तता। (३०) पिशुनवचनानभ्यासात् समचत्वारिंशद्दन्तता। (३१) सर्वसत्त्वैकपुत्र-
दर्शनात् अभिनीलनेत्रता। (३२) प्रतिघादिविवेकदर्शनात् गोपक्ष्मनेत्रता चेति। तथा
चोक्तम्—

चक्राङ्कहस्तः क्रमकूर्मपादो
10 जालावनद्धाङ्गुलिपाणिपादः।
करौ सपादौ तरुणौ मृदू च
समुत्सदैः सप्तभिराश्रयोऽस्य॥ १३॥
दीर्घाङ्गुलिर्व्यायतपार्ष्णिगात्रं
प्राज्यं त्वृजूच्छङ्खपदोर्ध्वरोमा।
W 920 15 एणेयजङ्घश्च पट्टूरुबाहुः
कोशावनद्धोत्तमबस्तिगुह्यः॥ १४॥
सुवर्णवर्णः प्रतनुच्छविश्च
प्रदक्षिणैकैकसुजातरोमा।
ऊर्णाङ्कितास्यो हरिपूर्वकायः
20 स्कन्धौ वृतावस्य चितान्तरांसः॥ १५॥
हीनो रसः ख्याति रसोत्तमोऽस्य
न्यग्रोधवन्मण्डलतुल्यमूर्तिः।
उष्णीषमूर्धा पृथुचारुजिह्वो
ब्रह्मस्वरः सिंहहनुः सुशुक्लाः॥ १६॥
B 528 25 तुल्याः प्रमाणेऽविरलाश्च दन्ता
अन्यूनसंख्या दशिकाश्चतस्रः।
नीलेक्षणो गोवृषपक्ष्मनेत्रो
द्वात्रिंशदेतानि हि लक्षणानि॥ १७॥
यस्य यस्यात्र यो हेतुर्लक्षणस्य प्रसाधकः।
30 तस्य तस्य प्रपूर्योयं समुदागमलक्षणः॥ १८॥
गुरूणामनुयानादिर्दृढता संवरं प्रति।
संग्रहासेवनं दानं प्रणीतस्य च वस्तुनः॥ १९॥

वध्यमोक्षसमादानं विवृद्धिः कुशलस्य च।
इत्यादिको यथासूत्रं हेतुर्लक्षणसाधकः॥ २०॥ इति॥

अशीत्यनुव्यञ्जनानि पुनर्यदुत—

(१) सर्वसंस्कारविरक्तत्वेन ताम्रनखता। (२) सर्वसत्त्वहिताध्याशयत्वेन स्निग्धनखता। (३) श्रेष्ठवंशप्रसवत्वेन तुङ्गनखता। (४) वृत्तानवद्यत्वेन वृत्ताङ्गुलिता। (५) समुपचितकुशलमूलत्वेन चिताङ्गुलिता। (६) सम्यगनुपूर्वप्रवृत्तत्वेन अनुपूर्वाङ्गुलिता। (७) सुनिगूढकायादिकर्मान्ताजीवत्वेन गूढशिरता। (८) क्लेशग्रन्थिभेदकत्वेन निर्ग्रन्थिशिरता। (९) सुनिगूढधर्ममतित्वेन गूढगुल्फता। (१०) सर्वदुर्गस्थानजनोत्तारकत्वेन अविषमपादता। (११) नराभिभवनकुशलतया सिंहविक्रान्तगामिता। (१२) नागाभिभवनकुशलतया नागविक्रान्तगामिता। (१३) वैहायसंगमकुशलतया हंसविक्रान्तगामिता। (१४) पुरुषवृषभकुशलतया वृषभविक्रान्तगामिता। (१५) प्रदक्षिणमार्गानुयाततया प्रदक्षिणगामिता। (१६) प्रासादिककुशलतया चारुगामिता। (१७) नित्यमवक्रचित्ततया अवक्रगामिता। (१८) विशुद्धगुणाख्यापकतया वृत्तगात्रता। (१९) प्रमृष्टपापधर्मतया मृष्टगात्रता। (२०) विनेयानुरूपधर्मदेशकतया अनुपूर्वगात्रता। (२१) कायादिशुचिसमुदाचारत्वात् शुचिगात्रता। (२२) करुणाचित्तत्वात् मृदुगात्रता। (२३) विशुद्धचित्तत्वात् विशुद्धगात्रता। (२४) परिपूर्णधर्मविनयत्वात् परिपूर्णव्यञ्जनता। (२५) पृथुचारुगुणाख्यानात् पृथुचारुमण्डलगात्रता। (२६) सर्वत्र समचित्तत्वात् समक्रमता। (२७) सुविशुद्धधर्मदेशनात् विशुद्धनेत्रता। (२८) सुगमधर्मदेशनात् सुकुमारगात्रता। (२९) नित्यमदीनचित्तत्वात् अदीनगात्रता। (३०) समुद्गमनकुशलत्वात् उत्सदगात्रता। (३१) क्षीणपुनर्भवत्वेन सुसंहतगात्रता। (३२) सुविभक्तप्रतीत्यसमुत्पाददेशकत्वेन सुविभक्ताङ्गप्रत्यङ्गता। (३३) सुविशुद्धपदार्थदर्शनात् वितिमिरशुद्धालोकता। (३४) वृत्तसंपन्नशिष्यसंवर्तनीयत्वेन वृत्तकुक्षिता। (३५) प्रमृष्टसंसारदोषत्वेन मृष्टकुक्षिता। (३६) भग्नमानशृङ्गत्वेन अभग्नकुक्षिता। (३७) धर्मक्षयविनिवर्तकत्वेन अक्षामकुक्षिता। (३८) प्रतिविद्धधर्मगम्भीरत्वेन गम्भीरनाभिता। (३९) प्रदक्षिणग्राहिशिष्यसंवर्तनीयत्वेन प्रदक्षिणावर्तनाभिता। (४०) समन्तप्रासादिकपरिवारसंवर्तनीयत्वेन समन्तप्रासादिकता। (४१) शुचिचित्तत्वेन शुचिसमुदाचारता। (४२) व्यपगताकालधर्मविनयत्वेन व्यपगततिलकालकगात्रता। (४३) कायादिलाघवप्रापकधर्मदेशकत्वेन तूलसदृशसुकुमारपाणिता। (४४) प्रतिलब्धस्निग्धमहाश्रमणत्वेन स्निग्धपाणिलेखता। (४५) गम्भीरधर्मस्थानत्वेन गम्भीरपाणिलेखता। (४६) सम्यगायतिपरिशुद्धधर्मदेशकत्वेन आयतपाणिलेखता। (४७) प्रचुरतरशिक्षादेशकत्वेन नात्यायतवचनता। (४८) प्रतिबिम्बवत् विदितसर्वलोकत्वेन बिम्बप्रतिबिम्बोपमौष्ठता। (४९) मृदुवचनविनयत्वेन मृदुजिह्वता। (५०) प्रभूतगुणोपपन्नत्वेन तनुजिह्वता। (५१) रक्तबालजनदुरवगाहधर्मविनयत्वेन

रक्तजिह्वता। (५२) सर्वत्रासापगतत्वेन मेघगर्जितदोषता। (५३) मधुराद्यालापत्वेन मधुरचारुमञ्जुस्वरता। (५४) निवृत्तभवसंयोजनत्वेन वृत्तदंष्ट्रता। (५५) दुर्दान्तजनदमकत्वेन तीक्ष्णदंष्ट्रता। (५६) परमशुक्लधर्मविनयत्वेन शुक्लदंष्ट्रता। (५७) समभूमिप्रतिष्ठितत्वेन समदंष्ट्रता। (५८) सम्यगनुपूर्वाभिसमयप्रकाशत्वेन अनुपूर्वदंष्ट्रता।
5 (५९) प्रज्ञाप्रकर्षस्थापकत्वेन तुङ्गनासता। (६०) शुचिजनसंपन्नत्वेन शुचिनासता। (६१) परमोदारधर्मत्वेन विशालनयनता। (६२) समुपचितसत्त्वराशित्वेन चितपक्ष्मता। (६३) सर्वयुवतिजनाभिनन्दित्वेन सितासितकमलदलनयनता। (६४) नित्यमायतिदर्शित्वेन आयतभ्रूकता। (६५) श्लक्ष्णधर्मविनयकुशलत्वेन श्लक्ष्णभ्रूकता। (६६) कुशलस्निग्धसंतानत्वेन सुस्निग्धभ्रूकता। (६७) समन्तदोषदर्शित्वेन समरोम-
10 भ्रूकता। (६८) परमपीडानिवर्तकत्वेन पीनायतभुजता। (६९) विजितरागादिसमरत्वेन समकर्णता। (७०) सर्वसत्त्वानुपहतसंतानत्वेन अनुपहतकर्णेन्द्रियता। (७१) सर्वदृष्टिकृतान्यथाविपरिणामत्वेन अपरिम्लानललाटता। (७२) सर्ववादिप्रमथनत्वेन पृथुललाटता। (७३) परिपूर्णोत्तमप्रणिधानत्वेन सुपूर्णोत्तमाङ्गता। (७४) विषयरतिव्यावर्तकत्वेन भ्रमरसदृशकेशता। (७५) प्रहीणदर्शनभावनाप्रहातव्यानुशयत्वेन
15 चितकेशता। (७६) श्लक्ष्णबुद्धिपरिज्ञातशासनत्वेन श्लक्ष्णकेशता। (७७) रागाद्यसंलुठितचेतनत्वेन असंलुठितकेशता। (७८) नित्यमपरुषवचनत्वेन अपरुषकेशता। (७९) बोध्यङ्गकुसुमावकीर्णत्वेन सुरभिकेशता। (८०) सर्वथा शोभासंवर्तनीयत्वेन श्रीवत्सस्वस्तिकनन्द्यावर्तललितपाणिपादतलता चेति। तथा चोक्तम्—

B 531

ताम्राः स्निग्धाश्च तुङ्गाश्च नखा अङ्गुलयो मुनेः।
20 वृत्ताश्चितानुपूर्वाश्च गूढा निर्ग्रन्थयः शिराः॥ २१॥
गूढौ गुल्फौ समौ पादौ सिंहेभद्विजगोपतेः।
W 923 विक्रान्तं दक्षिणं चारुगमनमृजुवृत्तता॥ २२॥
मृष्टानुपूर्वते मेध्यमृदुत्वे शुद्धगात्रता।
पूर्णव्यञ्जनता चारुपृथुमण्डलगात्रता॥ २३॥
25 समक्रमत्वं शुद्धत्वं नेत्रयोः सुकुमारता।
अदीनोत्सदगात्रत्वे सुसंहतनगात्रता॥ २४॥
सुविभक्ताङ्गता ध्वान्तप्रध्वस्तालोकशुद्धता।
वृत्तमृष्टाक्षताक्षामकुक्षिताश्च गभीरता॥ २५॥
30 दक्षिणावर्तता नाभेः समन्तादर्शनीयता।
समाचारः शुचिः कालतिलकापगता तनुः॥ २६॥
करौ तूलमृदू स्निग्धगम्भीरायतलेखता।
नात्यायतं वचो बिम्बप्रतिबिम्बोपमौष्ठता॥ २७॥

मृद्वी तन्वी च रक्ता च जिह्वा जीमूतघोषता।
चारुमञ्जुस्वरो दंष्ट्रा वृत्तास्तीक्ष्णाः सिताः समाः॥ २८॥
अनुपूर्वी गतास्तुङ्गा नासिका परमं शुचिः।
विशाले नयने पक्ष्मचितं पद्मदलाक्षिता॥ २९॥
आयतश्लक्ष्णसुस्निग्धसमरोम्नौ भ्रुवौ भुजौ।  5
पीनायतौ समौ कर्णावुपघातविवर्जितौ॥ ३०॥
ललाटमपरिम्लानं पृथुपूर्णोत्तमाङ्गता।
भ्रमराभाश्रिताः श्लक्ष्णा असंलुलितमूर्तयः॥ ३१॥  B 532
केशा अपरुषाः पुंसां सौरभ्यान्यपहारिणः।
श्रीवत्सः स्वस्तिकं चेति बुद्धानुव्यञ्जनं मतम्॥ ३२॥ इति॥  10

तदनु येन शाक्यमुनितथागतादिरूपेण आसंसारं सर्वलोकधातुषु सत्त्वानां समीहितमर्थं समं करोति, असौ कायः प्रबन्धतया अनुपरतो नैर्माणिको बुद्धस्य भगवतः सर्वबालजनसाधारणश्चतुर्थोऽवसातव्यः। तथा चोक्तम्—  W 924

करोति येन चित्राणि हितानि जगतः समम्।
आ भवात्सोऽनुपच्छिन्नः कायो नैर्माणिको मुनेः॥ ३३॥ इति॥  15

तत्र प्रथमं प्रशस्ताप्रशस्तगत्यनभिनिवेशावस्थानलक्षणं गतिप्रशमनं कर्म कृत्वा, दानादिचतुःसंग्रहवस्तुनि प्रतिष्ठाप्य, श्रुतमयादिज्ञानेन विपक्षप्रतिपक्षहेयोपादेयद्वारेण बोधयित्वा, मायाकार इव अनुनयादिविविक्ततया मैत्र्यादिलक्षणे परार्थे स सत्त्वार्थयाथात्म्ये प्रतिष्ठाप्य, तदनु स्वार्थे त्रिमण्डलविशुद्धिप्रभावितषट्पारमिताभ्यासे, तदनन्तरं स्वपरार्थलक्षणे दशकुशलकर्मपथे बुद्धमार्गे, ततः सर्वधर्मप्रकृतिशून्यताभ्यासे, तदनु दानपारमिताधिष्ठानेन 20 प्रथमायां भूमौ सर्वत्रगधर्मधातुप्रतिवेधलक्षणेऽद्वयधर्मे, ततो द्वितीयादिभूमौ संभारपरिपूरिहेतुभूते शीलादिपारमितासर्वधर्मसांकेतिकज्ञाने निवेशयति। एवमनुक्रमेण प्रज्ञापारमिताधिष्ठानेन षष्ठ्यां भूमौ ज्ञानज्ञेयभावानभिनिवेशलक्षणे सर्वधर्मानुपलम्भे, तदनन्तरं सप्तम्यामुपायपारमिताबलेन सत्त्वपरिपाके, ततो बलपारमिताबलेन अष्टम्यां श्रावकाद्यसाधारणे बोधिसत्त्वमार्गे, पुनस्तत्रैव सर्वभावाभिनिवेशप्रहाणे, तदनु नवम्यां प्रणिधान- 25 पारमितासामर्थ्यात् बोधिप्राप्तौ, तदनन्तरं ज्ञानपारमिताबलाद्दशम्यां भूमौ विविधबुद्धक्षेत्रविशुद्धौ प्रतिष्ठाप्य, पुनस्तत्रैव एकजातिप्रतिबद्धस्वरूपे सम्यक्संबोधिप्रतिनियमे दशदिग्लोकधातवीयसत्त्वार्थे सर्वलोकधातुबुद्धोपसंक्रमणादिगुणे च निवेशयति। एवमनुक्रमेण पुनस्तत्रैव विशेषमार्गस्वरूपे समस्तबोध्यावाहकधर्मलक्षणे बोध्यङ्गे, कर्मफलसंबन्धाविप्रणाशे, यथाभूतसर्वपदार्थाधिगमे, सर्वविपर्यासप्रहाणे, निर्वस्तुकविपर्यासप्रहाणे 30 ज्ञाने, प्रकृतिपरिशुद्धिलक्षणे बोधिसत्त्वव्यवदाने, सर्वकलङ्कापगतव्यवदानहेतौ संभारे, शून्यतास्वभावेन संस्कृतासंस्कृताव्यतिभेदपरिज्ञाने च प्रतिष्ठाप्य ताथागत्यां भूमौ निर्वाणे  B 533 W 925

निवेशयति। इत्येवं धर्मकायवत् अस्य आसंसारं सप्तविंशतिप्रकारं कर्म विनेयजनप्रतिभासभाक् तदाधिपत्याश्रयेणायातं संवृत्या एव सांभोगिककायादिप्रतिभासोत्पादद्वारेण अर्थक्रियाकारीति धर्मकायस्येष्यते इति कारित्रमवसातव्यम्। तथा चोक्तम्—

तथा कर्माप्यनुच्छिन्नमस्यासंसारमिष्यते।
5 गतीनां शमनं कर्म संग्रहे च चतुर्विधे॥ ३४॥
निवेशनं ससंक्लेशे व्यवदानावबोधने।
सत्त्वानामर्थयाथात्म्ये षट्सु पारमितासु च॥ ३५॥
बुद्धमार्गे प्रकृत्यैव शून्यतायां द्वयक्षये।
संकेतेऽनुपलम्भे च परिपाके च देहिनाम्॥ ३६॥
B 534 10 बोधिसत्त्वस्य मार्गेऽभिनिवेशस्य निवारणे।
बोधिप्राप्तौ जिनक्षेत्रविशुद्धौ नियतिं प्रति॥ ३७॥
अप्रमेये च सत्त्वार्थे बुद्धसेवादिके गुणे।
बोधेरङ्गेष्वनाशे च कर्मणां सत्यदर्शने॥ ३८॥
विपर्यासप्रहाणे च तदवस्तुकतानये।
15 व्यवदाने ससंभारे संस्कृतासंस्कृते प्रति॥ ३९॥
व्यतिभेदापरिज्ञाने निर्वाणे च निवेशनम्।
धर्मकायस्य कर्मेदं सप्तविंशतिधा मतम्॥ ४०॥ इति॥

एवमेव कारिकाशास्त्रप्रामाण्यात् भावाध्याहारादिपदादिभिरभिसमयक्रमानुरूपो ग्रन्थार्थो वाच्यः। ततश्च केनचिदभिसमयालंकारकारिकापाठं बाहुल्येन अन्यथा कृत्वा 20 "प्रतिभातु ते सुभूते" इत्यादि वाक्यमारभ्य अस्या मातुर्यदसंबद्धं सम्यक्समुदायावयवार्थानभिधानाद्व्याख्यातम्[1], तत्सन्त एव ज्ञातुमर्हन्तीति नोपन्यस्य निराकृतम्॥ W 926

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायाम्
अनुगमपरिवर्तो नामैकोनत्रिंशः॥

१ W व्याख्यानं कृतम् for व्याख्यातम्.

## ३० सदाप्ररुदितपरिवर्तस्त्रिंशः ।

B 535
W 928

यथोक्ताष्टाभिसमयस्वभावप्रज्ञापारमितावगमं प्रति पूर्वयोगकथामुखेन आदिकर्मिकावस्थामारभ्य पर्येषमाणक्रममावेदयन्नाह–**पुनरपरम्** इत्यादि । सदाप्ररुदितस्तु बोधिचित्तसमादानदानादिशुभसंचयवान् । घोषानुगत्वादुपलम्भप्रहाणार्थिकत्वाच्च संभारभूमौ स्थितस्तदुत्तरोत्तरनिर्वेधाङ्गाद्यववादपर्येषणपरस्तदेति लक्ष्यते । अधुना तु दशभूमीश्वर एव **कायेऽनर्थिकेन** इति अस्थिमज्जादिदानाशयात् । **जीवितनिरपेक्षेण** इति हृदयदानं प्रति उत्साहितत्वात् । **लाभसत्कारश्लोकेषु** इति । तत्र लाभो द्रव्यसंपत् । सत्कारो बहुमानता । श्लोको दिगन्तरव्यापिनी कीर्तिः । प्रथमं संभारभूमौ ।

धर्मस्रोतसि बुद्धेभ्योऽववादं लभते तदा ।

इति वचनात्, अप्राप्तधर्मस्रोतःसमाधित्वेन अन्तरीक्षान्निर्घोषः श्रुतोऽभूत् । **मा वामेन** इति वामपार्श्वेन । **मा दक्षिणेन** इति दक्षिणपार्श्वेनावलोकयन् मा गमिष्यसीत्यर्थः । मा **पूर्वेण** इत्यादि मा पूर्वादिदिग्भागेन । **यथा नात्मतो न सत्कायतश्चलसि** इत्यादि । आत्मादीनामप्रतिभासमानानां विद्यमानत्वेनानवगमात्, रूपादीनां दर्शनपथारूढानां निरात्मकानामविद्यमानत्वेनावबोधात् यथा तेभ्यो न चलसि, तथा गच्छेत्यर्थः । **वितिष्ठते** इति विनिवर्तते । एतदुक्तं भवति–**सर्वैर्** एतेन समाधिविबन्धककायक्लमथाद्युत्पादनिषेधेनोपलक्षणतया सर्वस्यैव समाधेः कौसीद्यमालम्बनसंप्रमोषो लयौद्धत्ये तथा अनाभोगः पुनराभोगः इति षड्दोषाणां प्रतिपक्षेण अष्टाभिः प्रहाणसंस्कारैः समन्वागतेन समाधिना प्रज्ञापारमितां मनसि कुर्वन् पूर्वां दिशं गच्छ, एवं श्रोष्यसीत्यववादो दत्तः स्यात् । तथा हि–समाधिगुणेष्वभिसंप्रत्ययलक्षणया योगिनः श्रद्धया छन्दः समुत्पद्यते । ततः छन्दबलाद्वीर्यमारभते । ततो वीर्यबलेन कायचित्तप्रस्रब्धिमासादयति । ततः प्रस्रब्धकायचेतसः कौसीद्यं व्यावर्तते । तस्माच्छ्रद्धादयश्चत्वारः कौसीद्यप्रहाणाय भवन्ति । स्मृतिः आलम्बनसंप्रमोषस्य प्रतिपक्षः, तया सम्यगालम्बनोपस्थापनात् । संप्रजन्यं लयौद्धत्ययोः प्रतिपक्षः । तेन प्रामोद्यवस्तुबुद्धादिगुणमनसिकाराल्लयस्य, संवेगवस्त्वनित्यतादिमनसिकारादौद्धत्यस्य प्रहाणात् । लयौद्धत्याप्रशमनकाले त्वनाभोगदोषः । तत्प्रतिपक्षेण चेतना अभ्यसनीया । लयौद्धत्यप्रशमे सति यदा चित्तमालम्बने निष्प्रकम्प्यमनभिसंस्कारवाहि प्रवृत्तं भवति, तदा पुनराभोगदोषः, तेन चित्तविक्षेपात् । अतस्तत्प्रतिपक्षेणोपेक्षा भावनीयेति । सम्यगववादलाभादभ्युपगमार्थमाह–**एवं वै करिष्यामि** इति । निर्युक्तिक एवायमभ्युपगमः इति तत्कस्य हेतोः इत्याशङ्क्याह–**अहं हि सर्वसत्त्वानामालोकं कर्तुकामः** इत्यादि । सुगमः । पुद्गलनैरात्म्यमुखेनानुशास्य धर्मनैरात्म्यद्वारेणानुशासयन्नाह–**पुनरपि शब्दमश्रौषीत्** इत्यादि ।

B 536
W 929
W 936

परिज्ञायै प्रहाणाय पुनः साक्षात्क्रियां प्रति ।
शून्यतादिसमाधीनां त्रिधार्थः परिकीर्तितः ॥

इति वचनात् येनाकारेण प्रतिभासते, स घटाद्याकारः कल्पितस्वभावः। तस्य परिज्ञानार्थं शून्यतासमाधिरुक्तः। कल्पितो हि स्वभावः परिज्ञेयो भ्रान्तिख्यातिमात्रेण सत्त्वात्। सर्वधर्माभिनिवेशविविक्तमायोपमज्ञानस्य साक्षात्क्रियार्थमानिमित्तः समाधिः। योगिसंवृत्या तथारूपस्य परिनिष्पन्नस्याधिगन्तव्यस्वभावत्वात् पुद्गलधर्माभिनिवेशस्य परतन्त्रस्य प्रहाणार्थमप्रणिहितः समाधिः। ग्राह्यग्राहकाभिनिवेशस्य विपर्यासप्रभवत्वेन प्रहेयत्वात्। श्रुतचिन्ताभावनामयज्ञानोत्पादकालेषु मायापुरुषेणेव आचरितव्यमिति प्रतिपादनार्थं **निमित्तपरिवर्जितेन** इत्यादि पदत्रयमित्येके। शून्यतादिसमाधौ प्रयोगमौलपृष्ठावस्थास्वित्यपरे। कल्याणमित्रलक्षणार्थमाह—**यानि शून्यता** इत्यादि। तत्र संभारभूमौ पुण्यसंभारोपार्जनार्थं शून्यतानिमित्ताप्रणिहितानधिमुक्तिचर्याभूमौ तु ज्ञानसंभारात्मकनिर्वेधभागीयोत्पादनार्थं यथाक्रममनुत्पादाजातानिरुद्धाभावान् सर्वधर्मान् देशयन्तीत्यर्थः। **परितुलयमानेन** इति परिगणयता। **धर्मार्थिकेन** इति अनागतधर्मप्रयोजनदर्शनात्। **धर्मगौरवेण** इति प्रत्युत्पन्नानुशंसोपलम्भात्। अष्टषष्ट्यां त्रिसहस्रैः सार्धं पञ्चभिः कामगुणैः समन्वितमार्यं धर्मोद्गतं बोधिसत्त्वं दृष्ट्वा न चित्तस्यान्यथात्वं कार्यमित्याह—**मारकर्माणि च त्वयावबोद्धव्यानि** इत्यादि। **तांश्चासावभिभूय** इति तदायत्तत्वाभावेनाभिभूय। उपायकौशल्यमेव कथयन्नाह—**एष सत्त्वविनयेन** इत्यादि। संवृतिसत्याश्रयेणोपायं निर्दिश्य परमार्थसत्याश्रयेणाह—**तत्क्षणं च त्वया** इत्यादि। तत्क्षणमिति पञ्चकामगुणक्रीडनदर्शनानन्तरम्। तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**सर्वधर्मा हि** इत्यादि। स्वभावेन शून्या इति तत्त्वेन अनुत्पन्नाः। रूपादिपञ्चस्कन्धानां निरात्मकत्वप्रतिपादनार्थं **सर्वधर्मा हि निःसत्त्वाः** इत्यादि पञ्चपदोपादानम्। **मायोपमाः** इत्यादि। पुनरुक्तदेशनायाः प्रागुक्तं प्रयोजनं सप्त वर्षाणि एकसमाधिसमापन्नमार्यधर्मोद्गतं बोधिसत्त्वमुपलभ्य न शिथिलवीर्येण भाव्यमित्याह—**अपरमपि त्वम्** इत्यादि। **प्रतिवाणिः** इति प्रतिकूलता। **कियद्दूरं मया गन्तव्यम्** इति संभारभूमौ।

ध्यानेऽभिज्ञाभिनिर्हाराल्लोकधातून् स गच्छति।
पूजार्थमप्रमेयाणां बुद्धानां श्रवणाय च॥
अप्रमेयानुपास्यासौ बुद्धान् कल्पैरमेयगैः।
कर्मण्यतां परामेति चेतसस्तदुपासनात्॥

इति वचनादभिज्ञासद्भावेऽपि आर्यधर्मोद्गतविमोक्षदर्शनशक्तिवैकल्यात् आर्यधर्मोद्गतस्यैव चाधिष्ठानात् तत्परिपाचनोपायकौशल्यातिशयात् अदर्शनेन आर्यधर्मोद्गतविमोक्षप्रभावितगन्धवत्या नगर्याः कियद्दूरं मया गन्तव्यमिति निर्घोषो मया न परिपृष्ट इत्यर्थः। तत्र रुदितमुच्चैःस्वरेण, क्रन्दितं तद्विपर्ययात् इत्येके। रुदितमश्रुविमोक्षणम्, क्रन्दितं तदेव सशब्दमित्यपरे। शोकश्चित्तवैमनस्यम्, परिदेवो "हा कष्टं वञ्चितः" इत्यादि वचनम्। पूर्वोक्तधर्मपुद्गलनैरात्म्याववादादत्यारब्धप्रज्ञापारमितामनस्कारत्वाच्च संभारभूमावेव चित्तकर्मण्यतायां सत्यां धर्मस्रोतो नाम समाधिं प्रतिलभते, यस्य प्रतिलम्भात् ग्रन्थार्थग्रहण-

समर्थो भवति । तस्मिंश्च समाधौ प्रतिलब्धे बुद्धेभ्योऽववादं समाधिप्रज्ञयोरभिवृद्ध्यर्थं प्राप्नोतीत्याह—**अथ खलु सुभूते सदाप्ररुदितस्य बोधिसत्त्वस्य** इत्यादि । **तथा उत्कण्ठितस्य** इति तथा संजाताभिलाषस्य । संनाहकुशलसत्त्वार्थवीर्यभेदादेतेनैव **वीर्येण** इत्यादि पदत्रयम् । छन्दिकता अनुप्रार्थीच्छा । अनुबध्येति अन्तरापरित्यागाभावात् अनुबन्धं कृत्वा । तत्रान्तर्धानसद्भावात् रुद्धा । तद्विपर्ययात् स्फीता । परचक्रोपद्रवादिविरहात् क्षेमा । अन्नादिप्राचुर्यात् सुभिक्षा । हस्त्यश्वादिमनुष्यबाहुल्यात् आकीर्णबहुजनमनुष्या । अन्तरापणवीथी इति आपणकवीथी । एकान्तमारभ्य अपरान्तगमनात् निर्विद्धा । **समसमैः** इति । तुल्यप्रमाणैरिति केचित् । वीप्सया द्विरभिधानमित्यन्ये । **अनुत्पीडजनयुग्ययान-संक्रमणस्थानस्थापितैः** इति । तत्र जनयानस्थानम्, हस्त्यश्वादियानस्थानम्, युग्ययान-स्थानम्, शिबिकादियानस्थानम्, पद्भ्यां गमनस्थानं संक्रमणस्थानम् । अनुत्पीडानि जन-युग्ययानसंक्रमणस्थानानि स्थापितानि येष्वन्तरापणवीथीशतेषु तानि तथोक्तानि । अतस्तैः सुमापिता । निष्पादितेत्यर्थः । निष्ठान्तत्वेन स्थापितशब्दस्य न पूर्वनिपातो लक्षणस्य व्यभिचारात् । **खोडकशीर्षाणि** इति क्रमशीर्षाणि । **किंकिणीजालेन** इति घण्टिकासमूहेन । तत्र शोभनत्वात् वल्गुः । हृदयंगमत्वात् मनोज्ञः । हर्षकरत्वात् रञ्जनीयः । **पञ्चाङ्गिकस्य तूर्यस्य** इति वीणावंशादियुक्तवाद्यविशेषस्य । **अनुसारिवारिवाहिन्यः** इति प्रदक्षिणावर्त-जलवाहिन्यः । **वारिणः** इति कृत्प्रत्यये कर्तरि संबन्धविवक्षायां षष्ठी । पुण्डरीकं पद्मम् । **अन्यैः** इति सौगन्धिकचन्दनोत्पलादिभिः । **शकटचक्रप्रमाणपरिणाहानि** इति । परिणाहो माण्डल्यम् । **नीलानि** इत्यादि । तत्र नीलानीत्युद्देशः । सहजनीलत्वात् **नीलवर्णानि** । सांयोगिकनीलत्वात् नीलनिदर्शनानि । उभयोः प्रभानिर्मोक्षभास्वरत्वात् नीलनिर्भासानि । एवं पीतानि इत्यादि ज्ञेयम् । **बुद्धनेत्री** इत्यादि । बुद्धनेत्री प्रज्ञापारमिता, तस्यां चित्रीकारः प्रसादः, तेनानुगतं युक्तं सुष्ठु गतमवबुद्धं श्रुतचिन्तामयं ज्ञानं येषां ते तथोक्ताः, तेषां पूर्वकर्मविपाकेनेति पूर्वेण संबन्धः । **गन्धवत्यां नगर्यां मध्ये** इति गन्धवत्यां नगर्यामभिलक्ष्य-भूतस्थानस्य शृङ्गाटकस्य मध्ये इति संबन्धः । मृदुमध्याधिमात्रोपभोगभेदात् गृहपरिभोगे-त्यादि पदत्रयम् । **कर्केतनमयी** इति कर्केतनम् इन्द्रनीलम् । **समर्पितः** इत्युत्पादितकाय-सुखः । **समन्वङ्गीभूतः** इति संजातचित्तसौमनस्यः ।

> आत्मनि सति परसंज्ञा स्वपरविभागात्परिग्रहद्वेषौ ।
> अनयोः संप्रतिबद्धाः सर्वक्लेशाः प्रजायन्ते ॥

इति न्यायेन आत्मात्मीयग्रहाभिनिवेशपूर्वकत्वेन सर्व एव रागादयः क्लेशा दुःखविपाक-हेतवो भवन्ति । मायोपमसर्वधर्मभावनया पुनः सत्त्वविनयनमुपादाय क्लेशवशित्वलाभेन आशयविशेषात् मायापुरुषस्येव कामपरिभोगो जिनात्मजानां न दोषकृत् । तथा—

> बोधिसत्त्वा हि सततं भवन्तश्चक्रवर्तिनः ।
> प्रकुर्वन्ति हि सत्त्वार्थं गृहिणः सर्वजन्मसु ॥

क्लेशो बोध्यङ्गतां यातः संसारश्च शमात्मताम्।
महोपायवतां तस्मादचिन्त्या हि जिनात्मजाः॥

इति वचनात् कामपरिभोगो बोधिसत्त्वानां न दोषकृत्। गृहीतनियमानामेव कामपरि-
B 541 भोगस्य दुष्टत्वात्। **तूलिकास्तीर्णं** वा इति। तूलिका ज्ञायते एव। **गोणिका** तु विशिष्ट-
5 कम्बलजातिः। **गर्भोलिको** मसूरकः। **चैलवितानम्** इति वस्त्रवितानम्। अस्तित्व-
गुणवत्त्वशक्यत्वाभिसंप्रत्ययप्रसादाभिलाषाकारश्रद्धाप्रतिपादनार्थं धर्माणां **संनिश्रयतया**
इत्यादि पदत्रयोपादानम्। **अविष्ठितम्** इति अविच्छिन्नम्। चिरकालप्रार्थितार्थप्राप्त्युपाय-
W 959 श्रवणेन मृदुमध्याधिमात्रसुखसौमनस्यलाभात् यथाक्रमं **तुष्ट** इत्यादि षट् पदानि। तथागता-
ववादेन आशयविशुद्धिलाभात् प्रज्ञापारमिताश्रवणं जातमित्याह—**अथ खलु सदाप्ररुदितः**
10 इत्यादि। संपन्नहेतुकानां धर्मश्रवणं नाफलवदित्याह—**शृण्वंश्च** इत्यादि। **अनिश्रितसंज्ञाम्**
इति मायोपमसंज्ञाम्। धर्मनैरात्म्यप्रभावितश्च सर्वोऽधिगम इत्याह—**तस्यानेकानि** इत्यादि।
W 960 यस्मिन् समाधौ व्यवस्थितः सर्वधर्माणां स्वभावं मायोपमत्वादिना व्यवलोकयति, **स सर्व-
धर्मस्वभावव्यवलोकनो नाम समाधिः**। एवं सर्वधर्मस्वभावानुपलब्धिर्नाम समाधिरित्यादयो
व्याख्येयाः। तत्र मृदुमध्याधिमात्रचतुर्निर्वेधभागीयाधिगमभेदात् सर्वधर्मस्वभावव्यव-
15 लोकनादिद्वादशसमाधयः। तन्निर्जातास्त्वधिमुक्तिचर्याभूमावेव मायाविवर्जित इत्यादयः पञ्चा-
शत् समाधयश्चावगन्तव्याः। आर्यरत्नमेघसूत्रे च अस्यामेव अधिमुक्तिचर्याभूमौ वर्तमानो
बोधिसत्त्वः पृथग्जनोऽपि सर्वबालविपत्तिसमतिक्रान्तोऽसंख्येयसमाधिधारणीविमोक्षाभिज्ञादि-
गुणान्वितः कथ्यते इति। आशयपरिशुद्धिबलादेव प्रथमभूम्यधिगमार्थं समाहितावस्थायां
तथागतप्रतिभासपूर्वको विस्तरेणाववादो जात इत्याह—**स एषु समाधिषु स्थितः** इत्यादि।
B 542 20 "प्रमुदितादिभूमौ बुद्धशतादिकं पश्यति" इति प्रदेशान्तरे यद्वचनं तदवश्यंभावित्वेनेति
प्रतिपत्तव्यम्, अन्यत्र विधिप्रतिषेधयोरनियमात्। अतोऽधिमुक्तिचर्याभूमावसंख्येयतथागतो-
पलम्भो भवति। ननु द्वयोस्तथागतयोरेकस्मिन् लोकधातौ संभवविरोधात् कथमेवमिति
चेत्, लोकधात्वन्तरे स्थितानप्रमेयान् बुद्धान् भगवतः पश्यति स्मेत्येके। यत्खल्विदम्
"अपूर्वाचरमौ द्वौ तथागतौ लोके नोत्पद्येयाताम्" इति सकृज्जन्मनिषेधनं तच्छासनप्रवृत्ति-
25 मभिप्रायीकृत्योक्तम्, अतो न द्वयोस्तथागतयोर्युगपल्लोके शासनं प्रवर्तते इत्ययमेवार्थस्तत्र
संतिष्ठते। यस्मात् परार्थपरतन्त्रोत्पत्तित्वेन इयमेव तयोरुत्पत्तिर्यदुत शासनप्रवृत्तिः। एवं
च सति इहलोकधातुस्थानेव समानाभिप्रायत्वेन विहितैकशासनक्रमानविकलकारणत्वात्
युगपदुत्पन्नानेकतथागतान् पश्यति स्मेत्यपरे। नापूर्वाचरमाविति वचनात् क्रमेण तेषा-
मुत्पत्तिरनुज्ञातैव। ते तूत्पन्नाः, परिनिर्वाणाभावात् धर्मसंभोगकायाभ्यां विद्यन्ते एव।
30 केवलमपुण्यवतां नाभासीभवन्ति। पुण्यवद्भिः पुनर्यथापुण्यमल्पीयांसो वा समुपलभ्यन्ते
इत्यन्ये। तदानीं तत्रत्यैकतथागताधिष्ठानेन आर्यधर्मोद्गतसामर्थ्येन वा प्रातिहार्यकरणकाले
W 961 पृथग्जनानामिवामेयनिर्मिततथागतदर्शनमिति केचित्। अचिन्त्यविमोक्षमुखभावनाबलादादि-

कर्मिकाणामिव स्वचित्तस्यामेयतथागतप्रतिभासानुगतत्वेनोत्पादात् अप्रमाणतथागतदर्शनमित्यपरे । **चैलोण्डुकमिव** इति वस्त्रगुलकमिव । **शिरसा परिकर्षेः** धारयेस्त्वमित्यर्थः । तथैव तत्कस्य हेतोः इत्याशङ्क्याह—**तस्य हि** इत्यादि । **परितसनम्** इति वैमनस्यम् । **तेन** B 543 **मूल्येन** इति यावज्जीवमात्मभावविक्रये परप्रतिबद्धतया तत्र गमनासंभवात् नितरां पूजावैकल्यमिति, तावत्कालविक्रीतात्मभावमूल्येन संभारभूमावप्यभिज्ञाबलाद्दिव्यपूजादिसंभवेऽपि 5 तन्मूल्यग्रहणं धर्मगौरवार्थमित्येके । धर्मश्रवणार्थिकत्वात् ऋद्ध्यभिज्ञाभोगस्मृतिवैकल्यादित्यन्ये। मन्दवीर्याणां धर्मपर्येष्टिं प्रत्युत्साहसंदर्शनार्थमित्यपरे । श्रेष्ठिदारिकाप्रभृतीनामनेन क्रमेण अर्थकरणादिति केचन । स्वपरोभयोपद्रवविनाशात् यथाक्रमं **भग्नानि** इत्यादि पदत्रयम् । **कामहेतोः** इति कामनिदानम् । अनुभूताननुभूतकामार्थमित्यर्थः । मृदुमध्याधिमात्रहर्षलाभात् **हृष्टचित्तः** इत्यादि पदत्रयम् । अभिज्ञाबलात् हृदयादिदानेऽपि धर्मश्रवणान्तराया- 10 दर्शनात् दास्यामीत्यभ्युपगतवानिति केचित् । धर्मपूजार्थिकतया अन्तरायोऽपि न गणित इति कश्चन । **परित्यक्तम्** इति आशयमहत्त्वादेव महती पूजा, न तु द्रव्यमहत्त्वेनेत्यभिप्रायात् यद्विकल्पितं तद्देहीत्युक्तवान् । **कारणम्** इति पीडाम् । **गुणजातिः** इति गुणसामान्यम् । **गुणविशेषः** इति गुणस्वलक्षणम् । तत्र मनोनुकूलत्वाद्रोचन्ते दोषानुत्पादकत्वात् क्षमन्ते । **विषयिता** इति वशिता प्रभुत्वम् । सामर्थ्यमिति यावत् । 15 W 962 तीक्ष्णमध्यमृद्विन्द्रियजनप्रतिभासापेक्षया क्षणादिपदत्रयम् । उत्पन्नरोगाभावादरोगः । अनागतव्याधि प्रत्ययोग्यत्वात् निरुपद्रवः । **एहि** इति आयाहि । **निवेशनम्** इति गृहम् । **उत्सृजत** इति त्यजत । पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह—**न ममान्यत् किंचिद्धनम्** इत्यादि । B 544 **प्रभूताः विपुलाः** इति अनेकप्रकारद्रव्यभेदात् प्रभूताः, एकैकप्रकारस्यानन्त्यात् विपुलाः । **अनुजानीत** इति अनुज्ञां प्रयच्छत । **अद्राक्षीद्दूरादेव** इति विशिष्टाधिगमलाभेन आर्य- 20 धर्मोद्गतविमोक्षदर्शनसामर्थ्यात् गन्धवतीं नगरीं दूरादेव दृष्टवान् । **कासौ कौशिक** इति । धर्मार्थिकत्वादेव अभिज्ञाभोगवैकल्यात् पृष्टवान् । **सप्तभिर्मुद्राभिः** इति दुर्लभमहार्थतया अत्रादरोत्पादनार्थं दृढतरं सप्तभिर्बन्धनैर्बद्धा । सप्तसु ग्रन्थिस्थानेषु सप्तभिः स्वनाममुद्राभिर्मुद्रयित्वा स्थापितेत्येके । भव्यतां ज्ञात्वा नितरामावर्जनार्थमृद्धिप्रातिहार्यं कृतमित्याह—**अथ खलु तानि पुष्पाणि** इत्यादि । तथागतानामागमनगमनपरिज्ञानप्रश्नार्थं 25 पूर्ववृत्तान्तमावेदयन्नाह—**इहाहं कुलपुत्र** इत्यादि ॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां
सदाप्ररुदितपरिवर्तो नाम त्रिंशत्तमः ॥



## ३१ धर्मोद्गतपरिवर्त एकात्रिंशः ।

B 545 W 963 तथागतानामागमनगमननिषेधेन दर्शनमार्गोत्पादनार्थं सर्वधर्मनैरात्म्यमावेदयन्नाह— **एवमुक्ते धर्मोद्गतः** इत्यादि । तथतानुत्पादभूतकोटिशून्यता यथावत्ताविरागनिरोधाकाश- W 964 धातुस्वभावत्वप्रतिपादनेन यथाक्रमं बुद्धानां भगवतां मायोपमसर्वाकारज्ञताद्यष्टाभिसमय- 5 प्रभावितत्वमावेदितमित्येके । अत एवाह—**न हि कुलपुत्र** इत्यादि । **एभ्यो धर्मेभ्यः** इति सर्वाकारज्ञतादिधर्मेभ्यो नान्यत्र तथागतः । किं त्वेषामेव या तथता, सा तथागत इत्यर्थः । अन्ये तु—हेतूदाहरणाधिक्यादाधिक्यं निग्रहस्थानं क्षुद्रनैयायिकैरप्युच्यते, तत्कथं न्याय- परमेश्वरो भगवानुदाहरणाधिक्यमुक्तवानिति चोद्यं कृत्वा, यत्र नाम एकः प्रतिपाद्यः तत्र तत्प्रसिद्धस्यैकस्यैवाभिधानं युक्तम् । तत्र तु पर्षन्मण्डले बहवो भिन्नमतयः संनिषण्णा इति 10 तदधिकारेण युक्तमनेकोदाहरणवचनम् । विकल्पेन च अमी दृष्टान्ता न समुच्चयेन इत्येवं सर्वत्र अधिकवचनेषु परिहारं वर्णयन्ति । तथा दृष्टान्तस्यैव कथनात् प्रतीत्यसमुत्पन्नत्वादिको हेतुः प्राज्ञैरभ्यूहनान्नोक्त इति । तथागतानां स्वरूपमेवं निर्दिश्य कल्पिताभिनिवेशनिषेधार्थ- W 965 माह—**तद्यथापि नाम कुलपुत्र पुरुषः** इत्यादि । **मरीचिकाम्** इति विशिष्टादित्यरश्मिम् । पदार्थस्वरूपापरिज्ञानात् **बालजातीयः** । विपरीतप्रतिपत्त्या **दुष्प्रज्ञजातीयः** । **न पुनस्तत्रो-** 15 **दकं स्वभावतः संविद्यते** इति मृगतोयस्य विज्ञाने रश्मितप्तोषरमालम्बनं न भवति । अन्या- B 546 कारज्ञानस्य अन्यालम्बनेऽतिप्रसङ्गात् । परस्परव्यावृत्तरूपत्वात् सर्वभावानामुदकं [1]मरीचि- कायां तत्त्वतो न संविद्यते । तस्मात्तदालम्बनं ज्ञानं भ्रान्तं निर्विषयत्वादित्यर्थः । पूर्ववत् तत्कस्य हेतोः इत्याशङ्क्याह—**न हि तथागतो रूपकायतो द्रष्टव्यः** इति । कल्पितस्यैकान्त- शून्यत्वान्न रूपस्कन्धात्मकस्तथागतः । परतन्त्राभिनिवेशनिषेधार्थमाह—**तद्यथापि नाम कुलपुत्र** 20 **माया** इत्यादि । ग्राह्यग्राहकाकारस्य अलीकत्वेन निर्मितस्य नास्त्यागमनादिकमित्यर्थः । **एवमेव** W 967 **कुलपुत्र नास्ति तथागतानाम्** इति परतन्त्रात्मकानाम् । परिनिष्पन्नाभिनिवेशनिराकरणार्थ- माह—**तद्यथापि नाम कुलपुत्र पुरुषः सुप्तः** इत्यादि । मृषावादो हि स्वप्न इति ।

सर्वत्रालम्बनं बाह्यं देशकालान्यथात्मकम् ।
जन्मन्यन्यत्र तस्मिन् वा तदा कालान्तरेऽपि वा ॥

25 तद्देशोऽन्यदेशो वा स्वप्नज्ञानस्य गोचरो न भवति, अन्याकारज्ञानस्य अन्या- लम्बनेऽतिप्रसङ्गात् । न चान्यद्ग्राह्यं रूपमुपपद्यते । अल्पीयस्यपि वेश्मनि बहुयोजन- परिमाणानां गिरितरुसागरादीनां सप्रतिघानामुपलम्भात् । तस्मात् भ्रान्तमेव तथाविधं ज्ञानमुपजायते इत्यलीकः स्वप्नः । **एवमेव कुलपुत्र सर्वधर्माः** इति प्रमाणोपपन्नोत्पत्ति- रहितत्वेन परिनिष्पन्नस्वभावाः सर्वधर्माः स्वप्नोपमाः । **धर्मतामप्रजानन्तः** इत्यनुत्पादरूपता- 30 मनवगच्छन्तः । **षड्गतिकम्** इति देवादिपञ्चगतिभ्योऽसुरगतेः पृथग्व्यवस्थापनात् । ते च भगवतः श्रावका इति

---

१ W मरीचिकादिरूपं.

शीलादपि वरं भ्रंशो न तु दृष्टेः कदाचन ।
शीलेन गम्यते स्वर्गो दृष्ट्या याति परं पदम् ॥

इति न्यायेन त एव मायोपमधर्मताधिमुक्ता भगवतः शिष्याः । कल्पितादिपदार्थत्रयतत्त्व- B 547 W 968
रूपनिषेधे सति नास्त्येव तथागत इति मन्दधीजनाशङ्कामपाकुर्वन् प्रतीत्यसमुत्पन्नस्तथा-
गतोऽस्तीत्याह–**तद्यथापि नाम कुलपुत्र महासमुद्रः** इति । **सत्त्वानां कुशलमूलान्युपादाय** 5
इति । "कर्मजं लोकवैचित्र्यम्" इति वचनात् साधारणं सत्त्वानां शुभं कर्म प्रतीत्य संवृत्या
**कुशलमूलहेतुकत्वात्** । न च तान्यहेतुकानि । **येषां प्रत्ययानां सता** इति सामर्थ्येनेति
शेषः । न चाहेतुको बुद्धानां भगवतां काय इति बुद्धविनेयानामेव सत्त्वानां कुशलमूलवशेन
परिनिष्पत्तिगमनान्नाहेतुकः कायः ॥

साधारणकर्मनिर्जातत्वं निर्दिश्य, इदानीं भगवतामसाधारणकर्मनिर्जातत्वप्रतिपाद- 10
नार्थमाह–**पूर्वचर्यापरिनिष्पन्नः** इत्यादि । तत्राधिमुक्तिचर्याभूमिप्रभावितत्वात् पूर्वचर्या-
परिनिष्पन्नः । प्रमुदितादिसप्तप्रयोगभूम्युपादानहेतुनिर्जातत्वात् हेत्वधीनः । अचलादि-
त्रिविधफलभूमिसहकारिकारणोद्गतत्वात् प्रत्ययाधीनः । समन्तप्रभाभूमिसंगृहीतत्वात् पूर्वकर्म-
विपाकादुत्पन्न इत्येवमेषामर्थभेद इति केचित् । तस्मान्न स्वाभाविकस्तथागत इत्याह–**स न
क्वचिद्दशदिशि** इत्यादि । 15

यदर्थक्रियासमर्थं तदत्र परमार्थसत् । W 969

इति वचनात्, प्रमाणोपपन्नकार्यकारणसंबन्धबलात् प्रतीत्यसमुत्पन्न एव तात्त्विक-
स्तथागत इत्यौपलम्भिकजनाभिनिवेशनिषेधार्थमाह–**तद्यथापि नाम कुलपुत्र वीणायाः**
इत्यादि । तत्र उपधानी तन्त्रीवेष्टनिका दण्डाग्रविन्यस्ता काष्ठादिवर्त्रलिका[1], उपवाणी
पार्श्वस्थितास्तन्त्रीविशेषाः । **स च शब्दो न द्रोण्या निश्चरति** इत्यादिना न ह्येकं जनकमिति 20 B 548
कथयति । सर्वेषां समायोगाच्छब्दः प्रज्ञप्यते इत्यनेनापि प्राज्ञप्तिकशब्दनिर्देशेन सामग्र्या-
स्तात्त्विकं जनकस्वभावं निरस्यति । एतदुक्तम्–अनेकं कारणमेकं कार्यं करोत्यनेकं वा ।
तथा एकमपि कारणमनेकमेकं वा कार्यं कुर्यादिति चत्वारो विकल्पाः । तत्र यद्यनेकं
कारणमेककार्यकृदिति पक्षः, तदा चक्षूरूपालोकमनस्कारादिभ्यश्चक्षुर्विज्ञानस्यैककस्यो- W 970
त्पत्तावभ्युपगम्यमानायां कारणभेदेऽपि कार्यस्य भेदाभावात् न कारणभेदो भेदकः कार्यस्य 25
स्यात् । तथा च कारणाभेदाभावेऽपि कार्यस्याभेदात् न कारणाभेदः कार्यस्याभेदको
भवेत् । ततश्च कारणभेदाभेदौ अन्वयव्यतिरेकाभ्यामनपेक्षमाणौ कार्यभेदाभेदौ अहेतुकौ
स्याताम् । एवं च सति भेदाभेदाव्यतिरेकात् विश्वस्य नित्यं सत्त्वमसत्त्वं स्यात्, अहेतो-
रन्यानपेक्षणात् । ननु च सामग्री जनयित्री कार्यस्य, तस्याश्च भेदाभेदानुविधानचतुरौ इमौ
अन्वयव्यतिरेकानुविधायितया कार्यस्य भेदाभेदौ, अतः कथं तौ अहेतुकौ भविष्यत इति 30
चेत्, नैतत्सारम् । तथा हि–न सामग्री नाम अन्या काचन समग्रेभ्यः, किं तर्हि समग्रा

१ W °वेकुलिका.

एव भावाः सामग्रीशब्दवाच्याः, ते च परस्परव्यावृत्तस्वभावाश्चक्षुरादयो भिन्नाः सन्तो यद्येकमेवाभिन्नं चक्षुर्विज्ञानं कार्यमुपजनयितुं शक्ताः, तदा सामग्र्यन्तरान्तःपातिनोऽपि भावाः समग्राः किमिति चक्षुर्विज्ञानस्योपजननं न कुर्युः? भिन्नत्वेन चक्षुरादिभ्यः
B 549 क्षित्यादयो नोपजनयन्तीति चेत्, चक्षुरादयोऽपि परस्परं भिन्नस्वभावाः कथं जनयन्तीति
5 वक्तव्यम्। जनकस्वाभाव्यादिति चेत्, नैवम्, यस्माज्जनकान्यत्वमेवाजनकत्वं व्यवस्थापितम्। तस्मादेकस्य यो जनकः स्वभावः, ततोऽपरे व्यावर्तमाना जनका न प्राप्नुवन्ति, जनकादन्यत्वात्, भावान्तरवत्। स्यादेतत् न हि ब्रूमोऽन्यस्य तज्जनकरूपं नास्तीति। किं तु यदेकस्य तज्जनकं रूपं तदन्यस्य नास्ति, अन्योऽपि स्वरूपेणैव जनको न पररूपेण, अतद्रूपत्वात्। अतः स्वरूपाजनकात् व्यावृत्त्यसिद्धेर्यथास्वं भिन्नाश्च जन-
10 काश्च स्वभावेनेति कोऽत्र विरोधः? तथा हि—एकस्माज्जनकाद्व्यावर्तमानस्तद्रूपो न स्यात्, न त्वतत्कार्यः। तेनैव च तत्कार्यं कर्तव्यं नान्येनेति कोऽत्र न्याय इति। यद्येवम्, एकेनैव तत्कार्यं कृतमिति किमपरेषां तत्कार्यकरणे प्रयोजनम्? स्यादेतत्—न वै भावानां काचित् प्रेक्षापूर्वकारिता, यतोऽयमेकोऽपि समर्थः, किमत्रास्माभिः? इत्यपरे निवर्तेरन्। ते हि निरभिप्रायव्यापाराः स्वहेतुपरिणामोपाधि[1]धर्माणस्तत्प्रकृतेस्तथा भवन्तो
W 971 15 नोपालम्भमर्हन्तीति। एवं तर्हि एकेन हेतुना यः कार्यस्य स्वभावो जन्यते, स एवापरेणेति प्राप्तम्। तथा च सति कारणवैलक्षण्ये कार्यवैलक्षण्यादर्शनात् कारणभेदोऽविसदृशस्य अभिन्नस्य कार्यस्योत्पादकत्वेन भेदको न स्यात्। अथ मन्यसे—परस्परविभिन्नमूर्तयोऽपि चक्षुरादय एव केनचित् स्वभावातिशयेन चक्षुर्विज्ञानजनने नियताः, नापरे क्षित्यादयः। तथा हि—तेषामेव चक्षुरादीनां स स्वभावातिशयो नापरेषाम्। एतावत्तु स्यात्—कुतोऽयं
20 स्वभावातिशयस्तेषामिति। निर्हेतुकत्वेऽनपेक्षिणो नियमाभावेनातिप्रसङ्गभयात् स स्वभावा-
B 550 तिशयस्तेषां स्वहेतोरित्युच्यते। तस्यापि तज्जननात्मता तदन्यस्मात्। स्वहेतोरित्यनादिर्हेतुपरंपरा। तस्मादेवंविधहेतुपरंपरायाश्चेष्टत्वेन अनवस्थापि न क्षतिमावहति। एवं विलक्षणकारणकलापाच्च अलक्षणं कार्यं जायते, इत्येतावतैवांशेन हेतुभेदाभेदाभ्यां फलस्य भेदाभेदौ उक्तौ इति। नैतत्सारम्। यस्मात् य एवोभयनिश्चितवाची हेतुः, स एव साधनं दूषणं
25 चेति न्यायात्, अभेदाविशेषेऽपि हेतुधर्मसामर्थ्यात् यथा अभेदाविशेषेऽपि न सर्वं सर्वसाधकम्, तद्वद्भेदाविशेषेऽपि न सर्वं सर्वसाधकमित्येवमभ्युपगतहेतुफलसंबन्धं सांख्यादिकं प्रति उच्यमानं शोभामाधत्ते। यस्तु तत्त्वतो हेतुफलभावापवादी माध्यमिकः, तं प्रति स्वभावातिशयस्तेषां स्वहेतोः इति हेतुधर्मसामर्थ्यलक्षणोहेतुरसिद्धः स्वपक्षसिद्धये सिद्धवत् कथमुपादीयते? अथ मतम्—हेतुधर्मसामर्थ्यानभ्युपगमे प्रत्यक्षादिविरोधो दुर्निवार इति,
30 तदसत्। तत्त्वत इति विशेषणेन यथादर्शनमनिषेधात्। अयथादर्शनं तर्हि निषेध इति व्यक्तमिदं कूर्मरोमोत्पाटनम्। अयथादर्शनं कार्यकारणभावानभ्युपगमादिति चेत्, न।

---

१ W °उपनिधि° for °उपाधि°.

तत्त्वतः प्रमाणसहायत्वेन अप्रमाणसहायस्य कार्यकारणभावस्य अनभ्युपगमात् कथं नायथादर्शनमभ्युपगमः ? तथा हि–एतावन्मात्रमेव प्रत्यक्षे प्रतिभासते, यदुत अस्मिन् सतीदं भवतीति । तच्च अस्माभिरनिषिद्धमेव । यस्तु प्रमाणोपपन्नस्वरूपः कार्यकारणभावो वर्ण्यते, स प्रत्यक्षसमधिगम्यो न भवति, निर्विकल्पकत्वेन प्रत्यक्षस्य प्रमाणोपपन्नस्वरूपत्वावधारणसामर्थ्यवैकल्यात् । न च वस्तुप्रतिभासनादेव तदव्यतिरिक्ततया तथाविधस्वरूपस्य प्रतिभासनमिति युक्तं वक्तुम्, अतथाविधस्वरूपस्यापि केशोण्डुकादेः प्रतिभासनात् । भ्रान्तोऽयं प्रतिभास इत्यपि मिथ्या, सत्यत्वाभिमतप्रतिभासस्यापि सत्यत्वनिबन्धनाभावात् । अर्थक्रियाकारित्वं सत्यत्वनिबन्धनमिति चेत्, नैवम्, यस्मात् कार्यक्रियाकारित्वमेव अर्थक्रियाकारित्वं यथोदितविधिना परमार्थतोऽनुपपद्यमानस्वरूपं संवृत्या अभ्युपगतमित्यज्ञापकमेतत् । सर्वस्यैव अलीकत्वे देशकालादिप्रतिनियमो न स्यादिति चेत्, स्यादेष दोषः, यदि निर्हेतुकत्वमभ्युपगम्यते । यावता विचारविमर्शासहिष्णुत्वेन अविचारैकरम्यं पूर्वपूर्वं स्वकारणं समाश्रित्य उत्तरोत्तरमीदृशं प्रतिनियतदेशकालादि कार्यं प्रवर्तते । अत एव च संवृत्यापि कारणवैकल्याच्छशविषाणादीनामनुत्पत्तिः । न्यायस्य तुल्यत्वे यथादर्शनमपि किमनिषेधश्चेत्, न, प्रत्यक्षादिविरोधोपनिपातात् । न तर्ह्ययं न्यायो बाधासंभवादिति चेत्, नैतदेवम् । यथा न्यायस्तत्त्वतस्तथा बाधानभ्युपगमात् । यथा न बाधा यथादर्शनं तथा न्यायाभावात् । अथ मतम्–अनेकमेव कारणमनेकं कार्यं कुर्यादिति द्वितीयः पक्षोऽभ्युपगम्यते । कारणस्वभावविशेषस्य कार्यस्वभावविशेषे व्याप्रियमाणत्वेन कार्यकारणव्यापारविरचितानां स्वभावविशेषाणामसंकीर्णत्वात्[१] । तथा हि–समनन्तरप्रत्ययात् विज्ञानाच्चक्षुर्विज्ञानस्योपलम्भात्मता । तस्यैव चोपलम्भात्मनश्चक्षुरिन्द्रियात् रूपग्रहणयोग्यताप्रतिनियमः । विषयात्तत्तुल्यरूपता, इत्यभिन्नत्वेऽपि वस्तुतः कार्यस्य निर्विभक्तरूपस्य कारणानां भिन्नेभ्यः स्वभावेभ्यो भिन्ना एव स्वभावा भवन्ति, इति न कारणभेदेऽप्यभेदस्तत्कार्यस्येति । तदयुक्तम्, यस्मादुपलम्भात्मतादीनां परस्परतो भेदेऽभ्युपगम्यमाने तद्विज्ञानमनेकं स्यात्, उपलम्भात्मतादिभ्योऽभेदादुपलम्भात्मतादिस्वात्मवत् । अथाभेदस्तेभ्यो न सिद्धः, तथा च नानेकत्वं विज्ञानस्य भविष्यति, इति चेत्, भेदे तेभ्योऽभ्युपगम्यमाने तद्विज्ञानं निर्हेतुकमेव स्यात्, कारणव्यापारस्य विज्ञानादन्यत्रोपलम्भात्मतादिषूपयोगात् । एवं च नित्यं सत्त्वमसत्त्वं वा भवेदिति दोषः । अथ यथोक्तदोषभयाद्भेदो नाभ्युपगम्यते, तथा च सति उपलम्भात्मतादीनां परस्परतो भेदो न स्यात्, एकविज्ञानस्वरूपत्वाद्विज्ञानस्वात्मवत्[२] । अतः कारणव्यापारविषयभेदकल्पनावैयर्थ्यात् भिन्नस्वभावेभ्यश्चक्षुरादिभ्य इत्यादिना प्रागुक्तो दोषः समापतति । अथ मतम्–कार्यस्वभावस्यानेकस्मादनुपलम्भात्मतादेर्व्यावृत्तिमतः समुत्पत्तिदर्शनात् धर्मभेदकल्पनामास्थाय बोधात्मकात् मनस्काराद्बोधिरूपता, इत्यादिना कारणानुरूप्येणोपलम्भात्मतादिधर्मभेदः कारणव्यापारविषयभेदेन कल्पनासमारोपितः, तस्य चासत्त्वात् तेभ्योऽभेदात् ज्ञानस्यानेकत्वम्, एकस्माज्ज्ञानादनन्यत्वात्तेषामभेद

१ B विशेषा. २ W एकविज्ञानादनन्यत्वाद्विज्ञानस्वात्मवत् ।

इति प्रयोगद्वयेऽसिद्धो हेतुरिति। यद्येवं ते विशेषाः कल्पनोपरचितत्वेन व्योमोत्पलादय इव न हेतुव्यापारमपेक्षन्ते, इति कारणानां भिन्नेभ्यः स्वभावेभ्यो भिन्ना एव विशेषा भवन्तीति न युक्तमभिधातुम्। अथ अपेक्षन्ते इति निर्बन्धः, तथा सति कल्पनाशिल्पिघटितेष्वेवोपलम्भात्मतादिषु कारणव्यापारो व्यवस्थाप्यमानः काल्पनिक एव भूतार्थो न स्यात्। एवं च कार्य-
5 महेतुकं कारणव्यापारस्य कल्पितस्वभावेषूपयोगात्। अथ यथोक्तदोषभयादभिन्नमेकं कार्यं विशेषाश्च भिन्ना न च कार्यात्मव्यतिरिक्ता इति मतिः, एवं तर्हि भिन्नाभिन्नस्वभावाध्या-
B 553 सितत्वात् धर्मधर्मिणोर्वस्तुत एव चन्द्रतारकादिवद्भेदात् न केवलं व्यतिरिक्तमेव सामान्यं बलादापतति, नानेकत्वयोः परस्पराहतिलक्षणोऽपि दोषः, किं तर्हि बोधरूपादनन्यत्वेऽभ्यु-
W 974 पगम्यमाने रूपाद्विज्ञानकार्यस्य न संभवो बोधरूपादनन्यत्वाद्बोधरूपस्वात्मवत्। विषया-
10 कारादन्यत्वात् रूपतोऽपि तस्य संभवो विषयाकारस्वात्मवत्, इत्येकत्र कार्ये संभवासंभवौ, कारणे चैकत्र जनकाजनकौ युगपत्तत्त्वतो विरुध्येते। स्यादेतत्—तथाविधकार्यमुत्पद्यमानं दृष्टमिति, तदयुक्तम्। न हि सर्वं दर्शनं बाध्यमानमपि प्रमाणेन प्रमाणम्, मा भूत् द्विचन्द्रादिदर्शनस्यापि प्रामाण्यमिति। अथैकमेव कारणमनेकं कार्यं कुर्यादिति तृतीयः पक्षोऽभ्युपगम्यते, तदयुक्तम्। एकस्मादनेककार्योत्पत्तौ न कारणभेदः कार्यस्य भेदकः इति भेदोऽपि
15 भेदस्य न हेतुः इति। तदा भेदाभेदौ विश्वस्याहेतुकौ स्याताम्। अभिन्नस्यापि स तादृश आत्मातिशयो येनैकोऽपि हेतुरनेकं कार्यं करोति इति चेत्, स हेतुर्येनात्मातिशयेनैकं कार्यं जनयति, किं तेनैवापरम्? तेनैव चेत्, कथं भेदः फलस्य? अथ अन्येन, एवं तर्हि कारणाभेदो न युक्तिमान्। न ह्यात्मातिशयादन्यो भावः। स्यादेतत्—यदि कार्यस्वभावापत्त्या कारणं कार्यं जनयति, यथा सांख्यस्य, तदा भवेदेकस्यानेकरूपापत्तिविरोधादनेकजननमयुक्तिमत्।
20 यावता भेदाभेदजनननियतस्वभावकारणसंनिधिमात्रेण भेदाभेदकार्योत्पत्तौ नेदं चोद्यमास्कन्दति। अयमेव हि कारणभेदाभेदाभ्यां कार्यस्य भेदोऽभेदो वा, यद्भेदाभेदजनननियतस्वभावात्
B 554 कारणात् भिन्नाभिन्नकार्योत्पत्तिरिति। एतदपि मिथ्या, यतोऽत्रैवेयं विचारणा क्रियते—चक्षुर्येन स्वभावेन चक्षुःक्षणं जनयति, किं तेनैव चक्षुर्विज्ञानमपि? तेनैव चेत्, तदपि विज्ञानं चक्षुरेव स्यात्, चक्षुर्जननस्वभावकारणजन्यत्वाच्चक्षुर्वत्। एवं येन वा स्वभावेन
W 975 25 चक्षुर्विज्ञानं जनयति, तेनैव चक्षुरपि। एवं चक्षुर्विज्ञानजननस्वभावकारणजन्यत्वाच्चक्षुरपि चक्षुर्विज्ञानं स्यात्, चक्षुर्विज्ञानवत्। यदि वा प्रत्येकं चक्षुरचक्षुर्जननस्वभावकारणजन्यत्वाच्चक्षुरचक्षुःस्वभावं चक्षुः स्यात्। एवं विज्ञानाविज्ञानजननस्वभावकारणजन्यत्वात् विज्ञानं विज्ञानाविज्ञानस्वभावं स्यात्। एवमेतदित्यभ्युपगमे च सुतरां प्रत्यक्षाद्युपहतिर्गाढं भवन्तमाश्लिष्यति। अथ अन्येन स्वभावेन चक्षुश्चक्षुःक्षणं जनयति, अन्येन चक्षुर्विज्ञान-
30 मिति मतम्, तौ स्वभावौ किं चक्षुषो व्यतिरिक्तौ, अथाव्यतिरिक्तौ? यदि व्यतिरिक्तौ तदा तावेवार्थक्रियालक्षणत्वात् वस्तुनो जनकौ वस्तुनी स्याताम्, चक्षुस्त्ववस्तु स्यात्, अकिंचित्करत्वात्। अथाव्यतिरिक्तौ, तदा चक्षुषोऽप्येकाभिमतस्य भेदः स्यात्, परस्परभिन्नस्वभावाव्यतिरेकात् स्वभावद्वयवत्। तथा चैकत्वं हीयते। स्वभावयोर्वा पुनरैक्यं

स्यात्, एकस्माच्चक्षुषोऽभिन्नत्वात् चक्षुर्वत् । तत्र चक्षुर्येन स्वभावेनेत्यादिनोक्तो दोषः ।
अथ मतम्—स्वहेतोरेकजननस्वभावमुत्पन्नं कारणं यथा कार्यमेकं जनयति, तथा स्वहेतोरेवो-
त्पन्नमनेकं जनयतीति । एवं तु ब्रुवाणैः प्रकरणमेव विस्मृतम् । तथा हि—यथैकस्यानेक-
जनकत्वं निराचिकीर्षितं तथैकजनकत्वमपि, इति किं माध्यमिकं प्रत्येवमुच्यते ? अमाध्यमिकं
प्रत्यपि निष्फलम्, इष्टत्वादेकानेकजनकत्वस्य तेन । स्यादेतत्—यदि भेदजननियत- 5
स्वभावाद् भेदोत्पत्तिः न तर्हि कारणस्वभावानुविधायि कार्यं स्यादित्यहैतुकत्वप्रसङ्गः । यावता　B 555
चक्षुषः सकाशाद्भेदजनननियतस्वभावाच्चक्षुषो विज्ञानस्य च अचक्षुःस्वभावस्योदयात् कथं
न भेदोत्पत्तिः ? तथा हि—न कारणं प्रति कार्यं परस्परविलक्षणाभिः शक्तिभिरनुगतमिति
भिन्नं कार्यं करोति, अपि तु स्वभावादिति । तमेव तत्स्वभावं पर्यनुयुञ्ज्महे—कोऽयं स्वभावो
नाम विश्वरूपो येन प्रागुक्तानेकप्रकारविरोधेऽपि तत्तिरस्क्रियया स्वपक्षरक्षामाचरन् 10
अपास्तान्यप्रतिसमाधानचिन्ताभारो भवान् सुखमासीत ? हेतुधर्मसामर्थ्यमिति चेत्, नैवम्,
प्रागेव निराकृतत्वात् । परिदृश्यमानरूपतेत्यपि न वक्तव्यम्, यस्मात् रूपादिनिर्भासवति　W 976
प्रत्यये प्रतिभासमानस्य शास्त्राद्याश्रयेण परिकल्पितरूपस्य तत्त्वोत्पत्त्याद्याकारस्य निषेधात्
यया बुद्ध्या तत्त्वं संध्रियते, यस्यां वा बुद्धौ सा तादृशी लोकप्रतीतिः संवृतिरिष्टा, तया
सर्वमिदं प्रतीयमानस्वरूपं विश्वं सत्यम्, अन्यथा अलीकम् । अतो यथादर्शनं कार्यकारण- 15
भावो दुर्निवारः । तथा च सति यत्कैश्चिदेवं दूषणमुच्यते—अभावः संवृतिः, उत्पादो भाव इति
युगपदर्थक्रियायां योग्यमयोग्यं वस्त्वभ्युपगतम् । अथ उत्पादः संवृतिः, तदा संवृत्योत्पाद
इत्यस्य वाक्यस्य उत्पत्त्योत्पाद इत्यभ्युपगमात्र किंचिदनिष्टमापतितम् । तथा अनुत्पादः
परमार्थ इत्येवं परमार्थेन नोत्पाद इत्यस्य अनुत्पादेन नोत्पाद इत्यर्थः । तथा च सिद्ध-
साध्यतेत्यादि । तत्संवृतिलक्षणानभिज्ञतया प्रकृतानुपयोगिकं केवलमभिमानादसंगतमुक्तम् । 20
अथैकमेव कारणमेकं कार्यं कुर्यादिति चतुर्थः पक्षोऽभ्युपगम्यते, सोऽयं नितरामेव न　B 556
राजते । तथा हि—चक्षुरादीनां स्वजातीयक्षणजनकत्वेन स्वविज्ञानजनकत्वाभावेऽन्ध-
बधिरादित्वप्रसङ्गः स्पष्टः प्रसज्यते । स्वविज्ञानजनकत्वे चाभ्युपगम्यमाने चक्षुरादिजात्युच्छे-
दन एकस्माज्ज्ञानक्षणादूर्ध्वं न चक्षुरादयो नापि ज्ञानम्, इति तदेव अन्धत्वादिकमनायासेन
जगतः प्राप्तम् । अतो ये प्रतीत्यसमुत्पन्नाः, ते परमार्थतोऽविचारैकरमणीयाः, तद्यथा 25
मायाकारनिर्मिताः करभादयः । तथा चामी सर्वे रूपादयो भावाः इति स्वभावहेतुः ।
यथादर्शनं प्रतीत्योत्पाददर्शनान्नासिद्धो हेतुः, सपक्षे भावान्न विरुद्धः, पूर्वप्रबन्धेन विपक्षे
बाधकप्रमाणोपदर्शनादनैकान्तिकश्च न भवति । इत्यमुना न्यायेन प्रत्ययाधीनवृत्तित्वात्
यथा शब्दः प्राज्ञप्तिकः, तथा भगवतां कायो व्यवस्थापित इति । अलमतिप्रसङ्गेन ॥

तत्रोपादानकारणाधीनत्वेन हेत्वधीना, सहकारिजन्यत्वात् प्रत्ययाधीना । विनेयानां 30
कुशलमूलबलेन प्रतिभासगमनादनेककुशलमूलप्रयोगपरिनिष्पन्ना । यथोक्तधर्मप्रत्यवेक्षायाः
प्रयोजनार्थमाह—यतः कुलपुत्र इत्यादि । यस्मादेवमनन्तरोक्तक्रमेण यथा सर्वधर्मानुत्पन्ना-　W 977

ननिरुद्धान् दर्शनमार्गाधिगमेन त्वं सम्यक् प्रज्ञास्यसि, तस्माद्भावाद्यभिनिवेशलक्षणं विपर्यासं तद्विरोधिनैःस्वाभाव्यज्ञानात् प्रहाय तन्मूलं सकलं क्लेशज्ञेयावरणं क्रमेणापाकुर्वाणः प्रथमादिभूमौ नियतो भविष्यसि, अनुत्तरबोधावित्यर्थः । विनेयानामविपरीतधर्मदेशनाबलादधिगमो जात इति प्रतिपादयन्नाह—**अस्मिन् खलु पुनः** इत्यादि । **न च मे भूयो** 5 **विचिकित्सा प्रवर्तते** इति एकयोगक्षेमाणां मध्येऽन्यतरस्यैकस्य प्रहाणाभावात् विचिकित्साप्रहाणेन दर्शनप्रहातव्यक्लेशगणप्रहाणं धर्मनैरात्म्यदेशनाबलादधिगतदर्शनमार्गसामर्थ्येन परिदीपयति, अतोऽनुत्तरबोधिं प्रति न पुनर्विचिकित्सा प्रवर्तते । **कुशलमूलपरिपूरिमुपादाय** इति प्रथमभूम्यधिकारेण दानपारमितातिरिक्ततामुपादायेत्यर्थः । **सप्त वर्षाणि** इति ।

न कृपामन्दतेदानीं न च मे धर्ममत्सरः ।
10 नाचार्यमुष्टिर्नाशक्तिर्न च मे दुःखशीलता ॥
न च मे निष्ठितं शास्त्रं तर्कयामि तवान्तिकात्[1] ।
आज्ञातुं न च मे शक्ता विनेया न च सादराः ॥
न देशयामि येनेति ज्ञापयन् परितर्षयन् ।
द्वौ मासौ प्रतिसंलीनो भगवानर्धमेव च ॥

15 इति न्यायात् आर्यसदाप्ररुदितस्य परिशुद्धाशयताजिज्ञासार्थं सप्त वर्षाणि समापन्न एव स्थितः इत्येके । दर्शनमार्गाधिगमबलेन अधिगतसप्तसंबोध्यङ्गानां सर्वाकारपरिशोधनार्थमित्यपरे । आशयपरिशुद्ध्या भावनाबलादविपरीतनिमित्तप्रतिभासो जातः इत्याह—**अथ खलु सदाप्ररुदितः** इत्यादि । **प्रतिसंख्याय** इति एवं विचिन्त्य, ऋद्धयभिज्ञासंभवेऽपि न तया पूजा कृतेति शरीरविक्रयमूल्यग्रहणवत् व्याख्येयम् । कीदृशीं प्रज्ञापारमितां देशयामास इत्याह—**तत्रेयं धर्मो-** 20 **द्गतस्य** इत्यादि । यद्यपि सर्व एव सर्वधर्मसमतादयो देशनाप्रकारा धर्मनैरात्म्यद्योतकत्वेन तुल्याः, तथापि पौरुषेयत्वाद्वक्तुरभिप्रायं कार्यतया सूचयेयुरमी शब्दाः, तस्मादविच्छिन्नपारंपर्यसंप्रदायत्वेन अभिप्रायद्योतनादेषामर्थभेदोऽवगन्तव्य इत्येके । अतः तन्मतमेव लिख्यते—तत्रादौ सर्वाकारज्ञताद्यनुपूर्वाभिसमयपर्यन्तस्य षट्प्रकाराभिसमयक्रमस्य प्रत्येकं प्रयोगदर्शनभावनामार्गस्वभावप्रतिपादनाय[2] सर्वधर्मसमतया, इत्याद्यष्टादशपदानि । तदनु चतुर्विधैकक्षणाभि- 25 समयार्थकथनाय पृथिवीधातुपर्यन्ततया, इत्यादि पदचतुष्टयम् । तदनन्तरं तु कायत्रयस्य शून्यतैकरसत्वज्ञापनार्थमाकाशधातुपर्यन्ततया, इत्येकं पदम् । अतोऽनन्तरं तु धर्मसंभोगनिर्माणकायत्रयस्वरूपनिवेदनार्थं विज्ञानधातुपर्यन्ततया, इत्यादि पदत्रयम् । तदनन्तरं संभाराधिमुक्तिबोधिसत्त्वतथागतभूमिषु धर्मकायस्य यथाभव्यं विनेयजनप्रतिष्ठापनधर्मपरिदीपनार्थं सर्वधर्मानुपलब्धितया, इत्यादि पदचतुष्टयं वेदितव्यमित्ययं समुदायार्थः । पदार्थस्तु विभक्तप्राय एवेति न पुनर्विभज्यते । आर्यधर्मोद्गताधिष्ठानेन स्वप्रणिधिपुण्य- 30 ज्ञानबलाच्च श्रुतचिन्तामयज्ञानोत्पादक्रमेण यथोक्ताष्टाभिसमयस्वभावप्रज्ञापारमितादेशनाकाराः

१ B न चान्तिकात्. २ W °स्वभावत्वं प्रतिपादयन् आह.

समाधयः स्वप्नावस्थायामिव तावत्कालप्रतिभासाः सदाप्ररुदितबोधिसत्त्वस्योत्पन्ना इत्याह–**अथ खलु सदाप्ररुदितस्य** इत्यादि। यस्मिन् समाधौ व्यवस्थितः सर्वधर्मसमतां प्रतिपद्यते स सर्वधर्मसमता नाम समाधिः, एवं सर्वधर्मविविक्तश्च नाम समाधिरित्यादि वाच्यम्। सर्वथा तु यथानिर्दिष्टप्रज्ञापारमितालम्बनसमाधीनामधिगमरूपेण दृढप्रतिभासित्वे सूत्रविरोधः। तथा हि–प्रथमेन कल्पासंख्येयेन संभारभूमिमारभ्य यावत् प्रथमा भूमिर्निष्पद्यते। द्वितीयेन तु 5 विमलाभूमिमुपादाय यावत् सप्तमी भूमिः। तृतीयेन पुनः कल्पासंख्येयेन अचलाभूमिमारभ्य B 559 यावद्बुद्धभूमिः। इत्येवं त्रिभिः कल्पासंख्येयैर्बुद्धत्वमधिगम्यते इति यथारुतमेव सूत्रं विरुध्यते। त्रिकसामान्यात् त्रिभिः कल्पासंख्येयैरित्युक्तम्, न पुनः परमार्थत इत्येवं नेयार्थसूत्रव्याख्याने नितरामेव विरोधः। तथा हि–संभारभूमिमापूरयन्नेकं कल्पासंख्येयमतिक्रामति, तदनन्तरमधिमुक्तिचर्याभूमिं निष्पादयन् कल्पासंख्येयद्वयमतिनामयति। तदनु प्रमुदिता- 10 भूमिमुपादाय यावत् धर्ममेघां बोधिसत्त्वभूमिं प्रत्येकं त्रिभिस्त्रिभिः कल्पासंख्येयैर्बोधिसत्त्वो निष्पाद्य समन्तप्रभां बुद्धभूमिमासादयति इत्येवं त्रयस्त्रिंशता कल्पासंख्येयैर्बुद्धत्वं प्राप्यते इत्याचार्यवसुबन्धुपादाः। यथोक्ताष्टाभिसमयात्मकप्रज्ञापारमितादेशनालम्बनसमाधिबलात् बहूनि समाधिमुखानि प्रथमायामेव भूमावधिगतानीत्याह–**एवंप्रमुखानि** इत्यादि। अत्र समाध्यभिनिर्हारोपाया एव समाधिमुखानि, न तु समाधयः। "प्रमुदितायां भूमौ समाधि- 15 शतं लभते" इति दशभूमकेऽभिहितत्वात्। समाधिस्वभावान्येव वा समाधिमुखानि। तत्र शतग्रहणस्योपलक्षणत्वादिति प्रतिपत्तव्यम्॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां
धर्मोद्गतपरिवर्तो नामैकत्रिंशत्तमः॥



# ३२ परीन्दनापरिवर्तो द्वात्रिंशः ।

B 560
W 991

सम्यगधिगतानामेव समाधीनां व्यापारकथनार्थमाह—**सहप्रतिलब्धानां च सुभूते** इत्यादि । पुनरपि अन्यादरोत्पादनाय परीन्दनार्थमुपोद्घातयन्नाह—**तत्र खलु पुनर्भगवान्** इत्यादि । **तदनेनापि** इति यस्मादार्यसदाप्ररुदितस्य एवमर्थकारिका, तस्मादनेनापि । न
5 केवलं प्रागुक्तपर्यायेणेत्यर्थः । **तथागताधिष्ठानेन** इति महानुशंसत्वेन बह्वन्तरायत्वात् सहसापि लिखितुमशक्या । तस्मात्तथागतानुभावेनोपोद्घातं कृत्वैवं परीन्दनामावेदयन्नाह—**तस्मात्तर्ह्यानन्द** इत्यादि । किंनिबन्धनेयं विस्तरेण परीन्दनेति, तत्कस्य हेतोः इत्याशङ्क्याह—**अत्र हि प्रज्ञापारमितायाम्** इत्यादि । तदेव स्पष्टयन्नाह—**तत्किं मन्यसे** इत्यादि । एवं संक्षिप्तविस्तररुचिसत्त्वानुग्रहेण सर्वाकारज्ञतादयः सकारित्रधर्मकायावसानाः सर्व एवाष्टौ
10 पदार्थाः समुपज्ञाता भवन्ति । अथवा प्रथमं सर्वाकारज्ञतादित्रिसर्वज्ञताभिलक्ष्यस्थानीयत्वेन लक्षणम् । ततो वशित्वार्थत्रिसर्वज्ञताभावनां प्रति प्रयुज्यतेऽनेनेति त्रिसर्वज्ञताप्रयोगः सर्वाकाराभिसंबोधः । ततोऽत्यभ्यासात् प्रकर्षगमनमिति त्रिसर्वज्ञतायाः प्रकर्षावस्थो मूर्धाभिसमयः । ततोऽधिगतवस्तुनिश्चयाय व्यस्तसमस्तविभावितार्थप्रगुणीकरणमिति त्रिसर्वज्ञतानुक्रमावस्थोऽनुपूर्वाभिसमयः । ततो विशेषगमनाभावात् त्रिसर्वज्ञतानिष्ठावस्थः सम्यगेकक्षणा-

W 992

15 भिसंबोधः । ततस्तस्य फलम्, इति त्रिसर्वज्ञताविपाको धर्मकायः सकारित्रः । इत्यमुना षट्प्रकारेणार्थसंग्रहेण संक्षिप्तमध्यरुचिसत्त्वानुकम्पया पूर्ववदियं जिनजननी व्याख्येया । तथा चोक्तम्—

B 561

**लक्षणं तत्प्रयोगस्तत्प्रकर्षस्तदनुक्रमः ।**

**तन्निष्ठा तद्विपाकश्चेत्यन्यः षोढार्थसंग्रहः** ॥ १ ॥ इति ॥

20 अथवा । आदौ सर्वाकारज्ञतादित्रिसर्वज्ञतास्वभावः प्रवृत्तिगोचरत्वाद्विषयः । स कथं प्रयुज्यते इति तदनन्तरं सर्वाकाराभिसंबोधादिश्चतुर्विधोऽभिसमयो हेतुस्वभावः प्रयोगः । तस्यैवं प्रयोगवतो विषयस्य किं फलमिति तदनु धर्मकायः सकर्मा फलमित्येवं त्रिविधेनार्थसंग्रहेण संक्षिप्तसंक्षेपरुचिसत्त्वानुरोधेन तथैवेयं भगवती व्याख्येया । तथा चोक्तम्—

**विषयस्त्रितयो हेतुः प्रयोगश्चतुरात्मकः ।**

25 **धर्मकायः फलं कर्मेत्यन्यस्त्रेधार्थसंग्रहः** ॥ २ ॥ इति ॥

**इदमवोचद्भगवान्** इत्यादि ।

सांनिध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव ।

निःसरन्ति[1] यथाकामं कुड्यादिभ्योऽपि देशनाः ॥

इति न्यायेन भव्यविनेयजनदैशिकत्वाध्यवसायादिममनन्तरोदितमखिलं प्रज्ञापारमिता-

---

१ W निश्चरन्ति.

सूत्ररत्नतत्त्वम् **अवोचत्** उक्तवान् भगवान् । **आत्तमना हृष्टचित्तः** । यद्यपि चान्यैरार्य-सुभूतिप्रभृतिभिरपि किंचिदुक्तम्, तत्तु भगवदाधिपत्यादेवेत्यदोषः । ते च आर्यमैत्रेयप्रमुखाः महाबोधिसत्त्वा विभक्तिविपरिणामेन संबन्धादात्तमनसो भगवतो भाषितमभ्यनन्दन्निति संबन्धः । चकारः सर्वत्रोत्तरापेक्षया समुच्चयार्थः । तथा आर्यसुभूतिरप्यात्तमना वचनविपरि-णामेन संबन्धात् भाषितमभ्यनन्ददिति संबन्धः । एवमार्यशारिपुत्राद्यपेक्षया प्रत्येकं 5 योज्यम् । **सदेवमानुषासुरगन्धर्वो लोकः** इति देवमानुषासुरगन्धर्वैः सह । ननु च कोऽपर-स्तद्व्यतिरिक्तो लोकोऽस्ति, यस्तैः सह वर्तते इति ? उच्यते । समुदायसमुदायिनोर्भेदापेक्षया तथावचनाददोषोऽयम् । अपि च सन्त्यन्येऽपि बहवः किन्नरमहोरगगरुडादयः इत्यचोद्य-मेतत् । एते सर्वेऽपि सद्धर्मश्रवणान्नान्यत् स्वहितं परहितं च गुरुतरमुपलब्धवन्तः । अतः प्रमोदकारणसद्भावात् संजातप्रमोदातिशयाः सन्तो भगवता भाषितं "साधु भगवन् परम- 10 धर्मेश्वर करुणामयमूर्ते, सुभाषितमिदं युष्माकं वचनम्" इत्यादिना अभ्यनन्दन्नित्यभि-नन्दितवन्तः इत्यर्थः ॥

W 993
B 562

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायां
परीन्दनापरिवर्तो नाम द्वात्रिंशत्तमः ॥

* * * * * * *

## प्रणिधानम् ।

B 563

सर्वैर्वाधिगमार्थतत्त्वपदवी सम्यक्समुद्द्योतिता
संक्षिप्तादिपदाभिधानकुशलैरेवं यतो नायकैः ।
सर्वस्मिन् विहितश्रमैः प्रवचने ज्ञेयो विशेषस्ततः
प्रज्ञापारमितानये पुनरयं ग्रन्थात्मकः केवलः ॥ १ ॥ 5
आर्यासङ्गमतानुसारिसुधियां निर्मत्सराणां सतां
भद्रस्यापि गुरोर्बहुश्रुतवतो वैरोचनज्ञानिनः ।
सामर्थ्यादुपजातपाटवलवो भद्रोऽकरोद्भक्तितः
स्पष्टार्थां हरिसंज्ञको भगवतीमार्यामिमां सर्वशः ॥ २ ॥
तथ्यातथ्यविभागयुक्तिविकलज्ञानोदयात्संवृतौ 10
संसारार्णवपङ्कमग्नमनसो जाताः[1] सदा देहिनः ।
सर्वेऽमी जननीनिबन्धनकृताद्बीजान्मयाप्ताच्छुभात्
सर्वाकारवरा भवन्तु नियन्तं कायत्रयप्रापिणः ॥ ३ ॥

१ W जात्याश्रया.

W 994

संबुद्धैः ससुतैरियं सुविवृता माता क्व वा संस्थिता
क्वाहं धीधनसंपदामविषयो वाचां तथागोचरः।
भूयांसं जडमेवमैमि सततं जन्मान्तरेष्वप्यह-
मभ्यूह्यैवमिदं कृतं न विदुषां युक्तं समुल्लङ्घितुम्॥ ४॥

5 ईर्ष्याशल्यवितुद्यमानहृदयाः शक्ता न कर्तुं कृतिं
मिथ्यामानबलार्जितश्रुततया प्रज्ञावतामग्रतः।
पातालादिव खं विदूरमसतां पुंसां सतां चान्तरं
तस्मादेव तथाविधात्मनि न नः[1] सूक्ष्मापि काचिद्व्यथा॥ ५॥

ख्यातो यो भुवि पुण्यकीर्तिनिचयो विद्वज्जनालंकृत-
10 स्तस्मिन् सर्वगुणाकरे त्रिकुटकश्रीमद्विहारे शुभे।
दानाल्लब्धमहोदयस्य करुणादेवस्य धर्मात्मनः
सानाथ्येन सुखोपधाननिलये स्थित्वा विवेकास्पदे॥ ६॥

B 594

क्रुध्यत्कुञ्जरकुम्भपीठदलनव्यासक्तशक्त्यात्मनः
पुण्याभ्यासकृताभियोगजवशा[2]त्संपत्समादायिनः।
15 राज्ये राज्यभटादिवंशपतितश्रीधर्मपालस्य वै
तत्त्वालोकविधायिनी विरचिता सत्पञ्जिकेयं मया॥ ७॥

* * * * *

योऽलंकारोऽभिसमये तदालोकप्रकाशिका।
प्रज्ञापारमिताव्याख्या समाप्तेयं शुभोदया॥ ८॥
न्यूनातिरेकशङ्कायां विज्ञातव्योऽधुना[3] बुधैः।
20 ग्रन्थस्यास्य परिच्छेदो मातुरस्याः प्रमाणतः॥ ९॥

॥ कृतिरियमाचार्यहरिभद्रपादानाम्॥

* * * * * *

ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत्।
तेषां च यो निरोध एवंवादी महाश्रमणः॥

---

१ W वै for नः. २ B °बलात्सम्यक्समा°. ३ W बुधाबुधैः.

# द्वितीयं परिशिष्टम् ।

## अभिसमयालंकारस्य श्लोकसूची ।

[ प्रथमोऽङ्कः अधिकारसंख्यां द्वितीयश्च श्लोकसंख्यां सूचयतः ।
कंसस्थोऽङ्कः पत्रसंख्यां बोधयति । ]

# तृतीयं परिशिष्टम् ।

## आलोकस्थश्लोकोद्धरणसूची ।

# चतुर्थ परिशिष्टम्।

## ग्रन्थ-शास्त्र-ग्रन्थकृदादिनामसूची।

[ अङ्कः पत्राङ्कबोधकः। ]

# Addenda

[The reader is referred to the foot-note on page 229 of Aṣṭa, where I pointed out that portion after श्रावकयानि and upto तथा (गतमर्हन्तं) seemed to be missing in Mss. used by Rajendralal Mitra. We are fortunate, however, to have Haribhadra's *Āloka* on this portion. Fortunately, Dr. Edward Conze, who had specialized in Prajñāpāramitā texts, brought to my notice in his letter dated 29-10-1960 his article "The Composition of the Aṣṭasāhasrikā Prajñāpāramitā" published in the Bulletin of the London School of Oriental and African Studies, Vol. XIV, part ii, 1952, which had escaped my notice, and particularly the Appendix of the article above mentioned, where he printed from the Bodlian Ms. the missing portion. A good deal of this missing portion is cited in ŚS (see our edition, BST. No. 11, page 188). I am giving here the missing portion from Dr. Conze's article for the benefit of my readers.]

[सचेत्त्वमानन्द श्रावकयानि]कानां पुद्गलानां श्रावकभूमौ धर्मं देशयेः, तस्यां च धर्मदेशनायां ये त्रिसाहस्रमहासाहस्रे लोकधातौ सत्त्वाः, ते सर्वे अर्हत्त्वं साक्षात्कुर्युः, तेषामपि त्वया मे श्रावकेण धर्मचक्रप्रवर्तनानुप्रवर्तनतो धर्मं देशयतो श्रावककृत्यं न कृतं स्यात्। सचेत्पुनस्त्वमानन्द बोधिसत्त्वस्य महासत्त्वस्य एकमपि प्रज्ञापारमिताप्रतिसंयुक्तं धर्मपदं देशयेः संप्रकाशयेः, एवमहं त्वया श्रावकेण धर्मचक्रप्रवर्तनानुप्रवर्तनतो धर्मं देशयत आराधितः स्याम्, न तु तया पौर्विक्या धर्मदेशनया यया ते त्रिसाहस्रमहासाहस्रे लोकधातौ सर्वसत्त्वा अर्हत्त्वं प्रापिताः। तेषां चार्हतां यद्धर्ममयं पुण्यक्रियावस्तु, शीलमयं पुण्यक्रियावस्तु, भावनामयं पुण्यक्रियावस्तु, तत्किं मन्यसे आनन्द अपि नु स बहुः पुण्यस्कन्धः ? [आनन्द] आह—बहु भगवन्, बहु सुगत। भगवानाह—ततः स आनन्द श्रावकयानिकः पुद्गलो बहुतरं पुण्यं प्रसवति, यो बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमिताप्रतिसंयुक्तं धर्मं देशयति। अतोऽपि स आनन्द बहुतरं पुण्यं प्रसवति, यो बोधिसत्त्वो महासत्त्वोऽपरस्य बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमिताप्रतिसंयुक्तं धर्मं देशयति अन्तश एकदिवसमपि। तिष्ठतु आनन्द एकदिवसम्, अन्तशः पुरोभक्तमपि। तिष्ठतु आनन्द पुरोभक्तं धर्मो देशितः, अन्तश एकनालिकामपि, एकनालिकान्तरमपि वा। तिष्ठतु आनन्द एकनालिकान्तरम्, अन्तशो मुहूर्तमपि। तिष्ठतु आनन्द मुहूर्तम्, अन्तश एकलवमपि। तिष्ठतु आनन्द एकलवम्, अन्तश एकक्षणमपि। तिष्ठतु आनन्द

एकक्षणम्, अन्तश एकक्षणसंनिपातमपि । यो हि आनन्द बोधिसत्त्वो महासत्त्वोऽपरस्य बोधिसत्त्वस्य महासत्त्वस्य एकक्षणलवमुहूर्तमपि प्रज्ञापारमिताप्रतिसंयुक्तं धर्मपदं देशयति, अयं ततो बहुतरं पुण्यं प्रसवति । इदं हि आनन्द तस्य बोधिसत्त्वस्य महासत्त्वस्य धर्मदानं सर्वश्रावकप्रत्येकबुद्धयानिकानां कुशलमूलान्यभिभवति । एवमानन्द कुशलमूलसमन्वागतो बोधिसत्त्वो महासत्त्वः । एवमेतत् कुशलमूलं समन्वाहरन्, अस्थानमेतदानन्द अनवकाशः, यत्स बोधिसत्त्वो महासत्त्वो विवर्तेत अनुत्तरायाः सम्यक्संबोधेः, न चैतत्स्थानं विद्यते ॥

अथ खलु भगवांस्तस्यां वेलायां तथारूपं ऋद्ध्यभिसंस्कारमभिसंस्कृतवान्, यथारूपेण स ऋद्ध्यभिसंस्कारेण अभिसंस्कृतेन ताश्चतस्रः पर्षदो भिक्षुभिक्षुण्युपासकोपासिका देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्या वा, सर्वे ते बुद्धानुभावेन अक्षोभ्यं तथा[ गतमर्हन्तं सम्यक्संबुद्धं पश्यन्ति स्म । ]



# Glossary and Critical Notes

( By Dr. S. Bagchi )

saṃgha, *assembly, congregation* of the Buddhist monks, Buddho dharmas tathā saṃgho mārakoṭiśatair api / Bhettuṃ na śakyate yasmāt tasmāt saṃgho 'bhidhīyate. // *Āloka*, p. 272.

Arhat, a saint who has conqured āsravas and attained the acme of perfection, venerable, having vanquished his enemy ( *ari* + $\sqrt{}$*han* ). *Āloka* ( P. 273 ) has observed : pūjādakṣiṇā-guṇaprakarṣādyarhatayā arhantaḥ. Cf. also hatāritvāt arhat ( P. 273 ). The *Laṅkā* ( 120 ; 121 ) has explained the significance of the term *arhat* in the following manner : Arhan punar Mahāmate dhyānadhyeyasamādhivimokṣabalābhijñākleśaduḥkhavilkalpā b h ā v ā d arhan nity ucyate. Mahāmatir āha : trayaḥ punar Bhagavatā Arhanto 'bhihitāḥ. Tat katamasyā'yaṃ Bhagavan narhacchabdo nipātyate ? Kiṃ Bhagavan śamaikāyanamārgapratilambihkasya, uta bodhipraṇidhānābhyastakuśalamūlasaṃmūḍhasya, uta nirmitanairmāṇikasya ? Bhagavān āha : śamaikāyanamārgapratilambhikasya Mahāmate śrāvakasya, na tv anyeṣām. Suzuki's rendition : Again, Mahāmati, the Arhat is the one who has attained the Dhyānas, Samādhis, emancipations, powers, psychic faculties, and with whom there are no more passions, sufferings, and discriminations. Hence the appellation 'Arhat'. Mahāmati said : Now, the Blessed One declares that there are three kinds of arhats : to which one of the three is this term 'Arhat' to be applied ? To one who makes straightway for the path of cessation ? Or to one who neglects all his accumulated stock of merit for the sake of his vow to enlighten others ? Or to one who is a form of the Transformation [ Buddha ] ? Replied the Blessed One : Mahāmati, [ the term Arhat ] applies to the śrāvaka who makes straight way for the path of cessation, and to no others.

āsrava, āśrava ( Pāli āsava ), *evil influence, depravity, sin,* misery ( BHS 111 ). The words *anāsrava, sāsrava, śuṣkāśrava, āśravakṣaya, āśravanirodha kṣīṇāśrava āśravasāmudaya, prahīṇasarvāśrava,* and the like frequently occur in the Buddhist texts. There are four varieties of *āśrava,* viz. *kāmāśrava, bhavāśrava, avidyāśrava, dṛṣṭyāśrava. Āloka* ( P. 273 ) has left out *dṛṣṭyāśrava* from the list. It has made this pertinent observation : bhavāgrād āsaṃsāraṃ sravatī 'ti ( $\sqrt{}$sru) āsravaḥ. *Kāmāsravaḥ, bhavāsravaḥ avidyāsravaḥ* iti tridhā bhidyate; āsravaty anugacchati kartāram ity āsravaḥ karma-*Kalpataru,* P. 527 ; cf. anāsravadhātu, *the*

*realm of non-outflows* ( Suzuki's Laṅkā, 148 ): cf. the Jaina conception on *āsrava* the gate way of the influx of the karmic matter into the soul.

ājāneya, free from passions and moral infirmities. *noble, distinguished, of noble race,-blooded* ( BHS 90 ). Haribhadra in his *Āloka* ( p. 273; 274 ) has offered the following explanation : śokaparidevādibhayānām ātmānuvadaparānuvādadurgatijīvikādaṇḍāślokamaraṇabhayānāṃ lābhālābhādyaṣṭalokadharmopalepabhayasya svādhigamaparipanthibhūtajñānasaṁśayamitthyājñanabhayānāṃ cā 'bhāvāt yathākramamaṃ duḥkhabhayalokadharmajñānāśaṅkāvigamāt nirbhayatvena ājāneyāḥ ; akuṭilam ṛjunā mārgeṇa yāvadgamyagamanāt ājāneyāḥ; Amarasiṁha in his *Nāmaliṅgānuśāsana* ( II. 8. ) has given the synonym of it : ājāneyāḥ kulīnāḥ syuḥ : cf. the comment of the *Vyākhyāsudhā* on it : aja gatikṣepaṇayoḥ ghañ (3. 3. 18). ājena kṣepeṇā 'neyāḥ prāpaṇīyā āyattvā vā. aśvaṃ kulīnam ājāneyaṁ, śavaṁ kiśoraṁ bruvate iti *Nāmamālā*. Śaktibhir bhinnahṛdayāḥ skhalantaś ca pade pade / Ājānanti yataḥ saṁjñām ājāneyās tataḥ smṛtāḥ// iti Aśvaśāstram. In the present content the word ājāneya has been employed in a figurative sense.

mahānāga, who have conquered the *māra, great elephant* (BHS 423). Haribhadra explains it as a significant epithet : cf. traividyāditvaviśiṣṭadharmādhigamayogāt mahāpradhānabhāvena mahānāgāḥ ( *Āloka* p. 273 ). *Vide* also, kleśasaṁgrāmavijayitvāt mahānāgaḥ ( *Ibid*, p. 274 ).

pudgala, puṁgala ( Pāli puggala ). *person, man, creature, soul, ātman* ( BHS 347 ) : There are four varieties of it, viz. tamastamaḥparāyaṇaḥ, tamojyotispara, jyotistamaḥpara, jyotirjyotispara ( BHS ). The *Vyākhyāsudhā* ( on Amara's *Nāmaliṅgānuśāsana*, III 5.) has explained the grammatical formation of this word in the following way, 'put' iti kutsāyām avyayam. pudgilati, gīryate vā. gṛ nigaraṇe ( tu°pa° se° ) 'pacādyac' ( 3.1.134 ). 'ṛdorap' ( 3.3.57 ) vā. aci vibhāṣā ( 8.2.21 ) iti vā laḥ. pud galati vā, gala adane ( bhv°ā. pa°. se°. ) srāve ( cu° ā° se° ) vā. ac ( 3.1.34 ). pudgalaḥ sundarākāre triṣu puṁsy ātmadehayoḥ ( iti Medinī ).

Haribhadra has offered the following explanation of it : nityasya kāryakāraṇalakṣaṇavāsyavāsakabhāvānupapatteḥ śubhāśubhavāsanābhiḥ pūrṇaḥ anityaḥ tadanurūpāṃ gatiṃ lāti gṛhṇāti, iti nairuktavidhānāt prabandhatayā ekaḥ pudgalaḥ ( *Āloka* p. 274 ). Cf. pudgalasaṃjñā=prāṇisaṃjñā ( *Kalpataru*, p. 527 ). In the Jaina literature, the word *pudgala* means matter. This is entirely

different from the Buddhist sense. With the Buddhists *pudgala* means an individual or a person. IP.p. 195 and also p. 195n. 'This pudgala doctrine of the Sāmmitīyas as sketched by Professor De la Vallee Poussin is not in full agreement with the *pudgala* doctrine of the Sāmmitīyas as sketched by Guṇaratna'. *Ibid.* p. 119n. Cf. also *pudgalanairātmyam* = egolessness of persons. Suzuki, Laṅkā, 63.

puggalapaññatti—one of the Abhidhammas, Ip, 83. Cf. also *Prasannapadā* ( V. p. 51 ) : ' Ṣaḍdhāturayam Mahārāja puruṣapudgala ity ādi.

puruṣakāra, stands for all personal and volitional activities p. 348). The *Āloka* ( pp. 286-7 ) has furnished the following interpretation which is germane to the context of the ASāPP. puruṣakāraḥ adhiṣṭhānaṃ taddhetutvāt sa sarvo bhāṣaṇādir upacārāt puruṣakāraśabdenoktaḥ.

adhivacanam, *appellation, name, term* ( BHS 15 ). designation. Cf. Suzuki, *Laṅkā* 182.9; 175.18, Haribhadra also explains; ābhimukhyena vyapadeśaḥ ( *Āloka* p. 287 ). Probably it is abhivacana in Sanskrit. *Abhi* becomes *Adhi* in Pāli.

avavāda. ( Pāli ovda ), *admonition, instruction*, cf. *anuśāsanī*. These two are often compounded as *avavādānuśāsanī* ( BHS 75 ); cf. also deśanā. *Āloka* ( pp. 288–89 ) has referred to the ten varieties of *avavāda* in the following order: sa punar viṣayabhedāt daśadhā jñeyaḥ ( 1 ) pratipattyavavādaḥ, ( 2 ) satyāvavādaḥ, ( 3 ) ratnatrayāvavādaḥ ( 4 ) aśaktau deśanāvavādaḥ, ( 5 ) apariśrāntau deśanāvavadaḥ, ( 6 ) pratipatsaṃparigrahe śikṣaṇam avavādaḥ, ( 7 ) pañcacakṣuravavādaḥ, ( 8 ) abhijñāvavādaḥ, ( 9 ) darśanamārgāvavādaḥ, ( 10 ) bhāvanāmārgāvavādaḥ. It has also remarked: ity evaṃ daśavidho 'vavādo...prajñāpāramitāśabdenoktaḥ ( p. 288 ). Avavāda comprises tenfold instruction as enumerated above.

prajñapti, convention as opposed to metaphysical reality *making known, declaration, manifestation, expression, statement, manifesto, symbol, saṁvṛti, verbal designation, verbal convention, arrangement, seat-provision* ( BHS 358 ). This expression occurs in the *Laṅkā* 153 ( Verse 27 ). Prajñaptisatyato hy ātmā dravyasan na hi vidyate / Skandhānāṃ skandhatā tadvat prajñaptyā na tu dravyataḥ //Suzuki renders it as thought-construction. *Āloka* (p. 304) has offered its explanation in conformity with the context: Jñeyajñānayor grāhyagrāhakaprakārābhiniveśavijñānaṁ prañjaptiḥ...... saptasu prayogabhūmiṣu sarvadharmaprajñaptimātratāprativedhāt prajñaptiḥ.

samajñā, ( Pāli samaññā ), *name*. The Āloka has explained it by referring to its etymology : vastusametam aham iti jñānaṃ samajñā...............cittotpādāvasthāyāṁ jānātī 'ti jñaṁ saṁ jñaṁ cittaṁ pravṛttinimittaṁ yasyā bodhisattva iti saṁjñāyāḥ se 'yam samajñā, sarvasattvasamajñānanimittā.

vipratisāra, *discontent, regret, remorse, saddened*, cf. duḥkhinī durmanaskā vipratisāriṇī Divy. 322.13 ( BHS 492–3 ).

kaukṛtyam ( Pāli kukkucca ), *regret, remorse, worry, mental disturbance, difficulties of conscience, wickedness, evil deeds*, ( BHS 195 ). This word occurs in the *Laṅkāvatāra:* yasya kasyacid anyasyā 'nantaryakāriṇaḥ kaukṛtyaṁ tasya kaukṛtyadṛṣṭivinivartanārthaṁ nikṣiptadhurasya kaukṛtyadṛṣṭyabhāvārtham, cf. Suzuki's transl : ( The Śrāvakas of transformation ) .........may see somebody else practising *deeds of wickedness*, and they will repeatedly make great efforts to turn him away from his wickedness and faulty views, and to make him realise the non–reality of wickedness and faulty views by laying down his burden'. Laṅkā 139. Kaukṛtyam cetaso vipratisāritā, *Āloka*, 294.

āyavyaya, *income and expenditure:* cf. Laṅkā 174 āyavyayadṛṣṭābhiniveśenā 'bhiniveśayati, cf. also Laṅkā 175 nā 'haṁ Mahāmate lokāyataṁ deśayāmi na cā 'yavyayam. Kiṁ tu Mahāmate anāyavyayaṁ deśayāmi. Tatra āyo nama Mahāmate utpādarāśiḥ samūhāgamād utpadyate. Tatra vyayo nāma Mahāmate vināśaḥ. Anāyavyaya ity anutpādasyai 'tad adhivacanam. Suzuki renders *coming-and-going;......Coming* means production and mass, it is born of accumulation. *Going*......means destruction. That which is not *coming-and-going* is designated unborn. *Āloka* ( P. 294 ) offers the following explanation: vidhir āyaḥ vyayo niṣedhaḥ.

uttrāsa, unwarranted fear : saṁtrāsa, continuation of fear, fear—complex, fear of what is not to be feared. The *Āloka* (p. 305) has attributed specific meanings to them. Tatrā 'sthānatrāsa uttrāsaḥ, unmārgavat. Saṁtatyā trāsaḥ saṁtrāsaḥ utpannabhayasyā-'prativinodanāt saṁtrāsaniścayagamanaṁ saṁtrāsāpattiḥ.

deśana, *preaching*, confession ( BHS 271 ), doctrinal instruction. The Laṅkā 148 has brought to light the difference between *siddhāntanaya* and *deśanānaya* in the following fashion : Tatra siddhāntanayo Mahāmate yaduta pratyātmādhigamaviśeṣalakṣaṇaṁ vāgvikalpākṣararahitam anāsrava-dhātugatiprāpakaṃ pratyātmagatibhūmigatisarvatarkatīrthyamāravarjitam. Vinihatya ca tāṁstīrthya-

mārān pratyātmagatir virājate. Etan Mahāmate siddhānta-nayalakṣaṇam. Tatra deśanānayaḥ katamaḥ. Yaduta navāṅga-śāsanavicitropadeśo'nyānanyasadasatpakṣavarjitaḥ upāyakuśalavidhi-pūrvakaḥ sattveṣu darśanāvatāraḥ. Yad yenā 'dhimucyate tat tasya deśayet. Etan Mahāmate deśanānayalakṣaṇam. Suzuki renders the former as *the realisation itself* and the latter as *the teaching about it.* [ deśanā–naya *the way of Verbal instruction*, in Laṅkā, 148, 10ff., 172.6, distinct from and inferior to siddhānta–(pratyavasthāna)naya, *the finally approved way*, which is that of immediate personal realization. See Suzuki, Studies, 409 (for other citations of this depreciative use of deśanā in Laṅkā ). ( BHS. 271 ).]

deśanābhinirhāra, *Āloka* ( p. 486 ) has given the following etymological meaning of it. deśanā abhinirhriyate janyate 'nene 'ti deśanābhinirhāro dharmakāyaḥ.

cetovimukti, *spiritual liberation of mind* = Pāli cetovimutti; prajñāvimukti, spiritual liberation of wisdom, Pāli paññāvimutti; vimukti = Pāli vimutti: cf. vimokṣa. The *Laṅkāvatāra* has enumerated three varieties of it: vimuktayas tathā tisro 135.204 ( V ). The *Āloka* has offered the following interpretation of these two words : tṛṣṇāvidyāpakṣasarvakleśopakleśaprahāṇāt samādhisamāpatt-ayaḥ cetovimuktiḥ, arhanmārgajñānaṃ prajñāvimuktir iti kṛtvā tṛṣṇāvidyāpakṣāṇāṁ abhāvena yathākramaṁ rāgavirāgāt avidyā-virāgāt cetaḥprajñāvimuktiḥ, atas tal–lābhāt samāpattikleśāvaraṇa-vimuktyā sarvathā ubhayabhāgavimuktāḥ suvimuktacittāḥ suvimuta-prajñāḥ ( ASPP. 1 ).

Cf. *Yogasūtra* (II. 27 ): tasya saptadhā prāntabhūmiḥ prajñā. Cf. also Vyāsabhāṣya's elucidation : tasy'eti pratyuditakhyāteḥ praty-āmnāyaḥ. Saptadhe'ti aśuddhyāvaraṇamalāpagamāc cittasya pratya-yāntarānutpāde sati saptaprakārai' va prajñā vivekino bhavati. Tad-yathā parijñātaṁ heyaṁ, nā'sya punaḥ parijñeyam asti, kṣīṇā heya-hetavo na punar eteṣām kṣetavyam asti, sākṣātkṛtaṁ nirodhasamādhinā hānam, bhāvito vivekakhyātirūpo hānopāyaḥ ity eṣā catuṣṭayī kāryā vimuktiḥ prajñāyāḥ. Cittavimuktis tu trayī. Caritādhikārā buddhiḥ guṇā giriśikharakūṭacyutā iva grāvāṇo niravasthānāḥ svakāraṇe pralayābhimukhāḥ saha tenā 'staṃ gacchanti, na cai'ṣāṃ vipralīnānāṁ punarasty utpādaḥ prayojanābhāvād iti. etasyām avasthāyām guṇa-sambandhātītaḥ svarūpamātrajyotir amalaḥ kevalī puruṣaḥ iti etāṁ saptavidhāṁ prāntabhūmiprajñām anupaśyan puruṣaḥ kuśala ity ākhyāyate, pratiprasave 'pi cittasya muktaḥ kuśala ity eva bhavati, guṇātītatvād iti.

artha, *ultimate objective, ultimate result.* It is susceptible of a twofold classification, viz. the attainment of spiritual good and warding off of evil. The former is brought about by spiritual enlightenment and the latter is occasioned by means of the elimination of ignorance. The *Āloka* ( P. 273 ) has elucidated it as follows: hitāhitaprāptiparihāralakṣaṇo dvividhaḥ svako'rthaḥ vidyāvidyādhigamaprahāṇābhyām...attaimant of what is good by transcendental knowledge ( = vidyā ) and abandonment of evil, one positive and another negative : which are necessarily concomitants.

pārami, pāramī, attainment of the end, *arrived at, attained* to mastery, supremacy. It is frequently compounded with *-gata* or *-prāpta*; pāramitā, *mastery, supremacy, perfection* ( BHS, 341 ); cf. prajñāpāramitā : The Āloka ( P. 282 ), has offered an elaborate explanation of this important word together with its grammatical formation : pāraṁ prakarṣaparyantam eti iti vigṛhya, kvipi sarvāpahārilope anityam āgamaśāsanam ity aluki tatpuruṣe kṛti bahulam iti aluki ca karmavibhakteḥ kṛte pāramis tadbhāvaḥ pāramitā. Prajñayā dharmapravicayalakṣaṇāyāḥ pāramitā prajñāpāramitā mukhyā, Buddho Bhagvān māyopamaṁ jñānam advayam. Tatpraptyanukūlatvena tu padavākyasamūho grantho darśanādilakṣaṇo mārgaś ca gauṇī prajñāpāramitā. Tathā cā 'ha Ācārya-Dignāgaḥ :

Prajñāpāramitā jñānam advayaṁ sā tathāgataḥ /
sādhyā tādarthyayogena tācchabdyaṁ granthamārgayoḥ //
iti Prajñāpāramitāpiṇḍārthaḥ, 1.

The *Laṅkāvatāra*, 237, 238 has referred to three varieties of pāramitās, viz. laukika, lokottara and lokottama. Besides it has observed that the Bodhisattvas practise the following six types of pāramitās as enumerated below :

( 1 ) charity ( *dāna* ), ( 2 ) morality ( *śīla* ),
( 3 ) patience ( *Kṣānti* ), ( 4 ) vigour ( *vīrya* ),
( 5 ) meditation ( *dhyāna* ), ( 6 ) trenscendental wisdom ( *prajñā* ).

caryā, ( Pāli cariyā ), *course of conduct of Bodhisattvas,* which has four aspects or successive stages. They are of four kinds : ( 1 ) prakṛticaryā refers to his original, basic endowment ; praṇidhānacaryā to his vows to attain enlightenment ; anulomacaryā alludes to his progressive approach to the goal, and anivartanacaryā refers to the point at which it becomes impossible for him to backslide. Cf. bodhicaryā and duṣkaracaryā parallel to bodhi-cari and duṣkara–

